THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 342.

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

**प्रशस्तपादभाष्यम् ।**

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया
महामहोपाध्यायपद्मनाभमिश्रकृतया सेतुव्याख्यया
विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया व्योमवत्या च समन्वितम् ।
वाराणसीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षेण पं० गोपी-
नाथकविराजेन न्यायोपाध्यायढुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

# PRASASTÂPADABHÂSHYAM

BY Praśastadevâchârya

WITH COMMENTARIES:

Sūkti,-BY JAGADISA TARKALANKÂRA,
Setu,-BY PADMANABHA MISRA, &
Vyomavati,-BY VYOMASIVACHARYA.

*Edited by*


GOPINATH KAVIRAJ, M. A.
LIBRARIAN GOVERNMENT SANSKRIT LIBRARY,
SARASVATI BHAVAN BENARES,
and
DHUNDHIRAJ SHASTRI Nyayopâdhyâya.


FASCICULUS I


*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1925.

## PREFATORY NOTE

The search of Sanskrit Mss is yielding fruits of immense value, and works which were once hardly known even by name are being discovered and made known to the public.

Praśastapāda's commentary on the Vaiśesika sūtras, known as Padârtha-dharma-sangraha, began to be published as early as the early eighties of the last century. Of its commentaries Kiraṇāvalī by Udayana and Nyāyakandalī by S'rīdhara have appeared in print. Vyomavatī by Vyomaśivāchārya is another commentary on Praśastapāda which was known so long, as existing only from references in Rājaśekhara's °Kandalī pañchikā & in the works of Vādīndra, Vallabha, &c. It is an ancient work, older perhaps (according to some scholars) than Udayana or S'rīdhara or at least equally old, and deserves to be better known. Understanding that an old and unique Ms of this work was deposited somewhere in Southern India I managed with great difficulty to find out its place & get a transcript prepared in 1916, and for all this I am indebted to the good offices of my beloved tutor, the late Dr. Venis, the then Principal of the Sanskrit College, Benares,

'Setu' is another interesting commentary on the same work by Padmanābha Miśra of Mithilā whose Kiraṇāvalībhāskara has already been published in the

Sarasvatī Bhavana Series, Benares*. This Ms was obtained from a friend of mine at Alwar,& subsequently collated with another Ms acquired at Benares.

'Sūkti' is a still further commentary, brief but useful, on Praśastapāda, by the great Jagadīśa Tarkālankāra of Bengal.

Both 'Setu' and 'Sūkti extend as far as the Dravya section of the Bhāṣya.

The Mss, on which the present edition is based, will be described fully in the 'Introduction' which will follow the completion of the work & which will also contain all historical and doctrinal particulars in connection with the authors as well as a comparative estimate of their works.

Government Sanskrit College,
Benares.
April 14, 1924.
Gopinath Kaviraj

*Edited by the undersigned for "The Princess of Wales Sarasvatī Bhavana Texts", No. I.

ॐ नमः परमात्मने ।

# प्रशस्तपादभाष्यम् ।

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥

## श्रीजगदीशविरचिता सूक्तिटीका ।

ॐ नमः शिवाय ।

कणभक्ष्यमुनेः पक्षरक्षाविन्यस्तवासनाः ।
सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः ॥

ग्रन्थारम्भे विघ्नविघाताय कृतस्येश्वरादिप्रणामस्य शिष्याणां शिक्षार्थमादौ निबन्धपूर्वकं प्रवृत्त्यङ्गमभिधेयं दर्शयति प्रशस्तपादाचार्यः । प्रणम्येति । ईश्वरं प्रणम्य अनु ईश्वरप्रणामादनु पश्चाद् कणादं प्रणम्येत्यन्वयः । यद्वा ईश्वरं प्रणम्य अनु पश्चाद् कणादं प्रणम्य अतः इमावीश्वरकणादौ प्रसाद्य प्रवक्ष्यते इत्यन्वयः । इमौ प्रसाद्येत्यर्थे अतःपदस्य ल्यप्लोपे पञ्चम्याः साधनात् यतः सच्छिष्या उपसन्ना अतः प्रवक्ष्यत इत्यर्थ इत्याचार्याः । पदार्थानां भावपदस्यार्थानां ये धर्मास्साधर्म्यवैधर्म्यरूपास्तेषां सङ्ग्रहः संक्षेपेण कथनं यत्र पदार्थधर्मसङ्ग्रहो भाष्यनामाग्रन्थो प्रवक्ष्यते प्रकृष्ट

यथा स्यात् तथा वक्ष्यते। वचनस्य प्रकर्षश्चात्र साकाङ्क्षत्वयोग्यत्वादिरूपो ग्राह्यः सङ्क्षिप्तत्वस्य सङ्ग्रहपदेनैव प्राप्तत्वात्। ग्रन्थासम्पादकस्येश्वरस्य ग्रन्थनिर्वाहार्थं नतिर्व्यर्थेत्याशङ्कामपनेतुमीश्वरं विशेषयति। हेतुमिति। कार्यमात्रस्य हेतुभूतमिति तदर्थः। ननु कणादोक्तानामेव पदार्थधर्माणां यदि सङ्क्षेपेण सङ्ग्रहः क्रियते तदा जीवित्वेन विप्रनस्तकस्य कणादस्यैव वचसि विवेचकानां नास्था प्रागेव तु तदुक्तस्य सङ्क्षेपेण वचने इत्याशङ्कामपाकुर्वन् कणादं विशेषयति मुनिमिति। मननशीलमित्यर्थस्तथाच मुनेर्मुक्त्यन्यफलनिरपेक्षत्वात् कणादस्य विप्रनस्तकत्वं बाधितमिति भावः। स्वकीयग्रन्थे शिष्याणां प्रवृत्त्यर्थं फलवत्तां दर्शयति महोदय इति। महानुत्कृष्टः शुद्धज्ञानरूप उदयो बोधो यस्मात् स महोदयो ग्रन्थः॥

---

श्रीगणेशाय नमः।

## श्रीपद्मनाभमिश्रविरचिता सेतुटीका।

स्मृतिपथमुपनीय श्रीमतस्तातवक्त्रात्<br>
उचितमुपचितार्थं वाक्यमत्यादरेण।<br>
जयति विरचितोऽसौ पद्मनाभेन यत्नात्<br>
उदयनकृतिपारप्राप्तये सेतुरुच्चैः॥ १॥

उदयनकृतचन्द्रिकया वृद्धो भाष्याम्बुधिस्परितः।<br>
बालानामपि सुगमस्तत्र मया रच्यते सेतुः॥ २॥

बलवशीकृतदुर्दमभूपति-<br>
र्निजभुजार्जितलोकसमुन्नतिः।<br>
अगतिकार्थिजनस्य परा गति-<br>
र्जयति वीरवरः पृथिवीपतिः॥ ३॥

शिष्यशिक्षायै मङ्गलं निबध्नाति प्रणम्येति। मया पदार्थधर्म-

(सेतु०) सङ्ग्रहः प्रवक्ष्यते। कथंभूतो महोदयः। किं कृत्वेश्वरं प्रणम्य कथम्भूतं हेतुम्। अतोऽनु कणादं प्रणम्य कथम्भूतं मुनिमित्यन्वयः। पदार्थानां धर्मास्तेषां सङ्ग्रहः प्रवक्ष्यते प्रकृष्टो वक्ष्यत इत्यर्थ इति केचित् तन्न उपसर्गार्थस्य प्रकर्षादेर्धात्वर्थ एवान्वयात्। देवदत्तेनौदनः प्रपच्यत इत्यादौ तथादर्शनात्। सङ्ग्रहः प्रकृष्टवचनानुकूलयत्नविषय इति तु सम्यक्। ननु सङ्ग्रह इतस्ततो विततानां पदार्थानामेकत्र सङ्कलय्य कथनं कथनञ्च वचनमेव तस्य च प्रवचनं कथमिति चेन्न सङ्ग्रहः प्रवक्ष्यते सङ्ग्रहानुकूलो यत्नः क्रियत इत्यर्थात्। सङ्कलय्य ज्ञात्वेति प्राञ्चः। वस्तुतस्तु पदार्थस्य धर्मस्स एव सङ्गृह्यत इति कर्मव्युत्पत्तेः तस्य प्रवचनं सम्भवत्येव। भावव्युत्पत्त्या त्वितस्ततो विततानामित्यादिरेव सङ्ग्रहः तत्र तु सङ्कलय्येत्यस्योचितसन्निवेशं पुरस्कृत्येत्यर्थः। उचितसन्निवेशश्च प्रथमतो द्रव्यस्योद्देशस्तदनु लक्षणं तदनु परीक्षेत्यादि। अत एव सङ्ग्रहपदेन प्रकरणशुद्धिः प्राप्यते उचितसन्निवेशप्राप्तेः। ज्ञात्वेति करणे तु न प्राप्यते ज्ञानोत्तरमनुचितसन्निवेशेनापि निर्माणसम्भवात्। न च कर्मव्युत्पत्तौ सङ्ग्रहपदवैयर्थ्यम् प्रकरणशुद्धिप्राप्त्यर्थमेवाभिधानात्। अन्यथा भावव्युत्पत्तावपि वैयर्थ्यात्। न च कर्मव्युत्पत्तौ धर्मस्यैव क्रियान्वयित्वेन कथं प्रकरणशुद्धिप्राप्तिर्विशिष्टस्य चान्वये विशेषणभागे सैव प्रवचनानुपपत्तिर्भावव्युत्पत्तौ तु प्रकरणशुद्धिः प्राप्यत एव तत्रैव क्रियान्वयादिति वाच्यम् व्यर्थमिति न्यायेन तस्य प्रकरणशुद्धिबोधकत्वात्। ननु किमिति भावव्युत्पन्नं सङ्ग्रहपदमुपेक्ष्य इति कुसृष्टिराद्रियत इति चेन्न अग्रिमभाष्यानुरोधेन तथा व्याख्यानात्। अग्रिमभाष्ये धर्मस्य तत्त्वज्ञानहेतुत्वं प्राप्यते तदेव प्रकृतेपि युज्यते। तच्च महोदयपदस्य धर्मविशेषणत्वे भवति नान्यथा। किञ्च प्रवक्ष्यत इत्यत्र प्रकृष्टवचनानुकूलयत्नः प्रतीयते भवद्भिस्तु लक्षणया प्रकृष्टो यत्नो ग्राह्यस्तत्र च प्रकृतिप्रत्यययोर्यत्नार्थकत्वे एकस्यानन्वयो वक्तव्यस्तथा च यत्ने प्रयोगे महती विलासप्रतीत्यसमाभिस्तदुपेक्षितमिति सङ्क्षेपः।

प्रणम्येत्यत्र प्रशब्दोपादानं प्रकृष्टा नतिः कर्तव्येति शिष्यशिक्षायै। प्रकर्षश्च भक्त्यादिः तत्रोपसर्गस्य वाचकतेति केचित्। तत्र नैयायिकाः—एवं हि प्रपदत्वेन प्रकर्षत्वेन वा वाच्यवाचकभावे शक्त्यन्तरा-

(सेतु०) पत्तौ गौरवापत्तेः। प्रोत्तरजित्वेन प्रकृष्टजयत्वेन वाच्यवाचकभावे तु जिधातोर्जये विशेष्ये क्लृप्तायाः शक्तेः प्रकर्षरूपविशेषणविषयकत्वमात्रं कल्प्यत इति लाघवमिति तन्न अवच्छेदकभेदेन सम्बन्धिकपदार्थस्योत्सर्गतो भेदेन प्रकृतेपि शक्तिभेदात्। अनन्यलभ्यस्यैव शक्यत्वाल्लक्षणयैवोपपत्तौ न शक्तिरिति तु सम्यक्। तथा च धातोरेव लक्षणया तदर्थप्रतीतिस्तात्पर्यग्राहकस्तूपसर्गः। अन्यथा प्रातिष्ठित इत्यत्र का गतिः? तत्र हि धातोर्गतिनिवृत्तिः प्रतीयत उपसर्गेण गतिः। न चैवं गत्या प्रत्ययार्थान्वय उपपद्यते प्रजयतीत्यत्र प्रकृत्यर्थं द्वारीकृत्याप्यन्वयसम्भवात्। तस्माद्विरोधिलक्षणया प्रकृतधातोर्गमनोपस्थितिस्तात्पर्यग्राहकस्तूपसर्ग इति। ननु देवदत्तः पाकं करोतीत्यत्र धात्वर्थप्रत्ययार्थयोर्यत्नत्वेन यत्नविषयकयत्नासम्भवात् धात्वर्थेन यत्नानन्वयेन तमद्वारीकृत्यैव पाके यथा यत्नान्वयो धातुप्रयोगस्तु साधुत्वार्थः केवलप्रत्ययस्याप्रयोगात् तथा प्रकृतेपि धात्वर्थानन्वयेपि साक्षादेवोपसर्गार्थः प्रत्ययार्थेनान्वेष्यतीति। अपि चोपसर्गार्थे कथं प्रत्ययार्थोऽन्वेष्यतीति भावतोऽभिधाने प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति न्यायो मूलम्। असौ च स्वयमेव निर्मूलस्कथमन्यस्य मूलतो यास्यतीति। तथाहि प्रत्ययः प्रकृत्यर्थान्वितमेव स्वार्थं बोधयतीति वार्थः। प्रकृत्यर्थान्वितं स्वार्थं बोधयत्येवेति वा। प्रकृत्यर्थान्वितं स्वार्थमेव बोधयतीति वा। नाद्यो देवदत्त एवान्वयात्। न द्वितीयः करोतीत्यत्र तदभावात्। नहि तत्र प्रकृत्यर्थे यत्ने कोऽपि प्रत्ययार्थोऽन्वेति। नापि तृतीयः तथा नियमेप्युपसर्गार्थे स्वार्थान्वयबोधकत्वे बाधकाभावात्। प्रकृत्यर्थान्वितमेव स्वार्थं बोधयतीति नियमस्तु सुब्विभक्तीनां तत्रान्यत्रान्वयादर्शनादिति। एवञ्च यत्र धात्वर्थोऽन्वेति तत्र धात्वर्थद्वारोपसर्गार्थे प्रत्ययार्थान्वयः ओदनं पचतीत्यत्रौदन इव यत्र तु नान्वेति तत्र तु साक्षादेव पाकं करोतीत्यत्र पाक इवेति चेन्न। अत्र ब्रूमो—यत्प्रकारान्तरेण प्राप्यते तस्य न शाब्दबोधविषयत्वमित्येको न्यायो यथा धूमोस्तीत्यत्र वह्नेस्तत्र वाक्याद्धूमावबोधानन्तरमनुमानादेव वह्निबोधात् प्रकारान्तरेण शाब्दबोधविषयत्वेन शब्दवृत्तिविषयत्वमिति। द्वितीयो यथा संसर्गः आकाङ्क्षादिरेव तत्प्राप्तिर्भूयस्यन्तरविषयत्वेन शक्तिविषयत्वं प्रति। तृतीयो यथा लक्षणयैवोपपत्तौ शक्त्यनङ्गीकारः।

( सेतु० ) एवञ्च प्रकृते धातुलक्षणयैव प्रकृष्टजयादिप्रतीतेरुपपत्तावुपसर्गशक्तिकल्पनायां मानाभावात् । नन्वेवमपार्थकतापत्तिरुपसर्गाणामन्वितानामेव वाक्यस्थत्वादिति चेन्न तेषां निरर्थकत्वेन तदनन्वयेपि तदभावात् सार्थकानन्वय एव तत्सत्त्वात् । अत एव पदवाक्यजातमनन्वितमपार्थकमिति वदन्ति । तत्र पदवाक्ययोस्सार्थकयोरेव घटकत्वलाभात् वृत्तिमतः पदत्वात् पदसमूहस्य वाक्यत्वात् । ननु प्रतिष्ठत इत्यत्र भवतु लक्षणा गतेस्स्वार्थगतिनिवृत्तेरन्यत्वात्प्रजयतीत्यादौ तु कथं सा ? न तावत् प्रकर्षे लक्षणा जये शक्तिर्युगपद्वृत्तिद्वयविरोधापत्तेः । ननु युगपद्वृत्तिद्वयविरोधो न दूषणम् गङ्गायां घोषमत्स्यौ स्त इत्यत्र तदभावात् । तत्र घोषानुरोधेन लक्षणया तीरं मत्स्यानुसारेण विशेष्यभावेन नान्वेतीति शक्त्या प्रवाहस्योपस्थितेरिति चेन्न एकेन पदेन शक्तिलक्षणाभ्यामुपस्थापितमर्थद्वयं विशेषणविशेष्यभावेनान्वेतीत्यस्य दूषणत्वात् । तत्र च तीरप्रवाहयोर्विशेषणविशेष्यभावेनानन्वयात् । ननु राजपुरुष इत्यत्र राज्ञः शक्त्या सम्बन्धस्य लक्षणयोपस्थिते च तत्र विशेषणविशेष्यभावेनैवान्वयादिति चेन्न ससम्बन्धिकपदार्थातिरिक्तस्थले तस्य दोषत्वात् सम्बन्धस्य ससम्बन्धिकत्वात् । प्रकृते च प्रकर्षजययोः ससम्बन्धिकपदार्थातिरिक्तयोर्विशेषणविशेष्यभावेनैवान्वयोऽभिमत इति दोषत्वस्योचितत्वात् इति चेन्न प्रकृष्टजये लक्षणायाः स्वीकारात् । ननु स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणेति प्रामाणिकानां प्रवादः किमित्युपेक्षित इति चेन्न जयत्वा स्वार्थात्प्रकृष्टजयत्वस्य भिन्नत्वात् । अन्यथान्यतस्तात्पर्यग्रहे जिधातोर्लक्षणया प्रकर्षोपस्थितौ का गतिः । इदन्त्ववधेयम् । युगपद्वृत्तिविरोध इत्यस्य कोऽर्थः । एकस्मिन् पदे एकदा शक्तिलक्षणे न तिष्ठत इति चेन्न ईश्वरेच्छारूपायाः शक्तेश्शक्यलक्ष्यसम्बन्धरूपाया लक्षणायाश्च गङ्गादिपदेषु युगपत्सत्त्वात् । शक्तिलक्षणाभ्यामेकस्मात्पदाद्युगपदर्थद्वयोपस्थितिर्न भवतीति चेन्न युगपत्संस्कारोद्बोधे युगपत्स्मृतौ बाधकाभावात् । तथोपस्थितयोः शाब्दबोधो न भवतीति चेत् सैन्धवमानयेत्यत्र लवणघोटकयोः शक्त्योपस्थितयोर्यत्परस्परमन्वयबोधो न भवति तत्र किं बीजमिति वक्तव्यम् न तावदिह युगपद्वृत्तिद्वयविरोधः उभयत्र शक्तेरेव

( सेतु० ) स्वीकारात् । ननु समानविभक्तिकपदोपस्थाप्यार्थयोर्ना-
धाराधेयभावादिनाऽन्वयस्तथाविभक्त्यभावात् । किन्तु नीलो घट
इत्यत्र नीलघटयोरिवाभेदान्वयो वाच्यः स च न भवत्ययोग्य-
त्वात्तथान्वयबोधादर्शनेन स्वरूपायोग्यत्वात् वा तथासत्ति—आ-
काङ्क्षाविरहादिति चेन्न तथा सति शक्तिलक्षणाभ्यामुपस्थापि-
तस्यार्थद्वयस्यानन्वये तदेव बीजमस्तु किं युगपद्वृत्तिद्वय-
विरोधस्य दोषत्वेन । एवञ्चैवंविधप्रतिसन्धानासमर्थानां बालानां
प्रबोधाय युगपद्वृत्तिद्वयविरोधो दूषणमिति प्राचामाचार्याणामु-
क्तिर्न तु वस्तुगतिः निरुक्तयुक्त्युपमर्दासहत्वात् । तस्माद्युगपद्वृत्ति-
द्वयविरोधो न दूषणमिति सिद्धमिति । देवदत्तः पचतीत्यत्रैकेना-
ख्यातेन शक्तिद्वयेन युगपदुपस्थापितयोः कृतिवर्तमानत्वयो रथो
गच्छतीत्यत्र शक्तिलक्षणाभ्यान्तथोपस्थापितयोर्व्यापारवर्तमानत्व-
योरन्वयबोधो भवतीति प्रमातृसाक्षिकम् । एवञ्च तत्र फलबला-
दाकाङ्क्षादिकं यथाऽऽक्षिप्यते तथा प्रजयतीत्यत्रापि जिधातोर्जये
एका शक्तिः प्रकर्षे द्वितीया तत्र प्रोत्तरजित्वेन वाचकतास्तु जित्वेनैव
वा । तात्पर्यग्राहकस्तु प्रशब्दो विशिष्टे शक्तिकल्पनायां गौरवात् फल-
बलादेवाकाङ्क्षादयोपि नापि दुर्लभाः । निरर्थकस्योपसर्गस्य प्रयोगस्तु
भवतोपि समाधेयः । एवं लक्षणालक्ष्येपि प्रकर्षे एव लक्षणा शक्त्यो-
पस्थिते लक्षणोपस्थितस्य प्रकर्षस्यान्वयबोधसम्भवे विशिष्टे लक्षणा-
या गौरवग्रस्ततयाऽक्षमत्वादेकसम्बन्धिज्ञानजन्यापरसम्बन्धिस्मृते-
स्तत्सम्बन्धिविषयत्वाभावनियमाच्च । हस्तिपदजन्यहास्तिज्ञानस्य ह-
स्तिपकस्मृतौ तथादर्शनात् । अन्यथा गङ्गादिपदेपि गङ्गातीरत्वादिना
लक्षणापत्तेरित्यादिरस्माकं पितृचरणोपासनानुसारीपन्थाः । स चा-
स्मद्वचनसार्थनिरस्तशङ्कानामन्येषामपि सुगम एव । प्रतिष्ठित इत्यादौ
धात्वर्थाघटित एव शक्तेर्लक्षणाया वा परैरपि स्वीकारात् । ननु
शक्तिपक्षे शक्तिस्वीकारस्यावश्यकत्व उपसर्ग एव शक्तिः किन्न
स्वीक्रियते इति चेन्न यत्र शक्तिः क्लृप्ता तत्र शक्त्यन्तर-
कल्पनसम्भवेऽक्लृप्तशक्तिके शक्त्यन्तरकल्पनाया अन्या-
य्यत्वात् । वस्तुतस्तु लक्षणैव क्षोदक्षमा शक्यलक्ष्यसम्बन्ध-
रूपायास्तस्याः क्लृप्तत्वात् । एकसम्बन्धिज्ञानस्यापरसम्ब-
न्धिस्मारकत्वस्य च तथात्वात् । गङ्गादिपदे तीरादौ शक्तिमुपेक्ष्य

(सेतु०) लक्षणास्वीकारे तस्यैव बीजत्वात् । ननु धातोरेव प्रकर्षो-पस्थापकत्वे व्यतिस्त इत्यत्र का गतिः तत्र धातोरभावेप्यन्योन्यं भवतीत्यर्थप्रत्ययादिति चेन्न धातुस्मरणविरहिणा तत्रार्थप्रत्ययाभा-वेन लुप्तस्मृतेरेवार्थप्रत्यायकत्वात् । दधि पश्येत्यादौ लुप्ताया अपि द्वितीयायाः स्मरणमधिरूढायाः कर्मतास्मारकत्वात् । विभक्तावेव शक्तिस्वीकारेण तत्स्थानीये तदभावेनासत्या अपि विभक्तेः स्मा-रकत्वाच्चेति । तस्मादुपसर्गाणान्न शक्तिर्नापि धातोर्विशिष्टे केवले वा शक्तिर्नापि विशिष्टे लक्षणा किन्तु केवले लक्षणा एतावत्स-र्वमभिसन्धायैवाचार्यचरणैरप्युक्तं द्योत्यत इतीति दिक् । क्त्वा-प्रत्ययो विशिष्य शिक्षायै । ततः पूर्वकालत्वानन्तर्यसमान-कर्तृत्वानि प्रतीयन्ते इति सर्ववादिसिद्धम् ।

कुत्र शक्तिरिति तु विचार्यते । न तावत् सर्वत्र शक्तिः प्रत्येक-शक्तिः प्रत्येकशक्तौ नानार्थत्वापत्तेः । केनचिदेकधर्मेण शक्तौ तद्धर्म-प्रकारकबोधापत्तेः । विशिष्टे शक्तौ तद्धर्मप्रकारकबोधापत्तेः । विशिष्टे शक्तौ गौरवापत्तेश्च । अत एवैकयोक्त्या पुष्पवन्ताविति न्यायोपि निरस्तः । प्रमाणाभावाद्गौरवाच्च । तस्मादेकत्र शक्तिः तत्र समानकर्तृत्वे शक्तौ पूर्वकालत्वप्रतीतिर्नोपपद्यते । न च समानकर्तृत्वेन तदाक्षेप्तुं शक्यते समानकर्तृकयोरपि क्रिययोः क्वचित्समानकालत्वात् । प्रधानत्वे सति समानकर्तृकक्रियात्वेन तदाक्षिप्यत इति चेन्न उ-द्देश्यत्वं हि प्रधानत्वं न च तद्घटितेनाक्षेप्तुं शक्यते यत उद्देश्य-स्यापि क्रियाद्वयस्यैकेन कर्त्रा युगपदनुष्ठानात् । एककालानुत्पन्न-क्रियात्वं प्रधानक्रियात्वमिति चेन्न अस्य क्त्वाऽनुपस्थित्या तत्प्रयोगा-नन्तरमनेन तदाक्षेपानुपपत्तेः तस्यैवानुक्षेपकत्वे समानकर्तृकत्वस्य वैयर्थ्याच्च असमानकालीनत्वस्य नियमत आक्षेप्तुमशक्यत्वाच्च । न चैते क्रिये पूर्वापरीभावापन्न इत्यनुमानम् । एषा क्रिया पूर्वकाली-नेति ज्ञातुमशक्यत्वात् अनुमानस्य सम्मुग्धत्वात् प्रतीतेश्च क्त्वातो विशेषविषयिण्या एव जायमानत्वात् । नन्वसमानकालीनत्वमपि क्त्वाप्रयोगोत्तरं प्रतीयत एव । क्त्वाश्राविणामेते क्रिये समानकालीने न वेति संशयादर्शनात्तथा च तत्रैव शक्तिरस्तु तेन च पूर्वकालत्वमे-वाक्षिप्यत इति चेन्न सम्मुग्धाक्षेपापत्तेः । न च भोजनं व्रजनपूर्व-कालीनं व्रजनविशेष्यत्वे सति व्रजनसमानकर्तृकत्वात्सम्मतवदिति

(हेतु०) अनुमानमिति वाच्यम् एतावतः क्त्वातो उपस्थितेः । न च समानकर्तृत्वान्यथानुपपत्त्या सिद्ध्यत् पूर्वकालत्वं विशेष्ये भोजन एव सिध्यति तदन्वयस्याभ्यर्हितत्वादिति वाच्यम् तदन्यथानुपपत्त्याऽपरकालत्वस्यैव विशेष्ये सिद्ध्यापत्तेः । तस्मात्पूर्वकालत्वमेव क्त्वःशक्यम् समानकर्तृत्वन्तु वाक्यार्थमहिमलभ्यम् । इतोऽपि न समानकर्तृत्वं क्त्वश्शक्यमन्यलभ्यत्वात् । यदि प्राथमिको बोधो व्रजनपूर्वकालीनं भोजनमित्याकारकस्तदा पूर्वकालत्वमेव शक्यमानन्तर्यन्त्वाक्षेपबललभ्यम् । यदि तु भोजनानन्तरकालीनं व्रजनमित्याकारकस्तदा व्यत्ययः । एष च विवादः साक्षिणाऽनुभवेनैव निरसनीय इति न युक्त्याग्रहः उचितः । पूर्वकालत्वानन्तर्ययोरेकं शक्यं शेषन्तु किञ्चिदाक्षेपात् किञ्चित्तु वाक्यार्थमर्यादया प्रतीयत इति संक्षेपः । अव्यवहितपूर्वकालत्वं शक्यमिति जरन्नैयायिकमतन्तु व्यवधानेऽपि प्रयोगदर्शनेनाव्यवधानस्याप्रतीत्या च जरदेव । समानकर्तृत्वेनाक्षिप्तं पूर्वकालत्वं भोजन एवान्वेति न तु व्रजन इत्यत्र बीजगवेषणायान्न तावद्भोजनव्रजनक्रिययोरेकः कर्तेत्यनुभवो नापि भुजिक्रियया व्रजनक्रियैककर्तृकेत्याकारकः किन्तु व्रजनक्रियया भुजिक्रियैककर्तृकेत्याकारकः । एवञ्च भोजनस्य विशेष्यतया तत्रैव पूर्वकालत्वमन्वेतीति मीमांसकैरुच्चारितम् तदपि न विचार्यमाणं चमत्कारमातनोति । तर्हि कस्यायं महिमा भुक्त्वा व्रजतीति शब्दस्य वा आक्षेपस्य वा ? सहकारितां गतयोर्द्वयोर्वा । न तावदाद्यः शाब्दबोधविषये शाब्दमहिम्नोऽनुपयोगात् । नापि चरमः शब्दार्थापत्त्योः शब्दानुमानयोर्वा मिथः सहकारित्वाकल्पनात् । नापि द्वितीयः आक्षेपस्यानुमानत्वे तत्समानशीलत्वे वा व्याप्तिपक्षधर्मताबलालभ्ये सामर्थ्याकल्पनात् । अस्यार्थस्य व्याप्तिबललभ्यत्वे तावदुपन्यासवैयर्थ्यात् । ननु पक्षविशेष्यकस्य हेतोः समानकर्तृत्वस्य भानादनुमानसामर्थ्योपन्यास एवैतावतेति चेन्न भुक्त्वा व्रजतीत्यत्र कर्तुर्विशेष्यतया तादृशि बोधे प्रमाणाभावात् । अत एव गुणानाञ्च परमार्थत्वादसम्बन्धः समत्वादिति न्यायोपन्यासोऽप्यन्याय एवेत्यलमुल्लसत्पल्लववचनविलासेनेति ॥

मङ्गलस्य फलं समाप्तिः । सा च न चरमवर्णतदुच्चारणतद्ध्वंसा-

( सेतु० ) न्यतमरूपा मौनिकृतग्रन्थे समाप्तावव्याप्तेः। किन्तु चरमवर्णज्ञानमिति प्राचीनाः। व्यभिचारग्रस्ततयाऽस्य पक्षस्य विघ्नध्वंसं फलं कल्पयन्ति कल्पाः। कल्पश्चायमाचार्यचरणानामपि सम्मतः। कथमन्यथा नच विघ्नहेतुसद्भावनिश्चयाभावात्तद्वारणमनुपादेयम् तत्सन्देहेपि तदुपादानस्य न्याय्यत्वादिति शङ्कासमाधाने। दुरितध्वंसार्थिप्रवृत्तौ दुरितनिश्चयस्य प्रायश्चित्ते हेतुतादर्शनात् कथं तेन विना तादृशी मङ्गलप्रवृत्तिरिति शङ्कार्थः। शिष्टाचारबलाच्छङ्कायामपि प्रकृतप्रवृत्तिरिति समाधानार्थः। न चैतदुभयं विघ्नध्वंसस्याकाम्यत्वे घटते। न च काम्यत्वमफलतायां यागादौ द्वारस्याकाम्यत्वात्। विघ्नध्वंसस्य फलत्वमाचार्यसम्मतमिति तु विरलैरेव ज्ञातुं शक्यते अत एवातिचतुरेण चिन्तामणिकृता स्वकीयत्वेन स्वीकृतोऽयं पन्थाः। न चाधिकाररूपकामनाविषयत्वं फलत्वनिर्वाहकं प्रकृते च तादृशकामनामादाय शङ्कासमाधाने इति वाच्यम् तस्या अनावश्यकतया तामादाय तदनुपपत्तेरिति सङ्क्षेपः।

(१)अत्र मङ्गलतत्त्वं विचार्यते। तत्र मङ्गलस्य समाप्तिजनकत्वमिति प्राञ्चः। तेषामयमाशयः समाप्यतामिति कामनया तावन्मङ्गलविषयकशिष्टाचारः। तदनुरोधिनी च श्रुतिः–समाप्तिकामो मङ्गलमित्याकारा। सा च स्वर्गकामो यजेतेत्याकारा यागस्य स्वर्गसाधनत्वमिव मङ्गलस्य समाप्तिसाधनत्वं बोधयतीति अविवादम् शाब्दबोधसामग्र्यास्तुल्यत्वात्। न च व्यभिचारज्ञानस्य विरोधिनः सत्त्वे कथं श्रुतिः कारणतां बोधयिष्यतीति वाच्यम् तथासति समाप्तित्वावच्छेदेन जन्यत्वं मा बोधयतु समाप्तित्वसामानाधिकरण्येन तु बोधयन्ती

(१) ( व्यो० ) प्रणम्येति। प्रेत्युपसर्गेण प्रणामातिशयं दर्शयति। हेतुत्वं निमित्तकारणत्वं तच्चान्येषामपीति ईश्वरपदम्। ईश्वरशब्दश्चान्यत्र वर्तमानोपि ज्ञानप्रस्तावान्महेश्वरबोधक एव "शङ्कराज्ज्ञानमन्विच्छेदिति"वचनात्। मनुष्यार्थं तर्हि हेतुपदं ? ज्ञानप्रस्तवाद्विशेषणसिद्धेर्नैतदेवम्। स्तुतेर्गुणसङ्कीर्तनरूपतया सकलकार्यकर्तृत्वाभिधानात्। मुनयश्चेतरेऽपि विशिष्टज्ञानवैराग्यादिमन्तो भवन्तीति विशेषणं कणादामिति। तत्त्वज्ञानाच्च मिथ्याज्ञानादीनामभावो निश्चीयते। विशिष्टाहारसंज्ञाप्रदर्शनेनासच्चोद्यनिरासः। अतोऽनन्तरमेव प्रतिपत्त्यक्रियारहितः पदार्थधर्मसंग्रहः प्रवक्ष्यत इति। नच क्त्वाप्रत्ययादेव विशिष्टानन्तर्यप्रतिपत्तिः तस्या हि समानकर्तृत्वे सति पूर्वकालभावित्वमात्रेऽन्वयात् तथाहि भोजनानन्तरमेव शयनादिक्रियाव्यवधानेपि भुक्त्वा व्रजतीति प्रयोगो भवत्येव। अत्र चेश्वरप्रणामानन्तरमेव मुनेर्नमस्कारः तदनन्तरमेव प्रवचनक्रियेति।

व्योमवत्याष्टीकायाः ग्रन्थारम्भसमयेऽनुपलम्भात्प्रथमपृष्ठोचितापि टिप्पण्यत्र दत्तेति।

(सेतु०) केन वारणीया। नहि शब्दः एकविशेषणावच्छेदेनैवापर-
विशेषणं सन्धयतीति नियमः ब्राह्मणे विद्येत्येवमादीनामुच्छेदापत्तेः।
दृष्टान्तश्रुतेरसङ्गतत्वापत्तेश्च। गङ्गास्नानादितोऽपि स्वर्गेण तत्रा-
पि व्यभिचारस्य स्फुटत्वात्। न चावच्छेदकग्रहं विना न कार्य-
कारणभाव इति प्रवादस्तथासति प्रमादः स्यादिति वाच्यम्
तस्य प्रत्यक्षपातित्वात्। अवच्छेदकोपस्थितिं विना तत्र ग्राहक-
योरन्वयव्यतिरेकयोरभावात्। न हि द्रव्यान्वये घटान्वयो नापि
दण्डव्यतिरेके द्रव्यव्यतिरेक इत्यन्वयव्यतिरेकौ सम्भवतः, सम्भव-
तस्तु घटान्वये दण्डान्वयो दण्डव्यतिरेके घटव्यतिरेक इत्याका-
रकौ तथा च प्रत्यक्ष एवावच्छेदकपरिच्छेदापेक्षा न तु शब्दाद्रा-
वपि। अपि चान्वयव्यभिचारग्रहप्रत्यक्षेऽपि न कारणतावधारण-
निवारणवारणः प्रकृतबोध्यविरोध्यविषयकत्वात् अनन्यथासिद्धनि-
यतपूर्ववर्तित्वं प्रकृते बोध्यम् तद्विरोधी च विशेषणाभावो विशे-
ष्याभावो विशिष्टाभावश्च। तत्र विशेषणाभावोऽन्यथासिद्धः, न
चासावन्वयव्यभिचारात्मा। विशेष्यन्तु नियतपूर्ववर्तित्वन्तदभावो
नियमाभावः स च व्यतिरेकव्यभिचारपर्यवसन्न एव न त्वन्वय-
व्यभिचारस्य वार्तामपि सहते अन्वयव्यभिचारिणां दण्डादीनां
नियतपूर्ववर्तित्वसत्त्वात्। विशिष्टाभावोपि प्रकृते विशेषणविशे-
ष्ययोस्सामानाधिकरण्याभाव एव। न चासावन्वयव्यभिचारं
स्पृशत्यपि। प्राचीनग्रन्थेषु तस्य दूषणत्वेनाशङ्का प्रमाद एव
भवति तु व्यतिरेकव्यभिचारः प्रत्यक्षस्थले परिपन्थी न तु
शब्दे तत्र धर्मसामानाधिकरण्येनापि जन्यत्वग्रहसम्भवात्।
अत एवाचार्यचरणाः —"आगममूलत्वाच्चास्यार्थस्य व्यभिचारो
न दोषायेति"। यदि प्रत्यक्षेण कार्यकारणभावग्रह उच्यते तदा
व्यभिचारो दोषः स्यात् तत्र धर्मावच्छिन्नं प्रति नियतपूर्ववर्तित्व-
ग्रहस्य व्यभिचारग्रहेऽसम्भवात्। उच्यते तु शब्देन कार्यकारणभा-
वग्रहः तत्र तु व्यभिचारग्रहो न परिपन्थी धर्मावच्छेदेन जन्यत्व-
ग्रहप्रतिबन्धेऽपि धर्मसामानाधिकरण्यं विना प्रतिबन्धादिति तद-
र्थः। तस्माच्च श्रुत्या कार्यकारणभावग्रहे व्यभिचारः प्रतिबन्धक इति
प्रसिद्धम्। गृहीते तु कार्यकारणभावे स्वर्गे जातिविशेष इव समासा-
वपि कश्चिद्विशेषः कल्पनीयः। ननु समासेऽज्ञानविशेषरूपतया जा-

(सेतु०) तिरूपो विशेषः प्रकृतेऽपि किन्न क्लृप्त इति चेन्न जाति-सङ्करप्रसङ्गात् । तथाहि चरमवर्णज्ञानं हि समाप्तिः चरमवर्णज्ञानञ्च क्वचिच्छ्रावणं क्वचिन्मानसम् । एवञ्च मानसत्वं तज्जातिपरिहारेण सुखसाक्षात्कारादौ सा च जातिर्मानसत्वपरिहारेण श्रावणे चरमवर्णज्ञाने मानसे च त्रितयमिति । एवं शब्दादिचरमवर्णज्ञानमादायापि साङ्कर्यमवधार्यम् । ननु मानसमेव चरमवर्णज्ञानं समाप्तिर्न श्रावणम् शब्दवक्ता वा सार्वत्रिकः किन्तु क्वचित्कः तथा च यत्र स नास्ति तत्र ज्ञानलक्षणां प्रत्यासत्तिमासाद्य मानसमेव चरमवर्णज्ञानमाश्रयणीयम् । एवञ्च यत्रापि श्रावणादिचरमवर्णज्ञानं तत्रापि तदुपनीतस्य मानसमेव तदास्थेयमिति चेन्न चरमवर्णज्ञानस्यैव लाघवेन समाप्तित्वात् । मानसपदोपादाने गौरवात् । ननु ज्ञानमानसयोरुभयोरपि पदयोरुपादाने गौरवम् न तु केवलस्य मानसपदस्योपादाने ज्ञानमानसयोरुभयोरपि जातिमत्त्वादिति चेन्न उपसर्गाख्यतर्कमहिम्ना ज्ञानत्वस्यैव समाप्तिस्वरूपे प्रवेशात् । ननु वर्णज्ञानमात्रमेव समाप्तिः वर्णानामपरिनिष्ठितत्वेन समाप्तेऽपि चरमवर्णज्ञाने वर्णज्ञानसम्भवात् । नापि चरमत्वेन भानम् असौ मया चरमो वर्णः कर्तव्य इति पूर्वं प्रतिसन्धानेपि समाप्त्यभावात् । किन्तु सकलपूर्ववर्णज्ञानोत्तरकालीनं चरमवर्णज्ञानत्वम् तच्च न (तु) श्रावणं सम्भवति चरमत्वस्य श्रोत्राग्राह्यत्वादिति मानसमेव ज्ञानं समाप्तिरिति चेत् न लाघवेनानुपूर्वीविशेषविशिष्टसकलपूर्ववर्णज्ञानोत्तरकालीनचरमज्ञानस्यैव समाप्तित्वात् । वर्णान्तरप्रागभावासमानकालीनत्वस्य कर्त्राऽज्ञानेऽपि समाप्तेश्च । शाब्दस्य चरमत्वज्ञानसम्भवाच्च, अयं चरमो वर्णोऽस्त्विति गुर्वादिनिर्देशसम्भवात् । किञ्च समाप्तित्वव्याप्यजातेः कार्यतावच्छेदकतयाऽनुगतकारणकल्पनापत्तिः । न च मङ्गलमेव तथास्तीति वाच्यम् अन्योन्याश्रयात् । तथा जातिसिद्धौ मङ्गलस्य व्यभिचाराभावेन कारणत्वसिद्धिः कारणत्वसिद्धौ च तदन्यथानुपपत्त्या कार्यतावच्छेदकतया जातिकल्पनामिति । न च श्रौतकारणत्वान्यथानुपपत्त्या कार्यतावच्छेदकत्वेन जातिकल्पनामिति वाच्यम् । प्रत्यक्षत्वापत्त्या बाधकेन जातेरकल्पनया उपाधेरेव कल्पनात् । अपरञ्च यत्र चरमवर्णज्ञानमपरेण केनचिद्विषयेण समूहालम्बनं जातं

(सेतु०) तत्राव्याप्यवृत्तित्वान्न सा जातिरिति । तस्मादुपाधिरेव कश्चिद्विशेषतया समाप्तिकारणतानिर्वाहकतया कल्पनीयः । स च प्रायश्चित्ताद्यनाश्यविघ्नस्थलीयसमाप्तित्वमेव । न चैकमङ्गलाद्बहुविघ्नस्थलीयसमाप्त्यापत्तिः एकमङ्गलेनैकविघ्ननाशेपि विघ्नान्तरसत्त्वेन समाप्त्यभावात् विघ्नध्वसं प्रति च तत्तन्मङ्गलत्वेन जनकता इति नैकमङ्गलाद्बहुविघ्नध्वंसः । नच द्वारफलयोरेकरूपेणैव जनकता चाक्षुषज्ञानं प्रति चक्षुष्ट्वेन घटसंयोगं प्रति द्रव्यत्वेन चक्षुषो जनकत्वात् । तस्मात्कारणान्तरविलम्बेन फलविलम्बो न कारणतापरिपन्थीति मङ्गलत्वेनैव कारणतेति वस्तुगतिः ।

केचित्तु मङ्गलेतरानाश्यविघ्नस्थलीयसमाप्तित्वेन कार्यता तादृशविघ्नान्यूनसंख्याकमङ्गलत्वेन कारणतेति नैकमङ्गलस्थले बहुविघ्नस्थलीयसमाप्त्यापत्तिरित्याहुः ।

तत्तु गौरवग्रस्तमेव विघ्नध्वंसस्थले तत्तन्मङ्गलत्वेन तत्तद्विघ्नध्वंसत्वेन कार्यकारणभावस्य तेऽपि वाच्यत्वात् । एकमङ्गलाद्बहुविघ्ननाशात् । एवं श्रुतिसिद्धकारणत्वान्यथानुपपत्त्या कार्यतावच्छेदककल्पनं सिद्धम् । चिरविनष्टस्य मङ्गलस्य कालान्तरभाविसमाप्तिलक्षणफलजनकत्वान्यथानुपपत्त्या व्यापारोऽपि कल्पनीयः । स चापूर्वस्य भावतया लघुत्वेऽपि विघ्नध्वंस एव तस्य यदनिष्टज्ञाने सति यत् क्रियते तदनिष्टध्वंसस्तत्साध्य इति व्याप्त्या प्रामाणिकत्वात् । न चान्यत्रक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतत्वेनान्यथासिद्धिः मङ्गलस्यापि श्रुतिसिद्धतया प्रामाणिकतया तत एव कार्यसम्भावनाया असम्भवात् । तस्मान्मङ्गलस्य समाप्तिसाधनत्वमिति प्राचामाचार्याणां वाच उपाचितार्था एवेति सिद्धम् ।

अत्र तत्त्वम्(१) । न तावदुदाहृता श्रुतिः श्रुतिपदार्थं प्रमादादपि पदा परामृशति किन्तु कल्पनाक्रोडमेवाध्यास्ते । कल्पना तु लाघवमवलम्ब्य तिष्ठति । लाघवन्तु "विघ्नध्वंसकामो मङ्गलमाचरेदिति" श्रुतेराश्रयणे विघ्नध्वंसमात्रफलकत्वात् तच्छ्रुतौ तु फलद्वयं समायाति विघ्नध्वंससमाप्त्योरुभयोर्जन्यत्वात् । ननु कामनानुरोधिनी श्रुतिः कामना च समाप्यतामित्याकारा तथाच लाघवानुरोधमुल्लङ्घ्य काम-

(१) नव्यानामित्यर्थः ।

(सेतु०) नामेव श्रुतिरनुसरतीति चेन्न कामनानामनेकपथप्रवृत्तत्वेन तदनुसरणस्याशाक्यत्वात् । तथाहि—केचित्समाप्यतामिति कामनया मङ्गलमाचरन्ति, परे निर्विघ्नं समाप्यतामित्यनया, अन्ये विघ्नो माभूदिति प्रागभावविषयिण्या, इतरे विघ्नो नश्यतु इति ध्वंसावगाहिन्या । तत्र पथप्रवृत्तचतुर्विधकामनामनुसरन्त्येका श्रुतिर्दुस्थतामेवासादयेत् । योगिनामिव श्रुतिकायनिकायकल्पने तु प्रमाणाभाव इत्येककामनानुरोधिनी काचिदेका श्रुतिराकल्पनीया । तत्र च यस्यां लाघवं सैवागमिष्यति न तु गौरवग्रस्ता । लाघवञ्च विघ्नध्वंसफलकत्वबोधिकायामेव एकफलकत्वात् । विघ्नप्रागभावस्यापि विघ्नकारणविनाशेन साद्वितीयत्वात् । नच मङ्गलाभावस्य विघ्नकारणत्वान्मङ्गलादाहत्यैव विघ्नप्रागभाव इति वाच्यम् प्रतिबन्धकाभावस्य संसर्गाभावत्वेन कारणतया मङ्गलनाशानन्तरं झटिति विघ्नोत्पत्त्यापत्तेः । विघ्नकारणविनाशे तु यावन्न तत्सजातीयं कारणान्तरं मिलति तावद्विघ्नप्रागभावरक्षा युज्यते । नच तन्मङ्गलप्रागभावत्वेन तद्विघ्नकारणत्वात्तस्य च मङ्गलोत्पत्त्या नष्टत्वादविघ्न एव विघ्नप्रागभावसद्भाव इति वाच्यम् तथासति तन्मङ्गलप्रागभावस्य दुर्मिलतया तद्विघ्नप्रागभावस्यासत्त्वापत्तेः । तस्माल्लाघवेन विघ्नध्वंसजनकताबोधिकैव श्रुतिरुन्नीयत इति ।

वस्तुतस्तु प्रवर्तकेष्टसाधनताज्ञानं गौरवात्, तृप्त्यर्थिनस्तण्डुलक्रये प्रवृत्त्यनापत्तेश्च । किन्त्विष्टप्रयोजकताज्ञानम्, एवञ्च विध्यर्थोपीष्टप्रयोजकत्वमेव तथाच समाप्तिकामो मङ्गलमाचरेदिति विधिपक्षेपि समाप्तिप्रयोजकत्वं मङ्गलस्य लभ्यते नतु जनकत्वम्, तत्तु तज्जनकविघ्नध्वंसजनकत्वेनाप्युपपद्यते । यागादौ का वार्तेति चेन्न तत्रापि श्रुत्या प्रयोजकत्वमेव बोध्यते । जनकत्वलाभः कथमिति चेन्न श्रुत्या बोधितस्य नियतपूर्ववर्तित्वस्यान्यथासिद्ध्यभावे कारणतायामेव पर्यवसानात् । नहि यागेऽन्यत्रक्लृप्तेत्यादिरन्यथासिद्धिः अन्यत्र क्लृप्तगङ्गास्नानादेर्यागजन्यस्वर्गस्थलेऽसम्भवात् । मङ्गलस्य तु न कारणत्वसिद्धिः अन्यत्र क्लृप्तस्य विघ्नसंसर्गाभावादेः सम्भवादन्यथासिद्धत्वादिति ।

परमार्थतस्तु नात्र श्रुतिः कारणताग्राहिका आनुपूर्वीविशेषास्फुरणात् । घटमानयानय घटमित्यादौ व्यभिचारेण पदानुपूर्व्या

(सेतु०) हेतुत्वे निघटमानयेत्यतः शाब्दबोधादर्शनेन वर्णानुपूर्व्या हेतुत्वात् । आनुपूर्वीविशेषस्यैव सम्बन्धितावच्छेदकत्वेन तेन रूपेणोपस्थितिं विना पदार्थास्मारकत्वाच्च, प्रमेयत्वादिना हस्तिज्ञानस्य हस्तिपकास्मारकत्वात् । न च कुशमानयेत्यत्र सकारशकारसन्देहे आनुपूर्वीज्ञानस्य कारणत्वात् कथं शाब्दबोध इति वाच्यम् तत्र शाब्दबोधाभावात् । यस्तु कदाचित्कस्यचिद्बोधो जायते सोऽनुमानादिप्रभवः एवं हस्तकरसन्देहेऽपि । न च तदर्थज्ञापकत्वेनैव ज्ञातात्पदार्थोपस्थितौ शाब्दबोधः वृत्त्या पदोपस्थाप्यस्यैव शाब्दबोधविषयत्वात् । अन्यथा घटोऽस्तीत्यत्राकाशोऽस्तीति बोधापत्तेः आधाराधेयभावसम्बन्धेनाकाशस्मरणसम्भवात् । न चात्र मङ्गलादिपदानां नियतानामेव प्रवशात् कथं वर्णानुपूर्व्यज्ञानमिति वाच्यम् मङ्गलपदस्य नियतस्य प्रवेशोऽपि कुर्यादाचरदित्यादीनां बहुविधत्वात् । तत्रापि नमस्कारादिपदैर्बाहुल्यसम्भवाच्च । किन्त्वनुमानं तच्च–मङ्गलं विघ्नध्वंसजनकं तदन्यष्टाजनकत्वे सतीष्टजनकत्वात् इत्याकारकमेव नतु समाप्तिजनकमित्याकारकम् । (१)तत्र विघ्नध्वंसस्यापि जनने हेतोरसिद्धेः । किञ्च मङ्गलं सफलं शिष्टाचारविषयत्वादित्यनुमानेनैव लाघवसहकारेण फलविशेषोपस्थितिः । लाघवं च विघ्नध्वंसजनकत्व एवेत्युक्तमेव । तथा च स्वतन्त्रानुमानेनापि यदि विशेषतः फलम् सिसाधयिषितं तदा तदनुरुद्धमेव साधनीयमविरोधात् । अपि च परिशेषानुमानेन समाप्तिफलकत्वसाधनोद्यतेनाधिकाररूपकामनाविषयसमाप्तीतरफलाजनकत्वे सतीत्यादिर्हेतुर्वाच्यः, अन्यथा प्रागुक्तनयेनासिद्धेः अयमपि च कामनाद्वयदर्शिनः सन्दिग्धासिद्ध एव कामनाधिकार इत्यनिर्णयात् । न च समाप्तिजनकसम्भावनया भवदीयोऽपि हेतुरसिद्धः गौरवेण तत्फलत्वनिरासात् । समाप्तिफलकत्वं साधयित्वा विघ्नध्वंसफलकत्वस्य निराकर्तुमशक्यत्वात् । अधिकारत्वनिश्चयोऽपि विघ्नध्वंसकामनायामेव लाघवात न तु समाप्त्यादिकामनायां गौरवात् । नच विघ्नध्वंसकामनया अधिकारे तां क्रियमाणस्य मङ्गलस्यापवर्गस्य कामनया क्रियमाणस्य योगस्येवानधिकृतकर्तृत्वेन निष्फलत्वापत्त्या समाप्त्यनापत्तिरिति वादेरेव समाप्त्युपपत्तेः । तस्य

---

(१) समाप्तिजनकानुमान इत्यर्थः ।

(सेतु०) चैतावत्प्रतिसन्धानं नास्ति । तस्येश्वरनानात्वावगाहिनीव जायमानापि समाप्तिफलकत्वगोचरानुमितिरप्रमा विषयबाधात् इति नागरिकमनोनुसारी पन्थाः ।

ग्राम्यास्तु मङ्गलत्वं सत्ताजातिमत्त्वे सति विघ्नान्यत्वे सति विघ्नोत्सारणासाधारणकारणत्वम् । अत्र स्वस्वत्वध्वंसात्मक-सुवर्णदानेऽतिव्याप्तिवारणाय विघ्नान्यत्वे सति सत्ताजातिमत्त्वे सतीति वा । प्रतियोगिनः स्वध्वंसं प्रत्यसाधारणतया तत्रा-व्याप्तिवारणाय सतीति । कालादावतिव्याप्तिवारणाय असा-धारणेति । अवग्रहनिवृत्त्यसाधारणकारणे कारीर्यामतिव्याप्ति-वारणाय विघ्नेति । विघ्नत्वं च दुरिताधारपुरुषप्रारीप्सितप्रति-बन्धकदुरितत्वम् । अवग्रहप्रतिबध्या वृष्टिस्तु न दुरिताधारपु-रुषप्रारीप्सिता किन्त्विष्टैव । येषान्तु प्रारिप्सिता देवानां न ते दुरिताधारा इति । एवंलक्षणे सुवर्णेऽतिव्याप्तिः सुवर्णतद्दानयोर-पि विनिगमनाविरहेण हेतुत्वात् तथा च तत्रातिव्याप्तिवारणाया-साधारणपदेन नानाफलकामनया श्रुतिभिन्नत्वस्यावश्यवक्तव्यतया ततएव सुवर्णदानस्यापि वारणम् सत्ताजातिमत्त्वे सतीति विशेष-णरहितमेव लक्षणमिति ।

मङ्गलत्वन्तु जातिर्न भवत्येव संयोगत्वादिना सङ्करात् । संयोग-स्य घटपटसंयोगेन मङ्गलत्वपरिहारेण सत्त्वेन मङ्गलत्वस्य च श-ब्दात्मिकायां स्तुतौ संयोगत्वपरिहारेण सत्त्वेन करशिरस्संयोगा-त्मके कायिके द्वितयसत्त्वेन साङ्कर्यस्य स्फुटत्वात् । नचानेन मङ्गल-त्वेन समाप्तिकारणत्वमवच्छेत्तुं शक्यते अन्यं प्रति पूर्ववर्तित्वे गृ-हीते यत्रान्यं प्रति पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्यन्यथासिद्धेः अन्यथाकाशस्य घटकारणतापत्तेः । तदकारणतायामाकाश-त्वस्य शब्दसमवायिकारणत्वरूपतया शब्दपूर्ववर्तित्वे गृहीते घटा-दपूर्ववर्तित्वं गृह्यत इत्यन्यथासिद्धिरेव बीजम् । सा च प्रकृतेऽपि प्रक्रान्तपराक्रमैव विघ्नध्वंसकारणत्वपरिच्छेदोत्तरं समाप्तिं प्रति म-ङ्गलपूर्ववर्तित्वग्रहात् । ननु मास्तु मङ्गलत्वेन कारणता स्तुतित्वनम-स्का(१)रादिनैव भविष्यति तत्र विघ्नध्वंसकारणत्वाप्रवेशात् । गुण-

(१) (व्यो०) ननु चायुक्तमेतत् । सत्यपि नमस्कारे कारम्बर्यादौ शास्त्रपरिसमाप्तेरदर्शनात्

(सेतु०)वक्तया ज्ञानजनकशब्दस्य स्तुतित्वात् । कृष्णायेति वाचनिके नमस्कारेऽतिव्याप्तिवारणाय गुणवत्तयेति । गुणानाञ्च चेतने उत्कृष्टशब्दप्रवृत्तित्वेनानुगमः अतो न शौर्यादीनामननुगमेनाननुगमः । चेतनमिति विशेषणाच्च शर्करारसो मधुर इत्यादेः स्तुतित्वम् । नमस्कारत्वमपि स्वापकर्षबोधानुकूलतावच्छेदकजातिमत्त्वम् । यद्यपि स्तुत्यपेक्षया स्तोतुरपकर्षः प्रतीयत एव तथापि तत्र न जातिरवच्छेदिका स्तुतित्वस्य जातिसङ्कर्यभयेनोपाधित्वात् । त्वं पण्डित इत्यत्र द्वितयसत्त्वात्, ननु नमस्कारत्वमपि न जातिर्घटपटसंयोगवाचनिकपरिहारेण सतोः संयोगत्वनमस्कारत्वयोरेकत्र कायिके समानाधिकरणत्वात् । तथा च कथं जातिगर्भनमस्कारलक्षणमिति चेन्न कायिकत्वादिजातीरादाय लक्षणनिर्वाहात् । ननु कायिकत्वमपि न जातिः कायिकत्वस्योभयकर्मजन्यसंयोगे सत्त्वेन तत्रान्यतरकर्मजन्यतावच्छेदकजातिविरहादन्यतरकर्मजन्यतावच्छेदकजातेः स्थाणुश्येनसंयोगे सत्त्वेन तत्र कायिकत्वाभावादन्यतरकर्मजन्ये कायिके द्वितयसत्त्वात् सङ्करादिति चेन्न अन्यतरकर्मादिजन्यतावच्छेदकजातिविरहेण तामादाय सङ्कराभावात् । ननु वाचनिकत्वं न जातिः महत्त्वस्य महादेवेत्यत्र सत्त्वेन वाचनिकत्वाभावाद्वाचनिकत्वस्य नतिरित्यत्र सत्त्वेन महत्त्वाभावात् नम इत्यत्र द्वितयसत्त्वादिति चेत् नामत्वादिव्याप्यनानावाचनिकत्वस्वीकारात् । ननु मानसिकत्वं न जातिः कृष्णादहमपकृष्टो घटश्चेति समूहालम्बनेऽव्याप्यवृत्तित्वापत्तेरिति चेन्न समूहालम्बनस्य मानसिकत्वानङ्गीकारात्, अव्याप्यवृत्तिजातिस्वीकाराद्वा, अत एव संशयत्वं जातिरित्येकदेशिनः । मानसिकत्वं द्वि-

---

प्रमाणतोऽर्थप्रतिपत्तौ इत्येवमादौ सूत्रे शास्त्रपरिसमाप्तेः कार्यत्वादवश्यं कारणं वाच्यम् अन्यासम्भवात् धर्मविशेषः कारणमिति । स च नमस्कारादन्यतो भवत्वित्येके । अन्येतु साधनविशेषाद्विशिष्यत इति नमस्कारादेवोपजायते धर्मविशेषः कारणमिति । अथ नमस्काराभावे तर्हि कथं शास्त्रसमाप्तिरिति, न तत्र कार्यसद्भावेन कारणसद्भावसिद्धेः । वाचिकनमस्काराभावेपि मानसो ज्ञायत इति । एकदा हि विशिष्टनमस्कारसद्भावे परिसमाप्तेरुपलम्भादिति । तथाहि मानसनमस्कारोपचितो वाचिकनमस्कारः समाप्तेः कारणमिष्यते मानसस्तु केवलोपीति । अत एव क्वचिद्वाचिकसद्भावेपि मानसाभावादपरिसमाप्तिर्युक्तेति । तदभावः कार्यानुत्पादेनैव ज्ञायत इति । नमस्काराच्च धर्मः संपद्यते इति आगमाद्याभिप्रहर्षं तथा लौकिकोपि पुरुषः कृतनमस्क्रियः क्रियाकरणे वर्तमानो दृष्टः किम्पुनर्भगवान्मुनिरनवद्यवादीति प्राचीनाः ।

(सेतु०) विघ्नं मत्तः कृष्ण उत्कृष्ट इत्येकं कृष्णादहमपकृष्ट इत्यपरमिति चेन्न स्तुतिनमस्कारयोरपि विघ्नध्वंसकारणत्वप्रवेशस्यावश्यकत्वात्, अमङ्गलीभूतस्तुतिनमस्कारवारणस्यावश्यकत्वात्। न हि बन्दिकर्तृकराजादिस्तुतिरपि मङ्गलम्, तस्या राज्ञस्तोषादिपोषकत्वेऽपि विघ्नध्वंससमाप्त्योरप्रयोजकत्वात्। कर्मानारम्भे क्रियमाणो नमस्कारोऽपि मङ्गलं तेन सुकृतादिजननेऽपि विघ्नध्वंसस्याजननात्। निखिलपापपराभवप्रापिका परमेश्वरप्रणतिस्तदन्तर्गततया विघ्नध्वंसत्वावच्छिन्नकार्यताकविघ्नध्वंसमर्जयति तथा च मङ्गलीभूतनुतिनत्योर्विघ्नध्वंसकारणत्वगर्भमेव लक्षणसर्वस्वमिति तत्राप्यन्यथासिद्धिरेवेति। अपि च मास्तु लक्षणे विघ्नध्वंसकारणत्वेन प्रवेशनान्यथासिद्धिरन्यथा तु भविष्यति स्तुतिलक्षणे ज्ञानपूर्ववर्तित्वप्रवेशात् नमस्कारलक्षणेऽपि तत्प्रवेशात् अनुकूलताया जनकताप्रयोजकतान्यतररूपत्वात् प्रयोजकतायामपि पूर्ववर्तित्वप्रवेशात्। ननु विघ्नध्वंसकारणतापि कथं तत्तन्मङ्गलत्वेनात्माश्रयात् इति चेन्न तत्तद्व्यक्तित्वेन कारणत्वादिति वदन्ति। तदवद्यम्। एवं हि दण्डस्यापि कारणताभङ्गापत्तेः। तत्रापि मृदुदण्डवारणाय दृढदण्डत्वेन कारणत्वस्य वाच्यत्वात्। दार्ढ्यस्य भ्रमिजनकत्वादन्यस्य वक्तुमशक्यत्वात्। ननु स्पर्शविशेषोऽवयवसंयोगगर्भो विशेषो दार्ढ्यं न तु भ्रमिजनकत्वमिति चेन्न तथाभूतादपि घुणाघातादिविलुप्ताद्भृशं कृशताक्लिष्टशरीराद्वा दण्डाद् घटानुत्पत्तेस्तस्यापि वारणीयत्वात्। वस्तुतस्तु दृढदण्डत्वेन कारणत्वमिति बालप्रलाप एव। दण्डत्वं हि न वेणुदण्डगता जातिः काष्ठशकलादपि तत्स्थलाभिषिक्तात् क्वचिद्घटोत्पत्तेः कर्मकरणकर्कशात्कुलालकरादपि चक्रक्रियादर्शनाच्च तस्माद्भ्रमिजनकत्वमेव दण्डत्वम्। एवञ्च दार्ढ्यस्य पृथग्विशेषणत्वमदृढ एव तथा च प्रकृतेऽपि भ्रमिपूर्ववर्तित्वग्रहानन्तरं घटपूर्ववर्तित्वग्रहादन्यथासिद्धिः स्यादेव। यदि च प्रकृतकार्याजनकमन्यं प्रतीत्यादिविवक्षया तत्रान्यथासिद्धिप्रतिषेधस्तदा प्रकृतेऽपि कथम्? भ्रमेर्घटम्प्रतीव विघ्नध्वंसस्य समाप्तिं प्रति जनकत्वात् तस्मात्पूर्वोक्तयैव रीत्या समाप्तिकारणत्ववारणमिति रमणीयम्। दण्डमङ्गलयोः कुलालपितुरिवान्यथासिद्धिः कुतो न भवतीत्यादिस्तु विचारो ग्रन्थगौरवभयान्न सञ्चार्यते। ननु ग्रन्थ-

(सेतु०) मङ्गलयोः समाप्तिविघ्नध्वंसजनकत्वयोः द्वयोः प्रधानत्वेऽधिकारिकल्पनागौरवमिति चेन्न मङ्गलस्य समाप्तिकारणत्वेऽन्यथासिद्धेरुदाहृतत्वेनास्य प्रमाणपरिगृहीतत्वात्। यथा च समाप्तिकामो मङ्गलमाचरेदिति श्रुतिरपि न समाप्तिसाधनतां बोधयति तथोपदिष्टमेव। यत्तु मङ्गलमदृष्टद्वारा समाप्तिसाधनमिति केषाञ्चिन्मतं तदयोग्यमेव। विघ्नध्वंसस्य प्रतिबन्धकध्वंसतयाऽऽवश्यकत्वात्। तद्ध्वंसस्य च कस्यचिद्विहितस्यैव वक्तव्यत्वेनान्यकल्पनायां गौरवेण मङ्गलस्यैव वाच्यत्वात्। विघ्नध्वंसस्य कालान्तरीयत्वाभावेन तज्जनने मङ्गलेनादृष्टानपेक्षणात्। विघ्नरूपानिष्टज्ञाने सति मङ्गलाचरणेन विघ्नध्वंसस्य मङ्गलसाध्यत्वावश्यकत्वाच्च।

इदन्त्ववधेयम्। क्वचिन्मङ्गलेनाप्यदृष्टं जन्यत एव अन्यथा नानावर्णात्मकश्रुतौ द्विक्षणस्थायिनां पूर्वपूर्ववर्णानां चरमवर्णेनामिलने कथं विघ्नध्वंसजनकत्वम् तथाचोपान्त्यान्त्यैराहत्यैव विघ्नध्वंसो जन्यते। अन्यैस्तु कलिकासुकृतानि(१) कृत्वेति मन्तव्यम्।

वस्तुतस्तु गुणवत्तया ज्ञानजनकशब्दो न स्तुतिः मौनिस्तुताव्याप्तेः। एवं वाचनिको नमस्कारोऽपि न शब्दात्मकः मौनिप्रतिसंहिते कृष्णाय नम इति शब्दे यत्र वाचनिकं भवति तत्राव्याप्तेः। न च मौनिनः स्तुतिवाचनिकौ नमस्कारौ न भवत एव व्यवहारविरोधात् किन्तु वर्णविशेषप्रतिसन्धानस्तुतिर्वाचनिको नमस्कारश्च वर्णात्मकाविति वाच्यम् अननुगमापत्तेः। एवन्तु पर्याप्तं वर्णानां समूहालम्बने नादृष्टम् ज्ञानभेदे तु केषांचिज्ज्ञानानां नाशे तत्राप्यदृष्टापेक्षत्यस्मदादिष्टमाश्रयणीयम्। विघ्नप्रागभावजनकत्वं तु मङ्गलस्य प्रागेव निरस्तम्। तथा च विघ्नसंसर्गाभावद्वारा समाप्तिसमर्पकत्वञ्च स्मरणपथमप्यवतारणीयमित्यवधारणीयमिति संक्षेपः।

नन्वीश्वरपदस्य नित्यज्ञानादिमत्परत्वेऽर्थादेव हेतुत्वलाभे हेतुमित्यभिरुष्ण इतिवदर्थपुनरुक्तमिति चेन्न ईश्वरं यथेष्टविनियोक्तारमित्यर्थात् वस्तुस्तुतिरियम्। न च स्तुतौ पौनरुक्त्यं दोषाय एकेन प्राप्तौ तन्निर्वाह इत्यवधेयम्। आचार्यचरणानामप्य-

---

(१) पण्डसुकृतं कलिकासुकृतञ्चेति मीमांसकास्तत्र प्रथमं सफलं द्वितीयमफलम्भवतीति तदाशयः।

( सेतु० ) त्रैव तात्पर्यं न तु लिखिते पक्षत्रये । तथा हि हेतुपदं व्यर्थं सत्प्रमाणं सूचयति व्यर्थं सदिति न्यायात् इति प्रथमपक्षार्थः । न च स उपपद्यते स्तुतित्वेन व्यर्थत्वाभावात् । न च हेतुपदस्य सहजमेव प्रमाणसूचकत्वम् अन्यत्र तथाऽदर्शनात् । ईश्वरपदसन्निधिप्रयुक्तो वा हेतुशब्दो विशिष्ट एव श्रेयःसमधिगमनिमित्ते वर्तते इति द्वितीयः पक्षः, सोऽपि नोपपद्यते । यदीश्वरप्रयोगादेव प्राप्तार्थस्य हेतुपदस्य व्यर्थत्वात् मोक्षासाधारणत्वबोधकत्वम्, तत्र पूर्वमुक्तमेव स्तुतित्वेन वैयर्थ्याभावादिति । अथेश्वरपदसन्निहितहेतुशब्दत्वेन वाचकता मोक्षासाधारणत्वेन वाच्यतेति । तन्न, ईदृशि शक्तौ प्रमाणाभावात् । प्रकृतश्लोकातिरिक्तस्थले क्वापि तथा व्यवहाराभावात् । अत एव प्रस्तुतशास्त्रसाधारणमिति तृतीयपक्षोऽपि निरस्तः । वैयर्थ्यपुरस्कारशक्तिस्वीकारयोरसम्भवात् । लक्षणया तथार्थकल्पने समाधानान्तरसम्भवे लक्षणाकल्पनस्योपेक्षणीयत्वात् । तस्मात् किरणावलीकृतोऽपि मदुक्त एवाशय इति संक्षेपः । 'अनु' 'अतः'—इतिपदाभ्यां गुरुतमादिक्रमेण नमस्कार इति शिक्षा । न च शिष्टाचारादेव तत्प्राप्तिः अज्ञातॄन्प्रति शिष्टाचारस्यैव प्रदर्शनात् ज्ञातॄन्प्रति प्रमाणवत् निबन्धस्याऽपि व्यर्थत्वात् । एवञ्चान्वित्यस्यावश्यकत्वेऽतःपदमपि तथा शाब्दीति न्यायात् । प्रेक्षावदुपादानप्रयोजकं सङ्ग्रहस्य फलवत्त्व महोदयपदेनाह महांस्तत्त्वविषयः ।

## व्योमशिवाचार्यकृता व्योमवती टीका(१) ।

·········प्रमितिविशिष्टानन्तर्यप्रतिपादनाच्च तदभावनिरासः । स तच्छब्दोऽपि हेतौ वर्तमानो विशिष्टदेशकुलप्रसूतमविप्लुतेन ब्राह्मणेनाविप्लुतायां ब्राह्म······ विद्नु··························· देशावसितायां दुपजातं शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशतदन्तेवासिनमाहेति । तथा च साङ्गाश्चतुर्वेदानाव··························सुमते ब्राह्म······························त्वे लकमाजगाम । न ह वै सशरीरस्य प्रियाप्रिययोरुपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति वाक्यादशरीरावस्थां सुखदुःखमनिशं प्रतिपद्यते ।························ पकामाददर्शनमात्रवत् । तं च यथोपपन्नं भगवानधिकारिणं दृष्ट्वा समाधिबलादेकस्मिन्नणावुत्पन्नषट्पदार्थतत्त्वज्ञानो महेश्वरेण································सूत्रकरणे प्रवृत्तस्तदर्थसिद्धये सूत्रसन्दर्भस्य च तिसंचितत्वा··········चोदितया वास्मदादेस्तत्त्वज्ञानं न स्यादिति प्रशस्तपादसङ्क्षेपता ।······························ ·································त्वादिवदप्रतिभासनादधिकार्यभावः, तदसत् । उपदेशव्यङ्ग्यत्वात् । तथाहि—द्रव्यादिषु इव कृते समयस्य···························अनुगतं

---

(१) ग्रन्थारम्भे कृत्स्नव्योमवत्या अनुपलम्भाट्टिप्पणीरूपेण दत्तापीयं टीका काशीस्थराजकीयसरस्वतीभवनकृपया साकल्येनोपलब्धाऽतः परं यथोपलब्धा क्रमेण दीयत इति ।

ज्ञानमि ............................................................................................................... ब्राह्मणो-
यमिति ज्ञाने पश्चाद्बाविबाधकानुपपत्तेः । प्रमाणतया शिष्टपदार्थाधिकारिसिद्धेर्निर्विषयत्वाच्च दोषः ।
निरभिधेयत्वम् अविद्धं द्रव्यादि ............................................................................................
भावश्च निरस्त एव तदभिधानात् । तथाप्रयोजनोपन्यासात्तदभावश्चेति । अथ किं पुनश्च विज्ञानं
किं वा निःश्रेयसमिति वाच्यम् । अवस्थितपदार्थबि ..........................................................
........................................................नवानामात्मविशेषगुणानामत्यन्तोच्छित्तिर्न धर्मा-
र्थकामाः, तेषामल्पसाधनसाध्यत्वात् । अथ निःश्रेयसास्तित्वे किं प्रमाणम् । विष्णुचेतनमनु-
मानभाग ...........................................................व तथाहि—नवानामात्मविशेषगुणानां
सन्तानोऽत्यन्तमुच्छिद्यते सन्तानत्वाद्यो यः सन्तानः स सोऽत्यन्तमुच्छिद्यमानो दृष्टः, यथा प्रदीपस-
न्तानः, तथा चायं सन्तानस्तस्मात् ...........................................................................
.........................................तमुच्छिद्यत इति । सन्तानत्वस्य च व्याप्त्या बुद्ध्यादिषु स-
म्भवात् । पक्षधर्मतयाऽसिद्धत्वाभावः । तत्समानधर्मिणि च प्रदीपादावुपलम्भात् अविरुद्धत्वं,
न च पक्षे परमाण्वादौ अस्तित्वं ...................................................................................
...............................................मित्यनेनैकान्तिकत्वाभावः । विपरीतार्थोपस्थापकयोः प्र-
त्यक्षागमयोरनुपलम्भाच्च कालात्ययापदिष्टः । न चायं सत्प्रतिपक्ष इति पञ्चरूपत्वात् प्रमाणम् ।
अथ निर्हेतुकाविना ......................................................................................................
.................................................प्रति ....................................................वक्ष्यान्ता-
देरेव हेतुर्वाच्यः यतः समुच्छिद्यत इति । स तूक्त एव तत्त्वज्ञानं निःश्रेयसहेतुरिति निर्देशाच्च तत्त्वज्ञान-
म् अवशिष्टत्वाच्च प्रतिव्यक्त्यपेक्षं किं तु ..........................................................................
..........................................इत्यादि लक्षणा ............... ......तथाहि । द्रव्यादिलक्षणल-
क्षितेषु उत्पद्यते तत्त्वज्ञानमिति । अथ तत्त्वज्ञानस्य निःश्रेयसकारणत्वे समुपजाततत्त्वज्ञानस्त्वन-
न्तरमेवापमृत्यं ..................................................मनस्यसम्भवे अस्मदादीनां तत्त्वज्ञाना-
नुपपत्तिः । अथ योगजधर्मादुपजाततत्त्वज्ञानोऽस्मदादे तत्त्वज्ञानसम्पादनाय कणादः सूत्राणि करोती-
त्यवस्थां ..........................................................श्यत गताऽर्हतत्त्वज्ञान निःश्रेयसकारणे
सत्यप्यभावात् । नैष दोषः । विशिष्टतत्त्वज्ञानस्य निःश्रेयसकारणत्वाभ्युपगमात् । तथाहि—उपजातेऽपि
श्रौते तत्त्वज्ञानेऽस्मदादीनां ................................................निःश्रेयसं योगाभ्यासजनिततत्त्वज्ञानस्य
सम्भवात् । श्रौते हि तत्त्वज्ञाने समुत्पन्ने योगाभ्यासे प्रवृत्तस्याभ्यासवशादात्मन्यशेषविशेषालि-
ङ्गितेऽत्यन्ततत्त्वज्ञानमुपजातं नि ..................................................................यसकारणमिति ।
तथा ह्युपलब्धं सम्यग्ज्ञानस्य मिथ्याज्ञाननिवृत्तौ सामर्थ्यम् शुक्तिकादाविति सम्यग्ज्ञानस्य ज्ञानान्तरवि-
रोधित्वादुत्तरकालभाविना मिथ्याज्ञानेनापि सम्यग्ज्ञानस्य विरोधः सम्भवत्येव यदि सा मनःसन्ता-
नोच्छित्तिर्विवक्षितेति । सम्यग्ज्ञानान्मिथ्याज्ञानस्य सन्तानोच्छेदो नैवं मिथ्याज्ञानात्सम्यग्ज्ञानस्येति ।
निवृत्ते च मिथ्याज्ञाने तन्मूलत्वाद्रागादयो नश्यन्ति कारणाभावे कार्यस्यानुत्पादादिति । रागाद्यभावे च
तत्कार्या प्रवृत्तिर्व्यावर्तते । तदभावे च धर्माधर्मयोरनुत्पत्तिः । आरब्धकार्ययोश्चोपभोगात् प्रक्षय इति ।

अथ सञ्चितयोर्विचारः । कथं तत्त्वज्ञानादेवेति । यथोक्तम्—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुते क्षणात् । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा(गी०)॥ इति ।

नन्वुपभोगादेव (१)प्रक्षय इत्यप्यागमोक्तम् । यथोक्तम्—

(१) 'क्षीयन्ते' इति खपुस्तके पाठः ।

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्॥

तथा च (१)विरुद्धार्थत्वादुभयोः कथं प्रामाण्यमिति। भोगाच्च प्रक्षयेऽप्यनुमानमप्यस्ति—पूर्वकर्माण्युपभोगादेव क्षीयन्ते कर्मत्वात्। यद्यत्कर्म तत्तदुपभोगादेव क्षीयते। यथाऽऽरब्धशरीरं कर्म तथा चामूनि कर्माणि तस्मादुपभोगादेव क्षीयन्ते। उपभोगेन च प्रक्षये कर्मान्तरस्यावश्यंभावात् संसारानुच्छेदः। तदसत्। समाधिबलादुत्पन्नतत्त्वज्ञानो हि कर्मणां च साध्यमर्थं विदित्वा युगपच्छरीराणि निर्मायोपभोग..................क्त इति। न च कर्मान्तरोत्पत्तिर्मिथ्याज्ञानजनितानुसन्धानाख्यस्य सहकारिणोऽभावात्। अथ मिथ्याज्ञानाभावेऽभिलाषस्याभावाद् भोगानुपपत्तिः। तन्नोपभोगं विना हि कर्म..................या अनुपपत्तेः। ज्ञानन्नपि तदर्थितया प्रवर्त्तत एव। वैद्योपदेशादातुरवदौषधाचरणे ज्ञानमप्येवमशेषशरीरोत्पत्तिद्वारेणोपभोगात्। कर्मणां विनाशे व्यापारादग्नि..................इति व्याख्येयं, न तु साक्षात्। न चैतद्वाच्यम्—तत्त्वज्ञानिनां कर्मविनाशस्तत्त्वज्ञानादितरेषां तु उपभोगादिति। ज्ञानेन कर्मविनाशे प्रसिद्धोदाहरणाभावात्। अन्ये तु मिथ्याज्ञानजनितसंस्कारस्य सहकारिणो ऽभावात् विद्यमानान्यपि कर्माणि न जन्मान्तरे शरीरारम्भकाणि इति मन्यन्ते। अत्र च कार्यवस्तुनो नित्यत्वं स्यादिति दूषणम्। अथानागतयोर्धर्माधर्मयोरुत्पत्तिप्रतिषेधे तत्त्वज्ञानिनो नित्यनैमित्तिकानुष्ठानं तर्हि कथम्? प्रत्यवायपरिहारार्थं, तथाहि—

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत्॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः॥ इति।

केवलं तु काम्ये निषिद्धे च प्रवृत्तिप्रतिषेध इति। यदि वा तत्त्वज्ञानिनो नित्यनैमित्तिकानुष्ठाने न निवर्तते धर्मोत्पत्तिस्तथैवाभिसन्धानात्। तत्फलसंन्यासो वा। तथाहि सर्वकर्मणां परमगुरावर्पणमिति श्रूयते। न वा प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्येत्यलम्। अथास्तु तत्त्वज्ञानं निःश्रेयसकारणम्। अवधारणन्तु निषिध्यते। संन्यासादिक्रियायाश्च मोक्षहेतुत्वेन श्रवणात्। तथाहि—

संन्यस्यन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः। मम मण्डलं भित्त्वा प्रयाता लोकमक्षयम्॥
द्वावेतौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हत॥

इत्याद्युक्तम्। सत्यम्। संन्यासादिक्रियायाः सूर्यमण्डलभेदित्वेनोर्ध्वगमनहेतुत्वमिष्यत एव। यदि नाम 'लोकमक्षयम्' इत्यभिधानादक्षयत्वमधस्तनलोकापेक्षया क्रियान्तरफलापेक्षया वा द्रष्टव्यम्। तथाहि संन्यासादिलक्षणक्रिया भौतिकान्यक्रियापेक्षया प्रधानभूतेति। न च नवानामात्मविशेषगुणानामत्यन्तोच्छित्तिर्निःश्रेयसं सूर्यमण्डलभेदित्वेन भवतीति, तस्य विशेषगुणवियुक्तात्मरूपतया सर्वत्र भावात्। अत एव न तत्त्वज्ञानकार्यत्वादनित्यत्वमिति वाच्यम्, विशेषगुणोच्छेदस्य प्रध्वंसरूपत्वात्। तदुपलक्षितात्मन एव नित्यत्वादिति कार्यवस्तुनश्चानित्यत्वमिति। न च बुद्ध्यादिनाशे गुणिनस्तथाभावस्तादात्म्यप्रतिषेधस्य वक्ष्यमाणत्वाद्। अथ मोक्षावस्थायां चैतन्यस्याप्युच्छेदान्न कृतबुद्धयः प्रवर्तन्त इति आनन्दरूपो मोक्ष इष्यतामिति मनुषे। यथोक्तम्—आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिपद्यते इति। तथा 'सुखेनाहमस्वाप्सम्' इति सुषुप्तावस्थोत्तरकालं स्मरणान्यथानुपपत्त्याऽनुभवो ज्ञायते। तत्र चाभिधानानुमानयोर्व्यापारोऽनुपलब्धो बाह्येन्द्रियाणां चेत्यन्तःकरणस्य व्यापारो ज्ञायते इति मानसं प्रत्यक्षम्। अनुमानं चात्मा सुखस्वभावोऽत्यन्तं प्रियबुद्धिविषयत्वात् अनन्यपरतयोपादीयमानत्वाच्च, यदेवंविधं तत्तत्सुखस्वभावं यथा वैषयिकं सुखम्, तथाचात्मैवंविधः तस्मात्सुखस्वभाव इति। तदेतदसत् बाधकोपपत्तेः। तथाहि तस्यानित्यतायामुत्पत्तिकारणं वाच्यम्। न च मोक्षावस्थायामात्मा-

(१) 'विरुद्धवाचित्वात्तु' इति खपुस्तके।

न्तःकरणसम्बन्धः शरीरसम्बन्धापेक्षः सम्भवति शरीरादेरभावात् । न चासमवायिकारणं विना वस्तूत्पत्तिर्दृष्टा । अथ नित्यं तत्सुखमिति चेत् अज्ञातसम्वेदनं तु यदि नित्यं मुक्तावस्थायामिव संसारावस्थायामपि भावादविशेषप्रसङ्गः । स्मरणानुपपत्तिश्चानुभवस्यैवावस्थानात् । संस्कारानुपपत्तिश्चानुभवस्य निरतिशयत्वात् । अथ संसारावस्थायां बाल्यविषयव्यासङ्गाच्छिद्यमानस्याप्यनुभवस्यासम्वेदनम् । तदभावाच्च मोक्षावस्थायां वेदनमित्यास्ति विशेषः । तदसत् । नित्यसुखे ह्यनुभवस्यापि नित्यत्वाद्व्यासङ्गानुपपत्तिः । तथा ह्यात्मनो रूपादिविषयकज्ञानोत्पत्तौ विषयान्तरे ज्ञानानुत्पत्तिर्व्यासङ्गः । एवम् इन्द्रियस्यापि एकस्मिन्विषये ज्ञानजनकत्वेन प्रवृत्तस्य विषयान्तरे ज्ञानाजनकत्वं व्यासङ्गः । न चैवमात्मनो रूपादिविषयकज्ञानोत्पत्तौ नित्यसुखे ज्ञानानुपपत्तिः, तज्ज्ञानस्यापि नित्यत्वात् । न च शरीरादिना प्रतिबध्यत्वादसंवेदनमिति वाच्यम्, नित्यत्वादेव । तथाहि प्रतिबन्धकं कार्यव्याघातकृदुच्यते । न च नित्यसुखज्ञानस्य अनुत्पत्तिः सम्भवति । तथोपभोगार्थत्वाच्च शरीरादेः भोगप्रतिबन्धकत्वानुपपत्तिः । यद्यदर्थं तत्तस्यैव प्रतिबन्धकमिति नोपलब्धम् । प्रतिबन्धकत्वेन तदपहन्तुर्हिंसाफलं न स्यात् । तथाहि प्रतिबन्धविघातक उपकारक एवेति दृष्टम् । न हि नित्यसुखसंवेदनस्य प्रतिबन्धकस्य शरीरादेः अपहन्तुर्हिंसाफलस्य अभाव इत्यलम् । अथानित्यं तत्संवेदनमिति चेत् । न उत्पत्तिकारणाभावात् । अथ योगजधर्मापेक्षः पुरुषान्तःकरणसंयोगोऽसमवायिकारणमिति चेत् । न, योगजधर्मस्यापि अनित्यतया विनाशे अपेक्षाकारणाभावात् । अथाऽऽद्यसंयोगजधर्मादुपजातं विज्ञानमपेक्ष्य उत्तरं विज्ञानं तस्माच्चोत्तरम् इति सन्तानम् । तन्न, प्रमाणाभावात् । तथा च शरीरसम्बन्धानपेक्षं विज्ञानमेव आत्मान्तःकरणसंयोगस्य अपेक्षाकारणमिति न दृष्टम् । न च दृष्टाद्विपरीतं शक्यते ह्यनुज्ञातुं आकस्मिकन्तु कार्यं न भवत्येव । अत एव नित्यसुखज्ञानस्य अभावात् 'सुखेनाहमस्वाप्सम्' इति ज्ञानं नेदं स्मरणं, किन्तर्हि दुःखकारणानुस्मरणाभावेन तदभावानुमितिज्ञानमेतत् सुखेनाहमस्वाप्समिति । विपर्ययो वा नित्यसुखदुःखेनाहमस्वाप्समिति विस्मरणात् नित्यदुःखमपि स्यात् । अथ सुषुप्त्यवस्थान्तराले दुःखकारणासंवेदनाद् दुःखेनाहमस्वाप्समिति ज्ञानमेतन् । एवं तर्हि तदभावात्सुखेन अहमिति भविष्यतीति । अथागमः तर्हि कथम् 'आनन्दं ब्रह्मणो रूपम्' इत्यादि । मुख्ये हि बाधकोपपत्तेः गौण इति । तथाहि दुःखाभावेऽयमानन्दशब्दः प्रयुक्तः दृष्टः, सुखशब्दो दुःखाभावे यथा भाराक्रान्तस्य बाहिकस्य तदपाय इति । यच्चानुमानमात्मा सुखस्वभाव इति । तत्र यदि सुखस्वभावत्वं जातिसम्बन्धित्वं, तन्न आत्मनि सम्भाव्यते गुण एवोपलम्भात् । न ह्येकाहङ्कारादिवदपरा जातिः द्रव्यगुणयोः साधारणोपलब्धेति । अथ सुखाधिकरणत्वम् । तन्नास्ति, नित्यानित्यत्वविकल्पानुपपत्तेः । तथा सुखत्वाधिकरणत्वे सुखाधिकरणतायां वा तज्ज्ञानस्य नित्यानित्यत्वविकल्पः । ................................ साधनं चात्यन्तप्रियबुद्धिविषयमनन्यपरतयोपादीयमानत्वञ्च अनैकान्तादसाधनम् दुःखाभावेऽपि भावात् । अनन्यपरतयोपादीयमानत्वं चासिद्धम् सुखार्थमुपादानात् । तथाऽत्यन्तप्रियबुद्धिविषयत्वमप्यसिद्धम् दुःखितायामप्रियबुद्धेरपि भावात् । इत्यनुमानद्वयमप्रमाणम् । यदि च मोक्षावस्थायां नित्यं सुखमस्तीत्यभिलाषेण प्रवर्तेत न मुक्तः स्यात्, रागस्य बन्धनरूपत्वात् । अथ दुःखादिकमुच्छेदयामीति द्वेषादपि प्रवर्तमानस्य तदेव दूषणम् । नानुकूलत्वात् । तथा च प्रतिकूलस्य अदोषस्य प्रतिषेधस्य तद्रागेऽपि समानमित्यदूषणमेतत् इत्यन्यद्दूषणम् । अथ सर्वगुणोच्छेदाद्वरं वैषयिकं सुखं दुःखसाधनपरिहारेण भोक्तव्यमिति मन्यसे । तन्न, तस्य दुःखानुषङ्गेण दुःखरूपतया हेयत्वात् । येषां चैतदुपादेयं न तान्प्रतीदमर्थवच्छास्त्रम् । सन्ति च वैषयिकसुखद्वेषिणः पुरुषाः । तान्प्रतीदं शास्त्रम् । ते च यदुपदेशमपेक्षन्ते नोपायान्तरादेवार्थं प्रतिपद्यानुष्ठाने प्रवर्तन्ते इति । मोक्षास्तित्वे च प्रमाणोपपत्तेः । शेषं वचनमात्रमित्युपेक्ष्यते । अन्ये

त्वन्यथाभूतादेव साधनात् अन्यथाभूतं मोक्षं मन्यन्ते । यथोक्तम्—गुणपुरुषान्तरविवेकदर्शनं (१)निःश्रेयससाधनमिति । तथाहि पुरुषार्थेन हेतुना प्रधानं प्रवर्तते । पुरुषार्थश्च द्वेधा-शब्दाद्युपलब्धिः गुणपुरुषान्तरविवेकदर्शनं च । सम्पन्ने हि पुरुषार्थे चरितार्थत्वात् न प्रधानम् शरीरादिभावेन परिणमत् इति द्रष्टुः स्वस्वरूपेण अवस्थानं भवतीति, विज्ञानं वा दुष्टतया कुट्टिनीजीववत् भोगसंपादनाय पुरुषं नोपसर्पतीति । तदेतत् सर्वमसत् प्रधानासत्त्वस्य वक्ष्यमाणत्वात् । स्थिते हि प्रधानसद्भावे पुरुषस्य तद्विवेकदर्शनमुपपद्यते । उपेत्य वा ब्रूमः । यदि प्रधानं पुरुषस्थं निमित्तमनपेक्ष्य प्रवर्तते मुक्तात्मन्यपि शरीरादिसम्पादनाय प्रवर्तेत अविशेषात् । अथादर्शनापेक्षमिति चेत् । यस्य हि गुणपुरुषान्तरविवेकदर्शनानुपपत्तिः तं प्रति प्रधानं प्रवर्तते, न चासौ मुक्तात्मनीति । तन्न, मुक्तात्मन्यपि विवेकदर्शनस्य विनाशेन प्रवृत्तिप्रसङ्गात् । न चानुत्पत्तिविनाशयोः अदर्शनत्वेन विशेषं पश्यामः । अथादृष्टापेक्षं प्रवर्तत इति चेत् । तदसत्, तस्यापि प्रधाने शक्तिरूपतया व्यवस्थितस्य उभयत्राविशेषात् । तथा शरीरादिवैचित्र्याभावस्य तस्यैकरूपत्वात् । न च परिणामवैचित्र्यात् शरीरादिवैचित्र्यम् । तद्वैचित्र्ये कारणाभावात् । कथं च साम्येनावस्थितं तत्प्रधानं वैषम्यमवानुयात् । पुरुषार्थस्य प्रवृत्तिहेतोरभावात् । सद्भावे वा पुरुषार्थस्य तदर्था प्रवृत्तिर्न भवेत् विद्यमानत्वादेव । न च प्रवृत्तिहेतुं विना कर्मप्रवर्तमानस्योपरमो युक्तो हेत्वभावात् । यच्चेदं-द्रष्टुः स्वस्वरूपेणावस्थानमित्युक्तम् । तदिष्यत एव, विशेषगुणरहितस्य अवस्थानाभ्युपगमात् । अथ चिद्रूपस्य अवस्थानं तन्नास्त्यनित्यत्वेन चिद्रूपताया विनाशात् । न च अक्षाद्यन्वयव्यतिरेकानुविधायिनः चैतन्यस्य नित्यत्वे प्रमाणमस्ति । आत्मरूपेति चेत् । तस्याश्च आत्मतादात्म्ये पर्य्यायमात्रं व्यतिरेके तु संयोगादिभिरनैकान्त्यम् । गुणगुणिनोश्च तादात्म्यप्रतिषेधं वक्ष्यामः । यच्चेदं द्रष्टृतया विज्ञानं तु पुरुषं नोपसर्पति इति । असदेतत्, अचेतनत्वात् । तथाहि अचेतनतया प्रधानस्य अहमनेन द्रष्टृतया विज्ञातमिति विज्ञानाभावे पूर्ववत् प्रवृत्तिरविशिष्टेत्यलमतिप्रसङ्गेन ।

अन्ये तु अस्थिरादिभावनावशात् रागादिवियुक्तज्ञानोत्पत्तिः निःश्रेयसमिति मन्यन्ते । तथाहि सर्वं क्षणिकमिति भावयतो विषयेषु आसक्तिर्व्यावर्तते, ममेदमिति सम्बन्धाभावात् । तथा सर्वं निरात्मकमिति भावनायां नाहं परः न ममायमिति परिग्रहद्वेषाभावे भवत्येव विशुद्धचित्तसन्तानोत्पत्तिरिति । तथा च पटाद्यर्थस्य प्रतिषेधात् सर्वं शून्यमिति च । एवं हि दुःखस्य समुदयनिरोधमार्गेषु विशिष्टज्ञानं निःश्रेयसकारणमिति । तथाहि दुःखं रूपादिस्कन्धपञ्चकं तस्य समुदयः कारणम् । समुदेत्यस्मादिति तयोर्निरोधो विनाशः तस्योपायो मार्गः । इत्येषु विशिष्टज्ञानवशात् शुद्धचित्तसन्तानतदुच्छेदो वा निःश्रेयसमिति युक्तम् । नैतदेवम् । क्षणिकादिभावनाया मिथ्यारूपत्वात् । न च मिथ्याज्ञानस्य निःश्रेयसकारणत्वमतिप्रसङ्गात् । यथा च न क्षणिकत्वं शून्यत्वं नैरात्म्यं वा तथा वक्ष्यामः । अथासक्तिप्रतिषेधार्थमेवं भावनीयं, तन्न, अन्यथापि भावात् । तथाहि पदार्थतत्त्वज्ञानं प्रवृत्तेः कारणम् । दोषदर्शनं च निवृत्तेरिति दृष्टम् । यथा मधुविषसंपृक्तेऽन्ने दोषादर्शनात् गुणबुद्धितः प्रवर्तते दोषदर्शनाच्च निवर्तते नार्थप्रतिषेधात् । एवं पुत्रादावपि आत्मीयवैरूप्यदर्शनमेव निवृत्तिकारणमिति वाच्यम्, न सम्बन्धाभावः । तत्प्रतिषेधो भाव्यः । उक्तं च न्यायभाष्यकृता—रूपादिषु निमित्तसंज्ञा भावनीया नानुव्यञ्जनसंज्ञेति इत्थं दन्ताः इत्थं केशा इत्यादि । या चेयं दुःखसमुदयनिरोधमार्गेषु भावना सा यदि दुःखं तत्कारणं तयोर्निरोधः तदुपायश्चेतीष्टं न प्रतिषिध्येत । तथाहि दुःखं स्वरूपत एव अन्यदुःखकारणत्वात् । तच्च-रूपं संज्ञा वेदना संस्कारो विज्ञानमिति रूपादिस्कन्धपञ्चकमन्यद्वा भवतु सुखमपि दुःखं दुःखानुषङ्गादिति, सर्वं दुःखं तस्य विच्छेदोपायस्तत्त्वज्ञानमिष्यत एव । यच्चेदं-राग-

---

(१) मोक्षसाधनमिति ख पु० ।

दिविमुक्तज्ञानं विशिष्टभावनात इति, तन्नास्ति । क्षणिकत्वे कार्यकारणभावप्रतिषेधस्य वक्ष्यमाणत्वात् । उपेत्यवादेन तूच्यते—न रागादिमनोविज्ञानात्तद्रहितस्य उत्पत्तिर्युक्तेति । तथाहि यथा हि बोधात् बोधरूपता ज्ञानान्तरे तद्वद्रागादिरपि स्यात् तत्तादात्म्यात् । विपर्यये वा तदभावप्रसङ्गादिति । न च विलक्षणादपि कारणात् विलक्षणकार्यस्योत्पत्तिदर्शनात् बोधरूपतेति प्रमाणमस्ति । अत एवास्य ज्ञानस्य ज्ञानान्तरहेतुत्वेन पूर्वकालभावित्वं समानजातीयत्वमेकसन्तानत्वं वा न हेतुः, व्यभिचारात् । तथाहि पूर्वकालभावित्वं तत्समानक्षणैः समानजातीयत्वं च सन्तानान्तरज्ञानैः व्यभिचारीति, तेषां हि पूर्वकालभावित्वेन समानजातीयत्वेऽपि न विवक्षितज्ञानहेतुत्वमिति । एकसन्तानत्वं चात्यन्ताज्ञानेन व्यभिचारीति । अथ नेष्यत एवान्त्यं ज्ञानं सर्वदाऽऽरम्भात् । तथाहि मरणशरीरज्ञानमपि ज्ञानान्तरहेतुः । ज्ञानावस्थाज्ञानं च सुषुप्तावस्थाज्ञानस्यापीति । नन्वेवं मरणशरीरज्ञानस्यान्तराभवशरीरज्ञानहेतुत्वे गर्भशरीरज्ञानहेतुत्वे वा सन्तानान्तरे विज्ञानजनकत्वप्रसङ्गो नियमहेतोरभावात् । अथेष्यत एवोपाध्यायज्ञानं शिष्यज्ञानस्यान्यस्य कस्मान्न भवतीति । अथ कर्मवासना नियामिकेति चेत् । न, तस्यापि ज्ञानव्यतिरेकेणासम्भवात् । तत्तादात्म्ये सति विज्ञानं बोधरूपतया विशिष्टं बोधाच्च बोधरूपतेत्यविशेषेण विज्ञानं विदध्यात् इत्यलम् । यच्चेदं सुषुप्तावस्थज्ञानस्य जाग्रदवस्थाज्ञाने कारणत्वमित्यसदेतत् । सुषुप्तावस्थाया ज्ञानसद्भावे जाग्रदवस्थातो न विशेषः स्यात् । उभयत्रापि स्वसम्वेद्यज्ञानस्य सद्भावाविशेषात् । सुप्तौ निद्रयानभिभूतत्वं विशेष इति चेत् । असदेतत्, तद्धर्मतया तस्यापि तादात्म्येन अभिभावकत्वासम्भवात् । व्यतिरेके तु रूपादिपदार्थानामिव सत्त्वात् तत्स्वरूपं निरूप्यम् । अभिभवश्च यदि विनाशो न विज्ञानस्य सत्त्वविनाशस्य वा निर्हेतुकत्वम् । अथ तिरोभावो न विज्ञानस्य सत्त्वेन तत्सैव संवेदनमित्यभ्युपगम्यते तस्यानुपपत्ते । अथ सुषुप्तावस्थाया विज्ञानासत्त्वेन अन्त्यज्ञानसद्भावादेकसन्तानत्वं व्यभिचारीति । यच्चेदं-विशिष्टा(१)भावेन अवशात् रागादिविनाश इति, असदेतत्, निर्हेतुकत्वाद्विनाशस्य अभ्यासानुपपत्तेश्च । अभ्यासोऽप्यवस्थितस्यार्थातिशयाधायकत्वादुपपद्यते न क्षणिके ज्ञानमात्र इति । अत एव योगिनि सकलकल्पनाविकलं ज्ञानमुत्पद्यते । न च सन्तानापेक्षयातिशयः, तस्यैव असम्भवात् । अविशिष्टाद्विशिष्टोत्पत्तेरयोगाच्च । तथाहि-पूर्वस्मादविशिष्टादुत्तरोत्तरं सातिशयं कथमुपजायत इति चिन्त्यम् । यच्च-सन्तानोच्छित्तिर्निःश्रेयसमिति तत्र निर्हेतुकतया विनाशस्य उपायवैयर्थ्यम् । अयत्नसाध्यत्वात् । अन्ये त्वनेकान्तभावनातो विशिष्टप्रदेशेऽक्षयशरीरादिलाभो निःश्रेयसमिति मन्यन्ते । तथा च नित्यभावनायां महानित्यत्वे न द्वेष इत्युभयपरिहारार्थमनेकान्तभावनेति । एवं सदसदादिष्वपि योज्यम् । प्रत्यक्षं च स्वदेशकालकारणाधारतया सत्त्वं परदेशादिष्वसत्त्वमित्युभयरूपता । तथा घटादिः मृदादिरूपतया नित्यः सर्वावस्थासूपलम्भात् । घटादिरूपतया चानित्यस्तदपायात् । एवमात्माप्यात्मरूपतया नित्यः सर्वदा सद्भावात् । सुखदुःखादिपर्य्यायरूपतया चानित्यः तद्विनाशात् । एवं सर्वत्र स्वकार्येषु कर्तृत्वं कार्यान्तरेषु चाकर्तृत्वमित्यूह्यम् । अथ स्वशब्दाभिधेयत्वं शब्दान्तरानभिधेयत्वं चेति । तदेतदसाम्प्रतम्, मिथ्याज्ञानस्य निःश्रेयसकारणत्वेन प्रतिषेधात् । अनेकान्तज्ञानं च मिथ्यैव बाधकोपपत्तेः । तथाहि नित्यानित्ययोः विधिप्रतिषेधरूपत्वात् अभिन्ने धर्मिण्यभावः एवं सदसत्त्वादेरपीति । यच्चेदं-घटादिर्मृदादिरूपतया नित्य इति । असदेतत्, मृद्रूपतायास्ततोऽर्थान्तरत्वात् । तथाहि घटादर्थान्तरं मृद्रूपता मृत्त्वं सामान्यम् । तस्य तु नित्यत्वेन घटस्य तथाभावः, ततोऽन्यत्वात् । घटस्य तु कारणाद्विलक्षणतयोपलब्धेः अनित्यत्वमेव । यच्चेदं-स्वदेशादिषु सत्त्वं परदेशादिषु असत्त्वम्, इष्यत एव । इतरेतरा-

(१) 'विशिष्टभावेन' ग. पु. ॥

भावस्याभ्युपगमात् । तथाहि--इतरस्मिन्देशादौ इतरस्य घटस्याभावो नानुत्पत्तिर्न प्रध्वंसः । तत्र तस्य सर्वदा सत्त्वात् । द्वैरूप्ये तु स्वदेशादिष्वनुपलम्भप्रसङ्गः । एवमात्मनोपि नित्यत्वमेव । सुख-दुःखादेस्तद्गुणत्वेन ततोऽर्थान्तरस्य विनाशेऽप्यविनाशात् । कार्यान्तरेषु चाकर्तृत्वं न प्रतिषिध्यते । तथाहि यद्यस्यान्वयव्यतिरेकाभ्यामुत्पत्तौ व्याप्रियते इत्युपलब्धम् तत्तस्य कारणं नान्यस्येत्यभ्युपगम्यते । एवं शब्दान्तरानभिधेयत्वेऽपि न सर्वं सर्वशब्दाभिधेयमित्यभ्युपगमात् । न चानेकान्तभावनातो विशिष्टशरीरादिलाभेऽस्ति प्रतिबन्धः । न चोत्पत्तिधर्माणां शरीरादीनामक्षयत्वं न्याय्यम् । तथा मुक्तावप्यनेकान्तो न व्यावर्तेत इति मुक्तो न मुक्तश्चेति स्यात् । एवं च सति स एव मुक्तः संसारी चेति प्रसक्तेः । एवमनेकान्तेऽप्यनेकान्ताभ्युपगमे दूषणम् । वस्तुनो हि सदसद्रूपताऽनैकान्तिकः । तस्याप्यनैकान्तिकाभ्युपगमे रूपान्तरमपि प्रत्यक्षमेवं नित्यानित्यरूपताव्यतिरिक्तञ्च रूपान्तरमित्यादि वाच्यम् । अन्ये त्वात्मैकत्वज्ञानात् परमात्मनि लयः सम्पद्यते इति ब्रुवते । तथा ह्यात्मैव परमार्थः सन् ततोऽन्येषां भेदे प्रमाणाभावात् । प्रत्यक्षं हि पदार्थानां सद्भावग्राहकमेव न भेदस्येत्यविद्यासमारोपित एवायं भेद इति मन्यन्ते । तदप्यसत् । आत्मैकत्वज्ञानस्य मिथ्यारूपतया निःश्रेयससाधनत्वानुपपत्तेः । मिथ्यात्वं च आत्माधिकारे वक्ष्यामः--व्यवस्थातो नानात्मानः ( क० सू० ३ २-२० ) इति सूत्रेण । एवं शब्दाद्वैतविज्ञानमपि मिथ्यारूपतया न निःश्रेयससाधनमिति द्रष्टव्यम् । तथाहि सर्वार्थानां शब्दरूपतेति प्रमाणाभावः । अथ भेदेऽपि प्रमाणाभाव इति चेत्तदसत् । चक्षुरादिना शब्दरूपतावियुक्तानामर्थानां प्रतिभासनात् । शब्दरूपता हि श्रावणत्वमर्थस्य सतः । न चार्थेष्वेतदस्ति । श्रोत्रेणाग्रहणात् । अथ शब्दस्यैवावस्थाभेदात् ग्रहणवैचित्र्यमिति चेत् । तन्न, शब्दरूपतायामेतत्स्यात् । तत्र च प्रमाणाभाव एव । अथ शब्दसंपर्केण प्रतिभास एव प्रमाणमिति चेत् । न, अकृतसमयस्य वाय्वादेस्तदन्तरेणापि प्रतिभासनात् । न च शब्दान्तरेण सम्पर्को युक्तः । समयवैयर्थ्यप्रसङ्गादिति । शब्दरूपतायाः साध्यायां न शब्दसंयुक्तप्रतिभासः प्रमाणम् । अत एव वैखरी मध्यमा पश्यन्ती सूक्ष्मा चेति भेदप्रतिपादनमुन्मत्तभाषितम् । न च शब्दाद्वैतज्ञानात् सूक्ष्मावस्था सम्पद्यत इत्यस्ति प्रतिबन्धः । एकस्मिंश्चाद्वैते प्रतिबन्धसमानतया सर्व एवाद्वैतभेदाः प्रतिषिद्धा भवन्तीत्यात्मैकत्वप्रतिषेधादेवदं प्रतिषिद्धं भविष्यतीत्युपरम्यते ।

अन्ये तु महेश्वरप्रसादादशुद्धैश्वर्यविनाशे तद्गुणसङ्क्रान्तिं मन्यन्ते । तच्चासत् । अन्यगुणानामन्यत्र वृत्तेरदर्शनात् । महेश्वरप्रसादश्च मुक्तौ न प्रतिषिध्यते, तस्यास्तदधीनत्वात् । इति स्थितमसद्वादप्रतिषेधात् षट्पदार्थसाधर्म्यवैधर्म्यतत्त्वज्ञानं मुक्तस्य निःश्रेयसकारणमिति ।

अथेत्यादिवाक्यस्य सूत्रेणापि सम्बन्धो व्याख्यानान्तरमिति मन्यन्ते । तच्चासत् । सर्वस्मिन्व्याख्याने सूत्रितत्वोपदर्शनं भाष्यस्येष्यत एव । "अथातो धर्मं व्याख्यास्यामः" ( क० सू० १-१-१ ) "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" (क० सू० १ १-२) इति सूत्रे अथशब्दोऽप्यानन्तर्ये वर्तत इति, अन्यस्यासम्भवात् नमस्कारानन्तरमिति लभ्यते । स च ज्ञानप्रस्तावात् ईश्वरस्यैवेति । भाष्यकारश्च सूत्रकाराभिमतं पदस्य गुरोर्नमस्कारमनूद्यापदस्य नमस्कारं करोमीति व्याख्येयं, न तु कणाद एव स्वात्मनि क्रियाविरोधात् । नापि कणानत्तीति कणाद इति कणशब्देन स्वकर्मफलस्य अभिधानात् । कष्टव्युत्पत्त्या संसार्यात्मनस्तन्नमस्कारे प्रयोजनाभावात् । 'अथ' शब्दार्थोऽनुशब्देनोक्त एव । 'अतः'शब्दोऽपि वचनवृत्त्या धर्मं व्याख्यास्याम इति विविधमनेकप्रकारेण यदुत्पद्यते यतश्च नोत्पद्यत इत्याप्रतिबोधं यावत् तावत्प्रतिपादयिष्यामः । इति धर्मव्याख्यानार्थमेव षट्पदार्थोपवर्णनम्, अत एव पदार्थधर्मैः सगृह्यत इति पदार्थधर्मसंग्रह इत्युक्तम् । उत्तरसूत्रस्य तु विवरणं महोदयः महानुदयः स्वर्गापवर्गलक्षणोऽस्माद्भवतीति महोदय इत्युक्तः । धर्मात् सुखत्वज्ञानं चेति ज्ञानोत्पत्तौ त-

स्यैव प्राधान्यात् । तदुपसर्जनतया शेषं व्याख्यायत इति ।

अथावयवार्थः । *प्रणम्यहेतुमीश्वरमिति* । प्रेत्युपसर्गेण प्रणामातिशयं दर्शयति । हेतुत्वं निमित्त-कारणत्वम् । तच्चान्येषामप्यस्तीति ईश्वरपदम् । ईश्वरशब्दश्च अन्यत्र वर्तमानोऽपि ज्ञानप्रस्तावा-न्महेश्वर एव वर्तते । 'शङ्करात् ज्ञानमन्विच्छेत्' इति वचनात् । ननु व्यर्थं तर्हि हेतुपदम् ज्ञानप्रस्ता-वाद्विशेषणसिद्धेः । नैतदेवम् । स्तुतेर्गुणसंकीर्तनरूपतया सकलकार्यकर्तृत्वाभिधानात् । अन्यथा ह्य-न्यतराभिधानेनैव गतार्थत्वाद्व्यर्थं स्यादुभयाभिधानम् । तदेवमीश्वरप्रणामानन्तरं मुनिं प्रणमति । मुनयश्चान्येपि विशिष्टज्ञानवैराग्यवन्तो भवन्तीति विशेषणम् कणादमिति । विशिष्टज्ञानसम्बान्धि-त्वं च तदभिहितपदार्थानां प्रमाणान्तरेणाभिधानात् विज्ञायते । अत एव तत्त्वज्ञानस्य सद्भावे मि-थ्याज्ञानस्य रागद्वेषहेतोरभावात् द्वेषवैराग्यं निश्चीयते । कणानत्तीति कणादस्तमिति विशिष्टाहारनिमित्त-संज्ञोपदर्शनेनासच्चोद्यनिरासः । तच्च कणान्वा भक्षयेत्कामं माहिषाणि दधीनि चेत्यादियुक्तियुक्तम् । बोधश्च न प्रवृत्तेः कारणम् । प्रवृत्तौ सत्यान्तद्भावात् । तथाहि श्रवणे प्रवर्तमानो विजानाति युक्तमयुक्तं चेति । न तदवबोधे प्रवृत्तिमितरेतराश्रयत्वप्रसङ्गात् । अतो विशिष्टपुरुषप्रणीतत्वोपबोधे सत्यादौ श्रवणे प्रवृत्तिर्युक्ता । तथाहि मनुना प्रणीतं व्यासेन प्रणीतमिति मत्वा प्रवर्तन्ते जनाः । तदेवं परापर-गुरुनमस्कारोपक्षधर्मविशेषेऽधर्मप्रतिबन्धात् तत्तत्कार्यानामभावे भवत्येवाविघ्नतः शास्त्रपरिसमाप्तिरिति । ननु चायुक्तमेतत् । सत्यपि नमस्कारे शास्त्रपरिसमाप्तेरदर्शनात् कादम्बर्यादौ असत्यपि दर्शनात् प्रमाणतोऽर्थप्रतिपत्ताविव्येवमादौ । सत्यं शास्त्रपरिसमाप्तेः कार्यत्वादवश्यं कारणं वाच्यमित्यन्यस्या-सम्भवात् धर्मविशेषः कारणमिति । स च नमस्कारादन्यस्माद्वा भवतु न नियम्यत इत्येके । अन्येतु साध-नविशेषाद्विशिष्यत इति नमस्कारादेवोपजायते धर्मविशेषः कारणमिति । अथ नमस्काराभावे तर्हि कथं शास्त्रपरिसमाप्तिरिति । न, तत्रापि कार्यसद्भावेन कारणसद्भावसिद्धेः । वाचिकनमस्काराभावेपि मानसो नमस्कारो ज्ञायत इति । एकदा हि विशिष्टनमस्कारसद्भावे परिसमाप्तिरुपलम्भादिति । तथाहि मानसनम-स्कारोपचितो वाचिको नमस्कारः परिसमाप्तेः कारणमिष्यते । मानसस्तु केवलोऽपीति । अत एव क्व-चिद्वाचिकसद्भावेऽपि मानसनमस्काराभावादपरिसमाप्तिर्युक्तेति । तस्य चाभावः कार्यानुत्पादेनैव ज्ञायत इति नमस्काराच्च धर्मः सम्पद्यत इत्यागमाद् व्याप्तिग्रहणम् । तथा लौकिकोपि पुरुषः कृतनमस्क्रियः क्रियाकरणे प्रवर्तमानो दृष्टः । किम्पुनर्भगवान्मुनिरनवद्यवादी । अन्ये त्वसच्चोद्यनिरासार्थं कणान्ददातीति दयत इति वा व्युत्पत्त्यन्तरमाश्रियन्ते । अत्र किल वैशेषिकसूत्ररचनाकरणेत्युच्यते इति । चिन्त्यमेतत् । प्रसिद्धपरिज्ञानपरिहारार्थं चोपात्तमिति अलं असद्व्याख्यानैरिति । तदेवं परापरगुरुनमस्कारात-तोऽन्तरायप्रध्वंसो यतो वान्तेवासी यथोक्तलक्षणसम्पन्नः अतोऽनन्तरमेव प्रतिपक्षक्रियानन्तरितः पदा-र्थधर्मसंग्रहः प्रवक्ष्यत इति । नच क्त्वाप्रत्ययादेव विशिष्टानन्तर्यप्रतिपत्तिः, तस्य हि समानकर्तृकत्वे सति पूर्वकालभावित्वमात्रे भावात् । तथाहि भोजनानन्तरं शयनादिक्रियाव्यवधानेपि भुक्त्वा व्रजतीति प्रयोगो भवत्येव । अत्र चेश्वरप्रणामानन्तरमेव मुनेर्नमस्कारः । तदनन्तरमेव प्रवचनक्रियेति । न चा-प्रतिपक्षक्रियाव्युदासोऽवयवचलनादेर्भावात् इति । *पदार्थधर्मसंग्रह इति* । पदार्थानां धर्माः तेषां सं-ग्रह इत्युत्तरपदप्राधान्येपि धर्माणां धर्मिष्ठतया सङ्ग्रहो भवत्येव । धर्मिणां सङ्ग्रह इति सुखदुःखसाधनत्व-धर्मावबोधे सति प्रवृत्तिनिवृत्त्योर्भावात् । धर्माणामिह प्राधान्यं न निषिध्यते । तत्त्वज्ञानं चात्र प्रधानतया विवक्षितम् । तद्धर्मिषु उपसर्जनतयापि लभ्यत एव । यदि वा तत्त्वज्ञानप्रधानक्रियासम्बन्धादुभयेषां प्रा-धान्यमिति । पदार्थाश्च धर्माश्चेति समासः । स्वातन्त्र्यं हि प्रधानक्रियासम्बन्ध एव । न धर्मितादात्म्यं धर्माणामिति वक्ष्यामः । पदार्थधर्माणां संग्रह इति निबन्धनान्तरैर्विस्तारोक्तानां संक्षेपेणाभिधानम् । भावव्युत्पत्त्या तत्त्वज्ञानमित्यपरे । स च प्रवक्ष्यते—कथयिष्यते ॥

(व्यो०) किंविशिष्टो महानुदयस्तत्कार्यं च निःश्रेयसमस्माद्भवतीति महोदय इति ।

(भा०) द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः ।

(सू०) ननु तत्त्वज्ञानस्य निष्फलत्वात्तदर्थं ग्रन्थे प्रवृत्तिरनुपपन्नेत्यत आह द्रव्यगुणेत्यादि । निःश्रेयसहेतुरिति । तथा च दुःखाभावत्वेनेष्टाया मुक्तेः साधनत्वेनेष्टस्य तत्त्वज्ञानस्य साधने ग्रन्थे प्रवृत्तिर्नोपपन्नेति भावः ।

(सेतु०) कथं पुरुषार्थ इत्यत आह द्रव्येति । द्रव्यादीनां समवायान्तानां साधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तन्निःश्रेयसहेतुरित्यर्थः ।

एतावतः पदार्थस्य तत्त्वज्ञानमपेक्षितमित्युक्तं भवति । तत्कारणत्वेन च साधर्म्यवैधर्म्ये उक्ते । व्यतिरेकिणवान्वयिनापीतरभेदानुमितिसम्भवात् । तत्त्वज्ञानस्य च मोक्षजनकतया पुरुषार्थत्वमुक्तम्, तत्त्वपदेन चात्रेतरभेद एव ग्राह्यः इतरभेदज्ञानस्यैव चतुर्विधतत्त्वज्ञानरूपत्वात् । न चैवं तत्त्वमनारोपितमिति किरणावलीविरोधस्तत्र धर्मान्तरस्यापि तत्त्वपदेन सङ्ग्रहादिति रूपभेदज्ञानस्यापि मोक्षजनकत्वाङ्गीकारात् । अभावेऽन्योन्याभावात् पृथिव्यादीनामिवाभावस्यापि आत्मनिष्ठभेदप्रतियोगितया तत्त्वतो ज्ञेयत्वात् ।

(व्यो०) पदार्थधर्मसंग्रह इत्यादिसामान्योक्तेर्विभजनाय द्रव्यादिवाक्यम् । तच्च ।

प्रतिषेधपरम् भवत्येव विभागाच्चेयत्तावधारणमिति । षण्णामेवाभिधानात् ।

अथाभावः कस्मान्नोपसंख्यायते । भावोपसर्जनतया प्रतिभासनात्तत्र

यस्य नारिकेरद्वीपवासिनः तदभावप्रतीतिरिति भावपरिज्ञानापेक्षि

(व्यो०) ज्ञाते हि भावे तदभावः प्रतीयत एव। तथाहि–द्रव्यपरिज्ञानात्तदभावपरिज्ञानमे······ज्ञानं लभ्यते। तेषां च प्राधान्यमुपदर्शितमेव। *तत्त्वज्ञानमिति*। सम्यक्त्वस्य विशेष्यं ज्ञानमिति। न तु तत्वं च तत् ज्ञानं चेति। उभयपदव्यभिचारे सामानाधिकरण्याभावात्। तत्त्वं हि पृथिव्या गन्धो न च ज्ञानं। ज्ञानं च मिथ्याज्ञानमपि न च तत्त्वमिति व्यभिचारेपि धर्मधर्मिशब्दात्र सामानाधिकरण्यम्। तत्त्व हि सम्यक्त्वं ज्ञानधर्म एव। अन्ये तु तत्त्वे प्रधानत्वात् आत्मनि साधर्म्यवैधर्म्याभ्यामुपजातमिति मन्यन्ते। प्राधान्यं तु द्रव्यादिपदार्थानां मध्ये पुरुषस्य तत्र अभ्यासवशादुपजातस्य ज्ञानस्य निःश्रेयसकारणत्वाभ्युपगमात। न च मिथ्याज्ञाने प्रसङ्गो निःश्रेयसहेतुत्वासम्भवादिति। निःश्रेयसस्य च हेतुर्यथा तत्त्वज्ञान तथोक्तमेवादिवाक्ये। तथात्मज्ञानमितरविविक्तत्वादितरपदार्थज्ञानापेक्षमित्यर्थवद् द्रव्यादिसाधर्म्यवैधर्म्यज्ञानम्।

**( भा० ) तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव।**

**( सू० ) नन्वासंसारं सर्वेषामेव ग्रन्थादितो द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमुत्पन्नं न तु कस्यापि मुक्तिवार्तेति तत्त्वज्ञानस्य मुक्तिहेतुत्वे मानाभाव इत्यत आह तच्चेति। तत् निःश्रेयसम्। एवकारोऽप्यर्थः। तथाच ईश्वरदेशनया वेदेनाभिव्यक्तात् प्रतिपादितादात्मधर्मिकश्रवणमननाद्यात्मकधर्मादपि निःश्रेयसमित्यर्थः। पदार्थतत्त्वज्ञानसत्त्वेऽपि श्रवणमननाद्यात्मकसहकार्यसत्त्वादेव सर्वेषाञ्च निःश्रेयसमिति भावः।**

**( सेतु० ) ननु मननस्य नाहत्य मोक्षहेतुता किन्तु साक्षात्कार· ·त्कारस्तु कुतो भवतीत्यत आह तच्चेति। एवकारोऽप्य· ·रोक्षमिथ्याज्ञानोन्मूलनक्षमं तत्त्वसाक्षात्काररूपं तत्त्व· ·वतीत्यर्थः। अपिशब्देन साधर्म्यादेः समुच्चयः। एव· देशावधूतान्निःकामकर्मणः साधर्म्यादिना च ·ीति सिद्धम्। साधर्म्यादिना च मननद्वारा**

(सेतु०)तत्त्वसाक्षात्कारो जायते । एवञ्च शास्त्रेण लिङ्गज्ञानं तेन मननं तेन निदिध्यासनं निदिध्यासनोत्तरं निदिध्यासनरूपयोगजन्यपुण्यविशेषरूपया योगजधर्मलक्षणेति-ख्यातया प्रत्यासत्त्या तत्त्वसाक्षात्कारस्ततो मिथ्याज्ञाननिवृत्तौ मोक्षः मननादिना च निष्कामकर्मसापेक्षेण तत्त्वसाक्षात्कारो जन्यते अत एव तदर्थिनः शिष्टास्तादृशकर्मनिष्ठा दृश्यन्ते । अत एव कञ्चिन्मननादिनिमग्नमनसामपि तद्विलम्बस्तद्विलम्बादेव तत्र श्रवणं श्रुतिशिरस्समुद्भूतमात्मेतरेभ्यो भिद्यते इत्याकारकं ज्ञानम् । तच्छायमेवानुमितिरूपं मननम् । तत्समानशीलमेव स्मरणरूपान्निदिध्यासनम् । तदनुरूपमेव प्रत्यक्षप्रमाणजन्य तत्त्वसाक्षात्काररूपमिति । एतेषां चतुर्णां परस्परसापेक्षेण मोक्षजनकत्वे मूलभूता प्रमाणान्तरानपेक्षा श्रुतिरेव भगवती साक्षिणीति ।

नास्तिकप्रमोदाय गुरुचरणप्रसादात्सुलभापि युक्तिस्तन्यते । ननु तच्चेश्वरेत्यादिभाष्यमनुपपन्नम् ज्ञानकर्मणोर्दण्डचक्रयोर्घट इव मोक्षे समुच्चयाभ्युपगमात् । न च महामुनिना कणादेन लिखितत्वात्तदनुसारिभाष्यभाषितमदोषमेवेति वाच्यम् जैमिनेरपि मुनित्वेन सुमनसां विना विचारमेकत्र पक्षपातानुपपत्तेः प्रत्युतास्यैव निरन्तरश्रुतिसरोवगाहनक्षालितमनसस्सुभाषितत्वप्रसङ्गात् । श्रुत्या ज्ञानकर्मणोर्द्वयोरपि युगनद्धवाहितया कारणताविष्करणादिति चेन्न ।

अत्र केचित् । अस्तु(१) ज्ञानकर्मणोर्व्रीहियवयोर्याग इव अपवर्ग-

(१)(व्यो०)अथ संचितयोर्विचारः । कथं तत्त्वज्ञानादेवेति? यथोक्तम् यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा । इति । ननूपभोगादेव प्रक्षय इत्यप्यागमोक्तम् यथोक्तम् नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् । तथाच विरुद्धार्थत्वादुभयोः कथं प्रामाण्यमिति । भोगाच्च क्षयेऽनुमानमपि अस्ति पूर्वकर्माणि उपभोगादेव क्षीयन्ते कर्मत्वात् । यद्यत्कर्म तत्तदुपभोगादेव क्षीयते यथारब्धशरीरं कर्म तथा चामूनि कर्माणि तस्मादुपभोगादेव क्षीयन्ते इति । उपभोगेन च प्रक्षये कर्मान्तरस्यावश्यंभावात् संसारानुच्छेदः । तदसत् समाधिबलादुत्पन्नतत्त्वज्ञानो हि कर्मणां साध्यमर्थं विदित्वा युगपच्छरीराणि निर्मायोपभोगशेषं भुंक्त इति । न च पुनः कार्यान्तरोत्पादः मिथ्याज्ञानजनितानुसंधानाख्यकर्मसहकारिणोऽभावात् । अन्येतु मिथ्याज्ञानजनितसंस्कारस्य सहकारिणोऽभावात् विद्यमानान्यपि कर्माणि न जन्मान्तरीणशरीरारम्भकानीति मन्यन्ते । तत्त्वज्ञानिनो नित्यनैमित्तिकानुष्ठानन्तु नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेदित्यादिभगवद्वचनात्प्रत्यवायपरिहारार्थमेव । तथा च काम्यनिषिद्धयोरेव तत्प्रतिषेधः । तथा च तत्कर्मणः फलाननुसन्धानान्न फलोत्पाद इति प्रारब्धशरीरोपभोगसाधनकर्मणः फलं दुरितनिवृत्तिरेव न तत्त्वज्ञानवाञ्छ:-श्रेयसमिति व्योमवती ।

(सेतु०)सर्गे वैकल्पिकी कारणता एकसाधनावरुद्धे समुच्चयबोधन विना शब्देन साधनान्तरबोधनस्य विकल्प एव पर्याप्तेः अन्यत्र तथैव दर्शनात्। तत्र वैकल्पिकी कारणतेति पदयोर्माता बन्ध्येतिवत् परस्परव्याहतार्थत्वात्। ननु जनकस्त्रीत्वं मातृत्वमजनकस्त्रीत्वं वन्ध्यात्वमिति तयोर्विरोधो युक्तः प्रकृते तु कथं स इति चेन्न प्रकृतं प्रत्यनियतत्वस्य वैकल्पिकत्वरूपतया नियतत्वस्य च कारणत्वरूपतया प्रकृतेऽपि विरोधस्य स्फुटत्वात्, एवञ्च कदाचित्कर्म विना कदाचिच्च तत्त्वज्ञानं विना मोक्षोत्पत्त्या व्यभिचारेण कारणत्वाभावः। न च व्रीहियवयोः का गतिस्तत्र तद्यागविशेषे तस्य जनकत्वात्। ननु विलक्षणकार्ययोः कारणयोः कुलालकुविन्दयोर्न वैकल्पिकी कारणता व्रीहियवयोस्तु सेत्यत्र किं बीजं विनिगमकमिति चेन्न एकसाधनावरुद्धे समुच्चयबोधनं विना श्रुत्यादिना साधनान्तरस्थले वैकल्पिकी कारणतेति वैकल्पिककारणतायाः परिभावितत्वात् तस्याः व्रीहियवयोः सत्त्वात्, कुलालकुविन्दयोरसत्त्वात्। यद्यपि व्रीहियवौ विजातीययागं प्रति जनकौ तथापि तथा बोधनदशायामेकजातिपुरस्कारस्तत्रास्त्येव। एवञ्च यत्रैकजातिपुरस्कारेण साधनताबोधनानन्तरं समुच्चये बोधनं विना श्रुत्यादिना कारणतान्तरबोधनं तत्र विजातीयकार्यसम्भवे वैकल्पिकी कारणता। न चैतत्प्रकृते सम्भवति अपवर्गे वैजात्याभावात्। अपि च मिथ्याज्ञानध्वंसं विना न मोक्षः न च स तज्ज्ञानं तथा च तत्त्वज्ञानं कथं विकल्पेऽन्वेतु। न च काशीमरणादीनां कथं तत्त्वज्ञानं विना मोक्षजनकत्वमिति वाच्यम् तैरपि तत्त्वज्ञानमुत्पाद्य मोक्षजनकत्वात्। ननु तत्त्वज्ञाने क्वचिच्छ्रवणादेः क्वचिच्च काशीमरणादेर्जनकत्वे व्यभिचार इति चेन्न ज्ञाने वैजात्यसम्भवात। न च संयोगजधर्मं विना कया प्रत्यासत्त्या काशीमृतानां तत्त्वसाक्षात्कार इति वाच्यम् काशीमरणादिजन्यधर्मस्यैव तत्र प्रत्यासत्तित्वात्। न च काशीमरणादीनां धर्मजनकत्वे प्रमाणाभावः श्रुतिबोधितमोक्षसमर्पकत्वान्यथानुपपत्तिकल्प्यसाक्षात्कारान्यथानुपपत्त्यैव तत्कल्पनात्। न वै योगजादिधर्मग्रहणात् योगजधर्मलक्षणा प्रत्यासत्तिरित्येतस्य पुण्यविशेषलक्षणा प्रत्यासत्तिरित्यर्थकारणाद्वा काशीमरणम्मोक्षजनकमित्यस्य काशीमरणानुकूलो व्यापारो मोक्षजनक इत्य·

( सेतु० ) र्थः । तद्दशायां तारकोपदेशसम्भवात् मृते तदसम्भवात् । न च मरणोत्तरं शरीरान्तरावच्छेदेन, तत्प्रमाणाभावात् वेदान्तिनां शरीरान्तराभावेन तदसम्भवाच्चेति पितृचरणपवित्रीकृतपन्थाः । ननु यतः कुतश्चित्कर्मणो यत्र मोक्षः श्रूयते तत्र तत्कर्मणा नाहत्य तत्त्वज्ञानं जन्यते तथाऽनुपलब्धेः किन्त्वदृष्टद्वारेति वक्तव्यम् तथा-चादृष्टद्वारा मोक्ष एव जन्यतामिति चेन्न मिथ्याज्ञानोपनोदाय तत्त्व-ज्ञानस्यावश्यकत्वात् । तस्मात्तत्त्वज्ञानकर्मणोः वैकल्पिकी कारणतेति कल्पोऽकल्प एव ।

समुच्चयकल्पस्त्ववशिष्यते । तत्र ज्ञानकर्मणोरदृष्टद्वारा वा ? नाद्यः कर्मणो मिथ्याज्ञानध्वंसजनकत्वे प्रमाणाभावात् इदं रजतं नेदं रजतमित्यत्र तथाऽनुपलब्धेः । नापि द्वितीयः एवं सति कर्म-णोऽदृष्टद्वारा मोक्षजनकत्वं वाच्यम्, तत्त्वज्ञानप्रतिबन्धकाकर्म-निवृत्त्यर्थं किञ्चिदन्यकल्पनीयमिति गौरवापत्तेः । कर्मणामेवाधर्म-निवृत्तिद्वारा तत्त्वज्ञाननिर्वृत्त्यर्थमोक्षजनकत्वे तु न कापि क्षतिः साक्षात्त्वस्याश्रुतेः । तस्मान्निष्कामेन कर्मणा दुरितनिवृत्त्यर्थन्तत्त्वज्ञानं निर्वर्त्य निःश्रेयसन्निर्वर्त्यत इति दिक् ।

निःश्रेयसं त्वविद्यानिवृत्तिर्वेदान्तिनस्तत्र तदभिमतायामनादि-भावरूपायामविद्यायामेव मानाभावात् । मिथ्याज्ञानरूपाया ध्वंसस्य च दुःखाभावेतरत्वेनापुरुषार्थत्वात ।

प्रकृतिपुरुषयोर्वियोगावस्थैव मुक्तिरित्यपरे(१) । तदपि न प्रकृतौ मानाभावात् । जगद्वैचित्र्यानुरोधेनावश्यकल्प्येनादृष्टेनोपपत्तेः । न चा-जामित्यादिश्रुतिबलात्तयोः सिद्धिः अस्या अदृष्टप्रतिपादकत्वात् । न-न्वजामिति स्त्रीलिङ्गनिर्देशादनुत्पन्नत्वाभिधानादेकत्वनिरुक्तेः सत्त्वा-दिलक्षणात्रिगुणत्वनिरुक्त्या त्यागविधानान्नादृष्टपरत्वमस्याः श्रुते-रिति चेन्न सहकारिस्वरूपशक्तिरूपेऽदृष्टे स्त्रीलिङ्गनिर्देशस्यानुपप-त्त्यभावात्, अनुत्पन्नत्वेन चानादित्वमुच्यते तदपि धारया । एवं लक्षणा स्यादिति चेन्न अविद्यादौ प्रमाणाभावेन मुख्यार्थासम्भवेन लक्षणाया अनुचितत्वात । एषा श्रुतिस्तत्र मानमिति चेन्न तथाहि सिद्धेऽविद्यादौ तामादायामुख्यार्थत्वानुरोधेन च तत्सिद्धिरित्यन्यो-न्याश्रयात् । एकामित्यनेन मुख्यत्वमुक्तमदृष्टस्य कारणान्तरघट-

(१) सांख्या इत्यर्थः ।

(सेतु॰)कत्वान्मुख्यत्वात् । लोहितेत्यादिना विचित्रकार्यानुकूलानि विचित्राणि सामर्थ्यानि निरुक्तानि त्यागस्त्वसम्बन्धः स च विनाशेपि सम्भवति इति नित्यां प्रकृतिं साधयितुं त्यागस्यासामर्थ्यात् । वस्तुतस्तु जगज्जनकत्वेन मतायाः अविद्याया जन्यत्वे तत्र च कारणान्तरस्वीकारे तेनैव विश्वप्रसवसम्भवे किमविद्यया तदङ्गीकारे तु स्यादनवस्थेत्यन्यैव सेत्याशयेन श्रुतिं श्रावयति अजामिति । लाघवेन तस्या एकत्वमुपपादयति एकामिति । एकत्वे तस्या विचित्रकार्यजनकत्वसामर्थ्यबीजं दर्शयति लोहितेत्यादिना । उपाधेरविद्याया एकत्वे तदुपहितस्य जीवस्याप्येकत्वमित्याह अज एक इति । उपाध्यैक्ये स्वतो भेदरहितस्योपाधिमत ऐक्यं प्रसिद्धमेवेति प्रसिद्धार्थकेन हिशब्देनाह । तत्सेवनवशादेव चित्स्वरूपोऽप्यात्माऽनुशेतेऽनुशेत इव मुग्धितज्ञाननेत्रो भवतीत्यर्थः । सर्वदाऽविद्यासम्बन्धे श्रवणादिवैफल्यमित्याशंक्याह जहातीति । स्वरूपस्य त्यागासम्भवेन त्यागबीजं भेदमाह अन्य इति । इत्थं कल्पनयाऽविद्यावदेकत्वमस्य वेदस्य वेदनीयम् । एवञ्च भवतामपि मते बहवः शब्दा अत्र लाक्षणिका एव । तथाहि लोहितेत्यादयो हि शब्दा लोहित्यादिगुणविशिष्टं धर्मिणं कथयन्ति गुणमेव वा ? अत्र तु रक्तताप्रभृतयो गुणा ग्राह्याः तथा च लक्षणैव । अनुशेत इत्यत्र लक्षणा भवद्भिरेवोक्ता अनुशेत इवेत्यभिधानात् । जुषमाण इत्यपि लाक्षणिकमेव सेवाया आराधनरूपाया अचेतनायामविद्यायामसम्भवात् । जहातीत्यपि तादृगेव त्यागस्य कर्मण आत्मन्यसम्भवात् तथाचैकत्र सम्बन्धः परत्र वा सम्बन्धो लक्षणीयः । एवञ्चाजापदेऽपि लक्षणायां कियती क्षतिः । एवं च वेदान्तिभिरविद्याप्रतिपादकतयापनेयान्युपनिषदुत्तराण्यप्यदृष्टपरतया तद्वासनापरतया वा नेयानि तत्र स्त्रीलिङ्गनिर्देशाप्रतिहतत्वात् । किञ्चोपनिषदां ब्रह्मण्येव तात्पर्याङ्गीकारेणाविद्यायां प्रमाणत्वेनोपन्यासे वेदान्तसिद्धान्तविरोधोपि । अनुशेत इत्यत्र मिथ्याज्ञानादिपक्षेऽप्यनुशेत इवेत्येवार्थः मिथ्याज्ञानादिदशायामात्मस्वरूपाज्ञानात् । एवमेव प्रकृतिवादिनं प्रत्यप्येषा श्रुतिरन्यथा नेयेति । जहातीत्यत्र कापिलमतानुयायिनां न लक्षणेति चेन्न पक्षी वृक्षं जहातीतिवदात्मा प्रकृतिं जहातीति त्यागरूपकर्मताया अनुपपत्तेः लक्षणाया आवश्यकत्वात् । एवञ्चैषामलौकिकप्रत्यासत्तीनां त्रैविध्य-

( सेतु० ) यद्यावधि शास्त्रेषु श्रुतं श्लथं स्यादिति वाच्यम् योगजधर्मपदेन योगजादिधर्मग्रहणात् । योगजधर्मलक्षणा श्रुतिदूती नात्मना नायकेनाविद्याम्प्रकृतिं वा सत्सु वैशेषिकवचोज्योत्स्नाजालेषु घटयितुं प्रभवतीति किमन्यविचारे प्रक्रान्ते विचारान्तरसञ्चारणप्रयासेनेति सङ्क्षेपः । दुर्गमश्च श्रुतिविचार इत्यलमनेन । मार्गमात्रन्तु बालानामुपकाराय प्रदर्शितम् ।

लिङ्गशरीरापगमो मुक्तिरित्येके(१) । तदपि न, लिङ्गशरीर एव मानाभावात् निरुक्तनयेनापुरुषार्थत्वाच्च ।

नित्यसुखाभिव्यक्तिरिति मीमांसकाः । तन्नु तन्मतीनां मांसलत्वमेव प्रकटयतीति । तथाहि नित्या सुखाभिव्यक्तिरित्यर्थकरणे मुक्तसंसारिविशेषापातः नित्याया अभिव्यक्तेरेवानन्तत्वादध्वरधुर्येणापि स्वीकार्यत्वात् । नित्यस्य सुखस्याभिव्यक्तिरित्यर्थे तु शरीरादुत्पन्नाया प्रथमाभिव्यक्तेरेवानन्तत्वाङ्गीकारे प्रमाणं विनापि भावकार्यस्यानित्यतास्वीकारः नाशाङ्गीकारे तु मुक्तस्य संसारितोररीकारः । मतिधारास्वीकारे तु कारणं शरीरं विना मतेरिव यागहोमादि विना स्वर्गादेरसम्भवेन बहुवित्तव्ययायासमात्रफलकरणाविलोपापत्तिः तथाच मीमांसाभ्यासः केवलं कण्ठशोषायैव स्यात् । मुक्तीतरजन्यज्ञानत्वेन शरीरत्वेन कार्यकारणभाव इति चेन्न अन्योन्याश्रयात् । तथाहि विशेषणं हि व्यावर्तकं भवति तथाच मुक्तिरूपज्ञानासिद्धौ तद्व्यावर्तके मुक्तीतरत्वरूपे विशेषणे सुस्थेऽनेन रूपेण कार्यकारणभावसिद्धिः सिद्धे चास्मिन् शरीरस्य तत्राकारणत्वेन शरीरं विनापि तत्सिद्धिरिति । तस्मादेवंवादिनान्तेषां मीमांसका इति नाम पारिभाषिकमेव ।

अत एव निरन्तरायोऽहमहमिति ज्ञानप्रवाहोऽपवर्ग इति मतमपि परास्तम् ।

आत्महानिर्मुक्तिरिति(२) तु मुक्ताभावादेव निरस्तम् ।

कामार्थावेव पुरुषार्थौ मुक्तिर्नास्त्येवेति चार्वाकाः । तदचारु मुक्तेरनुमानादिप्रमाणसिद्धत्वात् । नच तन्मते शरीरस्यात्मतया तत्सत्त्वेन मुक्तिस्तदभावदशायान्तु कस्य मुक्तिरिति वाच्यम् शरीरभिन्नस्यात्मनस्साधनीयत्वात् ।

---

(१) त्रिदण्डिसंन्यासिन इत्यर्थः । (२) माध्यमिकमतमिदम् ।

( सेतु० ) निर्विषयां चित्सन्ततिं सौत्रान्तिका मुक्तिमाहुः। तन्न, ज्ञानस्य निर्विषयत्वे प्रमाणाभावात्।

चिवृत्तिनिरोधो मुक्तिरिति योगाचारः। तदपि न, ज्ञानस्य मुख्यदुःखत्वाभावेन तद्धानेरपुरुषार्थत्वात्।

क्लेशशून्या चित्तसन्ततिर्मुक्तिरिति वैभाषिकाः। तदपि तुच्छम् जीवन्मुक्तिदशायामपि रागद्वेषमोहानामसत्त्वेन परममुक्तिप्रसङ्गात्। ज्ञानस्य सुखदुःखाभावेतरत्वेन पुरुषार्थत्वाभावाच्च।

सुरासुरसेवनं मुक्तिरिति पाखण्डा इति केचित्। ते सुरापायिनामितस्ततःप्रस्खलनस्य मुखे मक्षिकादिप्रवेशस्य च दर्शनेन बोधनीयाः। मुक्तत्वन्तु पामराणां तस्य स्यात्।

शरीरावरणोच्छेदो मोक्ष इति दिगम्बराः। तदपि न, शरीरस्यामुख्यतया तद्धानेरपुरुषार्थत्वात्।

समानाधिकरणया मिथ्यावासनयाऽसमानकालीनो दुःखप्रागभावो मुक्तिरिति परे(१)। तत्र प्रागभावस्य सान्तत्वे मुक्तस्य संसारित्वापत्तिः। अनन्तत्वे प्रागभावत्वविरोधः। प्रायश्चितस्थले का गतिरिति चेन्न तत्र कियत्कालं पापनाशद्वारा दुःखप्रागभावपरिपालनेन प्रायश्चित्तप्रवृत्तेस्सार्थकत्वे सिद्धे पापान्तरमासाद्य प्रागभावेन दुःखजननेपि क्षत्यभावात्। न ह्यग्रे मरणेऽपि प्रकृतरोगे जीवनदातुर्भेषजपानस्य वैफल्यमिति। प्रागभावश्च पादप्रायश्चित्तनष्टपापसरूपमेव पापमासादयिष्यति नोचेदन्यादृशप्रागभावे वैचित्र्यभावेन पापवैजात्यादेवं दुःखवैजात्यात्।

दुःखात्यन्ताभावो मुक्तिरित्यपरे(२)। तत्तुच्छम्। तथाहि स्ववृत्तेर्दुःखस्यात्यन्ताभावो विवक्षितः परवृत्तेर्वा? आद्येऽपि व्याप्यवृत्तिरव्याप्यवृत्तिर्वा? नाद्यः। स्ववृत्तिदुःखस्य स्वस्मिन् वाप्यवृत्त्यत्यन्ताभावात्। नापि द्वितीयः। दुःखस्याव्याप्यवृत्तित्वेन तस्य संसारितादशायामपि सत्त्वात्। नापि द्वितीयः परगतदुःखात्यन्ताभावस्य स्वस्मिन् स्वतःसिद्धतयाऽनाकाङ्क्षितत्वेनापुरुषार्थत्वात् कृत्यसाध्यत्वाच्च। नच समानाधिकरणमिथ्यावासनासमानकालीनो मिथ्यावासनाध्वंस एवापवर्ग इति वाच्यम् अत्यन्ताभावस्या-

(१) प्राभाकरा इत्यर्थः। (२) नैयायिकदेशिनः।

( सेतु० ) पुरुषार्थत्वस्य व्यवस्थापितत्वात्।

समानाधिकरणमिथ्यावासनासमानकालीनो मिथ्यावासनाध्वंस एवापवर्ग इतीतरे(१)। तदपि न, पुरुषार्थेतरत्वात्। प्रायश्चित्तेऽपि दुःखप्रागभावस्यैव पुरुषार्थत्वात्। एवं हि लोके कण्टकादिनाशेपि।

समानाधिकरणदुःखसमानकालीनभिन्नो दुःखध्वंसो मोक्ष इति तु कणभक्षाक्षचरणप्रभृतिपक्षसाक्षिणः। दुःखध्वंसो मोक्ष इत्युक्तौ संसारतादशायामतिव्याप्तिस्तदर्थे भिन्न इत्यन्तम्। तदानीन्तनदुःखध्वंसस्तु समानाधिकरणेन दुःखेन समानकालीन एव। दुःखसमानकालीनभिन्नो दुःखध्वंस इत्युक्तौ शुकादिमुक्तावव्याप्तिः अस्मदादिदुःखसमानकालीनत्वात्। समानाधिकरणदुःखसमानकालीनं यत्प्राक्तनं दुःखध्वंसादि तद्भिन्नः शुकादिचरमदुःखध्वंसो भवत्येव।

अत्र प्राञ्चो दुःखस्थलद्वयेऽपि मुख्यत्वं विशेषणमन्यथा प्रथममुख्यपदानुपादानेऽसम्भवश्चरमदुःखध्वंसस्यापि ज्ञानरूपदुःखसमानकालीनत्वात्प्रथमक्षणे चरमदुःखं द्वितीयक्षणे चरमदुःखसाक्षात्कारस्तृतीयक्षणे चरमदुःखनाशश्चतुर्थक्षणे ज्ञाननाश इति परिपाटीपाटवेन चरमदुःखध्वंसस्य ज्ञानसमानकालीनत्वात्। चरममुख्यपदोपादानवैमुख्ये चरमज्ञाने निर्वाणतापत्तिः तस्यापि समानाधिकरणमुख्यदुःखनासमानकालीनत्वादिति साडम्बरं प्रपञ्चयन्ति।

ते तु गन्धवती पृथिवीत्यत्र मुख्यत्वं गन्धविशेषणतया कथं नोपादीयते। नहि गन्धशब्दो गौण्या वृत्त्या विरक्त एव, नापि स्वनियतमेव धर्मं लक्षयतीति नियमो, येन रूपाद्यादाय पाथःप्रभृतीन्नानुगृह्णीयादित्युक्त्या व्याकुलताक्षीरोदन्वति पातनीयाः। अस्माकन्तु केषुचिद्ग्रन्थेषु तथा लिखनं त्वरिततदनुरोधत्यागवैमुख्येनेति।

चरमदुःखध्वंसो(२) वा मुक्तिः। चरमत्वञ्च समानाधिकरणदुःखप्रागभावासमानकालीनत्वम्। एवञ्च समानाधिकारणदुःखप्रागभावासमानकालीनदुःखध्वंसोऽपवर्ग इति कणादमुनेर्निरवसाद-

(१) शाङ्कराः। अप्रांशिकजीवस्याविद्याप्रभवमिथ्याज्ञाननिवृत्तौ स्वस्वरूपाधिगमो भवतीति तेषामाशयः।

(२) नव्यनैयायिकाश्रम्भट्टादिमतम्।

(सेतु०)ष्पन्थाः परिशोधित इति सङ्क्षेपः।

अत्र ये केचित्साहसपराङ्मुखाः परमपुरुषार्थस्यास्यापुरुषार्थत्वं प्रार्थयन्ते। ते प्रष्टव्याः। कस्मादकस्मादसौ प्रकर्षकाष्ठानिष्ठप्रभावगरिष्ठानामधिक्षेपाय भवदीया भणितिः? तुल्यायव्ययत्वाद्वा १ कृत्यसाध्यत्वाद्वा २ भूयसा कालेन कृत्याऽनिर्वाहाद्वा ३ कर्तुमशक्यत्वाद्वा ४ अनिष्यमाणत्वाद्वा ५ ज्ञानाविषयत्वाद्वा ६ साक्षात्काराविषयत्वाद्वा ७ समानाधिकरणसाक्षात्काराविषयत्वाद्वा ८ उभयविधसाक्षात्काराविषयत्वाद्वा ९

न तावदाद्यो वादिसद्यो हृद्यः। तथाहि तुल्यायव्ययता हि सुखस्यापि हान्या निर्वाच्या, नच साऽपवर्गलाभतुल्या सुखहानेरनिष्टतया मोक्षाकाङ्क्षावद्भिरनभिमतत्वात्। अत एव कियती सुखखद्योतिका कियन्ति दुःखदुर्दिनानीति कुपितफणिफणामण्डलच्छायप्रतिमं सुखमपि हातुमिच्छन्ति मुमुक्षव इति महतामहता गिरः।

नापि द्वितीयो द्वितीयस्य हृदि विद्योतते। न तावत्साध्यतया कृतिसाध्यत्वं पुरुषार्थप्रापणसमर्थं स्वर्गेपि दुर्लभत्वात्। उद्देश्यतया कृतिसाध्यत्वन्तु स्वर्गवदपवर्गेपि संसर्गि, तत्त्वनुत्पन्नस्य दुःखस्य नोपायपरम्परयापि परिहारमर्हति, उत्पन्नस्य तु चरमस्यापि तस्य साक्षात्कारादेव नाशो भविष्यति। दृष्टानुरोधित्वात्कल्पनासृष्टेरिति कथं कृतिसाध्यत्वमिति चेन्न येषां श्रवणादि न जातन्तेषां केषामपि मोक्षानिरीक्षणेन तत्प्रादुर्भावे श्रवणाद्यपेक्षाया वीक्षणेन श्रवणादेश्च कृतिकर्तव्यतया तद्द्वारा तस्यापि कृतिसाध्यत्वात्। यत्र कृत्यसाध्यकाशीमरणादिना तत्त्वसाक्षात्कारोत्पत्त्यनन्तरं मुक्त्युत्पत्तिः तत्रापि तन्मरणानुकूलकाशीवासादिकृतेस्तत्रोपयोगः। अपि च चरमदुःखोत्पत्तेस्तद्ध्वंसः साक्षात्काराद्भविष्यति, न च तदुत्पत्तिर्मोक्षानुकूलकृतिं विना तथाऽदर्शनादिति मोक्षे कृत्यपेक्षाया निष्प्रतिपक्षत्वात्।

नापि तृतीयः कल्पस्तृतीयाङ्क्षामनुभवितुं कल्पते। कर्तुमशक्यत्वं हीत्थं न तावदनुपभुक्तेषु कर्मसु सत्स्वेव मोक्षः अशेषविशेषगुणोच्छेदाभावात्। ननु मास्त्वशेषविशेषगुणोच्छेदस्तथापि चरमदुःखध्वंसेन मुक्तिर्भविष्यत्येव, चरमसाक्षात्कारतदाहितसंस्कारयोरिव पराभिमतपरापूर्वप्रायस्य स्वाभिमतासंजातप्रधानाङ्गापूर्वसमानशीलस्य चाधर्मादेः स्थितेर्मुक्त्यविरोधित्वादिति चेन्न तस्य नाशा-

(सेतु०) नङ्गीकारे भावकार्यत्वविरोधात् । काल एव तं केवलयिष्यति इति चेन्न अनेककल्पपरम्पराजनितानामपि कर्मणामवस्थानदर्शनेन तत्र प्रमाणाभावात् । संस्कारस्तु संसारसमयवर्त्यपि कश्चित् करालकालव्यालकवलमुपसर्पतीति तथाभ्युपेयते न नश्यतु वाऽनेहसाऽज्ञानवासनेव कर्मवासनापि तथापि यावत्कर्मवासना जीवन्ति तावत्कर्मफलं जनयेयुरेवेति मुक्तस्यापि संसारित्वापत्तिः । तत्त्वज्ञानेन स्तेनेन दोषस्य सचिवस्य मोषान्नार्जयन्ति इति चेन्न धर्मादीनां स्वोत्पत्ताविव स्वफलोत्पत्तौ दोषापेक्षायामक्षमत्वात् तथात्वे जीवन्मुक्तावगमकागमविरोधोऽसमाधेयः स्यात् । अन्येषाङ्कर्मणामवस्थानस्वीकारेपि प्रारब्धकर्मभिर्जीवन्मुक्तेस्त्वयापि अङ्गीकार्यत्वात् । पूर्वमुदाहृतमपूर्वद्वयसख्यन्तु स्वरूपयोग्यत्वबोधकप्रमाणेनैव व्युदस्यम । समयेनापसरणस्वीकारोपि तुष्यतु दुर्जन इति न्यायानुसारिणां तत्सातङ्कानामेवोचितः । अस्माकन्तु सुजनपदव्यां पदमर्पयतान्तैरेव सपक्षतयाऽऽतङ्काक्रान्तमानसानाङ्कन्तेषान्तोषेण. तस्मादस्मादृशां प्रायश्चित्तादीनामुपशमकानामभावे कथं तदुपशम इत्येव भणितिः प्रणयिप्रीणनाय कल्याणिनी । मोक्षसाक्षिणस्तु चरमसाक्षात्कारस्य विपक्षस्तदाहितस्संस्कार एव, कर्कटीकुक्षिकोटरक्रोडाङ्कुरितार्भकगण इव तामां संस्कारं तु चरमं, वृथाभारमसहमानस्समय एव समापयिष्यतीति । ननु ज्ञानमेव चरमं "ज्ञानाग्निस्सर्वकर्माणीति" वचनेन निखिलगीर्वाणवाणीवर्ण्यमानगुणगणमुकुन्दवदनारविन्दमकरन्दवृन्दायमानेन जाताभिषेकतया लब्ध्वा बलं तं व्यपनेष्यतीति चेत् ज्ञानस्य भोगवैमुख्येन कर्मापगमकत्वे प्रमाणाभावात्, भगवद्वचनस्य भोगमुत्पाद्य नाशकत्वेप्युपपत्तेः । न च तथासति ज्ञानस्य कः पुरुषार्थ इति चेत् विषयविपाकसमयानां तावद् झटित्युपभोगवत्तस्माद्भोगाग्रेसरेण ग्रस्तेषु कर्मसु सम्भवत्यपवर्गोपसर्पणं नच तत्सम्भवति भोगोपायेन पुनः कर्मान्तराकर्षणात् तस्मादिष्टं कर्तुमशक्यम् । न च तदुपपद्यते भोगहेतुना दोषसाचिव्यव्यतिरेकेण धर्माद्यजननात् । "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेति" भगवद्वाक्यमप्यमुमर्थं कटाक्षेण सम्भावयति । भस्मीभूतैर्बीजैरिवाङ्कुरस्य भोगापहृतैः कर्मभिरपि दोषापायेन धर्मादेरनाह्वानादित्यस्यापि तदभिप्रायस्य सम्भवात् ।

(सेतु०) नापि तुर्यश्चतुरतरमनसां सचेतसां चमत्काराय धुर्यतामूरीकरोति विषमविपाकाणामनन्तानां क्रमिकोपभोगेन हि तथा स्यात्। नच तदास्तिकानामन्तःकरणेऽस्ति कायव्यूहेन झटिति सर्वेषामुपभोगात्। अगस्त्यस्य योगर्द्धिसमृद्ध्या दण्डकामण्डलाम्भोनिधिपाननिरीक्षणेन समुपजातार्थजातसाक्षात्काराणामितरलोकदुष्करणतया कायनिर्माणप्रावीण्यस्य वर्णयितुमनुचितत्वात्। चिरकालोपनेयस्यापि पुरुषार्थे विरोधाभावाच्च।

नापि पञ्चमस्सञ्चरत्प्रपञ्चवचनरचनाचञ्चुराणामग्रतोऽञ्चितुं प्रभवति दुःखत्रयाभिहतेस्तदभावस्यैष्यमाणत्वात्।

नापि षष्ठो दोषगणसङ्कटकष्टोदधिमुत्तरीतुमर्हति मोक्षस्य श्रौतशेमुषीसाक्षिकत्वात्।

सप्तमस्तु शप्त इव दुर्वाससा पदमपि दातुमसमर्थः श्रुतिप्रमाणकस्य सर्वज्ञभगवत्साक्षात्कारस्य विषयत्वात्।

अष्टमोऽपि तक्षकं दृष्ट्वा दष्ट इव स्वयमेव विनष्टं कथं भवन्तं जयेस्थापयिष्यति सर्वविषयकजीवन्मुक्तिकालीनस्वसाक्षात्कारविषयत्वात्।

नवमोऽपि न मानेषु परिगणितेन केनाप्युपकर्तुमर्हः तादृशेश्वरसाक्षात्कारविषयत्वात्।

इयत्सु पक्षेषु क्षितिराक्षसीकुक्षिप्रक्षिप्तेषु प्रवृद्धतरवियोगभागिव दशमोऽपि नवदशमीं दशामतिशेते चरमदुःखसाक्षात्कारेण तदंशेन भाविनि दुःखध्वंसेऽलौकिकेन तदुत्पत्त्यनन्तरं नष्टेन समानाधिकरणेन समानकालीनेन विषयीकरणात्। अत एव वर्तमानोप्यचिरमनुभूयत इति प्राचामाचार्याणां सिंहनादः, उत्पत्तिक्षणस्यापि स्थितिक्षणत्वात्। तस्मात्पुरुषार्थगणनायां मूर्धन्यतया चरममुखारितस्यास्य प्रेक्षावद्भिः परमप्रार्थनीयस्य नापुरुषार्थत्वमभ्यर्थनीयमिति।

सर्वमुक्तेरभावेन सर्वसाधारणत्वाभावेन कथमस्य पुरुषार्थत्वमिति त्ववशिष्यते तद्विचारयामः। सर्वमुक्तेरभाव इति कुतः? मोक्षोपायस्य श्रवणादेस्सर्वसाधारणत्वात्। शूद्रादेरपि जन्मान्तरेऽत्रैवर्णिकत्वसम्भवात्, काशीमरणादिना शूद्रादिशरीरावच्छेदेनापि मोक्षसम्भवाच्च। कस्यचित्संसारैकस्वभावत्वे स्वात्मनि तत्त्वशंकया

(सेतु०) कस्यापि मोक्षार्थमप्रवृत्त्यापत्तेश्च । न च शमादिमत्त्वेन स्वस्मिन्मोक्षभविष्यत्तामवगम्य प्रवृत्तिः, शमादेर्मोक्षप्रवृत्त्युत्तरकालीनत्वात्तन्मनोकार्यकारणभावस्य मोक्षत्वात्मत्वाभ्यामेव लाघवेनावच्छेदाच्च । तत्रेश्वरवारणाय जीवपदमात्रस्य देयत्वात् । तावता च शमादिमत्त्वेन कारणत्वं वक्तव्यम् । न च तदुपपद्यते एककारणस्यान्यकारणतानवच्छेदकत्वात् । शमादेरपि कार्यतया तत्रात्मनैव कारणत्वाच्च । अपि च सर्वेषां कुतो न मुक्तिः ? श्रवणादावप्रवृत्तेरिति येषान्तत्र विश्वासस्तेषां तत्र प्रवृत्तिर्भवतु न सर्वेषामिति चेन्न स्यादेवं यदि कलिरेव सदा स्यात् । न त्वेवम् । एवञ्च प्रमादजातैः बुद्ध्या वा कृतैः सुकृतैः पर्यायेण वेदविश्वासस्य सर्वेषां सम्भवेन कुतो न सर्वमुक्तिः । नहि साङ्गोपाङ्गमपि कृतं वैदिकं कर्मासति च प्रतिबन्धके न फलतीति केनाप्यतिस्तोकेन वक्तुं शक्यते तस्मादस्ति सर्वमुक्तिः । दुःखत्वन्दुःखप्रागभावानधिकरणवृत्तिध्वंसप्रतियोगिशब्दवृत्तित्वं सिद्ध्यतीत्यर्थान्तरतेति वाच्यम् बाधेन तदसिद्धेः । एवञ्च दुःखप्रागभावानधिकरण आत्मा न भवत्येव अन्योन्याभाववृत्तेस्सामयिकत्वानङ्गीकारेण तदधिकरणस्य तस्य तदनधिकरणत्वासम्भवात् । भवति त्वाकाशादिस्तद्वृत्तिध्वंसप्रतियोगिवृत्तित्वं तु बाधितमेवेति पक्षधर्मतामाहात्म्येन कालविशेषण एवागमिष्यति स एव च सर्वत्र मुक्तिकालः महाप्रलयकालोऽपि स एव । ननु दिगेव तथा कथं न सिद्ध्यति तस्या अपि सर्वाधारत्वेन चरमदुःखध्वंससाधारणत्वासम्भवादिति चेन्न दिशो द्रव्यस्यैकतया दुःखप्रागभावाधिकरणस्य तद्भिन्नत्वासम्भवात् । दिगुपाधिः कोऽपि दुःखप्रागभावानधिकरणदुःखध्वंसाधिकरणं भविष्यतीति चेन्न तादृशस्तदुपाधिः कोऽपि सृष्टिदशायां नास्त्येव । प्राच्यादय एव हि दिगुपाधयस्ते च दुःखप्रागभावाधिकरणमेव । महाप्रलयदशायान्तु प्रमाणाभाव एव दिगुपाधौ प्राच्यादिव्यवहाराभावात् प्रकृतप्राच्यादेरेव तत्राङ्गीकारे तस्य दुःखप्रागभावाधिकरणत्वमेव प्राच्याद्यन्तरस्य तद्भिन्नलक्षणस्य दिगुपाधेर्वा स्वीकारे प्रमाणाभावात् तस्मात्काल एव तादृशीभूयाऽनुभूयत इति रहस्यम् । ननु सृष्टिदशायां भास्वदादिक्रियाः कालोपाधयः खण्डप्रलये तु परमाण्डस्य ह्रानम् एवं च महाप्रलये कश्चिदुपाधिरस्ति तथा च कथं महाप्रलये

(सेतु०) नार्थान्तरता तत्र तत्र दुःखाभावात् अग्रे सृष्ट्युपगमेन दुःखप्रागभावोपगमात्। दुःखत्यकरणे दृष्टान्तासिद्धिः आकाशादीनामपि दुःखान्योन्याभावाद्यधिकरणत्वात्। दुःखप्रागभावानधिकरणवृत्त्यभावप्रतियोगिवृत्तीतिकरणे दुःखान्योन्याभावमादायार्थान्तरता तस्य दुःखप्रागभावानधिकरण आकाशे सत्त्वात्। हेत्वर्थस्तु भाववृत्तित्वे सति कार्यमात्रवृत्तित्वात्। भाववृत्तित्वादित्युक्तावात्मत्वादौ व्यभिचारः आत्मादेर्ध्वंसाभावात्। कार्यवृत्तित्वादित्युक्तावनन्तत्वे व्यभिचारः ध्वंसाप्रतियोगित्वस्य तस्याकाय आत्मादाविव कार्यध्वंसेपि सत्त्वात् तदर्थं मात्रेति। इदानीं ध्वंसत्वे व्यभिचारः तदर्थं भाववृत्तित्वे सतीति। भाववृत्तित्वे सति कार्यवृत्तित्वादित्युक्तावनन्तत्वे एव व्यभिचारः भाव आत्मादौ कार्यध्वंसेपि सत्त्वात्।

परे तु भावकार्यवृत्तित्वादित्येव हेतुरात्मत्वाद्यनन्तत्वध्वंसत्वानि तु न तथा कस्यचित्कार्ये कस्यचिद्भावे कस्यचिदुभयोः सर्वेऽपि भावरूपे कार्ये कस्याप्यवृत्तेरेवञ्च ये धर्मा आत्मेतरपरमाण्वादिवृत्तिध्वंसप्रतियोगिवृत्तयस्ते द्रव्यत्वादयः सपक्षा एव, ये तु सुखत्वादयो न तथा ते पक्षसमा एवेति सर्वमनवद्यमित्याहुः।

ननु बाधादेव शब्दवृत्त्यर्थान्तरवारणं आत्मकालान्यवृत्तिध्वंसप्रतियोग्यवृत्तीतिपक्षविशेषणं वर्द्धमानोपाध्यायैः किमित्युपात्तमिति चेन्न बालान्प्रति बाधस्फुरणार्थं तदुपादानात् बाधबोधवतान्तस्य वैयर्थ्यात् अन्यथा महानसादिवह्निरहितपर्वतो वह्निमान् धूमादित्यनुमानापत्तेः। सर्वमुक्तिसिध्यैव प्रत्येकमुक्तिरपि सिध्यतीति न सा पृथक् साध्यते। अनयैव रीत्या सुखत्वादिकं पक्षीकृत्य तदुच्छेदोपि साध्यः। श्रुतयश्च मोक्षसाधिकाः श्रुत्यभ्यासदक्षेभ्य एव श्रोतव्या इति सङ्क्षेपः।

ननु द्रव्यादय इवाभावाः किमिति नोपदर्शितास्तेषामपि मोक्षोपयोगित्वादिति चेन्न अभ्युपगमसिद्धान्तसिद्धस्यानभिधानेपि क्षत्यभावात्। अन्यथा न्यायदर्शने मनस इन्द्रियत्वम्प्रति पर्यनुयोगापत्तेः॥

ननु पदार्थधर्मेत्यत्र तत्पुरुषे पदार्थानां पूर्वपदार्थानां क्रियान्वय इति चेन्न धर्मस्य धर्म इत्येवमवक्तव्यतयाऽमुकस्य धर्म इति वक्तव्यतया तेषामपि क्रियान्वयात्। मोक्षजनकश्चात्मेतरेभ्यो भिद्यत

(सेतु०) इत्यात्मविशेष्यकमेव ज्ञानं न स्वात्मत्वमितरभिन्नवृत्तीत्याकारकमपि श्रवणादिविधायकश्रुतावात्मनः प्राधान्यश्रुतेः। एतावता ग्रन्थेन मोक्षः प्रयोजनं पदार्था अभिधेयाः प्रयोज्यप्रयोजकभावश्च सम्बन्ध उपवर्णितः॥

(व्यो०) अथास्तु संग्रहात्तत्त्वज्ञानमवधारणे तु व्याघातः। तथाहि—यदि संग्रहादेव तत्त्वज्ञानं सूत्रकारस्य न स्यात् संग्रहाभावात्। अथ संग्रहात् भवत्येव, तदसत्, मन्दमतेरसत्यपि संग्रहे तदभावात्। अथ संग्रहात्तत्त्वज्ञानमेव तन्नास्ति दुःखादेरपि दर्शनात् इत्याशङ्कापरिहारार्थं तच्चेश्वरचोदनेत्यादि।

तथा ह्यस्मदादेः संग्रहादेव तत्त्वज्ञानं, यच्च सूत्रकारस्य ज्ञानं तच्चेश्वरचोदनाभिव्यक्तात् धर्मादिविशेषादेवेति। न च स एवास्त्विति वाच्यम् अस्मदादेस्तथाविधधर्माभावात्। तथा संग्रहात् भवत्येव तत्त्वज्ञानम्। यदि नाम तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेवेति समुच्चीयमानावधारणमनिर्दिष्टप्रतिषेधार्थम्। मन्दमतेस्तु विशिष्टधर्माभावान्न भवत्यपि। अस्तु वा संग्रहात्तत्त्वज्ञानमेव न दुःखादिकम्। यदि नाम ईश्वरचोदनाभिव्यक्ताद्धर्मादेव यस्य विशिष्टधर्मसद्भावः तस्य अल्पीयसा प्रयासेन तत्त्वज्ञानं सम्पद्यत इति। यदि च कस्माद्धर्मस्यादौ सूत्रे व्यावरणमीश्वरस्य वा नमस्कार इति चोद्यपरिहारार्थम्। तच्च तत्त्वज्ञानमीश्वरचोदनाभिव्यक्ताद्धर्मादेव भवतीत्यतस्तस्यादौ प्रतिज्ञानमीश्वरस्य च नमस्कार इति। ईश्वरस्य चोदना संकल्पविशेषोऽस्येदमस्मात्सम्पद्यतामिति। तयाभिव्यक्तात्सहकृताद्धर्मात्तत्त्वज्ञानमिति। तथा धर्मस्य सद्भावे किं प्रमाणमित्यपेक्षायामिदमेवावर्तनीयम्—ईश्वरस्य चोदनेति। चोदना हि प्रवर्तकं वाक्यम्। तत्प्रधानत्वाद्वेदश्चोदनेति। सा चेश्वरप्रणीतत्वात्प्रमाणम्। तयाऽभिव्यक्तात्प्रकाशिताद्धर्मादवेदामेति।

(भा०) अथ के द्रव्यादयः पदार्थाः, किञ्च तेषां साधर्म्यं वैधर्म्यञ्चेति।

तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसञ्ज्ञयोक्तानि नवैवेति। तद्व्यतिरेकेणान्यस्य सञ्ज्ञानभिधानात्।

(सू०) अथेति। द्रव्यगुणाद्याः के कतिविधाः। तेन द्रव्यगुणेत्यादिप्रागुक्तवाक्यादेव द्रव्यगुणादेरवगमात्तेषु प्रश्नासंभवेपि न क्षतिः। तेषां पदार्थानां साधर्म्यमनुगतो धर्मः वैधर्म्यमितरव्यावृत्तो धर्मः।

उत्तरम्—तत्रेति। तत्र द्रव्यादिषु मध्ये सामान्यविशेषसंज्ञयोक्तानि पृथिव्यादीनि नवैव द्रव्याणीति योजना। द्रव्यत्वं

(सू०)यत्सामान्यं तदवान्तरधर्मेण या संज्ञा पृथिवीजलेत्यादिका तयोक्तानि विभक्तानि पृथिव्यादीनीति नवैव द्रव्याणीति तदर्थः। सामान्यविशेषसंज्ञयेत्यस्य जातिविशेषप्रवृत्तिनिमित्तकसंज्ञयेत्यर्थस्तु न शक्तेः कालदिगादिसंज्ञायाश्च पारिभाषिकत्वेन जात्यवच्छिन्नशक्तिमत्त्वाभावात्। ननु तमसोऽप्यतिरिक्तद्रव्यस्य सत्त्वात् पृथिव्यादीनि नवैव द्रव्याणीति व्याहतमत आह तद्व्यतिरेकेणेति। पृथिव्यादिसंज्ञाव्यतिरेकेण मुनिना संज्ञान्तरेण द्रव्यस्याविभजनात् इत्यर्थः। तथाच पृथिव्यादिभिन्नं तमो न द्रव्यं किन्तु महाप्रभात्वावच्छिन्नात्यन्ताभावः। तत्रैव च नीलाद्यारोपरूपा नीलं तमश्चलतीत्यादिप्रतीतिरित्याचार्याः। बाधकं विनोक्तप्रतीतेर्भ्रमत्वायोगान्नीलरूपवत्त्वेन तमः पृथिव्येव तस्य चालोकाभावव्यङ्ग्यत्वान्न प्रकाशे प्रत्यक्षमिति तु कन्दलीकृतः।

(सेतु०) एतान् ज्ञात्वा जातजिज्ञासः पृच्छति अथेति। तत्र सामान्यान्तानां संख्याप्रश्नोऽपि अन्यथा उत्तरे तदभिधानानुपपत्तेः। समवायविशेषयोस्तु संख्योत्तरादर्शनेनाप्रश्नो प्रतीयते अन्यथा संख्यान्तरासम्भवेपि समवाय एक इति विशेषा अनन्ता इत्युत्तरं स्यादेव। अस्तु वा तयोरपि संख्याप्रश्नः समवाय एकवचनेन विशेषे बहुवचनोच्चारणेन तयोरप्युत्तरप्राप्तेः। ननु समवाये भवत्वेकत्वप्रातिरेकवचनस्य तत्र शक्तेर्बहुवचनस्य तु बहुत्वसंख्यायां शक्तिः सा च त्रित्वादिः परार्द्धपर्यन्ता एवञ्च विशेषे का संख्या प्राप्तेति चेन्न एकैकनित्यद्रव्यव्यावर्तकतया तेषां सिद्धभिधानेन नित्यद्रव्यसमसंख्यात्वप्राप्तौ नित्यद्रव्याणां चानन्तत्वेन तेषामप्यनन्तत्वप्राप्तेः। अनन्तत्वं यदि संख्याविशेषस्तदा तयोत्तरमपि। यद्यसंख्यत्वं तदा संख्याभावेनैवोत्तरं संख्याप्रश्ने तदभावेनोत्तरस्योचितत्वात्, अत्र गेहे को घटस्तिष्ठति इति प्रश्ने न कोपीत्युत्तरवत्। एतेन

( सेतु० ) कथमज्ञस्य जिज्ञासोर्विशेषसमवाययोर्न संख्याप्रश्नस्तेन तयोरनन्तत्वैकत्वयोरज्ञानादिति निरस्तम्। एको ऽनन्तश्च विभागौ न भवतः न्यूनाधिकसंख्याव्यवच्छेदकफलो हि सः। न चैकत्वा-न्न्यूनाऽनन्तत्वादधिका वा संख्या सम्भवति। ननु यथाऽनन्तानां पृथिवीत्वादिभिरुपाधिभिर्विभागस्तथा विशेषाणां किमिति न कृत-स्तत्रापि विशेषो द्विविधोऽणुमहद्वृत्तिभेदादिति विभागसम्भवादिति चेन्न स्वतन्त्रेच्छस्य नियोगपर्यनुयोगयोरनर्हत्वात्। रहस्यान्तरमत्रत्यं कणादरहस्ये ।

किञ्चेति चकारेण के द्रव्यादय इति पूर्वप्रश्नसमुच्चयो वैधर्म्यं चेति साधर्म्यसमुच्चयः।

अथशब्दोऽत्र मङ्गलं केवलं न त्वानन्तर्यार्थोऽपि अवध्यवधि-मतोरभावात् । न च प्रयोजनादिज्ञानानन्तरं वैधर्म्यञ्चेति प्रश्न इत्यन्वयः प्रश्नपदाध्याहारे मानाभावात् तेन विनाऽवधि-मात्रप्राप्तावपि अन्वयात् । न च केवलमङ्गलत्वेऽनन्वयेऽपार्थकता एकवाक्याभिप्रायेणाप्रयुक्तत्वात् ।

गुणाद्याश्रयतया प्रधानं द्रव्यं प्रथममाह तत्रेति। तत्र द्रव्यादिषु मध्ये । ननु विभागेन द्रव्यस्य नवत्वं प्राप्तं तत्र च किं मूलमित्यत आह सामान्येति। सामान्यसंज्ञा द्रव्यं विशेषसंज्ञा पृथिवीत्यादिका तया सूत्रकृता नवैवोक्तानीत्यर्थः। एतावता सूत्रकार एवात्र प्रमाणमिति भावः। एतेन विभागवचनादेव नवत्वे लब्धे नवग्रहणं व्यर्थमिति शङ्का निरस्ता मनांसि नवैवेत्यव्याख्यानात् । भवतु वा तथाऽन्वयस्तथापि न नवशब्दैवकारयोर्वैयर्थ्यम् यो विभागस्य तथा सामर्थ्यं न जानाति तत्साधारणबोधार्थं तयोरुपादानात्। तत्रैवकारस्त्रिविधः । क्वचिद्विशेष्यसङ्गतो यथा पार्थ एव धनुर्धर इत्यादौ। तत्र विशेषणतावच्छेदकस्य विशेष्यादन्यस्मिन् योगाभा-वप्रतीतेस्सोऽन्ययोगव्यवच्छेदार्थः,—पार्थ एव धनुर्धर इत्यत्र पार्था-दन्यो न धनुर्धर इत्यर्थप्रतीतेः। क्वचिद्विशेषणसङ्गतो यथा शङ्खः पाण्डुर एवेत्यादौ। अत्र विशेषणतावच्छेदकस्य विशेष्येऽयोगव्य-वच्छेदः प्रतीयते, शङ्खः पाण्डुरत्वायोगवान्नेति प्रतीतेः। क्वचित्क्रि-यासङ्गतो यथा नीलं सरोजं भवत्येवेत्यादौ। अत्र विशेषणतावच्छे-दकस्यात्यन्तायोगव्यवच्छेदः प्रतीयते, सरोजे नैल्यस्यात्यन्तमयो-

( सेतु० )गो नास्तीति प्रतीतेः । अत्र तु नवैव द्रव्याणीत्यत्र नवैवे-त्यस्य विशेष्यत्वेन चातिरिक्ते द्रव्यत्वं नास्तीत्यर्थः ।

अत्र मीमांसकाः । न तावत्तमो नास्त्येव तस्य तमाल-स्तोमश्यामलस्याध्यक्षसाक्षिकत्वात् । नाप्यभावेष्वसौ सम्भाव-यितुं शक्यः घटो नास्तीतिवत् अमुको नास्तीति प्रतीत्यापत्तेः । अपि चाभावत्वे तेजोभावत्वमस्य वाच्यम् तेनैव विरोधावधार-णात् । तत्र न तेजोऽन्योन्याभावः सः भास्करकरनिकराक्रान्तेषु प्रा-ङ्गणादिषु तद्व्यवहारापत्तेः । नापि प्रत्येकं प्रागभावध्वंसात्यन्ता-भावाः, यत्किञ्चित्तेजःप्रतियोगिकानां तेषां यत्किञ्चित्तेजोयोगि-न्यप्यधिकरणे सत्त्वात् । नापि यावत्प्रतियोगिकास्ते तथा, प्राग-भावध्वंसयोः सामान्याभावत्वस्यासम्भवेपि प्रतियोगिमतीव प्रा-गभाववति ध्वंसवति चाऽनुपगमात्, अन्यथाऽऽद्यक्षणे घटे रूप-सामान्यात्यन्ताभावापत्तिः । नापि यावत्प्रतियोगिकाः समुदिताः प्रागभावादयस्तथा, प्रत्येकावृत्तिश्च धर्मो न समुदायवृत्तिरिति न्यायेन समुदितेष्वपि यावत्प्रतियोगिकत्वाभावात् । नापि यावां-स्तेजःसंसर्गाभावस्तमः, देशान्तरवर्तिनां प्रागभावादीनां देशान्तरे-ऽसत्त्वेन देशमात्रे तमोव्यवहारविलोपापत्तेः । अपि चैवं विशेषा-भावकूटस्य तमोव्यवहारभाजनत्वे तत्र भिन्नभिन्नानां प्रतियोगिता-वच्छेदकानामनुपस्थितौ तमःप्रत्यक्षानुपपत्तिः प्रतियोगितावच्छेद-कप्रतियोगिज्ञानस्याभावप्रत्यक्षकारणत्वात् । किञ्च तमःशरीरे प्राग-भावप्रध्वंसयोरपि प्रवेशेन तयोश्च कदाचिदेव प्रत्यक्षतया तद्धटित-तमसः कथमन्यदा प्रत्यक्षत्वमिति नाभावस्तमः । नापि विशेषसम-वायौ प्रत्यक्षत्वात् । नापि सामान्यं पृथिव्यादिवृत्तित्वे सति पृथिवी-त्वादिवदालोकेपि ग्रहणापत्तेः । आगन्तुकव्यक्त्यन्तरवृत्तित्वे तमस उपलम्भकाले तस्यापि उपलम्भापत्तेः । तादृशव्यक्त्यन्तरकल्पनायां गौरवेण तादृशव्यक्त्यन्तराभावाच्च । एवञ्च न क्लृप्तप्रत्यक्षपृथिव्या-दिवृत्तित्वमालोकसमवधाने तद्ग्रहेपि तदग्रहात् । नाप्यतीन्द्रिय-वृत्तित्वं वाय्वात्वादीनामिवाप्रत्यक्षत्वापत्तेरिति व्यक्त्यन्तरं कल्पनी-यम् तत्र च गौरवमेव ।

अत एवाचार्याः—“तेषां व्यञ्जकवैचित्र्येपि व्यक्त्याश्रयसंबन्धि-नामुपलम्भमन्तरेणानुपलम्भानियमादिति” । अयमाशयः । सा-

(सेतु०)मान्यं सप्तमो निर्व्यक्तिकं सव्यक्तिकं वा ? आद्ये "सामान्यस्य व्यक्त्युपलम्भमन्तरेणानुपलम्भनियमादिति" व्यक्तेरुपलम्भप्रमां विना सामान्यस्यानुपलम्भनियमादप्रमानियमाद्यस्य व्यक्तिर्न प्रमाणसिद्धा तत्सामान्यमप्रमाणमित्यर्थः । निर्व्यक्तिकस्य सामान्यत्वव्याघातादित्याशयः । अत एवोक्त"मुपलम्भने वा तत्त्वव्याघातादिति" । निर्व्यक्तिकस्य प्रमाणसिद्धत्वे सामान्यत्वव्याघातादित्यर्थः । निर्व्यक्तिकं सामान्यतया प्रमाणसिद्धं न भवति सामान्यत्वस्य व्यक्तिघटितत्वादित्यभिप्रायः । द्वितीये न तु क्लृप्तानां पृथिव्यादीनां व्यक्तित्वं न वाऽक्लृप्तस्य कस्यचिदित्युक्तमेव । ननु यथा तैले गुणवत्त्वेन व्यञ्जकेन द्रव्यत्वमभिव्यज्यते न च तद्दशायां पृथिवीत्वग्रहनियमो गन्धवत्त्वाग्रहे, तैलं पृथिवी जलं वेति सन्देहाद्गन्धवत्त्वेन तु व्यञ्जकेन पृथिवीत्वग्रहस्तथाऽऽलोकस्य व्यञ्जकत्वे पृथिवीत्वग्रहो यदा त्वालोकाभावो व्यञ्जको भवति तदा पृथिव्यामेव तमो गृह्यत इत्यस्तु पृथिवीसामान्यमेव तम इति चेन्न लाघवेन चाक्षुषसामान्यत्वेनैवालोकव्यङ्ग्यत्वात् तमोभिन्नत्वाविशेषणे परस्पराश्रयप्रसङ्गात् सिद्धे तमसि सामान्ये तमोभिन्नत्वं विशेषणं विशेषणे चालोकाव्यंग्यतमोरूपचाक्षुषसामान्यसिद्धिरिति । तथाहि यच्चाक्षुषं सामान्यं तदालोकव्यङ्ग्यमित्यत्र तमसि व्यभिचारे तमोभिन्नत्वं विशेषणं घटते व्यभिचारश्च तमसः सामान्यत्वसिद्धौ स्यात् सामान्यत्वसिद्धिश्च न निर्विशेषणायां व्याप्तौ व्यापकनिवृत्त्या व्याप्यनिवृत्तेस्सामान्यत्वमूर्द्धनि पर्यवसानात्,सविशेषणायान्तु सम्भवति तमोभिन्नत्वमादाय पर्यवसानसम्भवादिति । विशेषत्वमपि तमसो न सम्भवति न तावदपवरकादिविशेषत्वं महत्तमोपरमाणुपरिहारेणापि वृत्तेः । आश्रयपरिहारेणापि विशेषवृत्तौ मानाभावात् । नाप्यात्मादिगतत्वं विशेषस्याव्याप्यवृत्तित्वे प्रमाणाभावात् । अपवरकादितमस आत्माद्यव्यापकत्वात् । तत्रात्माकाशादीनां सर्वेषां सत्त्वेन विनिगमकाभावेनैकविशेषत्वस्य वक्तुमशक्यत्वाच्च, विशेषानेकवृत्तित्वाभावाच्च । नापि द्रव्यान्तरमेव तमो रूपविशेषाश्रयत्वेन कल्पनीयम्, तत्र प्रमाणाभावात् । अत एवोक्तं "विशेषस्याश्रयोपलम्भमन्तरेणानुपलम्भनियमादिति" । अर्थस्त्वत्रापि सामान्यन्यायेन उत्तरफक्किकापि तथैवावतारणीया । समवा-

( सेतु०, योपि भवन् घटघटत्वादीनां क्लृप्तानां समवायः प्रबलालोकेपि तेषां समवायप्रतीतेः । तथाच सम्बन्ध्यन्तरमेवाप्रामाणिकं वक्तव्यं तत्र च समवायस्य सम्बन्ध्युपलम्भमन्तरेणानुपलम्भनियमादिति किरणावली । एवञ्च व्यञ्जकानां प्रमाणानां वैचित्र्येपि बाहुल्येपि व्यक्त्यादीनामप्रामाणिकत्वे सामान्यादीनां केनापि प्रमाणेन ग्रहणन्न भवति व्यक्त्यादिरहितानां च प्रमाणपरिशीलितानां सामान्यत्वादिव्याहतिः । सामान्यविशेषत्वयोर्व्यक्तिगर्भत्वात्सम्बन्धस्य सम्बन्धिनं विनानुपपत्तेरिति किरणावल्याम् परिशिष्टप्रणेतुरभिप्रायः । तस्मान्न सामान्यादीनां विशेषोऽन्धकार इति । नापि कर्म क्लृप्तानामपवरकादीनां कल्पनीयस्य वा कर्मत्वम् तेषां पूर्वदेशविभागाद्यापत्तेः । गुणत्वे च नातीन्द्रियेषु गुणेष्वन्तर्भावः ऐन्द्रियकत्वात् । नापि द्वीन्द्रियग्राह्येषु त्वचाऽपरिच्छेदात् । नाप्येकेन्द्रियग्राह्येषु मनोग्राह्यत्वस्योभयसिद्धत्वेन गुणत्वे सति रूपत्वं तु स्यात् तल्लक्षणसत्त्वात् , नच तत्संभवति लाघवेन चाक्षुषरूपस्यैवालोकव्यङ्ग्यत्वात् । तमोभिन्नत्वविशेषणेऽन्योन्याश्रयात् । तस्माद्द्रव्यत्वम्परिशिष्यते । तत्र न चक्षुरग्राह्येषु वाय्वादिष्वन्तर्भावः चक्षुर्ग्राह्यत्वात् । नापि तेजसि भास्वररूपराहित्यात् । न जले शैत्याभावात् । न पृथिव्यामुद्भूतनीलरूपवत्पृथिव्या उद्भूतस्पर्शवत्त्वनियमात् । नच मणिप्रभासहचरितनीलभागे व्यभिचारः तदनङ्गीकारात् , मणिनैल्यस्यैवारोपात् । नयनगतपित्तद्रव्ये व्यभिचारवारणाय नीलेति । तस्माद्द्रव्यान्तरमेव तम इति कथं नैवेति ।

अत्रोच्यते । न तावच्चाक्षुषसाक्षात्कारत्वेनालोकेतरविषयकचाक्षुषसाक्षात्कारत्वेनालोकव्यङ्ग्यताऽऽलोकाभावग्रहे व्यभिचारात् किन्त्वालोकाभावेतरालोकेतरचाक्षुषसाक्षात्कारत्वेन । एवं च तमस आलोकाभावभिन्नत्वे आलोकं विना चक्षुर्ग्राह्यत्वं न स्यात् । न वान्धकारेतरेत्यादिविशेषणमन्योन्याश्रयात् । सिद्धे हि तमसि द्रव्यान्तरे तच्चाक्षुषे व्यभिचारवारणाय तद्भिन्नत्वं विशेषणम् , सिद्धे च तस्मिन्विशेषणे आलोकं विना कथं चाक्षुषत्वमिति दूषणापाकरणे द्रव्यान्तरत्वसिद्धिरिति ।

केचित्त्वालोकेतरेति न विशेषणम् आलोकेऽवयविन्यवयवस्य ग्राहकत्वात् त्रसरेणुरूपेऽवयविनि आलोकान्तरस्य वा व्यञ्जकत्वा-

( सेतु० ) दित्याचक्षते ।

तन्न, न तावदसम्बद्धस्यालोकस्य ग्राहकता अनालोकापवरकवस्तुग्रहापत्तेर्नापि सम्बन्धत्वमात्रेण बाह्यालोकसम्बद्धापवरकभित्तिसम्बद्धस्यापवरकान्तस्थितस्य घटादेर्ग्रहणप्रसङ्गात् । नापि साक्षात्सम्बन्धत्वेन तदपेक्षया संयोगत्वस्य जातितया संयुक्तत्वस्य लघुत्वादवयवावयविनोश्च संयोगाभावादित्येके । तन्न, एवं हि रूपादिव्यञ्जकताऽऽलोकस्य न स्यात् रूपादिना संयोगाभावात् किन्तु यैस्सम्बन्धैरिन्द्रियं ग्राहकं तैरालोकोऽपि । एवं च यथा चक्षुषस्संयोगस्य द्रव्यग्रहे संयुक्तसमवायस्य रूपादिग्रहे संयुक्तसमवेतसमवायस्य रूपत्वादिग्रहे सम्बद्धविशेषणताया घटाभावादिग्रहे ग्राहकता तथाऽऽलोकस्यापि इति संयोगेनैवालोको ग्राहक इति रिक्तं वचः । समवायेन तु चक्षुरिवालोकोपि न ग्राहकः । आलोकग्रह आलोकसमवायत्वस्य घटादिग्रह आलोकसंयोगत्वस्य वाच्यत्वेऽननुगमात् । साक्षात्सम्बन्धत्वस्य द्रव्यग्रहे वाच्यतायां संयोगत्वस्य लघुत्वात् । ननु द्रव्यस्थले आलोकग्रहे समवायत्वेन तदितरस्थले संयोगत्वेन ग्राहकतायां कार्यभेदान्नाननुगम इति चेन्न कार्यकारणभावान्तरकल्पनापेक्षयाऽऽलोककार्यतायामालोकेतरविषयत्वविशेषणादानस्यैव लाघवेनौचित्यात् । ननु मास्त्ववयवावयविनोः संयोगः परम्परावयवावयविनोस्तु स स्यादेव तथाचालोकः कथं नालोकम्प्रकाशयेत् इति चेन्न विषयरूप आलोके सति तद्विलम्बेन विलम्बाभावे तस्यालोकाप्रकाश्यत्वात् । एवं सति कालादीनामपि घटादिकारणता न स्यात्तद्विलम्बेन विलम्बाभावात् । विलम्बेन विलम्बाभावेपि यदि प्रमाणान्तरसिद्धत्वात्तत्र कारणत्वाङ्गीकारस्तदाऽऽलोकाभावेतरविषयकचाक्षुषत्वेन लाघवेन कार्यत्वे भवत्वालोकेऽप्यालोकप्रकाश्यताऽवयवावयवस्यावयवित्वेन संयोगाभावात् ।

वस्तुतस्तु आलोककारणतायाम् क्लृप्तायां तत्सम्बन्धेनालोकस्थले समवायत्वेन वा कारणत्वकल्पनं न दोषाय फलमुखगौरवस्यादोषत्वात् । यदि वाऽऽलोककारणतामुपजीव्य न सम्बन्धताग्रहः, किन्त्वन्वयव्यतिरेकाभ्यामेव तदाऽवयवावयवसंयोगस्य वाच्यत्वादित्यसावपि पन्थास्तार्किकपथप्रस्थितैः परिशीलनीयः ।

(सेतु०) यत्तु द्रव्यग्रह एवालोकस्य कारणता रूपग्रहविलम्बस्तु तद्विलम्बादेवेति, तन्न, द्रव्यग्रहस्य रूपाग्राहकत्वात्। अन्यथा प्रभाप्रत्यक्षतापक्षे रूपप्रत्यक्षतापत्तेः।

घटाभावादिग्रहे नालोकस्यालोकत्वेन कारणता, किन्तु योग्यानुपलब्धिकारणतायां योग्यताघटकत्वेनोपयोगीत्यपि कश्चित्।

एतन्मते ऽभावेतरविषयकचाक्षुषत्वेनैव जन्यतेति। नचैवं चक्षुषोऽपि चक्षुष्ट्वेन जनकता न स्यात् प्रमाणं विना प्रमानुत्पत्तेरित्यलं प्रासङ्गिकेन।

ननु मास्तु तमसः चक्षुर्ग्राह्यत्वं तामसमिन्द्रियान्तरन्तद्ग्राहकं भविष्यति स्थितिस्तु तस्य गोलक एव सर्पानामेकस्मिन्निन्द्रियद्वयाधिष्ठानत्वदर्शनादिति चेन्न परस्पराश्रयत्वप्रसङ्गात्। तमसो द्रव्यत्वसिद्धौ तामसेन्द्रियसिद्धिः तत्सिद्धौ च द्रव्यत्वसिद्धिरिति।

वस्तुतस्तु तेजस्तमसोस्तावद्विरोधः सकलानुभवसिद्धः स घटत्वपटत्वयोरिव भावयोर्वा घटाभावयोरिव भावाभावयोर्वा? आद्ये भावद्वयमभावद्वयं च स्यादिति गौरवम् तथाचैकस्य भावत्वमपरस्याभावत्वमुचितम् तत्र तमसो भावत्वे तेजसोऽभावता स्यात्। तथाच तत्रारोपणीयस्य भास्करोष्णादेरधिकरणान्तरं कल्पनीयम पृथिव्यादेस्तदनाश्रयत्वादिति गौरवमेवं च तेजो भावस्तमस्त्वभाव इति युक्तं तत्रारोपणीयस्य नैल्यादेः पृथिव्यादौ सुप्रसिद्धत्वात्। अपिचोद्भूतनीलरूपवत उद्भूतस्पर्शवत्त्वनियमात्तमो न तथा न च पृथिव्यान्तथा परस्पराश्रयत्वप्रसङ्गात्। तथाहि तादृशव्याप्तौ बाधकाभाव उद्भूतस्पर्शरहितस्य नीलरूपवतो द्रव्यान्तरस्य सिद्धिः सिद्धे च तस्मिंस्तद्वारकविशेषणोपादानमिति। नीलरूपप्रतीतिस्तु स्मर्यमाणारोपेण भ्रान्ता। तत्र च नालोकापेक्षा नीलरूपस्य स्मर्यमाणत्वात् आलोकाभावस्य च निरपेक्षत्वात् स्वव्याघातकत्वात् प्रतियोग्यग्राहकतयाऽनुपलब्धियोग्यतायामघटकत्वाच्च विशेषणज्ञानविशेष्यभानसामग्रीभ्यामसंसर्गाग्रहे विशिष्टबोधस्याप्रतिहतत्वादिति। किञ्च तामसेन्द्रियस्वीकारे तेजस्तमसोः समूहालम्बने चक्षुस्तामसेन्द्रियप्रयोज्यजात्योस्सङ्करापत्तिः।

नन्वालोकाभाव आरोपितनीलं रूपं तम इति कन्दलीकारमतमेवास्त्विति चेन्न नीलं तम इति प्रतीतावुभयोरंशयोर्नील-

रूपविषयत्वेऽभावभानांशस्याभावेन तथा भ्रमस्यासम्भवात्। आरोपविषयाविषयकस्य भ्रमस्य ब्रह्मणापि समर्थयितुमशक्यत्वात्। न च यथा प्रभाऽभानेपि तद्रूपं भासते तथा प्रकृतेपीति वाच्यम् आरोपविषयाभानेऽतद्वति तत्प्रकारकत्वस्य भ्रमत्वस्य वक्तुमशक्यत्वात्। ततः संयुक्तसमवायादिसत्त्वे सामग्रीसम्पत्तौ नीलरूपभानस्य सम्भवात् प्रकृते च विशेषणादिरूपसामग्र्या विशिष्टज्ञानजनकत्वात्। न च नीलवत्तमोवादिति प्रत्ययार्थः मत्वर्थकल्पनायां प्रमाणाभावात्।

यत्त्वालोकाभाव आरोपितनीलरूपस्य तमस्त्वे तमस्त्वं ज्ञानगर्भे चाक्षुषे चेतसि कथं चकाशेतेति।

तदचारु। प्रौढप्रकाशकयावत्तेजःसंसर्गाभावत्वेपि प्रकाशप्रवेशेन दोषावैषम्यात्। उपनीतभानशरणानुसरणसिद्धान्तस्यापि साम्यात्। यदपि तमोनीलयोरैक्ये नीलिमा तम इत्यनुभवः स्यान्न तु नीलं तमः इति तदपि चिन्ताबीजमधिरोहति। ननु गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यतो नीलशब्दस्य गुणपरत्वे नीलस्तम इति प्रयोगः स्यादित्येव बीजमिति वाच्यमिति चेन्न अस्य नीलं रूपमित्यादौ स्फुटं व्यभिचारित्वेन गुणशब्दात् पुंलिङ्गस्य विशेष्यतायां तथा नियामकत्वात् प्रकृते च तमःशब्दस्य नपुंसकस्य विशेष्यतायां नपुंसकताया एवोचितत्वात्। नन्वेका नीला रूपव्यक्तिरिति गुणे स्त्रीलिङ्गतापि स्यादिति चेत् यद्यस्ति प्रामाणिकप्रयोगस्तदा स्यात्। नन्वेवं नीलो गुणो नीलं रूपं नीला द्रव्यव्यक्तिर्नीलो घटो नीलं वासो नीलावनीतिप्रयोगानामभ्युपगमे विशेष्यलिङ्गतैव शुक्लादिपदानां कथं नोक्तेति चेत् एष हि पर्यनुयोगोऽमरकोषकृतान्न तु तर्ककर्कशानाम्। नीलतमसोरैक्ये नीलं तम इति सह प्रयोगोऽयोग्यः स्यादित्यपि न रमणीयम्, धर्मभेदेन पृथिवी द्रव्यमित्यादाविव सहद्वयप्रयोगस्योचितत्वात् नीलत्वालोकाभावारोपितनीलत्वयोर्धर्मयोर्भेदस्य प्रामाणिकत्वात्।

वस्तुतस्तु नीलस्याप्याचार्यचरणनिरुक्तासहप्रयोगानुपपत्तिरुपपन्ना, तथाहि नीलं तम इत्यस्य हि नीलमालोकाभावारोपितनीलमित्यर्थः। तत्र च नीलयोः सहप्रयोग एव, न च नीलमालोकाभावारोपितमित्यर्थः। तावन्मात्रस्यातमस्त्वेन तमःपदे लक्षणापत्तेः आ-

लोकाभावे क्रियादेरध्यारोपेण तावन्मात्रस्यातमस्त्वात् । न च सा-मान्यविशेषभावेन सहप्रयोगः द्रव्यं पृथिवीद्रव्यमित्यादेः सह-प्रयोगस्यानुचितत्वादस्याप्यनुचितत्वात् । मूढप्रबोधपरतया पिकः कोकिल इत्यादिवत् सहप्रयोगसमाधानं तु न सम्यक् । यत्तु नीलं तम इति भ्रम आलोकाभावभानस्यावश्यकतया स एव तम इति, तत्र नीलभानस्यावश्यकतया तस्यैव तमस्त्वापत्तेः । यदपि नीलं तम इति भ्रमोत्तरं नेदं नीलमिति बाधदर्शनान्नेदं तम इति बाधादर्श-नान्न नीलतमसोरैक्यमिति, तदपि न, न हि प्रमातुरातुरदारोदरभय-स्तकणादप्रवाहस्य वा प्रत्यक्षतोऽत्र बाधः किन्त्वौपपत्तिकः, स च स्वस्वदर्शनानुसारी स्वानुसारी कस्य न सुलभ इति । न चैवमाचा-र्यविरोधे परमोपजीव्यविरोधः आचार्यचरणानां मनस्तोषस्य भा-स्करे तदक्षराणां वर्द्धमानाननुरुद्धव्याख्यानेन कृतत्वात् । तस्मा-दुक्ताभिरेव युक्तिकिरणीभिः कन्दलीकारयुक्तिकमलिनी निष्क-लङ्कतां प्रापणीयेति सङ्क्षेपः ।

आलोकज्ञानाभावस्तम इति प्राभाकराः परिभावयन्ति । तदपि निर्मानभावितमिव, ज्ञानस्य मानसतया तदभावस्याचाक्षुषत्वात् तमसश्च चाक्षुषकत्वात् । ननु प्रागुक्तदोषादालोकाभावोऽपि कथं स इति चेन्न यदि तावत्प्रागभावादीनां समयविशेषेऽतीन्द्रियाणां प्र-वेशात्तद्गर्भान्धकारः कथं प्रत्यक्ष इति पूर्वोक्तो दोषः, तदेह उत्तरन्न तावत्प्रागभावादयः प्रागभावत्वादिना तमोलक्षणप्रविष्टाः किन्तु संसर्गाभावत्वेन । न च संसर्गाभावत्वादिनापत्तिः कादाचित्कीमध्यक्ष-तां पुरः कुर्वतेऽत्र प्रागभावोऽत्यन्ताभावो ध्वंसो वेतिसंशयोपि घटो नास्तीति निश्चयात, प्रागभावत्वादिनिश्चये व्यञ्जकापेक्षा न तु सं-सर्गाभावत्वेनापि ।

इदं चावधेयम् । अत्यन्ताभावत्वेनापि निश्चयो न दृष्टिपातमात्र-साध्योऽत्यन्ताभाववत्यपि देश इहात्यन्ताभावो ध्वंसो वेतिसंशया-त्किन्तु व्यञ्जकविशेषनिबन्धन एव, तस्मान्न संसर्गाभावत्वेन प्रागभा-वादीनां व्यञ्जकविरहकालेऽप्यध्यक्षताविरोध इति कथं तद्घटितस्या-न्धकारस्याप्रत्यक्षत्वमिति । व्यञ्जकश्चात्यन्ताभावत्वेन ग्रहेऽधिकर-णस्य त्रैकालिकप्रतियोग्ययोग्यत्वादि प्रागभावत्वेन ग्रहे तदधिकरण-स्योत्पादकसमवधानं ध्वंसत्वेन ग्रहे तदधिकरणध्वंसोत्पत्त्युत्तरका-

लनियतकिञ्चित्समवधानमिति सङ्क्षेपः।

ननु यावतां संसर्गाभावो यावतां संसर्गाभावा यावान् संसर्गाभाव इत्येतेषु पक्षेषु दूषितेषु किमुत्तरमिति चेन्न प्रौढप्रकाशकतेजस्त्वावच्छिन्नप्रतियोगिताकप्रौढप्रकाशकतेजस्संसर्गाभावस्य तमस्त्वात्। ननूक्तमेव सामान्याभावस्तेजस्सामान्यस्यैव विशेषाभावप्रतियोगिता तु कथं सामान्यधर्मेणावच्छिद्यत इति चेत् प्रतियोगितात्वेनानुगतीकृतानां सामान्यधर्मेणावच्छेदकत्वसम्भवात् व्याप्तीनामिव धूमत्वादिना। ननु तदवच्छिन्नप्रतियोगिताकेषु कस्यचित्सत्त्वे कथं न तमोव्यवहार इति चेन्न प्रौढप्रकाशकतेजस्त्वावच्छिन्नप्रतियोगिताकत्वावच्छिन्नस्याभावस्य तमस्त्वात्। सम्भवति चात्र प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानं प्रौढप्रकाशकतेजस्त्वेन सामान्यलक्षणया तादृशां सर्वेषां स्फुरणसम्भवात्।तस्मादालोकाभाव एवान्धकारो न द्रव्यत्वमिति सिद्धम्। नवैव द्रव्याणीति। अस्मत्पितृचरणाराध्याः श्रीप्रगल्भभट्टाचार्यास्त्वालोकाभावस्य तमस्त्वेऽनुद्भूतस्पर्शाया प्रभाया अपि प्रतियोगिप्रवेशे तस्याश्च विनिगमनाविरहेण रूपस्पर्शयोरुभयोरुद्भवस्य द्रव्यप्रत्यक्षप्रयोजकत्वेनातीन्द्रियतयातीन्द्रियप्रतियोगिकतयाऽप्रत्यक्षत्वापत्तिस्तथा च प्रौढप्रकाशकयावत्तेजोरूपाभाव एव तमः। प्रौढप्रकाशकत्वं च प्रौढप्रकाशजनकत्वम्। प्रौढत्वं च ज्ञानगतो जातिविशेषः। न च तज्जनकस्य चक्षूरूपस्य सत्त्वात्कथमित्थम् ? उद्भूतत्वेन प्रतियोगिनो विशेषणीयत्वाद्रूपत्वावान्तरजातिग्राहकतेजोरूपसत्त्वे प्रौढप्रकाशकयावत्तेजोरूपाभावश्छाया रूपत्वाग्राहके तत्सत्त्वे रूपत्वावान्तरग्राहकतद्विरहोऽवतमसं रूपत्वग्राहकतद्विरहोऽन्धतमसमिति तद्भेदलक्षणमिति प्रथयन्तीति सङ्क्षेपः।

ननु गुणेषु यथा केचित् कण्ठोक्ताः केचित्त्वभ्युपगमसिद्धान्तसिद्धास्तथा द्रव्याण्यपि भविष्यन्तीत्यत आह—तद्व्यतिरेकेणेति। गुणेष्वेकत्र निरुक्तसंज्ञातो भिन्नास्संज्ञाः केषुचित्स्थलेषु निरुक्ताः सन्तीति भवत्वभ्युपगमसिद्धान्तसिद्धा गुणाः, न त्वेवं द्रव्यमित्यर्थः।

तदेवं द्रव्यादिसाधर्म्यवैधर्म्यज्ञानस्य निःश्रेयसकारणत्वमभ्युपगम्य तत्स्वरूपपरिज्ञानार्थमाह—*अथ के द्रव्यादयः पदार्थाः किं स्वरूपाः*. इति। किञ्च तेषां साधर्म्यं किंरूपं च वैधर्म्यमिति

द्रव्यादिषु वा नानारूपतया परैरभिधानात्संशये सति इदम् । तथाहि विशेष्यं द्रव्यमिति केचित् । क्रयविक्रययोग्यं चेत्यादिविपर्यस्तो वा द्रव्यादीनामसत्त्वं मन्यमान ।

अथ के द्रव्यादय पदार्थाः न सन्तीत्याह—तदभावान्न साधर्म्यं नापि वैधर्म्यमिति । तथाहि चक्षुस्पर्शनाभ्यां रूपस्पर्शयो प्रतिभासनात् न तद्व्यतिरिक्तं द्रव्यमस्ति । यच्चेदं घटादिज्ञानं तन्न प्रमाणम्, कल्पनाज्ञानत्वात् । बाधकं च प्रमाणमस्ति वृत्तिविकल्पादि । तथा चावयवा अवयविनि वर्तन्त इति नाभ्युपगतम् । अवयवी चावयवेषु वर्तमान किमेकदेशे वर्तते व्याप्त्या वा ? एकदेशेन वृत्ताववयवान्तरप्रसङ्ग । अथैकदेशे वर्तते अनेकवृत्तित्वव्याघात । एकद्रव्यं च द्रव्यं स्यात् । तत्र चावयवविभागाभावात् । नित्यत्वमेकस्य च क्रमयौगपद्याभ्यामजनकत्वम् । रूपाद्यनुत्पत्तिश्च नेकरूपादेर्जनकत्वाभ्युपगमात् । अवयवेषु चावयवीति प्रतिभासाभाव । तस्यैकद्रव्यत्वात् । अथ न प्रत्येक परिसमाप्त्या वर्तते । किं तर्हि सर्वावयवेष्वेक एवेति । तत्राप्येकस्वरूपेणावयवान्तरप्रवृत्तौ तेषामेकताप्रसङ्ग तदवयववृत्तिरूपत्वादवयविनः, स्वरूपान्तरेण चानेकत्वं स्वरूपभेदस्य भेदलक्षणत्वादिति । वृत्त्यनुपपत्तेरसत्त्वं वृत्त्या हि सत्त्व व्याप्तम् । सा च व्यावर्तमाना स्वव्याप्तं सत्त्वं गृहीत्वा व्यावर्तत इत्याशय । परस्य गवाश्वादिवत् । भिन्नदेशतया ग्रहणम् । तदग्रहे तद्बुद्ध्यभावाच्चावयविनोऽसत्त्वे रूपादिसमुदायम न घटादय इति समुदाय समुदायिभ्यो नार्थान्तरमिति संवृतिसन्नेव । एवं विज्ञानमात्र सर्वं ततोऽर्थान्तरस्य सद्भावे प्रमाणाभावादित्येवं शून्यवादिवादा अपि यथावसरं निराकर्तव्या इति नेह प्रतन्यन्ते ।

संशयिता व्युत्पन्नस्य द्रव्यस्वरूपप्रतिपादनार्थमाह *तत्र द्रव्याणीत्यादि । यथा प्रत्यक्षेण रूपादिव्यतिरिक्तस्य द्रव्यस्यावधारणात् विपर्यस्तव्युदास । रूपं हि चक्षुषैव गृह्यते स्पर्शस्त्वगिन्द्रियेण । द्वीन्द्रियग्राह्यं तु द्रव्यम् । कथमेतत् ? प्रतिसन्धानात् । तथाहि यमहमद्राक्षं चक्षुषा तमेव स्पृशामि यं चास्पृशम् तमेव पश्यामीति । न च द्वाभ्यामिन्द्रियाभ्यामेकार्थग्रहणं विना प्रतिसन्धानं न्याय्यम् । रूपस्पर्शयोश्च प्रतिनियतेन्द्रियग्राह्यत्वादेतन्न सम्भवतीति । अथेदं कल्पनाज्ञानमिति चेत् । किमिदं कल्पनाज्ञानं नामेति । अथ क्षणिकत्वान्निर्विकल्पकज्ञानसमकालमर्थविनाशे स्मरणानन्तरमेव तदुत्पत्तेरिति निर्विषयत्वादप्रमाणमिति चेत् । न क्षणिकत्वासिद्धौ स्मरणानन्तरभाविनोऽपि निर्विकल्पकज्ञानवदर्थान्वयव्यतिरेकानुविधानात् अर्थजत्वमेव । अथार्थजत्वे निर्विकल्पकज्ञानसमकालमेवार्थस्य सद्भावादिन्द्रियाणां चाविचारकत्वेन स्यादेतदिति । तन्न । सहकार्य्यभावात् । तथाहि इन्द्रियमर्थेषु सविकल्पकज्ञानोत्पत्तौ सङ्केतस्मरणापेक्षम् । अथ स्मरणे वार्थस्येन्द्रियस्य च किमतिशयाधानमनतिशयनिवृत्तिर्वेष्यते । न तस्यैवातिशयत्वात् । तथाहि यद्यस्य सद्भावे कार्यं करोति स तस्यातिशय स्मरणसद्भावे चेन्द्रियं कार्यकृदिति स्मरणमेव तस्यातिशयः स्मरणाद्धि कारकसाकल्यमेवातिशय सम्पद्यते । तद्वैकल्य चानतिशयो निवर्तते । साकल्ये हि कार्यकरणाद्वैकल्ये चाकरणादिति । एतेन यदाहुः—

> यः प्रागजनको बुद्धेरुपयोगाविशेषत ।
> स पश्चादपि तेन स्यादर्थापायेऽपि नेत्रधीः ॥

इत्येतदपास्तं भवति । उपयोगाविशेषस्यासिद्धत्वात् । तथाहि निर्विकल्पकबोधे नेन्द्रियस्य सङ्केतस्मरणमस्ति । सविकल्पके त्वस्तीत्युपयोगविशेष. । अथ शब्दाकारं सविकल्पकं ज्ञानम् । शब्दरूपता चार्थे नास्ति प्रथमेन्द्रियसन्निपात एव सविकल्पकोत्पत्तिप्रसङ्गात् । चक्षुरादिना वा परिच्छेदः श्रोत्रपरिच्छेद्यत्वेन दर्शनादिति निर्विषयत्वं सविकल्पकज्ञानस्य ।

तदसत् । आकारवादप्रतिषेधस्य वक्ष्यमाणत्वात् न शब्दाकारता ज्ञानेऽस्ति । ज्ञानवैलक्षण्ये तु सहकारिवैलक्षण्यमेव कारणमित्युक्तम् । द्रव्यासत्त्वे चान्यन्निमित्तं वाच्यं प्रतिसन्धानस्य । अथास्त्येवानादिकालपरिपुष्टवासनेति चेत् । न तस्याः सद्भावे प्रमाणाभावात् । अथ सविकल्पकं ज्ञानमेव प्रमाणमिति चेत् । नान्यथापि भावात् । तथा ह्यर्थसद्भावेऽप्युपपद्यत इति कथं वासनासद्भावे प्रमाणमन्वयव्यतिरेकाभ्यामन्यत्रापि च कार्यकारणभावावगतिस्तौ चेन्द्रियस्येहापि स्त इति । अथ निर्विकल्पकज्ञानोत्पत्ताविन्द्रियस्य व्यापारात्तदधीनतया च सविकल्पकेऽपि व्यापार इव संलक्ष्यते । न वस्तुनस्तत्राक्षणिकत्वे सत्युभयत्रापि व्यापारसम्भवात् । न च निर्विकल्पकं ज्ञानमेव सङ्केतस्मृतिद्वारेण सविकल्पकज्ञानोत्पत्तौ कारणमित्यस्ति प्रतिबन्धः । प्रत्यक्षस्य नियमेन स्वलक्षणविषयत्वेन क्रमाविषयत्वादनुमानन्तु सामान्यविषयमेवेति । न च प्रतिबद्धं लिङ्गमस्ति । कार्यं चान्यथा सम्भवतीति न क्रमे प्रमाणम् । स्वसंवेदनवादिनश्च विज्ञानं स्वपरिच्छेद एव प्रमाणं नार्थान्तरस्येति । यदि च वासनैव निमित्तं सा न विज्ञानादर्थान्तरं रूपरसगन्धस्पर्शशब्दज्ञानव्यतिरिक्तस्य निमित्तस्यानभ्युपगमात्तादात्म्ये तु बोधरूपतया सर्वत्राविशेषाद्विकल्पवैचित्र्यं न स्यात् । अथ विकल्पवैचित्र्यादेव वासनावैचित्र्यं न कार्यत इति चेत् । तासां च विज्ञानादभेदे विज्ञानवदेकताप्रसङ्गो विज्ञानस्य वाऽनेकत्वम् अनेकार्थतादात्म्यात् । विपर्यये वा तादात्म्यानुपपत्तेः । यदि च वासना विशिष्टज्ञानहेतुर्बाह्या चेति संज्ञामात्रं भिद्येतार्थो वासनेति । अथ वस्तुरूपैव वासना न तर्हि तस्या ज्ञानजनकत्वमर्थक्रियाकारित्वस्य वस्तुलक्षणत्वात् । अथ स्मरणानन्तरभावित्वं सविकल्पकत्वम् । तच्चार्थजत्वस्य प्रसाधितत्वान्न दूषणम् । अभ्युपगमे वा निर्विकल्पकस्यापि सविकल्पकत्वप्रसङ्गः । तथाहि रूपस्मरणानन्तरं रसरसनसन्निपाते रसज्ञानमुत्पद्यते । तत्र च रूपस्मृतेः पूर्वकालभाविन्याः समनन्तरकारणत्वं बोधात् बोधरूपतेति न्यायादस्तु तस्यापि कल्पनात्वम् स्मरणानन्तरभावित्वात् । न चात्र बोधरूपतया समनन्तरकारणत्वमन्यत्र स्मृतिरूपतयेति वाच्यम् । बोधादर्थान्तरस्य स्मृतिरूपस्य तादात्म्ये सत्यभावाच्च चाभेदे सति व्यवस्थोपपद्यते । क्वचिद्बोधरूपतया समनन्तरकारणत्वं क्वचिद्रूपान्तरेणेति । अतो न स्मरणानन्तरभावित्वं सविकल्पकजत्वम् । न चार्थजत्वसिद्धौ नामजात्याद्युल्लेखेनोत्पत्तिर्दूषणमिति । कल्पनात्वस्यासम्भवात् । प्रतिसन्धानं द्रव्यासिद्धौ प्रमाणम् । एवं घटादिज्ञानस्याप्यालम्बनं वाच्यम् । तस्य हि सम्यग्ज्ञानत्वात् । रूपादिसमुदायः रूपादीनां प्रतिनियतेन्द्रियग्राह्यतया तत्समुदायस्यैकेन्द्रियाविषयत्वात् । न चापरमार्थसतो रूपादिसमुदायस्य ज्ञानजनकत्वम् । तस्य चानुपलब्धत्वे नाणूनां सद्भावे प्रमाणमस्ति । तेषां हि कार्यगम्यत्वात् । न चासम्मतः परमाणुरस्ति । षट्कोणयुगपद्योगादिति । तस्याप्यसत्त्वं परमार्थतः, असञ्चीयमानश्चास्मद्दर्शनविषयो न भवत्येवेति घटादिबुद्धेर्निर्विषयत्वप्रसङ्गः । न चाबाध्यमानज्ञानस्यानालम्बनत्वमित्यभिन्नत्वादभिन्नावयविविषयत्वम् । अथास्ति वृत्तिविकल्पादि बाधकमिति चेत् । न तस्याप्रमाणत्वात् । तथाहि वृत्त्यनुपपत्तेरसत्त्वमिति किमिदं स्वतन्त्रसाधनमुत प्रसङ्गसाधनमिति । यदि स्वतन्त्रसाधनं अवयवी धर्मी नास्तीति साध्यमिति प्रतिज्ञावाक्ये पदयोर्व्याघातः । यथेदं नास्ति चेति हेतोराश्रयासिद्धत्वम् च धर्मिणोऽप्रसिद्धत्वात्तथा स्वमते रूपादीनां सत्त्वम् । न च वृत्तिरस्तीति व्यभिचारः । समवायानभ्युपगमात् । अथ परव्याप्त्या परस्यानिष्टापादनमिति परेण ह्यवयव्यभ्युपगत इति धर्मित्वेनोपात्तस्तस्य प्रतिपाद्यत्वादिति । तत्र यदि परेण प्रमाणात्प्रतिपन्नस्तेनैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । न चानेनैव तस्य

बाधात्तदन्तरेण पक्षधर्मत्वादिति । अथाप्रमाणेन प्रतिपन्नस्तर्हि प्रमाणं विना प्रमेयस्यासिद्धिरिति वाच्यं किमनुमानोपन्यासेन । तस्यापक्षधर्मतयाप्रमाणत्वात् । न च परस्य वृत्त्यासत्त्वं व्याप्तम् । तदन्तरेणाप्याकाशादौ उपलम्भादित्यनेकान्तः स्वरूपासिद्धश्च वृत्तेः समवायस्य सिद्धत्वात् । यच्चेदं नैकदेशेन सर्वात्मना वा वर्तत इत्येवमेकदेशस्यावृत्तित्वात् । न च भेदशब्दस्याभिन्नाश्रयविन्युपपत्तिः बहुषु दृष्टत्वात् । तथाहि बहूनामन्यतमाभिधानमेकदेशः । निरवशेषता च सर्वशब्दस्यार्थः । तथा विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयात्प्रकारान्तरेण वृत्तिः प्राप्नोति । अन्यथा हि न वर्तत इति वाच्यम् । न चैकदेशे सति वृत्तिर्यथा वंशस्य स्तम्भेषु निर्देशानाय वृत्तिप्रसङ्गात् । परमाणूनां च प्रवृत्त्यभावे द्व्यणुकादिप्रक्रमेण कार्यानुत्पत्तिः । अथायं विकल्पार्थः तत्र किं व्याप्त्या वर्तते उताव्याप्त्येति । तत्र स्वरूपात्स्वाश्रयव्यापित्वेनाभ्युपगमः । असंयोगादिवदव्याप्यत्वं वृत्तित्वेनेति । तथा ह्यवयवेष्ववयवी वर्तते । समवायवृत्त्या तु रूपान्तरेणेति स्वभावकल्पोऽपि निरस्तः । अथावयवी गृह्यमाणो यावच्छेषावयवग्रहणात् गृह्यते मध्यापरभागावयवानामग्रहणाच्चाग्रहणमेव स्यात् । एकावयवग्रहणे तु सास्नामात्रोपलम्भेऽप्युपलम्भः स्यात् । नैतदेवम् । भूयोवयवेन्द्रियसन्निकर्षानुगृहीतेनावयवेन्द्रियसन्निकर्षेण ग्रहणात् कार्यसद्भावाच्च कारणचिन्ता प्रवर्तत इत्यपरोक्षज्ञाने सिद्धावयविन्येतत्कारणमित्युच्यते । एवं देशभेदेनाग्रहणादिति रूपादिभिर्व्यभिचारः । तथाहि रूपादयो न देशभेदेन गृह्यन्ते । तथापि सन्तः परस्परं भिन्नाश्चेति प्रतिभासभेदस्य विद्यमानत्वात् । गवादयोऽपि प्रतिभासभेदादेव भिद्यन्ते न देशभेदात् । निर्देशानामभेदप्रसङ्गात् । एवं तदग्रहे तदबुद्ध्यभावाच्चेत्ययमपि विरुद्धः । तथाहि तेषामवयवानामग्रहे तस्मिन्नवयविनि बुद्ध्यभावः इत्ययमर्थोऽवयवग्रहे अवयविनि बुद्धिरित्यवयविनः सत्त्वम् । तथाच विशेषणग्रहणात् विशेष्यबुद्धेर्न चासत्त्वम् । न चाप्यभेदः । तथावयवाग्रहे अवयवाग्रहो ऽसिद्धः । मन्दमन्दप्रकाशे सति संस्थानमात्रस्यावयविनो ग्रहणादिति । अयं चावयविवादोऽस्मद्गुरुभिर्विस्तरेणोक्त इति नेह प्रतन्यते । सिद्धे चावयविनि प्रायः तदाश्रिता गुणादयोऽपि सिद्ध्यन्ति च । तत्र द्रव्येषु प्रतिज्ञां करोति द्रव्याणि परमार्थसन्तीति अबाध्यमानज्ञानविषयत्वात् । यद्यदबाध्यमानज्ञानविषयं तत्तत्परमार्थसत् यथा विज्ञानम् । तथाऽबाध्यमानविषयाण्यमूनि । तस्मात्परमार्थसन्तीति । अत्र च पक्षीकृतेष्वबाध्यमानज्ञानविषयत्वमुक्तमिति पक्षधर्मत्वम् । परमार्थसति च ज्ञाने ज्ञानविषयत्वं वक्ष्याम इति सपक्षे सत्त्वं विपक्षाच्च खरविषाणादेर्व्यावृत्तिरिति । विपरीतार्थस्थापकयोः प्रत्यक्षागमयोरनुपलम्भादबाधितविषयत्वम् । असत्प्रतिपक्षोपपत्तेश्च प्रामाण्यमिति । एवं पृथिव्यप्तेजोवायुवाकाशकालदिगात्ममनांसि इत्यत्र द्वन्द्वसमासः सर्वेषां स्वातन्त्र्यात् । अत्र च द्रव्याणीति प्रतिज्ञायां द्रव्यत्वयोगं साधनं वक्ष्यति । तथा पृथिव्यादिभेदे च पृथ्वीत्यादिविशेषोपलक्षणमिति । एतानि च सामान्यविशेषसंज्ञोक्तानि सामान्यसंज्ञा द्रव्यमिति विशेषसंज्ञा च पृथ्वीत्यादयः ताभिरुक्तानि कियन्ति नवैवेत्यवधार्यन्ते न्यूनाधिकप्रतिपादकप्रमाणाभावात् । तथाहि पृथिव्यादिसद्भावस्य वक्ष्यमाणत्वान्न न्यूनता । अथाधिक्योपलब्धेस्तदभावोऽसिद्धः । तथाहि छाया द्रव्यम्, क्रियावत्त्वात् गुणवत्त्वाच्चेति । चक्षुर्व्यापाराद् गच्छतीति ज्ञानोत्पत्तेः देशान्तरप्राप्तेश्च । तथाहि गतिमती छाया देशान्तरप्राप्तिमत्त्वात् । यो यो देशान्तरप्राप्तिमान् स स गतिमानुपलब्धः, यथा देवदत्तः, तथा देशान्तरप्राप्तिमती छाया तस्माद्गतिमती । गुणवत्त्वं च "आतपः कटुको रूक्षश्छाया मधुरशीतला" इत्यागमात् । तदेतदसत् । भासामभावरूपत्वाच्छायायाः । तथाहि यत्र यत्र वारकद्रव्येण तेजसः

सन्निधिर्निषिध्यते तत्र तत्र छायेति व्यवहारः । वारकद्रव्यगता च क्रियामातपाभावे समारोप्य प्रतिपद्यते—छाया गच्छतीति । अन्यथा हि वारकद्रव्यगतं क्रियापेक्षितत्वं न स्यात् । यच्चेदं देशान्तरप्राप्तिमत्त्वं तत्किं देशान्तरेण संयोगः । तस्यापि साध्यत्वात् । तथाहि द्रव्यत्वसिद्धौ संयोगः सिध्यति संयोगात् द्रव्यत्वमिति इतरेतराश्रयत्वं स्यात् । अथ देशान्तरप्राप्तिः समवायः । सोऽप्यसिद्धः । न ह्येकत्र समवेतः अन्यत्र समवैतीति । छाया त्वेकत्र सम्बद्धोपलब्धा पुनर्देशान्तरेऽप्युपलभ्यते । न च क्रियावत्त्वं देशान्तरसमवायात् सिध्यति । तस्यायुतसिद्धेष्वेव भावादिति । क्रियावत्त्वं साधनम् । यच्चेदमागमान्माधुर्यं शैत्यं वा छायायास्तदप्युपचारात् । ये हि मधुरद्रव्यस्य शीतद्रव्यस्य वा गुणाः ते छायासंसेवनाद्भवन्तीति तत्कार्यकर्तृत्वेन तथोक्ताः । अपि च क्रियावत्त्वात् गुणवत्त्वाच्च द्रव्यं छायेति न वाच्यम् । न च द्रव्यान्तरमस्तीत्युपपन्नं, नवैव द्रव्याणीत्यवधारणात् । अत्र केचित् द्रव्याणि नवैव न्यूनाधिकप्रतिपादकप्रमाणाभावे सति व्यवच्छेद्यव्यवच्छेदकभावापन्ननवलक्षणयोगित्वादुभयाभिमतघटादिनवद्रव्यादिवदिति हेतुं ब्रुवते । तथाह्याधिक्यप्रमाणाभावो दर्शित एव । न च लक्ष…………………यथावसरं वक्ष्याम इति । तथा सर्वज्ञेन मुनिना पृथिव्यादिसंज्ञाव्यतिरेकेण संज्ञान्तरानभिधानात् द्रव्यान्तरासत्त्वमिति । यदिह भावरूपं तत्सर्वं मयोपसंख्यातव्यम् इति प्रतिज्ञा मुनेः ।

(भा०) गुणाश्च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश । चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशति गुणाः ।

(सू०) गुणाः कतिविधा इत्यत्रोत्तरम् गुणा इत्यादि । गुणाः सप्तदश रूपरसाद्याः कण्ठोक्ताः रूपत्वरसत्वाद्यवान्तरधर्मेण विभक्ताः रूपरसगन्धस्पर्शाः संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वबुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति सूत्रेण सप्तदशानां स्वयमेव कणादैर्विभजनादिति भावः । गुरुत्वादेरविभजनान्मुन्युक्तविभागस्य न्यूनत्वमपाकुर्वन्नाह चशब्देति । प्रयत्नाश्च गुणा इत्युक्तसूत्रस्थचशब्दसमुच्चिताश्चेत्यर्थः । तत्रानुगतस्यादृष्टत्वस्य मिथ्याज्ञानवासनादिजन्यतावच्छेदकतया सिद्धस्य सत्त्वेऽप्यदृष्टपदं धर्मत्वाधर्मत्वाभ्यामेव विभिन्नरूपाभ्यां धर्माधर्मतासम्पर्कपतो न गुरुत्वादेः सप्त-

त्वाविरोधः। गुणत्वसाक्षाद्व्याप्यजात्यैव गुणानां विभागात् नियमे प्रमाणाभावात् अन्यथा वेगस्थितिस्थापकभावनास्वनुगतसंस्कारत्वजातेर्निष्प्रमाणकत्वाद्वेगत्वादिभिरेव गुणत्वसाक्षाद्व्याप्यजातिभिर्विभजने गुणानां षड्विंशतित्वापत्तेः। इत्येवमिति। कण्ठोक्तैः सप्तदशभिश्चकारसमुच्चितानां सप्तानां मिलनेनेत्यर्थः।

(से०)गुणाश्चतुर्विंशतिः। नन्वेवमत्र विरोधे कथं संख्यान्वयः सप्तदशसंख्याकानामेव कथनात्। न च यद्यपि स्वस्ववाचकासाधारणशब्देन रूपादयः सप्तदशैवोक्तास्तथाप्यनुक्तसमुच्चयपरेण सूत्रस्थचशब्देन सप्त ग्राह्या इति वाच्यम्। चकारस्योक्तसमुच्चयपरत्वेनाप्युपपत्तेरिति चेन्न चकारस्यानुक्तसमुच्चयपरत्वाभावेऽभ्युपगमसिद्धान्तासिद्धानां गुणानामग्रहणे विभागसूत्रस्य न्यूनतापत्तेरित्याह गुणास्त्विति। कण्ठोक्ताः स्वस्ववाचकासाधारणशब्देनोक्ता अनुक्तसमुच्चयपरकचशब्दः सप्तसाधारण इति भावः। ननु चशब्देनानुक्ताः कति ग्राह्या इत्यत आह चशब्देति। तावतामेवाभ्युपगमसिद्धान्तासिद्धत्वादित्यर्थः। गुरुत्वादिशब्दानुक्त्या सप्तेति कथयतो भाष्यकारस्यादृष्टशब्दस्य नानार्थत्वेऽभिप्रायः। एवं च सैन्धवपदेन घोटकक्रमेलकयोरिवादृष्टपदेन धर्माधर्मयोरुपस्थितौ सप्त प्राप्यन्ते कण्ठोक्तसमुच्चितयोरेकत्वे चैवं च चतुर्विंशतिर्भवतीति भावः। नन्वदृष्टत्वेन रूपेण धर्माधर्मयोरेकत्वे त्रयोविंशतिरेव गुणाः स्युः। न च जातिपुरस्कारेणैव जातिमतां विभाग आवश्यकः न गुणविभागस्तथा प्रमाणाभावादिति चेन्न ईदृशि स्थले भगवत्या एव तन्त्रेच्छाया एव शरणत्वात्। नन्वदृष्टत्वं जातिर्न भवतीत्याचार्यचरणैरुक्तन्तेषां कोऽभिप्राय;। न च कात्र प्रश्नापेक्षा कार्यैक्यादीनां तद्व्यवस्थापकानामभावादिति तैरेवोक्तत्वात् प्रकृते च भिन्नयोः सुखदुःखयोः कार्यत्वाद्विहितनिषिद्धयोः कर्मणोः कारणत्वादिति वाच्यम् अदृष्टत्वेनोपपत्तिमत्त्वेन कार्यकारणानुरोधेन कारणतावच्छेदकतयाऽदृष्टस्यावश्यवाच्यतया कार्यताकारणतावच्छेदकयोश्च जातिबाधकं विना जातावेव पर्यवसानमिति तैरेवोक्तत्वात्। उपाधिभिरेवाश्वैरुपहता गाव इतिन्यायेन जातेरपाकरणे

(से०)रूपत्वमपि न स्यात्तत्राप्युपाधेः संभवात्। ननु तत्रोपाधिश्चक्षुर्मात्रग्राह्यगुणत्वं न सम्भवत्येव परमाणुरूपादावव्याप्तेः किन्तु चक्षुर्मात्रग्राह्यजातिमद्गुणत्वम्। न च स जातिं विनोपपद्यत इति चेन्न, अदृष्टत्वस्याप्यतीन्द्रियात्मविशेषगुणमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिगर्भत्वात्। अत्र साक्षात्पदेन भावनावारणम् भावनाया गुणत्वव्याप्यसंस्कारव्याप्यत्वान्मात्रपदेनापि सैव वार्यते। संस्कारत्वस्य गुणत्वसाक्षाद्व्याप्यस्यातीन्द्रियात्मविशेषगुणे भावनायां सत्त्वादतीन्द्रियगुणमात्रवृत्तीति। करणं गुरुत्वेऽतिव्याप्तिर्गुणत्वसाक्षाद्व्याप्यजातेर्गुरुत्वस्यातीन्द्रियगुणमात्रवृत्तित्वाद् गुरुत्वस्य सर्वस्यातीन्द्रियत्वात्तदर्थमतीन्द्रियात्मगुणमात्रवृत्तीत्यादि। ननु विशेषपदं व्यर्थमिति चेन्न अतीन्द्रियविशेषगुणमात्रवृत्तीत्यादेरेकस्य लक्षणस्यातीन्द्रियात्मगुणमात्रवृत्तीत्यादेरपरस्य लक्षणस्य कर्त्तव्यत्वात्। न च तत्र धर्मत्वादिनैव जातिगर्भलक्षणोपपत्तिः, सितत्वादिना रूपलक्षणस्याप्युपपत्तेः। एवञ्च जातिबाधकाभाव एव रूपत्वजातिसाधकः स न दुष्टः। न चावश्यपेयोपाधिनैवोत्पत्तिमत्त्वं प्रत्यदृष्टजनकत्वोपपत्तौ किं जात्येति वाच्यम्, एवं हि द्रव्यत्वमपि न स्यात्तत्रापि गुणवत्त्वेनोपाधिना कारणतावच्छेदसंभवात्। ननु कारणतावच्छेदकं कारणमिव कार्यात् पूर्ववर्त्यपेक्षितमन्यथा भाविदार्व्यस्य दण्डस्य घटकारणतापत्तेः, तथा च प्रथमक्षणेऽसतो गुणस्य कथं गुणादिकारणतावच्छेदकत्वमिति चेन्न गुणयोग्यताया अवच्छेदकत्वात्। ननु सा द्रव्यत्वमेवेति चेन्न गुणात्यन्ताभावानधिकरणस्य तद्विरोधिमत्त्वस्य चाविवक्षितत्वात्। ननूपाधिः कल्प्तः न जातिबाधकः किन्तु व्यक्तिभेदादिषट्कमेवेति चेन्न अदृष्टत्वेऽपि युक्तितुल्यतायाः स्पष्टत्वात्। तस्माददृष्टत्वं जातिरिति चेन्न, अस्तु तावदिदमापातमनोरमं तथापि विभागो धर्मत्वादिनैव स्वतन्त्रेच्छावतो नियोगपर्यनुयोगयोरयोग्यत्वादिति दिक्। व्यक्तिभेदादिकं जातिबाधकमिति तूपलक्षणम् योग्यव्यक्तिमत्त्वेऽयोग्यत्वस्यापि जातिबाधकत्वात् अव्याप्यवृत्तित्वस्यापि तथात्वात्। न चायं सिद्धान्तः प्रमात्वं कथं जातिरित्याशङ्क्याप्रमायामव्याप्यवृत्तित्वान्मनसा ज्ञानपरिच्छेदेऽपि प्रामाण्यापरिच्छेदादित्युत्तरं प्रापयद्भिः पूर्वपण्डितैरनयोर्दोषयोः स्फुटं स्वीकारात्। दुरूहतया सर्वसाधारणप्रसिद्धेरभावात्। मयापि मङ्गलस्वरूपनिरूपणावसरे-

(से०)ऽनयोर्दोषयोः परिष्कृतत्वात्। कार्यमात्रवृत्तिधर्मस्य कार्यतावच्छेदकत्वाभावश्च जातित्वबाधकः कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमात्तस्य कार्यतावच्छेदकत्वेऽनुगतकारणाभावाद्वा भवत्वन्यथा बाधादर्शनस्य तु अनुगतजातित्वाभावनियम एव. एवं धर्मस्याखण्डत्वमपि जातित्वाबाधकम्। एतौ च दोषौ पृथगेव बाधकौ आचार्यपरिगणितदोषानपेक्षत्वेनैव जातित्वाभावसाधकत्वात्।

(व्यो०)तथा गुणेषु प्रतिज्ञाद्वारेणेति। गुणाः परमार्थसन्तः पूर्वोक्तादेव साधनात् तथा गुणव्यवहारे गुणत्वयोग साधनं वक्ष्यति। रूपादयश्च इति दशपदलक्षणामिति। ते तु रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः कण्ठोक्ताः सूत्रकारेणेति वचनवृत्त्याभिहिताः। तांश्च वक्ष्यामः। समासश्चात्र द्वन्द्वः। न्यूनाधिकव्यवच्छेदार्थं सामर्थ्यलब्धाः पुनरुच्यन्ते सङ्ख्यया सप्तदशेति। चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाश्चेति। अदृष्टशब्देन धर्माधर्मयोरभिधानात् सप्त भवन्तीति। अथ संस्कारस्य त्रैविध्यादाधिक्यं स्यात्। न संस्कारजात्यपेक्षयैकत्वात्। न चैवमदृष्टत्वं सामान्यमस्तीति। न चान्येषामपि कामक्रोधादीनां सम्भवादुपसंख्यानं कार्यमिति वाच्यम्। अत्रैवान्तर्भावस्य वक्ष्यमाणत्वात्। इत्येवमुक्तप्रकारेण। चतुर्विंशतिर्गुणा इति न्यूनाधिकव्यवच्छेदार्थम्। तत्प्रतिपादकप्रमाणाभावे सति परस्परं व्यवच्छेद्यव्यवच्छेदकभावापन्नानां वैशेषिकलक्षणयोगित्वादसंकीर्णानां चतुर्विंशतिद्रव्यवदिति। अथ निर्गुणत्वाद् गुणानां संख्यायोगोऽनुपपन्नः। न उपचाराभ्युपगमात्। तथा हि मुख्ये बाधकप्रमाणसद्भावे सत्युपचारः कल्प्यते। स च निमित्तापेक्ष इत्यसाधारणधर्मयोगो निमित्तम्। यत्र हि संख्योपलब्धा तत्र साधारणधर्मोपयोगोऽपीति। तत्स्मरणादध्यारोपः प्रवर्तत इति। व्यापकत्वान्निमित्तसमर्थैकार्थजनकत्वं वा नैकार्थसमवायः तस्य व्यापकत्वात्। तथाहि संख्याविशिष्टज्ञानान्यथानुपपत्त्या विशेषणत्वेऽप्यभावस्य द्रव्य इव गुणादौ चाविशेषोपलब्धेरुपचारः कथम्। संयुक्तं समवेतं वा विशेषणमिति नियमानभ्युपगमाच्च। नैतदेवम्। गुणकर्मसामान्यानां समवेतानामेव विशेषणत्वोपलब्धेः। न च गुणेषु निर्गुणतया संख्यासमवायः सम्भवति। असमवेतानां च गुणकर्मसामान्यानां विशेषणत्वे मिथ्याज्ञानाभावः तद्विशिष्टज्ञानस्योभयत्राविशेषादिति वक्ष्यामः। तस्मादुपचारत एव गुणादिष्वेकादिव्यवहारो व्याख्येयः।

(भा०) उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। गमनग्रहणाद् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि॥

(सू०) कर्माणि कतिविधानीत्यत्रोत्तरयति उत्क्षेपणेत्यादिना। ननु भ्रमणादेरपि कर्मान्तरस्य सत्त्वात् पञ्चैवेति वि-

(सू०)भागो व्याहत इत्यत आह गमनग्रहणादिति। न जात्यन्तराणि न तु गमनावृत्तिजातिमन्तीत्यर्थः।

(से०)एवं च गुणादिकारणतया प्रथमं द्रव्यनिरूपणं तदनु कर्ममात्रजनकतया गुणस्येदानीं सामान्याश्रयतया सामान्यात्पूर्वं कर्मविभागमाह। ननु विभागो न्यूनो भ्रमणादीनामग्रहणादित्यत आह गमनग्रहणादिति। गमनशब्देनैव ते परिगृहीता इत्यर्थः। नन्वेवं गमनभिन्नेषु तेषु गमनशब्दस्य लक्षणा स्यादित्यत आह गमनविशेषा एवेति। तथाच गमनपदशक्तिरेव तेष्विति भावः। एवं च द्वेधाऽत्र योजना—गमनग्रहणाद् भ्रमणादयो गृह्यन्ते इति न भाष्यगतन्यूनतेत्येका। भ्रमणादयो गमनविशेषा एवेति लक्षणेत्यपरा। न चैवं भ्रमणादिपदानामावृत्त्यापत्तिः अन्यथानुपपत्त्या तत्र दोषाभावात्। अन्यथा तु भाष्यमपाख्यानमेव तिष्ठतीत्यत्र द्विर्भाष्यतात्पर्यविदस्सहृदया एव साक्षिण इति दिक्॥

(व्यो०)तथा कर्माणि प्रतिज्ञा करोति। गमनग्रहणाद् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतनमनोन्नमनादयो गमनविशेषा (एव) न जात्यन्तराणीति।

कर्माणि परमार्थसन्ति पूर्वोक्तादेव साधनात्। कर्माणीति व्यवहारे कर्मत्वयोगं साधनमिति वक्ष्यति। उत्क्षेपणादिभेदे च तत्सामान्यमिति। तथोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानीति द्वन्द्वसमासः। न्यूनाधिकव्यवच्छेदार्थं च पञ्चैव कर्माणीत्यवधारणम्। अत्र तु पञ्चलक्षणयोगित्वं सविशेषणं पूर्ववत्साधनम्। अथ भ्रमणादीनामुपलम्भात् अवधारणानुपपत्तिः न गमन एवान्तर्भावादित्याह—गमनग्रहणात् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यग्गमननमनोन्नमनादयो गमनविशेषाः गमनसंगृहीताः न जात्यन्तराणि। अन्ये तु गमनविशेषा एव न भवन्ति भ्रमणादयः। किन्तर्हि? जात्यन्तराणीति मन्यन्ते। एतच्चासद्व्याख्यानमिति वक्ष्यामः कर्मपरीक्षायाम्।

(भा०)सामान्यं द्विविधं परमपरञ्च। तच्चानुवृत्तिप्रत्ययकारणम्। तत्र परं सत्ता महाविषयत्वात्। सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव। द्रव्यत्वाद्यपरमल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद्विशेषाख्यामपि लभते।

(सू०)सामान्यं कतिविधमित्यत्रोत्तरयति सामान्यमिति।

(सू०)द्वैविध्यं दर्शयति परमपरमिति। ननु व्यक्तिभिन्नस्य सामान्यस्यालीकत्वात्तद्विभागोऽनुपपन्न इत्यत आह तच्चेति। अनुवृत्तिप्रत्ययोऽनुगतबुद्धिस्तत्कारणं शक्तिर्यत्र तादृशम्, तथाच व्यक्तिभिन्नानाधर्मिकानुगतबुद्ध्यसम्भवात्तन्निर्वाहकमवश्यं सामान्यमुपेयम्।

ननु लक्षणतः सामान्यरूपेणावगतस्यैव विशेषतो विभागौचित्यात् प्रथमतः सामान्यस्य विभागोऽनुचित इत्यत आह तच्चेति। नानाधर्मिण्येकप्रकारकप्रमाप्रकारीभूतो यो धर्मः स सामान्यमित्यर्थः। प्रकारकत्वञ्च समवायेन ग्राह्यमतोऽभावत्वादेरखण्डत्वेऽपि न तत्रातिव्याप्तिः। अभावत्वादिकमपि सामान्यमेव जातित्वं पुनस्तस्य नास्ति समवेतसामान्यस्यैव तथात्वादित्यपि कश्चित्।

तत्र परापरसामान्ययोर्मध्ये। महेति। महान् सकलसामान्याश्रयो विषय आश्रयो यस्य तत्त्वात् इत्यर्थः। ननु द्रव्यत्वादिरिव सत्तापि सामान्यविशेषात्मतया कथं न व्यवह्रियत इत्यत आह सा चेति। सा सत्ता अनुवृत्तेरनुगतबुद्धेरेव हेतुत्वात् सामान्यमेव सामान्यपदाभिलप्यमानमेव न तु सामान्यविशेषपदाभिलप्यमाना अनाश्रयसामान्यवद् (?) व्यावृत्तिधीजनकसामान्यविशेषत्वादिति सम्प्रदायः।

वस्तुतो घटः सन्नित्यादिप्रतीतेर्वर्तमानत्वादिरूपसत्त्वावगाहित्वेनैवोपपत्तेः सत्तासामान्ये प्रमाणाभाव इत्यत आह सा चेति। अनुवृत्तेरिति। भावी भूतो वर्तमानश्च सर्व एव घटः सन् न त्वसन् इत्याकारकानुगतप्रतीतेर्हेतुत्वान्नियामकत्वात् सामान्यमेव न तु वर्तमानत्वरूपा भाविन्यतीते वा वर्तमानत्वाबाधेन तादृशमतेर्भ्रमत्वापातादिति नव्याः। द्रव्यत्वादीति। सामान्यमित्यनुषज्यते। अल्पेति। अल्पो विषय आश्रयो यस्य तत्त्वात् सामा-

(मू०)न्यवान्निष्ठाभावप्रतियोगिसामान्यवत्त्वादिति यावत् । ननु द्रव्यत्वं जातिविशेष इत्यादिः कथं व्यवहारः सामान्यत्वविशेषत्वयोर्मिथो विरोधादित्यत आह तच्चेति । तत् द्रव्यत्वादि तद्व्यावृत्तः आनाश्रयसामान्यवद्व्यावृत्तत्वमते तत्त्वाजनकत्वात् विशेषाख्यां विशेषसंज्ञां लभते न तु नित्यद्रव्यवृत्त्यन्यविशेषत्वादित्यर्थः ॥

( से० ) इदानीं सामान्यादिषु त्रिषु प्रत्यक्षसिद्धतया प्रथमं सामान्यविभागमाह सामान्यमिति । अत्र विभागस्सामान्यत्वेन रूपेण । तच्च नित्यत्वे सत्यनेकसमवेतत्वम् । नित्यत्वं जलपरमाणुरूपादावपीत्यनेकेति । अनेकसमवेतत्वं संयोगादावपीति नित्यत्वे सतीति । नित्यत्वे सत्यनेकवृत्तित्वं घटत्वात्यन्ताभावेऽपीति समवेतत्वमिति भावः । ननु सामान्ये किं प्रमाणमित्यत आह तच्चानुवृत्तीति । न हि भिन्नासु व्यक्तिष्वेकाकारा मतिरनुगतधर्ममपुरस्कृत्य, देवदत्तयज्ञदत्तादिषु हि भिन्नेषु पाचकत्वाद्यपुरस्कारे देवदत्तो यज्ञदत्त इत्यनेकाकारमतेरेव दर्शनात्, तत्पुरस्कारे तु पाचकः पाचक इत्याद्येकाकारमतिः स्यात्, एवं घटादावप्यनुगतबोधार्थमनुगतधर्मत्वेन जातिस्वीकार इति भावः । ननु लवणघोटकयोः सैन्धवशब्दवाच्यत्वेनेव घटादिशब्दवाच्यत्वेनैवानुगतमतिरस्तु किं जात्येति चेन्न वाच्यतावच्छेदकत्वेन जातेरावश्यकत्वात् अगृहीतशब्दशक्तीनामपि घटादिष्वेकाकारदृष्टिदर्शनाच्च । न च कम्बुग्रीवाद्यवयवत्वेनोपाधिनैवानुगतमतिरस्त्विति वाच्यम् घटारम्भकसंयोगविशेषरूपायाः कम्बुग्रीवाया अननुगमात् तस्य विशेष्यजातेरन्यस्य वक्तुमशक्यत्वात् । ननु घटभिन्नभिन्नत्वादिकमेवानुगतमास्त्विति चेन्न घटभिन्नेत्यत्र घटत्वस्यानुसरणीयत्वात् ज्ञाते हि घटत्वे घटभिन्नत्वज्ञानेऽन्यस्मिंश्च ज्ञाते तद्भिन्नत्वलक्षणघटत्वज्ञानमित्यन्योन्याश्रयात् । न हि तद्व्यक्तिभिन्नभिन्नत्वं घटत्वमननुगमात् । नापि व्यक्तिमात्रभिन्नभिन्नत्वम् असम्भवात् सकलव्यक्तिभेदस्याप्रसिद्धेः । नापि कुतश्चिद् व्यावर्तकं कस्यचिदनुगमकं धर्मान्तरमस्ति यद्वशात् तद्भिन्नत्वं घटत्वं स्यादिति । तत्र परं परमिति व्यवहर्तव्यम् अन्यथा साध्याविशेषापत्तेः । सत्ता सत्तादि अन्यथा पृथिवीत्वाद्यपेक्षया द्रव्यत्वादीनां परत्वानापत्तेरिति काश्चित् ।

(से०) तन्न सा चेत्यग्रिमग्रन्थविरोधात्। उदाहरणपरतयाऽसौ ग्रन्थो-ऽवतारणीय इत्याचार्यः। महाविषयत्वात् द्रव्यत्वादिभ्योऽधिकदेशवृत्तित्वात्। एवञ्च यद्यदपेक्षयाऽधिकदेशवृति तत्तदपेक्षया परमिति व्यवहर्तव्यमिति भावः। ननु स्वरूपसत्त्वेनैव सत् सदिति व्यवहारोऽस्तु किं सत्तयेति चेन्न स्वरूपसत्त्वस्य तत्र तत्स्वरूपत्वेनाननुगमात्। ननु भावत्वमेवास्तु सत्ता सत्तार्थकधातोरेव शब्दनिष्पत्तेस्ताद्विरहादेव चाभावोऽभाव इत्युच्यते अन्यथा सत्ताजातिं पुरस्कृत्य भावशब्दप्रयोगे द्रव्यादीनां त्रयाणामेव भावत्वे सामान्यादीनामभावत्वापत्तिरिति चेन्न अभावाविशेष्यधीविशेष्यकत्वादेर्भावत्वस्य सत्तात्मकत्वे घटः सन्नित्यादिचाक्षुषबोधेऽभानापत्तेः। प्रामाणिकत्वमेव सत्त्वमिति चेन्न अभावेपि सत्त्वापत्तेः। प्रमाणप्रवृत्तेः पूर्वं घटादावसत्त्वापत्तेरिति केचित्। तन्न ईश्वरप्रमामादाय सर्वदा सर्वथा सर्वत्र प्रमाविषयत्वस्य सत्त्वात्। भावत्वं सत्ताजातिरेव सामान्यादीनामभावत्वानापत्तिस्तत्रापि केनचित्सम्बन्धेन सत्तासत्त्वात्। नन्वभावेप्येकार्थवृत्तित्वेन सत्तास्तीत्यभावोऽपि भावः स्यादिति चेन्न व्यवहारानुरुद्धस्य सम्बन्धस्य नियामकत्वात्। अभावे च प्रामाणिकानां भावत्वाव्यवहारात्। एवञ्च द्रव्यादिषु समवायस्सामान्यादिष्वेकार्थसमवायस्सत्ताया भावत्वप्रयोजकः, न च समवाये स बाधितः सत्तासमवाये सति समवायस्य स्वरूपसंम्बन्धात्मकसमवायसत्त्वात्। एवं धातुपाठोऽप्यनुगृहीतो भवति अन्यथा बाधं विना तस्याप्रामाण्यस्वीकारेऽतिप्रसङ्गापत्तिरित्यपि चरतु। न च सम्बन्धभेदेऽपि सुरभि कमलं सुरभिः समीरण इत्येकाकाराप्युक्तय इति वाच्यम् तत् सेति (?)। नन्वनुवृत्तेरेव हेतुत्वात् इत्येवकारेण व्यावृत्तिहेतुत्वं व्यावर्तते सामान्यमेवेत्येतत्तु विशेषणम्, तच्चाव्यावृत्तिधीहेतुत्वमेव एवञ्च। व्यावृत्तिबुद्धेरहेतुरिति वाच्यम् तथा च साध्याविशेष इति चेन्न। अत्रापि व्यवहारस्य साध्यत्वात्। ननु सामान्यादिभ्यो द्रव्यादीन् सत्ता कुतो न व्यावर्तयति। व्यक्तिमात्रव्यङ्ग्यायास्तत्रापि प्रतीतेरिति चेन्न उपपत्तिकव्यतिरेकनिश्चयसत्त्वादिति चेन्न सामान्यवत्प्रतियोगिकव्यावृत्तिबुद्धिजनकत्वस्य विशेषत्वस्य सत्तायामभावात्। अपरमपरमिति व्यवहर्तव्यम् अन्यथा साध्याविशेषात्। अल्पेति। यद्यदपेक्षया न्यूनवृत्ति तत्तदपेक्षया

(से०)ऽपरमित्यर्थः । द्रव्यत्वादिसामान्यवत्प्रतियोगिकव्यावृत्तिधीहेतुत्वाद्विशेषोपीत्याह तच्चेति ।

(व्यो०) एवं सामान्ये प्रतिज्ञां करोति । सामान्यं परमार्थसदिति । पूर्ववत्साधनम् । सामान्यव्यवहारे तु लक्षणं वक्ष्यमाणं साधनमिति भेदं निरूपयति । द्विविधं केन रूपेणेत्याह--परमपरं चेति । अनुवृत्तिप्रत्ययकारणमिति कार्येण सत्तां दर्शयति । तथाहि--यदनुगतज्ञानं द्रव्यगुणकर्मानिमित्तं तदर्थान्तरसम्बन्धात् भवतीति वक्ष्यामस्तत्परीक्षायाम् । तदेतदसाधारणत्वात्सामान्यस्येतरस्मात् भेदकमपि भवति । तथाहि द्रव्यगुणकर्मानिमित्तमबाध्यमानं चानुगतं ज्ञानं न सामान्यं विना भवतीति असाधारणमेव । तत्र परापरभेदं निरूपयन्नाह--सत्ता परं सामान्यमिति । कुतः ? महाविषयत्वात् । तथाहि द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वं सत्तायाः द्रव्यादिविषयव्यापकत्वेन महाविषयत्वात् परत्वमिति । यो हि यद्विषयं व्याप्नोति स तदपेक्षया परः यथाल्पविषयपार्थिवापेक्षया महाविषय इति । सा च सत्तानुवृत्तेरेव कारणमिति सामान्यमेव । यदन्यसामान्यादिभ्यो व्यावर्तते । तथापि सामान्यं वस्त्वनुवृत्तज्ञानस्यैव कारणमिति सामान्यमेव । तथा द्रव्यत्वाद्यपरमिति । द्रव्यत्वमादिर्यस्येत्यादिग्रहणात् गुणत्वकर्मत्वपृथिवीत्वादेर्ग्रहणम् । तच्च सत्तापेक्षया अल्पविषयत्वादपरमिति । तद्धि सामान्यलक्षणयोगित्वेन सामान्यं सदुपचारतोऽत्र विशेषाख्यामपि लभते । न चोपचारो निमित्तं विना वर्तत इत्याह- व्यावृत्तेरपि हेतुत्वादिति । न केवलमनुवृत्तेरेव । किं तर्हि व्यावृत्तज्ञानस्यापि हेतुत्वात् । विशेषणे हि व्यावृत्तज्ञानजनकत्वं दृष्टम् । तच्चेहाप्यस्ति इत्युपचारः प्रवर्तते । मुख्यास्तु विशेषास्वलक्षणयोगिन एव ।

(भा०) नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः ते च खल्वत्यन्तव्यावृत्तिबुद्धिहेतुत्वाद्विशेषा एव ।

(सू० ) विशेषत्वं यदि व्यावर्तकत्वमात्रं तदा सामान्यादावतिप्रसक्तिरतो विशेषत्वमभिदधान एव बहुवचनेन तदाश्रयस्यानेकविधत्वं दर्शयति नित्येति । नित्यं सर्वदा द्रव्यवृत्तयो द्रव्यसमवेता इत्यर्थस्तेन द्रव्यकर्मणोर्घटत्वगुणत्वादेश्च व्युदासः । तावन्मात्रं नित्यगुणद्रव्यत्वाद्यतिप्रसक्तमत उक्तमन्त्या इति । अन्तो विरतिर्नित्यद्रव्यवृत्तिजातिगुणयोर्विच्छेद इति यावत् तत्रवन्तु इत्यर्थस्तेन सर्वदा द्रव्यसमवेतत्वे सति नित्यद्रव्यवृत्तिजातिगुणाभ्यां भिन्नत्वमेव प्रकृते विशेषत्वमिति फलितार्थः । यद्वा अन्तेऽन्ते काले महाप्रलये वर्तमाना अन्त्याः तेन कर्मव्यक्तीनां

(सू०)व्युदासः। तन्मात्रं च घटत्वपटत्वादौ ध्वंसे च गतमत उक्तं नित्यद्रव्यवृत्तय इति। नित्यद्रव्यमात्रसमवेता इति तदर्थः। न चैवं नित्यगुणेषु रसत्वादिजातौ चातिप्रसक्तिः कर्मावृत्तिसामान्यशून्यत्वे सति नित्यद्रव्यसमवेतान्यत्वेनापि विशेषणीयत्वादिति भावः। ननु द्रव्यत्वादिसामान्यानामिवान्त्यविशेषाणामपि न कुतः सामान्यविशेषत्वमत आह ते च खल्विति। अत्यन्तव्यावृत्तिबुद्धिहेतुत्वात् अनुवृत्तिबुद्ध्यजनकत्वे सति व्यावृत्तिबुद्धिजनकत्वात्। विशेषा एव विशेषपदाभिलप्या एव नतु सामान्यपदाभिलप्या अपीत्यर्थः।

(से०) सामान्यान्तात्समवायिनो निरूप्य समवायितया समवायात्पूर्वं विशेषं निरूपयति नित्येति। अत्र विशेषा इति बहुवचनेन विना बाधकमसङ्कुचितेनानन्त्यं विवक्षितम्। अन्त्या इत्यनेन चरमविशेषत्वम् वदतैकमात्रव्यक्तिकतयाऽनुगमकत्वं वारयता सामान्यत्वं प्रतिषिद्धम्। एवञ्च सत्तासामान्यमेव द्रव्यत्वसामान्यं विशेषश्च विशेषा एवेत्युक्तं भवति। ननु विशेषे प्रमाणाभावः, न चैकैकघटादिव्यावर्तकतया तत्सिद्धिराश्रयादिभिरेतेषां व्यावृत्तत्वादत आह नित्यद्रव्यवृत्तय इति। नानित्यद्रव्यव्यावर्तकत्वेन विशेष उच्यते येनाश्रयादिभिरन्यथासिद्धिः स्यात् किन्तु नित्यद्रव्यव्यावर्तकतया नित्यद्रव्यस्याश्रयोस्ति। न च जातिरेकैकमात्रव्यावर्तिकाऽनेकवृत्तित्वात्। न च प्रत्येकवृत्तयो रूपादयस्तथैकपरमाणुरूपस्यापरपरमाणुरूपादव्यावृत्तत्वे अपरपरमाणोः स्वाश्रयाव्यावर्तकत्वात् व्यावृत्तिबोधश्च न स्वाश्रयेणान्योन्याश्रयाव्यावृत्तत्वात्। परमाणो रूपव्यावृत्तधीस्तस्माच्च व्यावृत्तात्परमाणुव्यावृत्तिरिति। न च धर्मान्तरव्यावृत्तेन रूपेण परमाणुव्यावृत्तिरनवस्थानात्। नापि रूपादयः स्वतोव्यावृत्तास्तेषां तथा व्यावृत्तत्वे धर्मिग्राहकस्यान्यस्य वा प्रमाणस्यास्याभावात्। तस्माद्धर्मिग्राहकात् प्रमाणात् स्वतो व्यावृत्तत्वेन सिद्धा विशेषा एव नित्यद्रव्यव्यावर्तकाः तत्र तेऽव्यावृत्ताः कथं व्यावर्तका इति वक्तुं न शक्यतेऽसिद्धिदशायामाश्रयासिद्धेस्सि-

च्छिद्दशायां स्वतो व्यावृत्तत्वेनैव सिद्धत्वात्परमाणुगुणादिषु च विशेषस्वीकारो विशेषव्यावृत्तैस्तैरेव तेषां व्यावृत्तिसंभवादिति भावः।

विशेषलक्षणन्तु—जातिविशेषत्वे सत्येकमात्रसमवेतत्वम् । अत्र रूपादिवारणाय सत्यन्तम्। सामान्यवारणाय मात्रेति। रूपध्वंसादिवारणाय नैकमात्रवृत्तित्वोक्तिः । अन्त्या इत्यनेन सूचितं केवलविशेषत्वं दर्शयति ते चेति। विशेषे ह्यन्त्याविशेषाव्यापकाविशेषत्वम् तच्चैकमात्रवृत्तित्वे उपपद्यते उभयवृत्तिविशेषस्यैकमात्रवृत्तिविशेषाव्यापकत्वात्। न चैकमात्रवृत्तेरनुगमत्वं सम्भवतीति भावः।

अत्यन्तव्यावृत्तिबुद्धिहेतुत्वं व्यावृत्तिबुद्धेरेव हेतुत्वम्। किरणावल्यां फक्किकैषा तथा व्याख्याता। सन्दर्भविरोध आचार्यशैलीशरणम्। आचार्या हि क्वचित् प्रमेयान्तरसञ्चाराय सन्दर्भविरुद्धमप्यभिदधति । भाष्यसन्दर्भे हि सत्तासामान्यमेतद्द्रव्यत्वादिसामान्यं विशेषश्चेति पूर्वमुक्तमेवञ्चाग्रेऽपि विशेषाविशेषा एवेत्यर्थो युक्तः। किरणावल्यान्तु—ननु नित्यद्रव्यव्यावृत्तिबुद्ध्यर्थं विशेषा स्वीक्रियन्ते। सा च सामान्यादिभिरेव भविष्यतीति किं पदार्थान्तभूता एव न(?)सामान्याद्यन्तर्भूतास्तैः प्रत्येकं व्यावृत्तेरशक्यत्वादित्युक्तम्। न चैतत्सन्दर्भमनुसरतीति प्रव्यक्तमेव॥

( व्यो० ) एवं विशेषेषु प्रतिज्ञां करोति। विशेषाः परमार्थसन्त इति पूर्ववत्साधनम्। नित्यद्रव्यवृत्तय इति। तथा बुध्यादयोऽपि नित्यद्रव्येष्वेव वर्त्तन्त इति विपक्षैकदेशवृत्तिव्यवच्छेदार्थं नित्यद्रव्येषु वृत्तिरेवेत्यवधारणम। न चैवं बुध्यादय इति। नित्यद्रव्येष्वेव वृत्तिरेव एषामिति साधारणं वाक्यमेतत्। द्रव्यगुणकर्माणि तु नित्यद्रव्येष्वनित्यद्रव्येषु च वर्तन्त इति सामान्यं चाद्रव्येणीत्युपपन्नमवधारणम्। नित्यद्रव्येष्वेवेत्यन्ययोगव्यवच्छेदेन नित्यद्रव्येषु वर्तमानत्वाद्विशेषाः परस्माद्भिद्यन्त इति । अन्ये तु पदार्थापेक्षया लक्षणं विवक्षितमिति नित्यद्रव्येष्वेव वर्तमानत्वं हेतुरिति ब्रुवते। तच्चायुक्तम्, विपक्षैकदेशवृत्तेरगमकत्वात् । न च पदार्थापेक्षयाप्ययोगव्यवच्छेदं विना विपक्षैकदेशात् बुध्यादेरस्य व्यावृत्तिरिति । नित्यद्रव्यवृत्तय इत्यन्त्यपदस्य विवरणमेतत्। तथा च वक्ष्यति। नित्यद्रव्याण्युत्पत्तिविनाशयोरन्ते व्यवस्थितत्वात् अन्तशब्दवाच्यानि तेषु भवास्तद्वृत्तयोऽन्त्या इति व्याख्यायन्ते। ते च विशेषाः विशेषयन्ति व्यावर्त-

यन्ति स्वाश्रयमाश्रयान्तरादिति। परीक्षार्थमाह ते चात्यन्तं सर्वदा व्यावृत्तिबुद्धेरेव हेतुत्वाद्विशेषा एव न सामान्यमपीति । तथाहि— समानजातिगुणक्रियाधाराः परमाणवो विशेषसम्बन्धिनो व्यावृत्तबुद्धिविषयत्वात् । यो यो व्यावृत्तज्ञानविषयः स स विशेषसम्बद्धो यथा स्थाण्वादि । तथाच व्यावृत्तज्ञानविषयाः परमाणवः तस्माद्विशेषयोगिन इति । व्यावृत्तज्ञानविषयत्वं च घटादिषूपलब्धमिति नित्येष्वपि साध्यते द्रव्यत्वेनैव हेतुना। न च गुणादीनामन्यतरस्यैव परमाणुषु व्यावृत्तज्ञानकारणत्वम् । समानजातिगुणक्रियाधारत्वेन विशेषितत्वात्। न च दृष्टान्ते गुणादिविशेषोपलब्धेरिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापादनेन विलक्षणविशेषासिद्धिरिति वाच्यम् । सर्वानुमानेषु समानत्वादिति । व्यावृत्तज्ञानजनकत्वेन नित्येषु विशेषाणां सद्भाव इति स्थितम् । विस्तरेण तु विशेषपरीक्षायां परीक्षिष्यन्त इत्यलम् ।

**( भा० ) अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः ॥**

( सू० ) समवायस्यैकत्वाद्विभागासंभवेन तस्य लक्षणमेवाह अयुतेति। अयुतसिद्धानामपृथग्भूतानां सर्वदा मिथःसमवेतानामिति यावत् । तादृशानामाधार्याधारभूतानां यः सम्बन्धः स समवायस्तेनात्मत्वात्मनोर्नित्यद्रव्यद्रव्यत्वयोर्नित्यगुणगुणत्वयोर्वा सम्बन्ध इति फलितम् । बहुवचनस्य नानानिरुक्तितात्पर्यकत्वात् । तन्मात्रञ्च कालिकपरम्परादिसम्बन्धेऽतिप्रसक्तमत उक्तमिहेति । इह द्रव्ये द्रव्यमित्याकारप्रत्यये हेतुः सम्बन्धमर्यादया भासमान इत्यर्थः। न तु तादृशप्रत्यये विषयविधया हेतुरित्यर्थो ग्राह्यः कणादनये समवायस्यातीन्द्रियत्वेन तदसम्भवात् ।

( से० ) इदानीं क्रमप्राप्तं समवायमाह अयुतेति । अत्रायुतसिद्धयोः सम्बन्धः समवायोऽयुतसिद्धिश्चोभयोरसम्बद्धयोराविद्यमानता । संयोगस्थले च संयोगोत्पत्तेः पूर्वमुभावसम्बद्धावपि तिष्ठतः समवायस्थले तु नित्यसम्बन्धिनौ नित्यं सम्बद्धावेव। घटरूपादि-

स्थले यद्यपि रूपाद्यनुत्पत्तिदशायां घटोऽसम्बद्धस्तिष्ठति घटनाशे क्षणमात्रं रूपसम्बद्धो न तिष्ठति जात्या तु घटादिरुत्पत्तिक्षण एव संबद्धो भवतीति समवायसम्बन्धिनोर्द्वयोरसम्बद्धयोः क्षणमात्रमपि नावस्थितिः, तथापि कारणाकारणसंयोगात् घटाकाशादिसंयोगो जायते तत्रापि घटस्यापि संयोगकारणत्वात् घटोत्पत्त्यनन्तरमेव तज्जन्म तथाच घटोत्पत्तिक्षणे घटाकाशावसम्बद्धावेव तिष्ठतः,एवञ्च प्रकृतलक्षणं संयोगे नातिप्रसक्तिमेव गच्छति। यत्र तु घटत्वात्यन्ताभावप्रागभावादीनां स्वरूपसम्बन्धे तेषां सर्वदा सम्बद्धत्वान्नित्यसम्बन्ध इति करणेऽपि तत्र जातिधर्मिद्वयात्मकस्य स्वरूपसम्बन्धस्य नित्यत्वात्तद्वारणाय नित्यप्राप्तिः समवाय इति वदति, तत्रापि प्राप्तसंयोगसमवायान्यतररूपतया तदाश्रयस्वरूपसम्बन्धातिरिक्तसम्बन्धसम्बद्धाभिन्नभावत्वं विवक्षितम्। स्वरूपसम्बन्धश्च धर्मिद्वयात्मकसम्बन्धो न तु संयोगसमवायौ विना विशिष्टप्रतीतिजननयोग्यत्वं येनात्माश्रयः स्यादिति भावः। आधार्याधारभूतानामित्यनेन धर्मधर्मिणोरेव समवायो न तु संयोगन्यायेन धर्मधर्मिभावानापन्नयोरपि क्वचिदिति समवायस्वरूपं दर्शितम्। इहेतिप्रत्ययहेतुरित्यनेन इह गवि गोत्वमित्यादयः प्रत्ययाः कार्यतया समवाये प्रमाणतयोपन्यस्ताः।

ननु समवायं विनापि शुक्ताविह रजतमिति प्रत्ययो दृश्यते। न च प्रमारूपेहेतिप्रत्यये समवायो हेतुः, इह कुण्डे बदरमित्यत्र तदभावात्। न च यत्र संयोगो न सम्भवति तत्र समवायो हेतुः, भूतले घटाभाव इत्यत्र तदभावात्। न चेहेतिप्रत्यये सम्बन्धो हेतुः स च द्रव्यस्थले संयोगोऽभावस्थले स्वरूपसम्बन्धो गुणादिस्थले समवाय इति वाच्यम् अत्रापि स्वरूपसम्बन्धसम्भवात्। न च स्वरूपस्याननुगततयाऽनुगतः समवाय एव कल्प्यः, अभावेष्यनुगतवैशिष्ट्याख्यपदार्थान्तरभूतसम्बन्धकल्पनापत्तेः। न च वैशिष्ट्यस्यैकत्वे घटाभाववति पटवति पटाभावव्यवहारापत्तिः पटाभाववैशिष्ट्यस्यापि तत्र सत्त्वादिति वाच्यम्। समवायस्यैकत्वेऽपि रूपाभाववति स्पर्शवति रूपस्य व्यवहारापत्तिः रूपसमवायस्यापि तत्र सत्त्वात्। न च समवायसत्त्वेऽपि रूपनिरूपितः समवायस्तत्र नास्तीति वाच्यम् वैशिष्ट्यसत्त्वेपि पटाभावनिरूपितं वैशिष्ट्यं तत्र नास्तीति वक्तुं शक्यत्वात्। न चाभावाधिकरणयोर्वैशिष्ट्यं सम्बन्धो वैशिष्ट्य-

वतोश्च स्वरूपसम्बन्ध इति प्रथमत एव स्वरूपसम्बन्धोस्त्विति, तु-ल्यत्वात् । न च भूतले घटाभाव इति प्रत्ययो घटतदभावयोरभाव-भूतलयोश्च स्वसम्बन्धं विषयीकरोति सम्बन्धौ चैतौ विलक्षणौ एक-त्राधाराधेयप्रत्ययेऽप्यपरत्र तदप्रत्ययात्तथा च कुत्र स्वरूपसम्बन्धः कु-त्र वैशिष्ट्यमिति विनिगन्तुमशक्यतयोभयत्र वैशिष्ट्यस्वीकारे वै-लक्षण्यानुपपत्त्योभयत्र परस्परविलक्षणस्वरूपसम्बन्धस्वीकार ए-वेति वाच्यम् एकेनापि संयोगेनाकाशसंयुक्ते भूतले घट इति वि-लक्षणप्रत्ययवदिहाप्युपपत्तेः । न च तत्रैकत्राधाराधेयभावस्य सत्त्वेन परत्र वाऽसत्त्वेन संयोगस्य साम्येऽपि वैलक्षण्यमिति वाच्यम् वैशि-ष्ट्येयवैशिष्ट्यात् । न चाधाराधेयभावस्यावश्यकत्वे तेनैवोपप-त्तौ किं वैशिष्ट्यकल्पनया । न चैवं संयोगोच्छेदः तस्य प्रत्यक्षत्वद्र-व्यासमवायिकारणत्वानुरोधाभ्यामावश्यकत्वादिति वाच्यम् एवं हि समवायायाऽपि जलाञ्जलिर्वितीर्येत तत्राप्याधाराधेयभावस्य स-त्त्वात् । न च धर्मत्वसममाधेयत्वं धर्मसम्बन्धित्वञ्चाधारत्वं न च त-त्संबंधिनोपपद्यत इति न समवायानुपयोग इति वाच्यम् वैशिष्ट्या-नुशिष्टावपि अस्य न्यायस्य न्यायत्वात् । न च वैशिष्ट्यन्नाभावप्रतियो-गि पर्यनुयोगापत्तेः, न भावो अभावे भावानङ्गीकारात्, नोभयात्मकं विरोधात्, पूर्वोक्तदोषद्वयसंहतेः सन्निपाताच्च नोभयात्मकं "परस्पर-विरोधे हि न प्रकारान्तरस्थितिरिति" स्थितेः, तस्मान्नात्स्येव वैशि-ष्ट्यमिति वाच्यम् । अखण्डाभावत्ववादिभिर्भावरूपस्याप्यभावत्व-स्याभावे भावस्वीकारात् । न चैवमभावत्वमादाय पदार्थान्तरा-पत्तिः । सामान्यं द्विविधं जातिरूपमुपाधिरूपञ्च । उपाधिर्द्विविधस्स-खण्डोऽखण्डश्चेति नयेन, तन्नये सामान्य एवान्तर्भावात् । ननु विष-यविषयिभावस्य स्वरूपसम्बन्धात्मकत्वे स्वरूपसम्बन्धस्य क्लृप्तत-याऽन्यत्रापि स एवास्त्विति चेन्न तत्रापि वैशिष्ट्यस्वीकारात् सम-वायेऽपि तुल्यत्वात् ।

अत्रास्मत्पितृचरणैरङ्गीकृतः पन्थाः । अस्ति तावत् समवायि-कारणासमवायिकारणनिमित्तकारणानां भेदः अन्यथा कपालकपा-लसंयोगयोर्नाशादिव दण्डनाशादपि घटनाशापत्तेः । न चैषां भेदो विना समवायं समञ्जसः । न च द्रव्यत्वे सति कारणत्वं समवायि-कारणत्वं गुणत्वे सति कारणत्वं चासमवायिकारणत्वम्, दण्डस्य

घटसमवायिकारणतापत्तेः दण्डचक्रसंयोगस्य च तदसमवायिकारणत्वापत्तेः, कर्मणां संयोगविभागवेगासमवायिकारणत्वानापत्तेश्च ।
नाप्याधारीभूतं सत् कारणं समवायिकारणम् तादृशकारणप्रत्यासन्नं च कारणमसमवायिकारणमिति वाच्यम् । कालादेर्जगत्समवायिकारणत्वापत्तेः । नापि स्वरूपसम्बन्धविशेषसम्बद्धं कारणं समवायिकारणम् घटध्वंसस्य तु कपाले स्वरूपसम्बन्धसत्त्वेऽपि न तद्विशेष इति वाच्यम् स्वरूपसम्बन्धविशेषे प्रमाणाभावात् काले घट इति वत् कपाले घट इति प्रतीतेर्जायमानत्वात् तत्र च विशेषास्फुरणात् । तस्माद्यत्समवेतं कार्यमुत्पद्यत इत्याद्येव समवायिकारणादिलक्षणम् । तस्मात् सिद्धः समवाय इति । न च कार्यनाशप्रयोजकनाशप्रतियोगित्वं समवायिकारणत्वम्, असमवायिकारणेऽतिव्याप्तेः । न चासमवायिकारणभिन्नत्वे सति कार्यनाशप्रयोजकनाशप्रतियोगित्वम्, अपेक्षाबुद्धौ द्वित्वनिमित्तकारणलक्षणसिद्धावसमवायिकारणलक्षणसिद्धिः समवायिकारणप्रत्यासन्नमित्यादेरसमवायिकारणलक्षणत्वात्तत्सिद्धौ च समवायिकारणलक्षणसिद्धिरित्यन्योन्याश्रयात् । एवं निमित्तकारणमादायाप्यन्योन्याश्रयात् । उभयकारणभिन्नकारणस्य निमित्तकारणत्वात् । समवायिकारणत्वसिद्धौ तन्नाशत्वेन कारणतासिद्धिस्तत्सिद्धौ च समवायिकारणत्वसिद्धिरित्यन्योन्याश्रयाच्चेति दिक् ।

नन्वभावः किमिति न विभक्तः? सम्भवति हि तत्र विभागः । अभावो द्विविधः संसर्गाभावोऽन्योन्याभावश्च । संसर्गाभावस्त्रिविधः प्रागभावध्वंसात्यन्ताभावभेदात् । ननु प्रागभावध्वंसौ किमिति स्वीक्रियेते भूतले न घटः कपाले न घट इति प्रतीत्योरविशेषात् अत्यन्ताभावेनैवोपपत्तेः । न चात्यन्ताभावस्य त्रैकालिकतया कपाले घटासत्त्वापत्तिः, सामयिकस्य समयज्ञप्तिकस्य वाऽत्यन्ताभावस्यावश्यस्वीकार्यत्वात्तेनैवोपपत्तेः अन्यथा चत्वरे स्थितघटस्यान्यत्र गमने चत्वरे कोऽभावः? न तावत् प्रागभावध्वंसौ तयोः प्रतियोग्यसमानकालीनत्वात्, नापि त्रैकालिकोऽत्यन्ताभावः तस्य प्रतियोगिमत्यवृत्तेरिति सामयिकस्समयज्ञप्तिको वाऽत्यन्ताभाव एव स्वीकर्तव्यः, तथाच प्रकृतेऽपि तथास्त्विति चेन्न । उत्पत्स्यते घटो नष्टो घट इति विलक्षणाभ्यां प्रतीतिभ्यां स्वसत्ताकाले प्रतियोगिसत्ताविरो-

धिविषयकाभ्यां प्रागभावप्रध्वंसयोस्सिद्धेः। अपि च स कश्चिदभावः कपाले घटस्य स्वीकर्तव्यो यो घटजनकः,उत्पन्नस्य घटस्य तदितर-सकलकारणस्य सत्त्वेपि तद्विलम्बादेव पुनरनुत्पत्तेः। स च यद्यत्य-न्ताभावस्तदा तस्य त्रैकालिकतयोत्पन्नोऽपि घटः पुनरुत्पद्येत। न च घटोत्पत्तिदशायां कपाले तस्य सम्बन्धविरहान्नोत्पन्नस्योत्पत्तिरिति वाच्यम्, अधिकरणभेदेनाभावभेदाभावेन तस्यैव भूतलसम्बद्धत-या कपालसमवतस्यैव भूतलसमवेतस्यापि घटस्योत्पत्त्यापत्तेः। न च तदभावसत्त्वेऽपि भूतलस्य समवायिकारणत्वाभावान्न तत्समवे-तो घट इति वाच्यम् विलक्षणप्रतीतेरेव प्रागभावादिसाधकत्वात्। अत्यन्ताभावस्तु समवायिको नाङ्गीकर्तव्यः समयज्ञप्तिकेनैव पूर्वप्रतीते-रुपपत्तेः। न चात्यन्ताभाववति कथं प्रतियोगिसत्ता कथं वा प्रतियो-गिकाले सतोऽत्यन्ताभावस्यानुपलब्धिरिति वाच्यम् घटकालेऽत्य-न्ताभावाधिकरणयोः सम्बन्धविरहात्। न च स्वरूपद्वयसत्त्वे स्व-रूपसम्बन्धात्मकस्य सम्बन्धस्य कथमभाव इति वाच्यम् स्वरूप-स्य सम्बन्धताया विशिष्टबोधात्मकफलकल्प्यत्वेन तदानीं विशिष्ट-बोधाभावेन सतोपि स्वरूपस्य सम्बन्धत्वाभावात्। अन्यथा घटव-द्भूतलचत्वरीयघटाभावयोरपि स्वरूपसम्बन्धापत्तेः। एवञ्च त्रैका-लिकेनैवात्यन्ताभावेनोपपत्तावुत्पत्तिविनाशशाली कश्चिदत्यन्ता-भावस्तुरीयसंसर्गाभावो नास्तीति मतमनादेयम्।

विशिष्टाभावश्च सम्बन्धाभाव इति चिन्तामणिकृतः। वि-शेषणावच्छिन्नप्रतियोगिताको विशेष्याभाव एव विशिष्टाभाव इत्याचार्याः।

तत्र चिन्तामणिकारमते विशिष्टाभावः क्वाचित्प्रागभावो यथा दण्डपुरुषसंयोगानुत्पत्तिदशायां, क्वचित् ध्वंसो यथा संयोगनाशो, क्वचिदत्यन्ताभावो यथा रूपादिनाशे तद्विशिष्टघटाभावः तत्र स-म्बन्धस्य समवायस्यात्यन्ताभावः। तथाऽन्यत्र सतो दण्डविशिष्ट-पुरुषस्यान्यत्राभावोऽत्यन्ताभाव एव तत्संयोगस्यान्यत्रात्यन्ताभावा-त्। न च दण्डपुरुषसंयोगस्य दण्डपुरुषनिष्ठतया तद्ध्वंसस्यापि तद्गतत्वेन कथं भूतले तेन विशिष्टाभावव्यवहार इति वाच्यम् के-नचित्सम्बन्धेन संयोगस्य तत्रापि सत्त्वेन तद्ध्वंसस्यापि तत्र स-त्त्वात्। समवायिन्येव देशे ध्वंसप्रागभावाविव्यस्यापवादमात्रत्वा-

त् अन्यथेदानीं प्रागभावो ध्वंस इति प्रतीत्या कालेपि प्रागभावाद्य-सिद्ध्यापत्तेः। न च तत्र प्रतीतिरेव साधिका भूतले घटो नष्ट इत्यादिप्रतीतेरत्रासत्त्वात्। तस्मान्मणिकृन्मते विशिष्टाभावः सम्बन्ध-प्रागभावादिस्वरूप इति विचारमर्यादया समायाति।

सर्वत्र सम्बन्धात्यन्ताभाव एव विशिष्टाभाव इति केचित्।

तदस्मन्मनसि नायाति आवश्यकेन ध्वंसादिनैवोपपत्तावत्य-न्ताभावकल्पनायां मानाभावात्। विशेषणाभावादिसमकालमेव वि-शिष्टाभावो यद्यस्ति तदा दण्डध्वंसानन्तरं संयोगध्वंसस्य जायमा-नत्वेन भवत्यत्यन्ताभावेनैव विशिष्टाभावव्यवहारः संयोगदशायान्तु तदत्यन्ताभावः कथं स्थास्यति इति विचारमर्हति।

आचार्यमते तु विशिष्टाभावः प्रागभावादिरूपोऽपि भवत्यत्यन्ता-भावरूप एवेति विचार्यते।

यत्र च पुरुषध्वंसे दण्डी पुरुषो नास्तीति व्यवहारस्तत्र पुरुष-ध्वंसेनैव विशिष्टाभावव्यवहार इति केचित्।

तन्न विशेषणावच्छिन्नप्रतियोगिताको हि विशेष्याभावो विशिष्टाभा-वः,न च पुरुषध्वंसस्तथा ध्वंसप्रतियोगितावा विशेषणावच्छेदे प्रमा-णाभावात्। तस्माद्विशेषणवत्त्वेन विशेष्यात्यन्ताभाव एव विशिष्टाभा-वः,अन्योन्याभावस्तु न विशिष्टाभावःअन्यथा दण्डविगमदशायां दण्डि-नि दण्डिभेदापत्तेः। न च दण्डदशायां स एव तद्भिन्न इति समयभेदेन भेदाभेदौ न विरुद्धाविति वाच्यम्। एवं हि मूले वृक्षः कपिसंयोगी नाग्र इति प्रतीतिबलाद्देशभेदेनाप्यन्योन्याभावसत्त्वापत्तेः। न च तत्र संयो-गात्यन्ताभावेनैव तथा व्यवहारोपपत्तिः प्रकृतेपि दण्डाभावेनैव नाय-मधुना दण्डीति व्यवहारोपपत्तेरिति। समयतो देशतो वाऽव्याप्य-वृत्त्यन्योन्याभावस्वीकारे प्रमाणाभावः। भूतलं दण्डिभिन्नमिति प्रती-तेर्विशिष्टान्योन्याभावः कुतो न सिद्ध्यतीति? भावानवबोधात्। य-था च दण्डीत्यत्र विशेषणाभावदशायां विशिष्टात्यन्ताभावस्तिष्ठति तथाऽदण्डीत्यत्र विशेषणाभावदशायां दण्डिभेदो नास्तीत्यभि-प्रायात्। दण्डविशिष्टपुरुषादिभेदः पुरुषेष्वपि नास्तीत्यभिप्रायः। तस्मादन्योन्याभावो देशमादायेव कालमादायापि नाव्याप्यवृत्ति-रित्यभिप्रायेणास्माकं तथा लिखनं न विरुद्धमिति ध्येयम्।

क्वचिद्विशेषणाभावः क्वचिद्विशेष्याभावः क्वचिदुभयाभावो विशि-

ष्टाभाव इति मणिकारोक्तमते तस्यैव दाहकारणतया मण्यादौ कार-
णीभूताभावाप्रतियोगिनि प्रतिबन्धकत्वव्यवहारो भाक्तः स्यात् । पर-
म्परासम्बन्धेन करादिसम्बद्धस्य च सम्बन्धस्य प्रतिबन्धकत्वं स्यात्
दण्डी पुरुषो नास्तीत्यादौ दण्डपुरुषसम्बन्धो नास्तीत्यर्थकल्पना-
यां लक्षणा च स्यात् ।

विशेषणावच्छिन्नप्रतियोगिताको विशेष्याभावो विशिष्टाभा-
व इत्याचार्यमतेऽपि विशेष्यध्वंसस्य तत्प्रागभावस्य वा यद्विशे-
षणावच्छिन्नप्रतियोगिताकत्वमङ्गीक्रियते तत्किमर्थमिति न विद्मः ।
अन्यत्रेव विशेष्यतावच्छेदकस्यैव प्रतियोगितावच्छेदकत्वसम्भवा-
त् । न च विशेष्यकालीनतद्ध्वंसप्रागभावयोस्तथात्वम्, तयोः प्र-
तियोगिसमानकालीनयोरनङ्गीकारात् । अत्यन्ताभावस्थलेऽपि य-
द्विशेषणस्य प्रतियोगितावच्छेदकत्वं तत्कुत्र ? यदि विशेष्याभा-
वस्थले तदा विशेष्यतावच्छेदकस्यैव प्रतियोगितावच्छेदकत्वस-
म्भवेन किं विशेषणस्य तदवच्छेदकत्वस्वीकारेण । अथ विशेष्य-
सत्ताकालसाधारणविशिष्टाभावव्यवहारप्रापितविशिष्टाभावलाभाय
विशेषणावच्छिन्नप्रतियोगिताको विशेष्याभावः स्वीक्रियते तस्यैव
विशिष्टाभावसत्त्वाच्च प्रतियोग्यभावयोर्विरोधः प्रतियोगितावच्छेद-
कावच्छिन्नप्रतियोग्यभावयोर्विरोधादिति । एवं हि प्रतियोगिकाले
प्रतियोगिन्यविद्यमानस्य विशेषणस्य प्रतियोगितावच्छेदकत्वे व्य-
धिकरणधर्मावच्छिन्नप्रतियोगिकात्यन्ताभावस्वीकार एव पर्यवसा-
नं स्यात् । तस्मात्प्राचामेव मतमास्तां तत् तर्कवारिधीनां न चेत-
श्चमत्काराय । न चाननुगमः, विशेषणविशेष्यसम्बन्धप्रतियोगि-
ताकाभावत्वेनानुगमादिति ।

अत्रोच्यते—विशेषणावच्छिन्नप्रतियोगिताक एव विशेष्याभावो
विशिष्टाभावः । दण्डी उत्पत्स्यते दण्डी नष्ट इत्यादिप्रतीतिबलात्प्रा-
गभावादिस्थलेऽपि विशेषणस्यैव प्रतियोगितावच्छेदकत्वात् । प्रती-
तिपर्याप्त्यैवात्यन्ताभावेऽपि तथात्वात् । न च व्यधिकरणधर्मावच्छि-
न्नाभावस्वीकारः प्रकृतविशेष्यस्य तदसतो विशेषणाभावास्वीकारा-
त् । न चैवमुत्तेजकाभावाभावे मणिसत्त्वे दाहो न स्यात्प्रतिबन्धकस्य
मणेर्विद्यमानत्वात् इति वाच्यम् उत्तेजकसमानकालीनस्य मणेः
प्रतिबन्धकत्वाभावेनोत्तेजकाभावशालिनां मणितृणानामप्रतिबन्ध-

कानामभावसत्त्वेनानुपपत्तेरभावात्। एकस्य दण्डस्य दण्डयादण्ड्यदशायां जनकत्वाजनकत्ववदेकस्यैव मणेरुत्तेजकाभावतद्भावदशायां प्रतिबन्धकत्वाप्रतिबन्धकत्वसंभवात् । एवञ्च यथा दण्डसत्त्वेपि दण्ड्यभावदशायां न कार्यं तथा मणिसत्त्वेऽप्युत्तेजकाभावाभावदशायां न प्रतिबन्धः । एवञ्च विशेष्यसत्तास्थले न विशेष्यतावच्छेदकेन रूपेणाभावो वक्तुं शक्यत इति विशेषणावच्छिन्नप्रतियोगिताक एव विशेष्याभावो विशिष्टाभाव इति सिद्धम्। ननूत्तेजकाभावदशायां यो मणिः प्रतिबन्धक आसीदुत्तेजकदशायां तस्य कोभाव इति चेत् दण्डयदशायां यो दण्ड आसीददण्ड्यदशायां तस्य को भाव इत्यनेन समानयोगक्षेमत्वात् । नन्वत्र दण्डसत्त्वेप्यदण्ड्येनायोग्यत्वमाधीयत इति, प्रकृतेऽपि मणिसत्त्वेऽप्युत्तेजकाभावाभावेन प्रतिबन्धकायोग्यत्वं निर्वाह्यत इति सामान्यात् । एवं चास्य सतोऽप्युत्तेजकाभावाभावेनावच्छेदकाभावेनाप्रतिबन्धकत्वेन प्रतिबन्धकानां चान्यत्र सतामभावेन युक्त एव दाहः। एवञ्च प्रकृतविशेष्यत्वेऽपि विशेषणवत्त्वेन तस्याप्यभावस्याचार्यपर्यवसाननिर्वचनभ्रान्ताः । अत एव कुसुमाञ्जलावाचार्यचरणाः—न हि दण्डिनि सत्यदण्डानामन्येषां नाभावः किन्तु दण्डाभावस्यैव केवलस्येति युक्तमिति, अन्यथान्येषामिति न स्यात्। अत एव स्यादप्युक्तविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत इति पठन्ति प्रामाणिकाः । अन्यथा तत्र विशेष्यस्याप्यभावे तदुपन्यासः स्यादिति। एवञ्च यत्र विशेषणवद्विशेष्यान्तरं प्रसिद्धं तत्र विशेषणावच्छिन्नप्रतियोगिताको विशेष्याभावोऽपि, अन्यथा तु विशेषणाभाव एव । यथैतद्दण्डनाशे एतद्दण्डो नास्तीत्यादाविति तार्किकाणामर्वाचाम् । यस्तु प्राचां मतेऽनुगमः प्रोक्तः स प्रतिबन्धकाभाव इति प्रतिबन्धकेऽपि स्यात् । एवञ्च प्रतिबन्धकस्थले प्रकृतविशेषणविशेष्यसम्बन्धप्रतियोगित्वेनानुगम एकाभावेपि एकसत्त्वे कार्यन्न स्यादिति दिक् ॥

अत्र केचित् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकमभावं मन्यन्ते। तेषामयमाशयः । अस्ति तावत्पटवति भूतले घटत्वेन पटो नास्तीति—एवमाकारिका प्रतीतिः। तस्याः पटेन घटत्वाभावो विषयः पटस्य प्रतियोगितया प्रतीतेः अधिकरणत्वेनाप्रतीतेश्च । एवञ्च

पटप्रतियोगिकाधिकरणत्वाभावस्तत्र प्रतीयते तत्र च पटत्वन्न प्रति-योगितावच्छेदकम्-अभाववति प्रतियोगितावच्छेदकावच्छिन्नत्वा-संभवात्। एवञ्च घटत्वं प्रतियोगितावच्छेदकम्। तच्च प्रतियोगिता-व्यधिकरणमेव प्रतियोगिताधिकरणे पटेऽसत्त्वात्। न चावच्छेद्या-समानाधिकरणस्य कथमवच्छेद्यान्यूनानतिरिक्तवृत्तित्वमवच्छेदक-त्वमिति वाच्यम्। अवच्छेदकत्वस्य स्वरूपसम्बन्धविशेषरूप-त्वात्। कथमन्यथा विषयवृत्तिकृतिसाध्यतादिज्ञानं प्रवृत्तिकार-णतावच्छेदकं स्यात्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञान-मभावज्ञाननिदानम, अन्यथा प्रतियोगिनिर्विकल्पकादपि घटाभाव-मत्यापत्तेः तथाच यदा पटं घटत्वेन प्रत्येति तदा प्रतियोगितावच्छे-दकप्रकारकप्रतियोगिज्ञानसत्त्वेऽपि नाभावज्ञानमनुपलब्धेरेवाभावा-त्। यदा च पटं घटत्वाभावमवैति तदा प्रतियोगितावच्छेदकप्रका-रकं ज्ञानमेव नास्ति इति कथं तथा प्रथापथमपि प्रथयति। एवञ्च पटे घटत्वाप्रतीतिदशायां जायमानेषा मनीषा पटे घटत्वमाविदयतीति निरुक्तेः पूर्वमनुपपत्तिं न स्पृशत्यपि घटत्वानुपलब्धिसत्त्वाद्धटत्वज्ञा-नसत्त्वाच्चेति। तादृशानाहार्यज्ञानत्वेन नाभावज्ञानकारणता गौरवात्। किन्तु तादृशज्ञानत्वेन। संभवति च पटे घटत्वाभावं जानतोपि तज्ज्ञानमाहार्यम्। एवञ्च प्रतियोगितावच्छेदकप्रकारकप्रतियोगित्व-ज्ञानेऽनाहार्यत्वाभाव एवानुपलम्भशब्दार्थः। स च प्रकृते सम्भव-त्येव घटत्ववत्तया पटप्रतीतेः प्रतियोगितावच्छेदकतायामाहार्यत्वा-त्। न च प्रतियोग्यारोपोऽभावप्रमाकारणम्। न च प्रकृते प्रतियोगि-नः पटस्यारोपः सम्भवतीति कथमभावप्रमेति वाच्यम् प्रतियोगिता-वच्छेदकांशे आरोपसंभवात्। यत्तु विशिष्टाभावेनैव प्रकृतप्रत्ययो-पपत्तौ किमिति विजातीयाभावस्वीकार इति, तन्न, विशिष्टस्य प्र-तियोगिनोऽप्रसिद्ध्या तदभावासंभवात्। तस्मादस्ति व्यधिकरणध-र्मावच्छिन्नप्रतियोगिताकोऽभाव इति॥

अत्रोच्यते। प्रतियोग्यभावयोर्विरोधात्कथं प्रतियोगिमति तद-भावः। न च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यभावयोर्विरोधः गौरवात्। अपि च ईदृश्यभावे प्रतियोगिनि प्रकृतावच्छेदकाभावस्या-वश्यकत्वात् उपजीव्येन तेनैवोपपत्तौ किमित्यभावान्तरकल्पनम्।

किञ्च प्रतियोगितयाऽसंबद्धः कथं प्रतियोगितावच्छेदकः । ज्ञानन्तु कृतिसाध्यत्वादिविषयतया सम्बद्धमेव। तस्मान्नास्ति तादृशोऽभाव इति संक्षेपः ।

नन्वस्ति व्यासज्यवृत्तिप्रतियोगिताकोऽभावः, कथमन्यथा घटवति भूतले घटपटौ न स्त इति प्रथिता प्रथेति चेन्न, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावेनैवोपपत्तौ प्रतियोगितायाः व्यासज्यवृत्तित्वे मानाभावात् । प्रतियोगितात्वेनानुगतीकृतानामप्रतियोगितानां व्यासज्यवृत्तिना धर्मेणावच्छेदसम्भवात् इति पक्षधरमिश्राः। उपजीव्येन पटाभावेनैवोपपत्तौ सोऽपि नास्तीति वस्तुगतिः। लाघवेन प्रतियोग्यभावयोर्विरोधात्। एवञ्च घटवति भूतले घटपटौ न स्त इत्यस्य घटवति पटो नास्तीत्यर्थ इति संक्षेपः ।

सामान्याभावस्तु सामान्यावच्छिन्नप्रतियोगिताको विशेषावच्छिन्नप्रतियोगिताकाद्भिन्नः स्वीकर्तव्य एव । सम्बन्धितावच्छेदकभेदेन ससम्बन्धिकपदार्थभेदस्यौत्सर्गिकत्वात्। संयोगादौ तु द्विष्ठत्वानुरोधेन सम्बन्धिद्वयगतयोस्सम्बन्धितावच्छेदकयोर्भेदास्वीकार इति। अयं च सामान्याभाव एवेति संक्षेपः ।

प्रागभावोऽपि सादिर्ध्वंसोऽपि सान्त इति मतन्तु अनादेयमेव । प्रागभावात् पूर्वं ध्वंसादनन्तरं च प्रतियोग्यापत्तेरिति संक्षेपः ।

आरोप्यसम्बन्धभेदेनाप्यभावभेदः । कथमन्यथा संयोगेन घटवति भूतले समवायेन घटो नास्तीत्येवमाकारिका प्रतीतिः । घटसमवायस्यैव तत्राभावोऽनुभूयत इत्येके । एवञ्चैवंविधविचारसोपानपरम्परोहापोहचतुरोऽभावः किमिति न विभक्त इति चेन्न, अभावस्यैव तद्विभागस्याप्यभ्युपगमसिद्धान्तत्वात् ।

(१)नन्वस्ति भेदः पदार्थान्तरम् यत एकस्मादपरत्र भिन्नप्रतीतिः। न चासावभावो भावेऽपि प्रत्ययात्, अत एव न भावोऽपि षडात्मकस्तेषामभावे वृत्त्यनङ्गीकारात् इति चेन्न क्लृप्तान्तर्गतस्य चतुर्विधस्य भेदस्याङ्गीकारात् । अन्योन्याभाववैधर्म्यपृथक्त्वस्वरूपात्मकानां चतुर्णां भेदानां क्लृप्त एवान्तर्भावात् । अन्योन्याभावस्याभावान्तर्गतत्वात् । वैधर्म्यस्य गुणादिरूपत्वात् । पृथक्त्वस्य गुणेऽन्तर्भावात् । स्वरूपभेदस्य च तद्धर्म्यात्मकत्वात् । तत्रान्योन्याभावो भावप्रतियोगिको

भावनिष्ठश्च। वैधर्म्यस्वरूपभेदौ भावाभावप्रतियोगिकौ तन्निष्ठौ च सामान्यादिष्वपि लक्षणवैधर्म्यस्वीकारात्। पृथक्त्वं द्रव्यप्रतियोगिकमेव द्रव्यनिष्ठमेव। एवं च न भेदः पदार्थान्तरमिति सिद्धम्॥

(२)नन्वस्ति शक्तिः पदार्थान्तरं, त्रिविधा च। तथाहि एकपदज्ञानं हि सम्बन्धिज्ञानतया पदार्थस्मारकम्। न च पदपदार्थयोस्संयोगसमवायौ पदस्याद्रव्यत्वात् घटादिपदार्थागुणत्वाच्च। नापि स्वरूपसम्बन्धः तेनैवान्यथासिद्धौ संयोगसमवाययोरपि विलयापत्तेः। तस्मादस्ति पदशक्तिः पदार्थान्तरमिति। द्वितीया च सहजशक्तिः—यदनुगृहीतं वह्न्यादि दाहादिशक्तमिति व्यवह्रियते, जनयति च दाहादि। मण्यादि च तद्विघटकतया प्रतिबन्धकमित्युच्यते—कार्यानुकूलकिञ्चिद्विघटकस्यैव प्रतिबन्धकत्वात्। उष्णस्पर्शादीनाञ्चाविघटनात् घटनीयत्वेनापि शक्तेरेव स्वीकारात्। तस्मादस्ति सहजशक्तिः। तृतीया त्वाधेयशक्तिः या—व्रीह्यादौ प्रोक्षणादिभिराधीयते, अन्यथा चिरविनष्टानां प्रोक्षणादीनां कालान्तरीयावघातादिकारणत्वन्न स्यात्। चिरविनष्टस्य निर्व्यापारस्यापि कारणत्वे धर्माधर्मयोरपि कल्पनं न स्यात्। न च प्रोक्षणध्वंस एव व्यापारः, भावाभावयोरेकत्राजनकत्वात्। प्रत्युताभावजनकत्वे भावस्य प्रतिबन्धकत्वात्। कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकत्वात्, अन्यथा यागादावपि तथात्वापत्तेः। तस्मादस्त्याधेयशक्तिः, यामाधाय प्रोक्षणादयोऽग्रिमकालान्तरभाविने फलाय कल्पन्ते इति। एवञ्च पदार्थान्तरभूतायाः शक्तेरविभजनान्न्यूनो विभाग इति।

अत्रोच्यते—अस्माच्छब्दादयमर्थो बोद्धव्य इत्येवमाकारकस्य भगवतो भुवनधुरन्धरस्य श्रीमतो जानकीजानेर्ज्ञानस्येच्छाया वा पदशक्तित्वात्। वस्तुतस्तु तथाज्ञानमेव पदशक्तिः—तथाज्ञानं विना तथेच्छाया अभावेनोपजीव्यत्वात्। तत्र भगवतस्तयोर्नित्यत्वे च कथमुपजीव्योपजीवकभावः विषयतायामिच्छाया ज्ञानसापेक्षत्वात्। तस्मात् क्लृप्तेनैवोपपत्तौ न पदार्थान्तरकल्पनमिति। सहजशक्तिरपि न शक्त इति व्यवहारानुरोधेन—सहकारिणः कारणताया वा शक्तिपदार्थत्वेन तत्सम्बन्धेनैव शक्तत्वव्यवहारात्। ता-

दृशस्यैव च कार्यकारणत्वात्। न च विजातीयत्वेन शक्तिसिद्धिः, दृष्टसत्त्वेऽदृष्टविलम्बेन फलविलम्बाभावात्, दृष्टस्य चोष्णस्पर्शादेः सत्त्वान्मण्यादिना शक्तिघटकेनैव तद्विलम्ब इति वाच्यम् मण्याद्यभावानामपि कारणत्वेन तद्विलम्बेनैव फलविलम्बात्। प्रतिबन्धकास्तु मण्यादिप्रयोक्तारः पुरुषा एव—तेषां कार्ये प्रतिकूलमण्यादिसमवधानरूपप्रतिबन्धकारित्वात्। न चाभावो न कारणम, अनन्यथासिद्धनियतपूर्वसत्त्वस्वरूपकारणत्वसत्त्वात्। न ह्यभावत्वमन्यथासिद्धिर्नियतपूर्वसत्त्वाभावो वा। तत्र च भावत्वे सति न तत्कारणत्वम् गौरवात्, अन्योन्याश्रयाच्च–सिद्धे ह्यभावस्याकारणत्वे कारणतालक्षणे भावत्वं विशेषणम् ततश्च तदकारणत्वसिद्धिरिति। न चाभावत्वं कारणतालक्षणविरोधि, अभावत्वेनावधारितेऽपि अनन्यथासिद्धत्वादीनां प्रमीयमाणत्वात्। न च सत्ताजातिमत्त्वे सति तत्त्वं कारणत्वम्, गौरवात् सामान्यस्यानुगतबुद्ध्यकारणत्वापत्तेश्च। अपि च सत्ताजातिमतोऽपि पूर्वविद्यमानतया अवश्यापेक्षणीयत्वेन तदेव कारणत्वप्रविष्टमिति। आधेयशक्तिरपि नास्ति–प्रोक्षितसमस्तव्रीहिष्वेकशक्तिस्वीकारे एकव्रीहिनाशे शक्तिनाशः शक्तिनाशे शिष्टव्रीहिकृतयागस्यानङ्गत्वापत्तिः। न च यावत्समवायिकारणनाशत्वेन नाशकता, गौरवात्। प्रतिव्रीहिभिन्नभिन्नशक्तिस्वीकारे तु गौरवम्। तस्मात्प्रोक्षणादिभिरदृष्टं जन्यते, अस्पृश्यस्पर्शनादिभिश्च तदेव नाश्यत, इति न शक्तिलक्षणं पदार्थान्तरमिति सिद्धम्।

(२)ननु कांस्यादावमेध्यादिसंयोगेनाशुद्धिः भस्मादिभिः संयोगेन तु शुद्धिरिति सकलजनसिद्धम्। न च तत्र तत्संयोगावेव शुद्ध्यशुद्धी भस्मादिसंयोगापगमेऽपि शुद्धादिव्यवहारात्। अत एव न संयोगोत्पत्तिः शुद्ध्यादिः, तदपगमेऽपि व्यवहारात्। नापि संयोगादिध्वंसः, संयोगादिकाले व्यवहारापत्तेः ध्वंसस्यानन्ततया सर्वदा व्यवहारापत्तेश्च। तस्माच्छुद्धिरशुद्धिश्च पदार्थान्तरमिति चेन्न,

शुद्ध्यशुद्ध्यभिमानिदेवतासंनिधेरेव भस्मादिसंयोगेन जननात्। सन्निधानन्तु यद्यपि कायिकं न सम्भवति–कांस्यादीनामनन्तानां परस्परं व्यवहितदेशसत्त्वेनानन्तकायकल्पनापत्तेः, तावद्दूरवर्तिमहापरिमाणैककायकल्पनेपि गौरवापत्तेः, किन्तु बौद्धम्।

यद्वा शुद्धिसाधकस्य भस्मसंयोगादेः श्रुतिसिद्धतया तज्जन्यो धर्मविशेष एव शुद्धिः । चाण्डालादिसंयोगजन्यस्तन्नाशश्चाशुद्धिरिति । अत एवाधेयशक्तिविशेषः शुद्धिस्तदभावश्चाशुद्धिरिति भट्टभाषितम्, संस्कारतदभावावेव शुद्ध्यशुद्धी इति प्राभाकरभाषितञ्च निरस्तम् । क्लृप्तेनादृष्टविशेषेणैवोपपत्तौ अर्थान्तरप्रार्थनावैयर्थ्यात् ।

शुद्ध्यभिमानिदेवतासान्निधिः शुद्धिस्तदभावश्चाशुद्धिरिति वा । पुत्रजन्मादावशौचशौचयोरदृष्ट एवान्तर्भावः—कर्मानधिकारप्रयोजकस्यादृष्टस्याशौचत्वात् । तदधिकारप्रयोजकस्य शौचत्वात् । तत्र प्रथमं पुत्रजन्मादिजन्यम । द्वितीयमशौचाद्यपगमकालजन्यम् । तथा चैतद्द्वितयमपि भावरूपमेव । न त्वेकस्य भावत्वमन्यस्याभावत्वमिति विनिगमनाविरहादित्येके । तत्र जन्मादिना कर्मप्रतिबन्धकस्य कस्यचिदावश्यकत्वे तदभावस्यैव शौचशब्दार्थत्वात् । कांस्यादिस्थले त्वदृष्टं संस्कर्तृनिष्ठं तदुपभोक्तृनिष्ठं वा भस्मादिसंयोगेन जायते उच्छिष्टादिसम्बन्धेन तु तदेवापनोद्यते । व्यधिकरणस्याप्यदृष्टजनकत्वं तन्नाशकत्वं च । कर्मनाशापारगमनस्य शरीरगतस्यात्मनिष्ठधर्मनाशकत्ववत् ।

केचित्तु संस्कारत्वाभिमतं यद्द्रव्यं भस्मादि तस्य यः सम्बन्धः तत्समानकालीनो य उपहर्तृचाण्डालादिसम्बन्धप्रतियोगिको यावाननादिः संसर्गाभावः प्रागभावादिस्तत्सहितः संस्कारकसंस्करणीयसम्बन्धोत्पत्तिध्वंसः शुद्धिः तदभाव एवाशुद्धिः । एतस्य विशिष्टस्याभावस्तु न विशेष्याभावात्–उत्पत्तिध्वंसस्य विशेष्यस्यानन्ततया ध्वंसासम्भवात्, किन्तु विशेषणादिसंसर्गाभावात् प्रतियोगिन उत्पत्त्या प्रागभावनाशसम्भवादित्याहुः ।

तन्न, भस्मादिसंयोगेन संस्कारानङ्गीकारेण भस्मादीनां संस्कारजनकत्वाभावेन तद्धर्मलक्षणस्य दुष्टत्वात् । संस्काराङ्गीकारे तु तस्यैव शुद्धित्वोपपत्तावेतल्लक्षणालम्बनवैफल्यात् । अनादिपदवैयर्थ्यं च–यावत्संसर्गाभावसाहित्यविवक्षायामपि दोषाभावात् । तथाहि ध्वंससाधारणसंसर्गाभावविवक्षायामपि प्रागभावनाशे विशिष्टाभावोपपत्तेः,

ध्वंसस्य ध्वंसासम्भवेन प्रागभावसत्तायां ध्वंसध्वंसमादायातिप्रसंगासम्भवात्।

वस्तुतस्तु संसर्गपदमपि व्यर्थम् अन्योन्याभावसाधारण्येऽप्यदुष्टत्वात्–अत्रापि ध्वंसन्यायेनातिप्रसङ्गाभावात्। वस्तुतस्तु सहजशुद्धिसाधारणमिदं लक्षणं न स्यात्। तत्र संस्कारकसंस्करणीयसम्बन्धोत्पत्तिध्वंसाभावात्। एवञ्च वनादानीतेन कुशादिना क्रियमाणं कर्माशुद्धिमत्कुशादिकृतमेव स्यात्। अत एव पदार्थान्तरापनिपातभिया संस्कारगर्भं माऽस्तु लक्षणं भस्मादिगर्भमेवास्तु इत्यपास्तम्। भस्मादीत्यत्र भस्मादेरेकस्याभावेनाननुगमाच्च। तस्मादशुद्धिप्रयोजकचाण्डालादिसम्बन्धपुत्रजन्मादिज्ञाननिर्वर्त्याऽशुद्ध्यधिष्ठातृदेवतासन्निधिरूपैवाशुद्धिस्तदभावश्च शुद्धिः। स च वनादानीते कुशादौ प्रागभावात्यन्ताभावान्यतररूपः उपहेतुभस्मादिसंयोगजन्यो नाशरूपः। एवं पुत्रजन्मादावपि पूर्वम्प्रागभाग एव अग्रे दशाहादग्रिमकालजन्यो ध्वंस एव। न चाशुद्धेर्नञा सम्बन्धेनाभावत्वम् शुद्धेरेव शुद्ध्यधिष्ठातृदेवतासम्बन्धरूपतया भावत्वमस्त्विति वाच्यम् सहजशुद्धिस्थले शुद्धेः कारणान्तरसुसाध्यतयोपघातस्थले भस्मादिसम्बन्धसाध्यतयाऽननुगमापत्तेः। न च तत्रासम्बद्धस्य कथं भावत्वमिति वाच्यम् प्रलयविनाशावसानान्धकारवदुपपत्तेः। तस्माददृष्टविशेषो वा देवतासन्निधानं वाऽशुद्धिः यावत्तत्संसर्गाभावः शुद्धिः। एवञ्चैकाशुद्धौ नष्टायामप्यपराशुद्ध्युत्पादे न शुद्धिः यावदशुद्ध्यभावाभावात्। न वा शुद्ध्यधिष्ठातृदेवतायां प्रमाणाभावः--अधर्माधिष्ठातृदेवतावदुपपत्तेः तस्याश्चिरन्तनैरप्युररीकारात्। तस्माच्च शुद्ध्यशुद्ध्योः पदार्थान्तरत्वमित्यलमतिप्रसङ्गेन॥

(४)नन्वस्ति भावना पदार्थान्तरमेव–लिङादयः, अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः। लिङोऽभिधा सैव च शब्दभावनाभाव्या। तस्याः पुरुषस्य प्रवृत्तिः सम्बन्धबोधः करणं, तदीयप्ररोचना चाङ्गतयोपयुज्यते। लिङोऽभिधा लिङ्विशिष्टा लिङ्जन्यलिङ्वाच्या च। लिङ्पदेन चात्र विधिग्रहणम्। लिङ्लोट्तव्या विषयः। कृत्याः पञ्च समाख्याताः—भावे कर्मणि तव्यानीयौ क्यप्रत्ययाः। एतावद्विधेराधाराधेयभावजन्यजनकभाववाच्यवाचक·

भावात्मकसम्बन्धत्रयेण याभिधा शब्दः सैव च भावना शाब्दी-भावना शब्दनिष्ठत्वात्। सा च त्र्यंशा—किं केन कथमित्यंशाः। केनांशः कारणांशः। तत्र शब्दभावनाभाव्या प्रवृत्तिः। विध्यभिधयोर्वाच्यवाचकरूपसम्बन्धज्ञानं कारणम्। वायुर्वै क्षेपिष्ठा देवतेत्यादिस्तावकं वाक्यं प्ररोचना सैवाङ्गमिति शाब्दीभावनैका सर्वाख्यातवाच्या। अर्थात्मभावना द्वितीया सा शब्दातिरिक्तात्मरूपार्थनिष्ठत्वादार्थी। अस्या भाव्यांशं स्वर्गादि फलम्। कारणांशो दर्शादि प्रधानम्। अङ्गांशः प्रयाजाद्यङ्गम्। एवञ्च द्विविधभावनास्वरूपं पदार्थान्तरं किमिति नेति चेन्न।

शाब्दभावनायां मानाभावात्। अर्थभावनायाः प्रवृत्त्यात्मकत्वात्। नास्ति शाब्दभावनायां मानम्। तथाहि व्यापारातिरिक्तस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारा। यथा व्यापारातिरिक्तस्य दण्डस्य चक्रनिष्ठभ्रमिलक्षणव्यापारजनकत्वं स्वनिष्ठसंयोगलक्षणव्यापारद्वारा तथा व्यापारातिरिक्तशब्दस्य परात्मनिष्ठप्रवृत्तिलक्षणव्यापारजनकत्वं स्वनिष्ठाभिधाव्यापारापेक्षया। स्वनिष्ठव्यापारे च व्यापारान्तरापेक्षायामनवस्थापत्तेरिति व्याप्तौ स्वनिष्ठेतिविशेषणव्यर्थत्वम्। तथा चेष्टसाधनतादिज्ञानादिनैव प्रवृत्तिजनकत्वमिति काऽनुपपत्तिः। न चेष्टसाधनताज्ञानेपि व्यापारापेक्षा यावत्परनिष्ठव्यापारे व्यापारापेक्षायाम्प्रमाणाभावात्। तस्मान्न भावनाख्यं पदार्थान्तरं भावनीयमिति।

(५)नन्वस्तु स्वत्वं वस्त्वन्तरम्। तथाहि न तावद्विनियोगविषयत्वं तत्। विनियोगविरहदशायां ब्राह्मणस्वत्वापत्तेः। विनियोगविषयात्यन्ताभावानधिकरणत्वरूपायास्तद्योग्यतायाः सत्त्वात् योग्यतावच्छेदकस्यैव पदार्थान्तरत्वापत्तेश्च। ततस्तस्करस्यापि स्वत्वापत्तेश्च। तस्यापि चौर्यादिहृते विनियोगदर्शनात्। तथेष्टविनियोगस्यापि तस्कराणां दर्शनात् न यथेष्टविनियोगगर्भमपि लक्षणम्। नापि वेदानिषिद्धयथेष्टविनियोगविषयत्वम्, विनियोगविषये विनियोगाभावदशायां स्वत्वानापत्तेः। कदाचिद्विनियोगविषयत्वविक्रीतेपि सत्त्वादिति चेत्।

अत्राहुः—वेदासिद्धविनियोगप्रयोगप्रयोजकक्रियाविषयतामा-

(से०)रभ्य यावन्न वेदसिद्धविनियोगप्रतिबन्धक्रियाविषयतापन्नं ताव-त्स्वत्वम् । एवञ्च क्रयादिविषयतामारभ्य यावन्न विक्रयादिविषयता तावत् स्वत्वम्, चौर्यविषयतायान्तु स्वत्वं तिष्ठत्येव तस्य स्वामिवि-नियोगप्रतिबन्धकत्वेन बोध्याबोध्यितत्वात् । पितृद्रव्येषु तत्स-त्वेऽव्याप्तिस्तत्र पुत्रस्य विनियोगप्रयोजकप्रतिग्रहादिक्रियाविरहा-दिति । तत्र पितृक्रियाविषयताया एवैतत्स्वप्रयोजकत्वात् । एवञ्च वेदसिद्धयद्विनियोगप्रयोजकाक्रियाविषयतामारभ्य वेदसिद्धयद्विनि-योगप्रतिबन्धकक्रियाविषयत्वाभावो यावद्यत्र तावत् तस्य स्वत्व-मिति लक्षणं पर्यवस्यति न तु यत्क्रियादिविषयत्वगर्भमिति येन पुत्रक्रियाविरहेणाव्याप्तिः स्यादिति दिक् ।

(६) नन्वस्ति क्षणिकं पदार्थान्तरम् । तथाहि तत्र विप्रतिपत्तिः— अयं घटः स्वोत्पत्त्यव्यवहितक्षणवर्त्तिध्वंसप्रतियोगी न वा । विधिको-टिरत्र नास्तिकानाम् तत्प्रसिद्धिस्त्वेतद्घटोत्पत्त्यव्यवहितक्षणध्वस्ते पदार्थान्तरे । निषेधकोटिरास्तिकानाम् तत्प्रसिद्धिरेतद्घटोत्पत्त्यन-न्तरक्षणान्तरोत्पन्ने तस्यैतद्द्वितीयक्षणे ध्वंसाभावात् । अनु-मानञ्चेत्थम्—अयं घट एतदुत्पत्त्यव्यवहिताग्रिमक्षणवर्तिध्वंसप्र-तियोगी एतदुत्पत्त्यव्यवहितोत्तरक्षणपूर्वक्षणोत्पन्नत्वात् उभय-सिद्धतत्पूर्वोत्पन्नतत्क्षणध्वस्तपदार्थवत् । न चैवं घटादीनामेव क्षणिकत्वसिद्धौ न पदार्थान्तरसिद्धिरिति वाच्यम् । अस्य क्षणि-कतावादावतारस्य प्रसङ्गतः कृतत्वात् । पदार्थान्तरसिद्धिप्रकारस्तु क्षणः स्वमात्रवृत्तिपदार्थवान् कालोपाधित्वाद्दण्डवत्, द्रव्यादि च ततो भिद्यते द्रव्यत्वादिमत्त्वादिति पदार्थान्तरसिद्धिरिति चेन्न,

अप्रयोजकत्वात् । न च तेन विना क्षणलक्षणानुपपत्तिः तस्मिन् सति तु तल्लक्षणम् इति वाच्यम् उत्पन्ने कर्मणि यावन्न विभाग-स्तावत्कालः क्षण इत्यादि-क्षणलक्षणस्य कालनिरूपणे वाच्यत्वात् । अवतारितक्षणिकतावादनिराकरणन्त्वात्मग्रन्थे कर्तव्यमिति संक्षेपः ।

(७) ननु वैशिष्ट्यं पदार्थान्तरम् कथमन्यथा घटाभाववद्भूतल-मित्यादिप्रत्यय इति चेत्, वैशिष्ट्यस्वीकारेऽप्यनवस्थाभयेन स्वरूपस-म्बन्धे पर्यवसाने तेनैवोपपत्तौ तस्य वैयर्थ्यात् । समवाये च वि-निगमकस्य निरुक्तत्वात् । ननु मास्तु वैशिष्ट्यस्य पदार्थान्तरत्वं तथापि विशिष्टमस्तु पुरुषो दण्डी पुरुष इति प्रतीत्योर्विशेषात्—

(से०)"अर्थेनैव विशेषो हि निराकारतया धियाम्" इत्यभ्युपगमादि-ति चेत्, न, एकत्र पुरुषस्यापरत्र दण्डावच्छिन्नपुरुषस्य दण्डपुरुष-सम्बन्धानां वा विषयत्वात् पदार्थान्तरस्वीकारे गौरवात्।

(८) ननु तथापि समूहलक्षणं पदार्थान्तरमक्षतम् यदवलम्बन-ज्ञानं समूहालम्बनमित्युच्यते, न ह्यनेकविषयत्वं तत्-दण्डी पुरुष इ-त्यस्यापि दण्डपुरुषाविितिवत् समूहालम्बनत्वापत्तेः। न च दण्डी पुरुष इत्यस्य सम्बन्धविषयकत्वात्ततो भेदः, दण्डपुरुषसम्बन्धा इत्यतो भेदानापत्तेः। न च सम्बन्धप्रतियोगित्वानुयोगित्वे विशिष्ट-बोधविषयीभूते इति भेदः, दण्डपुरुषसम्बन्धा इत्यतो भेदानापत्तेः। न च सम्बन्धा इति समूहालम्बनस्य विशिष्टबोधत्वापत्तिरिति स-मूहलक्षणपदार्थान्तरविषयकं समूहालम्बनं तदविषयकं विशिष्ट-ज्ञानमिति चेन्न संसर्गमर्यादया प्रतियोगित्वादिविषयकस्य विशि-ष्टबोधत्वात्। तादृशस्य च समूहालम्बनत्वात्।

(९) नन्वस्तु प्रकारित्वं पदार्थान्तरम्। तथाहि—न तावज्जातिरू-पमिदं सामान्यादावपि सत्त्वात्। न द्रव्यकर्मगुणात्मकं गुणकर्मवृ-त्तित्वात्। न समवायविशेषाभावात्मकं अभाववृत्तित्वात्। नापि भा-समानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं तदनुयोगित्वञ्च प्रकारित्वमि-ति वाच्यम्। घटोयमित्यत्र घटत्वस्य प्रकारमात्रत्वं घटत्वमित्यत्र घटस्येति वस्तुगतिः तत्र व्यत्ययः स्यात्-भासमानं हि वैशिष्ट्यमिह समवायलक्षणं तत्प्रतियोगित्वानुयोगित्वे उभयत्र सर्वदा वर्तते स्व-रूपसम्बन्धरूपं हि तदुभयम्। न च घटोयमिति बोधदशायां घटत्वे प्रतियोगित्वं घटत्वमिति बोधदशायां त्वनुयोगित्वमिति वाच्यम्। एकदा व्यधिकरणबोधद्वयसम्भवात, उभयाकारस्यैकबोधस्य स-म्भवाच्च, सामयिकप्रतियोगित्वादिकल्पने मानाभावाच्च। नापि भासमानं यद्वैशिष्ट्यप्रतियोगित्वं तत्तत्प्रकारकत्वमनुयोगित्वञ्च तादृशप्रकारित्वमिति वाच्यम्। जायते हीदं रजतमिति भ्रमः। स च द्विविधः-एकस्तादात्म्यारोपोऽपरस्तु संसर्गारोपः। तत्र तादात्म्या-रोपे रजततादात्म्यं शुक्तौ भासते। एवञ्च तत्तादात्म्यप्रतियोगि-त्वं रजते भासते तथाच रजतं प्रकारः स्यात्, तथासतीष्टतावच्छे-दकप्रकारकज्ञानस्य प्रवर्तकतयेदं रजतमिति तादात्म्यारोपाद्रजत-वदर्थिनः प्रवृत्तिः स्यादिति चेन्न तादात्म्यातिरिक्तभासमानवैशि-

(से०)ष्ट्यप्रतियोगित्वस्य प्रकारत्वात् । न चैवं रजतत्वमपि न प्रकारः स्यादिति वाच्यम् । तत्र रजतत्वाश्रयतादात्म्यस्य वैशिष्ट्यत्वात् रजतत्वतादात्म्यस्यावैशिष्ट्यत्वात् । एवञ्च स्वतादात्म्यातिरिक्तवैशिष्ट्यप्रतियोगित्वं यत्र संसर्गमर्यादया भासते स प्रकारः । अनुयोगित्वगर्भं चेदृशं प्रकारित्वम् ।

इदं चावधेयम् । तादात्म्यारोपे रजतं विशेषणं भवत्येव तत्र तादात्म्यभिन्नत्वस्य विशेषणस्यादानात् प्रकारस्तु न भवति तद्धर्मलक्षणाभावात् । एवञ्च विशेषणत्वव्यापकं प्रकारत्वं वाच्यम् एवं विशेष्यत्वव्यापकं प्रकारित्वमपीत्यस्मत्पितृनिर्मितिपारिशीलनसुखं लभेथाः। ननु ज्ञाने घटाविशिष्टत्वञ्च ज्ञानत्वमेव—सर्वज्ञानानां घटविषयकतापत्तेः किन्तु घटाकारत्वम् तथाच घटाहितं किञ्चिज्ज्ञाननिष्ठं सकलपदार्थेषु प्रकारान्तरमिति चेन्न विषयविषयिभावस्य स्वरूपसम्बन्धविशेषरूपत्वेन प्रकारवादापत्तावादात् । अत एव घटविषयकत्वं ज्ञाने न घटजन्यत्वं विषयाजन्यस्यानुमित्यादेर्निर्विषयकतापत्तेः, जन्यजनकभावेन विषयविषयिभावे चक्षुरादेरपि विषयत्वापत्तेः, तस्माज्ज्ञानाहितज्ञातताधारत्वमेव विषयत्वं तस्मादस्ति ज्ञाततालक्षणं पदार्थान्तरमिति निरस्तम् । स्वरूपसम्बन्धविशेषेणैवान्यथासिद्धेः । अपि च केनचित् विज्ञानेन क्वचिदेव ज्ञातताऽऽधीयत इत्यत्र तयोः कश्चिद्विषयो वाच्य इति स एव स्वरूपसम्बन्धात्मको विषयविषयिभावोऽस्तु किं ज्ञाततया, किञ्च ज्ञातताया: स्वरूपसम्बन्धस्यावश्यकत्वे ज्ञानेनैव सोऽस्तु । ननु ज्ञाततायां चाक्षुषप्रत्यक्षमेव साक्षि तच्च ज्ञानविषयत्वमेव तद्विषये ज्ञानस्याचाक्षुषत्वात्, न च ज्ञातोयं घट इति मानस एव बोधो, मनसो बहिरस्वातन्त्र्यादिति चेन्न अनुव्यवसायोपनीतस्य ज्ञानस्य चाक्षुषज्ञानविषयत्वात् व्यवसायोपनीतस्य घटादेर्वा मानसज्ञानविषयत्वात् । न चोपनीतस्य विशेष्यतया भानाभावेन कथं ज्ञातोऽयं घट इति मानसो बोध इति वाच्यम् बहिरिन्द्रिय एवं तथा नियमात् । ननु घटादीनां कर्मत्वं ज्ञाततां विना नोपपद्यते परसमवेतक्रियाफलशालित्वं हि तत् ज्ञाततातिरिक्तं च ज्ञानजननक्रियाफलमिति चेन्न व्यवहारादीनामेव फलत्वात् ।

(९)सङ्ख्या तु गुण एव न पदार्थान्तरमिति । तथाहि—अस्ति तावद्द्व्यणुकपरिमाणं भावकार्यत्वात् सासमवायिकारणकम् न चास्य प्र-

(से०)चयांख्यः संयोगोऽसमवायिकारणम्, तस्यावयवपरम्परा-पर्य्यैव भावात् परमाणोश्च निरवयवत्वात्। नापि परमाणुपरिमाणं, द्व्यणुकपरिमाणस्य परमाणुपरिमाणापेक्षयोत्कृष्टत्वापत्तेः। कारणपरिमाणापेक्षया कार्यपरिमाणे कारणपरिमाणगतपरिमाणत्वव्याप्यजातिपुरस्कारेणाणुतर इति प्रयोगः स्यात्, तस्मात्परमाणुद्वित्वमेव द्व्यणुकपरिमाणासमवायिकारणमिति संख्याया गुणत्वसिद्धिः।

(१०)सादृश्यन्तु तद्भिन्नत्वे सति तद्गतभूयोऽसाधारणधर्मवत्त्वमेव। तस्मिन्नेव तत्सादृश्यवारणाय तद्भिन्नत्वे सतीति। विसदृशयोस्तद्वारणाय न तावन्मात्रम्। साधारणधर्मेण तद्वारणायासाधारणेति। एकद्विधर्मेण तद्वारणाय भूय इति। ननु गवादिधर्माणां गवयादिगतानां जात्यादिरूपाणां ज्ञाने न गवादिज्ञानसापेक्षत्वं जात्यादिज्ञानेऽन्यज्ञानापेक्षाया अदर्शनादिति चेन्न गोभिन्नत्वादिज्ञाने गवादिज्ञानापेक्षाया उचितत्वात्। एवं तद्गतधर्मवत्त्वज्ञाने तज्ज्ञानापेक्षोचितैवेति प्राञ्चः। भाव इवाभावः प्रमेय इति साधारणधर्मेणापि सादृश्यव्यवहारो चन्द्रमण्डलमिव तव मुखमाल्हादकमित्येकेनापि असाधारणधर्मेण सादृश्यव्यवहाराच्च भूयःपदमसाधारणपदं च न देयमित्यर्वाचीनाः। न च तद्भिन्नत्वे सतीत्यपि विशेषणमनादेयमेव कथमन्यथा—

> गगनं गगनाकारं सागरः सागरोपमः।
> रामरावणयोर्युद्धं रामरावणयोरिव॥

इत्यादावित्यादिशब्दैः सादृश्यप्रतीतिर्भवतीति वाच्यम् अत्र सादृश्याप्रतीतेः। तथाहि—गगनं गगनाकारमित्यस्य हि भवन्मते गगनसदृशमित्यर्थः। स च गगनं गगनगतधर्मवदिति पर्यवसन्नः। न चैतावता गगनस्य कोपि प्रकर्षः पदार्थमात्रस्यैवंविषयत्वात्। न हि घटो न स्ववृत्तिधर्मवान्। एवञ्च गगनं गगनाकारमित्यस्य गगनं स्ववृत्तिधर्मवत्पदार्थान्तररहितमित्यर्थः। स च यत्सादृश्यं गगने स नास्ति इति पर्यवसन्नः। एतावता गगनस्य प्रकर्षः प्रतीयते तथा चात्र सादृश्याप्रतीतेर्न तत्सङ्ग्रहाय तथा लक्षणमुक्तमिति। एवञ्च नोपमाऽलङ्कारे सादृश्यप्रतीतिरिति वदन्त आलङ्कारिका निरलङ्कारा एव। एवञ्च वैसादृश्यमपि न पदार्थान्तरं सादृश्याभावस्य वैधर्म्यस्यैव वैसादृश्यपदार्थत्वा-

(से०)दिति दिक् ।

(११)नन्वस्माद्गकारादसौ तारोऽसौ मन्द इति प्रतीतिबलादस्ति गकारादौ तारत्वं मन्दत्वञ्च, न चैतज्जातिरूपम् गत्वादिना सङ्करप्रसङ्गात् । न च गत्वादिव्याप्यनानातारादिकारा उपात्तव्याहानापत्तेः जातिरूपत्वे मन्दज्ञानसापेक्षज्ञानत्वापत्तेश्चेति पदार्थान्तरमेव तदिति चेत् तारत्वमन्दत्वयोरुत्कर्षापकर्षरूपत्वेन जातिरूपत्वात् सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेन सजातीयप्रतिबध्यसाक्षात्कारविषयतावच्छेदकशब्दवृत्तिजातित्वेन च तारत्वमन्दत्वयोरनुगमात् एतावतो ज्ञानस्य च घटसजातीयज्ञानसापेक्षतया मन्दादिज्ञानापेक्षणात् । तस्मान्न तारत्वमन्दत्वयोः पदार्थान्तरत्वमिति ।

(१२)नन्वाधाराधेयभावः पदार्थान्तरम् । तथाहि-न तावद्धर्मित्वमाधारत्वमाधेयत्वञ्च धर्मत्वम् , तयोरेवानिर्वचनात् धर्मवत्त्वस्य धर्मित्वे घटस्य धर्मत्वं स्यात् । यत्र तिष्ठति स आधारो यस्तिष्ठति स आधेय इति चेन्न गोषु दुह्यमानासु देवदत्तो गतो-दण्डे सति घट इत्यादौ सतिसप्तमीप्रयोगेऽतिव्याप्तेः । एवं निमित्तसप्तम्यामपि । यतोऽधिकरणसप्तमीत्यादिकरण आत्माश्रयापत्तेः भूतले घटं पश्येत्यत्र प्रथमाविरहाच्च, अज्ञातविभक्तिविभागानामाधाराधेयभावानुपपत्तेश्च । अधोदिगवस्थितत्वमाधारत्वमूर्ध्वादिगवस्थितत्वमाधेयत्वमिति चेन्न भूतलस्य गगनावस्थितपक्ष्याद्याधारतापत्तेः । गुरुत्वप्रतिबन्धकत्वमाधारत्वं प्रतिबध्यगुरुत्वाश्रयत्वमाधेयत्वमिति चेन्न गुणादावाधाराधेयभावानुपपत्तेः । संबद्धयोरधः स्थितस्याधारत्वमूर्ध्वस्थितस्याधेयत्वमिति चेन्न, चरणदललग्नरजःकणादेश्चरणाधारतापत्तेः । पुरुषादीनां गोत्वं व्यञ्जकम् एवमन्यदपि क्वचित्किञ्चिद्वाच्यमिति चेन्न अननुगमापत्तेः । गवि गोत्वमित्यादेर्व्यञ्जकत्वाद्यप्रतीतेश्चेति चेत् ,

अत्रोच्यते—यथा भावाभावयोः प्रतियोग्यनुयोगिभावस्वरूपसम्बन्धविशेषस्तथाऽऽधाराधेययोस्तद्भावोऽपि स एव । स्वरूपसम्बन्धानां च वैलक्षण्यं सर्ववादिसंमतमेव कथमन्यथा घटतदभावयोर्घटाभावभूतलयोश्च स्वरूपैः सम्बन्धभेदः । न चैवं घटघटत्वादीनां स्वरूपसम्बन्धस्यावश्यकत्वे किं समवायेनेति वाच्यम् समवायावसायसाधकानां साधितत्वादिति संक्षेपः ।

(से०)(१२)न चास्त्वभावत्वं पृथक्त्वम् । न च जातावस्यान्तर्भावः समवाय रहितेऽभावे तदसम्भवात् । न चाभावेपि समवायध्वंसस्य समवेतत्वे समवायिकारणनाशान्नाशे प्रतियोग्युन्मज्जनानवस्थयोरेकतरप्रसङ्गात् । सुखादिप्रागभावस्य समवेतत्वे एकवृत्तिजातेर्विशेषतापत्तेः । न च भावस्यैव समवायिकारणनाशान्नाशो विशेषलक्षणेपि भावत्वं विशेषणमिति वाच्यम् लाघवेन कार्यं प्रत्येव समवायिकारणनाशस्य नाशकत्वात् भावकार्यं प्रतीति गौरवात् अभावस्य समवेतत्वसिद्धौ भावकार्यं प्रतीत्यत्र विशेषणं भावविशेषणे सिद्धे चाभावस्य समवेतत्वसिद्धिरित्यन्योन्याश्रयाच्च । एवं विशेषलक्षणे भावत्वविशेषणेऽप्यन्योन्याश्रय एव अभावस्य समवेतत्वसिद्धौ भावत्वविशेषणं भावत्वविशेषणे चाभावस्य समवेतत्वसिद्धिरिति । ननु गुणकर्मणोर्नाश एव समवायिकारणनाशस्य जनकता द्रव्यनाशस्त्वसमवायिकारणनाशादेव द्व्यणुकस्थले तथा दर्शनात् । न च कपालनाशानन्तरं घटनाशार्थं कपालद्वयसंयोगनाशप्रतीक्षायां समवायिकारणं विना घटस्य क्षणद्वयमवस्थानं स्यादिति वाच्यम् एकक्षण इव क्षणद्वयेऽप्यवस्थाने क्षत्यभावात् । एवं च न कार्यमात्रनाशं प्रति समवायिकारणनाशस्य जनकतेति चेत् कपालनाशत्वेन जनकतायां कपालसमवेतकार्यनाशत्वेन जन्यत्वे लाघवात् द्रव्येतरेति विशेषणप्रक्षेपे गौरवात् । न चैकत्रासमवायिकारणनाशाद्द्रव्यनाशे सर्वत्र तथा, प्रमाणाभावात् । न च क्वचित् समवायिकारणनाशस्य क्वचिदसमवायिकारणनाशस्य द्रव्यनाशकत्वेऽननुगमापत्तिरिति वाच्यम् निमित्तकारणेतरकारणनाशत्वेनानुगमात् । एवञ्च यथा गुणनाशः क्वचित्समवायिकारणनाशात् यथा घटनाशाद्घटरूपादिनाशः, क्वचिदसमवायिकारणनाशात् यथोपान्त्यशब्दनाशादन्त्यशब्दनाशः,क्वचिद्विरोधिगुणात् यथा द्वितीयशब्दादेः प्रथमशब्दादिनाशः, क्वचिन्निमित्तकारणनाशात् यथापेक्षाबुद्धिनाशः, क्वचिन्निमित्तात्यन्ताभावात् यथाऽदृष्टविशेषविशिष्टेश्वरापेक्षाबुद्धेरदृष्टविशेषणध्वंसेनात्यन्ताभावे तज्जन्यपरमाणुद्वित्वादिनाशः। अदृष्टविशेषध्वंसादेव तन्नाश इत्येके । यथा वा कर्मनाशः क्वचित्समवायिकारणनाशात् यथा घटनाशे घटकर्मनाशः,क्वचिदुत्तरदेशसंयोगात् उत्तरदेशसंयोगनाश्यौ कर्मविभागाविति स्मरणात्, तथा द्रव्येनाशापि

(से०)कचित्समवायिकारणनाशात् । एवञ्च कार्यमात्रनाशम्प्रति समवायिकारणनाशस्य जनकतायां ध्वंसस्य समेवतत्वे समवायिकारणनाशान्नाशः स्यादेवेति । अत्यन्ताभावान्योन्याभावयोश्च समवेतत्वं नित्यानेकसमवेतत्वाज्जातित्वं जायेत, तस्माञ्च जातिरभावत्वम । नन्वभावो मास्तु समवेतोऽभावे तु जातिसमवायः स्याद्गगनादाविवेति चेन्न जातेस्सत्ताव्याप्यत्वनियमेन जातिमत्त्वे सत्तावत्वप्रसङ्गात् । न चेष्टापत्तिः, अभाव इति व्यवहारानुपपत्तेः तस्य सत्तानिषेधप्रकाशप्रकाशकत्वात् तत्र नञा सम्बन्धे तन्निषेधप्रतीतेः । नन्वस्त्वभावत्वमुपाधिरिति चेन्न तथा हि—न तावद्भावभिन्नत्वं तत् । भिन्नत्वं चान्योन्याभावत्वम् तच्च त्रैकालिकसंसर्गाभावत्वम् संसर्गाभावत्वं च प्रतियोग्यारोपकहेतुकधीविषयाभावत्वम्—इत्यात्माश्रयात् । प्रतियोगिताविषयत्वे च स्वरूपसम्बन्धविशेषौ । स्वरूपसम्बन्धश्च सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वम् जननयोग्यत्वञ्च जनकतावच्छेदकधर्मवत्वमिति पुनरपि हेतुत्वप्रवेशेनात्माश्रयात् । सम्बन्धान्तरमन्तरेणेत्यत्र सम्बन्धान्तरात्यन्ताभाव इत्यर्थेत्यन्ताभावप्रवेशेन पुनरप्यात्माश्रयात् । सम्बन्धत्वस्याविशिष्टधीव्यावृत्तविशिष्टधीनियामकत्वरूपतयाऽविशिष्टधीव्यावृत्तत्वस्याविशिष्टबुद्ध्यनियामकत्वरूपतयाऽनियामकत्वस्याभावगर्भतया चात्माश्रयात्, अविशिष्टधीत्यत्राप्यभावप्रवेशाच्च । सम्बन्धान्तरेत्यत्र प्रकृतसम्बन्धातिरिक्तेत्यर्थकरणे रूपतया प्रागभावत्वस्यानादिसान्तत्वाभावप्रवेशाच्च । हेतुत्वशरीरे पूर्ववर्तित्वप्रवेशेन पूर्ववर्तित्वस्य प्रागभावावच्छिन्नसमयवर्तित्वरूपतया प्रागभावत्वस्यानादिसान्तत्वरूपतयाऽनादित्वसान्तत्वयोरभावगर्भतयाऽऽत्माश्रयाच्च । नन्वभावाकारप्रतीतिविषयत्वमिति चेन्न अभावाकारत्वस्याभावविषयकत्वरूपतयात्माश्रयात् । अभावपदशक्तिविशेष्यत्वमभावत्वमिति चेत् न विशेष्यत्वस्य स्वरूपसम्बन्धविशेषरूपतयात्माश्रयात् । सत्ताराहितत्वमभावत्वमिति चेत् न सामान्यादावतिव्याप्तेः अत्यन्ताभावस्याभावेऽभावाच्च अत्यन्ताभावस्य त्रैकालिकसम्बन्धसंसर्गाभावरूपतया संसर्गाभावेऽभावप्रवेशेनात्माश्रयाच्च । अभावइति—प्रयोगजनकधीविषयत्वमिति चेन्न इष्टसाधनताज्ञानाविषय इष्टसाधनत्वेऽतिव्याप्तेः ।

(से०)व्यवहर्तव्यज्ञानत्वेन जनकत्वं विवक्षितमिति चेन्न जनकत्वजठर-जिज्ञासायां निजाश्रयापत्तेः । विधिमुखप्रत्ययाविषयत्वमिति चेन्न अविषयत्वेऽभावप्रवेशात् अस्तीति प्रत्ययस्याभावेपि सत्त्वेन विधिमु-खप्रत्ययत्वसत्त्वाच्च । भावत्वप्रकारकप्रमित्यविषयत्वमिति चेन्न भा-वत्वस्याभावाविशेष्यकप्रतीतिविशेष्यतयाऽऽत्माश्रयात् । एवं संस-र्गाभावत्वमपि न प्रतियोग्यारोपहेतुकधीविषयाभावत्वम् आरोपस्य भ्रमरूपतया भ्रमत्वस्य यत्र यन्नास्ति तत्र तत्प्रकारकज्ञानत्वरूपतया सादित्वस्य प्रागभावप्रतियोगित्वरूपतयात्माश्रयात् । एवं ध्वंस-त्वमपि न साद्यभावत्वम् ध्वंसगर्भप्रागभावगर्भत्वात् । अत्यन्ताभा-वत्वमपि न त्रैकालिकसंसर्गाभावत्वम् संसर्गाभावेत्यन्ताभावप्रवे-शात् । नाप्यन्योन्याभावत्वम्प्रातियोगितावच्छेदकारोपहेतुकधीविष-याभावत्वम् अवच्छेदकत्वस्यावच्छेद्यान्यूनानतिरिक्तवृत्तित्वरूपत-या नियमस्य व्याप्तिरूपतया तत्रान्योन्याभावप्रवेशनात्माश्रयात् । एवं चाभावत्वादयो भिन्ना एव पदार्था इति चेन्न,

एतेषामखण्डोपाधिरूपत्वात् । नच तस्यैव पदार्थान्तरत्वम् सामान्यान्तर्भावात् । न चापसिद्धान्तः सामान्यं द्विविधमुपाधिरूपं जातिरूपञ्च उपाधिर्द्विविधः—सखण्डोखऽखण्डश्चेति वर्द्धमानोपा-ध्यायलिखितत्वेनास्मत्पितृचरणगुरुभिः शीघ्र [श्रीमत्?] प्रगल्भभ-ट्टाचार्यैर्लिखनात् । उदयनाचार्यैस्तु प्रकृतभाष्यव्याख्यावसरे जाति-रूपस्यैव सामान्यस्य प्रदर्शनं कृतं स्वतन्त्ररीत्या उपाधिरूपस्य सा-मान्यस्य बहुषु स्थलेषु तैरपि स्वीकारात् । स्वरूपसम्बन्धविशेष एवाभावत्वादिरित्यपि केचित् । प्राभाकरास्त्वभाव एव नास्ति कुत्राभावत्वम् सति धर्मिणि धर्मचिन्तेति न्यायात् । न चैवं भूतले घटो नास्तीतिप्रतीत्यनुपपत्तिः केवलाधिकरणेनैवाभाव-प्रत्ययोपपत्तेरिति चेत् कैवल्यस्य घटशून्यत्वरूपतयाऽभा-वस्वीकारात् भूतलस्य भूतलावृत्तितयाऽऽधाराधेयभावानुपपत्तेः । घटवद्भूतलभिन्नं भूतलमभाव इति चेन्न पूर्वं घटवति पश्चात् घटशू-न्ये घटवद्भिन्नत्वाभावात् स्वरूपभेदस्यापि व्याप्यवृत्तित्वात् अवृत्य-त्यन्ताभावे तद्वतोऽप्रसिद्धेश्च । उत्पत्स्यते घटो घटात्यन्ताभावो घट-भेद इति विलक्षणप्रतीतीनामेकेनाधिकरणेनानुपपत्तेश्च । काल-विशेषसम्बन्ध एवाधिकरणेऽभाव इत्येके प्राभाकराः । तदपि न,

(से०)यस्मिन्काले तत्र घटो नास्ति तस्य कालविशेषतया भावपुरस्कारात्। अधिकरणज्ञानमेवाभाव इतीतरे। तदप्ययुक्तम्, घटवद्भूतलमिति ज्ञानस्याप्यभावत्वापत्तेः। घटाविषयकं भूतलज्ञानमभाव इति चेन्न घटवति घटास्फुरणदशायां भूतलज्ञानस्याप्यभावत्वापत्तेः। घटवद्भूतलं इतिज्ञानभिन्नं भूतलज्ञानमभाव इति चेन्न एवं हि ज्ञानज्ञेययोराधाराधेयभावोपपत्तावपि ज्ञानाभावदशायामभावप्रत्ययभावाभावे भावसद्भावापत्तेः। न च तत्र कस्यचिदावश्यकं ज्ञानं, भगवतो भवतानङ्गीकारात् सर्वमुक्तिदशायां केषामपि ज्ञानाभावेन सर्ववस्तुसद्भावापत्तेः। तस्मादस्त्यभावस्तत्त्वान्तरमिति।

(१४) नन्वस्ति व्यञ्जना प्रवृत्त्यन्तरं पदार्थान्तरम्। तथाहि शक्तिरीश्वरेच्छा तज्ज्ञानं वा। लक्षणा तु शक्यलक्ष्यसम्बन्धो यथा गङ्गायां घोष इत्यादौ प्रवाहादितीरादयोः सम्बन्धः संयोगादिलक्षणः। तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वम्। आकांक्षा पदानां परस्परसहकारिता। सा चैकस्य पदस्यापरपदं विनाऽन्वयबोधाजनकत्वं यथा घटमानयेत्यादौ न ह्यानयेति विना घटमित्यस्यान्वयबोधजनकत्वम्। आकांक्षा च पदयोर्वाक्ययोश्च। पदयोर्यथा घटमित्यत्र नामविभक्त्योः। वाक्ययोस्तु प्रदर्शितैव क्रियाकारकयोः पदसमुदायत्वेन वाक्यत्वात्। घटः कर्मत्वमित्यादौ तु नाकांक्षा स्वरूपायोग्यत्वेनैव फलाजनकत्वेऽपरपदविलम्बेन तदभावात्। अर्थाबाधो योग्यता। अग्निना सिञ्चेदित्यादौ त्वर्थबाध एव। अन्वयप्रतियोग्युपस्थितीनामव्यवधानमासत्तिः। गिरिर्भुक्तमग्निमाननेनेत्यादौ तु व्यवधानमेव। न च शक्त्यादिषु व्यञ्जनान्तर्भावः सम्भवति। तथाहि—

गच्छ गच्छसि चेत्कान्त पन्थानस्सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥

इत्यत्र गमनाभावः प्रतीयते। न च तत्र शक्तिः—एतत्पद्यवर्तिनां पदानां गमनादावेव शक्तेः अभावशक्तस्य नञादेरप्रयोगात्। नापि लक्षणा गङ्गायां घोषस्येव कान्ते गमनस्य बाधाभावात्। तात्पर्यं तु पदार्थविशेषान्वयं बोधयति आकांक्षादयोऽपि तथा। न च गमनाभावः प्रकृतपदार्थान्वितः। तस्माद्गमनाभावप्रत्यायकं व्यञ्जनाख्यं वृत्त्यन्तरं स्वीकार्यम्। तच्च पदार्थान्तरमेव द्रव्यादिषु सप्तस्वनन्तर्भावात्। न तद्द्रव्यगुणकर्मात्मकं—गुणात्मके शब्दे वृत्तेः। नापि सामान्याद्यात्मकम्—

(से०)अर्थस्यापि व्यञ्जकत्वे तस्य च क्वचिदभावात्मकतया तत्र सामान्याद्यसम्भवात्। अथाभावात्मकोऽर्थः कुत्र व्यञ्जक इति चेत्।

उअ णिच्चलणिप्फन्दा विसिनीपत्तम्मि रेहइ बलाआ।

णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्ति व्व॥

अत्र निष्पन्दत्वेन निर्भयत्वं व्यज्यते तेन जनरहितत्वं तेन संकेतस्थानत्वमिति। तथा च निष्पन्दत्वस्याभावरूपस्यैव व्यञ्जकत्वात् तत्र सामान्यादेरसम्भवात् इति चेन्न।

अनुमानेनैव गमनाभावप्रतीतेः। तथाहि गमनं मया न कर्तव्यं मदनिष्टहेतुत्वाद्विषभक्षणादिवत्। मरणरूपानिष्टहेतुत्वप्रतीतिरप्यनुमानादेव इयं-त्वद्गमनं मन्मरणहेतुरिति-ज्ञानवती मद्गन्तव्यदेशे जन्मप्रार्थनावत्त्वाद्यन्नैवं तन्नैवम यथा मयि प्रेमरहितं व्यक्त्यन्तरमिति ज्ञानावच्छेदकतया तद्धेतुत्वसिद्धिः। साध्यतावच्छेदकरूपेण साध्यसिद्धेरनुमानफलत्वात्। तस्मान्न व्यञ्जनाख्यं वृत्त्यन्तरमिति न तत्पदार्थान्तरमिति। व्यञ्जनायां साधनदूषणप्रकाराविस्तारश्च मत्कृतालङ्कारभास्करकाव्यप्रकाशप्रकाशतत्खण्डनैकावलीविवरणशरदागममनोरमादौ स चमत्कारं द्रष्टव्य इति॥

(१५) ननु स्फोटलक्षणे स्फुटे तत्त्वान्तरे कथं तावन्त्येव तत्त्वानि। न च तत्र मानाभावः-एकं पदमित्यादिप्रतीतेरेव तत्र मानत्वात्। न हि पदादिषु स्वाभाविकमेकत्वं सम्भवति नानावर्णात्मकत्वात्। तस्मात्पदस्फोटैक्यात्पदैक्यम् वाक्यस्फोटैक्याद्वाक्यैक्यम्। एवञ्च स्फोटो द्विविधः-पदस्फोटो वाक्यस्फोटश्च। पदाभिव्यंग्यः पदस्फोटो वाक्याभिव्यंग्यो वाक्यस्फोटः। तत्र पूर्वपूर्ववर्णैरीषद्व्यंग्यश्चरमवर्णेन तु स्फुटतया एवं वाक्येपि पूर्वपदैश्चरमपदेन च ईषत्स्फुटतया व्यज्यते तथा चास्ति स्फोट इति चेत्।

एकशक्तिमत्त्वेनैकानुपूर्वीकत्वेन वा पद एकत्वप्रत्ययोपपत्तेः वाक्येऽप्येकत्वप्रत्यय एकार्थत्वमेवोपाधिः। तदुक्तम्-'अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे स्यात्'-इति। अत्र घटमानय कलशमानयेत्यनयोरेकवाक्यतावारणाय साकांक्षमित्यादि। न च तत्रैकव्यतिरेकेणापरस्यान्वयबोधाजनकत्वमिति नाकांक्षा। ननु पदार्थवाक्यार्थप्रत्यायकत्वेन स्फोटद्वयस्वीकारः पदवाक्याभ्यां स्फोटद्वयप्रतीत्युत्तरमर्थद्वयप्रतीतेरिति चेन्न अन्यथैव तयोः प्रती-

(से०)त्युपपत्तेः—पदं हि सम्बन्धितया पदार्थं स्मारयति हस्तीव हास्तिपकम् तत्र यथा न हस्तिनः स्फोटापेक्षा तथा पदस्यापि। सम्बन्धश्चात्र शक्त्यादिकमेव वाक्यमपि योग्यतादिसनाथं निजार्थं प्रथयिष्यतीति किं स्फोटेन। ननु डित्थादिशब्दोपाधित्वेन स्फोटस्वीकारो डित्थत्वादेर्जातेरुपाधेर्वा वक्तुमशक्यत्वादिति चेन्न यत्र डित्थादिसंज्ञाप्रणयनं तद्गतासाधारणधर्मस्यैव कस्यचित्तदुपाधित्वात् न ह्यसाधारणधर्मशून्यो धर्मो जगत्यस्ति अन्याभेदप्रसङ्गात्। नहि डित्थादिपदात्क्लृप्तोऽसाधारणो धर्मो न भासतेऽक्लृप्तः स्फोटस्तु परिस्फुरतीत्यत्र प्रमाणमस्ति। तस्मात्स्फोटोपि न शक्त्यादिवत्पदार्थान्तरम्।

(१६)ननु विशिष्टबोधे समूहालम्बनाविशेषभङ्गाय किञ्चिद्वैलक्षण्यं वाच्यम्। न च विशिष्टबोधस्य संसर्गविषयत्वं, तद्दण्डी पुरुष इत्यत्रेव दण्डपुरुषसंयोगा इत्यत्रापि संसर्गस्य भानात् तथाच संसर्गमर्यादया तथात्वं तथा। सा च न क्लृप्तपदार्थसार्थान्तर्गतेति पदार्थान्तरतया स्वीकार्या। तथाहि न तावद्विशेषणविशेष्यांशातिरिक्तज्ञानांशाभानमेव, संसर्गमर्यादाभानस्यैव ज्ञाननियामकत्व आत्माश्रयापत्तेः संसर्गमर्यादयेति तृतीयया स्फुटं नियामकत्वलाभात्। ननु मास्तु विषयतत्समूहालम्बनाद्विशिष्टधियो विशेषः कार्यकृतो कारणकृतो वा भविष्यति, दण्डी पुरुष इत्यतो दण्ड्यर्थिप्रवृत्तेः समूहालम्बने चातथात्वादिति चेन्न। विशेषणविशेष्यांशातिरिक्तविषयकत्वस्यैव विशिष्टज्ञाने समूहालम्बनाद्वैशिष्ट्यरूपत्वात्। संसर्गमर्यादया भासत इत्यस्य नायमर्थो—यत् संसर्गमर्यादाकरणकबोधे भासत इति। येन करणीभूतायास्तस्याः स्वरूपं मृग्येत किन्तु विशेषणविशेष्यांशातिरिक्तांशविषयत्वम्। एवञ्च वाक्यार्थमहिम्ना भानमपि विशेषणविशेष्यांशातिरिक्तशाब्दबोधांशविषयत्वम् तेन वाक्यार्थमहिमापि न पदार्थान्तरत्वशङ्कादोलामधिरोहति। ननु भवतु भवदुक्तं संसर्गमर्यादया वाक्यार्थमहिम्ना च स तन्त्रबीजचिन्ता तु न मदुक्तिमन्तरापैतीति चेत्, सत्यम्, विशेषणज्ञानाच्छब्दात्मिकाया विशिष्टबोधसामग्र्या आकांक्षादिरूपायाः शाब्दबोधसामग्र्याश्च तथात्वात्। न हि समूहालम्बने विशेषणज्ञानविशेष्यभानसामग्री तद्रूपतया संसर्गग्रहात्मिका विशिष्टबोधसामग्री संभव-

(से०)तीति न संसर्गमर्यादावाक्यार्थमहिमा महामाहिम्नां मनसि पदार्थान्तरत्वेनवातरतीति संक्षेपः।

(१७)ननु पटः पटी वास इत्यादयः पुलिङ्गादयः शब्दाः पुंस्त्वादि प्रतिपादयन्ति। तच्च पुंस्त्वादि न प्रसिद्धमेव पुंस्त्वादि पुरुषादिगतस्य पुंस्त्वादेः पटादावभावात्। पटः पटी वास इति लिङ्गत्रयाङ्कितपदत्रयेणाभिधीयमानायामेकस्यां व्यक्तौ विरुद्धानां पुरुषादिगतानां पुंस्त्वादीनामसम्भवाच्च। नन्वेतैः शब्दैः पुंस्त्वादयो न प्रतीयन्त एव किन्तु शब्दाकारप्रकारभेदमात्रं लिङ्गभेदेन भवति यथेदमियमयमिति चेन्न लिङ्गं पुंस्त्रीनपुंसकवाच्य उपचयादिरूपो वस्तुधर्म इति प्रसादार्थविरोधात्। तथा च पुंस्त्वादयोऽपि पदार्थान्तरमेव। ननु महाभाष्यसम्मतिं पुरस्कृत्य प्रसादकृतैव लिखितमुपचयः पुंस्त्वमपचयः स्त्रीत्वमनयोर्विवक्षायां पुंलिङ्गस्त्रिलिङ्गे उभयविवक्षायां तु नपुंसकमिति, तथाचोपचयादिरेव पुंस्त्वं न तत्त्वान्तरमिति चेन्न पुंलिङ्गादिभिः शब्दैर्य उपचयादिः प्रतीयते तत्स्वरूपानिरूपणात्। न हि वृक्षो गङ्गेत्यादावुपचयापचयौ उत्कर्षापकर्षौ कौचिद् वृक्षगङ्गागतौ प्रतीयेते तथात्वेऽवधिज्ञानापेक्षा स्यात्। ननु भर्तृहरिणा लिङ्गस्य सप्त प्रकारा उक्तास्ते यथा—

> स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः।
> तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा॥
> शब्दोपजनितार्थात्मा शब्दसंस्कार इत्यपि।
> लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सम्प्रदर्शिताः॥

तथा चैतेष्वन्यतमो लिङ्गार्थ इति चेन्न। तटीत्यादौ स्तनकेशादिसम्बन्धविशिष्टस्तनादितद्व्यञ्ज्यस्त्र्यादिगतजातिविशेषगुणावस्थागुणविशेषाणामप्रतीतेः, न हि तटीतिप्रयोगे तटादौ स्तनादिसम्बन्धो विशिष्टस्तनादिर्वा तद्व्यङ्ग्या स्त्रीगता जातिर्वा स्त्रीगता गुणावस्था गुणा वा कुतोऽप्यायान्ति प्रतीयन्ते वा—तटस्तटी तटमिति प्रयोगेषु तटस्यैकरीत्यैव प्रतीतेः। नापि शब्देन कश्चिदर्थविशेषो जन्यते स एव लिङ्गभेदेन प्रतीयत इति वाच्यम् शब्दजनितेऽर्थभेदे प्रमाणाभावात्। न हि लिङ्गभेदावच्छिन्नशब्दप्रयोगदशायां तटादिषु जातमर्थविशेषं कश्चिदनुभवति। तस्माद्रमणीतटीसाधारणं पुरुषवृक्षसा-

(से०)धारणं षण्ढज्ञानसाधारणं तत्त्वान्तरमेव स्त्रीत्वादि स्त्रीलिङ्गादिभिः शब्दैः प्रतिपाद्यत इति कथं कणादकथिता एव पदार्था इति चेन्न

पुल्लिङ्गादिषु शब्दाकारभेदप्रकारस्यैव प्रामाणिकत्वेनार्थभेदे मानाभावात्। अत एव भर्तृहारिणापि नरहरिणेव योगजधर्मसाचिव्यादिस्वविषयज्ञानवताऽत एव तदन्तर्गतास्मदाद्युक्तपरिशीलनशालिना षट्सु पक्षेषु चास्वरसेन शब्दसंस्कार इत्यपीति लिखितम्। शब्दसंस्कारश्चेदप्रियमयमिति तेनैव विवृतम्। स चाकारप्रकारभेदान्नातिरिच्यते। एवञ्च पुंस्त्वादि न तत्त्वान्तरमिति तत्त्वविन्मनोरमं पर्यवसानम्। ननु स्त्रीलिङ्गादिभिः शब्दैः स्तनकेशादिसम्बन्धादिष्वेकोऽर्थः कश्चित्प्रकाश्यते, न च तटीघटीप्रभृतिषु तदसम्भवस्तत्र लक्षणया प्रवृत्तेरिति चेन्न। लक्षणा हि न तावत्स्तनादिसम्बन्धवत्त्वेनैव स्वार्थाद्न्येन रूपेण ज्ञाता भवति लक्षणेत्यभिधानात् स्तनादिसम्बन्धस्य तत्र बाधात्, अबाधे शक्तिपरित्यागानौचित्यात्। न च तटत्वादिनैव लक्षणा तेन रूपेण शक्तेरेव स्वीकारात्। अपि च यः शब्दः क्वचिच्छक्तो भवति स एवापरत्र लाक्षणिको यथा गङ्गाशब्दः स्रोतसि शक्तस्तीरे। न च तटीघटीपटीधाटीशाटीवाटीकटीप्रभृतयः स्तनसम्बन्धादिपुरस्कारेण क्वचन शक्ता येनात्र लाक्षणिका भवेयुः। ननु यथाऽऽलङ्कारिकाणां गङ्गादिशब्दे प्रयोजनलक्षणायां गङ्गादित्वेनैव तीरादिप्रतिपत्तिस्तथैव पावनत्वादिप्रयोजनप्रतीतिनिर्वाहाद् गङ्गासम्बन्धत्वमात्रप्रतीतौ तु गंगातटे घोष इत्यत्र पावनत्वप्रत्ययो न स्यात्तथा स्त्र्यादिलिङ्गादयोपि शब्दा लक्ष्यावृत्तिनापि स्तनसम्बन्धादिना रूपेण लक्ष्यं लक्षयन्ति इति चेन्न। क्वचिच्छक्त्यभावेन लक्षणाया वक्तुमशक्यत्वात् शक्यलक्ष्यसम्बन्धस्यैव लक्षणात्वात्। ननु यथा गौरनित्य इत्यत्र गोत्वविशिष्टोपस्थितावपि योग्यतावशाद्गोत्वमपहाय व्यक्तावनित्यत्वान्वयः तथा स्तनसम्बन्धादिविशिष्टोपस्थितावपि स्तनसम्बन्धादि विहाय तट्यादिपदैरन्वयो बोध्यत इति चेन्न। वैषम्यात्। दृष्टान्ते हि पदार्थस्यापरिपन्थितया भवतु तथान्वयबोधः प्रकृते तु स्त्र्यादिविशिष्टतटादिपदार्थस्याभावान्मूल एव निहितः कुठार इति क्व शाखासु पल्लवादिप्रत्याशा। अपि च भर्तृहरिपरिगणितेषु तदुपव्यञ्जना जातिरित्यत्र न तस्य स्वरसः। तदुपव्यंजनेत्यत्र हि

(से०)स्तनादिव्यंग्या स्त्रीलिङ्गादिशब्दप्रतिपाद्या वेत्यर्थः। सा च स्त्रीत्वादिरेव विवक्षिता। न च स्त्रीत्वादिर्जातिः सम्भवति जाति साङ्कर्यात्। स्त्रीत्वस्य पृथिवीत्वपरिहारेण वरुणालोकादिस्त्रीषु सत्त्वात् पृथिवीत्वस्य स्त्रीत्वपरिहारेण घटादौ सत्त्वात् भूतलवर्तिनीषु नितम्बिनीषु द्वितयसमावेशात् शरीरत्वसाम्यात्। ननु भवतु शब्दोपजनितार्थात्मेत्यत्र तस्य स्वरसः। शब्दोपजनितः शब्दोपजनितज्ञातविषयो योऽर्थस्तदात्मेति हि तस्यार्थः, एवञ्च शब्दव्यङ्ग्यः स्फोटविशेष एव स्त्रीलिङ्गादिभिरुच्यत इति चेन्न। स्फोटस्य शतशः पाटितत्वात्। ननु शब्दजन्यज्ञानजातज्ञातताविशेष एव स्त्रीलिङ्गादेरर्थ इति चेन्न। तस्याः शब्दप्रवृत्त्युत्तरकालीनत्वात् अप्रामाणिकत्वाच्च। ननु उपचयापचयावेव पुलिङ्गस्त्रीलिङ्गार्थौ, प्रतीयते हि तटस्तटीत्याभ्यां शब्दार्थाभ्यां महांस्तटः स्वल्पश्च तट इति चेन्न। नपुंसके कोऽर्थ इति वक्तव्यत्वात्। न तावदुपचयाभावे सत्यपचयाभावः, तयोः परस्परविरुद्धतया एकत्रासम्भवात्। एवञ्चोभयाविवक्षया नपुंसकशब्दप्रयोगो निरर्थक एवेति मन्तव्यम्। तथाच लिङ्गभेदेन तत्राकारभेदमात्रम् तथाच स्त्रीपुंलिङ्गयोरपि निरर्थकत्वमेव आकारसमर्पकत्वेनानुगमात्। अपि च बहुवृक्षा भूर्बहुधनः प्रदेशो भूरिसंग्रामं कुलमित्यादिबहुव्रीहिषु विशेष्यलिङ्गग्राहितया स्त्रीलिङ्गाद्यैः शब्दैरपचयाद्याः प्रतीयन्त इति न सचेतसश्चेतसि सञ्चरति। किञ्च यः पुंलिङ्गः शब्दः स एव चेत् स्त्रीलिङ्गो भवति तदा भवतु कदाचिदुपचयापचयादिप्रतीतिर्भुजगराजवचसामनुरोधात् यथा तटस्तटीत्यादौ न तु ये भिन्ना भिन्नलिङ्गा पृथ्वी सुमेरुः कुलमित्याद्याः ते कदाचिदपि प्रत्याय्यविशेषं प्रत्याययन्तीति केऽपि प्रतियन्ति, न हि सुमेरुः पृथिवीति प्रयोगे परस्परापेक्षं महत्त्वमल्पत्वं च प्रतीयत इति काश्चित्प्रत्येति। ननु ब्राह्मणमानयेति नियुक्ता नियोज्याः पुमांसमुपहरन्ति ब्राह्मणीमित्यतस्तु स्त्रियम न चार्थविशेषाप्रत्यये व्यवहारभेदः प्रवर्तितुमर्हति तथाच पुंलिङ्गादिभिः शब्दैः पुंस्त्वादयः प्रतीयन्त इति निर्विवादमिति चेन्न। प्रत्याययन्तु तर्हि ब्राह्मणी देवदत्तो मित्रेत्याद्याः शब्दाः पुंस्त्वादिप्रत्ययस्य व्यवहारेण बलादानयनात् अर्थस्याव्यभिचाराच्च, नतु घटः पटः कुटी पुटीतिप्रभृतयः। अत एव ब्राह्मणादिष्वत्र नामार्थैकदेशगतं पुंस्त्वमनूद्यत इति चिन्तामणिविरोधोपि न-

(से०)तादृशि स्थले पुंस्त्वादिप्रतिपादनस्यास्माभिरप्यङ्गीकारात् । एवं च चारुतरो विचारसंचारः पितृचरणचिन्तनानुग्रहेण प्रवर्तितो न परैरसूयामात्रेणावगणनीयः प्रवर्तनीयस्तु समुत्सार्य मात्सर्यं दूषणभूषणादिभिरिति संक्षेपः ।

(१८)नन्वस्ति विशेषणोपलक्षणयोर्भेदः सदसद्व्यावर्तकताकृतस्तस्या उभयासाधारणत्वात् सद् व्यावर्तकं विशेषणमसदुपलक्षणमिति चेन्न । काकवन्तो देवदत्तगृहाः जटाभिस्तापस इत्यत्र सतोऽप्युपरिभ्रमत्काकस्य जटायाश्चोपलक्षणत्वात् । सर्वदा सत्त्वस्य सर्वत्र विशेषणेऽप्यभावात्, कादाचित्कसत्त्वस्योपलक्षणेपि सत्त्वात्, व्यावृत्तिबोधसमयेपि सत्त्वस्योपरिभ्रमत्काकादौ सत्त्वात् । ननु विशेष्यवृत्तित्वे सति व्यावर्तकत्वं विशेषणत्वं विशेष्यत्वं च न विशेषणवत्त्वं येनान्योन्याश्रयः किन्तु प्रत्याय्यव्यावृत्त्यधिकरणत्वम् न चोपरिभ्रमत्काकादेर्गृहादिविशेष्यवृत्तित्वमस्तीति चेन्न । जटाभिस्तापस इत्यत्रातिव्याप्तेः जटायास्तापसवृत्तित्वात् । अत एव विशेष्यतावच्छेदकसमानाधिकरणत्वेन प्रतीयमानत्वं विशेषणत्वमित्यपि निरस्तम् । जटाभिस्तापस इत्यत्र जटातापसत्वयोः सामानाधिकरण्यप्रतीतेः । विशेष्यवाचकपदसमानविभक्तिपदप्रतिपाद्यत्वन्तु काकवद्देवदत्तगृहमित्यत्रोपलक्षणे सर्वत्र तृतीयेति नियमाभावात् । अप्रयोगदशायां शब्दाघटितस्य विशेषणत्वमुपलक्षणस्य तु न विशिष्टधीविषयकत्वम् काकवन्तो देवदत्तगृहा इत्यत्र काकसत्त्वदशायामपि काकविषयत्वप्रतीतेर्भ्रान्तत्वापत्तेः तथाच तत्र तृणत्वादिरेव धर्मोभासतेऽत एव गङ्गायां घोष इत्यत्राप्युपलक्ष्यतीरविशेष्यस्यैव भानं न त्ववच्छेदकतयाप्युपलक्षणस्य प्रवाहस्य । नन्वेवं विशेषणत्वस्य बुद्धिगर्भत्वे तद्विषयिणी घटोऽयमित्यादिश्चाक्षुषी विशिष्टधीर्न स्याद्बुद्धेरचाक्षुषत्वादिति चेन्न । विशिष्टधियो विशेषणविषयत्वेपि विशेषणत्वाविषयकत्वादिति । ननु प्रतियोगिविशिष्टधीविषयत्वं विशेषणत्वमिति चेन्न । घटाभाव इत्यत्रोपलक्षणे प्रतियोगिविशिष्टधीविषयत्वादतिव्याप्तेः तत्र तृणत्वादेरिव भासमानस्य कस्यचिद्धर्मस्य वक्तुमशक्यतया घटस्याप्यभाने इतराभावविलक्षणघटाभावभानानुपपत्तेः । अपि च काकस्य शाक्योपस्था-

(से०)पितस्य शाब्दबोधाविषयत्वे प्रकारान्तरोपस्थितस्य तृणत्वादेस्त-द्विषयत्वे काकपदं लाक्षणिकं स्यात्। न च काकपदान्न तदुपस्थितिः प्रकारान्तरादिति न काकपदं लाक्षणिकमिति वाच्यम् प्रकारान्तर-स्याभावात् भावे वा गङ्गादिपदेऽपि तत्संभवेन लक्षणोच्छेदापत्तेः। प्र-कारान्तरोपस्थितस्य शाब्दबोधाविषयत्वान्नार्थाध्याहारतयानयना-पत्तेः। अपि च गंगायां घोष इत्यत्र गंगाया उपलक्षणत्वं न वा? आद्ये उपलक्षणप्रतिपादकगङ्गापदस्येव काकादिपदस्यापि लाक्षणिकत्वमे-वोचितम्। अन्त्ये गंगायामेवोपलक्षणलक्षणातिव्याप्तिः। व्यावर्तकत्वे सति क्रियान्वयित्वं विशेषणत्वं तद्भिन्नत्वमुपलक्षणलक्षणत्वमिति चे-न्न। घटवद्भूतलमित्यादौ क्रियाहीनेऽव्याप्तेः। न च क्रियाहीनस्य शा-ब्दबोधाविषयत्वमेव, अस्य मतस्य वेदाक्षरमात्रन्यासव्यासक्तचेतसा-मेवोचितत्वात् शाब्दबोध आवश्यकयोग्यतादेरेव प्रयोजकत्वात् शा-ब्दाप्रयोगदशायां विशेषणोपगतेश्च क्रियान्वयावगाहिशाब्दबोधावि-षयत्वात्। ननु घटोयमित्यादिविशिष्टबोधस्याघटव्यावृत्तोयमित्यादि-रर्थो न तु घटत्ववानित्यादिस्तत्कारणञ्च क्वचिद्विशेषणज्ञानं क्वचिदुपलक्षणज्ञानं तथाच विशिष्टबोधकारणज्ञानविषयत्वे सति प्रत्याय्यव्यावृत्तिसमानाधिकरणत्वं विशेषणत्वम् उपरिभ्रमत्काका-दि तु न व्यावृत्त्यधिकरणे गृहे तिष्ठतीति चेन्न। विशिष्टबोधस्यानु-व्यवसायानुरोधेनापोहवादपातभिया घटादृयुपस्थितिविलम्बेन च घटत्वादिमत्त्वादिविषयत्वस्यैव स्वीकर्तुमुचितत्वात् तापसवृत्तौ जटायामतिव्याप्तेश्च। साक्षात्सम्बन्धेन विशेष्यवृत्ति विशेषणम् पर-म्परासम्बन्धेन तु तथोपलक्षणम् उपरिभ्रमत्काकादि तु साक्षात्सम्ब-न्धेन गृहवृत्तीति चेन्न। गौरनित्य इत्यत्रोपलक्षणस्यापि गोत्वस्य साक्षात्सम्बद्धत्वात् अन्यथा गोत्वेप्यनित्यत्वापत्तेः। लोहितः स्फटि-क इत्यादौ परम्परासम्बद्धस्य लोहितेत्यादेर्विशेषणत्वाच्च। यत्स्व-यमन्वेति तद्विशेषणम् यदुपस्थापितमन्वेति तदुपलक्षणम्, दण्डी पुरुष इत्यादौ दण्डादेरेवान्वयात् काकवन्त इत्यादौ तदुपस्थापित-तृणत्वादेरन्वयादिति चेन्न। घटाभाव इत्यत्र प्रतियोगिन्युपलक्षणेऽ-तिव्याप्तिः तत्रोपस्थाप्याभावेनाभाववैलक्षण्याय तस्यैवान्वयात्। ननु व्यावृत्तिबोधसमये विशेष्यनिष्ठं व्यावर्तकं विशेष्येऽसच्चोपलक्षणं तत्काले तत्र सती जटा विशेषणमेवेति चेन्न रूपवति प्रतीति काले

(से.)घटे सत्त्वात् तस्माद्विशेषणत्वमुपलक्षणत्वञ्च पदार्थान्तरमेवेति चेत्

अत्राह प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकं व्यावर्तकं विशेषणम् अतथाभूतं च व्यावर्तकमुपलक्षणम् । दण्डी पुरुष इत्यत्र व्यावृत्त्यधिकरणताऽनतिप्रसक्तेन दण्डेनावच्छिद्यते न तु पुरुषत्वेनातिप्रसक्तेः । उपलक्षणे तु न काकादिभिर्व्यावृत्त्यधिकरणतावच्छेदस्तदभावेऽपि व्यावृत्तिप्रतीतेः, किन्तु तृणत्वादिना । घटाभाव इत्यत्रापि नाभावस्य व्यावृत्त्यधिकरणता घटेनावच्छिद्यते तत्रावृत्तेः किन्तु घटप्रतियोगिकत्वादिनान्येनैव । ननु व्यावृत्त्याप्रतीतौ व्यावृत्तिघटितस्य विशेषणत्वस्य प्रतीतिर्न स्यादिति चेन्न व्यावृत्तिप्रतीतावेव प्रतीतेरङ्गीकारात् । विशेष्यस्येतरान्वयप्रतियोगितावच्छेदकं व्यावर्तकं विशेषणम् दण्डिनमानयेत्यत्र हि पुरुषस्यानयनान्वयिता दण्डेनावच्छिद्यते । काकेन देवदत्तस्य गृहा इत्यत्र तु गृहस्य देवदत्तान्वयिता न काकेनावच्छिद्यते तदभावदशायामप्यन्वयसत्त्वावगमात्, किन्तु तत्परिचितेनोच्चतृणत्वादिना । अन्वयितावच्छेदकपरिचायकतयैवोपलक्षणस्य साफल्यमपि, घटाभावस्तिष्ठतीत्यादावपि प्रतियोगिनो नान्वयितावच्छेदकत्वमभावेऽवृत्तेः किन्तु तत्प्रतियोगिकत्वस्यैवेति वा । यदाधिकरणतया ज्ञात एव धर्मिणीतरान्वयधीस्तद्व्यावर्तकं विशेषणम्—दण्डिनमानयेत्यत्र दण्डस्तथैव दण्डाधिकरणत्वप्रतीत्यनन्तरमेवानयनान्वयात् । काकेन देवदत्तस्य गृहा इत्यत्र तु न तथा काकाभावदशायां काकाधिकरणतामप्रतीत्य तत्परिचितोच्चतृणत्वाधिकरणतां प्रतीत्य देवदत्तान्वयप्रतीतेः । घटाभावस्तिष्ठतीत्यत्रापि तथाऽभावे घटावृत्तेरिति वा । विशेष्यान्वयिना यस्यान्वयस्तद्व्यावर्तकं विशेषणमतथाभूतं तूपलक्षणम्, रूपवति सत्तेत्यत्र रूपं विशेषणं घट इव रूपेऽपि सत्त्वात् रूपवति रस इत्यत्र तूपलक्षणं घटे सतो रसस्य रूपेऽसत्त्वात् इति वा। व्यावर्तकपदस्थाने पदं (स्यानेकार्थत्वं) ? वेति चिन्तामणिकृतः। इदमादितो विचार्यते प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकत्वं विशेषणत्वमित्यत्र प्रत्याय्यत्वं स्वेन येन केनचिद्वा ? नाद्यः तावतैव व्यावर्तकत्वप्राप्तौ व्यावर्तकत्वविशेषणवैयर्थ्यात् । न द्वितीयः सत्या व्यावृत्तेः केनचिदवश्यम्प्रत्याय्यत्वे प्रत्याय्यत्वविशेषणवैयर्थ्यात् । व्यावर्तकत्वञ्च यदि व्यावृत्तिबुद्धिस्वरूपयोग्यत्वम्, तदा के-

(सि०) वलान्वयिनो धर्मस्य तद्वावश्यकमिति व्यर्थं विशेषणम्। अथ व्यावृत्ति बुद्ध्युपहितत्वन्तदा व्यावृत्तिबुद्ध्यनुपधानदशायामव्याप्तिः। अथ जनितव्यावृत्तिबोधत्वम् अस्मदाद्यज्ञातविशेषणेऽव्याप्तेः। योगाभ्यासेनव्यावृत्तिधीरिति चेन्न तेषां हेतोरिव साध्यस्यापि ज्ञानेन सिद्धसाधनेन व्यावृत्तिबुद्ध्यनुत्पत्तेः। नहि तेषां तर्करासिकत्वे मानमस्ति येन सिषाधयिषा भाव्येत। न च वैधर्म्यज्ञानसहकृतप्रत्यक्षेण भेदग्रहात्प्रत्यक्षसहकारितया भेदज्ञाने योगिनो विशेषणज्ञानस्योपयोगः। न च तन्निरपेक्षा एव योगजधर्मास्तेनेदं गृणन्तीति वाच्यम् वैयर्थ्यात्। ननु विशेषणोपलक्षणव्यतिरिक्तोपरञ्जकप्रमेयत्वादिव्यावृत्तये व्यावर्तकत्वं विशेषणम् प्रतियोगिप्रसिद्ध्या केवलान्वयिनामव्यार्तकत्वात्प्रत्याय्यकं वा व्यावृत्तेर्विशेषणमिति चेन्न व्यावृत्त्यधिकरणतावच्छेदकत्वेनैव तद्व्यावृत्तिलाभात् प्रतियोग्यप्रसिद्ध्या सकलप्रमेयगतव्यावृत्त्यप्रसिद्ध्या तदधिकरणतावच्छेदकत्वस्य प्रमेयत्वादावभावात्, अतिरिक्ताप्रसिद्ध्याऽनतिरिक्तत्वगर्भावच्छेदकत्वाप्रतीतेश्च। प्रतियोग्यभावेन व्यावृत्त्यभावेन तदधिकरणत्वाप्रतीत्या तदवच्छिन्नप्रत्ययजनकत्वस्याप्यवच्छेदकत्वस्याभावात्। यदपि विशेष्यगतेनान्वयप्रतियोगितावच्छेदकत्वे सति व्यावर्तकत्वं विशेषणत्वमिति, तदपि व्यावर्तकत्वपदवैयर्थ्यादेवापार्थकम्। न च प्रमेयमभिधेयमित्यत्रास्ति प्रमेयस्याभिधेयस्य चाभेदलक्षणोऽन्वयस्तत्प्रतियोगिनि प्रमेये तदवच्छिन्नत्तिप्रत्ययजनकत्वलक्षणं प्रमेयत्वे तद्व्यावृत्तये व्यावर्तकं विशेषणमिति वाच्यम्। शाब्दबोधमादायान्वयप्रतियोगितायां वाच्यायां शब्दाप्रयोगदशायां विशेषणत्वानापत्तेः, शब्दप्रयोगदशायामपि दण्डीत्येतावन्मात्रप्रयोगे दण्डस्याविशेषणत्वापत्तेः इतराभावेनेतरान्वयाभावात्। घटाभाववतीत्यत्र घटस्य विशेषणत्वापत्तेश्च-अभावोपस्थित्यन्वयप्रतियोगिताया घटेनैवावच्छेदात्। घटेन नावच्छिद्यतेऽभावेऽवृत्तेः किन्तु घटप्रतियोगिकत्वेन तत्तु विशेषणमेवेति चेन्न शब्दाप्रयोगदशायां विशेषणत्वानापत्तेः। नन्वन्वयस्सन्नेव शब्देन बोध्यते न तु क्रियते तथाच शब्दाप्रयोगदशायामप्यन्वयस्तत्प्रतियोगितातदवच्छेदकानि न दुर्मिलानि दण्डीत्येतावन्मात्रप्रयोगेऽपि न दोषो वास्तवस्थित्याद्यन्वयस्य तत्र सत्त्वादिति चेन्न अवच्छिन्नप्रत्ययजनकत्वं यद्यवच्छेद्याधिकरणाव-

(से०) च्छित्तिप्रत्ययजनकत्वं तदा तत्र न यात्येव अवच्छेद्याया अन्वयप्रतियोगितायाः अधिकरणप्रमेये प्रतियोग्यप्रसिद्ध्यावच्छिन्नत्वप्रसिद्धेः। यद्यवच्छेद्यावच्छिन्ने प्रत्ययजनकत्वं तदापि नावच्छेदकस्यावच्छेद्येऽविद्यमानस्य तदविच्छित्तिप्रत्ययत्वानुपपत्तेः। तदवच्छिन्नत्वादेव तदवच्छेद्यमितरेभ्यो व्यावर्तत इति चेन्न तदवच्छिन्नत्वस्य तद्व्यावर्तितत्वरूपतया साध्याविशेषात् अवच्छेद्यान्यूनानतिरिक्तवृत्तेरेवावच्छित्तिप्रत्ययजनकत्वात् तस्य चातिरिक्ताप्रसिद्ध्या प्रमेयत्वेऽसम्भवात् अन्यथातिरिक्तन्यूनवृत्तेरप्यवच्छित्तिप्रत्ययजनकत्वापत्तेः। तस्मादिदमपि लक्षणं लक्षणालक्षणेन व्यर्थविशेषणत्वेन ग्रस्तमिति न प्रशस्तम्। यदपि यदधिकरणतया ज्ञात एव धर्मिणि इतरान्वयधीस्तद्व्यावर्तकं विशेषणमिति, तदपि न—यदधिकरणताज्ञानं विना धर्मिणि यस्यान्वयो न ज्ञायते तद्विशेषणमित्यभिप्राये दण्डिनमानयेत्यस्य शाब्दबोधस्य विषये दण्डेतिविशेषणेऽव्याप्तेः दण्डाधिकरणताज्ञानं विना दण्डान्वयस्यैव ज्ञानात्। यदधिकरणताज्ञानं विना स्वेतरस्य कस्याप्यन्वयो न ज्ञायते इत्यर्थेऽपि दण्डादौ न याति सामग्रीवशेन पुरुषादौ दण्डाद्यधिकरणत्वमज्ञात्वापि कदाचिदानयनाद्यन्वयप्रतीतेः, अन्यथा पुरुषमानयेत्याद्यन्वयबोधानामुच्छेदापत्तेः। यदधिकरणत्वं ज्ञात्वेतरान्वयो ज्ञायते तद्विशेषणं, गच्छति च दण्डादौ कदाचिद्दण्डाद्यधिकरणं ज्ञात्वानयनाद्यन्वयप्रतीतेरन्यथा दण्डिनमानयेत्यादिबोधानामुच्छेदापत्तेरिति चेन्न इतरतया ज्ञानदशायां विशेषणत्वापत्तेः। यदपि विशेष्यान्वयिना यस्यान्वयः स व्यावर्तको धर्मो भावविशेषणमिति। तदपि न द्योतते—रूपवान्रस इत्यत्र रूपस्य विशेषणतापत्तेः। विशेष्यान्वयिना प्रमेयत्वेनास्यान्वयात्। प्रमेयत्वे रूपं विशेषणमेव रसे तूपलक्षणमिति चेन्न एवं हि विशेष्यान्वयिना येन यदन्वीयते तस्य तद्विशेषणमित्यर्थे रूपवति सत्तेत्यत्र सत्ताया रूपं विशेषणं स्यादिति रूपस्य घटविशेषणत्वानापत्तेरिति॥

अत्रोच्यते—धर्मस्तावत्त्रिविधो—विशेषणमुपलक्षणमुपरञ्जकञ्चेति भेदात्। तत्रोपरञ्जकं स्वोपरक्तबुद्धिजनकं यथा प्रमेयत्वादि। विशेषणं तद्यत् स्वतो व्यावर्तकं यथा दण्डादि। यत्तु व्यावर्तकस्योष्णत्वादेः परिचायकं काकादि तदुपलक्षणम्। एवं च काकाद्यपि यदि

(से०)स्वतो व्यावर्तयति तदा विशेषणमेव। दण्डाद्यपि यदा व्यावर्तकं प्रत्याययति तदोपलक्षणमेव, प्रतियोग्यभावस्य यदा स्वतो व्यावर्तकस्तदा विशेषणं यदा तु स्वप्रतियोगिकत्वादिव्यावर्तकमुपस्थापयति तदोपलक्षणमेव। न च यत्रोपलक्ष्यतावच्छेदकन्नास्ति तत्रोपलक्षणस्यैव व्यावर्तकतया विशेषणत्वापत्तिः, असाधारणधर्मशून्यस्य धर्मिणोऽभावेन कस्यचिदसाधारणधर्मस्यावश्यकतया तस्यैवोपलक्ष्यतावच्छेदकत्वात् 'न हि निर्विशेषं सामान्यमिति' न्यायात्। यदा तु स्वत एव व्यावर्तयति तदा तत्र विशेषणत्वमेव। व्यावर्तयतीत्युपलक्षणमिति शब्दार्थपर्यालोचनयापि तथार्थलाभात् रूपवान्स रूपवान् सरस—इत्यत्र रूपस्य विशेषणतोपलक्षणते तु यदन्वयिना यदन्वीयते तत्तस्य विशेषणमन्वयि तूपलक्षणमिति लक्षणे कृते, एवञ्च विशेषणोपलक्षणशब्दो नानार्थ एवेति न तद्व्यवहारोऽपार्थक इति निर्गततत्त्वसर्वस्वसङ्क्षेपः।

(१९)कारणत्वमपि न तत्त्वान्तरङ्कार्य्यकारणभावस्यैवाभावादित्येके। तथाहि—यैः कारणैर्य उत्पद्यते तेषां सर्वेषां सदातनत्वे विलम्बप्रयोजकविलम्बप्रतियोगिनोऽभावेनाद्यजातस्यासत्त्वकालेऽपि सत्ता स्यात्, कस्यचित् कारणस्य सत्त्वे तु कारणपरम्पराया अविश्रान्ताधनवस्था विश्रान्तौ तु तदेव प्राक्तनत्वमद्योत्पन्नस्येति।

तन्न। कार्य्यकारणभावाभावे भावानाङ्कादाचित्कत्वव्याहतेः। अनवस्थायास्तु प्रमाणेन परिगृहीततयाऽदोषत्वात्। उपाधिरूपसामान्यान्तर्गततया पार्थक्यमिति तु सम्यक्।

ननु किमिदं कारणत्वं? न तावत् जातिमत्त्वं, सामान्यादावव्याप्तेः ससम्बन्धिकत्वाच्च। कस्येदङ्कारणमिति जिज्ञासायाः कारणमिति श्रवणोत्तरमावश्यकत्वात्सत्ताजातिमदित्याकर्णनादनु च तदभावात्। अत एव न स्वरूपत्वमपि तत्त्वम्। नापि पूर्ववर्त्तित्वं रासभादेर्घटकारणतापत्तेः। नापि नियतपूर्ववर्त्तित्वमन्यथासिद्धेऽवच्छेदकादौ गतम्। नाप्यनन्यथासिद्धत्वे सति नियतपूर्ववर्तिमनन्यथासिद्धत्वं ह्यन्यथासिद्धभिन्नत्वमित्यन्यथासिद्धत्वज्ञानसापेक्षत्वात्तस्य चानिर्वचनात्। करणत्वरहिततया प्रमितत्वमन्यथासिद्धत्वन्तद्भिन्नत्वमनन्यथासिद्धत्वमिति चेन्न आत्माश्रयात्। अपि च पूर्ववर्तित्वं प्रागभावावच्छिन्नसमयवर्त्तित्वम्। तत्र

(से०)प्रागभावस्य विशेषणत्वे प्रागभावे दण्डादौ चाव्याप्तिरात्माश्रयेण प्रमाणाभावेन च प्रागभावे तेषां प्रवृत्तेः । उपलक्षणत्वे प्रागभावे तस्मिन्नेव समयेऽव्याप्तिरात्माश्रयेण तत्र तस्यावृत्तेरिति चेन्न ।

अन्यथासिद्धिश्च—अन्यम्पुरस्कृत्य यस्य पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्येका, यथा तन्तुरूपस्य पटं प्रति तन्तुरूपत्वेन पूर्ववर्त्तिताग्रहे तत्र तन्तुम्पुरस्कृत्य तन्तुरूपस्य पूर्ववर्तिताग्रहात् । यमादायैवान्यस्य पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्यन्या, यथा दण्डत्वेन पूर्ववर्त्तिताग्रहे तत्र दण्डत्वमादायैव दण्डस्य पूर्ववर्त्तिताग्रहात् । अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्य्यसम्भवे तत्सहभूतत्वमित्यपरा, यथा घटविशेषत्वेन रासभत्वेन कार्य्यकारणभावे वाच्ये पूर्ववर्तिभिर्दण्डचक्रादिभीरासभानुत्तरो घटस्तैरस्यापि सम्भवात् । अवश्यकल्पमानपूर्ववर्तिभिर्दण्डाभिरन्यथासिद्धत्वमितीतरा, यथा गन्धं प्रति गन्धप्रागभावस्य आवश्यकतया रूपादिप्रागभावानामन्यथासिद्धिः। अनयोरन्यथासिद्ध्योः कल्पमानविषयपूर्ववर्तिन एव कार्य्यसम्भवे तत्सहभूतत्वमन्यथासिद्धत्वमित्यनेन रूपेणैकत्वमेव न तु द्वैतमिति केचित् । जन्यपूर्ववर्तित्वे गृहीते यस्य पूर्ववर्तिता गृह्यते तदन्यथासिद्धमिति परा, यथा कुलालपितृत्वेन जनकतायाकुलालपिता—जन्यकुलालस्य पूर्ववर्तित्वग्रहे जनकस्य तत्पितुष्प्रतीतेः। आकाशे त्वन्यम्प्रति पूर्ववर्तित्वे गृहीते यत्रान्यम्प्रति पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्यन्यथासिद्धिः । आकाशस्य ह्याकाशत्वेन कारणत्वं वाच्यम् तच्च शब्दसमवायिकारणत्वरूपतया शब्दपूर्ववर्तितागर्भमिति शब्दपूर्ववर्तित्वे गृहीते घटादिपूर्ववर्तिताग्रहादिति प्राञ्चः ।

अत्र पितृचरणाः—शब्दम्प्रति पूर्ववर्तित्वे गृहीते यत्रान्येति प्रोक्तेन रूपेणाकाशस्य कारणता न तावत्पूर्वोक्तेनाकाशत्वेनैव, आत्माश्रयात् । अष्टद्रव्यातिरिक्तद्रव्यत्वेन चेत्, तदा घटादावप्याप्तिस्तथासति पूर्वोक्तान्यथासिद्धेरभावात् । यदन्यथा कारणत्वेन सिद्ध्यति तदन्यत्रान्यथासिद्धं सिद्ध्यति च शब्दकारणत्वेनाकाश इति घटादावन्यथासिद्ध इति चेन्न यदन्यकारणत्वेनैव सिद्ध्यति इति विवक्षिते नाकाशस्य घटादावन्यथासिद्धत्वं स्यात् शब्दः क्वचिदाश्रितो गुणत्वादित्यादिना प्रकारान्तरेणापि सिद्धेः । नियमाविवक्षा-

(से०)यान्तु घटादेरपि कदाचित्स्वरूपकारणतया सिद्धौ स्वरसादा-न्यथासिद्धिः स्यात् तस्मादवश्यकल्प्यमाननियतपूर्ववर्तिन एवेत्यादिरेवान्यथासिद्धिस्तत्र तस्यापि प्रमाणसिद्धतयाऽवश्यकल्प्यमानैरन्यैः कार्यासम्भवदिति परिशीलयन्ति । तस्मादन्यथासिद्धिराहित्ये सति नियतपूर्ववर्तित्वमेव कारणत्वमिति । न च समयेऽव्याप्तिः,प्रामाणिकस्यात्माश्रयस्यादोषत्वेन तत्र तद्वृत्तौ बाधकाभावात । न च प्रागभावस्य प्रतियोगिजनकाभावतयाऽऽत्माश्रयः, सत्ताभावत्वरूपत्वेऽपि सत्तात्वस्य ध्वंसप्रतियोगिरूपतया ध्वंसत्वस्य सकारणकाभावत्वरूपतया सः, जन्यानाधारसमयानाधारत्वरूपत्वेऽपि अनाधारत्वस्याधारान्योन्याभाववत्त्वरूपतया तस्य प्रतियोगितावच्छेदकारोपहेतुत्वगर्भतया सः, महाप्रलयासद्भावत्वरूपत्व भावकार्यानाधारसमयस्य तु महाप्रलयत्वरूपतया सः, ध्वंस तिरिक्तगुणवृत्तिसर्गाभावविभाजकोपाधिशून्यसमयस्य महाप्रलयसंसर्गाभावत्वरूपत्वे संसर्गाभावत्वस्य प्रतियोग्यारोपहेतुकत्वगर्भतया सः, एवमन्यथासिद्धत्वनिर्वचनेऽन्योन्याभावात्यन्ताभावान्यतरप्रवेशेन सः, एवन्नियतत्वस्य व्याप्तिगर्भतया व्याप्तेरत्यन्ताभावान्योन्याभावान्यतरगर्भतया सः, एवमन्यथासिद्धत्वेन च सतीत्यत्र समानाधिकरणप्राप्त्या तस्य सम्बन्धगर्भतया तत्र जनकत्वप्रवेशेनापि स इति वाच्यम् । प्रागभावत्वादीनामखण्डानां स्वीकारात् । नियतपदोपादानन्तु घटमात्रे रासभकारणतावारणाय तत्रान्यत्र पटादौ क्लृप्तनियतपूर्ववर्तिनो वेमप्रभृतेरसम्भवासम्भवेनान्यथासिद्धेरसम्भवात् । नन्ववच्छेदकस्यान्यथासिद्धत्वे इन्द्रियसन्निकर्षत्वेन कारणतायामिन्द्रियमन्यथासिद्धं स्यादिति चेन्न । विनिगमनाविरहातिरिक्तस्थलेऽवच्छेदकस्यान्यथासिद्धत्वात्, अत्रेन्द्रियसन्निकर्षत्वेन सन्निकर्षत्वेन सन्निकृष्टेन्द्रियत्वेन वा कारणतायां विनिगमकाभावात् ।

ननु यत्पुरस्कृत्येत्यस्य कोऽर्थो यस्य पूर्ववर्तित्वे गृहीते इति वा यस्मिन्गृहीत इति वा येन रूपेणेति वा ? नाद्यः—जन्यपूर्ववर्तित्वे गृहीते यत्र जनकस्य पूर्ववर्तिता गृह्यते तत्रान्यथासिद्धिरित्यत्र तथा सत्यन्यपूर्ववर्तित्वे गृहीते यत्रान्यस्य पूर्ववर्तिता गृह्यते तत्रान्यथासिद्धिरित्यर्थस्यौचित्ये अन्यथासिद्धिद्वयकल्पनानौ-

(से०)चित्यात् । नापरौ–तथा सत्यवच्छेदकत्वलक्षणायामन्यथासिद्धौ पर्यवसानाद्यमाद्यायैवेत्यत्राप्येतदन्यतरस्यार्थस्य वाच्यत्वात्तथापत्तिश्च तयोरेवान्यथासिद्धापत्तेः । किञ्चान्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वमन्यथासिद्धत्वमित्यस्य कोऽर्थः ? तस्यैवोत्पादकत्वेऽस्य किमित्युत्पादकत्वमिति यदि, तदा प्रकृतकार्यानुत्पादकत्वमन्यथासिद्धत्वं पर्यवस्यति, अनुत्पादकत्वञ्चोत्पादकत्वाभावः तच्चोत्पत्तिकारणत्वमित्यात्माश्रयः । यतोऽन्यत एव कार्यसंभावनाऽतः प्रकृतमन्यथासिद्धमिति चेदेवं हि सहृदयविचारेण प्रकृतकार्यव्यतिरेकप्रयोजकव्यतिरेकाप्रतियोगित्वमन्यथासिद्धत्वं पर्यवस्यति, तथासति नित्यविभूनां तदापत्तिः।अन्यत्र क्लृप्तं सकलं यत्र कार्ये तत्रान्यदन्यथासिद्धम्, भवति हि रासभस्तथाऽन्यत्र घटे क्लृप्तस्य दंडचक्रादेः प्रकृतघटेऽपि सत्त्वात्, न च विजातीयकार्ययोर्विशेषकारणयोस्तथात्वमेकत्र कार्ये क्लृप्तस्य विशेषकारणस्यापरत्राभावात् तथाच कार्यान्तरक्लृप्तसकलनियतपूर्ववर्तित्वमव्यवहितत्वमेवान्यथासिद्धत्वमिति पर्यवस्यतीति चेत् । अवश्यकल्प्यमाननियतपूर्ववर्तिन एव कार्यसंभवे इत्यादेरर्थनिर्वचनात् । यत्सत्त्वेऽप्यन्यदावश्यकन्तदन्यथासिद्धं यथा रूपप्रागभावसत्त्वेऽपि ध्वंसप्रागभावस्यावश्यकतया गन्धं प्रति रूपप्रागभाव इत्यर्थ इति चेन्न दण्डसत्त्वे चक्रस्यावश्यकतया दण्डस्यान्यथासिद्धत्वापत्तेः । तादृशमनावश्यकमन्यथासिद्धमिति चेन्न एवं ह्यनावश्यकत्वमात्रस्यैव तादृशत्वे शेषवैफल्यात् । किञ्च प्रकृतकार्यानावश्यकमन्यथासिद्धमित्येतावतैव सर्वान्यथासिद्धानामुपसङ्ग्रहे किमिति पञ्चधा त्रेधा वाऽन्यथासिद्धिः। एवमेव कल्पमानविषयनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वमन्यथासिद्धमित्यस्याप्यर्थः प्रष्टव्य इति दूषणञ्च । यदि पूर्वोक्तश्चार्थस्तदा पूर्वोक्तमेव । अपि च जन्यपूर्ववर्तित्वे गृहीते यत्र जनकस्य पूर्ववर्तिता गृह्यते तत्र जनकमन्यथासिद्धमित्यन्यथासिद्धौ जनकत्वस्य प्रवेशात्तद्विरहगर्भजनकत्वलक्षणजन्यपूर्ववर्त्तित्वे गृहीते यस्य पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्येतावन्मात्रकरणे जन्यत्वस्य प्रकृतजन्यत्वरूपतया तस्य च प्रकृतकारणकत्वरूपतयाऽऽत्माश्रयः । स्वकरणकपूर्ववर्तित्वे गृहीते यस्य पूर्ववर्तिता गृह्यते इत्यर्थपर्यवसानात् प्रकृतजन्यत्वे कथं प्रकृतकारणकत्वमिति चेत्, विवक्षितविवेके-

(से०) न तथैव पर्यवसानात्। तथाहि—न तावदुत्तरक्षणे नियमतो विद्यमानत्वं तज्जन्यत्वं घटे दण्डाजन्यत्वापत्तेः सर्वत्र दण्डोत्तरक्षणे घटासत्त्वात् चक्रादिसमवधानकालीनदण्डोत्तरक्षण एव घटसत्त्वा-त्तदसमवधानकालीनदण्डोत्तरक्षणे घटासत्त्वात्। तदुत्तरसमयासत्त्वं तत्साध्यत्वमिति चेन्न अनुत्तरसमयाप्रसिद्ध्या शब्द आकाशसाध्य-त्वानापत्तेः। तदभावव्यापकाभावप्रतियोगित्वं तत्साध्यत्वमिति चेन्न आकाशाभावाप्रसिद्धेः पूर्वोक्तदोषात् रूपाभावव्यापकाभावप्र-तियोगिनि रसे रूपसाध्यत्वापत्तेश्च। नापि यस्य समयसम्बन्धो यदवधिकोत्तरत्वव्याप्यः स तज्जन्य इति वाच्यम् उत्तरत्वव्याप्यता ह्युत्तरत्वाऽनधिकरणकालावृत्तित्वं तस्य चाका-शेऽप्रसिद्धेः तस्मात्तत्कारणकत्वमेव तज्जन्यत्वमित्यात्माश्रयात्। ननु स्वकालत्वसमानाधिकरणात्यन्ताभावाप्रतियोगितदुत्तरत्वं तत्साध्यत्वं गच्छति वै तच्छब्देप्याकाशाधिकरणक्षणोत्तरत्वस्य श-ब्दकालत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वादिति चेन्न अन्यथा सिद्धानियतपूर्ववर्तिजन्यतापत्तेः। अन्यथासिद्धाद्यस्माद्यन्नियतोत्तर-भावि तत्तज्जन्यमिति चेदेवं ह्यन्यथासिद्धिलक्षणेऽन्यथासिद्धिप्रवे-शेनात्माश्रयात् तस्मादन्यथासिद्धेर्दुरूहतया तद्व्यतिरेकगर्भकारणत्व-मशक्यज्ञानमिति चेन्न कार्यकारणभावस्य स्वरूपसम्बन्धविशेषरू-पत्वात्। यथा स्वरूपसम्बन्धः प्रतियोग्यनुयोगिभावः क्वचिद्विषय-विषयिभावः क्वचिदन्यस्तथा कार्यकारणभावात्मापि सः। न च व्यञ्जकत्वेन कस्यचिदावश्यकतया स एव कार्यकारणभावोऽ-स्त्विति वाच्यम् व्यञ्जकं विनापि प्रतियोग्यनुयोगिभावादिस्वीका-रात्। नन्वस्तु स्वरूपसम्बन्ध एव तर्हि पृथक् पदार्थः, स्वरूपस-म्बन्धस्य धर्मिद्वयात्मत्वे स्वरूपसम्बन्धित्वं तथास्तु। तथाहि-नैत-ज्जातिः निज्जातौ सामान्यादावभावपर्यन्ते सत्त्वात्। तर्हि सामा-न्याद्यभावादिना तस्यान्यः सम्बन्धो, न च संयोगसमवायौ विना विशिष्टप्रतीतिजननयोग्यत्वं तत्त्वमिति वाच्यम वाच्यवाचक-भावेऽतिव्याप्तेः तस्येश्वरेच्छानुरूपतया स्वरूपसम्बन्धत्वाभावात्। धर्म्यतिरिक्तसम्बन्धं विना विशिष्टप्रतीतिजननयोग्यत्वं स्वरूपसम्ब-न्धत्वमिति चेन्न। विशिष्टप्रतीतिजननयोग्यत्वं हि तज्जनकतावच्छे-दकधर्मवत्त्वम्। स च धर्मः क्वचिदनुगतः क्लृप्तपदार्थसार्थान्तर्भूतो

June 1926.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 342.

## वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

**प्रशस्तपादभाष्यम् ।**

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया
महामहोपाध्यायपद्मनाभमिश्रकृतया सेतुव्याख्यया
विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया व्योमवत्या च समन्वितम् ।
वाराणसीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षेण पं० गोपी-
नाथकविराजेन न्यायोपाध्यायदुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

## PRASASTÂPADABHÂSHYAM

BY Praśastadevâchârya

WITH COMMENTARIES:

Sūkti,-BY JAGADISA TARKALANKÂRA,
Setu,-BY PADMANABHA MISRA, &
Vyomavati,-BY VYOMASIVACHARYA.

*Edited by*

GOPINATH KAVIRAJ, M. A.
LIBRARIAN GOVERNMENT SANSKRIT LIBRARY,
SARASVATI BHAVAN BENARES,
and
DHUNDHIRAJ SHASTRI Nyayopâdhyâya.

FASCICULUS II—२.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1925.

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

वक्तुं शक्यते। स च घटाभाव इत्यत्र घटे घटत्वमभावे च तद्भावत्वं तादृशो धर्मः एवम्पटाभावादावपि। न चैवमननुगम इति वाच्यम्, अतीन्द्रियस्थले विशिष्टप्रतीत्यजनकतया धर्मिणः स्वरूपसम्बन्धाभावापत्तेः। सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिविषयतया योग्यत्वमिति घटाभावे पटाभाव इति प्रतीयमाने घटप्रतियोगिकत्वापत्तेः। प्रतीतिस्थले प्रमितिः प्रक्षेप्तव्येति अधिकरणस्य प्रतियोगिमत्तादशायामभावसम्बन्धेन सामयिकात्यन्ताभावेन स्वसम्बन्धापत्तेः—स्वतःप्रमितिविषयत्वाभावेऽपि परतः प्रमितिविषयत्वसत्त्वेन प्रमितिविषयतायोग्यतासत्त्वात्। योग्यतामनन्तर्भाव्यैव लक्षणं भावनीयमिति प्रमित्यभावदशायां स्वसम्बन्धानापत्तेः प्रमितेरसार्वदिकत्वात्, सम्बन्धे सति प्रमितिः प्रमितौ सत्यां सम्बन्ध इत्यन्योन्याश्रयाच्च। न चेश्वरप्रमितिमादाय प्रमितिकादाचित्कत्वकृतदोषप्रमोषे इति वाच्यम्। अन्योन्याश्रयापसारणस्यासम्भवात्। अपि च यतः सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वमेव स्वरूपसम्बन्धस्ततो घटाभाववद्भूतलमित्यस्या बुद्धेरचाक्षुषत्वापत्तिः विषयस्य सम्बन्धस्य प्रतीतिगर्भत्वात्। न च स तदा घट इत्यादिप्रतीतीनामदृष्टस्यातीन्द्रियतया न्यायनयेऽपि मम शरीरमिति प्रतीतेरभावप्रसङ्ग इति वाच्यम्, अन्योन्याश्रयस्य तादवस्थ्यादिति—धर्मिद्वयात्मकसम्बन्धस्यैव सम्बन्धत्वात्। यथा संयोगसम्बन्धो न घटादिः स्वभावस्य नियोगपर्यनुयोगानर्हत्वात्, तथा क्वचिद्व धर्मिणौ सम्बन्धौ वैशिष्ट्याख्यसम्बन्धान्तरकल्पनायामनवस्थाभयेन क्वचिद्धर्मिणि पर्यवसानस्यावश्यकत्वात्। न च स्वस्वसम्बन्धेन कथं सम्बद्धत्वं, प्रतीत्यनुसारेणात्माश्रयस्य प्रमाणपरिगृहीतत्वात् अन्यथा प्रमेयत्वाभिधेयत्वज्ञेयत्वादीनां केवलान्वयित्वं न स्यादिति सङ्क्षेपः।

ननु कथं सप्तैव पदार्थाः तत्तेदन्तयोः क्लृप्तपदार्थानन्तर्गतयोः सत्त्वात्। तथाहि—न तावदतीतसमयसम्बन्धस्तत्ताऽनागतमनुमानादिनानुभूय स्मरतः प्रत्यभिजानानस्य वा स इति प्रयोक्तृत्वादतीतसमयसम्बन्धावगमे संशयविपर्ययात्मकतत्ताव्यतिरेकोल्लेखिज्ञानदर्शनाच्च। नाथमतीतसमयसम्बद्ध इति ज्ञानेऽपि स प्रत्यक्ष इति प्रयोगाच्च, अतीतसमयसम्बद्धस्स इति सहप्रयोगानुपपत्तेश्च, काले कालसम्बन्धाभावेन स इति सहप्रयोगानुपपत्तेश्च। ज्ञातधर्मवैशिष्ट्यमेव—पूर्वं धर्मज्ञानं वि-

ना स इत्यप्रयोगात् इति चेत्, पूर्वन्तद्धर्मवत्तया ज्ञाते तद्धर्मेऽज्ञाते धर्मिणि स इति प्रयोगापत्तेः। तद्धर्मवत्तया ज्ञानमपेक्षितमिति चेत्, असौ ज्ञातधर्मवान् स्मर्यमाणत्वादित्यनुमाने स इति प्रयोगापत्तेः। अत एव धर्मे वैशिष्ट्यमपि न प्रत्यक्षतोऽनुमानादितो वा रूपादिमत्त्वं परिच्छिद्य, स इत्यप्रयोगात्। अतीतज्ञानवैशिष्ट्यमिति चेत्, परवाक्यादसौ मया पूर्वदिवसे ज्ञात इत्यवधृत्यापि स इत्यप्रयोगात्। स्वीयज्ञानं विवक्षितमिति चेत्, जन्मान्तरावधृते स इति प्रयोगापत्तेः। एतज्जन्मनि स्वीयज्ञानं विवक्षितमिति चेत्, मया ज्ञातमित्यवधृतेऽपि स इत्यप्रयोगात्, पूर्वज्ञानेऽज्ञातनष्टे स इति स्मरणानुपपत्तेः। अत एव ज्ञानपदस्थानेऽनुभवपदप्रक्षेपोऽपि परास्तः। समयज्ञानादिसाधारणातीतधर्मवैशिष्ट्यन्तत्ता। अतीतधर्मविशिष्टस्स इति सद्प्रयोगस्तु धर्मभेदेनैव। एकस्य निश्चयेऽपि संशयादिर्धर्मान्तरमादायेति चेन्न, अनुभवगृहीतधर्मस्यातीतत्वात् गृहे स इति प्रयोगानापत्तेः। तस्मात्तत्ता तत्त्वान्तरमिति। इदन्तापि च तथा। तथाहि–न सा गुणादीननुमायेदमित्यप्रयोगात्। न चेदन्ता सैव तच्छब्दप्रयोगे तु तस्याप्रात्यक्षिकं ज्ञानं कारणमिति वाच्यम्। व्यवहारं प्रति व्यवहर्तव्यज्ञानत्वेनैव लाघवेन कारणत्वात्। अपि च द्रव्ये गुणादिरिदन्ता गुणादौ तु का? नतावदेतद्व्यक्त्याश्रयत्वम्, इतमेतदोश्पर्यायत्वादिति चेत्।

अभावत्ववत्तत्तेदन्त्वादिरखण्ड उपाधिः। अयमित्यनुभवेनानुभूयमानेदन्तायां स इति स्मरणेन तत्ताभेद आरोप्यते, तत्ताप्रमा तु प्रत्यभिज्ञा तत्र तत्ताभेदस्येदन्तायामनारोपात्। एवञ्चानुभवाविषयोऽपि तत्ता स्मृतौ परिस्फुरतीति स्मृतिः यथाऽनुभूतेदन्ताया ततो भेदमवभासयतीत्यपदार्थः। अत एव च स्मृतिकरणस्य न प्रमाणे परिगणनमिति केचिदाहुः। तत एवं हि संस्काराविषयस्यापि स्मृतौ भाने इदन्तायास्तत्तात्वेन भानकल्पनाया अनुचितत्वात् तथा सति तत्तात्वस्यापि भानापत्तेः। तद्भानस्य चानुव्यवसीयमानत्वेनाप्रामाणिकत्वात् स्मरणसमानसामग्रीप्रसूतायाम्प्रत्यभिज्ञायामिदन्ताया तत्ताभेदारोप इत्यत्र च बीजाभावः। तत्रेदन्ताया पृथक् स्फुरणाद्विशेषदर्शनात्प्रत्यक्षात्मकतत्सामग्रीसत्त्वात् तस्याः पृथक् स्फुरणमिति नारोप इति। न चेदन्तायाः तत्तया प्रत्यभिज्ञानं, संस्कारानुपस्थिताया इन्द्रिययोग्यतया भाने

प्रत्यक्षमात्रे तत्तास्फुरणापत्तेरारोपविषयेदन्तोपस्थित्यर्थमपि तत्र संस्कारानुपयोगात्। अपि च स्मृताविदन्ताया तत्ताभेदारोपे प्रापविषयारोपयोर्ज्ञानत्वेनेदन्तातत्तयोः स्फुरणं स्यात्। न च स्मृतिक्षये भ्रमे विलक्षणैव सामग्री प्रत्यक्षभ्रम एवारोपविषयादिज्ञानस्य कारणत्वात्, अन्यथा भ्रमोत्तरस्मरणेऽपि तदापत्तेरिति वाच्यम्, विशेषणज्ञानत्वेन तत्तापरिस्फुरणस्यावश्यं वाच्यत्वात्। नहि विशेषणज्ञानं विना विशिष्टबोधः, मतान्तरे तु पूर्वानुभवविशेषणज्ञानमिति न कोपि दोष इति।

अत्र चिन्तामणिकृतः—स्मृत्यनुभवयोस्समानविषयत्वानुरोधेन तत्तेदन्तयोरभेदं एव। न चैवं स इत्यनुभवोऽयमिति स्मरणं स्यादिति वाच्यम्, अनुभवस्य तत्ताविषयत्वे स्मरणस्येदन्ताविषयत्वे आपाद्यमान इष्टापत्तेः। अनुभवानुत्तरं स इति स्मरणानुत्तरं अयमिति च प्रयोगः स्यात् व्यवहर्तव्यज्ञानस्य वृत्तत्वादिति चेत्, प्रत्यक्षज्ञानस्येदमिति शब्दप्रयोगे संस्कारजज्ञानस्य तदितिशब्दप्रयोगे कारणत्वात्, अत एव प्रत्यभिज्ञाया उभयविधत्वादुभयशाब्दप्रयोगोऽनुभवे संस्कारसत्त्वाभावान्न ततः स इति प्रयोगः,स्मरणस्य प्रत्यक्षत्वाभावान्न ततोऽयमिति प्रयोगः। न च व्यवहर्तव्यज्ञानत्वेन लाघवेन व्यवहारकारणत्वात् घटादिव्यवहारे तथा दर्शनात् कथमत्रेत्थमिति वाच्यम्, प्रत्यक्षादेवायमिति प्रयोगस्य संस्कारसमुत्थादेव स इति प्रयोगस्य दर्शनेनान्वयव्यतिरेकाभ्यामनुभवस्मरणयोः समानविषयतयाऽनन्यगत्या च तथा कल्पनात्। स च तत्तेदन्तात्मको धर्मस्समयो वा क्लृप्तं गुणादिरूपं धर्मान्तरं वा न तु तत्त्वान्तरम्। न चैवं स रूपवानयं रूपवानित्यादिः सह प्रयोगो न स्यादिति वाच्यम्। गुणवान् रूपवानित्यादिवद्धर्मभेदेनोपपत्तेः। यद्वा यो धर्मोऽनुभवेन वर्तमानतयाऽवसितः स एव स्मरणेनातीततयाऽध्यवसीयत इति विषयकृत एव स्मरणानुभवयोर्भेदः, एवं च स इति स्मरणे पूर्वानुभवविषयोऽतीतवाचकास्तिसंस्कारस्य धर्मिग्राहकमानेन तथैव सामर्थ्याध्यवसायात्। चिरविनष्टस्यानुभवस्य कालान्तरीयस्मृतिजनकत्वान्यथाऽनुपपत्त्या हि स कल्प्यते, यावता विना स्मृतिर्नोपपद्यते तावत्सामर्थ्यवानेवोपकल्प्यते। तथा च भिन्नविषयकत्वादेवायमित्यनुभवान्न स इति प्रयोगः, स इति

स्मरणाद्वा नायमिति। अननुभूतातीतांशेऽपि स्मृतित्वमेव स्मृतेः संस्कारासाधारणकज्ञानत्वस्यैव स्मृतित्वप्रयोजकत्वादित्याहुः।

वस्तुतस्तु प्रत्यभिज्ञा स्थैर्यसाक्षिणीति सर्वसाक्षिकम्, "स्थैर्यदृष्ट्योर्न सन्देहः" इति कुसुमाञ्जलावप्याचार्यलिखनात्। तच्च तस्या एकस्या एकस्य नानाकालसम्बन्धित्वविषयत्व उपपद्यते। एवञ्च-स एवायं घट इति-अस्या प्रत्यभिज्ञाया पूर्वकालीनाभिन्नएतत्कालीनो घट इत्यर्थः। तथाच पूर्वकालावस्थितत्वमेव तत्ता कालस्य च पूर्वत्वं पूर्वानुभवविषय एव स्मृतौ परिस्फुरति। इदन्ता च वर्तमानकालसम्बन्धः। तथा च प्रत्यभिज्ञयैकस्मिन्धर्मिणि पूर्वापरकालसम्बन्धयोः स्फुटीकरणात् स्थैर्यमुन्मीलति। न चैवं स पूर्वकालीनोऽयमेतत्कालीन इत्यादिः सह प्रयोगो न स्यादिति वाच्यम्, अभिन्ने भेदभ्रमेण तथाभिधानात्। न च पूर्वकालवैशिष्ट्यस्य वर्तमानकालवैशिष्ट्यस्य वानुमानादिना परिच्छेदे स इत्ययमिति च प्रयोगः स्यादिति वाच्यम्, कारणविशेषसमुद्भूतयोरेव ज्ञानयोस्तत्प्रयोगहेतुत्वात्। यन्मते तत्तेदन्तयोरभेदः पूर्वधर्मस्यातीतत्वं वा तत्तेदन्तयोरखण्डोपाधित्वं वा पदार्थान्तरत्वं वा तन्मतेऽप्यस्मिन्प्रयोगातिप्रसङ्गस्यैव समाधानस्य वाच्यत्वात्, नहि तत्तेदन्तादयः स्मृतिप्रत्यक्षानुभवयोः परिस्फुरन्तीति वक्तुं शक्यत इति संक्षेपः।

प्राचां मते ईश्वरस्यापि प्रत्यक्षप्रमाणता, तत्रापि द्रव्यतैव। अनुमानन्तु व्याप्तिज्ञानमिति चिन्तामणिकृतः। व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति वाचस्पतिमिश्राः। परामृश्यमानलिङ्गमित्याचार्याः। तत्राद्यद्वयं ज्ञानगुण एव, तृतीयन्तु यथायथं धूमादिस्वरूपद्रव्याद्यन्तर्गतमेव। उपमानमपि सादृश्यादिज्ञानमिति चिन्तामणिकृतः। अतिदेशवाक्यार्थस्मरणमिति वाचस्पतिमिश्राः। ज्ञायमानं सादृश्यादीत्याचार्याः। तत्राद्यद्वयं ज्ञानमेव, तृतीयं सादृश्याद्येव सादृश्यं वस्त्वन्तर्भावितमेव। शब्दप्रमाणमपि पदज्ञानमिति चिन्तामणिकृतः। पदार्थस्मरणमिति वाचस्पतिमिश्राः। ज्ञायमानं पदमित्याचार्याः। तत्राद्यं द्वयं ज्ञानमेव, तृतीयं शब्द एव। "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" १।१।९। इति प्रमेयविभागसूत्रम्। तत्रात्मशरीरेन्द्रियमनांसि द्रव्याण्येव। "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः" १।१।१४। इति सूत्रेणा-

र्थानां गुणत्वं स्पष्टमेव। "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" १।१।१५। इति सूत्रेण बुद्धेर्ज्ञानात्मकत्वकथनात् गुणत्वमेव। "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ" १।१।१७। इति प्रवृत्तिप्रतिपादकसूत्रस्यायमर्थः—वाक्पदेन वाक्कारणं। गृह्यते बुध्यतेऽनेनेति बुद्धिर्मनः। एवं च वाचा मनसा शरीरेणारम्भो निषिद्धविहिताचरणरूपपापपुण्यहेतुः प्रवृत्तिरिति। एवञ्च यदि पापपुण्यहेतुर्मनःप्रभृतीनां व्यापारः प्रवृत्तिस्तदा न वैशेषिकाभिमतपदार्थाद्भेदः। तथाहि-तीर्थादिगमनादिर्हि शारीरो व्यापारो धर्महेतुः। तत्र गमनादीनां कर्मादावन्तर्भावः स्फुट एव। वाचनिकश्चेद् व्यापारः सत्यशब्दादिः स शब्द एवान्तर्भवति। एवं मानसस्यापि हरिस्मरणादेरन्तर्भावो ज्ञातव्यः। एवमधर्महेतूक्तत्रयव्यापाराणामगम्यदेशगमनादि—असत्याभिधानादि—परप्रियास्मरणादीनामन्तर्भावो ज्ञातव्यः। यदि च व्यापारोत्पत्तिः प्रवृत्तिस्तदा साऽऽद्यक्षणसम्बन्धरूपैवेति न पृथक्पदार्थः। यदि च धर्महेतुक्रियाद्युत्पत्त्यनुगुणमनःप्रभृतीनां व्यापारान्तरं प्रवृत्तिस्तदा न पदार्थान्तरम् आत्ममनःसंयोगादावेवान्तर्भावात्। एवञ्च प्रवृत्तिरपि न पृथक्पदार्थः। दोषास्तु—रागद्वेषमोहाः। ते त्वात्मगुणा एव-रागस्येच्छात्मकत्वात्, मोहस्य ज्ञानात्मकत्वात्, द्वेषस्य स्वतन्त्रात्मगुणत्वादेव। प्रेत्यभावो मरणजन्मनी तयोरन्तर्भावः स्फुट एव मरणस्यात्ममनःसंयोगध्वंसविशेषरूपतयाऽभावेऽन्तर्भावात्, जन्मन उत्पत्तिरूपतयाऽऽद्यक्षणसम्बन्धरूपत्वात् प्रकृतसम्बन्धस्य च स्वरूपसम्बन्धरूपतया क्षणादिरूपत्वात्, क्षणस्य च कर्मादिघटिततया क्लेश एवान्तर्भावात्। फलं तु द्विविधं—मुख्यं गौणञ्च। तत्र मुख्यं—सुखं दुःखञ्च तत्साक्षात्कारो वा धर्मादिना तस्यैव चरमं जननात्। गौणं शरीरपुत्रकलत्रादि तस्य तेन प्रथमं जननात्। एतदुभयं द्रव्यगुणाद्यन्तर्गतमेव। दुःखापवर्गौ तु गुणान्तर्गतावेव-दुःखस्यात्मगुणत्वात्। अपवर्गस्य तदभावरूपत्वादिति सिद्धः प्रमाणप्रमेययोर्द्रव्याद्यन्तर्भावः। संशयोऽपि ज्ञानान्तर्गततया गुण एव। प्रयोजनन्तु सुखदुःखाभावरूपतया मुख्यं तत्साधनकलत्रादिरूपतया गौणं यथायथं स्पष्टान्तर्भाव एव। दृष्टान्तस्त्वन्वये महानसादिर्व्यतिरेके महाह्रदादिः स यथायथं द्रव्याद्यन्तर्गत एव। शास्त्रार्थाभ्युपगमासिद्धान्तस्तु ज्ञान-

मेव। शब्दात्मकन्यायैकदेशानां प्रतिज्ञाद्यवयवानां शब्दात्मकतया गुण एवान्तर्भावः कथितः । तर्कस्त्वापादकारोपादापाद्यारोपात्मा ज्ञानमेव । निर्णयस्य तु ज्ञानत्वे न कस्यापि विवादः। वादजल्पवितण्डास्तु शब्दात्मककथाप्रभेदतया शब्दान्तर्गततया गुण एव। हेत्वाभासास्तु धूमादौ साध्ये दुष्टा वन्ह्यादयो यथायथं द्रव्याद्यन्तर्गता एव। दोषाणां त्वन्तर्भावश्चिन्त्यते—तत्र साधारणत्वं पर्वतो धूमवान् वह्नेरित्यादौ व्याप्यवति साध्यात्यन्ताभाववद्गामित्वम्, इदं चात्यन्ताभावादिघटितं सखण्डोपाधिरेव। असाधारणत्वन्तु सकलसपक्षगतव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वं यथा शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वस्य सपक्षे घटादावसत्त्वात्। अयमपि सखण्डोपाधिरेव। न च सखण्डोपाधिर्वैशेषिके, अस्य क्वचित्संयोगादिरूपत्वात् क्वचिच्च स्वरूपसम्बन्धरूपतया प्रकृतविशेषणविशेष्यान्तर्भावात् तेषाञ्च भावादिरूपतया सप्तपदार्थान्तर्भावात्। व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावोऽनुपसंहारित्वं यथा सर्वं नित्यं प्रमेयत्वादित्यादौ। अत्र सर्वस्य पक्षतयाऽन्वयेन व्यतिरेकेण वोपसंहाराभावात् क्वचिदपि धर्मिणि साध्यतदभावयोरनिर्णयात्, असाधभाव एव। साध्यसहचाराभावो विरुद्धत्वमप्यबाधभावात्। असिद्धिराश्रयासिद्धिराश्रयाभावेन यथा काञ्चनमयोऽद्रिर्वह्निमान् धूमादिति विशिष्टपक्षीकरणे, अत्र काञ्चनमयत्वविशेषणाभावेन विशिष्टाभावसत्त्वात्। स्वरूपासिद्धिः-पक्षे हेत्वभावेन, यथा जलं वह्निमद्धूमादित्यादौ—जले धूमस्य हेतोरभावात्। व्याप्यत्वासिद्धिर्व्याप्त्यभावात्, यथा द्रव्यत्वादिसाध्ये सत्त्वादिहेतौ। एते चाभावा एव। सत्प्रतिपक्षत्वं प्रतिहेतुरेव यथा शब्दोऽनित्यः कृतकत्वात् शब्दो नित्यो व्योमैकगुणत्वात् इत्यादौ। तस्य च द्रव्याद्यन्तर्भाव एव, प्रकृतहेत्वोरपि सखण्डोपाधितयोक्तनियमेन द्रव्यादिष्वेवान्तर्भावात्। बाधः-पक्षे साध्याभावः तत्प्रमा वा क्लृप्तान्तर्गत एव आद्यस्याभावत्वात्, द्वितीयस्य ज्ञानतया गुणत्वात्। एवञ्च हेत्वाभासा अपि क्लृप्तान्तर्गता एव। छलजाती तु शब्द एवान्तर्गते-निरनुयोग इति सूत्रात् अतियोगकथनमित्यर्थात्। कथं? स हि तत्प्रातिपादकशब्दप्रयोगो यदि तदा प्रयोगपूर्वान्तर्भावः प्रयुज्यमानः शब्दप्रयोगोऽपि शब्द एवेति। तत्र प्रतिज्ञाहानिः शब्द एव। स्वनिर्वाहानिर्देशविरोधिवाक्यस्प्र-

तिज्ञाहानिः इति तल्लक्षणकरणात् । शब्दोऽनित्यः ऐन्द्रियकत्वात् घटवदित्युक्ते सामान्येन व्यभिचाराभिधानेऽस्तु तर्हि शब्दो नित्य इत्यादेः शब्दस्य प्रतिज्ञाहानित्वेनोदाहर्तव्यत्वात् । अत्र स्वनिर्धार्य्यशब्दानित्यत्वनिर्देशविरोधिनो वाक्यस्य सत्त्वात् । प्रतिज्ञान्तरमपि शब्द एव परोक्तदोषोद्धाराय पूर्वानुक्तविशेषणवतो हेत्वन्यपूर्वोक्तस्य वचनं प्रतिज्ञान्तरमिति तल्लक्षणकरणात् । प्रतिज्ञाविरोधस्त्वेकवक्तृकवाक्यांशयोर्विरोध एव । विरोधस्तु विचार्यमाणो न परिगणितभावाभावाभ्यां भिन्नो भवितु मर्हति । यदि च विरुद्धार्थौ एकवक्तृकवाक्यांशौ प्रतिज्ञाविरोधस्तदा शब्द एवान्तर्भावः, अन्यथा विरुद्धार्थैकवक्तृकवाक्यांशत्वमखण्डोपाधिरेव । तत्रार्थयोर्विरोधः सहानवस्थाननियमः, अनवस्थानमवस्थानाभावोऽभावान्तर्गत एव । एवमन्येऽप्येतद्घटकाः पदार्थाः क्लृप्त एवान्तर्भावनीयाः । उक्तापह्नववचनं प्रतिज्ञासंन्यासोऽपि शब्द एव वचनत्वात् पूर्वप्रयोजकवचनात्। अन्यादृशप्रयोजकवचनं हेत्वन्तरमपि शब्द एव ।शब्दोऽनित्य ऐन्द्रियकत्वादित्यत्र सामान्येन व्यभिचाराभिधाने सामान्यवत्त्वे सत्यैन्द्रियकत्वादिति हेत्वन्तरस्य शब्दान्तर्भावस्य स्फुटत्वात् ।वादाद्यनाकांक्षितवाक्यमर्थान्तरमपि शब्दः। अर्थशून्यशब्दस्य निरर्थकस्यापि शब्द एवान्तर्भावः । अवहिताविकलपरिषत्प्रतिवादिबोधानुगुणार्थोपस्थित्यजनकवाचकपदप्रयोगोऽविज्ञातार्थमपि विनिगमनाविरहेण शब्दप्रयोगयोरेवान्तर्गतम्। शब्दप्रयोगस्य तु शब्दोत्पत्तिलक्षणस्यापि शब्द एवान्तर्भावः। कथायां स्वसिद्धान्तवक्तव्यत्वाभिमतानभिधा न्यूनत्वमभाव एव,यदि च स्वसिद्धान्ते किञ्चिद्वक्तव्यरहितः शब्दो न्यूनत्वन्तदा शब्द एव । अपुनरुक्तकृतकर्तव्यशब्दात्मकमधिकमपि शब्द एव । प्रयोजनं विना प्राप्तप्रापकः शब्दः पुनरुक्तमपि शब्द एव । अनुवादयोग्यकाले तद्विरोधिव्यापारोऽननुभाषणमपि क्लृप्तान्तर्गतमेव तद्विरोधिनो व्यापारस्य क्लृप्त एवान्तर्भावात् । यदि वाऽननुभाषणमनुभाषणाभाव एव तदाऽभाव एवान्तर्भावः । यदि च सर्वनाम्नाऽनुवाद एकदेशेनानुवादोऽधिकस्यानुवादः केवलदूषणोक्तिस्स यश्चानुभाषणविरोधी व्यापारोऽननुभाषणं, तदाऽऽद्यानाञ्चतुर्णां शब्द एवान्तर्भावः । अन्त्यस्य मूकीभावस्य शब्दप्रयोक्तृत्वलक्षणत्वलक्षणस्याभाव एवान्तर्भावः ।

अज्ञानन्तु निग्रहस्थानं न ज्ञानाभावः—परनिष्ठस्य ज्ञानाभावस्य ज्ञातुमशक्यत्वात्, किन्त्वज्ञानप्रतिपादकं न जानामीत्याद्याकारकं वचनमेवाज्ञानं, तथा चाज्ञानस्यापि शब्द एवान्तर्भावः। परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानवचनमज्ञानमिति हि तल्लक्षणात् तथाच शब्दान्तर्भावस्य स्फुटत्वात्। उत्तरावसरे उत्तरविषयाज्ञानोन्नायककथकव्यापारोऽप्रतिभा। स च श्लोकपाठमूकीभावखसूचनादिः तस्य च कलत्र एवान्तर्भावः स्फुट एव। न हि श्लोकपाठादयः पदार्थान्तरमिति कस्यापि चेतसि चेष्टते श्लोकपाठस्य श्लोलोत्पत्तिरूपत्वात् मूकीभावस्य शब्दोच्चारयितृत्वाभावरूपत्वात् खसूत्रनादेश्च प्रदर्शनादिरूपत्वात्। कार्यव्यासङ्गमपादिश्य प्रवृत्तकथायाः कालान्तरानयनं विक्षेपः। यथा ममेदानीं किञ्चित्कृत्यमस्ति कालान्तरे कथान्तरे कथा कार्या इति हि विक्षेपस्वरूपम्। तत्र कथायाः अकरणमेव पर्यवस्यति, अकरणञ्च करणाभाव इत्यभावान्तर्भावो विक्षेपस्य। अपरोक्तदोषं स्वमतेऽनुद्धाराभ्युपगमस्यैवानिष्टस्य प्रसञ्जनं मतानुज्ञा। तत्र प्रसञ्जनं यदि त्वय्यपीदमनिष्टमस्तीति वचनन्तदा शब्द एवान्तर्भावः। अन्यत्तु विचार्यमाणं नायात्येव। आपन्ननिग्रहस्थानस्य तदनुद्भावनं पर्यनुयोज्योपेक्षणं त्वभाव एव। निरनुयोज्यानुयोगस्य तु शब्दान्तर्भावः प्रागेव कथितः। स्वसिद्धान्तव्याघातकशब्दोऽपसिद्धान्तोऽपि शब्द एव। हेत्वाभासान्तर्भावस्तु कथित एव। एवञ्च नाक्षपादपरिगणिताः पदार्थाः कणादगणितात्पदार्थान्तरम्। एतावांस्तु तयोर्भेदो यत्कणादस्य द्रव्यत्वादिना तत्त्वज्ञानं मोक्षजनकं गौतमस्य तु प्रमाणत्वादिनेति। अन्यत्र षोडशगोतमोक्तात्पदार्थात्केचित्कणादपरिगणिता अतिरिच्यन्ते उक्तप्रकारेणोपदर्शितेषु प्रमाणादिषु घटादीनामनन्तर्भावात्,तत्र चाभ्युपगमसिद्धान्त एव शरणम्। यद्वा फलस्य सुखदुःखतत्साधनरूपतया घटादीनां तदन्तर्भाव एव घटादीनां सुखादिसाधनत्वात। एवञ्च दृष्टान्तहेत्वाभासयोरपि घटादीनां यथायथमन्तर्भाव ऊहनीयः। क्वचित्साध्ये घटादीनां दृष्टान्तत्वात् क्वचिद्व्यभिचारादित्वादिति संक्षेपः।

द्रव्यगुणकर्मसामान्यानि चत्वार एव पदार्था इति तौतातिताः। तन्न विशेषादीनामपि साधितत्वात्।

(से०) यत्तु द्रव्यगुणकर्मसामान्यसंख्यासमवायसादृश्यशक्तयोऽष्टौ पदार्था इति। तदप्यभासुरम्। विशेषस्य साधितत्वात् संख्यादीनाञ्चान्तर्भावितत्वात्।

द्रव्यगुणकर्मसामान्यसंख्यासमवायसादृश्यशक्तिक्रमोपकारसंस्कारा एकादश पदार्था इति प्राभाकरैकदेशी चन्द्रः। तत्र क्रमो हि पूर्वापरीभावः। स च कालगर्भो धर्मविशेष एवेति न पदार्थान्तरम्। उपकारो ह्येकसहकारिजनितः सहकार्यन्तरे वाच्यः। न च सहकारिणो परस्परमुपकार्योपकारकभावनियमः, उपकारस्यापि सहकारितयोपकारपरम्परायामनवस्थानात्। दण्डादिनोपकृताश्चक्रादयो घटादीन् जनयन्तीति चेत, तत्र भ्रम्यादीनामेवोपकारकत्वात्, तेषाञ्च कलृप्तान्तर्भावात्। संस्कारोऽपि कांस्यादौ भस्मादिना वाच्यः। न तत्र प्रमाणमदृष्टेनैवान्यथासिद्धेः।

चन्द्रोक्ता एकादश औपाधिकश्चापर इति द्वादश पदार्था इति महार्णवकारः। तदप्यकल्पम्। औपाधिकं हि विशेषणरूपोपाधिघटितत्वाद्विशिष्टं वाच्यम्। न च विशिष्टं पदार्थान्तरमित्यावेदितम्।

पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि पञ्च महाभूतानीति पञ्चविंशतिसंख्यया तत्त्वमाहुः। तदिदङ्कणादो न वेद–अदृष्टादिभिन्नायां प्रकृतौ मानाभावात् महदहङ्कारयोरात्मातिरेकिणोरभावात्। आकाशादिजनकानां शब्दादितन्मात्राणामप्रामाणिकत्वात्, कर्मेन्द्रियेषु मानाभावाच्चेति।

कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्था इति पाशुपताः। तत्र कार्यकारणे घटादि–दण्डादि। योगो निदिध्यासनम्। विधिर्विधायकः शब्दः। दुःखान्तो दुःखनाशः। एते च कणादकथितानुगृहीता एव। आत्मैव पारमार्थिकतत्त्वम्। अन्ये तु व्यावहारिका व्यवहारानुसारेण गणनीया इत्युपणिपातिपगरिष्ठा(?)तत्कणादमुनिनाऽन्येषामपि द्रव्यादीनामभावान्तानाम्प्रामाणिकत्वादुपेक्षितम्।

पृथिव्यप्तेजोवायवश्चत्वार एव प्रत्यक्षविषयाः पदार्था इति चार्वाकमतमचतुरम्–वायोरप्रत्यक्षत्वात्। अनुमानादीनामपि प्रमाणत्वेन तत्प्रमेयस्यापि स्वीकार्यत्वात्। शब्दान्धकारयोरपि द्रव्यत्वमाहुः।

प्राभाकरास्तु द्रव्ये कणादानुयायिन एव। तत्रान्धकारस्य द्रव्यत्वमपाकृतमेव। शब्दस्य तु शब्दो न द्रव्यं श्रोत्रग्राह्यत्वादित्यादिन्यायेना-

(से०)पाकरणीयम्। भट्टाभिमतेषु द्रव्येष्वाकाशकालदिशां न द्रव्यत्व-मित्यष्टौद्रव्याणीति वृत्तिः। तदाकाशादीनां द्रव्यत्वप्रसाधनेनापसार-णीयम । कणादोक्तेषु गुणेषु संख्याविभागपृथक्त्वद्वेषानपास्य वे-गेन सहैकविंशतिर्गुणा इति प्राभाकराः । तत्संख्यादीनां गुणत्वसा-धनेन वेगस्य संस्कारान्तर्भावेनापाकरणीयम् । वैशेषिकोक्ता एव गुणाः शब्दवर्जिताश्शब्दगुणनादसहिताश्चतुर्विंशतिरिति । तच्छब्द-स्य गुणत्वेन शब्दविशेषध्वन्यतिरिक्तस्य नादस्य प्रमाणाभावेन च व्युदसनीयम् । परत्वापरत्वपृथक्त्वधर्माधर्मविभागशब्दवर्जितास्ता-दात्म्यनादसहिता विंशतिर्गुणा इत्यौपनिषदः । तत्तादात्म्यस्य तद्-वृत्त्यसाधारणधर्मरूपतया वृत्तेरन्तःकरणपरिणामस्याप्रामाणिकतया भूतलादौ घटादिवृत्तेस्तत्र घटावस्थितिरूपतया चानालोचनीयम् ।

पञ्चस्कन्धात्मकं जगत्रयम् । गवादिर्विषयो रूपस्कन्धः(१) सुख-दुःखे वेदनास्कन्धः(२) गवादीनां विषयाणां नामानि संज्ञास्कंधो(३) रागद्वेषमोहाः संस्कारस्कंधाः(४) विषयोपलंभो ज्ञानस्कन्धः(५)इति बौद्धमतम् । एतेऽपि पदार्था न कणादमतमतिक्रामन्ति गवादीनां द्र-व्यादावेवान्तर्भावात् । संज्ञाभेदमात्रस्य स्वतन्त्रेच्छत्वेन करणात् ।

गन्धरसरूपस्पर्शशब्दात्मकमेव जगत् । तत्र पञ्चानामेषां सङ्घातः पृथिवी-गन्धवर्जानां जलं-गन्धरसवर्जानां तेजो-गन्धरूपरसवर्जानां संघातो वायुः।रूपादिपरिमाणुसंघात एवावयवी।ज्ञानविषययोश्चाभेदो-वेदान्तिनां ब्रह्माद्वैतस्येवास्माकं ज्ञानाद्वैतस्य सत्त्वादिति सौगतमतम्। तन्न अन्येषामप्याकाशादीनां तत्त्वानां सत्त्वेन नियमस्य निर्मूलत्वात् ज्ञानज्ञेययोश्च भेदस्य प्रामाणिकत्वात् ।

ज्ञानविषयौ द्वावेव पदार्थौ इति सौगतैकदेशिनौ वैभाषिक-सौत्रान्तिकौ । तत्र यदि विषया द्रव्यादयः सप्त तदा तयोरपि कणादानुगतिरेव-तैरपि विषयाणां द्रव्यादीनां विषयिणो ज्ञानस्य च स्वीकारात् । यदि च सौगतमतोक्ता एव विषयास्तदा प्रागु-क्तमेव दूषणम् ।

योगाचारस्तु सौगतैकदेशी ज्ञानमेव पारमार्थिकं बाह्यमलीक-मेवेत्याह । तद्द्रव्यादीनां पारमार्थिकत्वेन बाधनीयम् ।

माध्यमिकास्तु तदेकदेशिनो ज्ञानमप्यनिच्छन्तः शून्यमेव जग-दाहुः । ते तु नानाप्रमाणसिद्धानामपदार्थानां प्रदर्शनेनोद्वासनीयाः ।

(से०)दुःखं समुदायो क्षणिकता निरोध इति चतुष्टयमिति। तत्र फलं दुःखं हेतुस्समुदायः क्षणिकता साक्षात्कारो मार्गोऽनादिश्चित्तस्य क्लेशशून्यता निरोध इति केचित्-अवैदिकाः। तत्र फलहेत्वोर्द्व्यादिष्वेवान्तर्भावः। साक्षात्कारस्तु ज्ञानमेव,क्षणिकतायां परं विसंमतिः। क्लेशशून्यता त्वभाव एवेति न पदार्थान्तरं कणादस्वीकृतादायाति।

पाखण्डमते च सोमासिधातः(?) ते च चार्वाककथिता एव पदार्थाः। तत्र चोक्तमेव।

दिगम्बरास्तु-जीवाजीवास्रवसंवरनिर्जराबन्धमोक्षात्मकान् सप्त पदार्थानाहुः। तत्र जीवो ज्ञानमजीवो घटादिः शुभाशुभकर्मद्वाररूपश्चाऽऽस्रवस्ततो हि कार्यं स्रुतमिव भवति। संवरस्समाधिः। केशोल्लुञ्चनादिव्रतनियमो निर्जरा। बन्धः संसारः शरीरावरणरूपः। तदत्ययो मोक्षः। न चैते पदार्था कणादकथितात् पृथक्भूताः। दिगम्बरभेदा एव क्षपणकश्वेताम्बरार्हतनीलांबररक्ताम्बरचर्माम्बरबर्हाम्बरादय इति, नैतेषां पृथक्पदार्थविभागो न वाऽस्माकं तद्दूषणोद्योगः॥

(व्यो०)अथायुतसिद्धानामित्यादिना समवाये प्रतिज्ञां करोति। समवायः परमार्थसत् पूर्वोक्तादेव साधनादिति लक्षणमुच्यते। इहप्रत्ययहेतुत्वमन्तरालादर्शनस्यापीति सम्बन्धग्रहणम्। तथाहि-दूराद्ग्रामारामयोरन्तरालमपश्यतामिह ग्रामे वृक्षा इति ज्ञानं दृष्टम्। तथाप्याकाशशकुनिसम्बन्धेन व्यभिचारः। तदिहप्रत्ययहेतुः सम्बन्धश्चेति। तथापीहाकाशे शकुनिरिति ज्ञानं दृष्टम्। तद्व्यवच्छेदार्थमाधार्याधारग्रहणम्। न चाकाशस्याधारत्वमाधेयत्वम् च-अधरोत्तरभावस्याभावात्। यत्र हि संयोगिद्रव्येष्वधरोत्तरभावः तत्रैवाधाराधेयभावः कुण्डबदरादावुपलब्धस्तदभावश्चाकाशे। तस्य व्यापकत्वेन शकुनिं व्याप्य सद्भावात्। अथाकाशस्यातीन्द्रियत्वादिहेति ज्ञानं न स्यात्—तस्य ह्यपरोक्षेष्वेव भावात्। तदसत्। अतीन्द्रियेप्याकाशे इहेति ज्ञानं केवलं भ्रान्तं तस्य व्यवच्छेदार्थमुपपन्नमाधार्याधारपदम्। इष्टं च भ्रान्तेहज्ञानस्य व्यवच्छेदार्थं सम्बन्धपदम्।अन्ये त्वस्य चोद्यस्य परिहारार्थमासमन्तात्काशन्तेत्याकाशं वर्तत इत्युपचारेणाकांक्षा स्मयोभिदीयन्ते(?)।ते च प्रत्यक्षं इत्युपपन्नमिहाकाशे शकुनिरिति ज्ञानमिति मन्यन्ते। तच्चासत्।

(व्यो०)मुख्यसद्भावेऽप्युपचारकल्पनायामतिप्रसङ्गात्। एवश्चातीन्द्रियेऽप्याकाशे परोक्षज्ञानं भ्रान्तं तद्व्यवच्छेदार्थं विशेषणम् इति मूर्तद्रव्याभावेन चाकाशेन संबंधाभाव एवेति। तथाऽप्याधार्याधारभूतानां यस्सम्बन्ध इहप्रत्ययहेतुः स समवाय इत्युक्ते कुण्डबदरसंबंधेन व्यभिचारः,तदर्थमयुतसिद्धानां पदम्। युतसिद्धिर्वक्ष्यमाणा सा विद्यते येषां ते युतसिद्धाः, तन्निषेधेन चायुतसिद्धास्तेषामिति। तथाऽप्ययुतसिद्धानां यस्सम्बन्धस्स समवाय इत्युक्ते व्यभिचाराभावः। तन्न। वाच्यवाचकभावेन च व्यभिचारात्। तथा ह्याकाशमहत्त्वमाकाशे समवेतं तद्वाचकश्च शब्दस्तत्रैवेत्ययुतसिद्धत्वम्। एवमिच्छाद्यालम्बनं विज्ञानमात्मनि समवेतमिच्छादयश्च तत्रैवेत्ययुतसिद्धत्वे सत्येषां विषयविषयिभाव इत्यनयोर्व्यवच्छेदार्थमाधार्याधारपदम्। न चात्राकाशमहत्त्वशब्दस्तन्महत्त्वाधारः, नापीच्छाद्यालम्बनविज्ञानं तदाधारमिति। नन्वेवमप्याभ्यामेव व्यभिचारः, तथाह्ययुतसिद्धानामाधार्याधारभूतानां यस्सम्बन्धः स समवाय इत्युक्तेऽपि वाच्यवाचकभावविषयविषयिभावाभ्यामेव व्यभिचारः। तथा चाकाशशब्देन आकाशमभिधीयत इत्यनयोराधार्याधारयोरभावे सति वाच्यवाचकभावः।न चास्ति युतसिद्धिः।एवमात्मालम्बनमहमितिज्ञानमात्मन्येवेत्ययुतसिद्धत्वे सत्याधार्याधारभूतयोरस्ति विषयविषयिभाव इति, तद्व्यवच्छेदार्थमवधारणम्—आधार्याधारभूतानामेव यः सम्बन्धः स समवाय इति। वाच्यवाचकविषयविषयिभावयोश्चाधार्याधारभूतेषु तद्विपरीतेषु च सद्भाव इति व्यवच्छेदः। नन्वेवमयुतसिद्धानामिति व्यर्थमेव। न, अस्यापि सावधारणस्य लक्षणान्तरत्वात्। तथा ह्ययुतसिद्धानामेव यः सम्बन्धः स समवाय इति, वाच्यवाचकविषयविषयिभावौ तु युतसिद्धानामयुतसिद्धानां चेति। अत्र केचिदसद्दूषणमुद्भावयन्ति। समवायासिद्धौ युतेष्वाश्रयेषु समवायो न युतसिद्धिः सा विद्यते चैषाम्। तेन युतसिद्धास्तत्प्रतिषेधेन चायुतसिद्धानामभावे न समवाय इति। एतश्चासद्दूषणम्। लक्षणस्य विद्यमानव्यवच्छेकत्वात्। यदि ह्यविद्यमानं लक्षणेनोत्पाद्येत भवेदेतद्दूषणमयुतसिद्धानामिति लक्षणेन समवायकरणे युतसिद्धानामभावे नायुतसिद्धानामभाव इति लक्षणसंभव इति। न चैतल्लक्षणस्य ज्ञापकत्वादिति। तथायुतसिद्धानामेवाधार्याधारभूतानामेव यः

(व्यो०)सम्बन्धः समवायः,इति लक्षणद्वयपरिसमाप्ताविहप्रत्ययहेतुरिति व्यर्थम् । न । परीक्षार्थत्वात् । तथाहि तन्तुषु पट इत्यादीहप्रत्ययः सम्बन्धकार्यः अबाध्यमानेहप्रत्ययत्वात् । यो योऽबाध्यमानेहप्रत्ययः स सम्बन्धकार्यः । यथेह कुण्डे दधीति जुहुयात्तथाचायमबाध्यमानेहप्रत्ययः तस्मात्सम्बन्धकार्य इति । न चात्र समवायपूर्वकत्वं साध्यते । दृष्टान्तस्य साध्यविकलताप्रसङ्गात् । नापि संयोगपूर्वकत्वम् । किन्तर्हि सम्बधमात्रकार्यत्वम् । स च संयोगादिविलक्षणत्वात्समवाय एवेति वक्ष्यामः-तत्परीक्षायामित्यलमतिविस्तरेण ॥

( भा० )एवं धर्मैर्विना धर्मिणामुद्देशः कृत इति ॥

( सू० ) उपसंहरति एवमिति । द्रव्यत्वाद्यवच्छिन्नधर्मिणामितरभेदकधर्मैर्विना उद्देशो द्रव्यादिपदेनोल्लेखः कृतः । द्रव्यत्वादीनान्तु पक्षतावच्छेदकत्वेनापेक्षयोल्लेखावच्छिन्नेष्वितरभेदकत्वमतस्तेषामुद्दिष्टत्वेऽपि न क्षतिरित्यभिप्रायः ॥

( से० ) अमुना प्रकारेण पदार्थानां सप्तस्वन्तर्भावमभिप्रेत्य भाष्यकृदप्याह एवमिति । धर्मा नोद्दिष्टा धर्मिणस्तूद्दिष्टा एवेति वदतः प्रकृतधर्मातिरिक्ता धर्मिणो न सन्तीति स्फुटोऽभिप्रायः प्रतीयत इति दिक् ।

भाष्याम्भोनिधिसेतौ वीरवरीये यशोहेतौ ॥
प्रथमो विभागभागो रचितः श्रीपद्मनाभेन ॥ १ ॥

यद्दानवारिणा दानवारिणेव निरापदः ।
विबुधा रचिता, भाति स च वीरवरः पतिः ॥ २ ॥

व्यो० । एवं द्रव्यादिषु पदार्थेषूक्तेषु सामान्यविशेषसमवायानां लक्षणपरीक्षाश्रवणादन्तेवासिनः प्राक्तनं प्रकरणं किमुद्देशपरं लक्षणपरं वेति संशये सति तन्निरासार्थं उपसंहारवाक्यम् ।

प्रधानतया प्राधान्यम् । तस्य सर्वत्रोद्देशविधानात् । उद्देशस्तु संज्ञामात्रेण पदार्थाभिधानमिति । लक्षणपरीक्षयोश्च सामान्यादिष्वेव भावादनुषङ्गतोऽभिधानमिति । यदि वा द्रव्यादिपदा-

(व्यो०)र्थपरिज्ञानात् निःश्रेयसमिति मत्वा प्रवृत्तस्तदुद्देशपरिज्ञानमा-त्रान्निःश्रेयसालाभ इति प्रतारकतां मन्यमानः श्रवणादन्तेवासी मा व्यावर्ततामिति,तदाश्वासनार्थं वाक्यमेवम्-धर्मैर्विना धर्मिणां केव-लानामुद्देशः कृतो'न लक्षणं नापि परीक्षा। तत्तद्वारेण साधर्म्यवैधर्म्य-परिज्ञानं श्रौतमुपजातमभ्यासवशात् आत्मन्यशेषविशेषालिङ्गिते विज्ञानमपरोक्षं कुर्वन्निःश्रेयसमुपजनयतीति। ननु षडेव पदार्था इत्यवधारणाभ्युपगमे धर्माणां व्यतिरेकासम्भवात् कथमास्तित्वा-दिभिर्विना धर्मिणामुद्देशः कृत इति। न, अवधारणस्य धर्मिविषय-त्वाभ्युपगमात्, तन्न। अस्तित्वादयोपि स्वाधिकरणधर्मापेक्षया धर्मिण एवेति, तदपेक्षयापि व्याहतमवधारणम्। तथाह्यस्तित्व-मभिधीयमानत्वादभिधेयत्वाधिकरणमेवमभिधेयत्वमस्तित्वाधिकर-णमित्यादि योज्यम्। अथासाधारणधर्माधिकरणत्वेनावधारणम-र्थवत्। तदसत्। अस्तित्वादेरप्यसाधारणधर्माधिकरणत्वात्। तथा ह्यस्तित्वमभिधेयत्वाद्भिद्यते इति। न चासाधारणधर्मसं-पर्कं विना व्यावृत्तिर्घटत इति, असाधारणधर्माधिकरणत्वेनाव-धारणासंभवः। नैतदेवम्। 'क्रियावत् गुणवत् समवायिकारणमिति (अ. १ आ. १ सू. १५) द्रव्यलक्षणमयोगान्ययोगव्यवच्छेदेन द्र-व्याश्रितत्वं गुणानां तथा क्षणिकत्वे सति नियमेन मूर्तद्रव्यवृत्तित्वं कर्मणां नित्यत्वैकत्वे सति समवायेनानेकवर्तमानत्वं सामान्यस्यायो-गान्ययोगव्यवच्छेदेन नित्येष्वेव वर्तमानत्वं विशेषाणां नियमे-नायुतसिद्धसम्बन्धत्वं समवायस्येत्येवं धर्माधिकारिणः षडेवेत्यव-धारणेप्यदोषः। अथ व्यतिरिक्तानमियत्ताऽसंभवादसंख्यातत्वेन तत्त्वज्ञानाविषयत्वमिति चेत्। न पृथिव्यामिवानन्त्येप्येकस्य निमित्त-स्योपग्रहात्तत्त्वज्ञानविषयत्वमिति। निमित्तं तु तत्र पृथिव्यां पृथि-वीत्वं धर्मेषु धर्मरूपतेति। अथ धर्मेषु नित्यत्वमुतानित्यत्वमिति चेत्। नित्यत्वेऽपि धर्मिविनाशे सत्तावदवस्थानाभ्युपगमाद-दोषः। अनित्यत्वेऽपि द्रव्यस्यैव समवायिकारणत्वात् गुणादिषु नोत्पत्त्यभावो विनाशवत्, निमित्तकारणादेवोत्पत्त्यभ्युपगमात्। तथाहि—द्रव्यगुणकर्मात्मकं कार्यं समवाय्यादिकारणेभ्यो नि-ष्पाद्यमानं दृष्टम्, विपरीतं तु निमित्तादेव, तथाच धर्माः निमित्तादेवोत्पद्यन्ते द्रव्यगुणकर्मव्यतिरेकिकार्यत्वात्। यथ-

(व्यो०) द्रव्यगुणकर्मव्यतिरेकि कार्यं तत्तन्निमित्तकारणादेवोत्पद्यमानं दृष्टम्। यथा विनाशः। तथा च धर्माः द्रव्यगुणकर्मव्यतिरेकिकार्यास्तथा निमित्तकारणादेवोत्पद्यन्ते। उत्पत्तिधर्माणां चानित्यत्वं दृष्टमित्य- स्तित्वादयोऽप्यनित्या इति। अस्तित्वं चास्तीति प्रत्ययनिमित्तं येन स नास्तीति प्रत्ययो भवतीति। अभिधेयत्वं वा अभिधेयप्रत्ययका- रणमित्यादि सर्वत्र योज्यम्। अव्यतिरेके तु व्यतिरिक्तैर्धर्मैर्विना धर्मिणामुद्देशः कृत इति व्याख्यानम्। व्यतिरेके बाधकप्रमाणोपपत्ते- र्व्यतिरिक्तेति विशेषणम्, सामर्थ्याल्लभ्यत एव। तथाह्यवधारणानु- पपत्तिर्व्यतिरेकपक्षे। अथोक्तम्—विशिष्टधर्माधिकरणत्वेनावधारणं विवक्षितमिति। तन्न। उक्तलक्षणानां षडेव पदार्था इत्यवधारणे साधारणधर्माधिकरणानां पदार्थान्तराणामपरिसंख्यातत्वात्तत्त्वज्ञा- नासम्भव एव। तत्त्वज्ञानार्थं चावधारणम्। न च पदार्थान्तराणाम- ज्ञेयत्वम्। सर्वस्य भावप्रपञ्चस्य ज्ञेयतयोपक्षेपात्तेषु च सामान्यविशेष- रूपतया तत्त्वज्ञानं कार्यम्। सामान्यं भावरूपता विशेषस्तु द्रव्यादि- वल्लक्षणयोगस्तद्व्यतिरिक्तेषु च पदार्थेषु सामान्यतो ज्ञानं न विशेषत इति। अथ द्रव्यादिलक्षणवद्धर्मरूपताविशेषस्य सद्भावविशेषणापि तत्त्वज्ञानविषयत्वमिति चेत्। तर्हि पदार्थान्तरसद्भावेऽपि नियत- लक्षणापेक्षयावधारणाभ्युपगमे षडेवेत्यपि न वाच्यम्। समवाय- सद्भावेपि पूर्वलक्षणापेक्षया पञ्चैवेति स्यात्। एवमुत्तरोत्तरपदार्थ- सद्भावेपि पूर्वपूर्वलक्षणापेक्षयावधारणाभ्युपगमे सत्येक एव पदार्थः स्यात्। तथाहि द्रव्यलक्षणयोगे एक एव पदार्थो नान्यस्तस्य हि द्रव्य- लक्षणयोगित्वे द्रव्य एवान्तर्भावात्। अथ गुणादिषु विभिन्नलक्षण- सम्बन्धिषु तत्त्वज्ञानाभावप्रसंगात् नैवमवधारणम्। एवं तर्हि धर्मेषु षड्लक्षणालक्षितेषु तत्त्वज्ञानाभावप्रसङ्गात्, षडेवेत्यवधारणमन्या- य्यम्। प्रतिज्ञातं च पदार्थेषु साधर्म्यवैधर्म्यप्रतिज्ञानम्। तथा धर्म- रूपतायाः सकलभेदाव्यापितया न धर्मेषु तत्त्वज्ञानम्। तथाहि—धर्म- रूपतायां किमन्या धर्मरूपतास्त्युत नास्तीति? सद्भावे तस्यामन्याभिधे- यतेत्यनवस्थायां धर्मरूपतायाश्चानेकत्वादेकस्य निमित्तस्योपग्राहक- स्याभावान्न धर्मेषु तत्त्वज्ञानं स्यात्। न च पृथिवीत्वं विनाऽनुगताकारं धर्मेषु सामान्यमस्तीति। धर्मो धर्म इत्यनुगतज्ञानस्यासंवेदनात्। यदि चानुगताकाराऽशेषधर्मव्यापिका धर्मरूपता तस्यास्तर्हि सामान्य-

(व्यो०)रूपत्वात्तद्योगितया धर्माणां द्रव्यादिष्वेवान्तर्भावः।द्रव्यादित्रय-स्यसामान्यविशेषवत्त्वाभिधानात्। न च धर्मत्वस्य सामान्यलक्षणयो-गित्वे सामान्याद्व्यतिरेकः सिद्ध्यति द्रव्यत्वादेरपि व्यतिरेकप्रसङ्गात्। तथा धर्मरूतायाश्चाधर्मत्वायोगेन धर्मेष्वन्तर्भावासंभवादिति पदा-र्थान्तरत्वं स्यात्। यथा चास्तित्वादिषु धर्मरूपत्वं तथा धर्मत्वेऽप्यन्ये-ऽस्तित्वादयस्तेषु चाप्यन्यद्धर्मत्वमित्यनवस्थां नातिवर्तते। अथ यदेव धर्मत्वमस्तित्वादेराधेयं तदेवान्येषामाधारस्तदाधेयश्चेति। न युक्त-मेतत्। एकस्मिन्काले यद्यस्याधारस्तस्यैवाधेयमित्यनुपलंभात्तथा-स्तित्वादेरप्येकस्य निमित्तस्यानेकत्रानुवृत्तौ सामान्यान्तर्भावस्तल्ल-क्षणयोगित्वात्। यदि चैकं नित्यमस्तित्वं सर्वत्र पदार्थेष्वस्तीति प्रत्ययजनकं स्यात्। किं सत्तया स्वरूपसत्त्वेन वा? अथानेकं पदार्थमस्तित्वाभिधेयत्वादिति चेत्। न तर्हि धर्मिविनाशेऽपि सत्तावदवस्थानम्। तथाह्येकाश्रयविनाशेपि एकतया सत्तायाः पदा-र्थान्तरेऽपि सत्त्वादिति, प्रत्ययजनकत्वेनावस्थानम्। धर्माणां तु प्रतिपदार्थनियतत्वादाश्रयान्तरेस्तीति प्रत्ययजनकोऽन्य एव धर्म इति नाश्रयविनाशेप्यवस्थाने प्रमाणमस्तीति। अथ द्रव्यस्यैव समवायि-कारणत्वेन गुणादिषूत्पत्तिकारणाभावादाश्रयाविनाशेप्यवस्थानमिति चेत्। एवं तर्हि द्रव्येष्वनित्यं गुणादिषु च नित्यमिति स्यात्। इष्यत एवेति चेत्। तर्हि विनाशवन्निमित्तकारणादेवोत्पद्यन्तेऽस्तित्वादय इति व्याहतमेतत्। तथास्तित्वादेः प्रतिपदार्थनियतत्वेनानन्त्यात् तेष्वेवास्तीत्याद्यभिन्नव्यवहारदर्शनात्, एकमस्तित्वेष्वस्तित्वमभि-धेयत्वेष्वभिधेयत्वम्, तत्राप्यन्येस्तित्वादय इति प्राक्तनमेव दूषण-मभ्यूह्यम्। न चास्तित्वादेर्नियतधर्मिसम्बन्धाभावे व्यपदेशनियमो-ऽस्यायं धर्म इति घटते। अथास्तित्वसम्बन्धः यदि समवायः? तर्हि धर्माणां समवायतया द्रव्यादिष्वन्तर्भावो-द्रव्यादीनां पञ्चानां सम-वायित्ववचनात्। यद्यन्यः सम्बन्धो धर्मात्मकस्तस्याप्ययुतसिद्धस-म्बन्धत्वे कथं समवायाद्व्यतिरेकः। व्यतिरेके वा स एव धर्मः ध-र्मिव्यापकोस्त्वलं समवायेन। तस्य च सम्बन्धान्तराभ्युपगमेऽनवस्था स्यादिति, स्वात्मवृत्तित्वमभ्युपेयम्। स्वात्मवृत्तित्वं समवाय एव। यच्चानुमानं-निमित्तकारणादेवोत्पद्यन्ते धर्माः द्रव्यगुणकर्मव्यति-रेकिकार्यत्वाद्विनाशवदित्यत्र कार्यत्वस्य स्वकारणसत्तासम्बन्धरू-

(व्यो०)पतायामसिद्धो हेतुः। विनाशस्य च स्वकारणसत्तासम्बन्धाभावात् साधनविकलश्च दृष्टान्तः। द्रव्यादिव्यतिरेके च प्रमाणाभावात्सन्दिग्धविशेषणो हेतुः। अथ षट्पदार्थेषु अस्तीति ज्ञानं व्यतिरेके प्रमाणम्। तथाहि—द्रव्यादिष्वस्तीत्यादिज्ञानानि षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानि षट्पदार्थेषूत्पद्यमानत्वात्। यानि तु षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानि न भवन्ति न तानि षट्सूत्पद्यन्तेऽस्तीत्यादिज्ञानानि। तस्मात् षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानीति व्यतिरेकी। तथाहि षट्पदार्थेष्वस्ति ज्ञानम्। तथाहि विधेय इत्युत्पद्यमानं दृष्टमिति पक्षधर्मत्वम्। न च षट्पदार्थव्यतिरिक्ताभावरूपनिमित्तनिबन्धनम् उभयाभिमतं विज्ञानमस्तीति सपक्षाभावः। द्रव्यादिज्ञानं तु षट्पदार्थव्यतिरिक्तभावरूपनिमित्तनिबन्धनं न भवतीति विपक्षः। तस्माच्च षट्पदार्थेषूत्पद्यमानत्वं हि द्रव्यादिव्यावृत्तम्। तथाहि—द्रव्यज्ञानं द्रव्य एव, न च गुणादिष्वेवं गुणज्ञानं गुण एव न कर्मादिष्वपीति, न षट्सूत्पत्तिरिति विपक्षव्यावृत्तिरेव। विपक्षे प्रत्यक्षागमाभ्यां विरुध्यत इति न कालात्ययापदिष्टः। विशेषानुपलब्धेरयोगान्न प्रकरणसम इत्यस्माद्व्यतिरेकसिद्धौ न सन्दिग्धविशेषणो हेतुरिति॥ नैतदेवं षट्सु पदार्थेषूत्पद्यमानत्वं व्यक्त्यपेक्षयाऽसिद्धम्। तथाह्येकमस्तीति ज्ञानं षट्सु पदार्थेषूत्पद्यते। एवमभिधेयज्ञानञ्चेति। अथास्ति द्रव्यमस्ति गुण इत्येवं जातीयकं ज्ञानं षट्सूत्पद्यते इति नास्त्यसिद्धता। तर्हि द्रव्यगुणादिज्ञानं ज्ञानजातीयं षट्सूत्पद्यते। न च षट्पदार्थातिरिक्ताभावरूपनिमित्तनिबन्धनमिति व्यभिचारः। यच्च षट्पदार्थातिरिक्तं भावरूपनिमित्तम् तस्यानुवृत्तव्यावृत्ततायां प्राक्तनमेव दूषणमूह्यम्। सत्तासम्बन्धेन च पदार्थेषु भावव्यतिरेकाभ्यामस्तीति ज्ञानमुत्पद्यमानं दृष्टमिति विरोधः। अस्तित्वधर्मादेवास्तित्वज्ञानमिति चेत्। तर्हि सत्तायाः सद्भावे किं प्रमाणमिति वाच्यम्, प्रत्ययवैलक्षण्याभावादित्यतो न व्यतिरेके प्रमाणमस्तीति अप्रसिद्धविशेषणो हेतुरिति सत्यम्। यदि च भूत्वा भावित्वमात्रं कार्यत्वमिष्टं स्यात्तदप्यस्तित्वादिषु सन्दिग्धम्। तथाह्याश्रये सत्युपलंभादस्तित्वादेर्न ज्ञायते—किमाश्रयाः धा ते सन्तोऽभिव्यज्यन्ते सामान्यवदतोत्पद्यन्ते रूपादिवादिति? न च

(व्यो०)निमित्तकारणं विशेषतो निर्देष्टुं शक्यते। अथ गुणाश्रयस्तदाधारास्तेषां निमित्तमिति चेत्। एवं तर्हि गुणादीनां कार्याधारतया समवायिकारणत्वादिति—निमित्तादेवोत्पत्तिर्विरुध्यते। तथाहि नियमेनाधार्याधारयोर्यः सम्बन्धः स समवाय एव। अन्यत्वे वा समवायलक्षणे व्यभिचारात्। असम्बन्धे चोक्तमेव दूषणम्-इति-अतिरिक्तैर्धर्मैर्विना धर्मिण उद्देश इति सिद्धम्। अन्ये तु धर्मैः सह धर्मिणः उद्देशः कृतः। केनेति? विना पक्षिणोलूकेन। सामान्यशब्दश्च विशेषे वर्तते प्रकरणादिति ब्रुवता॥

(भा०)षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेयत्वानि।

( सू० ) षण्णां द्रव्यादीनाम्। अपिशब्देनाभावस्याप्युपसङ्ग्रहः। अस्तित्वं स्वरूपसत्त्वं तच्चोभयावृत्तिधर्मवत्त्वम्। अभावस्यालक्ष्यत्वे तु तादृशभावत्वं वाच्यम्।एवमग्रेऽपि। अस्तित्वं विधिमुखप्रतीतिविषयत्वम्। तच्च—प्रतियोग्यनपेक्षनिरूपणविषयत्वम्-इत्याचार्यव्याख्यानन्तु चिन्त्यम्। निरूपणं हि तत्र यदि साक्षात्कारस्तदाऽतीन्द्रिये द्रव्यादावव्याप्तिः। यदि च ज्ञानमात्रं तर्ह्यभावेऽतिव्याप्तिः, अनपेक्षान्तवैयर्थ्यञ्च स्यादिति। अभिधेयत्वं—पदशक्यत्वम्। ज्ञेयत्वं—ज्ञानविषयत्वम्॥

(से०)षण्णामपीति। अपिरभिव्याप्तावभिव्याप्त्या च सर्वस्य द्रव्यादेः प्राप्तिः सिद्ध्यति,अन्यथा कस्यचिद्द्रव्यस्य कस्यचिद्गुणादेर्ग्रहणेपि षण्णाम्प्राप्तिः स्यादेव,नतु सर्वस्य द्रव्यादेः प्राप्तिः,एवञ्च सर्वं द्रव्यं सर्वश्च गुणादिर्लक्ष्यत्वेनाभिव्याप्त्या प्राप्यत इति सिद्धम्। ननु च मन्दमेतत्-षण्णामित्यसङ्कुचितपदादेव सर्वेषां द्रव्यादीनां प्राप्तिः संकोचाभावे विनिगमकाभावेन सामान्यशब्दस्य सर्वप्रत्यायकत्वात्, अन्यथा 'पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वापरजातिमत्त्वम्' इत्यत्रापि सकलपृथिव्यादिप्राप्त्यर्थं किंचिदुपादेयम्। न च षण्णामित्यत्र कश्च प्रभृतीनां? प्राप्तिर्माभूत्-एतदर्थमपि। षण्णामितिपदादेव तथा सिद्धेस्तथा चापिरभिव्याप्तावित्यसंगतमिति चेत्। अत्र ब्रूमः—अपिर-

(से०)भिव्याप्ताविन्यस्यापिना लक्षणस्य लक्ष्येऽभिव्याप्तिर्बोध्यतेऽव्याप्तिशंकानिराकरणायेत्यत्र तात्पर्यम् । न च सर्वत्र तथाकरणापत्तिरतिव्याप्तिनिराकरणार्थमपि च क्वचित्करणापत्तिरिति वाच्यम् । स्वतन्त्रेच्छत्वात् स्थितेरगतगतेश्चिन्त्यमानत्वाच्चेति ? ।

अस्तित्वमिति । ननु किमिदमस्तित्वं ? सत्ताजातिमत्त्वं चेत्, तदा सामान्यादावव्याप्तिः । विद्यमानत्वप्रामाणिकत्वान्यतरपर्यवसायिस्वरूपसत्त्वं चेत्, तदाऽभावेऽतिव्याप्तिः । अत एवाचार्यचरणैः-विधिमुखप्रत्ययविषयत्वमुक्तमिति चेन्न । तत्—विनास्तित्वेन प्रतीयमानत्वमभावोऽस्तीति प्रतीतेः । नापि भावत्वेन प्रतीयमानत्वं-तमसि भावभ्रमोदयात् । नापि तथा प्रमा-यथोक्तविशेषणविशेष्यभावे-वैयर्थ्याभावेऽपि भावत्वनिर्वचनसापेक्षत्वात् । नन्वत एवाचार्यचरणैः-प्रतियोग्यनपेक्षनिरूपणत्वमुक्तमिति चेन्न । तद्धि प्रतियोगिज्ञानाजन्यज्ञानविषयत्वम् । तस्य चाभावेऽतिव्याप्तत्वात्-प्रतियोगिज्ञानाजन्यस्य प्रमेयमित्यादेर्ज्ञानस्याभावविषयत्वाद्न्ततो पारमेश्वरज्ञानविषयकत्वात्तस्याजन्यतया प्रतियोगिज्ञानाजन्यत्वात् । अत एव-असमवायत्वे सति गुणत्वशून्यत्वे च सति सविकल्पकमात्राविषयत्वं वर्धमानोपाध्यायैरुक्तमिति चेन्न । एतस्य ह्यसमवायत्वे सति गुणत्वशून्यत्वे सति यस्सविकल्पकमात्रविषयस्तद्भिन्नत्वमित्यर्थः । एवं हि संयोगसमवाययोरव्याप्तिर्न भवति-तत्राप्यसमवायत्वाद्यभावेन विशिष्टाभावसत्त्वात् । न चैतदुपपद्यते-अतीन्द्रिये द्रव्यादावव्याप्तेः-तस्य सविकल्पकमात्रविषयत्वात् । लौकिकप्रत्यक्षविषयस्यैव द्रव्यादेर्निर्विकल्पकविषयत्वात् । अत एव-भावत्वं वा विवक्षितमिति-वर्द्धमानः इति चेन्न । तस्यैवानिर्वचनात् । न तावद्भावभिन्नत्वम् तत्-अभावत्वस्य भावभिन्नत्वेऽन्योन्याश्रयादिति चेन्न । अभावाविशेष्यकधीविशेष्यत्वस्य लक्षणत्वात् । द्रव्यमित्यादिधियां तथात्वात् । यस्यास्तु धियोऽभावो विशेष्यस्तस्या अभावविशेष्यकत्वनियमादिति दिक् ।

अभिधेयत्वमिति । यदिदमभिधीयमानत्वं तदभिधानानाश्रये न यातीत्यभिधानयोग्यता तदर्थः । तच्च पदशक्तिविषयत्वम् । यद्यपि अत्र वैयर्थ्यम्-शक्तिविषयत्वस्य विषयत्वस्यैव वा सामञ्ज-

(से०)स्यात्, तथापि तथाभूतस्य धर्मत्वमविरुद्धमेव,न ह्यतिव्याप्त्या-दिवारकविशेषणवदपि पदशक्तिविषयत्वन्तद्द्रव्यादिषु वर्तेत इति भावः ।

ज्ञेयत्वमिति । यद्यप्येतन्न ज्ञानकर्मत्वं—लौकिकप्रत्यक्षं प्रत्येव विषयस्य कर्मत्वात्, ज्ञानान्तरस्य विषयाजन्यत्वात्, तथापि ज्ञान-विषयत्वलक्षणज्ञानयोग्यत्वं विवक्षितम् । अत्रापि वैयर्थ्यशंकायां पूर्वोक्त एव न्यायः । एतद्द्वयं च न द्रव्यादीनां लक्षणमितरस्मिन्न-भावेपि विद्यमानत्वेन ततो व्यावर्तकत्वाभावात्, किन्तु धर्ममात्रमि-त्याचार्याः। अभिधेयत्वं–भाववत्पदशक्तिविशेष्यत्वम्। ज्ञेयत्वं भावत्व-प्रकारकप्रमाविशेष्यकत्वम् । एवं लक्षणत्वमपीत्यन्ये ।

( भा० ) आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः ।

( सू० ) आश्रितत्वञ्चेति । चोऽवधारणे । तथाच षण्णामपि पदार्थानां नित्यद्रव्येभ्यो–विभुद्रव्येभ्योऽन्यत्रैवाश्रितत्वमाधेयत्वं साधर्म्यमिति पूर्वेणान्वयः । तेन नित्यानां परमाणूनामाश्रितत्वं न क्षतिकरं तेषामपि लक्ष्यत्वात् ।

(से०)आश्रितत्वमिति। नन्वाश्रितत्वं यद्याधेयत्वन्तदा संयोगसम्बन्धे-न विद्यमाने परमाण्वादावप्यस्त्याकाशादीनां संयोगेन विद्यमानत्वप-क्षे वृत्तितायां सिद्धायां तत्रापि चास्तीति नित्यद्रव्यव्यावर्तनमयुक्तम् । अथ समवेतत्वं ? समवायेऽव्याप्तिः–तस्य स्वरूपसंबन्धेन विद्यमानत-या स्वरूपसंबन्धस्य धर्मिद्वयात्मकतया प्रकृते एकस्य धर्मिणः समवा-येन विद्यमानत्वस्य विवक्षणात् । ननु समवाये घटाभाव इति प्रतीत्या घटाभावस्य समवायित्वेन तत्रापि स्वरूपसम्बन्धस्याङ्गीकर्तव्यतया तस्य च धर्मिद्वयात्मकतया धर्मिणश्चैकस्यात्र समवायस्य प्रवेशेन प्रकृताभावे समवायसम्बन्धेन विद्यमानत्वमिति चेन्न । अस्यार्थमत्र वर्द्धमानोपाध्यायाः—संयोगान्यवृत्त्यासमवायाभिन्नभावत्वं विवक्षि-तमित्याहुः । अस्यार्थः–संयोगान्यवृत्त्या संयोगातिरिक्तसम्बन्धेन यो-ऽसमवायोऽसंबद्ध आकाशादिराकाशादेः संयोगसम्बन्धेनैव संबं-द्धत्वात्तद्भिन्नभावत्वमिति । तन्न । आकाशादेरपि संयोगातिरिक्तस-म्बद्धत्वात् तस्य कालवृत्तित्वस्यावश्यकत्वात्। तत्र कालद्रव्यवृत्ताव-

(से०)ङ्गीक्रियमाणायां विभुद्वयसंयोगाभावेन तदतिरिक्तसम्बन्धः। यदि च कालोपाधिवृत्तिस्तदा कर्मणि संयोगायोग्यतयान्य एव सम्बन्धः। स च स्वरूपसम्बन्ध एव । एवञ्च संयोगान्यवृत्त्याऽसम्बद्धप्रतीतेः कथं तद्धर्मे लक्षणमिति । संयोगान्यवृत्तिः समवायः, उपलक्षणे तृतीया । तथा चान्यसमवायोपलक्षितोऽन्यसमवायवान् सन् योऽसमवायोऽसमवेतस्तद्भिन्नभावत्वं भवति इत्याकाशादिः शब्दादिसमवायवत्त्वे सति स्वयं समवेतस्तद्भिन्नभावत्वमनित्यद्रव्यादौ सुलभमेवेति। पुनरर्थगतिगवेषणे प्रामाणिकपरिगृहीतः पन्थाः । शब्दशैलीपरिशीलने त्वयमपि कण्टकित एव। तथाहि—असमवायेति समस्तपदार्थस्यासमस्तेन संयोगान्यवृत्त्येत्यनेनान्वयासंभवात् । न ह्यतिप्रचण्डदोर्दण्डाकृष्टकोदण्डविनिःसरन्मार्गणगणपातितोरस्तटप्रतीपपार्थिवप्रेयसीसंघातानुगीतशरदमृतधामाभिरामयशा राजपुरुष इति वाक्ये यशा इत्यन्तं समस्तमसमस्तेन राजपदेनान्वेतीति कस्यापि सचेतसश्चेतसि चमत्कारं रचयति। तस्मात्समवेतसमवायसम्बन्धत्वं नित्यद्रव्यातिरिक्तानां नवानां लक्षणम् । न हि समवाययोर्यः सम्बन्धः समवेतसमवायलक्षणस्वरूपसम्बन्धस्तस्य समवेतसमवायभावलक्षणस्वरूपसम्बन्धविशेषस्य (स) तदतिरिक्तेष्वप्यसम्बद्धः, सम्बन्ध्यतिरिक्तेऽवृत्तेरित्यस्मदुक्तेः भाष्यकिरणावलीवर्द्धमानानामस्मत्पितृचरणविरचितवर्द्धमानप्रकाशस्य च विमलनाम्नस्तात्पर्यमवधार्यमिति । चकारान्मूर्ते विहाय निष्क्रियत्वमित्याचार्याः। एतच्च यद्यपि निष्क्रियविनष्टे मूर्तेऽतिव्याप्तम् । न च निष्क्रियस्य मूर्तस्य कार्यविनाशो द्वितीयक्षणे विनाशे क्षणिकतापत्तेः, तत्तृतीयक्षणादौ तु विनाशे कर्मोत्पत्तिसंभवात् इति वाच्यम् । कर्मोत्पत्तेरागन्तुकनोदनादिहेतुकत्वेन द्वितीयक्षणेऽसंभवेन तृतीयक्षणे नष्टे निष्क्रियत्वसंभवात् । न हि विनश्यदवस्थस्य कर्मसमवायिकारणत्वं संभवति कार्योत्तरकाले सत एव कार्यसमयसतो वा समवायिकरणत्वादित्यस्याप्यनंगीकारे कार्योत्पत्तिदशायां समवायिकारणनाशे कार्यस्य क्षणिकतापत्तेः । न चैवमन्यतरकर्मणोऽप्यभावेनाकाशादिसंयोगाभावे सर्वमूर्तसंयोगित्वलक्षणविभुत्वं तेषां हीयेतेति वाच्यम् । कारणाकारणसंयोगेन तदुपपत्तेः । तथापि क्रियावद्वृत्तिद्रव्यविभाजकोपाधिशून्यत्वं विवक्षितम् । ते चोपाधयः पृथिवीत्वा-

(से०)दयः। तेन रूपेण यद्विभागो भाष्यकृता न कृतः,तथापि पदार्थो द्विविधो भावोऽभावश्चेत्यभिप्रायस्थो ज्ञेयः। एवञ्च भावत्वाभावत्वे पदार्थविभाजकोपाधी, द्रव्यत्वादयस्तु भावविभाजकाः। अभावविभाजकन्तु कस्यचिन्मतेऽन्योन्याभावत्वं संसर्गाभावत्वं च। संसर्गाभावविभाजकं प्रागभावत्वादि। कस्याचित्तु मतेऽभावश्चतुर्विधः-प्रागभावप्रध्वंसात्यन्ताभावान्योभावभेदादिति विभागात्प्रागभावत्वादयोऽभावविभाजका एव। येन रूपेण यस्य विभागो यस्य मते तस्यैव तस्य मते तद्विभाजकोपाधित्वात्। एवञ्च विभाजकोपाधिचिन्तनं साधर्म्यवैधर्म्योपयोगित्वेनौपोद्घातिकं प्रासंगिकञ्चेति नासंमतमिति॥

(व्यो०)अथाव्यतिरेकेऽस्तित्वादीनां पदार्थान्तरभावाद्वेपि साधर्म्यरूपतया परिज्ञानार्थमाह षण्णामपि पदार्थानामस्तित्वं चाभिधेयत्वं च ज्ञेयत्वं चेति समाहारद्वन्द्वः। न परमस्तित्वादयः षण्णां धर्मास्तथाश्रितत्वं चेति। तस्य अनित्येष्वसंभवात् अव्यापकत्वेन पृथगभिधानमित्याह-आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य इति। अथाव्यतिरेके अस्तित्वादीनां क्वान्तर्भाव इति चेत्। शाब्दव्यवहारस्य विवक्षितत्वादस्तेः शाब्दरूपस्य भावोऽस्तित्वं ज्ञानमेव। येन सत्तास्तीत्यभिधानं प्रवर्तत इति। ज्ञानरूपस्य चास्तेर्भावोऽस्तित्वमिति विवक्षायां सत्तास्वरूपं स्वत्वं वा लभ्यते। तत्सद्भावे द्रव्यादिष्वस्तीति ज्ञानदर्शनात्। अस्ति चायमस्तिशब्दो ज्ञाने तद्विषयेऽभिधाने चेति। तथाभिधेयस्य च भावोऽभिधेयत्वमभिधेय इति ज्ञानमेव। तेन सत्ताभिधेयोऽयमर्थ इति शाब्दव्यवहारदर्शनात्। तच्चाभिधानजनितं ज्ञानमर्थ इति शाब्दव्यवहारदर्शनात्। तच्चाभिधानजनितं ज्ञानमर्थ इति। तथा ज्ञेयस्य भावो ज्ञेयत्वम् इति ज्ञानमेव। तेन सत्ता ज्ञेयमिति व्यवहारदर्शनात्। तच्चाभिधानजनितं ज्ञानमर्थ इति। तथा ज्ञेयस्य भावो ज्ञेयत्वं ज्ञेयमिति ज्ञानमेव। तेन सत्ता ज्ञेयमिति शाब्दव्यवहारदर्शनात्। तच्च ज्ञानेन विशेषणेन जनितसंज्ञानमर्थ इति।

तथाऽऽश्रितानां भाव आश्रितत्वम् आश्रयाश्रयिभावलक्षणा वृत्तिः। सा चाकाशादिषु तेषां आश्रयभावात्।: न चाश्रयाश्रयिभावस्य समवायरूपतायां समवायेऽसंभवात् न षट्पदार्थव्यापित्वम्। अथ पञ्चानां समवायलक्षणा वृत्तिराश्रितत्वम, समवायस्तु स्वात्मवृत्तिरिति चेत्। एवं तर्हि पञ्चानां समवायित्वमिति पुनरुक्तम्

(व्यो०)स्यात् । तथाहि-समवायित्वं समवायलक्षणा वृत्तिः सा च पञ्चानामाश्रितत्वपदेनोक्तेति । आश्रितत्वपदेन आश्रितत्वोपलक्षितस्येहाभिधानात् अदोषः । अथ व्यतिरिक्तस्य निमित्तस्यासंभवात समवाये भावप्रत्ययः कथम? आश्रितस्य समवायस्य भावः आश्रयत्वमिति । नैतदेवम् । समवायस्य वृत्तिरूपतया वृत्तिमदाश्रितत्वोपलब्धेः । वृत्त्यन्तरकल्पनायामनवस्था स्यादित्युपचारिता वृत्तिरिष्यते । सा चान्यनिमित्तस्यासंभवादाश्रितत्वज्ञानहेतुः समवाये वृत्तिविशेष एव । आत्मवृत्तित्वे तु समवायस्य स्वयं वृत्तिरूपत्वाद्वृत्त्यन्तरं नापेक्षितमित्यभ्युपगमेनाश्रितत्वमेव, अव्यतिरेके ह्याश्रयाश्रयिव्यवहारासंभवादतः समानलक्षणवृत्तिप्रतिषेध एवेति वक्ष्यामः-समवायपरीक्षायामित्यलम ॥

( भा० ) द्रव्यादीनां पञ्चानां समवायित्वमनेकत्वं च ।

( सू० ) द्रव्यादीनां पञ्चानामपीत्यपिरवधारणे । तथाच द्रव्यगुणकर्मसामान्यविशेषाणामेव समवायित्वं-समवायप्रतियोगित्वं समवेतवृत्तिभावविभाजकधर्मवत्त्वम् समवायावृत्तिधर्मवद्भावत्वं वा फलितम् । तेन सामान्यविशेषयोः समवायित्वस्य नित्यद्रव्ये च समवेतत्वस्यासत्त्वेऽपि न तेष्वव्याप्तिः । अनेकत्वंबहुतरवृत्तिभावविभाजकत्वत्वम् । चकारादुभयावृत्तिभावविभाजकधर्मशून्यभावत्वाद्युपग्रहः ॥

( से० ) समवायित्वमिति । नन्वेतद्यदि समवेतत्वं-तदा नित्यद्रव्येष्वव्याप्तिः । यद्यन्यसमवायवत्त्वं-तदा सामान्यादावव्याप्तिः तत्रान्यसमवायाभावात् इति चेन्न । समवायत्वस्य विवक्षितत्वात् । अवयव्यवयववादीनां समवायस्य द्विष्ठतया जातिव्यक्तिविशेषनित्यद्रव्ययोरपि समवायस्य द्विष्ठत्वाज्जात्यादावन्यसमवायाभावादिति चेन्न अभावेऽपि समवायसत्त्वात्, समवाये तु न याति समवायान्योन्याभावः । अत एवाचार्याः-'समवायित्वं समवायलक्षणः सम्बन्धः' इति ।

अनेकत्वमिति । नन्वनेकत्वं यदि अनेकत्वसंख्या, तदा गुणादावव्याप्तिः । यद्येकत्वविरहः, तदा समवायेऽतिव्याप्तिर्द्रव्याव्याप्तिश्च । यदि स्वरूपभेदः सः,समवायेऽपि चतुर्विधभेदान्तर्गतस्य स्व-

(से०)रूपभेदाख्यद्रव्यादिप्रतियोगिकस्य समवायाभावयोरपि सत्त्वादिति चेन्न। स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणभावविभाजकोपाधिमत्त्वस्य विवक्षितत्वात्। द्रव्यादौ इदं याति-एकद्रव्यादिप्रतियोगिकान्योन्याभावेन द्रव्यान्तरादौ द्रव्यत्वादेः समानाधिकरणत्वात्। समवाये तु न याति समवायान्योन्याभावस्य समवायेऽभावात् द्रव्यादौ सत्त्वेऽपि तत्र समवायत्वाभावात्। अनेकत्वञ्चेति चकारात्समवायादन्यत्वमित्याचार्याः। तच्च समवायप्रतियोगिकान्योन्याभाववत्त्वम् अतो नाभावेऽतिव्याप्तिः-तत्रान्योन्याभावाभावात्। ननु समवायान्यत्वेन समवायभेदसाधने साध्यविशेष इति चेन्न। समवायान्योन्याभावेनेतरभेदसाधनादितरमध्येऽभावस्यापि प्रवेशात् भेदमध्ये स्वरूपभेदादेरपि प्रवेशात् साध्याविशेषाभावात्, अन्यथा पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यत्रापि तदापत्तेः-साध्यभेदान्तर्गतस्य वैधर्म्यस्य पृथिवीस्वरूपस्याहेतुत्वात्। अत्रापि साध्याविशेषपरिहारस्योक्तगत्यैवावगन्तव्यत्वात्॥

(व्यो०) इदानीं समवायपरित्यागेन पञ्चानां साधर्म्यमाह—द्रव्यमादिर्येषां ते द्रव्यादयः तेषाम्। न ज्ञायते कियतामित्याह पञ्चानामपि साधर्म्यं समवायित्वमनेकत्वं चेति। समवायो विद्यते येषां ते समवायिनस्तेषां भावः समवायित्वम्-समवायलक्षणा वृत्तिरिति। अनेकत्वं च-समानलक्षणयोगित्वे सति व्यक्तिभेदोऽनेकत्वसंख्या चोपचरिता। समवाये तु समानलक्षणयोगिनि न व्यक्तिभेदो नाप्यनेकत्वसंख्येति॥

(भा०) गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे॥

(सू०) गुणेति। गुणकर्मसामान्यविशेषसमवायानामेव निर्गुणत्वं गुणवदवृत्तिधर्मवत्त्वम्, तेनाद्यक्षणे द्रव्यस्य गुणवदन्यत्वेऽपि न तत्रातिव्याप्तिः। निष्क्रियत्वं क्रियावदवृत्तिभावविभाजकधर्मवत्त्वम्, नातो विभुन्यतिव्याप्तिः॥

(से०) गुणादीनामिति। निर्गुणत्वं यदि गुणाभाववत्त्वं तदा द्रव्येपि अन्योन्याभावस्य सत्त्वात्, संसर्गाभाववत्त्वमपि द्रव्ये प्रागभावध्वंसयोः सत्त्वात्, अत्यन्ताभावोऽपि गन्धात्यन्ताभाववज्जलमित्यादिक्रमेण तत्रास्ति। गुणत्वावच्छिन्नप्रतियोगिताकात्यन्ताभा-

धस्तु न द्रव्ये इति तत्त्वम् । निष्क्रियत्वं कर्मत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वम् यद्यप्याकाशादावतिव्याप्तम्, तथापि क्रियावद्वृत्तिभावविभाजकोपाधिशून्यत्वं तथेति भावः ॥

( व्यो० ) इदानीं द्रव्यपरित्यागेन साधर्म्यं दर्शयति—गुणा आदिर्येषां ते तथोक्तास्तेषाम् । न ज्ञायते कियतामतः पञ्चानामपि साधर्म्यम् निर्गुणत्वं च निष्क्रियत्वं चेति निर्गुणत्वनिष्क्रियत्वे । निर्गता गुणा येभ्यस्ते निर्गुणास्तेषां भावो निर्गुणत्वम् गुणाभावः । अथाभावस्य भावतया धर्मत्वाभाव इति चेत्, न विशेषणत्वेन तदुपपत्तेः । तथाहि-गुणाभावेन सत्तागुणादिष्वन्वयव्यतिरकाभ्यां निर्गुणा इति व्यवहारदर्शनात् ज्ञायते गुणाभावस्य विशेषणत्वेन धर्मत्वमिति । स च पंचसु समानत्वात् साधर्म्यमिति । षडेव पदार्था इत्यवधारणं च भावविषयमित्यभावस्य व्यतिरेकेपि न दोषः । आश्रितस्य धर्मत्वेपि समवेत एव धर्म इति नियमानभ्युपगमाच्चेति । निष्क्रियत्वं तु निर्गता चलनलक्षणक्रिया येभ्यस्ते निष्क्रियास्तेषां भावो निष्क्रियत्वम् क्रियाभावः साधर्म्यम् ; तेन सत्ता निष्क्रिया इतिव्यवहारदर्शनात् ।

अन्ये तु गुणाभावोपलक्षितः समवायो निर्गुणत्वं क्रियाभावोपलक्षितश्च निष्क्रियत्वमिति मन्यन्ते । तच्चासत्-समवाये धर्मिसमवायान्तरस्यासंभवान्निर्गुणव्यवहारो न स्यात् अभेदे हि धर्मधर्मिव्यवहारादर्शनात् ॥

**( भा० ) द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च ॥**

( सू० ) द्रव्येति । द्रव्यगुणकर्मणां सत्तासम्बन्धः-सत्तासमवायः । सामान्यविशेषवत्त्वं—सत्ताव्याप्यजातिमत्त्वम् । स्वसमयेति वैशेषिकाणां स्वशक्तिः, तेनार्थशब्दाभिलप्यमानत्वमित्यर्थः । धर्माधर्मकर्तृकत्वं—अदृष्टजनकभावत्वम् , तेन धर्माधर्मयोरेकमात्रजनके नाव्याप्तिः । भावत्वोपादानान्नाशौचाद्यभावेऽतिप्रसङ्गः । न च सुवर्णादिद्रव्यतदीयगुरुत्वादिगुणतद्दानादिकर्मणां यथा धर्म-

(सू०)जनकत्वं यथा वा पुरीषादिद्रव्यतत्संयोगतद्ग्रहणादिकर्मणामधर्मजनकत्वं तथा तादृशद्रव्यादिगतानां स्वर्णत्वादिजातीनामपि परंपरया धर्माधर्मजनकत्वं सुवचमतस्तत्राव्याप्तिरिति सांप्रतम्। स्वर्णत्वादिजातेर्धर्मादिजनकतावच्छेदकत्वेनैवोपक्षयात् तीर्थादिदेशस्य तत्संयोगतदनुसरणादेर्धर्माधर्मजनकतायाश्च सिद्धत्वादिति भावः॥

( से० ) सत्तेति। यद्यप्येकार्थसमवायादयस्सामान्यादावपि तथापि तन्निरूपितसमवायो नान्यत्रेति भावः। सामान्येति। सामान्यविशेषा द्रव्यत्वादयस्तद्वत्त्वमित्याचार्याः। तत्र विशेषपदवैयर्थ्यं सामान्यस्यैव लक्षणत्वसंभवादिति केचित्। तन्न सामान्यविशेषस्य सत्ताव्याप्यत्वप्रदर्शनाय सत्तां लक्षणत्वेनाभिधाय तेषामेव सामान्यविशेषस्य लक्षणत्वेनाभिधानात्। एवञ्च सामान्यविशेषवत्त्वं सत्तावति द्रव्यादावेव वर्तते न सामान्यादाविति प्राप्यते। लक्षणन्तु सामान्यवत्त्वमेवेत्येके। तत्र चासामान्यविशेषवत्त्वस्य भाष्यकृता सामान्यादौ कण्ठत एव भावितत्वात् सामान्यरूपो विशेषः सामान्यविशेषो जातिरूपो व्यावर्तको धर्म इत्यर्थः। तत्र व्यावर्तकधर्मवत्त्वे लक्षणे सामान्यादावतिव्याप्तेर्जातिमत्त्वमेव लक्षणमास्तामिति चेन्न। जातेर्विशेषणतया-लक्ष्यविशेषणतया लक्ष्यविशेषणतां निवर्त्य वैयर्थ्यमित्युक्तौ यथोक्तविशेषणाविशेष्यभावे वैयर्थ्याभावादिति तु वयम्। अत एवाचार्यचरणैरपि नात्र वैयर्थ्यमाशंकितम्। नहि सत्तावदित्यत्र वैयर्थ्ये तेषामशेषार्थविषयकमतीनां प्रस्फुरणं संभवति। ननु युगपदुद्युक्तसुरासुरबलभुजबलचञ्चलमन्दराचलप्रौढाभिवातवर्गतदुत्तरलतरङ्गतरङ्गिणीभुजङ्गसमुद्भूताखण्डस्तवानयमाकाशावकाश इति(?) वाक्याकर्णनकुतूहलापाक्रान्तकर्णानां समुद्भूते शाब्दबोधे विशेष्यांश इव विशेषणांशेऽपि संशयाभावेन विशेषणतापि शाब्दबोधस्य विषयस्तथाच नीलोत्पलवत् इत्यादौ विशेष्याभिन्नाविशेषणस्थले यथा द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते तथा मतुबर्थो विशेषणविशेष्ययोर्द्वयोरप्यन्वेतीति चेन्न। एवं सति नीलवदुत्पलवदिति प्रतीत्यापत्तौ नीलाभिन्नोत्पलवदिति प्रतीत्यापत्तेस्तथा

(से०)प्रतीतावपि तथा संशयकारकं न तु तदभिन्नप्रत्ययस्य तत्सत्ता-साक्षिणोऽनुभवस्यैव वा कूटसाक्षिकोटिविनिक्षिप्तत्वात् नीलोत्पल-वदिति वाक्यान्नीलाभिन्नोत्पलवदिति भवति न तु नीलवदुत्पलव-दित्यत्र तु शब्दशैलीसाक्षिणो द्विश एव साक्षिण इति न व्याकु-लान्तःकरणा ये केचित्प्रष्टव्या इति दिक् ।

स्वसमयेति । ननु अभिधेयत्वं केवलान्वयीश्वरसंकेतमादायार्थ-शब्दाभिधेयत्वमपीति स्वसमयेति, तथाच वैशेषिकार्थशब्दसंकेत-विशेष्यत्वं लक्षणमित्यर्थः, तच्चाधुनिकवैशेषिकसङ्केतितसामान्या-दाविति चेन्न । साधर्म्यस्य त्रैकालिकत्वानियमात् ।

धर्मेति । ननु कर्तृत्वमचेतने नान्वितमन्यतरवैयर्थ्यञ्च । न च कर्तृत्वं कारणत्वं साधर्म्यद्वयं विवक्षितमिति वाच्यम् । अजनके धर्माजनके वा द्रव्याद्यन्तर्गतेऽव्याप्तेः धर्माधर्मयोरव्याप्तेश्च, तीर्थ-स्नानादिप्रापकधर्मेण धर्मजननेऽपि तन्मात्रेण धर्मजनने मानाभावात्, ब्रह्महननादिसमर्पकाधर्मेणाधर्मजननेपि तन्मात्रेणाधर्मजनकत्वे मा-नाभावाच्चेति चेन्न। अधर्मान्यत्वे सति धर्मजनकवृत्तिभावविभाजको-पाधिमत्त्वस्याधर्मान्यद्रव्यादिलक्षणत्वात् । धर्मान्यत्वे सति अधर्मज-नकवृत्तिभावविभाजकोपाधिमत्त्वस्य धर्मान्यद्रव्यादिलक्षणत्वाच्च । ए-तच्च यदि प्रथमलक्षणेऽधर्मस्य न लक्ष्यता द्वितीयलक्षणे धर्मस्य तदा, अन्यथा त्वत्यन्तविनिर्मुक्तमेव । निरुक्तस्याप्युपयोगः तथाहि–गोदा-नापहारयोर्हि सुकृतदुष्कृते कृते भवतस्तत्र न दानापहारयोरेवोप-योगो विनिगमनाविरहेण तदीयदानापहारयोरुपयोगे विषयस्य त-स्य तस्यापि हेतुत्वात् । ननु न व्यक्तिमात्रस्योपयोगोऽतिप्रसङ्गात् किन्तु गोत्वविशिष्टस्य, विशिष्टस्य चोपयोगे विशेषणस्योपयोगः स-र्वसंमतः, एवञ्च जातौ लक्षणमतिव्यापकमिति चेन्न । गोत्वस्य दण्ड-त्ववदवच्छेदकत्वात्, एवञ्चान्यथासिद्धतयाऽकारणत्वात् । गोत्वेन रा-सभादिव्यावृत्ततयाऽवगताया गोर्दाने तद्वारा गोत्वस्योपयोगेपि तस्य धर्माधर्महेतुत्वे मानाभावः । अपि च विहितनिषिद्धप्रयत्नविषय-स्यैव धर्माधर्महेतुत्वम् । प्रयत्नविषयता च द्रव्यस्य क्वचिद् व्यापा-रतया यथा गङ्गाजलादौ, तत्र स्वशरीरसंयोगस्य व्यापारजननात् । क्वचिद् व्यापारितया यथा तुलस्यादौ तुलस्यादेरुत्पादनसंभवात् ।

(से०)गुणकर्मणोस्तु व्यापारतयैव प्रयत्नविषयत्वम् द्रव्येतरत्वेन जन्यधर्मानाश्रयतया व्यापारित्वासंभवात्। सामान्यादीनान्तु द्रव्येतरतया जन्यधर्मानाश्रयत्वेन व्यापारित्वन्न संभवति व्यापारत्वन्तु नित्यत्वादिति कथं प्रयत्नविषयता तदभावे च कथं धर्माधर्मप्रसवभाव इति। अपि च धर्माधर्मजनकत्वं श्रुत्येकगम्यं, न च "गां दद्यात् ब्राह्मणं न हन्यादिति" वज्जात्यादिषु विधिनिषेधौ भवतः। तस्माद्द्रव्यादीनामेवापह्रियमाणानां दीयमानानां गवादीनां क्रीयमाणानां गंगाजलचाण्डालसंयोगादीनां तीर्थम्लेच्छदेशगमनादीनां च धर्माधर्महेतुत्वं न तु जात्यादीनाम्। उपयोगस्तु व्यक्तिव्यावर्तकतया जातिरपि सत्त्वसमवायेन व्यावर्तिकेति। समवायस्यापि अशेषस्य विशेषस्य तु कथमपि न तयोरुपयोग इति। ननु गां दद्यादित्यादौ विध्यर्थ इष्टसाधनत्वादिः प्रकृत्यर्थे दानादावेवान्वेति प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्प्रत्ययानामिति न्यायात्, तदन्यथानुपपत्तिकल्प्यधर्मजनकमपि तत्रैवान्वेतीति। न च गोदानस्य दीयमानतया वा गोर्जनकत्वे विनिगमनाविरहः। दानजनकत्वे प्रमाणसत्त्वात् गोर्जनकत्वेऽपि तदसत्त्वाद्विनिगमकस्य स्फुटत्वात्, एवञ्च गोदानत्वेन जनकत्वे गोरवच्छेदकतयोपयोग इति, यत्र तु सुवर्णं सर्वकामदमित्यादिना कर्मणोपयोगापत्तिः तत्र विनिगमनाविरहेण द्वयोरपि धर्महेतुत्वमिति चेन्न। गवादीनामपि धर्मोपयोगस्य बहुषु श्रुतिस्मृत्यादिषु श्रूयमाणत्वात्, यत्र च न श्रूयते तत्र तुल्यन्यायतया कल्पनात् कस्यचिद्द्रव्यादेर्जनकत्वेन प्रकृतलक्षणोपपत्तेरिति संक्षेपः॥

(व्यो०) द्रव्यादित्रयस्य साधर्म्यमाह—द्रव्यमादिर्येषां तानि द्रव्यादीनि तेषाम्। न ज्ञायते कियतामित्यतः त्रयाणामपि सत्तासम्बन्धः साधर्म्यं। सत्तायाः सम्बन्धः सत्तोपलक्षितः समवाय इति। ननु द्रव्यादिषु सत्तायाः सद्भावे किं प्रमाणम्। सद्द्रव्यं सद्गुणः सत्कर्मेति प्रत्यय एव। तथाहि-सदितिज्ञानं विशेष्यज्ञानत्वान्नर्ते विशेषणाद्भवतीति सत्तासद्भावः। नन्वेवं तर्हि त्रयाणामित्ययुक्तम् सामान्यादिष्वपि सत्त्वादिति ज्ञानोत्पत्तेः। तथाहि—सत्सामान्यं सन्तो विशेषा सन् समवाय इत्यपि विशेषज्ञानदर्शनात् वाच्यः सत्तासम्बन्ध इति। अथ स्वात्मसत्त्वं सामान्यादिषु, तत्रापि सत्तावदनवस्थानादिदोषः। अथ प्रतिपदार्थनियतं, तस्य व्यावृत्तरूपतायां सत्

(व्यो०)सदिति ज्ञानजनकत्वं न स्यात्-अस्य ह्यनुगतत्वात् । नान्यथा तदुपपत्तेः । तथाहि-सामान्यादिषु सत्तासमवाये बाधकोपपत्तेः सत्सदिति ज्ञानमुपचरितं । उपचारश्च प्रवर्तमानो निमित्तमपेक्षत इति । स्वात्मना साधारणधर्मणोपचारनिमित्तेन सत्तावत्त्वं सत्सदिति प्रत्ययजनकत्वम् । यत्र हि सत्ता साधारणधर्मो दृष्ट इति तदुपलंभात् । सत्ताध्यारोपः प्रवर्तत एवेति सामान्यादिषु सत्समवाये बाधकोपपत्तेः । सत्सदितिज्ञानादिति ज्ञानस्यान्यथापि भावादन्यथासिद्धेहेतुरिति । न च द्रव्यादिषु सत्सदितिज्ञानस्यासाधारणधर्मादेवोत्पत्तिरिति वाच्यम् । मुख्ये बाधकासम्भवात् । न च मुख्यं विना क्वचिदुपचारो दृष्ट इति, द्रव्यादिषु सत्तासमवायादेव सत्सदिति ज्ञानं दृष्टमिति सिद्धम् ।

अन्ये तु सत्सदिति ज्ञानस्य सत्ताविशेषणजनितत्वादेकत्र समवेतत्वेन विशेषणमन्यत्र विशेषणविशेष्यभावेनेत्युभयत्रापि मुख्यतां ब्रुवते । तथाहि-न संयोगसमवायायत्तो विशेषणविशेष्यभावः-अभावे तदभावप्रसंगात् । अथ विशिष्टज्ञानप्रतिबन्धो यत्र हि विशिष्टज्ञानम् तत्र विशेषणविशेष्यभावस्ततो हि सामान्यादिष्वपि सत्सदितिविशेष्यज्ञानोत्पत्तेविशेषणविशेष्यभाव एव सम्बन्ध इति उभयत्रापि मुख्यं सत्सदिति ज्ञानम् ।

एतच्चासत् । यत्र हि गुणकर्मसामान्यानां विशेषणत्वम् उभयत्राभिमतं तत्र तत्र समवायेनेति दृष्टम् । सामान्यादिषु सत्तायाः समवायस्य व्यापकस्य व्यावृत्तेर्विशेषणत्वस्य व्याप्यस्य व्यावृत्तिरिति, केवलम् तत्सहचरितधर्मोपलब्धेः सत्ताध्यारोप इति युक्तम् । अन्यथा हि सर्वत्र गौणप्रत्ययोच्छेदो मिथ्याज्ञानस्य चेति । तथा हि-सिंहो माणवक इति माणवकेपि सिंहत्वं विशेषणम्, सिंह इवेति मुख्यमेव ज्ञानं स्यात् । तथा शुक्तिकायां रजतमिति ज्ञाने रजत इव रजतत्वं विशेषणमिति मिथ्यात्वं न स्यात् । अस्ति च मिथ्याज्ञानमिति प्रवक्ष्यामस्तदधिकारे । अथ सिंहत्वायोगिनि माणवके तत्सहचारितधर्मोपलंभात् सिंहत्वाध्यारोपेनोत्पादात् गौणत्वम् । तथा शुक्तिकायां रजतसाधर्म्योपलब्धे रजतत्वाध्यारोपेणोत्पादान्मिथ्यात्वमिति चेत् । कथमेतत् । माणवके सिंहत्वस्य समवायेनानुभवाभावात, तथा शुक्तिकायां रजतत्वसमवायेनानुभवाभा-

(व्यो)वात्। अतः स्मर्यमाणस्याध्यारोपेण सिंहत्वस्य माणवके व्यापारः, तथा रजतत्वस्य शुक्तिकायामिति प्रयुक्तम् गौणत्वं मिथ्यात्वं चेति। तर्हि सामान्यादिषु सत्ताध्यारोपेण सत्सदिति ज्ञानं न्याय्यम्—सत्तासमवाये बाधकोपपत्तेरिति। ननु भूतार्थस्य सामान्यादौ सत्सदिति ज्ञाने प्रतिभासनादुपचारः कथम्। यत्र हि व्यर्थः प्रथते तदुपचरितज्ञानमन्यथा ह्यध्यारोपाविशेष मिथ्याज्ञानेऽविशेष एव स्यात्। नैतदेवम्। सिंहत्वायोगिनि पुरुषे प्रतिपद्यमानोऽपि सिंहोऽयमिति प्रतिपद्यते। न चैवम्। रजतत्वायोगिन्यां शुक्तिकायां यो प्रतिपद्यमानो रजतमिति प्रत्येति। तथाच मिथ्याज्ञाने पश्चात् बाधकं भवेदिति। गौणज्ञाने तु पूर्वमपि बाधकमस्त्येव। केवलं तु शौर्यख्यापनाय माणवकं सिंह इव व्यवहरति। मिथ्याज्ञाने त्वतस्मिंस्तदेवेदमिति मन्यते। अस्ति च सामान्यादौ सत् सदितिज्ञानम्। न चास्य बाधकं कालत्रयेपीत्यत्र शेषमूह्यम्।

अथास्तु सामान्यादावुपचरितं–द्रव्यत्वादौ मुख्यं सत् सदिति ज्ञानं सत्तासम्बन्धस्तु विकल्पते–किं सत्ता सतां अथासतामिति। यदि सतामथ सत्तासम्बन्धात्पूर्वं सत्त्वम् सत्तासम्बन्धेन विना चेति। सत्तासम्बन्धाभ्युपगमे तत्राप्ययं विकल्प इत्यनवस्था।विनेति चेत्। किं सत्तया। अथासतां सत्तासम्बन्धात्सत्त्वमित्यपारमार्थिकम्। तर्हि सत्त्वमुपाध्यपेक्षितत्वात् सदिति चासतां सत्तासम्बन्धेन सत्त्वम्। खरविषाणादीनामपि सत्त्वं स्यात्–असत्त्वाविशेषात्। तथा सत्तायाश्चासत्त्वेन तद्योगाच्च द्रव्यादिषु सत्त्वं स्यात्। स्वरूपेण च सत्त्वे द्रव्यादिषु तथा प्रसंगः, सत्तासम्बन्धेन चानवस्थेति। अतोऽर्थक्रियाकारित्वेन सत्त्वमिति शाक्या मन्यन्ते। वर्तमानकालसम्बन्धित्वेनेत्यपरे। तत्र यत्तदवोचाम–किं सतां सत्तासम्बन्धात्सत्त्वमथासतामिति। तदसत् निष्पादसम्बन्धयोरेककालत्वात्। तथाहि पदार्थानां स्वकारणसत्तासम्बन्ध एवोत्पत्तिर्न पूर्वं सत्त्वम्–सत्कार्यवादप्रतिषेधात्। न चासतां स्वकारणसत्तासम्बन्धाभ्युपगमे खरविषाणादिषु तथाभावप्रसंगः। तदुत्पत्तिकारणाभावस्य तदभावेनैव निश्चयात्। नित्येषु पूर्वापरभावानुपपत्तेर्विकल्पानुपपत्तिः। न चापारमार्थिकं सत्त्वम् सत्तासम्बन्धस्य परमार्थत्वात्। न च स्फटिकादौ चक्रादिरूपमिवौपाधिकं द्रव्यादिषु सत्त्वम्। सत्तायास्तत्र-

(व्यो)समवायात्। उपाधिश्चोपाधीयमानो समवेतो वा कचित् समवेतरूपतिरोधायकश्च। तथाहि—स्फटिकादिरूपो रक्तादिद्रव्यसान्निध्यात्तिरोहितो रक्तस्फटिक इति प्रत्ययस्य भावाद्युक्तमौपाधिकत्वम। न चैवं सत्ता द्रव्यादिस्वरूपम् तिरोधायात्मानं प्रकाशयति—द्रव्यत्वादेरपि प्रतिभासनात्। नाप्यसमवेता तत्र समवायोपलब्धेः। नन्वेवं द्रव्यत्वादेर्व्यतिरेको तर्हि स्वरूपासम्भवाद्द्रव्यादेरप्यद्रव्यताप्रसंगः। तन्न द्रव्यत्वादेरेव द्रव्यादिष्वसाधारणत्वात्। तथाहि-द्रव्ये द्रव्यत्वेन सत्ताद्द्रव्यमिति व्यपदेशो गुणादौ च गुणत्वादिनेति। व्यतिरेकाविशेषेपि द्रव्येष्वेव द्रव्यत्वम् समवेतमिति तत्रैव व्यवहारहेतुर्न गुणादौ। एवं गुणत्वादावपि नियतधर्मिसमवायित्वं नियामकमिति वाच्यम्। समवायस्तु व्यतिरेकेपि समवाय्याधारतयावभासत इति समवायिव्यवहारहेतुरिति। अव्यतिरेके तु द्रव्यत्वादिस्वरूपाणामेकधर्मितादात्म्येनाभेदाद्विभिन्नव्यवहारहेतुत्वं न स्यात। भेदे वा धर्मिणस्तथाभावो विपर्यये तादात्म्यविरहात्। न च द्रव्यादिज्ञानस्य कल्पनात्वमिति वाच्यम्। अर्थक्रियान्वयव्यतिरेकानुभवविधायिनः कल्पनात्वे तत्प्रसंगादिति सिद्धम्। द्रव्यादिषु सत्तासंबंधात्सत्सदिति ज्ञानम्, अर्थक्रियाकारित्वेन सत्ताभ्युपगमे समानं चैतद्दूषणम्—किं सतामर्थक्रियाकारित्वमथासतामिति। सतामर्थक्रियाकारित्वे सत्ताभ्युपगमे तथा दुरुत्तरमितरेतराश्रयत्वम्। तथा ह्यर्थक्रियाजनकत्वे सत्त्वम् सतश्चार्थक्रियाजनकत्वमित्येकाप्रसिद्धावितराप्रसिद्धिरिति। अथार्थक्रियामन्तरेण सतोऽर्थक्रियाजनकत्वम् तत्राप्ययं विकल्प इत्यनवस्था। असत एवार्थक्रियाजनकत्वे खरविषाणादिषु तथाभावः स्यात्। अर्थक्रियायाश्चार्थक्रियांतरेण सत्त्वेऽनवस्था। अथ स्वरूपेणेति चेत्। पदार्थेषु तथाभावप्रसङ्गः। एतेन वर्तमानकालसम्बन्धित्वेन सत्त्वं प्रत्युक्तम्। अथार्थक्रियासामर्थ्यं सत्त्वम्? तस्यानेकपदार्थव्यापित्वेन सत् सदितिज्ञानजनकत्वे संज्ञाभेदमात्रम्। अव्यापित्वे त्वनुगतज्ञानजनकत्वं न स्यात्। तथार्थक्रियाजनकत्वे अर्थक्रियासमर्थ इति व्यवहारो न सत् सदितिविलक्षणत्वादित्यलम्। अतः स्थितमेतत्—द्रव्यादीनां सत्तासम्बन्ध इति।

तथा सामान्यमेव द्रव्यव्यावृत्तिहेतुत्वाद्विशेषो द्रव्यत्वादिः स

(व्यो०)विद्यते येषाम् तानि सामान्यविशेषवन्ति तेषां भावः सामान्यविशेषवत्त्वम्। समवेतः सामान्यविशेषस्तदुपलक्षितो वा समवायः तेन सत्ता सामान्यविशेषवद्द्रव्यमित्यादिव्यवहारदर्शनात्।

तथा स्वसमवाये स्वशास्त्रेऽर्थशब्देनाभिधीयन्त इति स्वसमयार्थशब्दाभिधेयानि तेषां भावः—स्वसमयार्थशब्दाभिधेयत्वं वाच्यवाचकालंबनं ज्ञानमेव साधर्म्यम्। अर्थसंज्ञाकरणे च प्रयोजनम्–श्रोत्रग्राह्योऽर्थः शब्द इति २ अ० २ आ० २१ सूत्रे। तथाहि श्रोत्रग्राह्यत्वाच्छब्द इत्युक्ते शब्दत्वादिभिर्व्यभिचारः तन्निरासायार्थग्रहणम्। अर्थस्तु द्रव्यकर्मात्मा गुणात्मापि भवति। न च श्रोत्रग्राह्य इत्येतत्समुदितं शब्दस्य लक्षणम्। तथा धर्माधर्मौ कुर्वन्तीति धर्माधर्मकर्तॄणि तेषां भावो धर्माधर्मकर्तृत्वम्। तच्च द्रव्यादीनामात्मीयं रूपं सहकारिविशेषश्च तथाच द्रव्यमात्मा धर्माधर्मयोः समवायिकारणम्। सुवर्णादिद्रव्यं च दानापहरणाभ्यां निमित्तकारणमिति। तथात्मान्तःकरणसंयोगोऽसमवायिकारणम्। शुद्धाभिसंधिर्दुष्टाभिसंधिश्च निमित्तकारणम् एवंगीतिविशेषो नृत्यविशेषश्च यथासंभवं निमित्तमिति शेषमूह्यम्। न तु सुवर्णादिद्रव्यवज्जातिरप्यदृष्टकारणम्। अस्तु वोपलक्षणेन चरितार्थत्वात्।

(भा०) कार्यत्वानित्यत्वे कारणवतामेव॥

(सू०) कारणवतामेवेति। द्रव्यादीनां त्रयाणामित्यनुषज्यते–कार्यत्वं–समवायावच्छिन्नजन्यत्वम्। अनित्यत्वं–विनाशिभावत्वम्। नातो ध्वंसे प्रागभावे चातिप्रसङ्गः॥

(से०) कार्यत्वेति। त्रयाणां कारणवतां साधर्म्यम्। कार्यत्वं यदि प्रागभावप्रतियोगित्वं तदा ध्वंसेऽप्यनित्यत्वम्। यदि ध्वंसप्रतियोगित्वं तदा प्रागभावेऽप्यस्तीत्युभयत्र विशेषणं सत्त्वेति आचार्यचरणाः। वयन्तु–कार्यत्वं प्रागभावप्रतियोगित्वमेव। न च ध्वंसेऽतिव्याप्तिः तत्र घटादेः प्रागभावस्थानीयतया प्रागभावप्रतियोगित्वाभावात्। अनित्यत्वमपि ध्वंसप्रतियोगित्वमेव। न च प्रागभावेऽतिव्याप्तिः तत्र घटादेर्ध्वंसस्थानीयतया ध्वंसप्रतियोगित्वाभावात्। नहि घटादिः प्रागभावो ध्वंसो वा तल्लक्षणाभावादिति व्यर्था सत्त्वेति वदामः॥

( व्यो० ) कार्यत्वं चानित्यत्वं च कार्यत्वानित्यत्वे द्रव्यादीनां त्रयाणामपि । यदि नाम कारणं विद्यते येषां तानि कारणवन्ति तेषामेव पूर्वपूर्वधर्मस्तु सर्वेषामिति लक्ष्यते, सापवादत्वाविशेषेपि कारणवत्त्वपदेनासमासकरणमनयोः साहचर्यज्ञापनार्थम् । यदि वा कारणवतामकारणवतां च कारणवतामित्यसमासकारणम् । अथ किमिदं कार्यत्वं नामेति ? स्वकारणसत्तासम्बन्धस्तेन सत्ताकार्यमिति व्यवहारात् । अभूत्वा भवनमित्येके । अत्राप्यभूत्वा पश्चाद्भवनं स्वकारणैः सत्तया च सम्बन्ध एवेति । अनित्यत्वं तु प्रागभावप्रध्वंसाभावोपलक्षिता वस्तुसत्ता । अथ वस्तुसत्ताकाले प्रागभावप्रध्वंसाभावयोरभावात् कथमुपलक्षणत्वम् । न चानित्यव्यवहारे सत्ता विशेषणम् विलक्षणत्वात् । तथाहि–सत्ताविशेषणं सत्सदिति ज्ञानमेव, ज्ञानान्तरे तु सत्ताया विशेषणत्वेन सर्वत्र सत्तैव विशेषणं स्यादित्यतिप्रसंगः । तस्माद्यत् भूत्वा भवत्यात्मानं जहाति तदनित्यमिति केचित् । तदप्यसत्–विनाशस्य वस्तुकाले असंभवित्वेन विशेषणत्वायोगात् । अथाविद्यमानोपि विनाशोऽनुमीयमानो भवत्युपलक्षणमिति चेत् । तथापि विनाश इति स्यात् नानित्यमिति। अनित्या विषया विनाशिन इति व्यवहारः । यदि चानित्यज्ञानेऽन्यं निमित्तं न स्यात् प्रतिपद्येमहि ह्युभयान्तोपलक्षिता सत्ता विशेषणमिति । यथोत्पत्तिविनाशयोरविद्यमानयोरपि कयाचित् भंग्या सत्तोपलक्षणत्वम् तथा वस्तूपलक्षणतायामपि न किञ्चिद्बाधकमस्तीति । तथाहि–प्रागभावस्स्मर्यमाणः प्रध्वंसाभावश्चानुमीयमानो वस्तूपलक्षणमिति । अथ विनाशानुत्पत्तिरनुत्पत्तिविनाशश्च विद्यमानत्वात् सत्ताविशेषणमिति चेत् । परमार्थस्य विशेषणत्वं तयोः कल्प्यतां किमिति प्रयासेन । अथानित्यज्ञानमभावानुरक्तं न भवतीति विशिष्टसत्ता विशेषणमुपकल्प्यते। न सत्तानुरागस्यानुपलब्धेः केवलमनित्यत्वानुरक्तमनित्यमिति ज्ञानमुत्पद्यते । अनित्यत्वं तु प्रागभावप्रध्वंसाभावोपलक्षिता वस्तुनः सत्तेति । इति उद्योतकरकल्पनायां कल्पनागौरवं स्यादिति प्रध्वंस एवानित्यत्वमितीष्टं भाष्यकारेणेति ।

(भा०) कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः ॥

(सू०) पारिमाण्डल्यं परमाणुपरिमाणम् । आदिपदेन द्व्यणु-

(सू०)रूपरिमाणं परममहत्त्वं आत्मविशेषगुणाश्च गृह्यन्ते, तथाच तेभ्योऽन्यत्र द्रव्यादीनां त्रयाणां कारणत्वं—निमित्तान्यकारणतावच्छेदकजातिमत्त्वम्। ज्ञानादिकमिच्छादौ निमित्तकारणमेव परिमाणस्य चाणुत्वमहत्त्वत्वादिना न परिमाणहेतुत्वं परन्तु विततहस्तत्वादिजात्यैवेति न परमाणुत्वादावतिव्याप्तिः।किरणावल्यान्तु-'पारिमाण्डल्यादिभ्य' इत्यत्रादिपदेन परममहत्त्वमन्त्यावयविगतरूपरसगन्धस्पर्शपरिमाणानि द्वित्वाद्विपृथक्त्वपरत्वापरत्वानि विनश्यदवस्थद्रव्यगतसंयोगविभागकर्माणि शब्दाजनकशब्दश्चरमः संस्कारस्तादृशज्ञानं च परिगृहीतानि। कारणत्वं च ज्ञातृधर्मेतरभावं प्रति फलोपधायकत्वमिति व्याख्यातम्। तन्मते सुखदुःखादेरजनितरूपादेः प्राक् नष्टपरमाणुरूपादिकस्य च लक्ष्यत्वात्तत्राव्याप्तिवारणप्रकारः परिचिन्तनीयः॥

(से०) कारणत्वमिति। ननु त्रयाणामेतल्लक्षणं नोपपद्यते सामान्यादौ गतत्वात्तेषामप्यनुगतत्वप्रत्ययादिकारणत्वात्। अन्यत्र पारिमाण्डल्यादिभ्य इति चायुक्तं पारिमाण्डल्यस्य परमाणुपरिमाणस्यापि ज्ञानकारणत्वात्। न च तत्कथं ज्ञानकारणं लौकिकप्रत्यक्षस्य तत्राभावात्, अलौकिकप्रत्यक्षस्य विषयाजन्यत्वादिति वाच्यम्। प्रमेयं जानाति सामान्यप्रत्यासत्तिप्रभवेऽनुभवे प्रमेयलक्षणसामान्यान्तर्गतस्य परमाणुपरिमाणस्यापि कारणत्वात्। न च प्रमेयानामननुगततया प्रमेयत्वेनानुगमे प्रमेयत्वमेव सामान्यप्रत्यासत्तिरिति वाच्यम्। सामान्यप्रत्यासत्तेश्च स्वप्रकारकबोधजनकत्वनियमेन प्रमेयत्वस्य प्रत्यासत्तित्वे प्रमेयमित्याकारकप्रमेयत्वप्रकारकबोधापत्तेः। यतः सामान्यप्रत्यासत्तेः स्वप्रकारकबोधजनकत्वावश्यकता अत एव सामान्याज्ञातमास? (सामान्याज्ञातानामन्त्य) कर्मणामुत्पत्तिसमये द्रव्यस्य विनश्यत्ता तैरपि किमपि न जन्यते अग्रिमक्षणे आश्रयस्यैव विनाशादिति तेपि प्रथमशब्दादिनाऽग्रिमशब्दादिजननादन्त्यशब्दः संस्कारेण ज्ञानेतराजननात्सर्वसंस्कारः चरमज्ञानं चादिपदेन गृह्यते, ततः समयसमाप्यसंस्कारसमुदयेऽपि तस्य ज्ञातृ-

(से०)धर्मत्वात् । एवं च यत्सुखादिज्ञातृधर्मेतराजनकं तत्राप्यादिपदं पदमादधाति । न हि सर्वस्य सुखादेः स्वज्ञानातिरिक्तजनकत्वे प्रमाणमस्ति । यद्यपि वारितेसु कैश्चिद्रसो ? जन्यत एव तथापि स न प्रागुक्तनयेन कार्य इति ज्ञातृधर्मेतरकार्याजनकत्वमदुष्टमिति संक्षेपः ॥

(व्यो०) तथा कारणानां भावः कारणत्वम् समवायिनोऽसमवायिनश्चात्मीयं स्वरूपं निमित्तकारणत्वम् । सामान्यादिष्वपि भावात् । तच्च प्रतिनियतमव्यविवक्षितविशेषं साधर्म्यम् ! तत्किं सर्वेषामित्यतआह–अन्यत्र पारिमाण्डल्यादिभ्य इति । पारिमांडल्यादीनि वर्जयित्वा । परिमण्डल्याः परमाणवस्तेषां भावः पारिमांडल्यं परमाणुपरिमाणम् । तच्च द्व्यणुकाणुपरिमाणोत्पत्तावकारणमिति वक्ष्यामः परिमाणावसरे । आदिपदेनाकाशादिविभुद्रव्यमंत्यशब्दः परत्वापरत्वपृथक्त्वाद्यकारणमिति ॥

## (भा०) द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः ॥

(सू०) द्रव्याश्रितत्वं–समवेतसत्त्वं, समवेतत्वसम्बन्धेन द्रव्यवत्सत्त्वं वा, द्रव्यादीनां त्रयाणां मध्ये नित्यद्रव्येभ्योऽन्यत्रेत्यर्थः। संयोगेनाश्रितोऽपि परमाणुर्न समवेतः । द्रव्यसमवेतावपि सामान्यविशेषौ न सन्ताविति तेषां व्युदासः । चकारान्नित्यद्रव्यान्यजातिमत्त्वस्योपग्रहः । द्रव्याश्रितत्वं द्रव्यासमवायिकारणकत्वं नित्यद्रव्येभ्यो नित्यगुणेभ्यश्चान्यत्र द्रव्यादित्रयाणां साधर्म्यम् ! चकारेण नित्यगुणस्यापि समुच्चयादित्यपि वदन्ति ॥

(से०) द्रव्याश्रितत्वं चेति । इदं च यदि द्रव्यसमवेतत्वं तदा सामान्यादावतिप्रसङ्ग इति द्रव्यसमवायिकारणकत्वं विवक्षितम् । नित्यद्रव्येभ्य इत्युपलक्षणं नित्यगुणेभ्य इत्यपि द्रष्टव्यम् । नित्यवर्गं विहाय त्रयाणां द्रव्यसमवायिकारणकत्वमित्यर्थ इत्याचार्याः । समवायिकारणकत्वमात्रं तु तेषां तात्पर्यविषयो द्रव्यपदवैयर्थ्यात् । आद्यसंयोगविभागौ प्रति कर्मासमवायिकरणं । संयोगजविभागजौ प्रति तु संयोगाविभागौ । वेगवतावयवेनारब्धावयविवेगे वेग एवासम-

(से०)वायिकारणम्। प्रक्षिप्तेष्वादिवेगे तु कर्म। एवं च कर्मासमवायिकारणकान्गुणान् विहाय अनित्यानां त्रयाणां गुणासमवायिकारणकतेति चार्थ इति आचार्याः। तत्र द्रव्यं प्रत्यवयवसंयोग एवासमवायिकारणम्। गुणेषु वैशेषिकानां पीलुपाकवादितया पृथिवीपरमाणुरूपरसगन्धस्पर्शान्प्रति तेजसंयोगः, द्व्यणुकरूपादीन्प्रति अवयवरूपाद्यः, नैयायिकमते तु केषुचित्पार्थिवावयविरूपादिष्वपि तेजःसंयोगाऽसमवायिकारणकता पिठरपाकवादिमते।अवयव्येकत्वसंख्यां प्रत्यवयवैकत्वं, द्वित्वादिकं प्रति तु समानाधिकरणैकत्वम्, द्वयणुकपरिमाणं प्रति परमाणुद्वित्वं, त्र्यणुकपरिमाणं प्रति द्वयणुकबहुत्वम्। अन्येष्ववयविपरिमाणेषु क्वचित् प्रचयाख्यसंयोगो यथा तूलपिण्डद्वयसंयोगात् महत् तूलपिण्डपरिमाणम्। प्रचयत्वञ्च संयोगे जातिविशेषः। क्वचित् कारणगतम्महत्त्वं यथा कपालादिपरिमाणाद् घटादिपरिमाणम्। क्वचिद्बहुत्वसंख्या यथा समानपरिमाणप्रचयचतुस्तन्तुकपटावधिकचतुस्तन्तुकपटमहत्त्वम्प्रति तन्तुगतचतुष्ट्वम्।अवयव्येकपृथक्त्वं प्रत्यवयवैकपृथक्त्वम्। द्विपृथक्त्वादि प्रति तु समानाधिकरणैकपृथक्त्वम्। संयोगाविभागौ प्रति तूक्तमेव। कालकृते परत्वापरत्वे प्रति कालपिण्डसंयोगः। दिक्कृते प्रति दिक्पिण्डसंयोगः। अवयविगुरुत्वं प्रति अवयवगुरुत्वम्। सांसिद्धिकावयविद्रवत्वं प्रति अवयवद्रवत्वम्। नैमित्तिकद्रवत्वम्प्रति तेजःसंयोगः। अवयविस्नेहं प्रति अवयवस्नेहः। वेगं प्रति निरुक्तमेव। स्थितिस्थापकमवयविगतं प्रति अवयवगतं स्थितिस्थापकम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः प्रत्यात्ममनःसंयोगः। शब्दं प्रति संयोगविभागशब्दाः। आद्यं कर्म पतनं प्रति गुरुत्वम्। स्यन्दनम्प्रति द्रवत्वम्। वह्नेरूर्ध्वज्वलनं प्रति वायोस्तिर्यग्गमनम् प्रति चादृष्टवदात्मसंयोगः। शरीरक्रियां प्रति प्रयत्नवदात्मसंयोगः। द्वितीयादिक्रियां प्रति तु वेगः। एवं च द्रव्ये संयोग एवासमवायिकारणम्। गुणे संयोगो गुणान्तरं कर्म च। कर्मणि संयोगो गुणान्तरं च। तथा च संयोगविभागकर्मजवेगभिन्नानामनित्यानां द्रव्यादीनां गुणानां समवायिकारणकत्वं लक्षणारहितं लक्षणमिति। गुणपदं चेह लक्षण आवश्यकम्, अन्यथा समवायिकारणकत्वस्य कर्मसमवायिकारणकेऽपि सत्त्वादतिव्याप्त्यापत्तेरिति॥

(ज्यो०) न च परं पूर्वसाधर्म्यं द्रव्याश्रितानामभावो द्रव्याश्रितत्वं चेति । तच्चान्यत्र नित्यद्रव्येभ्यस्तेषामाश्रयाभावात् । यद्यपि च षण्णामाश्रितत्वाभिधानेन द्रव्यादीनामाश्रितत्वमुक्तम् । तथापि द्रव्योपलक्षितस्येहाभिधानादपुनरुक्तमिति ॥

**( भा० ) सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दाभिधेयत्वं चेति ।**

(सू०) सामान्येति । सामान्यविशेषसमवायानां स्वात्मकमेव सत्त्वम् स्वरूपसत्त्वं न सत्ताजातिरित्यर्थः । बुद्धिलक्षणत्वं-बुद्धिं प्रत्येव जनकत्वं बुद्ध्यन्यभावजनकावृत्तिभावविभाजकधर्मवत्त्वमिति यावत् । सामान्यमनुगतबुद्धौ विषयविधया विशेषो लिङ्गविधया व्यावृत्तत्वबुद्धौ समवायः संनिकर्षविधया प्रत्यक्षबुद्धौ कारणं, द्रव्यादित्रिकन्तु बुद्धिभिन्नेऽपि द्रव्यादौ कारणमतो न तत्रातिप्रसङ्गः । यद्वा बुद्धेर्बुद्धिविशेषस्य सामान्यशून्यभावत्वप्रकारकयथार्थज्ञानस्य लक्षणत्वं विशेषत्वमित्यर्थः । अकारणत्वं–निमित्तकारणतान्यकारणताशून्यभावत्वम् । असामान्येति । सत्तावान्तरजातिशून्यभावत्वमित्यर्थः । नित्यत्वं–विनाश्यवृत्तिभावविभाजकधर्मवत्त्वं, नातो नित्यद्रव्यादावत्यन्ताभावादौ च प्रसङ्गः । अर्थेति । असमयार्थशब्दाप्रतिपाद्यत्वमित्यर्थः । चकारेण जन्यावृत्तिभावविभाजकधर्मवत्त्वाद्युपग्रहः । इतिर्दिगुपदर्शनार्थः, तेन द्रव्यगुणयोः कर्मान्यसत्त्वं सामान्यविशेषयोर्निःसामान्यसमवेतत्वमित्याद्यपि द्रष्टव्यम् ॥

( से० ) स्वात्मसत्त्वमिति । स्वात्मसत्त्वं प्रामाणिकत्वं द्रव्यादावपीति सत्ताराहित्यमित्यर्थः । बुद्धिलक्षणत्वं यदि बुद्धिरूपव्यावर्तकवत्त्वं तदाऽनुगतबुद्धिकारणत्वादेर्व्यावर्तकतया तदन्तर्गर्भतया बुद्धेरपि व्यावर्तकतयाऽसंभवासंभवेऽपि बुद्धिव्यावर्त्यात्मादावतिव्याप्ते-

(से०)रवारणात्। यदि च बुद्धिप्रमाणकत्वं बुद्धिरूपप्रमाविषयत्वं तदा-ऽत्यतिव्याप्तिः वन्ह्यादीनां व्याप्तिज्ञानादिप्रमाणकत्वात् सर्वत्र बुद्धेरेव प्रमाणत्वाच्च। नापि बुद्धिमात्रप्रमाणकत्वं, सामान्ये चक्षुषोऽपि प्रमाणत्वात्। नापि बुद्धिमात्रप्रमाविषयत्वं, बुद्ध्यतिरिक्ताया प्रमाया अन्यत्राप्रसिद्धेः। नापि बुद्धिरन्यथानुपपत्तिः कल्प्यते बुद्ध्यनुमेयात्मस्य तस्य सामान्यादाविवात्मादावपि सत्त्वात्। नापि बुद्धिमात्रानुमेयत्वम् आत्मादेस्त्विच्छादिनाप्यनुमानं, सामान्यविशेषसमवायानान्त्वनुगतबुद्ध्यादिनैवानुमानं कार्याणां तेषां कारणत्वेनैवेवं कल्पनादिति। एवमिन्द्रियेष्वतिव्याप्तिः तत्रापि रूपादिबुद्धेरेव कल्पकत्वादनुगतव्यवहारेणापि तत्कल्पनाच्चेति चेत्। अत्र वर्धमानोपाध्यायाः—निःसामान्यत्वप्रकारकभावविषयकयथार्थबुद्धिविषयत्वम्—अनुगतबुद्ध्याद्यन्यतमबुध्यसाधारणकारणत्वं वा विवक्षितमित्याहुः। अत्रान्तिमं संयोगेऽतिव्याप्तं—तेनापि इह कुण्डे बदरमित्यादिइहेतिबुद्धिसमुत्पादनात्। संयुक्तोऽयं संयुक्तोऽयमित्याद्यनुगतावगतिजननात्, द्रव्यमितरेभ्यो भिद्यते संयुक्तत्वादितीतरभेदबुद्धिजननाच्च। न चैकमात्रव्यावर्तकत्वमपैति तन्तुरूपादौ सत्त्वात्। अनुगतबुध्यादेः प्रागभावेष्वतिव्याप्तेश्च। ननूत्पत्तिमत्त्वेन प्रागभावत्वेन कार्यकारणभावे कथं तन्मात्रनिष्ठकार्यताकारणतावच्छेदकवत्त्वमसाधारणत्वम्, तन्मात्रकारणत्वं तु नासाधारणत्वम् स्वप्रत्यक्षेऽपि क्षमत्वादिति चेन्न। विशेषकारणतां विनाऽभावान्तरसत्त्वयाऽशेषकारणतयोत्पन्नस्याप्युत्पत्त्यापत्त्या तत्प्रागभावत्वेन तदुत्पत्तिमत्त्वेन कार्यकारणाभावे कारणेऽसाधारणत्वस्य विशिष्टशापेनाप्यपहस्तितुमशक्यत्वात्। आद्यमभावेऽतिव्याप्तम्—सामान्याभावौ निःसामान्यौ इति प्रमितिविषयत्वसत्त्वात्। अत्र भावस्यापि सामान्यस्य भानात्। तस्मान्निःसामान्यभावत्वमेवानेन विवक्षितमिति।

अकार्यत्वमिति। नात्र बहुव्रीहिः अनुगतप्रत्ययादेः कार्यस्य सत्त्वात्। किन्त्वनादित्वम्। ननु सामान्यादयस्सादय एव किं न भवन्तीति चेन्न। नैतेषां निमित्तकारणात्केवलादुत्पत्तिः भावकार्ये तथात्वादर्शनात्, अपि तु समवायिकारणासमवायिकारणेऽपि वाच्ये। तत्र गुणकर्मणोः समवेतस्य सामान्यस्य न तयोरेव समवायिकारणत्वं तयोरतथात्वात्। न चान्यतः तत्रैव तत्सा-

(से०) मान्यसत्त्वेऽसंभवातिव्याप्त्योः प्रसंगात् अन्यसमवयिकार्यस्यान्यत्रासमवायात्। एवं च गुणादिवृत्तिसामान्यदृष्टान्तेन द्रव्यवृत्तेरपि तस्यानादित्वम् स्यादेव। किञ्च घटसमवायिकारणकस्य घटत्वस्य घटोत्पत्त्यनन्तरमुत्पत्तिर्वाच्या–कार्यकारणयोरेककालोत्पत्तिकत्वाभावात्। तथा च प्रथमक्षणे स घटो न स्यात् घटत्वाभावात्। घटत्वात्यन्ताभावानधिकरण इति चेत्, तदपेक्षया घटत्वाधिकरणं घट इत्यस्य लघुत्वात्। तस्य सादित्वासिद्धौ गौरवस्य प्रामाणिकत्वात्। किञ्च प्रथमे क्षणे घटत्वसमानशीलतया पृथिवीत्वस्याप्यभावेन कारणतावच्छेदकस्य दण्डादाविव तत्पूर्ववर्तितानैयत्येन द्वितीयक्षणे गन्धोत्पत्तिगन्धोऽपि न स्यात्। ननु पृथिवीत्वेन न गन्धसमवायिकारणता सुरभ्यसुरभिकपालस्थे घटे गन्धप्रागभावासत्त्वात् तत्र च गन्धानुत्पत्त्या प्रागभावस्यानन्तत्वापत्त्याऽत्यन्ताभावस्वीकारेऽत्यन्ताभाववतस्तस्य समवायिकारणत्वाभावात् समवायिकारणे कार्यात्यन्ताभावाभावादिति चेन्न। विजातीयगन्धप्रागभावत्वाञ्च पृथिवीत्वेनापि कारणत्वे पृथिवीत्वस्य करणतावच्छेदकप्रवेशेन पूर्वमपेक्षणात् तृतीये क्षणे गन्ध उत्पद्यते। पृथिवीत्वात्यन्ताभावानधिकरणत्वं वाऽवच्छेदकमिति चेन्न। एतावत्कल्पनातः तदन्तादिकत्वकल्पनाया एव लाघवेनोचितत्वात्। अपि च द्रव्यत्वेन भावकार्यत्वेन जन्यजनकभावः, न च प्रथमक्षणे भवन्मते द्रव्यत्वमस्तीति जनकतावच्छेदकावच्छिन्नजनकाभावात कथं द्वितीयक्षणे द्रव्यत्वाद्युत्पत्तिः, तृतीयक्षणेऽपि च द्रव्यत्वोत्पत्तिर्दुर्घटा प्रथमक्षणे द्रव्यत्वाभावेन द्वितीयक्षणे द्रव्यत्वाभावात्तत एव चतुर्थादिक्षणेपि, तथाच द्रव्यत्वाभावेन जगति भावो न द्रव्यो भवेत्। अपि च द्रव्यत्वं कथं प्रयोजकं आत्माश्रयात्। न च द्रव्यत्वात्यन्ताभावानधिकरणत्वेन भावकार्यकारणत्वेनैव दूषणमिति वाच्यम्। गौरवात् द्रव्यत्वस्य सादित्वे सिद्धे लाघवमुपेक्ष्यानेन रूपेण कार्यकारणभावासिद्धिः, सिद्धे चास्मिन्दूषणभावे द्रव्यत्वस्य सादित्वसिद्धिरित्यन्योन्याश्रयात्। ननु भवतु तर्हि द्रव्यत्वमनादि सामान्यान्तरन्तु द्रव्यगतं सादि स्यात्, तत्रैषां दोषाणामसंभवादिति चेन्न। सामान्यस्यानादित्वे लाघवेनसामान्यत्वस्यावच्छेदकत्वं संभवति प्रमाणं विनोत्सर्गमुल्लंघ्य तद्विशेषस्यावच्छेदकत्वाकल्पनात्। तस्मात्सामान्यमनादि। समवायस्य

(से०) सादित्वे प्रथमादित्वे प्रथमादिक्षणे संबन्धाभावेन कारणता-वच्छेदकस्य द्रव्यत्वस्याभावे द्वितीयादिक्षणे समवायानुत्पत्तिप्रसङ्गः। गुणादेर्जन्यधर्माश्रयतया द्रव्यत्वं च। न च गुणादिसमवायोऽनादिः सादिस्तु द्रव्यस्यैवेति वाच्यम्। समवायस्य लाघवेनाकाशवदेक-त्वात्॥ विशेषस्य सादित्वे प्रतिव्यक्तिविशेषानेकत्वे गौरवम् अत एकवि-शेषोत्पत्तेः पूर्वं तदाश्रये व्यावृत्तये विशेषान्तरस्यावश्यकत्वात्, व्या-वर्तकधर्मं विना व्यावृत्तेरसत्त्वादिति दिक्॥ आचार्यचरणैस्तु—सामा-न्याद्यनादित्वावेदकं प्रकारान्तरमुक्तम्। अर्थोऽयं वर्द्धमानेन्दुकिर-णावलीभास्करयोरेवोपवर्णित इति नेहोच्यते।

अकारणत्वं ज्ञातृधर्मेतरकार्याजनकत्वम् अनुगतबुद्ध्यादौ कारण-त्वात्। असामान्यविशेषवत्वं—द्रव्यत्वादिरूपसामान्यविशेषराहित्यम्। न चात्र वैयर्थ्याशंका, अखण्डाभावे तदभावात्। सामान्याभावे विशेषाभावो इति करणेऽभावान्तरस्यैव भावात् प्रकृतविशेष्यव्य-वस्थितेः।

नित्यत्वं—ध्वंसाप्रतियोगित्वं तच्च भावत्वे सत्यकार्यत्वात्। अर्थ-शब्दानभिधेयत्वं—पूर्वोक्तार्थशब्दाभिधेयत्वाभावः। एषु यल्लक्षणमभा-वेऽतिप्रसक्तं तद्भावत्वेन विशेषणीयम्। चकारादकारणकत्वम्।

ननु सामान्यादिषु कथं न सामान्यम्। ननु समवायस्यैक-तयाऽनुगतबुध्यविषयतया तदर्थमंगीकार्यस्य सामान्यस्य नाङ्गी-कार्यता, विशेषस्याप्यप्रत्यक्षतया तदविषयतया निष्प्रयोजनत्वादि-ति चेन्न। समवायशब्दप्रवृत्तिनिमित्तत्वेन धर्मकल्पनायामखण्डत्वेन लघुतया तत्स्वीकारौचित्यात्, विशेषे योगिनामनुगतबुद्धिसम्भवात् सामान्ये बाधकानुपन्यासाच्चेति चेन्न। समवायस्य लाघवेनैकत-याऽनेकवृत्तिसामान्यानाश्रयत्वात्। सामान्यविशेषयोरनवस्थारूप-हानी एव निःसामान्यत्वप्रयोजिके।

ननु सामान्ये सामान्यस्वीकारेऽपि तत्र सामान्यास्वीकारे कथमनवस्था। न च सामान्यं यदि सामान्यवत् स्यात् तद-पि सामान्यं सामान्यवत् स्यात् इति सामान्यपरंपराप्रस-क्तयाऽनवस्थेति वाच्यम्। सामान्यस्य सामान्यवत्ताया सामा-न्यसामान्यवत्त्वेन व्याप्त्यभावात् आपादकस्य क्लृप्तसामान्य-निष्ठत्वेनापाद्यस्य कल्पनीयसामान्यनिष्ठत्वेन वैयधिकरण्याच्च। तद-

(से०)पि सामान्यमित्यनेन सामान्यवृत्तिसामान्यग्रहणे तत्सिद्ध्यसिद्धिभ्यां दोषः-सिद्धावपसिद्धान्तः असिद्धौ चाश्रयासिद्धेरिति। सामान्यत्वं यदि सामान्यवद्वृत्तिभावविभाजकोपाधिः स्यात् सामान्यव्याप्यः स्यादिति प्रकारेणानवस्थावस्थानाह्वानमिति चेत्। न, अप्रयोजकत्वात्। सामान्यादि यदि सामान्यवत् स्यात् द्रव्यादित्रितयान्तर्गतं स्यादित्यत्रापि नानुकूलस्तर्कः। विशेषस्य च सामान्यवत्त्वे कथं रूपहानिः। न चैतल्लक्षणस्य निःसामान्यत्वगर्भतया सामान्यवत्तायां सा स्यादेवेति वाच्यम्। सामान्यवत्त्ववादिना विशेषत्वजातेरेव लक्षणत्वेन स्वीकार्यत्वात्। न च विशेषस्य जातिमत्त्वे समानैर्गुणैरिव समानैर्विशेषैरपि कथमत्यन्तव्यावृत्तिरिति वाच्यम्। उपाधिमत्त्वेपि समानत्वसम्भवादुपाधिना साम्येऽपि धर्मिग्राहकप्रमाणसिद्धस्वतोवैलक्षण्येन भेदकतेति जातिपक्षेऽपि न याति। न च विशेषस्य सामान्यवत्त्वे द्रव्यकर्मभिन्नस्य गुणत्वापत्तिः, अप्रयोजकत्वात्। न च कर्मभिन्नत्वे सति सामान्यवत्त्वं गुणत्वमिति गुणलक्षणस्यातिव्याप्तिरेवं स्यादिति वक्तव्यम्। एतस्य तु लक्षणस्य सिध्यनुरोधित्वात्। तस्मात्सामान्यविशेषयोः सामान्यवत्त्वे न बाधकं पश्यामः इति चेत्।

अत्र ब्रूमः-सामान्ये हि न द्रव्यत्वाद्येकैकवृत्तिसामान्यम्-अनेकवृत्तित्वाभावात्। नापि द्व्यादिवृत्ति—तद्विषयकस्यानुगतस्य बोधस्य व्यवहारस्य चाभावात्, द्रव्यवृत्ति सामान्यं गुणवृत्ति सामान्यमित्यादेरनुगतबोधस्य द्रव्यवृत्तित्वादिभिरुपाधिभिरेवोपपत्तेः। न च लाघवादेते व्यवहारा जातिविषया एव, उपाधिविषयकत्वस्य स्फुटम्प्रतीतेः। तस्मात्सामान्यमित्यनुगतमत्यनुसारेण सकलसामान्यवृत्त्यनुगतं सामान्यत्वं सामान्यमित्यादरणीयम्। न चैतदुपपद्यते-सामान्यत्वस्य सामान्यत्वे वृत्तावात्माश्रयापत्तेः। अवृत्तौ जातिमात्रलक्षणत्वानुपपत्तेरव्याप्तेः। तस्मादुक्तोपाधिरेव द्रव्यत्वादिगतं सामान्यत्वम्। न च तस्यापि स्ववृत्तित्वापेक्षा, जातिलक्षणत्वात् तस्य चोपाधिकत्वात्। तस्मान्न सामान्यसमवाययोः सामान्यमिति सिद्धम्। विशेषस्त्ववशिष्यते। तत्रैकद्व्यादिष्वसाधारणानुगतावधारणाभावेनासाधारणजात्यभावेपि विशेषकारणगतधीबलाद्विशेषत्वजातिस्वीकारौचित्यात्। न चात्र समवायोक्तं बाधकम्,

(से०)अनेकवृत्तित्वात्। नापि सामान्योक्तं, विशेषलक्षणत्वेन स्वस्मिन् अभावे चानुगुण्यात् स्वस्मिन् वृत्तावतिव्याप्तेः। न च क्लृप्तोपाधि-विषयत्वेनैवोपपत्तिः, उपाधिविषयत्वस्यात्रास्फुटत्वेन जातिविषयत्वे बाधके सत्येवाऽनुगतप्रतीत्यादेरुपाधिविषयत्वोपगमादिति। अत्र ब्रूमः-सामान्यसमवाययोः प्रामाणिके जातिराहित्ये न सामान्यविशेष वत्त्वेऽवच्छेदकेऽनुगतत्वात्, किन्तु सत्तान्यूनवृत्तिन्यूनवृत्तिजातिराहित्येन तच्च विशेषे जातिबादिना सत्तान्यूनवृत्तेर्विशेषत्वस्य जातेस्तत्राङ्गीकारेऽपि तन्न्यूनवृत्तेः कस्याश्चिदपि जातेस्तत्रानङ्गीकारात्, तत्साधकासाधारणानुगतमतेरभावात्। नन्वेवमाकाशादिष्वपि जातिर्न स्यात् तत्रापि सत्तान्यूनवृत्तिन्यूनवृत्तिजातेरभावादिति चन्न। सत्तान्यूनवृत्तिन्यूनवृत्तिजातिसामान्याधिकरणभावविभाजकोपाधिराहित्यस्य जातिराहित्यावच्छेदकत्वात् आकाशे च तादृशपृथिवीत्वादिसामान्याधिकरणतादृशोपाधेः सत्त्वात्। ननु धर्ममात्रस्य वृत्तितावच्छेदकसापेक्षत्वादात्माश्रयान्योन्याश्रयचक्रकानवस्थान्यतमापत्तेः तथा च जातिराहित्यमनवच्छिन्नमेव सामान्यसमवाययोः स्थास्यति न विशेषे जातौ बाधकाभावात्। कर्मकारणवाच्यवाचकव्याप्यव्यापकभावादौ तु भवत्यवच्छेदकापेक्षा कारणत्वं हि तद्धर्मे कार्यत्वं च न हि दण्डस्य नियमोऽवच्छेदकं विना संभवत्येकदण्डं विनापि घटोत्पत्तेर्दण्डत्वावच्छिन्नं विना तु नोत्पद्यत इत्यस्ति नियमग्रहणार्थमवच्छेदकापेक्षा। कार्येपि नियमो न व्यक्तिमात्रेण ग्राह्यो दण्डं विनापि घटोत्पत्तेरिति घटत्वावच्छेदेन कार्यताग्रहः। एवं वाच्यवाचकभावेपि अवच्छेदकतया भावोत्तरघटत्वेन घटत्वेन वाच्यवाचकभावाभावाद्वाचके प्रकृतावच्छेदकानङ्गीकारे पटादिशब्दानामपि घटवाचकतापत्तिः वाच्ये तदनङ्गीकारे पटादेरपि प्रकृतपदप्रतिपाद्यतापत्तिरित्यन्यापनोदाय युक्ताऽत्राप्यवच्छेदकोक्तिरव। धूमत्ववह्नित्वादेरपि व्याप्यव्यापकतावच्छेदकयोरपेक्षा प्रमेयत्वेन तद्वह्नित्वेन च व्यभिचारेण व्याप्तेरग्रहात्। एवमन्यत्रापि। यत्रावच्छेदकग्रहं विना कोपि दोषस्तत्रास्त्ववच्छेदकग्रहो न तु सर्वत्रेति चेन्न। विशेषो न जातिमान् सत्तान्यूनवृत्तिजातिसमानाधिकरणभावविभाजकोपाधिशून्यत्वादित्यत्र तात्पर्यात्। न चात्राप्रयोजकत्वशंकातङ्ककण्टकाङ्कुराविर्भावः, निरुपाधित्वात्। वस्तुतस्तु विशेषोऽय-

(से०)मित्यनुगतबोधे यत्किञ्चिदनुगतं परिस्फुरति तस्य जातित्वमाशं-
क्यते । न च तच्छक्यते-विशेषपदार्थपर्यालोचनया तत्र व्यावर्तक-
त्वस्यैव परिस्फुरणात् । न च तदतिप्रसक्तम्, अनुगतधर्मेऽतिप्रस-
क्तेर्दूषणत्वात् । यदि त्वसाधारणमनुगमकमपेक्षितम्, तदा साधा-
रणानुगमकमेव किञ्चिद्विशेषणविशिष्टत्वेनासाधारणानुगमकत्वेन
निरुच्यताम् । तच्च स्वव्यावर्तत्वं यद्यनित्यद्रव्यादिषु स्वतो व्या-
वृत्तेः किंचिदस्ति तदा नित्यद्रव्यवृत्तित्वे सति स्वतोव्याव-
र्तकं किञ्चिदस्ति तेनैवान्यथासिद्धौ विशेषासिद्धिप्रसङ्गात् । एवं
च धर्मिग्राहकप्रमाणप्रमापितस्वव्यावर्तकत्वावगाहनशीलोऽनुगतां
कथं जातिमनुमिनुयात् । यथा सामान्यमिति पुरस्कृतयोगार्थोऽ-
नुगतबोध उपाधिसाधारणोऽसाधारणस्तु जातिमात्रविषयो योगा-
र्थगर्भनिरुक्तरूढ्यर्थविषयस्तथाऽनन्यव्यावर्तकसाधारणो विशेषा-
कारानुगतव्यवहारो व्यावर्तकत्वमवलम्बतेऽन्यविशेषासाधारणस्तु
स्वव्यावर्तकत्वम्, तथासति क्लृप्तपदार्थाविषयत्वे लाघवम्, जातेः
कल्पनीयत्वे गौरवं स्फुटमेव । एवं च नित्यद्रव्याणि परस्परव्याव-
र्तकधर्मवन्ति परस्परव्यावृत्तत्वादित्यनेन सिद्धे व्यावर्तके विशेषसं-
ज्ञा निवेश्यते तच्च प्रामाणिकधर्मपुरस्कारेणैव युक्तम् । प्रामाणिकं च
व्यावर्तकत्वं स्वव्यावर्तकं चेति ताभ्यामेव प्रवृत्तिनिमित्ताभ्यां विशे-
षशब्दप्रयोगे सिद्धेऽनुगतधीरपि तदवलम्बनेन ज्ञानव्यवहारयोस्स-
मानशीलत्वादिति सिद्धं विशेषत्वमपि न जातिरिति संक्षेपः ।

एता युक्तय उच्छिष्टा अनुच्छिष्टा वा इत्यत्र निबन्धसाक्षात्कृतप्रा-
चीननिखिलाक्षचरणकणादपक्षानुबन्धिनिबन्धा एव साक्षिण इति किं
स्वतः प्रख्यापनेन । ननु सामान्यादेरनादेरपि किं नोच्छेदो ? न च तत्र
सादित्वं प्रयोजकम्, प्रागभावेऽभावात्, न च भावोच्छेदे तथा, प्रमा-
णाभावादिति चेन्न । अनादेरपि प्रागभावस्य भवतूच्छेदः सामग्रीस-
त्त्वात् घटादेरेव तदुच्छेदकतया तत्सामग्र्या एव तदुच्छेदकसामग्री-
सत्त्वात् । न चानादेः सामान्यादेरुच्छेदे किञ्चित्कारणमस्ति, अका-
रणतया समवायिकारणासमवायिकारणनिमित्तकारणनाशानाम-
सम्भवात्, विरोधिगुणस्यापि नाशकस्य प्रकृते दुर्वचनत्वात् । अहे-
तुकनाशाभ्युपगमे क्षणिकतापत्तेस्त्र्यक्षेणापि क्षपितुमशक्यत्वात् वि-
लंबप्रयोजकविलंबप्रतियोगिनो भावेन द्वितीयक्षण एव नाशोत्पत्तेः ।

(से०)तस्मादनादिभावस्यानन्तत्वमिति सिद्धम्। चकारात् कारण-वद्वृत्तिभावविभाजकोपाधिरहितभावत्वं विवक्षितम् अकारणत्वस्या-प्यकाशादावतिव्याप्तेः। अविशेषामनित्यवृत्तिभावविभाजकोपाधिणा-मत्त्वम्, विशेषाणान्नित्य एव वृत्तिः, न त्वानत्यधर्मत्वं परमाणुरूपादाव-व्याप्तेः। अकर्मणां नित्यवृत्तिभावविभाजकोपाधिमत्त्वं न तु नित्यत्वं घटादावव्याप्तेः। सामान्यान्तानामयोगिप्रत्यक्षवृत्तिभावविभाजको-पाधिमत्त्वं न त्वयोगिप्रत्यक्षत्वम अतीन्द्रिये द्रव्यादावव्याप्तेः। गुण-कर्मणोरसमवायिकारणत्वम्।

ननु किमिदमसमवायिकरणत्वं? समवायिकारणभिन्नकार-णत्वमिति चेन्न। निमित्तकारणेऽतिव्याप्तेः। निमित्तकारणभि-न्नत्वे सति तत्त्वमिति चेन्न। समवायिकारणासमवायिकारणभिन्न-कारणस्य निमित्तकारणतयाऽन्योन्याश्रयापत्तेः। समवायिकारण-प्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणमिति चेन्न। तन्तुरूपस्य पटरूपासमवायिकारणतानापत्तेः—पटरूपसमवायिकारणपटेऽप्रत्या-सन्नत्वात्। समवायिकारणप्रत्यासन्नत्वं विवक्षितमिति चेन्न। तन्तुद्व-यसंयोगस्यापटासमवायिकारणतापत्तेः—तस्य समवायिकारण एव प्रत्यासन्नत्वात्। प्रक्षमपक्षेऽदृष्टस्य सुखाद्यसमवायिकारणताप-त्तेश्च—समवायिकारणे आत्मनि समवेतत्वे सति सुखादिकारण-त्वात्। न च तल्लक्ष्यमेव, अपसिद्धान्तात्। ननु स्वासमवेतकार्यका-रित्वमसमवायिकारणत्वं रूपसंयोगादिसाधारणमिति चेन्न। निमि-त्तकारणेऽतिव्याप्तेरिति चेत्।

अत्र प्राञ्चः—कार्यकारणभावलक्षणसम्बन्धनिरूपकसम्बन्धैकार्थ-समवायित्वेन कारणत्वमसमवायिकारणत्वं संयोगस्थले कार्य-कारणभावलक्षणसम्बन्धो घटकपालस्तन्निरूपकौ सम्बन्धिनौ तत्स्वरूपावेव तन्मध्ये कार्येण घटेनैकार्थसमवायिकपालद्वय-संयोगः। एवं च समवायिकारणप्रत्यासन्नानि सर्वाण्यसमवायि-कारणानि संगृहीतानि भवन्ति। रूपस्थले कर्यकारणभावसंबन्धिनौ घटरूपे स्वरूपौ तयोर्मध्ये कारणेन घटेनैकार्थसमवायिकपालरूप-म्। एतावता समवायिकारणप्रत्यासन्नानि सर्वाणि संगृहीतानि भवन्ति। ननु तादृशसमवायित्वेन कारणत्वं यद्यसमवायिकारणत्वं तदा कार्यकारणभावः सुखात्मनोस्तन्मध्ये कार्येण कार्यसमवायिनो-

(से०)ऽदृष्टस्य सुखकारणत्वमस्तीति तस्यापि सुखासमवायिकारणत्वापत्तिः। ननु निरुक्तसमवायित्वेन कारणत्वमदृष्टस्य च न तथा कारणत्वं प्रमाणाभावात् किन्त्वदृष्टत्वेनैवेति चेन्न। संयोगादावपि तथा कारणत्वे प्रमाणाभावात्। तथाहि–यदि भावकार्यत्वेन तादृशसमवायित्वेन कारणता तदा यत्र यत्र तत् स्थास्यति तत्र तत्र तथा कारणत्वं वाच्यम् अन्यथाऽतिप्रसङ्गेनावच्छेदकतापत्तेरेवञ्चादृष्टेऽपि तत्सत्त्वेन तस्यापि कारणत्वेऽतिव्याप्तिरापतत्येव। किञ्च तादृशसमवायित्वस्य कपालरूपादावपि सत्त्वेन तस्यापि घटासमवायिकारणतापत्तिः। अकारणत्वेऽतिप्रसंगेन तस्यानवच्छेदकत्वापत्तिः। यदि च तादृशसमवायिसंयोगत्वादिना कारणता द्रव्यत्वादिना कार्यता लक्षणञ्च तादृशकार्यत्वघटितधर्मावच्छिन्नकारणताधारत्वमिति नासम्भवः, तदाप्यापत्तिः कार्यसमवायित्वस्य कपालाकाशसंयोगेऽपि सत्त्वात्। यदि च तादृशसमवाय्यवयवमात्रसंयोगत्वादिना कारणता कार्यद्रव्यत्वादिना कार्यता तदा प्रमाणाभावोऽवयवमात्रसंयोगत्वादिनैव कारणत्वस्यादुष्टत्वात् लाघवात्तस्मात्प्राचामेता वाचो न चारुतामाचरन्तीति। ननु कार्यनाशप्रयोजकनाशप्रतियोगित्वमसमवायिकारणत्वमिति चेन्न। समवायिकारणेऽतिव्याप्तेः। समवायिकारणभिन्नत्वे सतीति चेन्न। निमित्तकारणेऽतिव्याप्तेः। निमित्तकारणभिन्नत्वे सतीत्यपीति चेन्न। पूर्वनयेनान्योन्याश्रयात्। निमित्तकारणभिन्नत्वे सतीत्यत्रापेक्षाबुद्धिभिन्नत्वे सति बुद्धिभिन्नत्वे सतीति वा देयमिति चेन्न। रूपाद्यसमवायिकारणे रूपादावव्याप्तेः। तत्र समवायिकारणनाशादे रूपादिनाशकतया रूपादिनाशस्यानाशकत्वात्। समवायिकारणादिभिन्नत्वे सति कार्यनाशप्रयोजकनाशप्रतियोगिवृत्तिकारणविभाजकोपाधिमत्त्वमसमवायिकारणत्वमिति चेन्न। तादृशकारणविभाजकोपाधेरेव विचार्यमाणत्वात्। ननु यथा प्रतियोगित्वादयः स्वरूपसम्बन्धविशेषास्तथाऽसमवायिकारणत्वमपि, अत एव केषुचिद्ग्रन्थेषु कारणभावस्य स्वरूपसम्बन्धरूपत्वं प्रतीयत इति चेन्न। एवं हि व्याप्त्यादीनामपि तथात्वे प्राचां तन्निरूपणायासवैफल्यात्। तेषां वक्तुं शक्यतया न स्वरूपसम्बन्धविशेषत्वस्वीकार इति चेत्। तथाप्यननुगमादेर्दूषणस्य सत्त्वात्। तेषामुद्धर्तुं शक्यतया नैवमिति चेन्न। प्रकृतेऽपि स्वतोऽस्फुरणमात्रेणोद्धा-

(से०)रगवेषणाननुरोधस्यायुक्तत्वात्। अत एवाखण्डोपाधिविशेषत्वमपि तस्य न स्वीकर्तुमुचितमिति। कारणत्वादिगर्भतया सखण्डत्वेन प्रतीतेश्चेति चेत्।

अत्र ब्रूमः—यत्समवायिप्रत्यासन्नमवधृतसामर्थ्यं तदसमवायिकारणमिति वादिनामपि नासमवायिकारणत्वमनुगतं दण्डचक्रसंयोगेऽतिव्याप्तेः—तस्यापि रूपादिसमवायिकारणदण्डादिप्रत्यासन्नत्वे सति घटकारणत्वात्। यद्यत्समवायिकारणप्रत्यासन्नमित्यादिविवक्षायां च वाचकस्यैकस्याभावेनाननुगमः। नाप्येषां मतेऽसमवायिशब्दो यौगिकः असमवायि न कारणं समवायिकारणं यस्येति योगानामसम्भवात् घटस्यासमवायित्वाभावेनतदसमवायिकारणे संयोगऽगतेः, संयोगस्यासमवायित्वाभावे द्वितीययोगार्थस्याप्यभावात्। अन्यासमवायिकारणगत्या तृतीयोऽप्यनुपपन्नः। एवञ्चाननुगमायोगार्थयोः प्राचां मतेऽपि तुल्यतया दुष्टं तदुपेक्ष्यादुष्टमदुक्तमेव मन्तुमुचितम्। इत्थमवयवमात्रसंयोगत्वं द्रव्यासमवायिकारणत्वम्, अपाकजावयविरूपेऽवयवरूपत्वेमवमन्यदपि ज्ञातव्यमिति संक्षेपः। नित्यद्रव्यसमवाययोरसमवेतभावत्वमिति। एतानि लक्षणानि भावस्योपलक्षणत्वमङ्गीकृत्याचार्यैरुक्तानि॥

(व्यो०) इदानीं सामान्यादीनां नैकस्य द्वयोर्वा किं तर्हि त्रया णामपि साधर्म्यम। स्वात्मना साधारणधर्मेणोपचारनिमित्तेन सत्त्वं—सत्सदिति प्रत्ययजनकत्वम, मुख्ये ह्यनवस्थादिबाधकोपपत्तेः। अन्ये तु स्वात्मसत्वं सत्तानधिकरणानां सत्सदितिप्रत्ययजनकत्वमिति ब्रुवते। अत्र हि निमित्तानभिधाने सतां भावः सत्त्वमिति न किञ्चिदुक्तं स्यात्। अथ सत्तानधिकरणानां स्वात्मना निमित्तेन सत्सदितिप्रत्ययजनकत्वम्। तर्हि तस्यानुवृत्तिरूपतायां दोषोपपत्तेः। व्यावर्तितायां चानुगतज्ञानजनकत्वं न स्यादित्युपचारनिमित्तत्वमेव न्याय्यम्। नन्वेवं सामान्यादिषूपचरितं सत्त्वम् स्यादिष्यत एव। सत्त्वं सत्सदितिज्ञानजनकत्वमुपचरितम्। अथोपचरितसत्त्वाभ्युपगमे परमार्थतो सत्त्वं तदिष्टमेव। न परमार्थतः सामान्यादौ सत्सदितिज्ञानमुपचाराभ्युपगमात। अथ सत्तानधिकरणत्वे सामान्यादेरभावः स्यात्। तदसदत्, साधारणधर्माधिकरणतया प्रमाणसिद्धस्याभावाभ्युपगमे

(व्यो०)द्रव्यादिषु तथाभावः स्यात् । अतः सामान्यादावुक्तरूपे स्वरूपसत्त्वं न दोष इति । तथा बुद्धिर्लक्षणम् येषां बुध्या वा लक्ष्यन्त इति बुद्धिलक्षणास्तेषां भावो बुद्धिलक्षणत्वम् । सामान्यशब्देनापि अर्थादनुगतव्यावृत्तेहबुध्यन्यतमबुद्धिलक्षणत्वं विवक्षितमिति विज्ञानम् । अनुगता हि बुद्धिर्न विशेषेषु नापि समवायेषु व्यावृत्ता च न सामान्यसमवाययोस्तथेह बुद्धिर्न सामान्यविशेषेष्विति व्यावृत्तत्वाद्वैधर्म्यं स्यादित्यन्यतमग्रहणम् । तच्च सर्वेषु समानत्वादेव साधर्म्यम् । यदि वा बुद्धिर्विशेषणान्तरोपचरिता लक्षणमितरस्माद्भेदकं तच्चाविवक्षितविशेषं साधर्म्यम् । तथाहि-द्रव्यगुणकर्मस्वनुगतसामान्यवशादनुगतज्ञानजनकत्वम् । सामान्यं तु स्वरूपतयैव । तथाऽत्यन्तव्यावृत्ता विशेषेष्वेव अयुतसिद्धेष्वबाध्यमानेहबुद्धिः समवाय एवेति व्यावृत्तावपि बुद्धिवेद्यत्वं समानत्वात्साधर्म्यम् । एवं कार्याणामभावोऽकार्यत्वं-स्वकारणसत्तासम्बन्धाभावः । तथा कारणानामभावोऽकारणत्वम्—समवाय्यसमवायिकारणत्वाभावः । निमित्तकारणत्वं च ज्ञानोत्पत्ताविष्यत एव । तथा न सामान्यविशेषवत्त्वमसामान्यविशेषवत्त्वमपरसामान्याभावः, न तदुपलक्षितः समवायः—समवाये तदभावप्रसंगात् । नित्यानां भावो नित्यत्वमविनाशित्वम्-उभयान्तोपलक्षितसत्तासम्बन्धाभावो वा । तथाहि—कार्यवस्तुनो विनाशित्वं दृष्टम्, सामान्यादेश्चाकार्यत्वदविनाशः । न चाश्रयविनाशाद्विनाशस्तस्यैकाश्रयविनाशेऽप्याश्रयान्तरे स्वानुरक्तप्रत्ययजनकत्वात् । तथाहि एकाश्रयविनाशेऽप्याश्रयान्तरे सत्ता सत्सदिति ज्ञानहेतुः । समवायश्चेह प्रत्ययहेतुरित्यनयोराश्रयविनाशान्न विनाशः । तद्यथा नित्याश्रयं सामान्यं समस्ताश्रयविनाशेन निराधारस्याभावाद्विनंक्ष्यतीति । नैतदेवम् । अकार्यवस्तुत्वेनाविनाशित्वसिद्धेः । समस्ताश्रयविनाशेऽप्यवस्थानमिष्यते । अत एव केवलमाश्रयाभावात् गोत्वादिरूपतया न व्यपदिश्यत इति । अकार्यवस्तुनश्च विनाशे गगनादीनामप्युच्छेदप्रसंगः । अथानित्याश्रयस्याश्रयोत्पत्त्यनन्तरं रूपादिवदुपलंभादसिद्धमकार्यत्वमिति चेत् । न उपलम्भस्योभयथा भावात् । न ज्ञायते किं वस्तूत्पत्त्यनन्तरमुत्पद्यते अथाभिव्यज्यत इति । उत्पादे बाधकोपपत्तेरभिव्यज्यत इतीष्यते । तथाहि-द्रव्यस्यैव समवायिकारणत्वविधानेन गुणकर्मणोस्त-

(व्यो०)त्प्रतिषेधात्तदाधारस्योत्पत्त्यभावः । तद्यथा-सामान्याधारस्य युगपदुत्पत्तिं विना समवायिकारणाभावाच्चेति । तथाहि यत्र समवेतं कार्यं तदवश्यं समवायिकारणम् सामान्यस्य क्रमभाविषु स्वाधारेषु सर्वेषु समवायोपलब्धेः सर्वं समवायिकारणमिति । सकलाधारनिष्पत्तावेवोत्पत्तिरिति पूर्वभाविषूपलंभो न स्यात् । अथ सर्गादौ भूयसां स्वाधाराणामुत्पादादुत्पन्नं सामान्यं क्रमभाविष्वाधारेषु समवेष्यतीति चेन्न। कार्यान्तरेष्वदर्शनात्, न हि रूपादिकार्यं स्वाधारेषु समवेतमुपजातमन्येन समवायवृत्त्या संबध्यमानं दृष्टमिति । न च क्रमेणोत्पद्यमानेष्वन्यत्सामान्यमिति वाच्यम् । भेदे प्रमाणाभावाद्भेदे त्वनुगतं ज्ञानमेव प्रमाणमिति वक्ष्यामः-सामान्यपरीक्षायाम् । तदेवमुत्पत्तिपक्षे बाधकोपपत्तेर्वस्तूत्पत्त्यनन्तरं समभिव्यज्यत इत्यकार्यत्वान्नित्यत्वं सिद्धम् । एव अर्थशब्दानभिधेयत्वं च स्वसमयाऽर्थशब्दाभिधेयत्वाभाव इति । यद्यपि द्रव्यत्वादेरेव कार्यत्वादिविधानादिहाकार्यत्वादि लभ्यते । तथापि साधर्म्यस्य विवक्षितत्वादभिधानमिति । सामान्यादीनां कार्यत्वाद्यभावोऽपि साधर्म्यमितीति ।

**( भा० ) पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः स्वात्मन्यारम्भकत्वं गुणवत्त्वं कार्यकारणाविरोधित्वमन्त्यविशेषवत्त्वम् ॥**

( सू० ) संप्रति द्रव्याणामेव वैधर्म्यमाह पृथिव्यादीनामिति । द्रव्यत्वयोगः-द्रव्यत्वसमवायः । द्रव्यत्वस्य पक्षतावच्छेदकत्वेनोपेक्षयान्वितस्य स्वातन्त्र्येणान्वयः । स्वात्मन्यारम्भकत्वं-स्वसमवेतकार्यजनकत्वम् । गुणवत्त्वं-गुणसमवायित्वम् , नातः स्पन्दादावतिप्रसङ्गः । कार्यकरणाविरोधित्वं-स्वजन्यसंयोगकारणकविभागजनकत्वम् । संयोगविभागकर्मणां वारणाय कारणकान्तम् । अन्त्येति । पृथिव्यादीनां नवानामवयविद्रव्येभ्योऽन्यत्रान्त्यविशेषवत्त्वम् । उभयासमवेतनिःसामान्यधर्मसमवायित्वमित्यर्थः ॥

( से० ) द्रव्यत्वेति। अत्र योगग्रहणं समवायसम्बन्धेन द्रव्यत्वं द्रव्यलक्षणमिति बोधयितुम्, एकार्थसमवायादेरन्यत्रापि सत्त्वात्। अनवच्छिन्नस्थित्यपि द्रव्यत्वं पृथिव्यादावेव प्रतीयते न रूपादौ स्वभावादिति बोधयितुं योगग्रहणम्। न च समवायविलम्बाविलम्बे किं स्वभावकल्पनयेति वाच्यम्। तस्याप्यविच्छिन्नदेशत्वात्, न हि गौडगुर्जरघटयोरन्तरा घटत्वतत्समवाययोरभावो येन तत्रानुपलंभस्तत्प्रयुक्तः स्यात् किन्तु व्यक्तिविशेषरूपव्यञ्जकाभावादेव तदनुपलम्भः। काचिदेव व्यक्तिः किञ्चिदेव व्यञ्जयतीत्यत्र तु स्वभाव एव शरणमित्याचार्याः। तेषामयमाशयः—यद्यपि समवायः सर्वत्र तिष्ठति तथापि घटत्वनिरूपितः समवायो घट एव। जातिश्च यद्यप्यवृत्तिन्यायेन सर्वत्र तिष्ठति तथापि वृत्तिः कस्याश्चित् क्वचिदेवेत्यत्राधाराधेययोः स्वभाव एव शरणमिति। ननु द्रव्यत्वे किं प्रमाणम्? न तावदनुगताकारौ प्रज्ञाव्यवहारौ आकाशादिसाधारणयोस्तयोः सर्वप्रमातृसाधारणयोरभावात्। न चाकर्णितकणादकथितवर्णानामस्त्येव समस्ततद्भाषितद्रव्येषु द्रव्याकारोऽनुगतो व्यवहारो बोधश्चेति वाच्यम्। मीमांसितमीमांसादर्शनानान्तमःप्रतीतावपि तयोरनुवृत्तेर्दर्शनीकपरिभाषया व्यवहारस्य सर्वसाधारणव्यवहारानङ्गत्वात् तेषां मिथो वैमत्यादिति चेन्न। समवायिकारणतावच्छेदकत्वेन द्रव्यत्वस्वीकारात्। तद्व्यक्तित्वेन कारणत्वे व्यक्त्यन्तरे तदभावापत्तेः—व्यक्तित्वस्य गुणादिसाधारण्यात्। गुणवत्त्वेन समवायिकारणतेति चेन्न। प्रथमक्षणिकघटादौ गुणवत्त्वाभावेन कारणतावच्छेदकावच्छिन्नकारणाभावेन द्वितीयक्षणे घटादौ रूपाद्यनुत्पत्त्यापत्तेः। गुणात्यन्ताभावाभाववत्त्वेन तद्विरोधिमत्त्वेन वा कारणतेति चेन्न। जातौ बाधके सत्येवोपाधेः कारणतावच्छेदकत्वकल्पनात्। न चात्र व्यक्तिभेदादिषु किञ्चिद्बाधकमस्ति। नचैवं स्पर्शसमवायिकारणतावच्छेदकत्वेन वाय्वादिषु जात्यापत्तिः, स्पर्शत्वस्य नित्यवृत्तित्वेन कार्यतानवच्छेदकत्वात्। न चानित्यस्पर्शत्वं तथा, वायुत्वस्य वायुपरमाणौ नित्यस्पर्शवति स्पर्शसमवायिकारणतावच्छेदकजातिपरिहारेण सत्त्वादेतज्जातेर्वायुत्वपरिहारेण जलाद्यवयविनि सत्त्वात् द्व्यणुकावयविनि द्वितयसत्त्वात् परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसामानाधिकरण्येन जातिसाङ्कर्यसौकर्यात्। अपि च गुणात्य-

(से०)न्ताभावात्यन्ताभावताद्विरोधिनोर्गुणगुणध्वंसगुणप्रागभावरूप-तया गुणप्रागभावस्य कारणतावच्छेदकतयाऽन्यथासिद्धतया गुणकारणत्वं न स्यात् । न चेष्टापत्तिः, प्रतिबन्धकाभावस्यान्यत्र कारणत्वात् । न च प्रकारभेदेनैकस्यापि कारणतावच्छेदकत्वकारणत्वयोर्विरोधाभावोऽन्यथोद्भूतरूपघटादिगतप्रत्यक्षकारणतावच्छेदकस्य तदभिन्नस्वप्रत्यक्षकारणत्वं न स्यात्, एवञ्च तत्रोद्भूतरूपत्वविषयत्वयोरिव प्रकृते विरोधित्वप्रागभाववतोः प्रकारयोर्भेदोऽस्ति, किञ्च गुणात्यन्ताभावानधिकरणत्वेन जनकतायां न प्रागभावस्य जनकतावच्छेदकता, तथा च किमिति द्रव्यत्वस्वीकार इति वाच्यम् । जातौ बाधकाभावस्यैव तत्स्वीकारबीजत्वेनाचार्यचरणैरुक्तत्वात् । अपि च द्रव्यमिति प्रत्यक्षानुरोधेन द्रव्यत्वजातिस्वीकारः । न च गुणात्यन्ताभावानधिकारणत्वादिस्तद्धर्मेयः, अतीन्द्रियगर्भत्वात् । तथाहि न तावद्गुणात्यन्ताभावानधिकरणत्वं द्रव्येऽस्ति गन्धाद्यत्यन्ताभावस्य जलादौ सत्त्वात्, किन्तु गुणत्वावच्छिन्नप्रतियोगिकात्यन्ताभावानधिकरणत्वं वाच्यम्, स च प्रतियोगिनां केषांचिद्गुणानामतीन्द्रियतयाऽतीन्द्रिय एव मूर्तत्वावच्छिन्नप्रतियोगिताकमूर्ताभाव इवेति संक्षेपः ।

> व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
> रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥

इति किरणावली विचार्यते । ननु व्यक्तेरभेदो भवतु दूषणं व्यक्त्यैक्येऽनेकवृत्तित्वाभावाल्लक्षणानुपपत्तेः, भवति च सैकवृत्तिर्दूषणं न रूपहानेरतिरिच्यते एकव्यक्तिकसामान्याङ्गीकारेऽनेकवृत्तित्वरूपतद्रूपहानेः । तुल्यत्वं च न जातिबाधकं किन्तु जातिभेदबाधकं घटत्वकलशत्वात्मकैकजातिस्वीकारात् तत्रापि लाघवात्तत्र जातिद्वयकल्पने गौरवापत्तेः । घटकलशादिशब्दानां पर्यायत्वं वा प्रवृत्तिनिमित्तभेदे पर्यायतोच्छेदापत्तेः, न तु तुल्यत्वस्य तत्र प्रयोजकत्वमिति । ननु तुल्यत्वेनैव लाघवावतारः तुल्यत्व एकेनैव तद्व्यवहारोपपत्तौ जातिभेदकल्पनायां गौरवात् पर्यायतानिर्वाहोऽपि तुल्यत्वेनैवेति चेन्न । एवं हि जातिभेदबाधकत्वमपि जातिबाधकत्वाभावात् । जातिसाङ्कर्यस्य च दूषणत्वे प्रमाणाभावः । न च घटो यदि स्ववृत्तिजातिव्याप्यत्वशून्यव्यापकत्वशून्यजातिमान् घटो न स्यात् पटवदिति

(से०)वाच्यम् । अप्रयोजकत्वात् । अनयैव रीत्योपाधिसाङ्कर्यस्यापि दूषणत्वापत्तेश्च । तथाच यथा काँचिदुपाधी परस्परात्यन्ताभावनियतसमानाधिकरणावेव, कौचित् परस्परव्याप्यव्यापकभावापन्नौ, कौचित् परस्परात्यन्ताभावसमानाधिकरणौ तथा जाती । अपि च यदि परस्परात्यन्ताभावसमानाधिकरणपरस्परसमानाधिकरणयोर्जातित्वं स्यात् तदाऽश्वाकारगवाकारा काचिदेका व्यक्तिः स्यादिति वाच्यम्–वैयधिकरण्यात्, तस्मान्न जातिसाङ्कर्यं दूषणम् । अनवस्थापि जातेर्जातिमत्त्वेऽपर्याप्तजातिपरम्पराप्रसक्त्या स्यात् । न च जातेर्जातिमत्त्वमात्रत्वं प्रसञ्जकम्–बीजाभावात् । न च जातिर्यदि जातिमती स्यात् सापिजात्यन्तरवत् जातिमती स्यादित्यनवस्थापनमिति वाच्यम् । अप्रयोजकत्वात् । तस्मादनवस्थापि न दूषणम् । रूपहानिस्तदा दूषणं स्यात् यदि विशेषस्य जातिमत्त्ववादिना निर्जातिगर्भलक्षणं स्वीक्रियेत । असम्बन्धस्तु भवतु दूषणं परन्तु रूपहानिपर्यवसानान्नापरः अनेकसमवेतत्वजातिरूपान्तर्भावात् । समवायत्वस्य जातितायामेकवृत्तित्वस्यैव बाधकत्वसंभवेऽस्य बाधकत्वस्वीकारानौचित्यात् । तस्मात्कथमुपन्यस्तानां जातिदूषणत्वमिति चेत् ।

अत्रोच्यते–सामान्यविशेषयोर्जातिस्वीकारकबाधकत्वेनोपन्यस्तयोरनवस्थारूपहान्योर्मदुक्त एव जातिमत्त्वबाधके तात्पर्यम् । एवञ्च रूपहानेरभावात् कुत्रैकवृत्तित्वसम्बन्धयोरन्तर्भावः? । तुल्यत्वं च पृथक्जातितायामेव बाधकम् । जातिसाङ्कर्यं चावश्यं बाधकम्-घटत्वपटत्वपृथिवीत्वजलत्वद्रव्यत्वगुणत्वादीनां मिथो विरोधदर्शनेन विरोधितावच्छेदकत्वेनानुगततया परस्परात्यन्ताभावसमानाधिकरणजातित्वस्यैव स्वीकारौचित्यात् । एवञ्च परस्परसमानाधिकरणयोः परस्परात्यन्ताभावसमानाधिकरणयोर्यदि जातित्वं स्यात्तदा परस्परसामानाधिकरण्यमेव न स्यात् विरोधितावच्छेदकावच्छिन्नत्वात् । तथा द्वयोर्जात्योः सामानाधिकरण्यतया व्याप्यव्यापकभाव एव, ययोश्च परस्परात्यन्ताभावसामानाधिकरण्यं तयोर्विरोध एव । तस्मादेकनिष्ठत्वासमवेतत्वे जातिलक्षणव्याघातकतयैव जातिबाधके–जातिलक्षणस्यानेकत्वगर्भत्वात् । तुल्यत्वं च पृथक् जातितायां बाधकम् सामान्यादीनामजातिमत्त्वादस्मदुक्तमेव बाधकं जाति-

(से०)साङ्कर्यस्य तु बाधकत्वमुक्तमेवेति संक्षेपः ॥

स्वात्मनीति। अत्र यदि स्वात्मनि स्वस्वरूपे जनकत्वं तदाऽप्रसिद्धिः किन्तु स्वसमवेतजनकत्वम् इदमेव च समवायिकारणत्वमिति भावः। गुणवत्त्वं-गुणात्यन्ताभावानधिकरणत्वम्, तेन नाद्यक्षणे घटादावव्याप्तिरिति केचित्। तन्नास्मन्मनोरमम्-लक्ष्यैकदेशे सर्वदाऽवृत्त्या ह्यव्याप्तिर्भवति नतु कादाचित्कावृत्त्याऽतीतानागतयोर्हेतुत्वे स्वरूपासिद्ध्यापत्तेरिति पर्यालोचनात्। एतेषु त्रिषु द्रव्यपदप्रवृत्तिनिमित्तं द्रव्यत्वं जातिरेव लाघवात् त्रयन्तु तद्व्यवस्थापकमिति भावः। कार्येति। तच्च न कार्यकारणोभयानाश्यत्वम्, गुणकर्मणोरपि कार्येणोत्तरदेशसंयोगेन कर्मणोऽन्त्यशब्देन कार्येणोपान्त्यशब्दस्य कारणेनोपान्त्यशब्देनान्त्यशब्दस्य च नाशेऽप्युभाभ्यां कस्यापि गुणस्य कर्मणो वाऽनाशात्। न च तदन्यतरानाश्यत्वम्, अन्यतरगर्भस्य लक्षणस्य वैयर्थ्येनाकारणात् अस्य विचारस्याग्रे कर्तव्यत्वात्। किञ्च कारणेनेश्वरज्ञानादिना घटादेरपि नाशादव्याप्तिः। किञ्च नित्यद्रव्यकारणाप्रसिद्ध्या कथं तदन्तर्भावेन तद्गर्भलक्षणविवक्षा। किञ्च रूपादीनां समवायिकारणनाशाग्निसंयोगान्यतरानाश्यत्वेन तत्रातिव्याप्तिः। नित्यगुणेषु चातिव्याप्तिस्तेषामनाश्यत्वेन कार्येण सुतरामनाश्यत्वात्। अत्र केचित्-अदृष्टेतरकार्यगुणनाश्यावृत्तिसत्ताव्याप्यजातिमत्त्वं विवक्षितम्। गुणनाश्यावृत्तित्वविवक्षायामसम्बन्धः। द्रव्यत्वस्येश्वरज्ञानादिनाश्यघटादिवृत्तित्वात् तज्ज्ञानादेस्सर्वोत्पत्तिमत्कारणतया तद्घटादिनाशेऽपि कारणत्वात्। कार्यगुणेत्यादि करणेऽपि अदृष्टस्य सर्वोत्पत्तिमत्कारणस्य घटादिनाशे कारणत्वात् तदर्थमदृष्टेतरेति। गुणत्वादि तु नादृष्टेतरकार्यगुणनाश्यावृत्ति पूर्वोक्तनयेनादृष्टेतरकार्यगुणनाश्ये शब्दे कर्मणि च वृत्तेः। एवं च संख्यामप्यतिव्याप्तिः-एकत्वस्य क्वचिन्नित्यत्वेन क्वचित्समवायिकारणनाशनाश्यत्वेन नाशत्वस्य अदृष्टेतरकार्यगुणनाश्यावृत्तित्वात् तदर्थं सत्तासाक्षाद्व्याप्यजातिविवक्षा। सत्तासाक्षाद्व्याप्यजातित्वं च प्रकृते सत्तान्यूनवृत्तिजात्यन्यूनवृत्तित्वम्, एकत्वादि तु न तथा सत्तान्यूनवृत्तिगुणत्वादिति। अत्र वर्धमानोपाध्यायाः-यथाऽवयवसंयोगनाशोऽवयविनाशकस्तथाऽवयवविभागोऽपि विनिगमकाभावात् तथा च कार्यगुणविभागनाश्येऽवयविनि

(से०)द्रव्यत्वस्य सत्त्वात्कथमेतल्लक्षणमित्याहुः।

अत्रेदं चिन्त्यते-एवं ह्यसमवायिकारणनाशात् कुत्र द्रव्यनाशो,? विभागस्य नाशकत्वे संयोगनाशसमसमयं द्रव्यनाशात्। यत्राश्रयनाशात्संयोगनाशस्तत्र विभागस्य नाशकतेत्यसमवायिकारणनाशस्य नाशकतेति वाच्यम्। तत्र समवायिकारणनाशस्यैव नाशकत्वसंभवात्। अपि च विभागस्य नाशकत्वे क्वचिद्विभागात् क्वचित्समवायिकारणनाशाद्द्रव्यनाशोऽननुगमः स्यात्। समवायिकारणासमवायिकारणनाशयोस्तु निमित्तकारणेतरकारणत्वेनानुगमः। तस्मान्न विभागो द्रव्यनाशक इति। मुद्गरपातानुकूलास्मदादिप्रयत्नस्य घटनाशकत्वान्न लक्षणं यातीति तु सम्यक्। न च तत्र समवायिकारणासमवायिकारणान्यतरनाशस्यावश्यकतया तत्रैव मुद्गरपातद्वारा प्रयत्नक्षयः, एवं हि घटादावपि प्रयत्नस्य कारणता न स्यात् आन्तरालिके क्वचिदुपक्षयात्। तस्मात्कार्यमात्रस्य प्रयत्नसाध्यतया यत्रेश्वरप्रयत्नोऽस्मदादिप्रयत्नमप्यपेक्षते तत्र द्वयोरपि प्रयत्नयोर्भाववदभावेपि कारणतेति। कार्यकारणभावनिरूपकसम्बन्धिनाश्यावृत्तिजातिमद्वृत्तिभावविभाजकोपाधिमत्त्वे तात्पर्यमिति च वर्धमानोपाध्यायाः। अत्र गुणकर्मणोरतिव्याप्तिवारणायावृत्त्यन्तम्। एकत्वत्वादिनाऽतिव्याप्तिवारणाय भावविभाजकेति। अत्रापीश्वरज्ञानादिनाश्यतया दोषस्तैर्न प्रतिसंहितः। कार्यनाश्यावृत्तीति तु सम्यक्। अन्त्यविशेषवत्त्वं—अन्त्यविशेषवद्वृत्तिभावविभाजकोपाधिमत्त्वम, तेन नानित्यद्रव्याव्याप्तिः॥

(व्यो०) एवं पदार्थानां साधर्म्यमभिधाय द्रव्याणां साधर्म्यनिरूपणार्थमाह पृथिवी आदिर्येषां तानि पृथिव्यादीनि तेषाम्। न ज्ञायते कियतामतो नवानामपि द्रव्यत्वयोगः साधर्म्यम्। द्रव्यत्वेन योगो द्रव्यत्वोपलक्षितः समवाय इति। यद्यपि समवायः पञ्चपदार्थवृत्तिस्तथाऽपि द्रव्यत्वेनोपलक्षितोऽसाधारणत्वात् भवत्येव लक्षणमिति। न च द्रव्याणां भावो द्रव्यत्वमित्युक्ते अर्थाद्गम्यते योग इति वाच्यम्। गम्यवृत्त्याश्रयणेन शब्दवृत्तिप्रतिषेधेऽतिप्रसङ्गात्। न चोपचरितभेदत्वाद्वास्तवं लक्षणमिति दूषणम्। श्रोत्रस्येव विशिष्टार्थक्रियाजनकत्वात्। नापि समर्थविशेषणता। योगपदं विना ह्यसंभवित्वाशंकानतिवृत्तेरिति। शेषं लक्षणस्य दूषणस्य प्रतिसमाधानं

(व्यो०)वक्ष्यामः पृथिव्यधिकारे। लक्षणं च भेदार्थं व्यवहारार्थं चेति। तथाहि—पृथिव्यादीनीतरस्माद् भिद्यन्ते द्रव्याणीति वा व्यवहर्तव्यानि द्रव्यत्वयोगात्, ये तु न भिद्यन्ते नापि द्रव्याणीति व्यवह्रियन्ते न ते द्रव्यत्वयुक्ताः यथा रूपादयः। न च तथा न द्रव्यत्वयुक्तानि पृथिव्यादीनीति। तस्मादितरस्माद्भिद्यन्ते द्रव्याणीति वा व्यवहर्तव्याणीति। एवं द्रव्यशब्दस्य प्रवृत्तौ पृथिव्यादीनां नवानामपि द्रव्यत्वयोगो निमित्तमिति शब्दार्थनिरूपणपरत्वेनापि सम्बध्यते वाक्यम्। तथाच न सामान्यवतः शब्दार्थत्वे किञ्चिद्बाधकमस्तीति वक्ष्यामः। तथातीन्द्रियशक्तिप्रतिषेधार्थं च। यत्तु पृथिव्यादीनां नवानामपि द्रव्यत्वयोगो निजा शक्तिरिति। अथ कृतसमयस्य गोपिण्डेष्विवानुगताकारस्य ज्ञानस्यानुपपत्तेर्न द्रव्यत्वं सामान्यमस्तीति। यथा हि नारिकेलद्वीपवासिनो गोपिण्डोपलम्भादेकाकारता प्रतिभासते नैवं पृथिव्यादिषु उपलभ्यमानेष्विति। अथास्ति कृतसमयस्य द्रव्यं द्रव्यमिति ज्ञानम्? तच्च संकेतवशादेव भविष्यतीति। तदसत्। सामान्यस्यानियतव्यञ्जकव्यंग्यतया व्यञ्जकानुपलब्धावप्यनुपलब्धेर्भावात्। तथाहि—द्रव्यत्वं क्रियावदादिधर्मोपलंभादभिव्यज्यते अतिशयद्रव्याश्रितत्वोपलब्धेर्गुणत्वम् एवं कर्मलक्षणोपलब्धेः कर्मत्वमिति। शेषेष्वपि व्यञ्जकमप्यूह्यम्। न च सर्वेषां व्यञ्जकोपलब्धिर्विद्यत इति। सामान्यानुपलंभो विघातक एव। कृतसमयस्य व्यञ्जकोपलब्धेर्भवत्येव द्रव्यादिष्वनुगतज्ञानम्। सास्नादिना वा कृतसमयेनापि संवेद्यत इति युक्तं गवादिषु अनुगताकारविज्ञानमिति। यत्र च द्रव्यगुणकर्मात्मकं निमित्तं न संभाव्यते अबाधितानुगतायां संविदि तत्र सामान्यमेव निमित्तम्। न च द्रव्यादिष्वनुगतसंवेदने अभाव इव किञ्चित् बाधकमस्तीति। तथाहि—अभावोऽभाव इति अनुगतसंवेदनं द्रव्यगुणकर्मानिमित्तमपि न सामान्यात् भवति। सामान्यस्याभावेन समवायाभावात्। समवेतं च सामान्यं विशेषणमुपलब्धम्। अथेदमेवाभावत्वानुरक्तमभावोऽभाव इति ज्ञानमभावत्वस्याभावेन समवायं दर्शयतीति चेत्। न। अनेकान्तात्। तथाहि—सामान्यादौ सत्सदिति ज्ञानं विना सत्तासमवायमित्युक्तपूर्वम् सामान्यवत्त्वे चाभावस्य भावरूपतैव स्यात्। एवं चानुत्पत्तेरनादित्वान्नित्यत्वं विनाशस्य चादिमत्वादनित्यत्वं प्रस-

(व्यो०)ज्येत । प्रागभावस्य च नित्यत्वेन वस्तूपलंभो न स्यात् । तयोः स्वरूपपरिहारस्थितिविरोधात् । न चाभावोपमर्दात्मनो भावस्योत्पत्तिर्युक्तेति प्रागिति विशेषणासंभवः, प्रध्वंसानुत्पत्तिश्च तस्य ह्युत्पत्तिमदपेक्षितत्वात्संभवोप्युत्पत्तिमत्त्वेन विनाशस्य विनाशे भावग्रहणं स्यात् । यथाहि विनाशानुत्पत्तेः पूर्वं भावो गृह्यते तद्वद्विनाशापायेपि गृह्येत विरोधाभावस्याविशेषात् । न चैतदृष्टमतः सामान्यवद्यतिरेकः । न चोपाधिंऽविना भावोऽभाव इति ज्ञानं शक्यम् भवितुम् । किन्तर्हि ? घटाभावः पटाभाव इति ज्ञानोत्पत्तेर्वैलक्षण्यमेव । अथास्ति घटाभावो घटाभाव इति अनुगतज्ञानमिति चेत् । अत्राप्युपाधिवशादुपलक्षणत्वं सामान्यमेव ज्ञानहेतुरिति द्रष्टव्यम् । मुख्ये बाधकोपपत्तेः । न चैवं द्रव्यं द्रव्यमितिज्ञाने किञ्चिद्बाधकमस्तीति सामान्यसिद्धेर्नासंभवीदं लक्षणम् इति । एवं स्वश्चासावात्मा चेति स्वात्मा तस्मिन्नारंभकत्वं स्वात्मसमवेतकार्यजनकत्वम् समवायिकारणत्वमिति यावत् । तच्च पृथिव्यादिष्वेव भावादितरस्मात् भेदकम् । तथाहि—समवायो नर्ते पृथिव्यादिभ्यः संभवतीति । तथा गुणा विद्यन्ते येषां ते गुणवन्तस्तेषां भावो गुणवत्त्वम् । गुणोपलक्षितः समवायः समवेता वा गुणाः । तेप्यसाधारणत्वात् भेदकाः । यथा न गुणादिषु गुणवत्त्वं तथा वक्ष्यामो गुणावसरे । तथा कार्यकारणयोर्विरोधः कार्यकारणविरोधः स न विद्यते येषां ते कार्यकारणाविरोधिनः तेषां भावो कार्यकारणाविरोधित्वं कार्यकारणयोः परस्पराविरोधित्वमेक एव धर्मः। यदि वा धर्मद्वयं कार्याविरोधित्वं कारणाविरोधित्वं चेति । कार्येण न विरुध्यन्ते न विनाश्यन्ते इति कार्याविरोधिनस्तेषां भावः कार्याविरोधित्वं कार्येण विनाशाभावः । स च सर्वेषु पृथिव्यादिष्वस्तीति साधर्म्यम्, न पुनर्लक्षणम्—विपक्षैकदेशेपि भावात् । तथाहि—कार्येण विरुध्यन्ते शब्दबुद्ध्यादयो न सर्वे गुणाः, तथा कर्माण्यपि कार्येण विरुध्यन्ते न कार्येणैवाश्रयविनाशेपि विनाशात् । न च पदार्थापेक्षयापि लक्षणविवक्षायां विपक्षैकदेशे वर्तमानस्य गमकत्वम्। तथा कारणाविरोधित्वं यदि कारणेन न विरुध्यन्ते इति कारणाविरोधिनः कारणेन विनाशाभावः स चाकाशादिष्वस्ति कारणाभावादिति । पक्षे व्यापकस्यापि सतो न विपक्षाद्व्यावृत्तिरिति अलक्षणत्वम् । तथाहि न कारणेन

(व्यो०)गुणा विनाश्यन्ते नापि कर्मेति। अथ कारणं न विरुन्धन्ति न विनाशयन्तीति कारणाविरोधिनस्तेषां भावः कारणाविरोधित्वं कारणाविनाशकत्वं कार्यधर्म इत्यत्र नित्यद्रव्येषु कारणाभावात्। कारणाविरोधित्वं कारणाविनाशकत्वं चिन्तनीयमिति विपक्षैकवर्तमानस्यागमकत्वमेव। तथाहि-शब्दबुद्ध्यादेर्यद्यपि कारणाविनाशकत्वं तथापि न रूपादीनामस्तीत्यतिव्याप्तिः, एवं कर्मापि न कारणं विनाशयतीति। न च कार्याविरोधित्वेनाविशेषः तत्र हि कार्येणाविनाशत्वं कारणधर्मः कारणाविरोधित्वं कारणाविनाशकत्वं कार्यधर्म इत्यपुनरुक्तम्। तदेवमुभयथापि विपक्षैकदेशाव्यावृत्तः साधर्म्यमेव न तल्लक्षणमिति सिद्धम्।

**(भा०)अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः॥**

( सू० ) अनाश्रितत्वं-असमवेतद्रव्यत्वम्। नित्यत्वं-अविनाशिद्रव्यम्। चकारान्नित्यपरिमाणवत्त्वाद्युपग्रहः॥

( से० ) अनाश्रितत्वं यद्यसमवेतत्वं तदा समवायादावतिव्याप्तिस्तदर्थं समवायवत्त्वे सत्यसमवेतत्वम्। नित्यत्वं द्रव्यत्वे सत्यविनाशित्वम्, तेन न गुणादावतिव्याप्तिः।

( व्यो० ) एवमन्त्यविशेषा विद्यन्ते येषां ते तद्वन्तः तेषां भावोऽन्त्यविशेषवत्त्वम्-अन्त्यविशेषोपलक्षितः समवायः समवेता वाऽन्त्यविशेषाः। तथाऽनाश्रितत्वं तत्त्वं च नित्यत्वं चेत्यनाश्रितत्वनित्यत्वे। अनाश्रितत्वमाश्रितत्वाभावः नित्यत्वमविनाशित्वमुभयान्तानुपलक्षितवस्तुसत्ता वा।

किमेतद्धर्मत्रयं सर्वेषु पृथिव्यादिषु अस्ति व्यापकं चेत्याह— अन्यत्रावयविद्रव्येभ्य इत्यवयविद्रव्याणि वर्जयित्वा नित्यद्रव्येष्वेवेति। ननु धर्मत्रयस्य सापवादत्वाविशेषेऽप्यन्त्यविशेषवत्त्वेनासमासकरणे किं प्रयोजनमिति। अन्त्यविशेषाणामव्यापकत्वेऽप्यसाधारणताज्ञानेनैवानाश्रितत्वनित्यत्वयोश्चान्यत्रापि सद्भावात्साधारणत्वेनासमासकरणम्। तथाहि-नित्यत्वं गुणादिष्वप्यस्तीति साधारणमनाश्रितत्वं समवायस्यापि मुख्यवृत्तौ बाधकोपपत्तेर्गौणवृत्त्याश्रयणेन संभाव्यते न परमार्थत इति साधारणम्॥

(भा०) पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वा-परजातिमत्त्वे ॥

(सू०) पृथिवीत्यादि । ज्वलनेनात्र तेजोमात्रं न तु वह्निमात्रम् । अनेकत्वं—बहुसमवेतद्रव्यविभाजकत्वम् । अपरजातिमत्त्वं—द्रव्यत्वन्यूनवृत्तिजातिमत्त्वम् ॥

(से०) पृथिवीति । घटाकाशादित्यादिरनेकत्वसद्रूपा द्रव्यत्वलक्षणापरजातिः यद्यप्याकाशादावप्यास्ति तथापि स्वाश्रयान्योन्याभावसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वम् । तत्त्वं पुनर्वृत्तिजातिमत्त्वं विवक्षितम् । संस्कारवत्त्वमप्येतेष्वेवात्मनि भावनायाः पृथिव्यप्तेजोवायुमनःसु वेगस्य चतुर्षु केषांचिन्मते मनस्यपि स्थितिस्थापकस्य सत्त्वादिति भावः । मनसि केषांचिन्मते स्थितिस्थापक इति वादिविनोदे व्यक्तम् ॥

( व्यो० ) एवं पृथिव्यादीनां नवानां पदार्थान्तराद्व्यावृत्तं साधर्म्यमभिधाय पुनस्तेषां स्वभेदाद्व्यावृत्तं साधर्म्यं दर्शयति—पृथिव्युदकज्वलनपवनात्ममनसामिति । चार्थे द्वन्द्वः समासोऽनेकत्वं चापरजातिमत्त्वं चेत्यनेकत्वापरजातिमत्त्वे । अनेकत्वं च क्षित्यादेर्विशेषलक्षणयोगिनो व्यक्तिभेदोऽनेकत्वसंख्या वा । नाकाशादेर्व्यक्तिभेदो नानेकत्वसंख्या वा सम्भवतीति तस्माद्व्यावृत्तिरिति । अनेकत्वादेवापरजातिमत्त्वमपरजातिर्द्रव्यत्वापेक्षया पृथिवीत्वादिरूपा सा विद्यते येषां तानि तद्वन्ति तेषां भावोऽपरजातिमत्त्वमपरजात्युपलक्षितः समवायः समवेता वाऽपरजातिरिति ॥

( भा० ) क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि ॥

( सू० ) क्षितीत्यादि । क्रियावत्त्वं-क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् , नातो निष्क्रियनष्टघटाद्यव्याप्तिः । मूर्तत्वमवच्छिन्नपरिमाणवत्त्वम् , स्पन्दसमवायिकारणतावच्छेदकतया सिद्धजातिप्रभेदो वा । परत्वं—परत्ववद्वृत्तिद्रव्यत्वव्यापकजातिमत्त्वम् । एवमपरत्ववेगयोरर्थो बोध्यः ॥

( से० ) क्षितीति । अत्र मूर्तत्वं—अवच्छिन्नपरिमाणवत्त्वम् तेन विना न द्रव्यनाशः तस्य संभृतसामग्रीकतया द्वितीयक्षण एवोत्पादात् तत्र च क्षणिकत्वभिया द्रव्यनाशाभावात् क्रियापरत्वापरत्ववेगेष्वागन्तुककारणजन्येषु तेषां चानियतसमवधानत्वात् क्रियादिभिर्विनापि द्रव्यनाशः सम्भवति । न च वेगवत्कारणजन्यतया कार्ये वेग आवश्यकः, सर्वकारणानां वेगवत्त्वे प्रमाणाभावात् । न च निष्क्रियादिनष्टेषु घटादिष्वव्याप्तिरिति चेन्न । क्रियावद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वादेर्विवक्षितत्वात् ॥

( व्यो० ) एवं क्षितिजलज्योतिरनिलमनसां साधर्म्यं क्रियावत्त्वं च मूर्तत्वं च परत्वं चापरत्वं च वेगवत्त्वं चेति तथोक्तानि । तथा च क्रिया चलनरूपा सा विद्यते येषां तानि तद्वन्ति तेषां भावः क्रियावत्त्वं—समवेता क्रिया तत्समवायो वा । तथा मूर्तिरव्यापिद्रव्यपरिमाणं सा विद्यते येषां तानि मूर्तानि तेषां भावः मूर्तत्वं—समवेता मूर्तिस्तत्समवायो वा । मूर्तत्वादेव च परत्वापरत्वादिसद्भावः क्रियावत्त्वं चेति । परापराणां भावः परत्वापरत्वे यत्सद्भावे क्षित्यादिषु परापरव्यवहार इति समवेतौ परत्वापरत्वगुणौ तत्समवायो वा । वेगो विद्यते येषां तानि वेगवन्ति तेषां भावो वेगवत्त्वं समवेतो वेगगुणस्तत्समवायो वा । एतानि च क्षित्यादिष्वेवेति नियम्यन्ते, न तु सर्वदा तेषु भवन्तीति ॥

**( भा० ) आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं च ॥**

( सू० ) आकाशेत्यादि । सर्वगतत्वं—सर्वावयवावच्छेद्यावयविसंयोगाश्रयत्वम् । परममहत्त्वं—अनाश्रययावन्महत्त्वापेक्षिकोत्कर्षवन्महत्त्वम् । परममहत्त्वस्य जातित्वपक्षे तादृशजातिमन्महत्त्वमित्यर्थः । सर्वेति । सर्वेषां मूर्तानां संयोगिनि संयुक्तत्वमित्यर्थः ॥

( से० ) सर्वगतत्वं निष्क्रिये न सम्भवतीति 'सर्वमूर्तप्रतियोगिकस्यैकस्यैका वृत्तिरिति' न्यायेन अनेकस्य वा संयोगस्यासम्भवादसम्भवीति चेत् । स्वसंयोगत्वावच्छिन्नव्यापकताकमूर्तत्वव्या-

(से०)पकसंयोगप्रतियोगित्वस्य विवक्षितत्वात् । यथा हि यत्र मूर्तत्वं तत्राकाशसंयोग इत्यादिव्याप्तिरस्ति न तथा तत्र घटसंयोग इत्यादिरिति भावः । स्वस्य च प्रवेश एकमात्रवृत्तिधर्मेण विवक्षितः, तेन द्रव्यसंयोग इति व्यापकतामादाय नातिप्रसंगः । परममहत्त्वं-प्रकर्षकाष्ठाप्राप्तमहत्परिमाणवत्त्वम् । न च हस्तवितस्त्याद्यवच्छेदस्यैव परिमाणतया कथमाकाशादौ परिमाणम् तदभावेऽणुत्वस्यैव स्वीकारौचित्यात् । यत्त्वियत्तावत्त्वं परिमाणलक्षणमिति । तन्न । सङ्ख्यादावतिव्याप्तेः । हस्तवितस्त्यादीयत्ताभावेपि यथाऽणुत्वात्परिमितत्वं परमाण्वादेः तथा महत्त्वादाकाशादेरपीति भावः । सर्वसंयोगिसमानदेशत्वं-संयोगसम्बन्धेन सकलमूर्ताधिकरणत्वं संयोगिनामाकाशादीनामधिकरणत्वात् । कालाद्युपाधावतिव्याप्तिवारणाय संयोगसम्बन्धेनेति तस्य स्वरूपसम्बन्धेनाधारत्वादित्याचार्याणामेकं मतमत्र चिन्त्यते-आकाशादीनां घटाद्याधारत्वे प्रमाणाभावात्, न हीदानीं घट इत्यादिकालाद्याधारत्वसाधकप्रतीतिवदाकाशाद्याधारत्वसाधिका प्रतीतिरस्ति, अन्यथाकाशादीनामपि घटाद्यधिकरणत्वेन 'न ह्यधिकरणमकारणमिति' न्यायेन तत्कारणत्वापत्तेः । ननु यदुत्पत्त्यधिकरणं तत्कारणन्तथा च दिक्कालतदुपाध्योः, न चाकाशात्मानौ तथा, किन्तु द्वितीयक्षणे संयोगसम्बन्धेन घटाधाराविति चेन्न । प्रमाणाभावात्, तथाच स्वसंयोगत्वावच्छिन्नव्यापकताकमूर्तनिष्ठाधिकरणत्वव्यापकसंयोगप्रतियोगित्वमाचार्यतात्पर्यविषयः । पूर्वन्तु मूर्तत्वव्यापकता विवक्षितेति भेदः ॥

( व्यो० ) एवमाकाशकालदिगात्मनां सर्वगतत्वादिसाधर्म्यं सर्वशब्दश्चानन्तरोक्ता मूर्तेष्वेव वर्तते । सर्वेषु गताः सर्वगताः सर्वप्राप्ताः तेषां भावः सर्वगतत्वं सर्वैर्मूर्तैः संयोगः । स चान्यतरकर्मजः संयोगजो वा । स तूभयनिष्ठत्वाविशेषेप्याकाशादेरेव साधर्म्यम् । तस्य हि सर्वमूर्तैः सह संयोगो न मूर्तानामन्यतमस्येति । तथा परममहतां भावः परममहत्त्वं-निरतिशयपरिमाणम्-तत्समवायो वा । तथा सर्वसंयोगिसमानदेशत्वं सर्वाणि च तानि संयोगीनि च मूर्तद्रव्याणि तैः समानाः संयोगाः तेषामाकाशादयो देशा आधारास्तेषां भावः सर्वसंयोगिसमानदेशत्वम् सर्वसंयोगिसंयोगाधारत्वम् । न च संयोगस्योभयनिष्ठत्वान्मूर्तानामप्येष धर्म इति वाच्यम् । यथा

(व्यो०)ह्येकमाकाशं सर्वमूर्तसंयोगाधारो नैवमेकं मूर्तमित्यर्थाद्विशेषो लभ्यते। न च सर्वगतत्वेनाविशेषः। सर्वगतत्वं हि सर्वसंयोगः तदुपलक्षितश्च समवायः सर्वसंयोगिसंयोगाधारत्वमिति। यदि वा सर्वे च ते संयोगो विद्यते येषां ते सर्वसंयोगिनः ते सर्वसंयोगिनो घटादयः खाबादयश्च तेषां समानाः संयोगा इति। शेषं पूर्ववत्। अन्ये तु–उपचारेणैव व्युत्पत्त्या वा संयोगिशब्देन संयोग एवोच्यत इति मन्यन्ते। संयुज्यन्त इति संयोगास्ते विद्यन्ते येषां ते संयोगिनः संयोगा एव स्थानादुपचारो वेति। सर्वसंयोगिनां तु समानाश्च ते देशाश्चेत्येकत्वे सत्याधार इति। अत्र चैकत्वे सतीति विशेषणं शब्दवृत्त्या लभ्यते इति सामर्थ्याश्रवणमपास्तं भवति। तच्चासत्-इन्द्रियसामान्यलक्षणे विशेषगुणलक्षणादौ च तस्यैव समाश्रयणादिह प्रयासमात्रमेवेति॥

**पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि॥**

(सू०) पृथिव्यादीनामिति। भूतत्वं–आत्मेतरवृत्तिविशेषगुणवत्त्वम्। इन्द्रियप्रकृतित्वं–साक्षात्कारकरणवृत्तिद्रव्यविभाजकवत्त्वम्, न त्विन्द्रियसमवायिकारणवृत्तिद्रव्यविभाजकवत्त्वं गगनाव्याप्तिप्रसङ्गात्। बाह्येति। बहिरिन्द्रियद्वयाग्राह्यबहिरिन्द्रियग्राह्यजातिमद्विशेषगुणवत्त्वम्, नातो घटाद्यव्याप्तिः॥

(से०) पृथिव्यादीनामिति। ननु भूतत्वं जातिरेवास्तु, न च मूर्तत्वेन संकरम्, सांकर्ये ह्युभयोर्जातित्वं न भवति न त्वेकस्यापि, अन्यथा पृथिवीत्वेन्द्रियत्वयोर्जातिसांकर्ये पृथिवीत्वमपि जातिर्न स्यात्, तथाच मूर्तत्वं मास्तु जातिः भूतत्वं तु भविष्यतीति चेन्न। विनिगमनाविरहस्थले न स्यात्, तथाच मूर्तत्वस्य जातिसाङ्कर्येण द्वयोरपि जातित्वनिवारणात्, पृथिवीत्वेन्द्रियत्वयोः संकरे तु गन्धसमवायिकरणतावच्छेदकत्वादि पृथिवीत्वादिजातिविनिगमकम्। तस्मात्संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वन्यूनवृत्तिजातिमद्विशेषगुणवत्त्वम्। विशेषपदानुपादाने संख्यामादाय कालादावतिव्याप्तिः। भावनाख्यसंस्कारमादायात्मन्यतिव्याप्तिवारणाय संस्कारत्वान्येति।

(से०)सुखादिमत्त्वेन तद्वारणाय बहिरिन्द्रियग्राह्यगुणत्वस्य सुखादावपि सत्त्वेन गुणत्वन्यूनवृत्तीति । इन्द्रियप्रकृतित्वं यदीन्द्रियस्वरूपत्वं तदा मनस्यतिव्याप्तिः । यदि चेन्द्रियसमवायिकारणत्वं तदाऽऽकाशादावव्याप्तिः । तथाच बाह्येन्द्रियवृत्तिद्रव्यविभाजकोपाधिमत्त्वे तात्पर्यम् । बाह्येति । नन्वेकैकपदं विशेषपदं वा व्यर्थमिति चेन्न । लक्षणद्वये तात्पर्यात् । बाह्यैकैकेन्द्रिय(शब्द)? ग्राह्यगुणवत्त्वं च न लक्षणम्, परमाण्वादावव्याप्तेः, किन्तु गुणत्वव्याप्यजात्या ? बाह्यैकैकेन्द्रियग्राह्यसजातीयगुणवत्त्वमात्रम् एकैकपदानुपादाने बाह्येन्द्रियग्राह्यसजातीयमहुणादिमत्त्वेनात्मादावतिव्याप्तिरतो एकैकेन्द्रियग्राह्यत्वम् । एवं विशेषपदगर्भेऽपि लक्षणे पदकृत्यं बोध्यम् । विवक्षा च पूर्ववदेव ॥

(व्यो०) तथा पृथिव्यादीनां साधर्म्यमाह—पृथिवी आदिर्येषां तानि पृथिव्यादीनि तेषाम् । न ज्ञायते कियतामतः पञ्चानामपि साधर्म्यम् । भूतत्वं चेन्द्रियप्रकृतित्वं च बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वं चेति तथोक्तानि । भूतानां भावो भूतत्वं तच्च सामान्यमेव । तथा हि-द्रव्यगुणकर्माणि निमित्ते चाबाध्यमानमनुगतज्ञानं सामान्यात् भवद्दृष्टम्, यथा गौरित्यादिज्ञानमस्ति च भूतं भूतमित्यादि क्षित्यादिषु ज्ञानमतः सामान्यात् भवतीति । न चास्य सामान्यादावनुगतज्ञानस्येव किञ्चित् बाधकमस्ति तथाच सामान्ये सामान्यकल्पनायामनवस्था स्यादिति। सामान्यं द्रव्यत्वं सामान्यं गुणवत्त्वमिति ज्ञानं विना सामान्यं भवतीत्युक्तम् । न च भूतं भूतमिति ज्ञाने बाधकमस्ति । अथ नारिकेलद्वीपवासिनः कस्मादेकाकारता प्रतिभासो न भवतीति । व्यञ्जकानुपलब्धेः यथाहि-गुणत्वादि सामान्यं नारिकेलद्वीपवासिनां व्यञ्जकानुपलम्भाद्विद्यमानमपि नोपलभ्यते तथा भूतत्वमपीति । किमस्य तर्हि व्यञ्जकमिति ? ब्राह्मणत्वस्येवोपदेशः यथाहि ब्राह्मणत्वमुपदेशाद्विज्ञायते तद्वद्भूतत्वमपीति । अथोपदेश एवास्त्वलं सामान्यकल्पनया । यथान्यैरुक्तं—'भूतत्वं भूतशब्दस्य वाच्यत्वमित्यभिधानाभिधेयनियमनियोगप्रतिपत्तिः, सा च शब्दावृद्धव्यवहारात् वाऽन्वयव्यतिरेकाभ्यां भवतीति'।एतच्चासत्-अबाध्यमानानुगतज्ञानस्य दुर्निमित्तान्तरकल्पनायां द्रव्यत्वादेरप्यसत्त्वं स्यात् । अस्ति च कृतसमयस्य भूतं भूतमिति ज्ञानं ब्राह्मणो ब्राह्मण इतिवद्द्रव्यं द्रव्यमिति च ज्ञानवत्,ततोऽस्ति भूतत्वं सामान्यमि-

(व्यो०)ति। अथ यथा द्रव्येष्वसाधारणः समवायिकारणत्वादिर्व्यापको धर्मः कृतसमयस्य द्रव्यत्वाभिव्यञ्जकोऽस्ति नैवं भूतेष्विति चेत्। नेन्द्रियप्रकृतित्वादेरसाधारणत्वात्। अथ तदुपलम्भेऽप्यकृतसमयस्य नानुगतं ज्ञानमिति चेत्। द्रव्यत्वादिष्वपि समानं—तत्रापि समवायिकारणत्वादेरुपलम्भेऽप्यकृतसमयस्य द्रव्यं द्रव्यमिति ज्ञानं दृष्टमिति। अथ कृतसमयस्योत्पत्तेरस्ति द्रव्यत्वादिसामान्यम्, तच्च भूतत्वेऽपि समानमित्यलम्।

तथेन्द्रियप्रकृतीनां भाव इन्द्रियप्रकृतित्वम्-घ्राणरसनचक्षुस्त्वक्छ्रोत्रकारणत्वं यथासंख्यम्। तच्च वक्ष्यामः पृथिव्याद्यधिकारे-भूयस्त्वात् गन्धवत्त्वादित्यादि(अ० ८ आ० २ सू० ५)सूत्रैरिति। श्रोत्रे तु कर्णशष्कुल्याकाशसंयोगोपलक्षितस्याकाशस्य कार्यत्वात्तदपेक्षयाऽऽकाशस्य कारणत्वात्। स्वभावार्थो वा प्रकृतिशब्द इति। नन्वाहंकारितत्वादिन्द्रियाणामयुक्तमेतत् तथाच प्रकाशकत्वं सत्त्वधर्म इति सात्त्विकादहंकारादिन्द्रियाणामुदयः। किमत्र प्रमाणमिति चेत्। अप्राप्यकारित्वं तच्च शाखाचन्द्रमसोर्युगपत् ग्रहणाद्विज्ञातम्। अन्यथा हि शाखासम्बन्धोत्तरकालं चिरेण चन्द्रमसा च सम्बन्धाद्युगपत् ग्रहणं न स्यात्। अस्ति चातोऽप्राप्यकारित्वम्। तच्च भौतिकेषु न सम्भवति प्रदीपादिष्वदर्शनात् इत्यभौतिकत्वमन्येषामपि प्रतिपत्तव्यं चक्षुर्दृष्टान्तबलादेव। तथा महदणुप्रकाशकत्वाच्च यद्धि यावत्परिमाणं तावदेव क्रियां कुर्वद्दृष्टमिति। तथाहि अल्पपरिमाणं वास्यादि महान्तं वटवृक्षं व्याप्य च्छिदां न करोतीति दृष्टम्। किन्तर्हि स्वव्याप्तप्रदेश एवेति चक्षुरप्यल्पपरिमाणत्वान्न पर्वतादिपरिच्छेदकं स्यात्। तत्तु दृष्टमतो न भौतिकमिति॥ तथा नियतविषयत्वाच्च। यदि हि चक्षुस्तैजसं स्याद्रूपस्यैव तद्गुणत्वाद्ग्राहकं तद्द्रव्यसामान्यादेरिति। एवं शेषेष्वपि नियमेन स्वगुणग्राहकत्वप्रसङ्गः। न चैतद्दृष्टमतो न भौतिकत्वमिति॥ इतश्च न भौतिकानीन्द्रियाणीन्द्रियत्वात्। यद्यदिन्द्रियं तत्तदभौतिकं दृष्टं यथा मनः। तथाचेन्द्रियाणि तस्मान्न भौतिकानीति। यत्तावदप्राप्यकारित्वादिति साधनं तदसिद्धम्। व्यवहितार्थानुपलब्ध्या प्राप्तेरुपलंभात्। अन्यथा हि व्यवहितस्याग्रहणमन्तिके च ग्रहणं न स्यात्-अप्राप्तेरुभयत्राविशेषात्। आवरणानुपपत्तिश्च प्राप्तिप्रतिषेध-

(व्यो०)कत्वात्तथाच प्राप्तिप्रतिषेधं कुर्वदावरणमग्रहणाय कल्प्यते । दृष्टं चावरणसामर्थ्यं दूरे वा प्रकाशकत्वमतः प्रदीपस्येव प्राप्तार्थपरिच्छेदकत्वम् । तथाच चक्षुः प्राप्तार्थपरिच्छेदकं व्यवहिताप्रकाशकत्वात् । यद्यद्व्यवहिताप्रकाशकं तत्तत्प्राप्तावर्थपरिच्छेदकम् यथा प्रदीपस्तथा व्यवहिताप्रकाशकं चक्षुस्तस्मात्प्राप्तार्थपरिच्छेदकमिति प्राप्तिसद्भावे प्रमाणोपपत्तेः । शाखाचन्द्रमसोः कालभेदेन ग्रहणसद्भावेऽप्याशुभावादुत्पलपत्रशतव्यतिभेदाभिमानवद्युगपद्ग्रहणाभिमानः । यच्च महदनुप्रकाशकत्वं तदप्यन्यथासिद्धत्वादसाधनम् । तथाहि चक्षुर्बहिर्गतं बाह्यालोकसम्बन्धाद्विषयपरिमाणं उत्पद्यत इति महदाद्यर्थप्रकाशकं नाभौतिकत्वादिति । यच्चोक्तम्–तैजसत्वाद्रूपस्यैव प्रकाशकं स्यात्—इत्येतदसत्—प्रदीपे दर्शनात् न हि प्रदीपस्तैजसत्वाद्रूपस्यैव प्रकाशको दृष्टः । किं तर्हि ? रूपद्रव्यसामान्यादेरिति । एतावानेव विशेषः यश्चक्षुषः, अतस्तैजसत्वम् न विरुध्यत इति । रूपादिषु मध्ये नियमेन रूपस्यैव प्रकाशकत्वम् तैजसत्वेऽनुमानमिति वक्ष्यामः । नियमेन गन्धादिप्रकाशकत्वं च पार्थिवत्वादिषु घ्राणादेरिति । न चैकप्रकृतिकत्वे विषयव्यवस्थोपलब्धेति नानाप्रकृतित्वम् । तथाहि—एकस्मात्कारणादुपजाताः प्रदीपभेदाः समानविषयाः इत्युपलब्धम् तद्वदिन्द्रियेष्वपि समानविषयत्वं स्यात् । दृष्टा तु घ्राणादेर्गन्धादिषु व्यवस्थेति नानाप्रकृतिकत्वम् । तथा नानाजात्युपादानानीन्द्रियाणि द्रव्यत्वे सति प्रतिनियतविषयत्वाद्यद्द्रव्यत्वे सति प्रतिनियतविषयं तत्तन्नानाजात्युपादानं दृष्टम् । यथा व्यंजनानिलप्रदीपकस्तूरिकादीनीति । तथाचैतानि द्रव्यत्वे सति प्रतिनियतविषयाणि तस्मान्नानाजात्युपादानानीति । तथाहि । ज्ञानशब्देष्वेकजात्युपादानत्वं प्रतिनियतविषयत्वं चेति व्यभिचारः । तदर्थं द्रव्यत्वे सतीति विशेषणम् । न चास्य पक्षधर्मत्वादिमतो प्रामाण्यमतिप्रसंगात् । यश्चाभौतिकत्वेऽनुमानमिन्द्रियत्वादिति । तत्र भूतादनिवृत्तं भौतिकं तत्प्रतिषेधे च कारणान्तरप्रभवत्वं विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानविषयत्वादिति साध्यविकलो दृष्टान्तः । तथा च मनसि न भौतिकत्वं नाप्यभौतिकत्वमिति । अथ भूतादुत्पत्तिप्रतिषेधेन नित्यत्वम्, अत्राप्यभ्युपगमव्याघातः मनस्यपि नित्यत्वाभ्युपगमात् । इन्द्रियत्वं चोक्तविशेषणस्या-

(व्यो०)परोक्षज्ञानजनकत्वेन भूतादुत्पत्तिप्रतिषेधेनेत्यन्यथासिद्धम् । निर्मूलं चेन्द्रियाणामहंकारप्रभवत्वम् । तत्सद्भावे प्रमाणासम्भवात् । तथाहि-प्रधानसद्भावे सत्येषा प्रतिक्रिया । तस्य चासत्त्वं वक्ष्यमाणमिति । येषां चासंसारमंडलव्यापीनीन्द्रियाणि तेषामशेषविषयग्रहणप्रसङ्गः । अथादृष्टवशान्नियतदेशे वृत्तिर्व्यज्यत इति । अत्र प्रवृत्तीनां तादात्म्ये न किञ्चिदुक्तं स्यात् । व्यतिरेके तु तदेवेन्द्रियमिति संज्ञाभेदमात्रमेव । अथ नियतविषयावबोधान्यथानुपपत्त्या तदाकारतयैवेन्द्रियस्य परिणामो निश्चीयते । तन्न । अन्यथाप्युपलम्भात् । तथाहि-नियतार्थसन्निकर्षेप्युपलंभो घटत एव । न च व्यापित्वं परस्याभीप्सिततरमिति नेह प्रतन्यते । परिणामपक्षश्च न संभवतीति वक्ष्याम इत्यलम् ।

तथा बाह्यैनैकैकेनेन्द्रियेण गृह्यन्त इति बाह्यैकैकेन्द्रियग्राह्यास्ते च ते विशेषगुणाश्चेति ते विद्यन्ते येषां तानि तद्वन्ति तेषां भावो बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वम् समवेता हि यथोक्ताः गुणास्तदुपलक्षितो वा समवायः । गुणवत्त्वं सर्वेष्वस्तीति विशेषग्रहणम् । विशेषगुणवत्त्वं स्वात्मन्यस्तीति बाह्येन्द्रियग्राह्यग्रहणम । इन्द्रियग्राह्याश्च संख्यादयोपि भवन्ति । न च विशेषगुणाः । तथापि एकैकग्रहणमनर्थकं बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वस्यान्यत्राभावात् । सत्यम् तथापि द्वितीयं साधर्म्यमित्यदोषः । तथाहि—संख्यादेर्द्वीन्द्रियग्राह्यत्वादेकेन्द्रियग्रहणम् । एकेन्द्रियग्राह्यत्वं च रूपादिष्वसंभवि स्यात्, न ह्येकमिन्द्रियं सर्वेषां प्रकाशकमित्येकैकग्रहणम् । तथाप्यन्तःकरणस्य बाह्येन्द्रियाद्यधिष्ठानद्वारेण व्यापारासंभवित्वमेवेति बाह्यग्रहणम । एवं च बाह्यैकैकेन्द्रियग्राह्यगुणवत्त्वम् विशेषपदत्यागेन द्वितीयं साधर्म्यमिति ॥

( भा० ) चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे ॥

( सू० ) स्पर्शवत्त्वं-स्पर्शसमवायित्वम् । धूमपिशाचादेरप्यनुद्भूतस्पर्शवत्त्वान्न तत्राव्याप्तिः । स्पर्शवद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वे वा तात्पर्यम् ॥

(से०) चतुर्णामिति । द्रव्यजनकत्वमाकाशादावपीति द्रव्यसमवायिकारणकत्वं तदर्थः । तदाप्यवयविन्यतिव्याप्तिवारणाय तद्वृत्तिद्रव्य-

(से०) विभाजकोपाधिमत्त्वपरम् । स्पर्शवत्त्वं समवायेन मनसि परमाणुत्वं नभःप्रभृतौ परममहत्त्वं पृथिव्यादौ तु तद्व्यापकाणुत्वाव-धिकापकर्षाश्रयाणुत्वम् त्र्यणुकादौ महत्त्वावधिकापकर्षाश्रयमहत्त्वम्। तथा चावान्तराणुत्ववद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम्–अवान्तरम-हत्त्ववद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वं च चतुर्णां लक्षणं बोध्यम ॥

(व्यो०) तथा चतुर्णां द्रव्यारम्भकत्वं स्पर्शवत्त्वं चेति द्रव्यारम्भ-कत्वस्पर्शवत्त्वे । तत्र ज्ञायते केषामिति, विशेषानभिधानात् पृथि-व्यादीनामित्यनुवर्तनीयम्, अनन्तरत्वादिति । किं पुनर्द्रव्यारम्भ-काणां भावो द्रव्यारंभकत्वम्। द्रव्योत्पत्तौ समवायिकारणत्वम्–कार्य-द्रव्यस्य समवायः । तेन हि सता द्रव्यं द्रव्योत्पत्तौ समवायिकारणमि-ति व्यवहारात् । तथाहि–द्रव्यारंभकाणां भावो द्रव्यारंभकत्वम्, येन सता द्रव्यमुत्पादयन्तीति न विवक्षितम् । किं तर्हि? येन सता द्रव्य-मारभन्त इति द्रव्योत्पत्तौ समवायिकारणानीति व्यवहारः । स च द्रव्यसमवायेन सता भवतीति द्रव्यारंभकत्वम् द्रव्यसमवाये एव । अथ येन सता स्वसमवेतद्रव्यमारभन्त इति विवक्षा, तत्र यदि स्पर्शवतामेव द्रव्यारंभकत्वदर्शनात्स्पर्श एव । तथापि स्पर्शवत्त्वेन गतार्थत्वाद्व्यर्थं स्यात् द्रव्यारंभकत्वम् ॥ अत्रैके—सहकारिविशेषोप-चितस्पर्शो द्रव्यारंभकत्वम् । स्पर्शवतां भावः स्पर्शवत्त्वं स्पर्शोपलक्षि-तः समवाय—इति परिहारं ब्रुवते ॥

**( भा० ) त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्वव-त्त्वानि ॥**

( सू० ) त्रयाणां पृथिव्यादीनामिति पूर्वेणान्वयः । प्रत्य-क्षत्वं बहिरिन्द्रियग्राह्यवृत्तिद्रव्यत्वन्यूनवृत्तिजातिमत्त्वम् । नातः पर-माण्वाद्यव्याप्तिरात्मन्यतिव्याप्तिर्वा । रूपवत्त्वमिति । रूपसमवा-यित्वं रूपसमवायिवृत्तिद्रव्यत्वाव्यापकजातिमत्त्वं वाऽर्थः, तेना-नुद्भूतरूपासत्त्वेऽपि न क्षतिः । द्रवत्वं द्रुतवृत्तिद्रव्यत्वाव्यापक-जातिमत्त्वम्, नातो घटकरकावह्न्याद्यव्याप्तिः ॥

( से० ) त्रयाणामिति । प्रत्यक्षत्वं रूपादावपीति बाह्यप्रत्यक्षद्रव्य-त्वम् । आत्मन्यनतिप्रसक्तये बाह्येति । बाह्येन्द्रियप्रत्यक्षवृत्तिद्रव्य-

विभाजकोपाधिमत्त्वन्तु तदर्थो नातः पृथिवीपरमाण्वादावव्याप्तिः। रूपवत्त्वं–रूपसमवायः। द्रवत्वं–द्रवत्ववद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम्, नातः पाषाणादावव्याप्तिः॥

(व्यो०) तथा पृथिव्यादीनां त्रयाणां साधर्म्यमाह प्रत्यक्षवत्त्वं च रूपवत्त्वं च द्रवत्ववत्त्वं चेति। तथोक्तानां प्रत्यक्षाणां भावः प्रत्यक्षत्वम्। अपरोक्षज्ञानविषयत्वं तेन सता प्रत्यक्षाणीति व्यवहारात्। महत्त्वादिकारणयोगो वा। आत्मादेस्तु प्रत्यक्षतायां साधर्म्यमात्रम्। अप्रत्यक्षत्वे च व्यावृत्तमिति। अन्ये त्वर्थतया भावाद्बहिरिन्द्रियविवक्षया प्रत्यक्षत्वमत्र विवक्षितम्। तच्चात्मादिषु नास्तीति व्यावृत्तं साधर्म्यमिति मन्यन्ते॥ निर्विकल्पकसविकल्पकज्ञानविषयत्वं च न व्यावृत्तमात्मन्यपि भावात्। तथा चाहमिति शब्दः पृथिव्यादिशब्दव्यतिरेकादात्मनि वर्तत इत्युपलब्धसमयस्य तत्स्मरणात् भवत्येव सविकल्पकज्ञानमिति। तथा रूपं विद्यते येषां तानि रूपवन्ति तेषां भावो रूपवत्त्वं रूपसमवायः समवेतं वा रूपमिति। तच्चाविवक्षितविशेषम्। अन्यथा हि क्षित्यादिव्यावृत्तरूपाधिकरणमेवेति। तथा द्रवाणां भावो द्रवत्वं समवेतो द्रवत्वगुणस्तत्समवायो वा। अत्रापि न विशेषविवक्षा, अन्यथा क्षितितेजसोर्नैमित्तिकमपां च सांसिद्धिकमिति विशेष एव स्यात्॥

(भा०) द्वयोर्गुरुत्वं रसवत्त्वं चेति॥

(सू०) द्वयोः–क्षितिजलयोः। रसवत्त्वं–रससमवायित्वम्, रसवद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वं वा। चकाराद्भास्वरान्यरूपवत्त्वाद्युपग्रहः॥

(से०) गुरुत्वरसवत्त्वे समवायेन। यद्यप्यधःसंयोगफलिका क्रिया पतनं तेजःप्रभृतिष्वपि तथापि गुरुत्वप्रयोजकजातिविशेषवत्पतनं द्रष्टव्यम्। आलोकप्रकाशवृत्तिद्रव्यविभाजकोपाधिमत्त्वं चार्थः। नन्वालोकप्रकाशत्वमालोकजन्यज्ञानविषयत्वम् आलोकेपि विषयरूपालोकस्य तत्रापि जनकत्वादिति चेन्न। स्वसत्ताकालीनालोकविलम्बप्रयुक्तविलम्बप्रतियोगिसंज्ञाकाराविषयत्वस्य विवक्षितत्वात्। न चालोकसाक्षात्कार आलोककाल आलोकविलंबेन विलम्बते घटादिसाक्षात्कारस्तु तथेति भावः॥

(व्यो०) तथाहि गुरोर्भावो गुरुत्वं समवेतो गुरुत्वगुणस्तत्समवायो वा। तथा रसो विद्यते ययोस्ते रसवती तयोर्भावो रसवत्त्वं रसोपलक्षितस्समवायः समवेतो रसः॥

(भा०) भूतात्मनां वैशेषिकगुणवत्त्वम् ॥

(सू०) भूतेति। भूतानामात्मनश्च वैशेषिकगुणवत्त्वं विशेषगुणतया परिभाषितगुणवत्त्वम्—

रूपस्पर्शगन्धरसशब्दाः सांसिद्धिको द्रवः ।

बुद्ध्यादिनव शब्दश्च वैशेषिकगुणाः स्मृताः ॥

इति प्राच्यैः परिभाषितत्वात्। यद्वा वैशेषिकः प्रत्यक्षविशेषायोचितः प्रत्यक्षं प्रति विषयविधया हेतुरिति यावत्, तादृशगुणवत्त्वमर्थः। तत्र प्रत्यक्षजातिमादाय गुणाद्यतिव्याप्तिवारणाय गुणेति॥

(से०) भूतेति। ननु वैशेषिकगुणवत्त्वं विशेषगुणत्वं तच्च न जातिः द्रवत्वसंस्कारत्वमादाय जातिसङ्करप्रसंगात्–द्रवत्वस्य संस्कारत्वस्य च नैमित्तिकद्रवत्वे वेगादौ च सत्त्वेन विशेषगुणत्वस्य चासत्त्वेन सुखादौ विशेषगुणत्वस्य सत्त्वेन तयोरसत्त्वेन सांसिद्धिकद्रवत्वभावनयोरुभयसत्त्वेन परस्परात्यन्ताभावसामानाधिकरण्ये सति परस्परसामानाधिकरण्यस्य स्फुटत्वात्। नापि द्रव्यविभाजकोपाधिव्याप्तित्वम् यत्र सत्ता तत्र द्रव्यविभाजकोपाधिरिति व्याप्तेरसत्त्वात्। ननु येन रूपेण द्रव्यविभाजकोपाधिता तेन रूपेण व्यापकता विवक्षिता सा च गन्धादावस्ति यत्र गन्धस्तत्र पृथिवीत्वमित्यादिव्याप्तेः सत्त्वादिति चेन्न। यत्र रूपं तत्र पृथिवीत्वमित्यादिव्याप्तेरभावात्तत्राव्याप्तेः। नापि गुणत्वन्यूनवृत्त्यनेकवृत्तिवृत्तिजातिशून्यगुणत्वं विशेषगुणत्वम्, संख्यादिष्वगमनेऽपि परिमाणादिषु गतेरतिव्याप्तेः द्वित्वद्विपृथक्त्वादौ संयोगे विभागे चानेकवृत्तिवृत्तावपि परिमाणत्वादीनामतथात्वात्। नापि मनोवृत्तिगुणत्वन्यूनवृत्तिजातिशून्यत्वम्, भावनायामव्याप्तेः तत्र वेगवृत्तिसंस्कारत्वसत्त्वात् गुरुत्वनैमित्तिकद्रवत्वयोरव्याप्तेश्च। नापि नैमित्तिकद्रवत्वगुरुत्वभिन्नत्वे सति मनोवृत्तिगुणत्वन्यूनवृत्तिजातिशून्यगुणत्वं भावनायामव्याप्ते-

रिति चेत्।

अत्रोच्यते–द्रव्यविभाजकोपाधितावच्छेदकावच्छिन्नव्यापकताकद्रव्यविभाजकोपाधिनिरूपितव्याप्यतावच्छेदकजातिमद्गुणत्वं विशेषगुणत्वम्। यद्यपि रूपादौ रूपत्वादिजातिर्न तादृशी तथापि रूपत्वाद्यवान्तरजातयस्तादृश्यः सन्त्येव पृथिव्यादिरूपरसस्पर्शेषु परस्परवैलक्षण्यसत्त्वाद्गन्धवत् सुखादिसांसिद्धिकद्रवत्वस्नेहशब्देषु तादृशजातिमत्त्वं स्फुटमेव यत्र सांसिद्धिकद्रवत्वं तत्र जलत्वमित्यादिव्याप्तेः सत्त्वात्। यत्र नैमित्तिकद्रवत्वं तत्र पृथिवीत्वमित्यादिव्याप्तेरसत्त्वात्, पृथिवीतेजोनैमित्तिकद्रवत्वयोः परस्परव्यावृत्तजातेरभावाच्च। एवं गुरुत्वादावपि बोध्यम्। यत्र घटस्तत्र पृथिवीत्वमित्यादिव्याप्तेरसत्त्वेन घटादावतिप्रसक्तये गुणमिति। न हि समवायसम्बन्धेन घटे पृथिवीत्वं व्यभिचरति तस्मान्निरुक्तलक्षणे न कोपि दोष इति। यद्वा गुरुत्वनैमित्तिकद्रवत्वान्यत्वे सति भावनान्यमनोवृत्तिगुणत्वन्यूनवृत्तिजातिमद्भिन्नगुणत्वम्। इदानीं भावनापि संगृहीता भवति विशेषणाभावाद्भिन्नस्य विशिष्टाभावस्य तत्र निरातंकत्वात्।

वर्धमानोपाध्यायास्तु–स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाध्यत्यन्ताभावसमानाधिकरणगुणावृत्तिगुणवृत्तिगुणत्वव्याप्यजातिमद्गुणत्वं विशेषगुणत्वम्। स्वं गन्धत्वं, तस्याश्रयो गन्धः तत्र समानाधिकरणो द्रव्यविभाजकोपाधिः पृथिवीत्वं तदत्यन्ताभावसमानाधिकरणो द्रव्यगुणजलादौ स्नेहादिस्तदवृत्तिर्गन्धलक्षणवृत्तिगुणत्वव्याप्यजातिर्गन्धत्वं तद्वद्गुणत्वं गन्धस्य। एवं रूपत्वादिजातीरुपादाय रूपादौ वर्णयेत्। स्नेहसुखादौ लक्षणं स्फुटमेवत्यक्षरतात्पर्यमित्याहुः। तत्र समानाधिकरणगुणावृत्तीत्यत्र गुणपदमखण्डाभावशरणप्रवेशाद्भवतु निरस्ताशंकम्, गुणवृत्तिगुणत्वव्याप्यपदयोस्तु न किमप्यवलम्बितं पश्यामः। प्रत्यक्षगुणवद्वृत्तिद्रव्याविभाजकोपाधिमत्त्वमप्येवमेव॥

(व्यो०) एवं भूतानि आत्मानश्चेति तथोक्तास्तेषां वैशेषिकगुणवत्त्वं साधर्म्यम्। विशेषगुणा एव वैशेषिकास्ते विद्यन्ते येषां तेषां भावस्तत्त्वं तदुपलक्षितः समवायः ते च समवेताः॥

( भा० ) क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम् ॥

( सू० ) चतुर्दशगुणवत्त्वमिति । गन्धरसरूपस्पर्शद्रवत्वगुरुत्वपरत्वापरत्वसंख्यापरिमाणपृथक्त्वसंयोगविभागसंस्कारेषु सस्नेहनिरुक्तसंख्यादिबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मेषु च यानि चतुर्दशत्वानि तेषामन्यतमपर्याप्त्यधिकरणगुणवद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वमर्थः, तेन पृथिव्यां यादृशाश्चतुर्दशगुणास्तादृशानां जलादावसत्त्वेऽपि न क्षतिः । न चेश्वरात्मनि धर्माधर्मसंस्कारविरहात्तत्राव्याप्तिः आत्मपदेन सुखसमवायिकारणतावच्छेदकजातिमत एव लक्ष्यत्वात् । प्राचैरपि—'जलक्षितिप्राणभृतां चतुर्दश' इत्युक्त्या प्राणिनामेव लक्ष्यत्वमूरीकृतम् ।

अन्ये तु चतुर्दशगुणवत्त्वमित्यस्य तेजोन्यत्वे सति प्रत्यक्षवृत्तिद्रव्यत्वावान्तरजातिमत्त्वे तात्पर्यम् । ईश्वरस्तु नात्मवृत्तिजातिमान् अतो न तत्र प्रसङ्ग इत्याहुः ॥

( से० ) चतुर्दशेति । नन्वीश्वरेऽव्याप्तिरिति चेन्न, चतुर्दशगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वे पर्यवसानात् ॥

(व्यो०) एवं क्षितिश्चोदकञ्चात्मानश्चेति तथोक्तास्तेषां साधर्म्यं चतुर्दशगुणवत्त्वम् । तथाहि—चतुर्दशगुणा विद्यन्ते येषां ते तद्वन्तः तेषां भावस्तत्त्वं समवेतास्ते तत्समवायो वा । अत्र चान्यगुणानामन्यत्रावृत्तेः संख्यामात्रं साधर्म्यं विवक्षितमिति ज्ञेयम् ॥

( भा० ) आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् ॥

( सू० ) क्षणिकेति । क्षणिकः-क्षणत्रयावृत्तिर्यः ध्वंसेन सहैकदेशवृत्तिर्विशेषगुणस्तद्वत्त्वमित्यर्थः । प्रागनाश्यरूपादिमत्तया परमाणावतिव्याप्तिवारणार्थमवृत्त्यन्तम् । क्षणत्रयावृत्तिरूपादिमतो द्विक्षणस्थायिघटादेर्वारणाय वृत्त्यन्तम् । अङ्गुलीकर्मजनितस्य स्वसमानकालोत्पन्नशाखाकर्मजविभागनाश्यस्य शा-

खाङ्गुलीसंयोगस्य क्षणत्रयावृत्तित्वात् स्वध्वंससमानदेशत्वाच्च तद्वतः शाखादेर्वारणाय विशेषेति । न चेश्वरात्मन्यतिव्याप्तिः, तस्य पूर्ववदलक्ष्यत्वात् । आचार्यास्तु-क्षणिकैकदेशवृत्त्योर्वैकल्पिकोपादानात् क्षणिकविशेषगुणवत्त्वं अव्याप्यवृत्तिविशेषगुणवत्त्वं चेति लक्षणद्वये तात्पर्यमाहुः । तच्चिन्त्यम् । द्वयोरपि द्विक्षणस्थायिद्रव्यातिव्याप्त्यापत्तेः ॥

( से० ) आकाशात्मनामिति । नन्वन्त्यशब्दस्योपान्त्यशब्दनाश्यतापक्षे क्षणिकविशेषगुणवत्त्वमाकाशे सिद्धत्यात्मनि तु कथम् ? क्षणिकत्वस्य यथाश्रुतस्य विवक्षितत्वे सामान्यगुणस्य कस्यचित्तादृशोऽभावाद्विशेषपदं व्यर्थम् एकदेशवृत्तिपदं च व्यर्थमिति चेन्न । क्षणत्वव्यापकस्थितिशून्यविशेषगुणवत्त्वस्य लक्षणत्वात् । अत्र द्वित्वसंयोगादावतिव्याप्तिवारणायोभयत्र विशेषपदम् । द्रव्यविभाजकोपाधिविवक्षा तूभयत्र अन्यथेश्वरात्मन्यतिव्याप्तिः ॥

( व्यो० ) आकाशं चात्मानश्चेति तथोक्तास्तेषां साधर्म्यं क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् । क्षणिकाश्च ते एकदेशवृत्तयश्चेति ते विद्यन्ते येषां ते तद्वन्तः तेषां भावस्तत्त्वं तत्समवायः ते च समवेताः । गुणवत्त्वं सर्वेष्वस्तीति विशेषग्रहणम् । तत् क्षित्यादिष्वपि समानमित्येकदेशवृत्तिपदम् । तथापि क्षणिकग्रहणमनर्थकमेकदेशवृत्तिविशेषगुणवत्त्वस्यान्यत्राभावात् । तन्न । द्वितीयसाधर्म्यस्य विवक्षितत्वात् । तथाहि—विशेषगुणवत्त्वमन्यत्राप्यस्तीति क्षणिकत्वग्रहणम् । क्षणिकत्वं चाश्रये विद्यमाने सत्याशुतरविनाशित्वम् । क्षणिकगुणवत्त्वं च विभागापेक्षयान्यत्राप्यस्तीति विशेषग्रहणम् । क्षणिकविशेषगुणवत्वं चान्यत्राभावाद्व्यावृत्तं साधर्म्यमिति ॥

( भा० ) दिक्कालयोः पञ्चगुणवत्त्वम् ॥

( सू० ) पञ्चगुणवत्त्वमिति । संख्यापरिमाणपृथक्त्वसंयोगविभागवत्त्वमित्यर्थः । क्वचिदरूढावपि द्विगुविषये संख्यापूर्वकः कर्मधारयः पञ्चगव्यादिपदवत् । पञ्चगुणशब्दो वा संख्यादिपदवत् । न च पृथिव्यादावतिव्याप्तिः, संख्यादिपञ्चकान्यगुणशून्यत्वे सति गुणवत्त्वस्य विवक्षितत्वात् ॥

( से० ) दिगिति । गुणविभाजकोपाधिपुरस्कारप्रवृत्तगणनाप्राप्तषष्ठगुणराहित्ये सति गुणवत्त्वमित्यर्थः, तेन द्वित्वादिभेदेन नासम्भवो न वा गुणादावतिप्रसक्तिः ॥

( व्यो० ) तथा दिक्कालयोः पञ्चगुणवत्त्वं विशेषात्साधर्म्यम् । पञ्च गुणा विद्यन्ते ययोस्तौ पञ्चगुणवन्तौ तयोर्भावः पञ्चगुणवत्वम् । पञ्चगुणोपलक्षितसमवायस्ते वा समवेताः । एतच्च संख्यामात्रसाम्येन साधर्म्यम् ॥

## ( भा० ) सर्वोत्पत्तिमतां निमित्तकारणत्वं च ॥

( सू० ) सर्वेति । कार्यमात्रं प्रति अधिकरणविधया निमित्तकारणत्वमित्यर्थः । कार्यमात्रं प्रत्यदृष्टद्वारा हेतुरप्यात्मा नाधिकरणत्वेन तथा । वस्तुतः कार्याण्यात्मजानि तददृष्टजन्यत्वात्तदीयसुखादिवदित्यादेरप्रयोजकत्वाददृष्टद्वारात्मनः कार्यमात्रं प्रति हेतुत्वे मानाभावः तत्तत्कार्यं प्रति तत्तत्कालदिशोर्विशिष्य हेतुत्वस्यावश्यकत्वात् 'यद्विशेषयोः कार्यकारणभाव' इति न्यायेन पुनः कार्यसामान्यं प्रत्यनुयोगितात्विशेषपर्यवसिताभ्यां कालत्वदिक्त्वाभ्यां महाकालदिशोरपि हेतुत्वम् । अतः कार्यसामान्यजनकतावच्छेदकीभूतधर्मवद्विभुत्वं दिक्कालयोरेव साधर्म्यमिति ध्येयम् । चकाराद्विशेषगुणशून्यविभुत्वादेरुपग्रहः ॥

( से० ) सर्वोत्पत्तिमतां निमित्तकारणत्वमिति । अत्र निमित्तपदमनादेयम् स्वसमवेतद्वित्वादौ समवायिप्रसक्तसमवायिकारणत्वात् । न चादृष्टेश्वरात्मनोरतिव्याप्तिः, आधारतया सर्वोत्पत्तिमत्कारणत्वस्य दिक्कालयोरेव सत्त्वात् तदुपाधावनतिप्रसक्तये द्रव्यत्वं विवक्षितम् ॥

( व्यो० ) सर्वे च ते उत्पत्तिर्विद्यते येषां ते उत्पत्तिमन्तश्चेति तथोक्तास्तेषामुत्पत्तौ निमित्तकारणत्वमिति । निमित्तपदस्य कारणपर्यायस्याप्यभिधानं समवाय्यसमवायिव्यवच्छेदार्थम् । अन्यथा हि समवाय्यसमवायिसाधारणत्वात्तदपेक्षयाऽऽसम्भवित्वमेव स्यात् । तथाहि-निमित्तकारणस्य भावो निमित्तकारणत्वम् । येन सता नि-

मित्तकारणमिति व्यवहारः। स च कारणयोः सतोः समवाय्यसमवायिलक्षणभावस्तेन सता तथा व्यवहारात्। यद्यपि स्वगतसंख्याद्युत्पत्तावस्ति समवायिकारणत्वम्। तथापि सर्वेषामेवेति विशेषणाददोषः॥

( भा० ) क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः॥

( सू० ) नैमित्तिकेति। तेजःसंयोगजद्रवत्ववद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वमर्थः। घृतादेः स्वर्णादेश्चारम्भकपरमाणावेव वह्न्यादिसंयोगेन द्रवत्वोत्पादाद् घटवह्न्यादेरपि संग्रहाय निरुक्तजातिगर्भता॥

( से० ) क्षितीति। नैमित्तिकत्वं यदि सकारणकत्वं तदा जलद्रवत्वमपि तथेत्यतिव्याप्तिः निमित्तकारणत्वमपि तथेत्यतिव्याप्तिरेव, किन्तु तेजः संयोगजन्यत्वं नैमित्तिकत्वम्। तथाच तेजसंयोगजन्यद्रवत्ववद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वे तात्पर्यम्, नातः प्रस्तरादावव्याप्तिः। सूर्यागस्य ? दिगुपाधितया यद्यपि जलद्रवत्वेपि कारणता तथापि नासमवायिकारणता विवक्षिता तु सेति भावः॥

( व्यो० ) क्षितिश्च तेजश्चेति क्षितितेजसी तयोर्नैमित्तिकद्रवत्वयोगः साधर्म्यम्। निमित्तादुपजातं नैमित्तिकमिति निमित्तशब्दः सामान्यशब्दोऽप्यर्थादग्निसंयोगे वर्तते। नैमित्तिकं च तद्द्रवत्वं चेत्येकेन योगः समवायः साधर्म्यमिति॥

( भा० ) एवं सर्वत्र विपर्ययात्साधर्म्यं वैधर्म्यं च वाच्यमिति॥

( सू० ) नन्वाश्रितत्वं चान्यत्रेत्यादिनाऽऽश्रितत्वादिकं नित्यद्रव्यान्यस्य साधर्म्यमेवाभिहितं न तु वैधर्म्यं तद्व्यावृत्तधर्मस्यैव तद्वैधर्म्यत्वात्, तत्कुतः साधर्म्यवैधर्म्याभ्यां पदार्थतत्त्वनिरूपणमत आह एवमिति। उक्तक्रमेण सर्वत्र लक्ष्येषु यत् साधर्म्यं तदेव विपर्ययात् लक्ष्येतरव्यावृत्तत्वात् वैधर्म्यं वैधर्म्यमपि बोध्यम्। न तु यद्यस्य साधर्म्यन्तदेव तस्य वैधर्म्यतया ग्राह्यमित्यर्थः॥

( से० ) एवमिति । यथा भावेषु द्रव्येषु च कस्यचित्परिहारेण कस्यचिच्च सङ्ग्रहेण एतानि साधर्म्याणि वैधर्म्याणि च निरुक्तानि । तथा सर्वत्र विपर्ययात्पूर्वलक्षणसंगृहीतेषु किञ्चित्परिहृत्य परिहृतेषु किञ्चित्संगृह्य साधर्म्यवैधर्म्यान्तरे वाच्ये । सर्वत्र पूर्वलक्ष्येऽलक्ष्ये च विपर्ययो लक्ष्ये कस्यचित्परिहारोऽलक्ष्ये कस्यचित्सङ्ग्रहः । एवञ्चास्मदुक्तलक्ष्यालक्ष्यसंकोचं विनापि लक्षणान्तरं निर्वाच्यमिति भावः । आचार्यस्त्वन्यथा व्याख्यातवान् तत्तत्रैवानुसन्धेयम् । आश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्य इत्युक्तम् । एतद्विपर्ययो निरवयवत्वमन्यत्राऽनित्यद्रव्येभ्य इति ज्ञातव्यम । लक्ष्यीकृतस्यानित्यद्रव्यस्यालक्ष्यपक्षनिःक्षेपात् अलक्ष्यस्य नित्यद्रव्यस्य लक्ष्ये प्रपाताद्विपर्ययः स्फुट एव । द्रव्यादीनां त्रयाणा मन्यनिरूपितसमवायवत्त्वम् । सामान्यविशेषयोरन्यनिरूपितसमवायराहित्ये सति समवायवत्त्वम् । विशेषसमवाययोरैन्द्रियकावृत्तिभावविभाजकोपाधिमत्त्वम् अनित्यद्रव्यसमवेतावृत्तिभावविभाजकोपाधिमत्त्वं वा । द्रव्यगुणयोर्नित्यवृत्तिसत्तेतरजातिमत्त्वम् । द्रव्यकर्मणोर्नित्यवृत्तिनित्यावृत्तिसत्तान्यूनवृत्तिजात्यन्यूनवृत्तिमत्त्वम् । अत्र संयोगत्वादिना संयोगादावनतिप्रसक्तये सत्तान्यूनवृत्तिजात्यन्यूनवृत्तीति । गुणकर्मणोर्मनःसमवेतवृत्तिसत्तेतरजातिमत्त्वम् । द्रव्यादीनां त्रयाणामनित्यवृत्तिभावविभाजकोपाधिमत्त्वम । द्रव्यसामान्यादीनामसमवायिकारणावृत्तिभावविभाजकोपाधिमत्त्वम । गुणसामान्यविशेषाणामाकाशसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । गुणसामान्ययोर्घटपटोभयसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । द्रव्यगुणसामान्यानामनेकसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । विशेषकर्मसमवायानामनेकसमवेतावृत्तिभावविभाजकोपाधिमत्त्वम् । द्रव्यसमवाययोरसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । द्रव्यादीनां पञ्चानां समवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । द्रव्यादीनां चतुर्णामनित्यसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । द्रव्यादीनां त्रयाणां कारणसमवेतवृत्तिभावविभाजकोपाधिमत्त्वम् । इत्यादिभाष्यभाषितघोषणाजातबुद्ध्यनुसारेण वाच्यम् ॥

भाष्याम्भोनिधिसेतौ वीरवरीये यशोहेतौ ।
रचितो द्वितीयभागो विदुषा श्रीपद्मनाभेन ॥ १ ॥

श्रीपद्मनाभविदुषा पितुरुपदिष्टात्समाहृत्य ।
विशदीकृतप्रयत्नात्कृतिषु विनोदाय गूढोऽर्थः ॥ २ ॥

( व्यो० ) इदानीमुपसंहारव्याजेन शिष्यं शिक्षयति । यदेतद्व्याख्यातं मया साधर्म्यं तदेव सर्वत्र विपर्ययाद्व्यावृत्तं भेदान्तराद्वैधर्म्यं वाच्यमिति । यदि वा साधर्म्यं व्याख्यातमित्युपसंहारः । विपर्ययाद्वैधर्म्यं वक्ष्यमाणमित्यनागतार्थसूचनमिति ॥

( भा० ) इहेदानीमेकैकशो वैधर्म्यमुच्यते ॥

पृथिवीत्वाभिसम्बन्धात् पृथिवी । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती । एते च गुणविनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः । चाक्षुषवचनात् सप्तसंख्यादयः । पतनोपदेशाद्गुरुत्वम् । अद्भिः सामान्यवचनात् द्रवत्वम् । उत्तरकर्मवचनात् संस्कारः ॥

( सू० ) इह पृथिव्यादिनवसु एकैकशः प्रत्येकं वैधर्म्यमितरव्यावर्तकम् ।

ननु पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्याद्यनुमाने भूताङ्ग एव यदि पृथिवीपदस्यार्थः तदा तदितरभेदकत्वं न गन्धवत्त्वादेः पटादौ व्यभिचारादत आह पृथिवीत्वाभिसम्बन्धादिति । पृथिवीत्वं नाम जातिभेदस्तस्याभिमतसम्बन्धसमवायात् पृथिवीपक्ष इति शेषः । न च तादृशजातौ मानाभावः । गन्धसमवायिकारणतावच्छेदकत्वेन तत्सिद्धेरन्यथा गन्धजनकतेजःसंयोगात् परमाणाविव तेजस्यपि गन्धप्रसङ्गाद्विलक्षणसंयोगत्वेनैव गन्धं प्रति तस्य हेतुत्वादिति भावः । रूपादिचतुर्णां पार्थिवत्वमत्र संमतिमाह एत इति । गुणनिवेशाधिकारे के कस्य गुणा इत्याशङ्कायां द्वितीयाध्याये रूपरसगंधस्पर्शवती पृथिवीति सूत्रात् रूपादयश्चत्वारो पृथिव्या विशेषगुणा इत्यर्थः । रूपिषु संख्यापरिमाणसंयो-

गविभागपरत्वापरत्वानि चाक्षुषाणि इति सूत्रेण रूपिमात्रे चाक्षुषसंख्यादिकथनात् संख्यादिसम्पर्कं पृथिव्यामित्यर्थः । पतनोपदेशादिति । गुरुत्वात्पतनम् इति सूत्रे गुरुत्वजन्यत्वेन पतनवत्त्वोपदेशात् क्षितौ गुरुत्वमित्यर्थः । अद्भिरिति । सर्पिरादीनां द्रवत्वमद्भिः सामान्यमिति सूत्रेण घृतजतुप्रभृतीनां द्रवत्वमद्भिः सामान्यं समानधर्म इत्युक्तमतः पृथिव्यां द्रवत्वमित्यर्थः । उत्तरेति । नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरमिति सूत्रे संस्कारजकर्मकथनाद्वेगाख्यः संस्कार इत्यर्थः ।

## अथोत्तरार्धः ।

( से० ) इहेति । इह भाष्यलक्षणग्रन्थे इदानीमवसरे जाते साधर्म्यनिरूपणे जाते वैधर्म्यनिरूपणप्रतिबन्धकायाः साधर्म्यजिज्ञासाया अपगमात् प्रतिबन्धकजिज्ञासापगमस्यावसरत्वात् । एकैकश इत्यत्र शस्प्रत्ययोपादानं सकलपृथिव्यादिप्राप्त्यर्थम् । वीप्साया हि तमादायाप्युपपत्तेरित्याचार्याः । नन्वन्यत्र वीप्साया अशेषलाभसामर्थ्योपलंभादत्रापि तथैव तथा लाभे किं शस्प्रत्ययेनापि, अन्यत्रापि तथा किञ्चित्क्रियेत इति चेन्न । प्रकृतवीप्सा द्रव्यमादाय न मूर्ताद्यादायेत्यस्या शस्प्रत्ययेन व्यर्थं सदिति न्यायेन बोधनात् । एवं च भाष्ये सम्बन्धिनोऽनुपादानाद्द्रव्यवत्पूर्वप्रक्रान्तस्य मूर्तादेरपि प्राप्तिः स्यात्तथाच मूर्तेष्वेकैकं वैधर्म्यमुच्यत इति प्राप्तौ सकलद्रव्यवैधर्म्यप्रतिज्ञा न प्राप्येत कृते तु शस्प्रत्यये नियुक्तनयेन प्राप्यत एवेत्यर्थवानेव प्रत्यय इति । वैधर्म्यं व्यावर्तको धर्मः । यद्यप्येकैकशो धर्म उच्यत इत्युक्तौव वैधर्म्यत्वं प्राप्यत एव एकैकधर्मस्य तत्रैव पर्याप्तिस्तथापि शाब्दीति न्यायात्तथोक्तिः ।

पृथिवीत्वाभिसंबन्धादिति । अभिसम्बन्धोऽभिमतः समवायलक्षणः, तेन संयुक्तसमवायादिना जलादावतिप्रसक्तिर्वारिता, पृथिवी इतरभिन्नतया ज्ञातव्येति शेषः । पृथिवीत्वं च द्रव्यत्वव्याप्यो जातिविशेषः । तत्सिद्धिस्तु—गन्धसमवायिकारणतावच्छेदकत्वेन । न च सुरभ्यसुरभिकपालारब्धेपि घटे गन्धोत्प-

स्यापत्तिः, प्रागभावविलम्बेन विलम्बात्, नित्यस्यैव स्वरूपयोग्यस्य फलोपधाननियमात्। अवयवगतसजातीयान्यकगन्धविलम्बाद्विलम्ब इत्येके। तन्न—इशा कामात्मके घटे नवसु कपालेषु सुरभिषु गन्धापत्तेः। अवयवगतविजातीयगन्धस्य प्रतिबन्धकत्वान्नोत्पद्यत इति तु सम्यक्। ननु यत्र द्वित्रा अवयवाः सजातीयगन्धवन्तः कश्चित्तु विजातीयगन्धवदारभ्यतया निर्गन्धः तत्रावयविनि का गतिः! अवयवगतस्य विजातीयगन्धस्य प्रतिबन्धकत्वात्, तत्र गन्ध उत्पद्यत एवेति निर्गन्धावयवावच्छेदेन गन्धोत्पादकाभावात्। अवयवगतसजातीयगन्धाविरोधिनो वा प्रतिबन्धकत्वम्। तादृशश्च गन्धाभावस्तत्रास्त्येव अशेषावयवसजातीयगन्धत्वेन जनकता तदभावान्नोदाहृतस्थलेऽपि गन्धोत्पत्तिरिति तु तत्त्वम्। एतेनवदुपदेशसापेक्षघृतादिसाधारणानुगतव्यवहाराद्वा पृथिवीत्वसिद्धिः। गन्धात्यन्ताभावानधिकरणत्वस्य प्रतियोग्यतीन्द्रियत्वप्रयुक्तातीन्द्रियत्वकात्यन्ताभावगर्भतयाऽतीन्द्रियतया पृथिवीतिप्रत्यक्षासाक्षिकत्वात्, गन्धात्यन्ताभावानधिकरणत्वस्य पृथिव्यामसम्भवेन सामान्याभावस्य वाच्यतायान्तत्रातीन्द्रियस्यापि गन्धस्य प्रतियोगिकुक्षौ प्रवेशात्। ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यनुमानमसङ्गतम् साध्याप्रसिध्या विशेषणज्ञानसन्देहासिषाधयिषान्यतरगर्भपक्षतासम्बन्धिज्ञानप्रतियोगिज्ञानान्यतरसापेक्षान्वयव्यतिरेकान्यतरव्याप्तिज्ञानानामभावादिति चेत्। अत्राहुः—न तावत्साध्यज्ञानत्वेनानुमितित्वेन कार्यकारणभावः प्रमाणाभावाद्येन साध्यज्ञानविशेष्यकायामप्यनुमितौ साध्यज्ञानं मृग्यतां किन्तु विशेषणज्ञानत्वेन विशिष्टबोधत्वेन कार्यकारणभावः, तथाच पृथिव्यामितरभेद इति साध्यविशेष्यकानुमितौ पक्षलक्षणविशेषणसत्त्वान्नानुपपत्तिः। नन्वनुमानस्यायमेव स्वभावो यत् पक्षविशेष्यिकामेवानुमितिमातनोति, कथमन्यथा प्रसिद्धानुमाने पर्वते वह्निरित्याकारां न करोतीति तत्कथं प्रकृतानुमानानुरोधेनातथाभूतस्वभावभानमिति चेत्। यद्विशेषणका लिङ्गपरामर्शस्तद्विशेषणकानुमितेरेव जायमानत्वात् इत्येके। तन्न—एवं हि वह्निव्याप्यधूमवानयमित्यत्र धूमविशेषणकानुमित्यापत्तेः। पर्वतो वह्निव्याप्यो धूम इत्यत्रानुमितौ धूमस्य विशेष्यतापत्तेश्च। यथा परामर्शे पक्षो भासते तथाऽनुमि-

तावपि । एवञ्च पक्षविशेषणकात्परामर्शात् पक्षविशेषणिकानुमिति-स्तद्विशेष्यकात्तद्विशेष्यका तथाच, प्रकृते पक्षविशेषणकलिङ्गपरामर्शात्तथैवानुमितिरुत्पद्यते। जायमानोऽपीह पक्षविशेष्यकः परामर्शो न पक्षविशेष्यिकामनुमितिं जनयति साध्यरूपविशेषणज्ञानविरहादि-त्यपरे। प्रसिद्धसाध्यस्थलीयलिङ्गपरामर्शस्यायं महिमा प्रत्यक्षवि-शेष्यकोऽभवानुमितिं जनयति तथाच तत्र पक्षविशेषणकादपि परा-मर्शात्पक्षविशेष्यिकानुमितिः इह तु तदभावात्पक्षविशेषणिकैवानु मितिरितीतरे । परामर्शस्यानुमितिजनकत्वं स्वभावः । न चात्र-साध्यविशेषणज्ञानाभावादिति तद्विशेष्यकैव जायत इत्यन्ये । घ-टघटत्वनिर्विकल्पानन्तरं घटत्वविशेषणकमेव सविकल्पकं जायते न घटविशेष्यकमित्यत्र न दृष्टं नियामकं विशेषणज्ञानविशेष्यज्ञा-नसामान्यसंसर्गाग्रहाणामुभयत्र तुल्यत्वान्निर्विकल्पस्योभयत्र तु-ल्यत्वात् । घटे संयोगस्येव घटत्वे संयुक्तसमवायस्य सत्त्वादसं-सर्गाग्रहस्य निरवग्रहत्वात् । अन्यथा घटोऽयमिति सविकल्पक-स्याप्यनापत्तेः । तथाच तत्रादृष्टमेव क्वाचित्कविशेषणतायां नियाम-कम । एवं च यत्रानुमितावप्युभयोर्विशेषणयोर्ज्ञानं तत्रैकस्य विशे-षणतायामदृष्टमेव नियामकमक्लृप्तत्वात्, न तु लिङ्गपरामर्शस्वभा-वकल्पनम्—अक्लृप्ततया गुरुत्वात् , इह तु साध्यरूपविशेषणस्या-ज्ञानाददृष्टमेव सामान्यासाध्यविशेष्यकाप्यनुमितिरिति तु वयं वदामः

पक्षतापि न संदिग्धसाध्यकत्वम् सिषाधयिषितसाध्यत्वं वा। संदेहसिषाधयिषे विनापि गर्जितेन मेघानुमानात्, किन्तु सिषाध-यिषाविरहविशिष्टसिद्ध्यभावः । यत्र सिषाधयिषाविरहसिध्यभावौ तत्र विशेष्याभावात् सिद्धेरसत्त्वात् यत्र सिषाधयिषासिध्य-भावौ तत्रोभयाभावात् सिषाधयिषाविरहरूपविशेषणस्य सिद्धि-रूपविशेष्यस्य च विरहात् । ननु प्रत्यक्षेण जानीयामिति सिषाध-यिषायामपि पक्षतापत्तिः । न चानुमित्सा–सिषाधयिषा, पुरुषान्त-रानुमित्सायामतिप्रसक्तेः । न च तत्पुरुषीयानुमित्सा, साध्यान्तर-धर्म्यन्तरसाधनान्तरासिषाधयिषायां तेजस्त्वेनानुमित्सायां वह्नित्वे-नानुमित्यापत्तेः, तुङ्गप्रदेशत्वेनानुमित्सायां पर्वतत्वेनानुमित्यापत्तेः, एवं साधनेऽप्यन्यसाधनतावच्छेदकपुरस्कारेणानुमित्सायामन्यसाध-नतावच्छेदकपुरस्कारेणानुमित्यापत्तेः । न च तद्रूपावच्छिन्नसाध्यो-

यतद्रूपावच्छिन्नाधिकरणीयतद्रूपावच्छिन्नसाधनीयतत्पुरुषीयसिषाधयिषाविरहाविशिष्टसिद्ध्यभावः पक्षतेति वाच्यम्। सायं वह्निमनुमिनुयामिति सिषाधयिषायां प्रातः सिद्धिदशायां पक्षतापत्तेः। न च तत्कालीनत्वमपि विशेषणम् देशान्तरगतोऽत्र वह्निमनुमिनुयामिति सिषाधयिषापाये तद्देशस्थितिदशायां पक्षतापत्तेः। न च तद्देशीयत्वमपि विशेषणम्, यत्र वह्निमानयं प्रदेश इति निश्चयानन्तरमत्र प्रदेशे वह्निमनुमिनुयामितिसाधनाद्यनुल्लेखिसिषाधयिषा तत्र पुरःस्फूर्तिकेन धूमाद्यन्यतमालिंगेन तर्करासिकस्यानुमोदयतस्तत्राव्याप्तेः॥

अत्र केचित्—प्रकृतानुमितीच्छैव पक्षता। न च यत्र सिद्ध्यभावादेवानुमितिः तत्राव्याप्तिः, भगवदिच्छायाः कार्यमात्रकारणत्वेन तत्र भगवदिच्छायाः सत्त्वात्। न च तस्या नित्यतया सिद्धसाधनस्थलेऽपि पक्षतापत्तिः, संजिहीर्षात्वसिसृक्षात्वानुमित्सात्वस्य भगवदिच्छायां तत्सामग्रीसमवधानरूपत्वात्। सिद्धसाधनस्थले च तदभावात्तदिच्छायाः संवाद्येकरूपत्वेन तत्सत्त्वेऽनुमित्यापत्तेरित्याहुः। तत्र सिद्धसाधनस्थले यद्विलम्बप्रयुक्तसामग्रीविलम्बप्रयुक्तभगवदनुमित्साविलम्बः तस्य कस्यचित्कारणस्यावश्यं वाच्यत्वात् व्याप्तिज्ञानादीनां सत्त्वात्। न च सिध्यभावस्तथा, सिद्धौ सत्यामपि सिषाधयिषयाऽनुमितेः। नापि सिषाधयिषा तथा, सिषाधयिषायामसत्यामपि सिद्ध्यभावेनानुमितेः, तस्मात् सिषाधयिषाविरहविशिष्टसिद्ध्यभावो वाच्यो, न च स वक्तुं शक्यः पूर्वोदिततदोषसन्दर्भात्, एकस्य द्वयं वैशिष्ट्यमित्यनयोः प्रकारयोरेकप्रकारेण सिद्धौ प्रकारान्तरेणानुमित्सायां सिद्धिप्रकारेणानुमित्यापत्तेश्च। न च तत्प्रकारीयेत्यनुमित्साविशेषणम्, यत्रायं देशो वह्निमानिति सिद्धिः अत्र प्रदेशे वह्निमनुमिनुयामितीच्छा च तत्रायं प्रदेशो वह्निमानित्यनुमित्यापत्तेः। न च तद्विशेषणीयेत्यपि विशेषणीयम्, एतावद्विषयभासमानायामपि सिषाधयिषायामनुमितिदर्शनात्, न हि कात्मद्यविषयिण्यां? तस्यां प्रागुपदर्शिताऽनुमितिर्न भवतीति चेत्।

अत्रोच्यते—प्रकृतानुमित्यविरोधिसिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षता। प्रत्यक्षेण जानीयामिति सिषाधयिषा च प्रत्यक्षविषयकतयाऽनुमितिविरोधिन्येव। एवं साध्यसाधनपक्षान्तरमादायाप्यानुमित्सासाध्यसाधनपक्षान्तरानुमितिविरोधिन्येतद्रूपान्तर-

मादाय सा तद्रूपान्तरानुमितिविरोधिन्येव । एवं देशान्तरकालान्तर मादायापि बोध्यम् । एकस्य द्वयं वैशिष्ट्यमित्यनयोः प्रकारयोरप्येकप्रकारसिषाधयिषा प्रकारान्तरानुमितिविरोधिनी । एवं विशेष्यविशेषणभावभेदेऽपि पुरुषान्तरानुमित्साऽपि पुरुषान्तरीयानुमित्यननुकूलतया पुरुषान्तरानुमितिविरोधिनी । एवं चैवं पर्यवसन्नम्—पर्वतो वह्निमानिति धूमजन्यानुमित्यनन्तरं प्रत्यक्षाद्यनन्तरं वा तस्यैव पुरुषस्य तद्देशस्थस्य तत्काले पर्वतत्वावच्छिन्नवह्नित्वावच्छिन्नधूमत्वावच्छिन्नपर्वतवह्निधूमपक्षसाधनिकानुमितिर्द्वेधा भवति । यदा तस्य पुरुषस्य एतद्देशस्थोऽहमेतत्काले धूमत्वेन रूपेण धूमेन पर्वतत्वेन रूपेण पर्वते वह्नित्वेन रूपेण वह्निमनुमिनुयामिति सिषाधयिषा भवति यदा वा देशान्तराद्यनुल्लेखिनी सा भवति देशान्तराद्युल्लेखेनैव सिषाधयिषायाः प्रकृतानुमितिविरोधित्वात् तथा च न कोपि दोष इति संक्षेपः । एवं च प्रकृतपक्षतायाः प्रकृते सत्त्वात्र साध्याप्रसिद्धौ पक्षत्वानुपपत्तिः । साध्यात्मलक्षणविशेषणाज्ञानकृता त्वनुपपत्तिः साध्यविशेष्यकानुमित्यैव परिहृता । व्याप्तिज्ञानानुपपत्तिरवशिष्यते, सापि न—अन्वयव्याप्तिज्ञानस्यानंगीकारात् । न च तथासति व्याप्तिविशिष्टपक्षधर्मताज्ञानविरहात्कथमनुमितिरिति वाच्यम् । अन्वयिन्येतस्य कारणत्वेपि व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगिमानयमिति ज्ञानस्य कारणत्वात् । न च व्यतिरेकिणि व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इति सिद्धान्तबाधः, एकदेशिसिद्धान्तबाधेप्यपसिद्धान्ताभावात् । ननु साध्याप्रसिद्धौ व्यतिरेकव्याप्तिरपि दुर्ग्रहा प्रतियोगिज्ञानं विना साध्याभावस्य ज्ञातुमशक्यत्वात् इति चेन्न । भावानवबोधात् । तथाहि अस्ति हि—प्रकृतसाध्यस्येतरभेदस्याभाव इतरभेदाभावत्वमस्ति चेतरत्वम तथा चेतरभेदाभावत्वेन तदुपस्थितावितरभेदज्ञानापेक्षायामपीतरत्वेन तदुपस्थितौ तदनपेक्षणात् । एवं चेतरत्वत्वोपस्थितेतरभेदाभावव्यापकतया हेत्वभावग्रहे तु नेतरत्वाभावस्येतरभेदस्य सिद्धिः व्यापकाभावेपि व्याप्याभावानियमात् । न चैवमितरत्वाभावत्वप्रकारिकानुमितिः स्यात् न त्वितरभेदत्वप्रकारिकेति वाच्यम् । अत्रेतरत्वाभाव इत्यनुमिताविष्टापत्तेः इतरभेदाभावाभावत्वेनैवानुमितेरौचित्यात् येन रूपेण व्याप्यताग्रहो

व्यापकाभावेन तद्रूपावच्छिन्नाभावस्यैव सिद्धेः। एतच्च प्रसिद्धानुमानेपि व्यतिरेकव्याप्तिग्रहे वन्ह्यभावाभावत्वेनैवानुमितिर्न तु वन्हित्वेन। नन्वितरत्वव्यापकताग्रहे हेत्वभावाभावेनेतरत्वात्यन्ताभावसिद्धेर्नेत्वितरभेद इति चेन्न। इतरभेदरूपस्यैवेतरत्वात्यन्ताभावस्य सिद्धेः। नन्वेवमयमितरत्वात्यन्ताभाववान् पृथिवीत्वात् यत्रेतरत्वं तत्र पृथिवीत्वाभाव इति व्याप्तिग्रहेपीतरभेद एव सिद्धो न त्वत्यन्ताभाव इति चेन्न। तात्पर्यालोचनात्, तथा हि—द्विविधो हीतरभेदाभावाभावस्येतरत्वस्याभावोऽत्यन्ताभावरूप एक इतरान्योन्याभावरूपश्चापरः। तत्रेतरत्वमितीतरत्वविशेष्यकव्याप्तिग्रहश्चेत्तत एवेतरत्वात्यन्ताभावः सिध्यति य इतरस्तत्र हेत्वभाव इतीतरविशेष्यकव्याप्तिग्रहे त्वितरान्योन्याभावरूप एवेतरत्वात्यन्ताभावः सिद्ध्यति सामग्रीभेदेन कार्यभेदस्यावश्यकत्वात्। नन्वभावस्य प्रतियोगिरूपतया इतरान्योन्याभावाभाव इतरं स्यान्न त्वितरत्वमिति चेन्न। संसर्गाभावाभावस्यैव प्रतियोगिरूपत्वात् अन्योन्याभावाभावस्य च कपालेऽवृत्त्यापत्तेः। अभावविरहात्मत्वं च न प्रतियोगित्वं किन्तु स्वरूपसम्बन्धविशेष एवेति तदनुरोधेनापि नान्योन्याभावः प्रतियोगी। ननु साध्याप्रसिद्धौ प्रतिज्ञाऽसंभवात्कथं परार्थानुमानं स्यादिति चेन्न। परार्थानुमानप्रकारस्योक्तत्वात्। एवं च साध्यविशेष्यकबोधानन्तरं विशेषणज्ञानस्य सुलभत्वात्साध्यविशेषणकानुमितिरपि न दुर्लभा। ननु नेतराभावान्योन्याभावसाध्योभयवादाविवेकतादवस्थ्यम्, नापि तदन्योन्याभावोऽप्यभावप्रतियोगिकान्योन्याभावात्। न च तस्मात्स्वरूपभेद इतराभावादन्योन्याभावः साध्य इति वाच्यम्। पृथ्वीतो नानाभावाद्भेदसाधनेऽसाधारण्यापत्तेः सपक्षाज्जलादेर्विपक्षाच्चाभावाद् व्यावृत्तेरिति चेन्न। तस्याप्यप्रसिद्धस्यैव साध्यतया तद्दशायां सपक्षाभावेनासाधारण्याभावात्, सपक्षसत्त्वे च भावत्वादिनैव भावाद्भेदस्य समूहालम्बनानुमित्या पृथगनुमित्या वाऽन्वयेन व्यतिरेकेण वा साध्यत्वात्। नन्वेवमितरभेदविशेष्यकानुमितौ श्रुतिविरोधः 'आत्मा वा अरे श्रोतव्य' इत्यादि श्रुत्यात्मविशेष्यकज्ञानस्य मोक्षहेतुत्वकथनात् इति चेन्न। अयं चानुमित्याकार आकाशाद्येकव्यक्तिसाधारणः पृथिव्यादौ तु घटाद्येकदेशेऽपि साध्यप्रसिद्धिः संभवति। न चाकाशादीनामती-

न्द्रियाणां कथं घटेऽन्योन्याभावग्रहः ? प्रतियोगियोग्यताविरहादिति वाच्यम् । अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यत्वस्यैव तन्त्रत्वात् । प्रतियोगियोग्यतायाः संसर्गाभावप्रत्यक्षप्रयोजकत्वात् योग्यानुपलब्धेरुभयत्र प्रयोजकत्वात् । अत एव वायौ रूपवदन्योन्याभावः घटे मनस्त्वात्यन्ताभावश्च प्रत्यक्षः, न हि वायुरधिकरणं मनस्त्वं प्रतियोगि वा तत्र प्रत्यक्षं योग्यानुपलब्धिस्तु संभवति वायोरुद्भूतरूपवत्त्वे महति तत्रोद्भूतरूपस्य प्रत्यक्षत्वौचित्यात् मनस्त्वस्य घटवृत्तित्वे च प्रत्यक्षत्वौचित्यात् । जातेर्योग्यव्यक्तिवृत्तित्वेनैव प्रत्यक्षत्वौचित्यात् । एवं च यत्र प्रतियोगितावच्छेदकसत्त्वेन तत्प्रत्यक्षत्वमापादयितुं शक्यते तत्रान्योन्याभावः प्रत्यक्षो, यत्र तु प्रतियोगिसत्त्वेन तत्प्रत्यक्षत्वं तत्रात्यन्ताभावादिः प्रत्यक्षः, अत एव योग्यस्यापि पृथिवीत्वस्य जलपरमाणावभावो नाध्यक्षः योग्यानुपलब्धेरभावात् । यत्र प्रतियोगिसत्त्वेनापादकीकृतेन तत्प्रत्यक्षताऽऽपादयितुं शक्यते तत्रैवानुपलब्धेर्योग्यतावत्त्वात् ।

वस्तुतस्तु यत्र प्रतियोगितादात्म्यसम्बन्धेनापादकीकृतस्य सत्तामापादयितुं शक्नोति तत्रान्योन्याभावः प्रत्यक्षो, यत्र तु सम्बन्धान्तरेण तथा कृतस्तत्र संसर्गाभावः प्रत्यक्षः । एवं चान्योन्याभावस्थले यदि पिशाचः स्तम्भाद्यभिन्नः स्यात्प्रत्यक्षः स्यादित्यापादनार्थः । एवं च यदभिन्नतयाऽऽपादकीकृतया यत्र प्रत्यक्षत्वमापादयितुं शक्यते तत्र तदन्योन्याभावः प्रत्यक्षः । शक्यते च यद्याकाशो घटाभिन्नः स्यात्प्रत्यक्षः स्यादित्यापादयितुम् । तथाचाकाशान्योन्याभावो घटे प्रत्यक्ष एव । एवं चेतरान्योन्याभावस्य प्रत्यक्षतः प्रसिद्धिरित्याचार्यभाषितं जगदार्यभाषितमेव । ननु घटस्य सपक्षत्वेन भवत्वन्वयित्वम्, तथा च कथम्पृथिवीत्वादेर्लक्षणत्वं केवलव्यतिरेकित्वाभावादिति चेन्न । अन्वयास्फूर्तिदशायां दशाविशेषे केवलव्यतिरेकित्वोपपत्तेः । नन्वितरभेदस्य घटे ग्रहदशायां पृथवीत्वस्य योग्यतया ग्रहे तु साध्यसामानाधिकरण्यग्रहेण कथं नान्वयव्याप्तिग्रह इति चेत् । हेतुसमानाधिकरणात्यन्ताभावादेर्व्याप्तिघटकस्याग्रहसम्भवात् । एवं च घटस्य सपक्षत्वेऽपि नांशतः सिद्धसाधनम् पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरसिद्धेः । घटत्वेन सपक्षत्वेऽपि पृथिवीत्वेन पक्षत्वं प्राचामपि मते न विरुद्धम् घटत्वेन निर्णये स-

न्देहसिषाधयिषयोस्तेन रूपेणाभावेपि पृथिवीत्वेन तयोः सम्भवात्। तस्मात् पृथिव्यामितरत्वाभाव इत्यनुमितिः साध्यप्रसिद्धावपि सम्भवतीति प्रथमपक्ष समर्थितम्। द्वितीयपक्षे तु पृथिवीविशेष्यकोऽपि बोधो भवतीति समर्थितम्।

यद्वा व्यवहारः साध्यः। तदनुमानप्रकारश्चेत्थम्–गन्धवती पृथिवीपदशक्तिविशेष्यत्ववती पृथिवीत्वात् यन्नैवं तन्नैवम् यथाऽबादिरिति। पृथिवीपदविशेष्यत्वं चाधुनिकपृथिवीपदस्य साधुत्वात्सामान्यतः सिद्धम्।

ननु पृथिवीपदसङ्केतविशेष्यत्वमाधुनिकपृथिवीपदसङ्केतविशेषेऽप्यस्ति न च तत्र पृथिवीत्वमित्यसाधारण्यम्। न चेश्वरसङ्केतविषयत्वं विवक्षितम्, 'द्वादशेऽहनि पिता नाम कुर्यात्' इतीश्वरसङ्केतमादायातिप्रसक्तेरिति चेन्न। विशिष्येश्वरसङ्केतस्य विवक्षितत्वात्। एवञ्च पृथिवी विशेषाकारप्रवृत्तभगवदीयपृथिवीपदसङ्केतविशेष्यत्ववती पृथिवीत्वादित्यादिरनुमानप्रकारः।

ननु पक्षतावच्छेदकहेत्वोरभेदे दार्शनिकानां विगानात् कथमविगानेन भवतस्तदुपनिबन्धनिर्वेश इति चेन्न। तद्विगानस्यात्राभावात्। पक्षतावच्छेदकसाध्यसामानाधिकरण्यग्रहस्यानुमानफलतया तस्य च पक्षतावच्छेदकाभिन्नहेतुसामानाधिकरण्यगर्भान्वयव्याप्तिग्राहकप्रमाणादेव सिद्धेः। अनुमानवैफल्यं हि तद्बीजम्। न चात्र तत्संभवति व्यतिरेकव्याप्तिग्रहे तत्सामानाधिकरण्यस्फुरणात्। साध्यसाधनविशेषकव्याप्तिग्रहेण च ससाध्यविशेषणकानुमितिप्रतिबन्धक? इति नान्वयव्याप्तिग्रहेऽपि कोपि दोषः। पृथिवीपदप्रयोगविषयत्वं पृथिवीपदवाच्यत्वं वा न साध्यम्–पृथिवीत्वेऽपि तयोः सत्त्वात् तत्र च हेत्वभावेनासाधारण्यात्। पृथिवीत्वव्यवहारः पृथिवीत्वनिमित्तकः पृथिवीत्वान्वयव्यतिरेकानुविधायित्वात् यो यदन्वयव्यतिरेकानुविधायी स तन्निमित्तको यथा घटः कपालनिमित्तक इति तु नानुमानम् पक्षदृष्टान्तसाधारणसाध्यसाधनयोरभावात्। दृष्टान्ते कपालान्वयव्यतिरेकानुविधायित्वस्य साधनस्य घटनिमित्तकत्वस्य साध्यस्य सत्त्वात्। पक्षे पृथिवीत्वान्वयव्यतिरेकानुविधायित्वसाधनस्य पृथिवीत्वनिमित्तकत्वस्य साध्यस्य सत्त्वात् निवर्तितत्वात्? यत्तु यत्तच्छब्दसाम्येनानुमानमिति। तन्न। शब्दसाम्येना-

नुमानाभावात्, अन्यथा वाग् वर्णिनी गोत्वाद्बहुलावदित्यपि स्यात्। महिषत्वं तत्त्वं वा न किञ्चिदेकमनुगतमस्ति येनार्थैक्यं स्यादिति संक्षेपः ॥

पूर्वोक्तांश्चतुर्दशगुणानाह रूपेति । रूपरसादिषु पृथिव्या गन्ध एवासाधारणो न तु रूपादिरतिव्याप्तेः । न च गन्धवत्त्वे सति रूपवत्त्वेनेतरभेदसाधने रूपवत्त्वस्याप्यसाधारण्यमिति वाच्यम् । गन्धवत्त्वस्यैवेतरभेदसाधकत्वेन रूपवत्त्वस्य वैयर्थ्यात् । एवं च पृथिवीत्वस्य व्यञ्जकमपि गन्धवत्त्वमेव रूपादीनां रूपत्वादिना रूपेण ज-लादावतिप्रसक्तत्वेनाव्यञ्जकत्वात् ।

ननूत्सूत्रलिखनं भाष्यत्वव्याकोप इति सूत्राण्युद्धरन् तान् दर्शयति एते चेति । गुणानां विनिवेशो द्रव्येषु समवायः स प्रतिपाद्यत्वेनाधिक्रियतेऽस्मिन्निति गुणविनिवेशाधिकारो द्वितीयाध्यायस्तस्मिन् 'रूपरसगन्धस्पर्शवती पृथिवी'ति २ अ० २ आ० १ सूत्रेण रूपादयः पृथिव्यां बोधिता इत्यर्थः ।

चाक्षुषेति । 'संख्यापरिमाणपृथक्त्वसंयोगविभागाः परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणी'ति ४अ० १ आ० ११ सूत्रेण संख्यादयः सप्त पृथिव्यामुक्ता इत्यर्थः। नन्वनुपपन्नमेतत् पृथिव्यां संख्यादयः सन्तीत्यस्यात्राप्रतीतेः, संख्यादिप्रत्यक्षत्वे रूपिद्रव्यसमवायस्य प्रयोजकताया एव प्रतीतेः, तथा च यत्र रूपिद्रव्यसमवायस्तत्र तेषां प्रत्यक्षं भवति न तु सर्वत्र रूपिद्रव्येषु तत् समवायः सिद्ध्यत्युक्तवाक्यार्थात्तथाऽलाभादिति चेन्न । रूपिद्रव्यसमवेताः संख्यादयश्चाक्षुषा इत्यत्र बाधकं विना सकलरूपिद्रव्यसमवायसिद्धेः । सामान्यशब्दस्य संकोचके सत्येव विशेषनिष्ठत्वात् अत्र च तदभावात् । वस्तुतस्तु घटादिषु संख्यादयः प्रत्यक्षेणोपलभ्यन्ते, न च रूपिद्रव्यसमवायं विना ते तथा—कारणं विना कार्यानुत्पत्तेः । न च रूपिद्रव्यान्तरं तत्रास्ति तथाच घटादिरूपिद्रव्यसमवाय एव कारणत्वेन तत्र सिद्ध्यति । अप्रतीतरूपिद्रव्यान्तरकल्पनातो विना बाधकं घटादौ संख्यादिप्रतीतेर्भ्रमत्वकल्पनात्तस्याश्च कल्पनाया पापफलत्वात् । एष चार्थः किरणावलीतात्पर्यपर्यालोचनयापि केषांचित्सुलभः ॥

पतनेति । 'संयोगवेगप्रयत्नाभावे गुरुत्वात्पतनम्' इति ५ अ० १

आ० ७ सूत्रे पतनकारणतया गुरुत्वमुक्तम् । तत्पृथिव्यां प्रत्यक्षसिद्ध-मिति तत्कारणतया गुरुत्वसिद्धिरित्यर्थः ।

अद्भिरिति । 'सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम्' इति २ अ० २ आ० ६ सूत्रेण घृतादौ द्रवत्वङ्कीर्तितेनैवोक्तमित्यर्थः ।

उत्तरेति । 'नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च' इति ५ अ० १ आ० १७ सूत्रेण उत्तरकर्मकारणतयोत्तरकर्मवत्यामिषुरूपायां पृथिव्यां संस्कार उक्त इत्यर्थः । एवं चान्यस्यामपि द्रष्टव्य इति भावः ।

अत्र सूत्रकृता रूपरसगन्धस्पर्शानां प्रत्यक्षसिद्धत्वान्न प्रमाणान्तरमादर्शितम् । किञ्च रूपस्पर्शयोरभावे घटादिषु चाक्षुषत्वत्वाचत्वे न स्याताम् उद्भूतरूपवत एव द्रव्यस्य बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वात् उद्भूतस्पर्शवत एव त्वाचत्वात्, अत एव विजातीयरूपवदारब्धेऽवयविनि चित्ररूपस्वीकारः नीरूपत्वेऽप्रत्यक्षत्वप्रसङ्गात् । न च रूपवत्समवेतत्वमेव प्रत्यक्षत्वे प्रयोजकम् । विजातीयरूपवदवयवावयवके तदभावात् गौरवाच्च । न च गुणविरोधेन कथमारभ्यते, अन्यथानुपपत्तेस्तथा स्वीकारात् । ननु नीलादिरूपं प्रति अवयवगतसजातीयरूपत्वेन जनकता चित्ररूपं प्रति तु केन रूपेणेति चेन्न । अवयवगतचित्ररूपेतरसजातीयरूपेतररूपत्वेन जनकत्वात् । यत्र नीलपीतादि विजातीयं यत्र वा चित्रं रूपं तत्र विशिष्टमस्ति विजातीयरूपस्थले विशेष्याभावात् चित्ररूपस्थले विशेषणाभावात् चित्ररूपेतरयत्सजातीयं रूपं तादितरत्वस्योभयत्र सत्त्वात् ।

इदञ्चावधेयम् । यथा नीलपीताभ्यां चित्रमारभ्यते तथा नीलनीलतराभ्यामपि, यथा नीलपीतारब्धेऽवयविनि न नीलपीतरूपसमवायः—व्याप्त्या सर्वावच्छेदेन नीलपीतयोरनुपलम्भात् । यद्यपि यज्जातीयं व्याप्यवृत्ति तज्जातीयं नाव्याप्यवृत्तीति न नियमो गुणजातीयस्य रूपस्य व्याप्यवृत्तित्वेऽपि, संयोगस्याव्याप्यवृत्तित्वात्, ज्ञानेच्छाप्रयत्नेष्वीश्वरे व्याप्यवृत्तिषु अस्मदादावव्याप्यवृत्तिषु व्यभिचाराच्च । वेगस्थितिस्थापकयोर्व्याप्यवृत्तित्वेन व्यभिचाराज्ज्ञानत्वादीनां च गुणत्वव्याप्यत्वात् । नाप्यात्मवृत्ति-

जात्या यज्जातीयं व्याप्यवृत्ति तज्जातीयं न व्याप्यवृत्तीति नियमः। नापि विजातीयरूपवदवयवारब्धेऽवयविन्यकमेव रूपं जायते तत्र नीलत्वादयो नानाजातीयाः सन्तीति वाच्यम्। तत्र जातीनां व्याप्यननुभवादव्याप्यवृत्तित्वस्य चाभावात्। नाप्यरूप एवावयवी तत्राप्रत्यक्षत्वप्रसंगादिति युक्त्या नीलपीतादिस्थले चित्रं रूपं समायाति तथा प्रकृतेऽप्यागामिष्यति शुक्लशुक्लतरयो रूपयोस्तज्जात्योर्वोत्कर्षापकर्षयोः समुच्चयस्य वक्तुमशक्यत्वात्, नीलरूपत्वस्य वा प्रत्यक्षत्वापादकत्वात्। एवं च शुक्लशुक्लतराभ्यां चित्रं रूपमारभ्यत इति प्राचीनाचार्यविचारितमपि चेतसि सचमत्कारमाधेयम्। न च तत्र शुक्लत्वस्यैव विद्यमानत्वान्न चित्रत्वमिति वाच्यम्। प्रसिद्धेऽपि रूपत्वस्य विद्यमानत्वादचित्रत्वापत्तेः। न च रूपत्वसत्त्वेऽपि नीलपीतादिवैजात्यम्। तथा प्रकृतेऽप्युत्कर्षापकर्षाभ्यां वैजात्यसंभवात्। अपरं चावधेयं स्पर्शोऽपि चित्रः। अन्यथा विजातीयस्पर्शवदवयवारब्धावयविनोऽस्पर्शवत्त्वापत्तेः। न च रूपे वैजात्यसत्त्वाद्भवतु चित्रारंभो न च पृथिव्यामनुष्णाशीतं विहाय स्पर्शान्तरमस्ति येन तथा स्यादिति वाच्यम्। मृदुकठिनयोर्विजातीययोः सत्त्वात्। न च मृदुत्वकठिनत्वेऽवयवसंयोगगत एव, चाक्षुषत्वापत्तेः। तस्मादस्ति चित्रः स्पर्शः। गन्धरसौ तु न चित्रौ तयोर्द्रव्यप्रत्यक्षत्वाप्रयोजकत्वेन गुणविरोधानुरोधपरिहारोपहारप्रापकत्वाभावात्। यत्र च हरीतक्यादौ नानारसप्रतीतिस्तत्रावयवेष्वेव तादृशरसवद्भक्षणगुणोऽपि वैद्यकोक्तावयवभक्षणादेव। तस्मान्न गन्धरसौ चित्रौ॥

अन्यच्चावधेयम्। पृथिवीपरमाणौ न चित्रं रूपं न वा चित्रः स्पर्शः। तथाहि—तत्र चित्ररूपादि स्वावयवप्रत्यक्षबलात्तदारब्धेऽवयविनि चित्ररूपादिदर्शनाद्वा पाकस्य कारणस्य विद्यमानत्वाद्वा? नाद्यः-परमाणुरूपादीनामप्रत्यक्षत्वात्। न द्वितीयः-परमाणौ विजातीयरूपवत्त्वेनैवावयविनि तदुपपत्तेः। भूयसीषु परम्परासु चित्ररूपाभावेऽप्यग्रे विजातीयरूपेण चित्ररूपदर्शनात्। न च पाकप्रक्षेपात् प्रागचित्रे घटे तदुत्तरञ्चित्ररूपोपलंभात्परमाणुषु चित्ररूपसिद्धिः, न हि तत्र पाकाद्व्यणुकादिषु चित्रं रूपं वैशेषिकैः पिठरपाकापठनात्। न च द्व्यणुदीनां विजातीयरूपवत्तयाऽग्रिमावयविनश्चित्रता सजातीयरूपवत्परमाण्वाद्यारब्धद्व्यणुकादौ विजातीयरूपाभा-

त्वादिति वाच्यम्। आपाकपातितेषु परमाणुषु परस्परविरुद्धरूपव-त्त्वेनैव द्व्यणुकादौ चित्ररूपोपपत्तेः, न ह्यापाकनिक्षिप्ताः सर्वे पच्यन्त इति नियमः, सजातीयरूपवत एव भवतीति भावः?। नापि तृतीयः-पाकस्य चित्ररूपकारणत्वे प्रमाणाभावात्। लाघवेन चित्ररूपवत्त्वे-नावयवगतचित्ररूपेतरसजातीयरूपेतररूपकारणत्वे प्रमाणाभावात्। कार्यकारणभावस्य स्वीकार्यत्वात्, अन्यथा परमाणुगतचित्ररूपेत-रत्वस्य विशेषणस्य कार्यतावच्छेदक उपादाने गौरवापत्तेः। परमा-णुगतचित्रचित्ररूपेतरत्वं न विशेषणं किन्तु परमाणुगतरूपेतरत्वस्य परमाणुगतेतरत्वमेवेति चेत्। तथापि ततो गौरवात्, अन्योन्या-श्रयाच्च। तथाहि-परमाणुगतचित्ररूपसिद्धौ तद्भिन्नत्वघटितकार्यताव-च्छेदकसिद्धिः तत्सिद्धौ च परमाणुगतचित्ररूपसिद्धिरिति। तस्मात्पर-माणुषु न चित्ररूपस्पर्शावित्यस्मासु सास्वरसैरपि युक्तियोगेन स्वीकर्तव्यम्॥ ननु चित्रो घटः स्वरूपसजातीयरूपवत्परमाण्वारब्धो घट वाच्छुक्लघटवदिति चेन्न। विजातीयरूपवत्कपालारब्धे घटे व्यभि-चारात्। अत एव चित्रघटारम्भकपरमाणुः स्वारब्धरूपसजातीयरू-पवान् रूपवत्परमाणुत्वात् श्वेतघटारम्भकपरमाणुवदिति निरस्तम्। विजातीयरूपवत्कपालारब्धघटपरमाणौ व्यभिचारात्। ननु पृथि-वीरूपस्य सर्वस्य पाकप्रयोज्यत्वनियमात् द्व्यणुकादिगतशुक्लादिरूपे-षु पाकजपरमाणुगतशुक्लादिरूपप्रयोज्येषु तथा दर्शनात् चित्ररूपेपि तथा मन्तव्यम्। न च परमाणौ पाकजचित्ररूपाभावे त-थोपपद्यत इति चेत्। अन्यथाऽप्युपपत्तेः। परमाणौ श्वेतादिरूपेणै-व पाकजेन प्रयोजकेन क्वचिदवयवे विजातीयेनावयविनि विचित्र-रूपोपपत्तेः। चित्रस्यापि पाकप्रयोज्यत्वात्। एवं च परमाणुगताभ्या-मेव विजातीयाभ्यां पाकजाभ्यां द्व्यणुके चित्रं रूपमिति तत्र पाक-प्रयोज्यत्वं स्फुटमेव। त्र्यणुकादौ तु द्व्यणुकादिगतचित्ररूपेण विजा-तीयरूपेण च पाकप्रयोज्येन चित्ररूपोत्पत्तिरिति सर्वस्यापि चित्ररू-पोत्पत्तिरिति सर्वस्यापि चित्ररूपस्य पाकप्रयोज्यत्वमक्षतम्। ननु रूपस्याव्याप्यवृत्तित्वमेव कल्प्यतां 'धर्मिकल्पनातो धर्मकल्पना ज्या-य'ेति न्यायात् न तर्हि विजातीयरूपत्वेनैवारम्भकत्वादनेकत्वस्य गुरु-त्वात्। न चैकस्यारम्भकत्वे जलपृथिवीपरमाणुभ्यामतिस्निग्धगन्ध-वदारम्भकत्वे जातिसांकर्यापत्तिः-विजातीयद्रव्यस्यानारम्भकत्वात्,

अन्यथा बहुभिर्जलैः पृथिवीभिश्च द्रव्यान्तरोत्पत्त्यापत्तेः, तस्मादव्याप्यवृत्तिभिरेव नीलपीतादिभिश्चित्रव्यवहारः । अत एव चित्रपटेऽस्मिन् भागे नीलं रूपमस्मिन् भागे पीतमिति व्यवहरन्ति व्यवहर्तारः । न च यज्जातीयं व्याप्यवृत्ति तज्जातीयं नाव्याप्यवृत्ति इति व्याप्तिर्बाधिका, अप्रयोजकत्वात् । ननु रूपवृत्तिरूपोत्पादे घटे रूपपरम्परोत्पादः स्यात् समवायिकारणासमवायिकारणादीनां सत्त्वाददृष्टविलम्बेन दृष्टसमवधाने विलम्बाभावात् । यच्चोक्तं रूपमेवापररूपोत्पादे प्रतिबन्धकम् एवं चैकरूपवति कथमपररूपोत्पाद इति चेत् । न युगपदनेकरूपोत्पादेनापररूपप्रतिबन्धकस्यैकरूपस्याभावात् । न चैको घट एकमेव रूपं जनयति । न च युगपदनेकरूपापत्तिरिति चेत् । न । एतेषां प्रत्येकमेव कार्यं जनयन्तीति नियमेन युगपदनेकसामग्रीभेदात् । न चैवं सुरभिसुरभिणाऽसुरभिर्न जन्यते (?)नाप्युभाभ्यामेको विजातीय इति गुणविरोधाभावेनावयवगताभ्यां गन्धाभ्यामप्यवयविन्यव्याप्यवृत्तिगन्धद्वयजननमस्तु तथा रसेपि । न हि स्वस्वसमानजातीयरूपेण रूपस्य रसेन रसस्य गन्धेन गन्धस्य जननं सम्भवति गुणविरोधात् । नीलपीतावयवस्थले यदि नीलस्यैवावयविगतरूपं प्रति जनकता स्वीक्रियते तदा विनिगमनाविरहात् पीतस्य किमिति न भवतीति वक्तुं शक्यते । यदि चोभाभ्यां नीलरूपारंभ एवोच्यते तदा पीतरूपारंभः किमिति न भवतीति वक्तुं शक्यते । उच्यते तु नीलेन नीलारंभः पीतेन पीतारंभः । न च विजातीययोर्गुणयोः सहकारित्वमयुक्तमानरुक्तेः, एवं हि रूपस्याव्याप्यवृत्तित्वं स्वीक्रियते एष न्यायो गन्धादावपि तुल्य इति । तत्राप्यव्याप्यवृत्तित्वं स्यादिति चेन्न । इष्टापत्तेः । ननु कारणयोः गुणयोर्विरोधो मास्तु विरुद्धयोः सहकारित्वानभ्युपगमात्, कार्ययोस्तु स्यात् नीलपीतयोर्भिन्नाश्रययोर्विरोधोपलंभेन । एकत्र समावेशानुपपत्तेः, अत एव चित्ररूपस्वीकार इति चेन्न । व्याप्यवृत्तित्ववादिना नीलपीतादेर्विरोधानङ्गीकारात् । तस्मान्न चित्रं रूपमिति चिन्तनीयमिति चेत् ।

अत्रोच्यते—अस्ति तावत्पृथिवीरूपजलतेजोरूपयोर्विरोधो जलतेजोरूपयोश्च घटपटरूपयोश्च, तत्र सति सम्भवेऽनुगतस्य त्यागायोगात् । परस्परात्यन्ताभावसमानाधिकरणरूपत्वं तदतिरिक्तभिन्नरू-

पत्वं वा तादृशाद्विदशायां व्यावर्त्याप्रसिद्ध्या विशेषणवैयर्थ्यात्। न च भिन्नाश्रयरूपत्वं तथा तदपेक्षया भिन्नरूपत्वस्य लघुत्वात्। अपि चैकस्य रूपस्य रूपारंभकत्वे समानजातीयरूपवदवयवेष्ववयविभिन्नरूपारंभः समानजातीयमव्याप्यवृत्ति नानारूपं स्यात् भेदाग्रहश्च परस्परात्यन्तमिलनात् भास्करकरनिकरेष्विव। तथाच परमाणुष्वेव व्याप्यवृत्ति रूपमन्यत्र सर्वत्राव्याप्यवृत्ति स्यात् परस्परसहकारितया तत्रैकमेव रूपम्, विजातीयस्थले तु गुणविरोधेन न परस्परसहकारितेति वाच्यम्। एकस्यापि समर्थत्वे परस्परसहकारित्वे मानाभावात्। न च प्रत्येकं समर्थयोर्द्वयोरिव मेलने सहकारित्वमनुपपन्नमिति वाच्यम्। दण्डयोर्हि सहकारित्वं नैकस्य भ्रमजनकत्वेऽपरस्य वोदासीनत्वम् उदासीनकारणत्वे प्रमाणाभावात्। एवं च क्रमिकचक्रसंयोगितया क्रमिकभ्रमिजनकतया वा परस्परं संयुज्य चक्रसंयोगितयैकभ्रमिजनकतया वा स्थलभेदेन युगपच्चक्रसंयोगितया भ्रमिजनकतया वा दण्डयोः परस्परसहकारित्वमायातु प्रत्यक्षप्रमाणसिद्धत्वात्। न च रूपयोः प्रत्येकं समर्थयोः परत्राव्याप्यवृत्तिरूपजनकयोः स्वावयवे सजातीयरूपस्थले व्याप्यवृत्तिरूपजनने परस्परसहकारित्वे प्रमाणमस्ति। न चैकं रूपमित्यनुभवान्नाव्याप्यवृत्ति नानारूपमनुभवानुभावस्य चित्ररूपेऽपि सत्त्वात्। किञ्चावयवगतरूपत्वेनावयविगतरूपत्वेन च जन्यजनकभावेऽवयविरूपेऽवयवरूपस्यानेकस्य परस्परसहकारित्वं सिध्यति विजातीयरूपवदवयवजन्ये रूपे द्वितीयरूपस्यापि स्वरूपयोग्यत्वात्। न चावयविरूपत्वस्य कार्यतावच्छेदकस्य सत्त्वात्तत्रावयवरूपत्वस्य कारणतावच्छेदकस्य सत्त्वादेवं च तदेव रूपं जननीयम्। यत्रोभयोः कारणत्वं तत्र न शुक्लेऽन्यावच्छेदेन विद्यमानस्य नीलरूपस्य कारणत्वं संभवति। नापि नीले शुक्लस्य तथा चोभयावच्छेदेन विद्यमानं चित्रमेव रूपं स्वीकर्तव्यम्। न चावयविगतसजातीयरूपत्वेन जन्यताऽवयविनि विजातीयरूपासिद्धिदशायां तद्घारकस्य सजातीयत्वविशेषणस्य वैयर्थ्यात्। न चैवम्-अवयविनो नीरूपत्वमेव, प्रागेव खण्डितत्वात्। गन्धरसौ तु चित्रौ नाङ्गीक्रियेते प्रयोजनाभावात्। एष च मार्गो निसर्गतो दुर्गम इति न पुरातनैरभ्यासित इत्यर्वाचीनैरपि सावधानैश्चेतःसंचार इहाचरणीय इति संक्षेपः॥

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वेऽपि प्रत्यक्षमेव प्रमाणम्-एको महान् घटः पटात् पृथक् पटेन संयुक्तः पटान्तरेण विभक्तोऽस्मात्परोऽस्मादपर इति प्रत्यक्षसत्त्वात् ।

इदं चावधेयम् । संख्यापरिमाणपृथक्त्वानि सर्वत्र पृथिव्या-मक्षणिकत्वात् द्वितीयक्षणे नाशाभावेन सामग्रीसत्त्वेन परिमाणैकत्वै-कपृथक्त्वानामुत्पत्तेः । संयोगोपि तथा तृतीयक्षणे नष्टे कर्मज-संयोगो द्वित्वाद्यास्संख्या द्विपृथक्त्वानि विभागः परत्वापरत्वे च नोत्पद्येते न ह्येषां द्वितीयक्षणे उत्पत्तिः द्वितीयक्षणे द्वित्वादि-कारणस्यैकत्वस्य द्विपृथक्त्वादिकारणस्यैकपृथक्त्वस्य विभागपर-त्वापरत्वकारणस्य संयोगस्यैवोत्पत्तेः । कर्मजसंयोगकारणस्य कर्मण एवानुत्पद्यत(?) । नापि तृतीयक्षणे तत्र समवायिकारणस्यैव नाशात् । विनश्यदवस्थस्यापि समवायिकारणत्वे कार्यस्य क्षणिकतापत्तेः कार्योत्पत्तिकाले समवायिकारणनाशरूपायाः कार्यनाशसामग्र्या सामग्र्यात् । एकत्वैकपृथक्त्वयोर्द्वित्वद्विपृथक्त्वादावसमवायिका-रणत्वात् । विभागस्य संयोगपूर्वकत्वात् हिमवद्विन्ध्ययोर्विभागाभा-वात् संयोगस्य विभागकारणत्वात् । परत्वापरत्वे प्रति दिक्काल-पिण्डसंयोगोऽसमवायिकारणम् । एवं चैतानि कारणानि द्वितीयक्षणे जायन्ते तथाच कथं द्वित्वादीनां द्वितीयक्षण उत्पत्तिः । संयोगवद्वि-भागजो विभागो द्वितीयक्षणे किमिति नोत्पद्यते केनचिदवयवे-नाकाशविभागस्य पूर्वं सत्त्वात् कारणाकरणविभागसत्त्वात् इति चेन्न । संयोगरूपपत्तिनिमित्तकारणाभावेनैव(?) विभागात् अङ्गुलितरु-विभागादिजन्ये हस्ततरुविभागे संयोगपूर्वकत्वादर्शनात् । कर्म तु द्वितीयक्षणे नोत्पद्यते नोदनाभिघातादीनां कर्मकारणानां प्रथमे क्षणेऽभावात् । वेगवत्कपालारब्धेऽपि घटे द्वितीये क्षणे वेग एव जायते न तु वेगजन्यं कर्म तस्य तदुत्तरकालीनत्वात् । नन्वन्य-तरकर्मजन्मा संयोगो द्वितीये क्षणे घटादौ किमिति न भवति, वाय्वादीनामेवोत्तरदेशत्वासम्भवात् इति चेत् । स्वकर्मजन्मा सं-योगो न भवतीत्यभिधानात् । चतुर्थक्षणनष्टे तु घटादौ किमुत्पद्यत इति चिन्त्यते । तत्र तृतीये क्षणे द्वित्वादिद्विपृथक्त्वाद्युत्पत्तिः सम्भ-वति एकत्वादेरसमवायिकारणस्य द्वितीये क्षणे जातत्वात् । ननु कथमपेक्षाबुद्धिनिरपेक्षा भवतु द्वित्वाद्युत्पत्तिर्न चास्मदादेः तत्र प्र-

त्यक्षं सम्भवति द्वितीयक्षणे कारणीभूतस्य रूपस्योत्पत्त्या तत्समये कार्यस्योत्पत्तुमनर्हत्वादिति चेन्न । अशेषविशेषविषयकशेमुषीशालिनो भगवतो भवनीपतेरेवानादेरपेक्षाबुद्धेस्तत्र कारणत्वात् । द्व्यणुकपरिमाणारम्भकपरमाणुद्वित्वानुरोधेन तत्कारणत्वस्यावारणीयत्वात् । ननु जगत्साक्षिणस्तस्यापेक्षाबुद्ध्या यदि द्वित्वं जायते तदाऽस्मदादिभिः कथं नाध्यक्षीक्रियते इति चेन्न । अस्मदपेक्षाबुद्ध्या जातं भवद्भिः कथं नाध्यक्षीक्रियते इति पर्यनुयोगसाम्यात् । यदपेक्षाबुद्ध्या यद्द्वित्वादिकमुत्पद्यते तत्तस्यैव प्रत्यक्षमित्यस्यापि साम्यात् । नाशस्तु तस्यादृष्टविशेषविशिष्टभगवदपेक्षाबुद्धेरत्यन्ताभावात् । स च विशेषणस्यादृष्टस्य नाशादित्येके । तत्र कारणनाशस्यैव नाशकत्वेन तदत्यन्ताभावस्य नाशकत्वेन क्वचिदप्यकल्पनात् । अदृष्टेशापेक्षाबुद्ध्योः स्वतन्त्रकारणत्वेन विशिष्टत्वेनाकारणत्वाच्च । तथाचादृष्टनाशादेव नाशः । न चापसिद्धान्तः, पितृचरणैरनेकधोपदिष्टत्वात् । अत एव तृतीयाध्यायतत्त्वबोधे वर्धमानोपाध्यायैश्चरमबुद्धिनाशकत्वमदृष्टनाशस्योक्तम् । न चापेक्षाबुद्धिनाशस्य नाशकत्वे द्वित्वोत्पत्तेः प्राक्कारणीभूता समूहालम्बनरूपोपेक्षाबुद्धिः । प्रत्येकविषयकबुद्धेः कारणत्वे द्वित्वोत्पत्तिसमये प्रथमबुद्धेर्नाशे द्वित्वस्य क्षणिकत्वापत्तिः सित्वास्थ (?) तृतीयादिबुध्युत्पत्तिदशायां प्रथमादिबुद्धिनाशे द्वित्वाद्यनुत्पत्त्यापातश्च । यदि द्वित्वोत्पत्त्यनन्तरं संस्कारेणापेक्षाबुद्धिनाशः तृतीयक्षणे तन्नाशेन द्वित्वनाशस्तदा बुद्धित्वस्य क्षणद्वयावस्थितत्वमायाति । अदृष्टनाशस्य तु नाशकत्वे कदाऽदृष्टनाशः कदा च द्वित्वनाश इति दुर्ज्ञेयमिति चेन्न । कार्येण द्वित्वेनादृष्टनाशे तेन द्वित्वनाशात् । ननु परिमाणस्थले द्व्यणुकपरिमाणानुरोधेन परमाणुद्वित्वस्यावश्यकत्वेन भवतु भागवती सा द्वित्वभाविका घटादौ किमर्थं तदपेक्षाबुध्या द्वित्वमिति चेन्न । प्रयोजनमनुसन्धाय सामग्र्या कार्या(न)र्जनात् । ननु भागवत्या द्वित्वत्रित्वाद्यारम्भकापेक्षाबुद्धेः सत्त्वाद्घटे परार्धपर्यन्तं सर्वाः संख्याः स्युरिति चेत् । इष्टापत्तेः । नन्वेवं द्वित्वत्रित्वादेर्युगपदुत्पादे कपिञ्जलाधिकरणविरोधः । तत्र हि बहुत्वेनैकद्वित्वयोरपहरितत्वे चरमबहुत्वस्य ग्रहणाशक्यतया व्युदस्तत्वे क्वचित्तस्य क्वचिदन्यस्य ग्रहणस्याननुगमापत्त्या निरस्तत्वे कस्यचिद्बहुत्वसंख्याया ग्राह्यत्वे प्राथमिकत्वेन त्रित्वमेव गृह्यत

इत्यापत्तिः तत्र त्रित्वादीनां युगपदुत्पादे युगपज्ज्ञाने च कथं तत् क्वाचित्कम्। तदादाय तदिति चेत्, क्वचिच्चतुष्ट्वादीनामपि पूर्व-मुत्पादाज्ञानाच्च। न च सकलसंख्याव्याप्यत्वेन त्रित्वग्रहणमिति तदर्थो, व्याप्यस्य व्यापकं विहाय ग्रहणे प्रमाणाभावात् इति चेन्न। त्रित्वग्रहणकपिञ्जलन्यायालाघवेन त्रित्वग्रहणमित्यत्र कपिञ्जलाधि-करणत्रित्वादिकं युगपन्नोत्पद्यत इति तु नोपादेयम्। भिन्नयोरपेक्षा-बुध्या युगपदुत्पादवदेकापेक्षाबुध्यापि तत्सम्भवात्। योगिनां केषां-चिदावश्यकत्वात्तदपेक्षाबुद्धिरेव परमाण्वादिद्वित्वजनिका तथाच तन्नाशादेव नाशो नादृष्टनाशादित्येके। तन्न। सर्गादौ योगिनामभावे परमाणौ द्वित्वानापत्त्या द्व्यणुके परिमाणानापत्तेः। तत्रेश्वरापे-क्षाबुद्धेरेव कारणत्वात् नाशकस्य चादृष्टनाशस्यैव वक्तव्यत्वात्, परमाणौ द्वित्वनाशो समवायिकारणनाशात् परमाणोर्नित्यत्वात्। नाप्यसमवायिकारणनाशात् तदेकत्वस्यापि नित्यत्वात् एकत्वना-शेन द्वित्वनाशस्य क्वचिदप्यलिखनात्। न चेश्वरापेक्षाबुद्धिना-शान्नाशः तस्या नित्यत्वात् तस्माददृष्टनाशादेव नाशो वक्तव्यः। एवं च सर्वत्र कारणतयाऽदृष्टस्यावश्यकत्वे तस्य च फलनिवर्त्य-तया तन्नाशस्यावश्यकत्वे सर्वत्रादृष्टनाशादेव द्वित्वादिनाश इति तु वयमावेदयामः।

परत्वापरत्वे च चतुर्थक्षणे नष्ट उत्पद्येते–बहुतरतपनपरिस्पन्दा-न्तरितजन्मत्वादिज्ञानस्य भगवत एव भावात्। ननु क्षणपरिहत एकेनापि तपनपरिस्पन्देनान्तरितत्वासम्भवात् परिस्पन्दस्य क्षण-चतुष्टयावस्थायित्वात्कथं बहुतरतपनपरिस्पन्दान्तरितत्वम्, त-दभावे च तद्बुध्यभावे कथं परत्वोत्पत्तिरिति चेन्न। अल्पक्षणान्त-रितजन्मापेक्षया भूयःक्षणान्तरितजन्मनि परत्वोत्पत्तेरविरोधात् तपनपरिस्पन्दपदेन कालोपाधेरेव ग्रहणात्। एवञ्च द्वितीयक्षणका-लपिण्डकालमण्डलसंयोगयोरसमवायिकारणनिमित्तकारणयोः सत्त्वे बुद्धेश्च भगवतः सत्त्वे चतुर्थक्षणनष्टे तृतीयक्षणे कथं न परत्वो-त्पत्तिः। एवमपरत्वोत्पत्तिरप्यप्रत्यूहाऽनुसन्धेया। दैशिकतदुभ-योत्पत्तिरपीत्थमेव। कारणाकारणसंयोगेन कार्याकार्यसंयोगोत्पत्त्या कश्चिद्देशसंयोगमादाय संयुक्तसंयोगाल्पीयस्त्वादिसम्भवात् तद्देश-स्याप्यकारणत्वादकार्यत्वाच्च कारणाकारणपदेन समवायिकारण-

तद्भिन्नयोर्ग्रहणात्, अन्यथा कालादिना जगत्कारणेन निष्क्रियविनष्टेन घटेन संयोगानुत्पत्त्या तस्याविभुत्वं स्यात् । एवं च यत्र देशे घटादि द्वितीयक्षणेऽस्ति तस्योत्पत्त्याऽऽधारतया निमित्तकारणत्वेपि संयोगो न विरुध्यते । एवं च भगवत्प्रभृतेर्द्वितीयक्षणे संयुक्तसंयोगाल्पीयस्त्वादिज्ञानसम्भवेन तृतीयक्षणे दैशिकतदुत्पत्तिर्न विरुद्धा । स्वकर्मजन्यस्तु संयोगश्चतुर्थक्षणनष्टे न भवति तृतीयक्षणे द्वितीयक्षणोत्पन्नकारणवेगजन्यवेगेन कर्मसम्भवेपि कर्मोत्पत्त्यवधिकचतुर्थक्षणे संयोगोत्पत्तिक्षणे समवायिकारणस्याभावात् । विभागस्तूत्पद्यते न वेति ? तत्र नोत्पद्यत एवेति श्रेयः—तृतीयक्षणे पूर्वसंयोगनाशकविभागोत्पादककर्मसम्भवेपि विभागानुत्पत्तेः । एवं च रूपादिष्वेकादशसु पृथिव्यां केचन सार्वत्रिकाः केचन न तथेति साधितम् ।

केचित्तु कार्योत्तरसत्त्वे समवायिकारणतया तृतीयक्षणे घटनाश एव न भवति तस्य रूपाद्युत्तरकालत्वादित्याहुः । तन्न । कार्योत्तरसत्त्वेन कारणत्वेन कारणत्वे प्रमाणाभावात् समवायिकारणासमवायिकारणप्रतिबन्धकाभावानामविनश्यदवस्थत्वेन परं कारणत्वात् । गुरुत्वं तु पतनासमवायिकारणत्वेन सिद्धेत्तत्तु सार्वत्रिकमेव । कारणगुरुत्वेन द्वितीयक्षणे कार्ये गुरुत्वोत्पत्तेः । द्रवत्वस्य तु नैमित्तिकस्य क्वाचित्कत्वं व्यक्तमेव । न च तत्तैले जलीयमेव द्रवत्वम् तेजःसंयोगान्वयव्यतिरेकानुविधायित्वात् । संस्कारस्तु स्थितिस्थापकः सार्वत्रिक एव कारणीयेन कार्ये जननात् । वेगस्तु प्रत्यक्षसिद्धोऽपि कर्मणा प्रत्यक्षान्यथासिद्धिवारणाय कर्मणः कर्माजनकतयोत्तरकर्मकारणतया साधितः । तस्याप्यसार्वत्रिकत्वमेव सर्वत्र कारणे वेगासंभवेन द्वितीयक्षणे सार्वत्रिककार्यवेगाभावात् । भाष्यकृता स्थितिस्थापकः किमिति नोपात्त इति चेत् । न आर्याणां पर्यनुयोगस्यानुचितत्वात् । एष च गुणनिर्णयो गुणकिरणावल्यादावप्यसुलभ इतीहैवानुसन्धेय इति ॥

( व्यो० ) पृथिव्यादीनां नवानां पुनः पञ्चानामित्यादिरूपेण साधर्म्यमभिधाय प्रत्येकं तेषा वैधर्म्यमाह इहेत्यादिना ।

क्षित्यादिमनःपर्यन्तेषु प्रकरणेषु इदानीं साम्प्रतमेकैकशो वैधर्म्य मुच्यत इति । नन्वेकश इति वीप्सायां शप्रत्ययस्य विधाना-

इत्थं वीप्साभिधानम् ।

एकैकशो विनिघ्नन्ति विषया विषसन्निभाः ।

इति व्यासप्रयोगाददोष इत्येके । प्रत्येकं क्षित्यादेर्वीप्सायां वैधर्म्यलाभे पुनर्वीप्साकरणमवान्तरभेदेन शरीरादीनां वैधर्म्यज्ञापनार्थमिति गुरवो वदन्ति । वैधर्म्यं तु-विशिष्ट इतरस्मात् व्यावृत्तो धर्मो यस्यासौ विधर्मा तस्य भावो वैधर्म्यमसाधारणस्तत्त्वव्यवस्थापको धर्मः केवलव्यतिरेक्यनुमानमिति यावत् ।

तत्रादावुद्दिष्टत्वात्पृथिव्यास्तदुच्यते पृथिवीत्वाभिसम्बन्धादिति ॥ पृथिवीति लक्ष्यनिर्देशः पृथिवीत्वाभिसम्बन्धादिति लक्षणमसाधारणो धर्मः । पृथिवीत्वेनाभिसम्बन्धः पृथिवीत्वेनोपलक्षितः समवाय इति । पृथिवी धर्मिणी इतरेभ्यो भिद्यत इति साध्यो धर्मः पृथिवीत्वाभिसम्बन्धात् । यस्त्वितरस्मान्न भिद्यते न चासौ पृथिवीत्वेन सम्बद्धो यथोदकादि । न च तथा पृथिवीत्वेन नाभिसम्बन्धः पृथिव्यां तस्मादितरेभ्यो भिद्यत इति । समवायो ह्यतिव्यापकत्वादलक्षणः स्यादिति पृथिवीत्वं विशेषणम् । नन्वेवं पृथिवीत्वमसाधारणत्वाद्व्यवच्छेदसमर्थमिति समर्थविशेषणता हेतोर्दोषः । न पक्षेऽसम्भवित्वाशङ्कापरिहारार्थत्वात् । तथाहि— पृथिवीत्वात् पृथिवीत्युक्ते पक्षेऽस्ति नास्तीत्याशङ्का न निवर्तेतातत्समर्थमभिसम्बन्धपदम् । ननु च भावप्रत्ययादेव सम्बन्धाधिगतेः षष्ठ्या वा पृथिव्या भावः पृथिवीत्वमिति स्वशब्देन तस्याभिधानं व्यर्थम् । तन्न । भावप्रत्ययोऽभिशब्दवृत्त्या भावमभिधत्ते नाभिसम्बन्धम् । न च गम्यां वृत्तिमाश्रित्य सम्बन्धपदस्य वैयर्थ्यम् । शास्त्रे तथाभावेऽतिप्रसङ्गात् । षष्ठी चानियतसम्बन्धा । षष्ठ्या वा पृथिव्या भावः पृथिवीत्वमिति । स्वशब्देन तस्याभिधानं व्यर्थम् । तन्न । अभिधायकेति विशिष्टसम्बन्धलाभायाभिसम्बन्धपदम् । ननु चैवमुपाधिभेदादवास्तवो भेदः स न वा यस्येत्यवारकं लक्षणं कथमितरेभ्यो भेदज्ञापकमिति स्यात् । न कल्पितभेदस्याप्यर्थक्रियाकरणात् । यथा श्रोत्रस्य । तथाहि-श्रोत्रं कर्णशष्कुल्याकाशसंयोगोपलक्षितो नभोदेशः, स चावास्तवभेदोऽपि शब्दोपलब्धिलक्षणामर्थक्रियां विदधाति । तद्वत्समवायेऽप्यदोषः । समवेतं वा पृथिवीत्वं लक्षणम् । पृथिवीत्वं च तदभिसम्बध्यत

इत्यभिसम्बन्धश्चेति कर्मधारयपरिग्रहात्। ननूभयपदव्यभिचारा-भावाद्विशेषणसमासः कथम्। तथाहि-सति सम्बध्यत इत्याभिसम्ब-न्धः समवेतं रूपादि दृष्टमित्यर्थवत् पृथिवीत्वम्। पृथिवीत्वं चेत्यु-क्ते नासमवेतं पृथिवीत्वं सम्भवतीति व्यभिचाराभावः। अथापृ-थिवीव्यावृत्तिरूपं पृथिवीत्वमसमवेतं तन्निरासायार्थवदभिसम्ब-न्धपदम्। न। तस्यासिद्धत्वात्। प्रमाणेन हि प्रसिद्धस्य विशेषणेन व्युदासो दृष्टः। यथा नीलेनानीलादेर्नैवापोहः सिद्धो वृत्तिविकल्पा-नुपपत्तेः। बाधकस्याप्रमाणतया वास्तवसामान्यसद्भावादेकपदाव्य-भिचारेपि कर्मधारयसमासाभ्युपगमाददोष इति। केचित्। अभि-ग्रहणमभिसमन्तात्सम्बन्ध इति पक्षे व्याप्त्यर्थमाभिमुख्येन च सम्ब-न्ध इति केवलव्यतिरेकाव्यभिचारेण गमकत्वप्रदर्शनार्थम्।

ननु किमितरस्माद्व्यावृत्ता प्रमाणसिद्धा पृथिवी पक्षीक्रियते अथा-प्रसिद्धेति। यद्यप्रसिद्धा पक्षीकरणमयुक्तम्। अथ प्रमाणप्रसिद्धा व्यावृत्ततया तर्हि लक्षणवैयर्थ्यम्। अथाव्यावृत्ततयोपलब्धा तदसद् व्यावृत्तं हि पदार्थानां स्वरूपं तेन च वपुषा गृह्यमाणा धर्मिणो न रूपान्तरेणेति दृष्टम्। नैतदेवम्। लोकप्रसिद्धवशेन पृथिव्या पक्षीकरणात्। तथाहि—यत्र जनानां पृथिवीतिव्यवहारः सा पक्षीकृतेत्यबाधः। नन्वितरेतराश्रयत्वम्। पृथिवीतरेभ्यो भिद्यत इत्येतद्रूपेभ्यो भेदः साध्यस्तेषां तु पृथिवीतो भेदेन प्रतिपन्नानाम-वधिभावो घटत इत्येकाप्रतिपत्तौ इतराप्रतिपत्तेरुभयाभावप्रसङ्गः। तन्न। असाधारणधर्मोपलम्भसहकारिणेन्द्रियेण व्यावृत्तरूपतया नि-र्विकल्पकज्ञाने पृथिवी प्रतिभासते। तथाऽबाद्योप्यसाधारणधर्मो-पलम्भाव्यावृत्या नः परस्परं चक्षुर्व्यापारादेव प्रथन्ते। स्वयं प्रति-पन्नेपि भेदे परप्रतिपादनायानुमानोपन्यासः। तथाहि-विप्रतिपद्यमा-नः परः परार्थानुमानेनैव प्रतिपाद्यत इति। अथेतरेभ्यो भेदे साध्ये-ऽबाद्योपीतरेभ्यो भिद्यन्त इति विद्यमाने सपक्षे कथं केवलव्यतिरेका-व्यभिचारः। न। साध्यापरिज्ञानात्। तथाहि-पृथिवीतरेभ्यो भिद्यत इति पृथिवीतरेभ्यो निरवशेषेभ्यो भिद्यत इति साध्यार्थः। तथाच सपक्षाभावः न ह्युदकादयः स्वात्मभ्यो भेदिन इति। अथ पृथिवीत्वं यद्यसाधारणधर्माद्भिद्यते ततोऽप्यन्यस्माद्भिद्यत इत्यनवस्था। अभे-दे तु साध्यसाधनभावानुपपत्तिः। अतो स्वतो भिद्यते क्षितेरपि

तथाभावेन बाधात् । अथ पृथिवीत्वं पृथिव्याः विशेष्यते पृथिवी च पृथिवीत्वेनेति इतरेतराश्रयत्वम् । नैतदेवम् । पृथिव्यामनुवर्तमानवपुषो भेदान्तराद्व्यावृत्तस्येन्द्रियव्यापारान्निर्विकल्पकज्ञाने प्रतिभासनात् । तथाहि-अनुगतस्वभावस्यापीतरस्मात् व्यावृत्तं स्वरूपं सामान्यस्य । तच्च प्रत्यक्षेण स्वयं प्रतीतमपि परप्रतिपादनाय हेतुत्वेनाभिधीयत इत्यनवस्थाद्यभावः । न च सर्वथा विप्रतिपद्यमानः प्रतिपाद्यः स्यादिति धर्मिज्ञानं सामान्येन साधनज्ञानं चाभ्युपेयम् । केवलमितरेभ्यो भिन्ना पृथिवी न प्रतिपद्यत इति साधनोपन्यासः । तथैकं वाक्यमावर्त्यमानं भूयांसमर्थमाहेति शब्दार्थनिरूपणपरत्वेनाभिसम्बध्यते-पृथिवीत्वाभिसम्बन्धादिति वाक्यम् । तथाच सामान्यं शब्दार्थः । तस्यैकतया संकेतकारणादिति जैमिनीयाः । विशेषास्त्वनियतदिग्देशसम्बन्धितया न कार्त्स्न्येनोपलब्धिभाजो भवन्तीति कथं संकेतविषयाः । अथ यावतामुपलम्भः तावत्स्वेव सङ्केतकरणाद् व्यवहारः । तर्हि विशेषान्तरे सङ्केतासम्भवाद्व्यवहारानुपपत्तिः । न चायोगिनः प्रत्येकमशेषविशेषोपलम्भः । न चानुपलब्धेष्विदमस्य वाच्यमिदमस्य वाचकमित्यभिधानाभिधेयनियमनियोगप्रतिपत्तिः । समयप्रतिपत्तिं च विना शब्दश्रवणादर्थप्रतिपत्त्यभावः । अथाभिन्ननिमित्तमुपादाय विशेषेषु सङ्केतस्तदप्यसत् । अभिन्ननिमित्तसद्भावेऽपि विशेषाणमानन्त्यं नातिवर्तत इति । सामान्ये सङ्केतात्सामान्यं शब्दार्थः । न च सामान्यवति सङ्केतोपलंभेन सामान्यमभिधायानन्तरं विशेषेषु वर्तिष्यत इति वाच्यम् । विरम्य व्यापाराभ्युपगमेन 'शब्दकर्मबुद्ध्यादीनां विरम्य व्यापारासम्भवादि'ति सूत्रविरोधात् । तथाच विशेषणप्रतिपत्तावेव क्षीणत्वात् विशेष्याप्रतिपादकं तदुक्तम्—

विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।

अथ सामान्यप्रतिपत्तेरपुरुषार्थत्वाद्विशेषार्थतया प्रतिपत्तुः प्रवृत्तिनिवृत्ती न स्यातामिति । तन्न । सामान्यप्रतिपत्त्यन्यथानुपपत्त्या विशेषावबोधे सति प्रवृत्तिनिवृत्त्योर्भावात् । तथाहि—निराधारं हि सामान्यं भवेच्छशविषाणवत् । इत्याधारप्रतिपत्तिरित्यलमतिकल्पितेन ।

सर्वमेतदयुक्तम् । अभिन्ननिमित्तोपादाने सति सामान्यवति सङ्केतकारणात् । सामान्यवाञ्छब्दार्थः । तद्यथानन्त्येनावस्थिता

विशेषा तथा ह्येकं तेष्वभिन्नं सामान्यमेकत्रोपलब्धम्। तदुपलंभाद्नुपलभ्यमानापि विशेषा सामान्यवर्वर्त्याः । सङ्केतविषयाः शाब्दाश्चानित्यत्वेऽपि विशिष्टानुपूर्वीसचिवा इति । तथाहि—यत्र यत्रेदृशं सामान्यं पश्यसि तत्र तत्रायंशब्दः प्रयोक्तव्यः । इत्थम्भूताच्च शब्दादयमर्थः प्रतिपत्तव्य इति संकेतग्रहो विशेषाणामानन्त्येऽपि घटत इति। तथाच शब्दश्रवणात्–सामान्यवत्यर्थे प्रतिपत्तिर्दृष्टा । सा च सङ्केतप्रतिपत्तिमाक्षिपति । संकेतश्चानेनैव प्रकारेण घटते नान्यथेति । अथ गोशब्दश्रवणाच्छावलेयादिविशेषप्रतिपत्तेर्न विशेषः शब्दार्थः। सत्यं किं तर्हि सामान्ययुक्तोऽर्थः प्रतीयते। न शावलेयादिविशेषः । स च शावलेयादिशब्देभ्य एव प्रतीयत इति। न चैतावता सामान्यमेव शब्दार्थः प्रधानोपसर्जनभावेनोभयोः प्रतिभासनात् । तथा गामानयेत्यादिप्रयोगेषु सामान्यवतोऽर्थस्यानयनादिक्रुत्या सम्बन्धात् । अथ सामान्यमभिधाय कथं विशेषे वर्तते सूत्रविरोधात् । न सूत्रार्थापरिज्ञानात्। तथाच सूत्रस्यार्थः–शब्दो ह्यकदा विशेषणं प्रतिपाद्य पुनर्विशेषणं न प्रतिपादयतीति विरम्य व्यापारो निषिद्धः, न पुनर्विशेषणं प्रतिपाद्य विशेष्यं नाभिधत्त इति। तथा कर्म विभागं कृत्वोत्तरसंयोगं करोत्यकृतसंयोगस्य विनाशाभावात्। न च संयोगं कृत्वा संयोगं करोतीति विरम्य व्यापारप्रतिषेधः । तथा विशेषणबुद्धिर्विशेष्यबुद्धिं कृत्वा न कार्यान्तरमारभत इति । एवं सुखादिष्वपि प्रतिषेधः। ननूक्तं क्षीणशक्तिर्विशेषणेति विशेष्यं नाभिदध्यात् इति। तावच्छक्तेः कार्यविषयत्वात्। कार्यं च विशेषणप्रतिपत्तिवद्विशेष्यप्रतिपत्तिलक्षणमुपलभ्यमानं शक्तेर्व्यवस्थापकम् । अथ कार्यस्यैवाभावं ब्रूयात्। स चैवं ब्रुवाणः स्वसंवेदनमपि बाधते। विशेष्यप्रतिपत्तेः संवेदनात् ।भिन्नज्ञानालम्बनयोश्च विशेषणविशेष्यभावपक्षे चोद्यं नैकज्ञानालम्बन इति । समानं चैतदुपलभ्यमानस्य शब्दस्यार्थप्रतिपादकत्वाभ्युपगमात्। स्वात्मप्रतिपत्तौ च क्षीणत्वात्सामान्यप्रतिपादकत्वं न स्यात् । अथ सामान्यप्रतिपत्तेर्दृष्टत्वान्न तत्र शब्दशक्तेः प्रक्षयः । अर्थप्रतिपादनार्थश्च शब्दप्रयोग इति। यच्चोक्तम्—शब्दसामान्यप्रतिपत्त्यन्यथानुपपत्त्या विशेषाध्यवसाये प्रवृत्तिनिवृत्ती स्यातामिति । तत्र किं सामान्यमात्रप्रतिपत्त्यन्यथा-

नुपपत्त्या विशेषावबोधस्तद्विशेषप्रतिपत्त्यन्यथाऽनुपपत्त्या वा । यदि सामान्यमात्रप्रतिपत्त्यन्यथानुपपत्त्या तथासति सामान्यमात्रप्रतिपत्तौ विशेषमात्रप्रतिपत्तिरिति प्रवृत्त्यभावः । अथ विशिष्टसामान्यप्रतिपत्त्यन्यथानुपपत्त्या स तर्हि विशेषप्रतिपन्नो विशेषणमिति शब्दादेव प्रतीयते । अथ प्रमाणान्तरादिति । यदि शब्दात्कथं सामान्यमेव शब्दार्थः विशेषस्याप्यभिधायकत्वात् । अथ प्रमाणान्तरं न वा । प्रमाणान्तरव्यापारानुभवात् । न च सामान्यं परपक्षे विशेषाद्भिन्नं सम्भवति इत्यभेदे सामान्यप्रतिपत्तिवत् विशेषप्रतिपत्तिप्रसङ्गः । अन्यथा ह्येतत्प्रतिपत्तावितराप्रतिपत्तेर्भेदः । अथेष्यत एव केनचिद्रूपेणाभिन्नं भिन्नञ्चेति । न । भेदाभेदयोर्विधिप्रतिषेधरूपत्वादभिन्ने धर्मिण्यसम्भवः । तथाहि—किं येन रूपेण भिन्नं तेनैव रूपेणाभिन्नमुत रूपान्तरणेति वाच्यम् । यदि देशभेदाऽपेक्षया भिन्नं रूपभेदेन त्वभिन्नमित्यविप्रतिपत्तिः । परो विभिन्नदेशभेदापेक्षया भेदं प्रतिपद्यत इति । अथानुगतव्यावृत्तात्मतया प्रतिभासाद्वस्तुबोधात्मकत्वम् । तदसत् । अनुगतसामान्यसम्बन्धादनुगतं स्वरूपेण तु व्यावृत्तमितीष्यत एव द्विरूपता । न चैकत्वे तादात्म्ये सति द्विरूपतोपपद्यत इति समवायलक्षणः सम्बन्धोऽभ्युपगन्तव्यः । स्वरूपभेदेन तु भेदे समवायं विना नियतविशेषेण व्यपदेशानुपपत्तिः । पृथिव्याः पृथिवीत्वमित्यादिसम्बन्धं बिना यावत्पृथिव्या व्यपदिश्यते तदवस्थान्तरेण कस्मान्नेति नियमाभावः । यदि च पृथिवीशब्दः पृथिवीत्वमभिदध्यात् पृथिवीत्वशब्दस्यार्थो वक्तव्यः । न चाभेदे तद्धितसाफल्यं पश्याम इति सामान्यवानर्थः पृथिवीशब्दस्येति युक्तम् । अथैकत्र सङ्केतितः पृथिवीशब्दः कथमर्थान्तर प्रवर्तिष्यत इत्याह । पृथिवीत्वाभिसम्बन्धात् निमित्तात् पृथिवीशब्द एकत्र सङ्केतितः स चार्थान्तरेपि तद्वशात्प्रवर्तत इति सङ्केतानुपपत्तेर्विशेष एव शब्दार्थो न सम्भवतीति सांख्यशाक्तपक्षोपि निषिद्ध एव, तथा "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचरा" इति तन्निरासः । यत्पृथिवीत्वाभिसम्बन्धात्पृथिवी कार्यं करोतीति पृथिवीत्वमेव निजा शक्तिरन्या तु चरमसहकारिरूपा तत्सद्भावे कार्यकरणात् तदभावे चाकरणादिति । तथाहि—विद्यमाना अपि तन्तवः कार्यं नारभन्त इत्यन्त्यतन्तुसंयोगं विनेति सैव शक्तिः । अथार्थान्तरम्

अर्थान्तरस्य कथं शक्तिरनर्थान्तरत्वेपि समानमेतत् । सैव तस्यैव शक्तिरिति । अथ यदि पूर्वेषां चरमसहकार्येव शक्तिस्तस्याप्यशक्तस्याकारणत्वात् । अन्यथा शक्तिर्वाच्येत्यनवस्था । नैतदेवम् । चरमस्य हि सहकारिणः पूर्वसहकारिण एव शक्तिरितरेतराभिसम्बन्धेन कार्यकारणात् । स एव च समग्राणां भावः सामग्रीति भावप्रत्ययेनोच्यते । तेन हि सत्तासमग्रव्यपदेशदर्शनात् । ननु यद्यतीन्द्रिया शक्तिर्नेष्यते मणिमन्त्रादिना तर्हि प्रतिबद्धोऽग्निर्न स्फोटादिकार्यमारभत इति कस्य प्रतिबन्धः । न चाग्नेः । न चाग्निसंयोगस्योपलभ्यमानत्वादिति शक्तेः प्रतिबन्धः । तदसत् । मणिमन्त्रादिप्रतिबन्धकाभावस्यापि कार्योत्पत्तौ सहकारित्वात् । तदभावे तु न कार्यस्योदय इति तद्विशिष्टसंयोग एव शक्तिर्न पुनः शक्तेः प्रतिबन्धः नानुत्पत्तिर्विनाशो वा सम्भवतीति । चिरोत्पन्नत्वाद्विनिष्टायाश्च पुनरुत्पत्तिकारणाभावादनुत्पत्तिप्रसङ्गः । अशक्तस्य कार्यानुत्पादकत्वादित्यन्वयव्यतिरेकाभ्यां प्रतिबन्धकाभावविशिष्टाग्निसंयोग एवाग्निशक्तिरिति ज्ञातम् । एवमत्रापि पृथिवीत्वमिजा शक्तिरपरा तु सहकारिभूतेति ।

पृथिव्यादीनां नवानां गुणवत्त्वं समवायिकारणत्वं क्षित्युदकात्मनां चतुर्दशगुणवत्त्वं चोक्तम् । तत्र कैर्गुणैर्गुणवती केषामुत्पत्तौ समवायिकारणत्वं के वा चतुर्दशगुणाः किञ्च गुणात्मकं लक्षणमित्याह रूपादिवाक्यम् । रूपादयः संस्कारपर्यन्तं विद्यन्ते यस्यास्सा रूपादिसंस्कारवती । किमेते स्वतन्त्रतया वृत्तिकृता प्रतिपाद्यन्ते उत सूत्रकारस्याप्यभिप्रेता इत्याशंक्याह एते च गुणविनिवेशाधिकार इत्यादि । एते च सूत्रकारेणाभिहिताः । कस्मिन्नधिकारे ? गुणा विविधमनेकप्रकारेण विनिवेश्यन्ते यस्मिन्नधिकारे स तथोक्तो द्वितीयोऽध्यायः तत्र सूत्रकारेण प्रतिपादिताः । तथाच रूपरसगन्धस्पर्शवती पृथिवीत्यनेन विशेषगुणाश्चत्वारोऽभिहिताः । तथा चाक्षुषवचनादिति संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणीति सूत्रं दर्शयति । सूत्रस्यार्थो रूपिद्रव्यमुपलब्धिलक्षणप्राप्तं महत्त्वाद्युपेतम् तत्र समवायात्संख्यादयश्च प्रत्यक्षग्राह्या इत्यन्यपरेणापि सूत्रेण रूपवति द्रव्यं संख्यादीनां सद्भावोऽभिहितः । अन्यथा ह्यविद्यमानत्वादेव तत्र तेषामुपल-

म्भो न स्यादिति । पदार्थाश्च संख्या इति बहुवचनम् । संख्यात्वव्यतिरेकेणैकत्वाद्यपरसामान्यप्रदर्शनार्थम् परिमाणानीति । तथा परिमाणत्वापेक्षयाऽणुत्वाद्यपरसामान्यज्ञापनार्थम् पृथक्त्वमित्येकवचनं। पृथक्त्वसामान्यापेक्षयैकपृथक्त्वाद्यपरशून्यताप्रदर्शनार्थम्। संयोगविभागाविति द्विवचनेन संयोगत्वविभागत्वव्यतिरेकेणापरसामान्याभावेपि विभागस्य संयोगापेक्षिताज्ञापनार्थम् समासकरणम्। तथा परत्वापरत्वे इत्यपि द्विवचनम् परत्वापरत्वसामान्यापेक्षया अपरसामान्याभावेपि साहचर्यज्ञापनार्थं समासकरणमिति । तथा पतनोपदेशादिति गुरुत्वात्पतनमिति सूत्रं दर्शयति । यथा च पतने गुरुत्वं कारणम् तथा वक्ष्यामो गुरुत्वपरीक्षायाम् । अद्भिः सामान्यमिति वचनादिति सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति सूत्रं दर्शयति । सर्पिरादीनामग्निसंयोगाद्द्रवत्वं सम्पद्यतेऽद्भिः तथा सामान्यं यथा भवतीति सूत्रार्थः। उत्तरकर्मवचनादिति नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारात्तथोत्तरमुत्तरं चेति सूत्रं दर्शयति। इषोः शरस्याद्यं कर्म नोदनात् भवतीति कर्म च नोदनापक्षं संस्कारमारभते । कर्मकारिताच्च संस्कारात्तथोत्तरं चैकः संस्कारो नैकं कर्मारभते पतनं यावदिति । इषोः समवायिकारणस्यावगतायां सभविन्यामिषोः इति षष्ठ्यभिधानं तदवयवेष्वपि कर्मज्ञापनार्थम् । यदि वा षष्ठ्यर्थस्य विद्यमानत्वात्तदभिधानेप्यदोषः ॥

(भा०) क्षितावेव गन्धः। रूपमनेकप्रकारकं शुक्लादि । रसः षड्विधो मधुरादिः । गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शोऽस्या अनुष्णाशीतत्वे सति पाकजः। सा च द्विविधा नित्या चानित्या च । परमाणुलक्षणा नित्या । कार्यलक्षणा त्वानित्या । सा च स्थैर्याद्यवयवसन्निवेशविशिष्टाऽपरजातिबहुत्वोपेता शयनासनाद्यनेकोपकारकरी च । त्रिविधं चास्याः कार्यं शरीरेन्द्रियविषयसंज्ञकम् । तत्र शरीरं द्विविधं योनिजमयोनिजं च । तत्रायोनिजमनपेक्ष्यशुक्रशोणितं

देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते। क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते। शुक्रशोणितसन्निपातजं योनिजम्। तत्तु द्विविधं जरायुजमण्डजं च। मानुषपशुमृगाणां जरायुजम् पक्षिसरीसृपाणामण्डजम्। इन्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम्। विषयस्तु द्व्यणुकादिप्रक्रमेणारब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः। तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः। पाषाणा उपलमणिवज्रादयः। स्थावराः वृक्षतृणौषधिगुल्मलतावतानवनस्पतय इति ॥

( सू० ) ननु सुगन्धि सलिलमित्याद्यनुभवाद्गन्धवत्त्वं जलादावप्यस्तीति न तस्य पृथिवीत्वभेदकत्वमत आह क्षितावेवेति। जलादेः कुसुमादिसम्पर्कादौपाधिकमेव गन्धवत्त्वं न तु स्वाभाविकमिति भावः।

रूपमात्रं जलादावतिप्रसक्तत्वान्न क्षितेर्भेदकमत आह रूपमिति। शुक्लाद्यनेकप्रकारं–शुक्लत्वाद्यवान्तरानेकजातिमद्रूपम्, क्षितावेवेत्यनुषज्यते, तथाच शुक्लपीतनीलरक्ताद्येकैकरूपवत्त्वं तादृशप्रत्येकरूपवद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वं वा साधर्म्यमित्यर्थः। न च शुक्लरूपवत्त्वगर्भनिरुक्तेस्तोये तेजसि चातिव्याप्तिः, तत्र पाकजत्वेन शुक्लरूपस्य विशेषणीयत्वादिति भावः। रसवत्त्वमपि जले गतमत आह रस इति। मधुरादिरिति। मधुरतिक्ताम्लकटुकषायलवणभेदात् षड्विधो रसः क्षितावेव, तथाच मधुरादिप्रत्येकरसवत्त्वं तादृशप्रत्येकरसवद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वं वा साधर्म्यम्। अत्रापि माधुर्यं पाकजं ग्राह्यम्,

अतो न जलेऽतिप्रसङ्गः। क्षारस्तु रसो लवणप्रभेद एवेति न षड्विधत्वव्याघातः। ननु सौरभासौरभयोरपि गुणान्तरयोः पृथिव्यां सत्त्वाद्रूपादिचतुर्दशगुणमात्रोक्त्या न्यूनत्वमत आह गन्धो द्विविध इति। गन्ध एव द्विविध इत्यर्थः। असुरभिः सुरभ्यन्यगन्धस्तेन दुर्गन्धाभिन्नस्य चित्रगन्धस्य सत्त्वेपि न द्वैविध्यव्याघातः। ननु स्पर्शवत्त्वं जलादित्रिकेऽतिव्याप्तत्वान्न पृथिव्या भेदकमत आह स्पर्श इति। अस्याः—पृथिव्याः, स्पर्शोऽनुष्णाशीतत्वे सति पाकजः—पाकप्रयोज्यः, तथाच पाकप्रयोज्यानुष्णाशीतस्पर्शवत्त्वं साधर्म्यम्। तत्र वायोर्वारणाय प्रयोज्यान्तम्। घटादौ पाकजस्पर्शस्यासत्त्वेऽपि परम्परया तत्प्रयोज्यस्पर्शसत्त्वान्नाव्याप्तिः। स्वर्णादौ पाकप्रयोज्यद्रवत्वसत्त्वात्तद्वारणायानुष्णाशीतेति। अनुष्णाशीतत्वन्तु स्पर्शत्वावान्तरजातिभेदः। पृथिवीवातयोः स्पर्शवृत्तिरेवात्र घटक इति भावः। पाकप्रयोज्यस्पर्शवत्तामात्रं लक्षणम् अनुष्णाशीतत्वे सतीति तु शीतोष्णभिन्नस्यापि स्पर्शस्य सत्त्वसूचनार्थमिति त्वाचार्याः।

यद्यपि संख्यापरिमाणादीनां नवानामपि द्रव्यान्तरवृत्तित्वात् न केवलानां पृथिवीतरभेदकत्वम्, तथापि गन्धवत्त्वविशेषितस्यैव तेषां प्रत्येकस्य तथात्वसम्भवान्न तानि विवेचितानीति ध्येयम्। ननु पृथिवी न स्पर्शवती नित्यमात्रवृत्तिजातिमत्त्वादात्मवदिति निःस्पर्शत्वसिद्धौ पाकजस्पर्शवत्त्वं कुतः साधर्म्यमत आह सा चेति। तथा चोक्तहेतोः स्वरूपासिद्धत्वान्न तेन निःस्पर्शत्वसिद्धिरिति भावः। तत्र-नित्यानित्ययोर्मध्ये। परमाणुलक्षणा—परमाणुस्वरूपा। न च तत्र मानाभावः, त्रुटिः सावयवद्रव्यारब्धो चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन द्व्यणुकस्येव परमाणोरपि सिद्धेरित्याचार्याः।

उक्तहेतोरप्रयोजकत्वादन्यथा तत एव त्रुटेरवयवपरम्पराया अपि सिद्धिप्रसङ्गात् । त्रसरेणुर्नावयवजन्यः किन्तु नित्य एव तत्रैव चात्यन्तापकृष्टमहत्त्वप्रयुक्तः परमाणुत्वव्यपदेश इति स्वतन्त्राः ।

कार्यलक्षणा त्विति । न च संस्थानविशेषविशिष्टैः परमाणुपुंजैरेव त्र्यणुकघटादिप्रतीत्युपपत्तौ कार्यद्रव्ये मानाभावः, परमाणूनां महत्त्वविरहेण संस्थानविशेषावच्छिन्नस्यापि तस्य प्रत्यक्षानुपपत्तेरिति भावः । महत्त्वं न परिमाणान्तरं किन्तु विलक्षणसंस्थानवत्त्वमेव, तदेव च प्रत्यक्षतायां प्रयोजकमतः प्रत्येकपरमाणोरप्रत्यक्षत्वेऽपि संस्थानप्रभेदावच्छिन्नस्य तस्य प्रत्यक्षत्वं नानुपपन्नमिति तु नव्यबौद्धाः । स्थैर्यादीति । स्थैर्यमनेकक्षणस्थायित्वम् । आदिना विष्टंभकत्वधारकत्वाकर्षकत्वाद्युपग्रहः । अवयवसन्निवेशः—संस्थानगतवैलक्षण्यम्, तैर्विशिष्टेत्यर्थः । अपरेति । पृथिवीत्वावान्तरघटत्वपटत्वाद्यनेकजातिप्रतीत्यर्थः । यद्यपि घटत्वपटत्वादिसमुदायवत्त्वमप्रसिद्धम् घटत्वादिप्रत्येकजातिमत्त्वं पटादौ घटादौ पार्थिवद्व्यणुकादौ चाव्याप्तम्, तथापि कार्यत्वे सति घटत्वपटत्वादिप्रत्येकत्वाभिष्ठद्रव्यत्वाव्यापकजातिमत्त्वे तात्पर्यम् । मूर्तत्वस्य जातित्वे तदन्या जातिर्निवेश्याऽतो न जलादिष्वतिप्रसङ्गः । शयनं—शय्या, आसनं—पीठम्, आदिना मठमण्डपादि तादृशानां वस्तूनामुपकाराणामिष्टहेतूनां कारिकेत्यर्थः । अस्याः—पृथिव्याः, कार्यं—कार्यद्रव्यम्, षष्ठ्यर्थः समवेतत्वम् नातो दारुप्रभृतीनां रूपादौ तज्जन्यवन्ह्यादौ वा प्रसङ्गः । शरीरेत्यादि । द्रव्यसमवाय्यवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं शरीरत्वम् । तादृशी च जातिर्मनुष्यत्वगोत्वादिरूपा मृतदेहेऽप्यस्ति, वृक्षादीनान्तु चेष्टावत्त्वं नास्ति प्रमाणाभावात् प्रवृत्त्यादिलक्षणकारणबाधाच्च । भोगावच्छेदकवृत्तिद्रव्यसमवाय्य-

वृत्तिजातिमत्स्वरूपन्तु शरीरत्वं वृक्षादावतिप्रसक्तत्वान्न भाष्यकृतामभिमेतम्, वृक्षादेर्विषयप्रभेदेन वक्ष्यमाणत्वात् । स्मृत्यजनकज्ञानजनकमनोवृत्तिसंयोगाश्रयत्वमिन्द्रियत्वम् । सुषुप्त्यनुरोधेन त्वङ्मनोयोगस्य ज्ञानसामान्यं प्रति हेतुत्वे स्मृत्यजनकत्वं विहायात्मावृत्तित्वं संयोगस्य विशेषणं वाच्यम् । व्यापारप्रत्यासत्त्या साक्षात्कारकारणत्वं वेन्द्रियत्वम् । शरीरेन्द्रियभिन्नकार्यद्रव्यत्वं विषयत्वम् । ननु शरीरं न पार्थिवमयोनिजत्वात् सूर्यादिदेहवत् इति शरीरावच्छेदेन पार्थिवत्वाभावसाधनाच्छरीरस्य पार्थिवत्वं बाधितमतस्तत्र भागासिद्धिरत आह शरीरं द्विविधमिति । योनिशब्दस्य कारणवाचित्वादयोनिजत्वं यदि कारणाजन्यत्वं तदोक्तहेतोः स्वरूपासिद्धिरेव स्यान्न तु भागासिद्धिरित्यन्यथा तन्निर्वक्ति तत्रायोनिजमिति । शुक्रशोणितसम्पर्काप्रभवत्वमेवायोनिजत्वम् । तच्च देवानामृषीणां च शरीरे स्वरूपासिद्धमिति भावः । यद्यपि देवा ऋषयश्च शरीराण्येव तथापि राहोः शिर इत्यत्रेव तादात्म्यम् । अवयवारभ्यत्वं वा षष्ठ्यर्थः । ननु शुक्रशोणिताप्रभवस्य यदि तदितरकारणाप्रभवत्वं स्यात् कारणसामान्याजन्यत्वमेव स्यादतः कारणान्तरं दर्शयति धर्मविशेषसाहितेभ्य इति । तत्तद्देहावच्छेद्यभोगहेतुपुण्यसहकृतेभ्य इत्यर्थः । अणुभ्यः—पार्थिवपरमाणुभ्यः । प्रयोज्यत्वं पञ्चम्यर्थः । क्षुद्रजन्तूनां—दंशमशकादीनाम् । अत्रापि पूर्ववत्तादात्म्यादिकं षष्ठ्यर्थः । यातनाशरीराणीति । यातना—दुःखं तन्मात्रावच्छेदकीभूतशरीराणीत्यर्थः । शुक्रेति । शुक्रशोणितयोः सन्निपातो मिलनं तज्जनितं शरीरं योनिजमित्यर्थः । तच्च—तदपि । गर्भधारकं चर्मपुटकं जरायुस्ततो जातं जरायुजम् । मानुषेति । यद्यपि मृगा अपि पशव एव तथापि गोवृषन्यायाद्भेदेनोपन्यासः । पशुपदं ग्राम्यपशुपरम् मृ-

गपदमारण्यकपशुपरम् अतो भेद इति त्वाचार्याः । मृगाणामिति बहुवचनस्य गणसूचकत्वाद्राक्षसादीनामप्युपग्रहः । सरीसृपा-वक्षःसर्पणशालीः सर्पकीटसरटपत्नीमत्स्यप्रभृतयः । अत्र मा-नुषादिशरीरस्य गन्धवत्त्वेन पृथिवीत्वसिद्धौ तस्य पाञ्चभौतिक-त्वप्रसिद्धिर्भूतपञ्चकजन्यत्वप्रयुक्तैव न तु तदुपादेयत्वप्रयुक्ता जाति-साङ्कर्यापत्तेः शीतस्पर्शादेरौपाधिकत्वेन तत्र जलत्वाद्यसाधकत्वा-द्विजातीयानामनारम्भकत्वे पञ्चभिर्मिलित्वा द्रव्यारम्भस्यासम्भ-वाच्चेति ध्येयम् ।

पार्थिवमिन्द्रियमाह इन्द्रियमिति । सर्वप्राणिनां—सर्वजाती-यप्राणिनाम् । जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं—गन्धव्यञ्ज-कमिन्द्रियं, घ्राणं-घ्राणसंज्ञकमित्यन्वयः । प्रतिनियतजलाद्यभि-भूतनासिकानां पुंसां गन्धग्राहकेन्द्रियसत्त्वे मानाभावमावेदयितुं जलाद्यनभिभूतैरित्युक्तम् । न च घ्राणस्य पार्थिवत्वे प्रमाणा-भावः, गन्धः आश्रयद्रव्यसजातीयकरणकानुभवग्राह्यः प्रतिनि-यतेन्द्रियग्राह्यशब्दान्यगुणत्वाद्रासरूपवदित्यनुमानस्यैव प्र-माणत्वादिति भावः । अत्राकृष्टविशेषजनिता नासिकैवास्तु घ्रा-णपदस्यार्थस्तत्संनिकर्ष एव च गन्धग्राहकोऽस्तु गन्धानुभवोऽती-न्द्रियकरणको जन्यसाक्षात्कारत्वाच्चाक्षुषवदित्यादेरप्रयोजकत्वा-दित्युत्तानाः ।

पार्थिवं विषयं निर्वक्ति विषयस्त्विति । द्व्यणुकादीति । द्व्यणुकत्रसरेण्वादिक्रमेणारब्धः पार्थिवावयवैरित्यनुषंजनी-यम्, नातो जलादावतिप्रसङ्गः । पार्थिवावयवारभ्यत्वं तदीय-रूपादावप्यतो द्रव्यत्वांशलाभाय द्व्यणुकादिक्रमेणेत्युक्तम् । द्व्यणुकादेर्लक्ष्यत्वलाभार्थं तदभिधानम् । यद्यपि चर्मास्थ्या-दिभेदेन क्षीरघृतदध्यादिभेदेन पत्रपुष्पफलमूलादिभेन चानन्ता

June. 1927

THE

# CHOWKHAMBÁ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 354

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

**प्रशस्तपादभाष्यम् ।**

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया
महामहोपाध्यायपद्मनाभमिश्रकृतया सेतुव्याख्यया
विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया व्योमवत्या च समन्वितम्।
वाराणसीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षेण पं० गोपी-
नाथकविराजेन न्यायोपाध्याय पं० दुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

# PRASHASTAPÂDABHASHYAM

BY Prlshstadevâchârya

WITH COMMENTARIES:

Sūkti,-BY JAGADISA TARKÂLANKÂRA,
Setu,-BY PADMANÂBHA MISHRA, &
Vyomavati,-BY VYOMASHIVÂCHÂRYA.

*Edited by*

GOPINÂTH KAVIRÂJ, M. A.
PRINCIPAL GOVERNMENT SANSKRIT COLLEGE.
SARASVATI BHAVAN BENÂRES,
and
DHUNDHIRÂJ SHÂSTRI Nyâyopâdhyâya.

FASCICULUS III-३.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÁ SANSKRIT SERIES OFFICE, BENARES.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1927.

## Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

एव पार्थिवविषयास्तथापि गौतमनये प्रमेयाणां द्वादशविधत्ववत् कतिपयानामेव पार्थिवविषयाणां कणादनये त्रैविध्यमित्याशयेनाह त्रिविधो मृत्पाषाणस्थावरलक्षण इति । मृत्त्वं–मृत्तिकात्वम्, पाषाणत्वं-प्रस्तरत्वम् । इमौ जातिभेदौ । स्थावरत्वन्तु कृत्यवच्छेदकावृत्तिभोगावच्छेदकवृत्तिजातिमत्त्वम् । तादृशी च जातिर्वृक्षत्वतृणत्वादिः सुलभा । स्थावरत्वमपि वृक्षत्वतृणत्वादिव्यापकः पृथिवीत्वव्याप्यजातिभेद इति त्वाचार्याः । भूप्रदेशाः–काश्यादयः । प्राकारः–प्राचीरं, इष्टका–लोष्ठम्, आदिना पत्रिकाद्युपग्रहः । मृत्तिका मृदात्मिका पृथिवीविकारा इत्यर्थः । के पाषाणा इत्यत्राह पाषाणा इति । उपलः-शिला, मणिः–पद्मरागादिः, वज्रं–हीरकम् । आदिना गैरिकहरितालमनःशिलाद्युपग्रहः । के स्थावरा इत्यत्राह स्थावरा इति । वृक्षपदं पुष्पोत्फलिवृक्षाम्रादिपरम् नातोऽग्रिमस्य वनस्पतिपदस्य वैयर्थ्यम् । तृणमुलपादि । ओषधिः–फलपाकान्ता कदल्यादिः । गुल्माः–प्रसिद्धाः । लता–माधव्यादिकाः । अवतानाः–केतक्यादयः । वनस्पतयः-पुष्पं विना फलिनो वटाश्वत्थाद्याः ।।

( से० ) क्षितावेवेति । एवम् गन्धो गधवत्त्वेनैव पृथिव्या असाधारण इत्यर्थः । रूपं तु रूपत्वेन नासाधारणं जलादौ सत्त्वात्, किन्तु अनेकविधरूपत्वेनेत्याह रूपमिति । अनेकविधरूपसमानाधिकरणद्रव्यत्वन्यूनवृत्तिजातिमत्त्वं पृथिव्यामेवेत्यर्थः । ननु नित्यानित्यभेदेनानेकप्रकाररूपवत्त्वं जलादावपीत्यत आह शुक्लादीति । अयं प्रकारो विवक्षित इत्यर्थः । यद्यपि नानेकविधं रूपमवयविनि युगपत्प्रागुक्ताऽव्याप्यवृत्तितानिषेधात्, नापि क्रमशः पीलुपाकमते द्व्यणुकपर्यन्तं नाशानन्तरं परमाणावेव पाकेन रूपान्तरोत्पत्तेः पूर्वद्व्यणुकादेर्नष्टत्वात् तत्र रूपान्तरानुत्पत्तेः, तथापि परमाणूनेवादायानेकविधरूपवत्त्वं पृथिव्याः । यत्तु विजातीयरूपवद्घटपटादिव्यक्तीरादाय अवयविन्यप्यनेकविधरूपवत्त्वमिति । तन्न । प्रत्येकावयविनि तदभावेन

तत्समुदायेऽपि तदभावात् 'प्रत्येकावृत्तिश्च धर्मो न समुदायवृत्ति'-रिति न्यायात् । अत एवावयविन्यनेकविधरूपसामानाधिकरण्यमपि न पृथिवीत्वे अनेकविधरूपाधिकरणस्यावयविनोऽप्रसिद्धेः तदधि-करणानधिकरणत्वस्य सामानाधिकरण्यस्य च दुर्लभत्वात् । एकरूप-समानाधिकरणत्वे सत्यपररूपसमानाधिकरणत्वं त्ववयविभे-दमादायावयविनमादाय पृथिवीत्वे संभवतीति भावः । यथा शुक्लादिरनेकप्रकारस्तथा शुक्लतरादिरपि पृथिव्यामेवेत्यप्यवधेयम् । जलादौ जलादिरूपापेक्षयोत्कर्षापकर्षयोरभावात् । प्रतीतिस्तु क-चिज्जायमाना औपाधिकत्वाद्यनुविधानात् । ननु न शुक्लादीनि रूपाणि गुणाः किन्तु जातय एव । एवं च यथा व्यक्त्युपपत्तौ घट-त्वादीनि व्यज्यन्तेऽतथा शुक्लादयोऽपि । न च तरतमादिभावस्त-थासति न स्यादिति वाच्यम् । आश्रयान्तरमिश्रणामिश्रणाभ्यां तदु-पपत्तेः । भवन्तु वा गुणा एव शुक्लादयः परन्तु जगतीगता एकैका एव नित्याश्च । न च पाकाच्छुक्लं नष्टं रक्तमुत्पन्नमित्यादिप्रतीत्यनुपप-त्तिस्समवायस्योपाधेस्सम्भवात् इति चेन्न । जातित्वे गोत्वादिना जा-तिसङ्करप्रसङ्गात् आश्रयमिश्रणामिश्रणाभ्यां घटत्वादावुत्कर्षापकर्ष-योरप्रतीतेश्च । यदपि भवन्तु वेत्यादिना निरुक्तं तदप्ययुक्तम्–बाधकं विना प्रत्ययस्यान्यथात्वकल्पने मानाभावात् । न च नीलं नष्टमि-त्यादेर्नीलसमवायो नष्टः इत्यादिरर्थः । ज्ञानविषयताया अनुव्यवसा-यसाक्षिकत्वेन तथानुव्यवसायाभावात्, नित्यस्यानेकसमवेतस्य जाति-त्वापत्तेश्च । न च शुक्लादिभिन्नत्वे सति नित्यत्वे सति अनेकसमवेतत्वं जातिलक्षणम्, गौरवात् शुक्लादीनां नित्यत्वसिद्धौ जातित्वासिद्धिस्तत्सि-द्धौ नित्यत्वसिद्धिरित्यन्योन्याश्रयाच्च । किञ्च महत्त्वस्य समानाधिकर-णमुद्भूतरूपवत्त्वं तावद्बहिर्द्रव्यप्रत्यक्षताप्रयोजकम् । तत्रोद्भूतत्वम-नुद्भूतत्वं द्वयमपि जातिरित्येके । उद्भूतत्वं जातिरनुद्भूतत्वं न जातिः, किन्तु तदभाव इत्यपरे । शुक्लत्वादिना परापरभावानुपपत्त्या तत्तद्व्याप्य-नानोद्भूतत्वस्वीकारात्तेषां प्रत्यक्षत्वप्रयोजकत्वस्वीकारेऽननुगमापत्त्या कारणरूपपाकप्रयोज्यजातिभ्यां संकरापत्त्या तत्तद्व्याप्यनानाजात्यभ्य-ननुगमापत्त्या चानुद्भूतत्वमेव जातिस्तदभाव उद्भूतत्वं प्रतिबन्ध-काभावतया प्रत्यक्षत्वप्रयोजकमिति चिन्तामणिकृतः । तत्र रूपस्य शु-क्लादेरेकैकत्वे कथं स्वरूपमनुद्भूतमुद्भूतं च भास्करकरनिकरस्य तयो-

रेकतया जातेर्व्याप्यवृत्तितया तत्राऽव्याप्यवृत्तितापत्तेः। अपि च शुक्लादेर्जातित्वे नित्यगुणत्वे वा कारणरूपे कार्यरूपसादृश्यापेक्षा न स्यात्। न हि सदृशं कारणरूपं कार्यरूपकारणत्वेनोपयुज्यते तस्योभयथा नित्यत्वात्। नापि कारणगतैव जातिः कार्ये तिष्ठति घटत्वस्य कपालेऽभावात्। नापि कारणगत एव गुणः कार्ये तिष्ठति विजातीयरूपवत्सु तन्तुषु पटगतचित्ररूपभावप्रसङ्गात्। तस्मात् कारणगतसदृशरूपसव्यपेक्षतया कार्यगताः शुक्लादयो जन्या एवेति जानीमः। न च जातिपक्षे पृथिव्या एव पृथिवीतिवत् शुक्लादेव शुक्लमिति वाच्यम्। शुक्लादेश्चित्रदर्शनादिति सङ्क्षेपः।

रसोऽपि रसत्वेन नासाधारणः किन्तु अनेकविधत्वेनेत्याह रस इति। ननु कैश्चिदालङ्कारिकैरष्टविधः कैश्चिच्च नवविधो गणित इति कथं षड्विध इत्यत आह मधुरेति। असौ नालङ्कारिकाणां रस इत्यर्थः। मधुरमधुरतरत्वादिरपि प्रकारभेदो द्रष्टव्यः।

ननु भवतु गन्धो गन्धत्वेनैवासाधारणः स प्रकारभेदवान्न वा इत्यत आह गन्ध इति। सुरभितरत्वादिरपि प्रकारभेदो द्रष्टव्यः।

ननु स्पर्शो न स्पर्शत्वेनासाधारणो जलत्वादिसाधारण्यात्, नाप्यनुष्णाशीतत्वेन वायुसाधारण्यात्, नापि स्पर्शत्वसाक्षाद्व्याप्यजात्याऽनेकविधस्पर्शत्वेन, सा हि शीतत्वादिर्न च शीतादयः पृथिव्यां सम्भाव्यन्त इत्यत आह स्पर्श इति। अत्र पाकजस्पर्शवत्त्वेनैवासाधारणता अनुष्णाशीतपदं च स्वरूपपरम्। पाकजवत्त्वं तेजस्यपि सुवर्णद्रवस्य नैमित्तिकत्वात्, आकाशेऽपि च दवदहनदह्यमानवेणुनिनादस्य दहनाकाशसंयोगासमवायिकारणत्वात्, तथा च स्पर्शो विशेषणम्। यद्यपि द्व्यणुकादौ कारणगुणक्रमेणैव गुणोत्पादस्वीकारः,तथापि पाकप्रयोज्यस्पर्शवत्त्वं लक्षणम्, परमाणुस्पर्शः पाकजन्यत्वादेव पाकप्रयोज्यः द्व्यणुकादिस्पर्शस्तु पाकजन्यपरमाणुस्पर्शजत्वादिभिः। पाकजत्वं चात्र पाकानन्तरं मृदुकठिनभावानुभवात्, यत्र नानुभूयते तत्र पृथिवीस्पर्शत्वेनानुमानात्।

यत्तु वदन्ति–पृथिव्यां स्पर्शो नास्त्येव किन्त्वौष्ण्यशैत्याभाव एवेति। तेषां तथासति तस्यास्त्वाचत्वाभावे तद्गतसंख्यादयो नोपलभ्येरन्नित्यत्र किमुत्तरम्? औष्ण्यशैत्य एव परस्पराभिभूततयाऽनुष्णाशीतत्वेनोपलभ्येत इत्येके। तदन्तःकरणभावित-

मिव । एकस्य बलवत्त्वं विनाऽभिभवाभावेन तस्यैवोपलब्ध्याप-त्तेर्द्वयोश्च परस्परापेक्षबलवत्त्वदुर्बलत्वयोर्विरोधेनासम्भवात् उष्ण-शीतयोश्च परस्परविरोधेनैकत्र पृथिव्यामसम्भवात् । सन्निकृ-ष्टजलतेजसोरेव तयोः परस्पराभिभवेन तथा प्रतिभानमिति चेत्, एकस्य बलवत्तां विनाऽभिभवाभावात्, पृथिव्याः स्पर्शरहितत्वे-ऽत्वाचत्वापत्तेरुक्तत्वाच्च । पृथिवीगतत्वेन प्रतीतेर्बाधकं विना भ्रा-न्तत्वानुपपत्तेश्च । भावत्वेऽपि चनजोश्लेषो सुराविद्यादाविव न विरुद्धः । न च तत्र सुराविद्याविरोधित्वेन(?) तथा प्रकृतेऽपि शीतोष्णविरोधि-त्वस्यानुभवसाक्षिकत्वात् ।

वस्तुतस्तु अनुष्णाशीतत्वं जातिरेवास्य शब्दस्य रूढत्वेन तन्त्रा-घटितत्वात् । अन्यथा तत्तत्प्रतीतिदशायां शैत्योष्णविरोधिप्रतीत्याप-त्त्या शैत्यौष्ण्यप्रतीत्यपेक्षापत्तेरिति संक्षेपः ।

इदन्तु विचार्यते । प्रस्तरादौ कथं न गन्धोपलम्भः ? न तावत् सुरभ्यसुरभ्यवयवारब्धत्वेन. तदभावात् अवयवगन्धस्यैवोपलम्भा-पत्तेः, विजातीयरसवदारभ्याया हरीतक्याः नीरसत्वेऽपि तदवयवे रसोपलम्भात् । न च प्रस्तरत्रसरेणारेव विजातीयगन्धवदारभ्यतया निर्गन्धतयाऽन्त्यावयविपर्यन्तं गन्धाभावाद् द्व्यणुकादिगन्धवस्तुनो-पलभ्यत्वेऽतीन्द्रियत्वादिति वाच्यम् । प्रमाणरहिताया एतावत्याः कुसृष्टेः कल्पनाया अयुक्तत्वात् ।

यत्तु प्रस्तरभस्मनो गन्धवत्त्वेन तत्परमाणोर्गन्धवत्तया तदारभ्यस्य प्रस्तरस्यापि गन्धवत्त्वम् । न च प्रस्तरभस्मनोरारम्भकपरमाणुभेदो यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तत्तदुपादानोपादेयमिति व्याप्तेः । अग्रिम-द्रव्यपदानुपादाने कपालध्वंसजन्य घटध्वंसे व्यभिचारः । प्रथमद्र-व्यपदानुपादाने मिथ्याज्ञानध्वंसजन्ये कायव्यूहे व्यभिचारः—तत्रान्वय-व्यतिरेकाभ्यां तस्यापि कारणत्वादित्येके । कपालप्रागभावध्वंसजन्ये घटे व्यभिचार इत्यपरे । इदानीं शालग्रामशिलाध्वंसजन्ये ध्वंसकर्तृ-नारकिशरीरे व्यभिचारस्तद्वारणायादृष्टाद्वारकयद्द्रव्यध्वंसजन्यमि-त्यादि । इदानीं पार्श्वस्थवह्निपदान्तरालिकभित्तिनाशजन्ये वह्निपद-जन्ये महावह्नौ व्यभिचारस्तद्वारणाय ध्वंसत्वेन जनकता विवक्षि-ता । तत्र तु संसर्गाभावत्वेन जनकता । एवं चादृष्टाद्वारकध्वंसत्वाव-च्छिन्नजनकतावद्द्रव्यध्वंसजन्यं यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तत्तदु-

पादानोपादेयमिति व्याप्तेरिति।

तन्न। परंपरया गन्धवत्परमाण्वारब्ध आहत्य विजातीयगन्धव-दारब्धे व्यभिचारात्। नाप्यभिभवात् प्रस्तरे गन्धानुपलम्भः, अ-भिभावकगन्धोपलम्भापत्तेरिति।

अत्राहुः-अनुद्भवादेव तत्र गन्धानुपलम्भः। स चादृष्टविशेषात् पाकजरूपवत्त्वानुमानेन प्रत्यक्षताप्रयोजकस्यान्यस्याभावात्। ननु विजातीयगन्धवदारभ्ये पाकजरूपवति व्यभिचारः। न च विजाती-यगन्धवदनारभ्यत्वे सति पाकजरूपवत्त्वादिति हेतुः, सत्यन्तस्य स-न्दिग्धत्वात्। न च विजातीयावयवगन्धानुपलब्ध्या तत्सिद्धिः द्व्यणु-कस्यैव विजातीयगन्धवत्त्वे तदनुपलब्ध्युपपत्तेः। साक्षादवयवस्या-नुद्भूतविजातीयगन्धवत्त्वेन वाऽनुपलब्धेरिति चेत्। अत्र ब्रूमः- एवं हि सजातीयगन्धवत्प्रस्तरपरमाणुसंयोगेऽपि द्व्यणुकसंयो-गेऽपि न त्रसरेणुरिति नियमे किंचित्प्रयोजकं वक्तव्यम्। तत्र च अदृष्टविशेषस्य प्रतिबन्धकत्वं वाच्यम्। विजातीयगन्धवत्प्रस्तरपर-माणुत्वादिना कारणता प्रस्तरद्व्यणुकत्वादिना कार्यता वा वाच्या। उभयथापि गौरवमन्यथाऽप्युपपत्तौ पृथिव्यां गन्धप्रागभावाभावस्तु क-ल्पनीयः। तस्मात् यत्र प्रस्तरपरमाणुद्व्यणुकानि वा विजातीयगन्धव-वति परे वा साक्षादवयवाः परंपरावयवा तथा तत्प्रस्तरोऽन्त्या-वयवी निर्गन्धः परत्र तु अनुद्भूतगन्धो गन्धानुद्भवप्रयोजकस्या-दृष्टस्य घ्राणानुरोधेन कल्पनात् अन्यथा तस्यापि निर्गन्धत्वापत्त्या सगुणेन्द्रियत्वव्याघातः। यच्चोक्तं-'साक्षादवयवस्यानुद्भूतविजातीय-गन्धवत्त्वमिति, तदपि न-व्यणुकपर्यन्तं क्वापि उद्भूतगन्धवत्त्वे गन्धो-पलम्भापत्तेः।

इदं चावधेयम्। यथा विजातीयगन्धवदारब्धो निर्गन्धः तथा विजातीयगन्धवदारभ्येन निर्गन्धेन गन्धवतारब्धो निर्गन्धावयवा-वच्छेदेन गन्धारम्भकाभावेन विजातीयगन्धारब्ध इव गन्धस्याव्या-प्यवृत्तित्वापत्तेः। एवं च यत्रैकः सूक्ष्मोऽप्यवयवो विजातीयगन्धो वा तत्रान्येषामवयवानां बहूनां महतां च सजातीयगन्धवत्त्वेऽपि ना-वयविनि गन्धस्तत्र सर्वावच्छेदेन गन्धोपलम्भस्तु भूयोभिर्गन्धवद्-भिरवयवैर्निर्गन्धभावातिरस्कारात्। एवं चैकः सूक्ष्मो अवयवो यत्र विजातीयरूपवान् अन्ये स्थूला बहवश्च सजातीयरूपवन्तस्तत्रापि

अवयविनि चित्रमेव रूपमुत्पद्यते नोपलभ्यते तु तद्भागस्याभावात्। अत एव करादिनावृतेऽपि चित्रत्वेन चित्ररूपोपलम्भोऽवयवगत-विजातीयरूपग्रहस्याभावात्। तस्य चान्वयव्यतिरेकाभ्यां तद्ग्राह्य-अकत्वात्। न चैवं त्रसरेणौ तद्ग्रहो न स्यात् अतिसूक्ष्मे तत्र तद्-ग्रहे प्रमाणाभावात्। ननु पाकजत्वेन पार्थिवरूपस्पर्शयोस्तुल्ययोग-क्षेमत्वेनैकस्योद्भवेऽपरस्याप्युद्भव उच्यते, पाकजत्वं तु गन्धेऽपि समानं, तथा च कथं रूपोद्भवे गन्धानुद्भव इति चेत्। योद्भूतस्पर्शा पृथिवी सोद्भूतरूपवती यदुद्भूतनीलरूपवत् तदुद्भूतस्पर्शमित्येव नियमस्वीकारात्। योद्भूतरूपवती पृथिवी सोद्भूतगन्धवती योद्-भूतगन्धवती सोद्भूतरूपवतीति वा नियमस्यानङ्गीकारात्। प्रथम-नियमे पृथिवीपदानुपादाने जलादौ व्यभिचारः। योद्भूतरूपवती पृथिवी सोद्भूतस्पर्शेत्येव, द्वितीयनियमोऽस्तु इति चेत्। न। नयनगत-पित्ते व्यभिचारात्। तत्रापि मणिप्रभासहचरितनीलभागे व्यभिचार इति चेत्। न। तदनभ्युपगमात्। नयनगतपित्तद्रव्यादौ व्यभिचारादेव न तृतीयनियमः। वायूपनीतचम्पकभागे व्यभिचारान्न चतुर्थोऽपि, रसेऽपि न तुल्ययोगक्षेमत्वाङ्गीकारः रसनगतपित्तद्रव्यस्योद्भूतर-सस्योद्भूतरूपत्वाभावात् प्रस्तरादेरुद्भूतरूपस्योद्भूतरसत्वाभावा-च्चेति संक्षेपः।

ननु पृथिवी यद्यनित्यैव तदाऽवयवानवस्था स्यादथ नि-त्यैव तर्हि निष्प्रमाणा स्यात् प्रत्यक्षस्य त्रसरेण्वादेरनित्यतया पृ-थिवीत्वानङ्गीकारात्। एतत्कारणतया नित्यनुमानमिति चेन्न। वि-जातीयेन कार्येण विजातीयकारणाननुमानात् गन्धवत्त्वस्य पृथिवी-लक्षणस्यातिव्याप्तिश्चेत्यत आह सा चेति। का नित्या का चानि-त्येत्यत आह परमाणुरूपेति। लक्षणा—स्वरूपा।

ननु परमाणौ प्रमाणाभावो वैशेषिकाणां प्रत्यक्षानुमानयोरे-व प्रमाणत्वात् प्रत्यक्षस्य तत्राभावाच्च लिङ्गाभावेनानुमानस्या-प्यभावात्। न च त्रसरेणोः कार्यद्रव्यतया सावयवत्वेन त-त्सिद्धिस्त्रसरेणोः कार्यत्वे प्रमाणाभावात्। तदवयवस्य पर-माणुत्वेन भवतानङ्गीकाराच्च। एवं च त्रसरेण्वादेरेव सर्गः। न च स एव परमाणुश्चाक्षुषद्रव्यतया महत्त्वादिति चेन्न। त्रस-रेणुः सावयवावयवश्चाक्षुषमहत्त्वात् घटवत् इति परमाणुद्व्यणु-

कयोः सिद्धेः । न च परमाणावपि मूर्तत्वेन सावयवत्वसिद्धिः, अनुकूलतर्काभावात् अनवस्थालक्षणस्य प्रतिकूलतर्कस्य च सद्भावात् । मूर्तत्वस्य सावयवत्वव्याप्यत्वेऽनवस्थायाः सहस्रकरेणाप्यपहस्तयितुमशक्यत्वात् । भवदनुमाने कोऽनुकूलस्तर्क इति चेत् । घटादौ चाक्षुषमहत्त्वे सावयवावयवत्वेन निरुपाधिनियतसहचारोपलंभात् । ननु तर्हि सावयवावयवावयवत्वमस्तु घटादौ चाक्षुषमहत्त्वस्य तेन तथाविधसहचारोपलम्भात् । न चानवस्था तत्रैव विश्रामादेवञ्च द्व्यणुकात् परमाणवः सन्तः । किञ्च यथा महति महत्तरस्तत्तमश्च तथा त्रसरेणुतरोऽणुतमश्चेत्यपेक्षितम् । ननु सावयवावयवत्वेनैव चाक्षुषमहत्त्वं लाघवात् न तु सावयवावयवत्वेन गौरवात् इति चेत् । ततोऽपि सावयवत्वस्य लघुत्वात् । अपि च कारणगतानि महत्परिमाणप्रशिथिलसंयोगबहुत्वानि कार्यमहत्त्वप्रयोजकानि न तु कारणस्य सावयवत्वमपि कार्यस्यैव समवायिकारणत्वात् कारणगतानां महत्त्वादीनामेवासमवायिकारणत्वात् अदृष्टादेरेव निमित्तकारणत्वात् अवयवगतस्य सावयवत्वस्य हि कोपयोगः ? न च चाक्षुषमहत्त्वम् प्रति अवयवगतं सावयवत्वं प्रयोजकत्वे प्रति(?)एषामेवोपयोगात् चाक्षुषत्वं प्रति तु उद्भूतरूपसामानाधिकरण्यस्यैव प्रयोजकत्वात्, अन्यथा वायुमहत्त्वस्य चाक्षुषत्वापत्तेः । तस्मात्सन्तु त्रसरेणोरवयवा न तु तदवयवा इति । किञ्चास्तु त्रसरेणुमहत्त्वं नित्यमेव तथाच त्रसरेण्वादिरेवायमारम्भः । न च त्रसरेणुमहत्त्वमनित्यं महत्त्वत्वे सति चाक्षुषत्वात् घटमहत्त्ववदिति वाच्यम् । अप्रयोजकत्वाच्चाक्षुषमहत्त्वे वा तदनित्यतया अनुपयोगादन्यस्याऽप्यनुकूलतर्कस्याभावात्, अन्यथाऽऽत्ममहत्त्वप्रत्यक्षत्वपक्षे प्रत्यक्षमहत्त्वेन सावयवत्वं साध्येत । तस्मान्न परमाणुद्व्यणुकयोः सिद्धिरिति ।

ननु परिमाणत्वं स्वन्यूनवृत्तिजातिव्यापकं स्वभिन्नजातिव्यापकमिति वा जात्यधिकदेशवृत्तीति वा गुणत्वसाक्षाद्व्याप्यजातित्वात् रूपत्ववत् । प्रथमसाध्यद्वयेऽभेदव्याप्त्या सिद्धसाधनवारणाय विशेषणम् । गुणत्वसाक्षाद्व्याप्यत्वं तु गुणत्वन्यूनवृत्तिजात्यन्यूनवृत्तित्वे सति गुणत्वन्यूनवृत्तित्वम् । अत्र जातीत्यनुपादानेऽसिद्धिः गुणत्वन्यूनवृत्तिसकलगुणत्वन्यूनवृत्तित्वात् । हेतौ विशेषजातिपदानुपादाने एतद्रसान्यतरत्वे व्यभिचारस्तस्य जातिपदशून्यहेतुमत्त्वेऽपि सा-

ध्यरहितत्वात्। परिमाणत्वस्य जात्यधिकदेशवृत्तित्वे च महत्त्वातिरिक्तं परिमाणमायाति तच्चाणुत्वमेव भविष्यतीति तदाश्रयसिद्धिरिति चेन्न। शुक्लत्वादिव्यापकतया रूपत्वे मधुरत्वादिव्यापकतया रसत्वे एकत्वादिव्यापकतया संख्यात्व एकपृथक्त्वादिव्यापकतया पृथक्त्वे संयोगविभागकर्मजन्यतावच्छेदकजातिव्यापकतया संयोगत्वविभागत्वयोर्दिगादिजन्यतावच्छेदकजातिव्यापकतया प्रयत्नपरत्वापरत्वयोः प्रत्यक्षत्वादिव्यापकतया बुद्धित्वे जीवनयोनियत्नादिगतजातिव्यापकतया प्रयत्नत्वत्वे जलद्रवत्वादिगतजातिव्यापकतया द्रवत्वत्वे वेगत्वादिव्यापकतया संस्कारत्वे कत्वादिव्यापकतया शब्दत्वे साध्यसत्त्वेऽपि सुखदुःखेच्छाद्वेषगुरुत्वस्नेहधर्माधर्मत्वेषु तदभावात् एष्वपि उत्कर्षापकर्षरूपा जातिस्तिष्ठतीति चेन्न। ताभ्यामत्रापि सिद्धसाधनात्। परिमाणत्वमुत्कर्षादिभिन्नजात्यधिकदेशवृत्त्याऽऽकाशगुणत्वसाक्षाद्व्याप्यजातित्वात् संख्यात्ववत् इति चेन्न। अप्रयोजकत्वात्।

ननु उपाधित्वस्याऽऽपातत उपाध्यदर्शनेन सर्वत्रसम्भवान्न तु अवयवपरंपरोत्कर्षेण परिमाणोत्कर्षदर्शनेनावयवपरंपरापरिमाणकारणम् कारणोत्कर्षेणैव कार्योत्कर्षात्तथा च त्रसरेणोरवयवपरंपरासिद्धिरिति चेन्न। त्रसरेणुपरिमाणस्यानित्यत्वात्, तस्मात् त्रसरेण्वादिरेवायमारम्भ इति सिद्धमणुपरिमाणतारतम्यमित्यादि तु प्राचीनैरेव पराभूतमिति चेत्।

अत्रोच्यते-अस्ति तावत् महत्त्वस्य महाश्रयजन्यत्वम्। तत्र महत्त्वस्य जन्यतावच्छेदकं न तन्महत्त्वमनन्तजन्यताजनकतावच्छेदककल्पनायां मानाभावेन गौरवात्। नापि महत्त्वत्वमाकाशादिपरिमाणेऽतिप्रसक्तेः। नापि उत्कृष्टमहत्त्वं तत्त्वादेव, नापि जन्यमहत्त्वम्, जन्यमेव किं महत्त्वमित्यस्य विचार्यत्वात्। अत एव न कार्यगतमहत्त्वं कार्यगतमित्यस्यानिर्धारणात्तत्रावच्छेदकस्य सम्भवे त्यागायोगाच्च। एवं चापकृष्टमहत्त्वेन लघुनाऽनुगतेनापराभूतसम्भवेन अत एव त्यागायोग्येन महत्त्वस्य कार्यता इति नाधिकपरंपरापर्यवसानम्। तत्त्वे परंपरोत्कर्षेण त्रसरेणुपरिमाणोत्कर्षापत्तेश्च। न च त्रसरेणौ महत्त्वमेव नास्ति महत्त्वोत्कर्षेण चाक्षुषत्वोत्कर्षेण तस्य तत्र कारणत्वादिति कणादमुनिनिगर्वसर्वस्वसंक्षेपः।

कार्यलक्षणायां किं प्रमाणमत आह सा चेति । ईदृशं स्वरूपं प्रत्यक्षसिद्धमेव तदेव च कार्यपृथिवीति नात्र मानापेक्षेत्यर्थः। स्थैर्य-भूयःसमयसत्ता। ननु सा निरत्ययस्थानावस्थापितपानीयप्रभृतावप्यस्ति तृतीयादिक्षणनष्टघटादौ च नास्ति तैजसे सुवर्णे वाऽस्तीति कथमसाधारण्येनोपदेश इति चेत् । यथोपायापायेऽपि भूयस्याः पृथिव्या बहुतरसमयपरीरम्भः तथा नाम्भःप्रभृतेः इत्यभिप्रायात्। स्थैर्यादीदित्यापदेन विष्टम्भकत्वजलादिव्यूहविरोधित्वयोर्ग्रहणम्।विष्टम्भकत्वं द्रव्यान्तरगतिप्रतिबन्धकत्वं तथाहि-भित्त्यादिरूपया पृथिव्या द्रव्यान्तरगतिः प्रतिरुद्ध्यते यथा वाऽन्यरूपया तिरंचं (?)प्रति तस्याधोगतिस्तथा न जलतेजोवायुभिः यथा प्रस्तरादिपाते सति जलादेः पूर्वाकारोऽपगच्छति न तथा जलादिपाते सतीति । अवयवसन्निवेशाः कम्बुग्रीवादयः, न चैतज्जलादौ तिष्ठति, अत एव पृथिव्यां व्यञ्जकसत्त्वेन भूयस्यो घटत्वादिजातय इति भावः । शयनेति । अत्राभिघातादिरूपोऽपकारो द्रष्टव्यः ।

कार्यरूपायाः पृथिव्या विभागमाह त्रिविधमिति । अत्र शरीरमिन्द्रियं विषय इति परित्यज्य शरीरेन्द्रियविषयसंज्ञकमिति प्रयुञ्जानस्य 'शब्दाधिक्यादर्थाधिक्य'मिति न्यायेन शरीरत्वादिकं न जातिरित्यभिप्रायः । तत्र शरीरेन्द्रियत्वे न जाती पृथिवीत्वादिना सङ्करप्रसङ्गात्-पृथिवीत्वस्य घटे सत्त्वेन शरीरत्वस्थाभावाच्छरीरत्वस्य जलीयशरीरे सत्त्वेन पृथिवीत्वस्याभावात् अस्मदादिशरीरे च द्वितयसत्त्वात् । एवं घटचक्षुषोः परस्परव्यभिचारवतोः पृथिवीत्वेन्द्रियत्वयोर्घ्राणे समावेशः। विषयत्वं च निस्सामान्ये सामान्यादौ सत्त्वान्न जाती। रूपादिसाक्षात्कारानन्तरमिव स्वहितादौ ब्रह्मण्यादिसाक्षात्कारानन्तरमपि सुखाद्युत्पत्तेः शत्रुप्रभृतेरभावादिसाक्षात्कारानन्तरञ्च तदुत्पत्तेः, तत्रासति भोगावच्छेदकत्वमिति न शरीरत्वं-शरीरावयवेऽतिव्याप्तेः। नाप्यन्त्यावयवित्वे सति (तत्त्वं) द्रव्यानारम्भकत्वे सति कार्यद्रव्यत्वम्। तत्र द्रव्यानारम्भकत्वे सत्यात्मनि भोगावच्छेदकत्वमिति अस्यैव व्यवच्छेदकत्वे शेषवैयर्थ्यात्, आत्मनीति च निरर्थकं-परत्र भोगाभावेनान्येनानवच्छेद्यभावात् । न च व्यर्थविशेषणवर्जितमेव लक्षणम् ,मरणोत्तरं परिमाणभेदेनोत्पन्ने शरीरान्तरेऽव्याप्तेस्तदवच्छेदेनात्मनि भोगानुत्पत्तेः । नापि आत्मविशेषगुणमनःसंयो-

गवद्न्त्यावयविमात्रवृत्तिजातिमत्त्वम्, एवं च मृतशरीरे देवदत्तत्वादिजातिसत्त्वेन नाव्याप्तिरिति वाच्यम्। देवदत्तत्वादिजातेः तादृशसंयोगशून्ये मृतशरीरेऽपि सत्त्वेन तादृशसंयोगवदन्त्यावयविमात्रवृत्तित्वाभावात्। नापि आत्मविशेषगुणकारणमनःसंयोगवद्वृत्त्यन्त्यावयविमात्रवृत्तिजातिमत्त्वम्, ज्ञानकारणमनःसंयोगवति घ्राणेन्द्रियेऽतिव्याप्तेर्घ्राणमनःसंयोगस्य ज्ञानकारणत्वेन घ्राणस्यान्त्यावयवित्वेन घ्राणत्वस्य जातित्वेन सर्वोपपत्तेरिति चेन्न। प्रयत्नकारणमनःसंयोगवद्वृत्त्यन्त्यावयविमात्रवृत्तिजातिमत्त्वस्य शरीरत्वरूपत्वात्। घ्राणमनःसंयोगस्तु न यत्नकारणम्। अन्त्यावयविमात्रवृत्तिजातिमत्त्वविवक्षायां घटादावतिव्याप्तिः तदर्थं प्रयत्नकारणमनःसंयोगवृत्तीति जातिविशेषणम्। मनःसंयोगवद्वृत्तीत्युक्तौ घटादावेव गच्छति मुक्तात्मनः संयोगवति घटादौ घटत्वादीनां सत्त्वात्। मात्रपदादाने घटादावेव जातिप्रयत्नकारणमनःसंयोगवति शरीरेऽन्त्यावयविनि सत्याः पृथिवीत्वजातेर्घटादौ सत्त्वात्। अन्त्यावयविमात्रवृत्तित्वं तु तस्य नास्ति परमाणुपर्याप्तत्वात्।

इन्द्रियं साक्षात्प्रतीतिसाधनं शरीरसंयुक्तमतीन्द्रियमिति न–प्राणवायावतिव्याप्तेः, किन्तु स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वम्। ज्ञानकारणमनःसंयोगाश्रयत्वमात्मन्यपीति स्मृत्यजनकत्वं ज्ञानकारणसंयोगविशेषणम्। स्मृत्यजनकत्वं स्मृतिजननस्वरूपायोग्यत्वं तेन स्मृत्यनुपहितात्ममनःसंयोगेन नातिव्याप्तिः। यद्वा स्मृत्यजनको यो ज्ञानकारणमनःसंयोग इत्यादिरर्थः। उभयथाऽपि चात्मनि न याति–आत्ममनःसंयोगस्य ज्ञानमात्रकारणत्वेन स्मृतियोग्यत्वात्, आत्ममनसोर्ज्ञानमात्रकारणत्वेन तत्संयोगत्वस्य स्मृत्यजनकत्वेऽसत्त्वाच्च। मनसि तु मनश्चक्षुरादिसंयोगमादाय लक्षणगमनम्–चक्षुर्मनःसंयोगस्य स्मृत्यजनकत्वात् स्मृत्यजनकेऽपि चक्षुषि सत्त्वाच्च। ननु त्वच्यव्याप्तिस्त्वचो ज्ञानमात्रकारणत्वेन त्वङ्मनःसंयोगस्य स्मृतिजनकत्वात् स्मृत्यजनके सत्त्वाच्चेति चेत्। न। त्वचो ज्ञानमात्रकारणत्वानभ्युपगमात्। ज्ञानकारणपदानुपादाने पण्डमनःसंयोगमादाय घटादावतिव्याप्तिः, मनःपदानुपादानेऽपि तादृशचक्षुरादिसंयोगसत्त्वात्। त्वचो ज्ञानमात्रजनकत्वपक्षे तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकार-

णमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । अत्र शब्देतरपदं श्रोत्रेऽव्याप्तिवारणाय । ननु भागासिद्धिवारकं विशेषणं हेतौ नोपादीयते व्याप्तिग्राहकस्यैव सार्थकत्वात् ,तत्कथमेवमिति चेत् । अखण्डाभावे वैयर्थ्याभावात् । अखण्डाभावे न वैयर्थ्यमित्यत्र किं बीजमिति चेत् । अखण्डाभावे न वैयर्थ्यमित्यस्य त्वयमर्थोऽखण्डो निर्विशेषणो योऽभावस्तत्र न वैयर्थ्यमिति । एवं च यदि सविशेषणमभावः स्यात् तदा तस्मिन् व्यर्थीकृतेऽप्यभावावस्थितेः स्याद्विशेषणवैयर्थ्यम् । भवति तु प्रतियोगिनो विशेषणत्वम् , एवञ्च तस्मिन् खण्डीकृते पूर्वं विशिष्टस्येदानीमविशिष्टस्य प्रतियोगितया प्रतियोगिभेदेनाभावभेदात् पूर्वतनाभावानवस्थितेः क्व विशेषणवैयर्थ्यम् । तदेव हि विशेषणं व्यर्थं यस्मिन् व्यर्थीकृते विशेष्यभागस्तिष्ठतीति, नचात्र तथा, विशिष्टप्रतियोगिकादविशिष्टप्रतियोगिकस्य भिन्नस्यैवोपगमात् , यत्र तु अभावस्यैव साक्षाद्विशेषणमुपादीयते तत्र वैयर्थ्यं भवत्येव । यथा पर्वतोऽयमग्निर्धूमः प्रस्तरमयत्वे सति निर्वह्नित्वादित्यत्र । अत एव यत्राभावस्य प्रतियोग्यवखण्डते तत्रापि वैयर्थ्यं भवत्येव यथायं प्रमेयो वह्न्यभावादित्यत्र, उभयत्र विशेषणखण्डनेऽपि विशेष्यावस्थितेः । एवं च यत्राभावस्तद्विशेषणस्तत्र सम्भवे विशेषणवैयर्थ्यं भवति न तु अभावप्रतियोगिविशेषणवैयर्थ्यं प्रतियोगिभेदेनाभावभेदात् । एवं च विशेषणवैयर्थ्यबीजं विशेष्यावस्थितिरेव तदभावात् अखण्डाभावे न वैयर्थ्यमित्यभिप्रायात् । प्रकृतविशेषणनिर्वाहस्य वैयर्थ्यबीजस्याभावात् प्रतियोगिभेदस्याभावात् प्रतियोगिभेदस्याभावभेदप्रयोजकतया प्रमाणसिद्धत्वेन प्रकृते विशेष्यस्यैवानवस्थितेः । तस्मादखण्डाभावे न वैयर्थ्यं शब्देतरपदस्येति सिद्धम् ।

केचित्तु विशेषणं त्रिविधं-संकोचकं विकाशकमनुभयं च । संकोचकं सुरभिधूमादित्यादौ धूमान्तरस्य विशेषणेन व्यावर्तनात् विकाशकं प्रमेयत्वादित्यादौ प्रमाविषयत्वेन घटादिसाधारणहेतुप्राप्तेस्तदन्तर्गतप्रमात्वेन तु गृह्यमाणेन तदप्राप्तेः । अनुभयं द्रव्यधूमादित्यादौ,द्रव्यपदेन संकोचस्य विकाशस्य वाऽकरणात् । तत्र संकोचकस्यानुभयस्य च विशेषणस्य भवतु वैयर्थ्यं विकाशकस्य तु न तत् अधिकरणान्तर्भावेन विकाशके विशेषणे सति हेतोर्व्याप्तिर्गृह्यते तत्परिहारे तदधिकरणान्तर्भावेन तदग्रहणात् , अन्यथा प्रमाविषयत्वादित्यत्र शेष-

वैयर्थ्येन प्रमाणत्वादित्येव क्रियेत घटादिरूपहेत्वधिकरणाप्राप्तिर्हि तद्वैयर्थ्यमूलम् । एवं च शब्देतरपदानुपादे श्रोत्रसाधारणहेतोरभावात् विकाशकतया तद्विशेषणमुपादेयम् । एवमुद्भूतविशेषगुणानाश्रयत्वे सतीत्यादिर्हि हेतुः श्रोत्रे नास्ति शब्देतरेत्यादिस्त्वस्ति । तथा च विकाशतया सार्थकतैवेत्याहुः ।

लक्षणेन द्विधा भेदसाधनम् । लक्ष्यं पक्षीकृत्य लक्षणे यथा पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ । इतरत्पक्षीकृत्य लक्षणव्यतिरेकेण यथा इतरे पृथिवीनिष्ठभेदप्रतियोगिनः पृथिवीत्वाभावादित्यादौ। एवञ्च प्रकृतेऽपीतरे इन्द्रियनिष्ठभेदप्रतियोगिन उद्भूतविशेषगुणानाश्रयत्वसमानाधिकरणज्ञानकारणमनःसंयोगाश्रयत्वाभावादिति हेतौ श्रोत्रे व्यभिचारस्तत्र हेतुभावेपीन्द्रियनिष्ठभेदप्रतियोगित्वाभावात्तथा चानेन न्यायेन व्यभिचारवारकतयैव शब्देतरपदस्य सार्थकत्वं तद्गर्भहेतुभावस्य श्रोत्रेऽभावादिति तत्त्वचिन्तामणौ पक्षधरमिश्राः । तदतत्त्वम् । एवं हीन्द्रियमितरेभ्यो भिद्यत इत्यनेन प्रकारेण भेदसाधने वैयर्थ्यानपायात् । आत्मत्वमितरभिन्नवृत्तीत्यादिज्ञानस्य मोक्षाद्युपयोगित्वेन बहुषु स्थलेषु प्राप्ततया लक्ष्यविशेष्यकज्ञानस्यैव मोक्षकांक्षिभिरपेक्षितत्वेन तत्रैव वैयर्थ्यसमाधानस्योचितत्वाच्च । अन्यथा गन्धसहचरितरूपवत्त्वमपि पृथिव्या लक्षणं स्यात् । इतरे पृथिवीनिष्ठभेदप्रतियोगिनो गन्धसहचरितरूपाभावादित्यत्राखण्डाभावे वैयर्थ्याभावात् । विशेषणत्याग इव विशेष्यत्यागेऽपि प्रतियोगिभेदनाभावभेदात् । पृथिवीपक्षकानुमाने वैयर्थ्यमेवेति न तथा लक्षणमिति यदि, तदा प्रकृतेऽपि तुल्यम्–इन्द्रियपक्षकानुमाने वैयर्थ्यानुद्धारात् । यदपि प्रमाविषयत्वादित्यत्रैव विकाशकतया न वैयर्थ्यम् , तदपि न विचार्यमाणं चतुरचेतसां चमत्कारमाचरति, तथासति भागासिद्धिवारकं विशेषणं व्यर्थमिति शास्त्रसिद्धान्ताय जलाञ्जलिर्वितीर्येत-भागासिद्धिवारकस्य विकाशकत्वादेव, प्रमाविषयत्वादित्यत्र तु प्रमात्वादिति न हेतुः यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात् ।

ननु विकाशकत्वादवैयर्थ्यात्(?) यन्निष्ठा व्याप्तिर्येन विशेषणेन विना गृहीतुं न शक्यते तत्सार्थकं, यथा व्यभिचारवारकं यथा वाऽप्रसिद्धिवारकम् , न चैतत्सार्थकताप्रयोजकं प्रकृते सम्भवति तेन विनापि व्याप्तिग्रहसम्भवात् । न च यदधिकरणान्तर्भावेन

व्याप्तिर्येन विशेषणेन विना गृहीतुं न शक्यते तद्धेत्वाधिकरणमादाय व्याप्तिग्रहार्थं तद्विशेषणसार्थकयामत्यादि सार्थकताप्रयोजकं कल्प्यमिति वाच्यम्। हेतुव्याप्तिग्राहकस्यैव सार्थकत्वेऽस्य सार्थकत्वे मानाभावात्। हेतोर्व्याप्त्यग्रहेऽनुमानाप्रवृत्तेरिवाधिकरणविशेषान्तर्भावेन व्याप्तिग्रहेऽनुमानाप्रवृत्तेरभावेन तद्ग्राहकविशेषणस्यैव वैयर्थ्यात्, तस्मादखण्डाभावे न वैयर्थ्यमित्येव समाधानं पितृचरणानुमतमस्मदनुमतम्। लक्षणेन स्वप्रवृत्तिनिमित्तको व्यवहारः साध्यते, न चोद्भूतविशेषगुणानाश्रयत्वे सतीत्यादिप्रवृत्तिनिमित्तक इन्द्रियव्यवहारः प्रसिद्धो येन तथानुमानं स्यात् इति व्यवहारसाध्यकानुमानसिद्धये तथा लक्षणमिति कश्चित्। तदपि विपश्चिद्विवक्षितमिव व्यतिरेकसाधने तथापि वैयर्थ्यात् गन्धवत्त्वे स्वाप्रवृत्तिनिमित्तकपृथिवीव्यवहारस्यैव साधनेन लक्षणेन स्वप्रवृत्तिनिमित्तको व्यवहारःसाध्यते इति नियमाभावाच्च, तस्मादभावप्रतियोगिविशेषणे न वैयर्थ्यमित्येव शब्देतरपदार्थसार्थकताबीजमिति संक्षेपः।

आश्रयत्वं घटादावपि घटत्वादिसत्त्वात् संयोगाश्रयत्वमपि आकाशादिसंयोगाश्रयत्वात् कारणसंयोगाश्रयत्वमपि कर्मकारणनोदनाभिघाताश्रयत्वात् ज्ञानकारणसंयोगाश्रयत्वमपि चक्षुःसंयोगाश्रयत्वात् मनःसंयोगाश्रयत्वमपि पण्डमनःसंयोगकारणकपालमनःसंयोगाश्रये कपालेऽतिव्याप्तिश्च तदर्थं ज्ञानकारणमनसंयोगाश्रयत्वम्। इदानीमात्मादौ गतं तदर्थं शब्देतरोद्भूतविशेषगुणत्वे सतीति। अत्रानाश्रयत्वे सतीत्याद्यप्रसिद्धं गुणानाश्रयत्वे सतीत्याद्यपि, विशेषगुणानाश्रयत्वे सतीत्यादि तु मनसि प्रसिद्धमेव चक्षुरादौ च न याति तदर्थमुद्भूतेत्यादि। इदानीं श्रोत्राव्यापकं तदर्थं शब्देतरेति। ननु विशेषेति व्यर्थं शब्देतरोद्भूतगुणानाश्रयत्वे सतीत्यनेन सर्वसामञ्जस्यात् संख्यादेरपि चक्षुरादावनुद्भूतत्वादिति चेन्न। अखण्डाभावे वैयर्थ्याभावादित्येके। द्रव्यादावाश्रयप्रत्यक्षाप्रत्यक्षत्वाभ्यामेव प्रत्यक्षाप्रत्यक्षत्वयोः सम्भवेनाप्रत्यक्षत्वप्रयोजकतयाऽनुद्भूतत्वमित्युद्भूतत्वमेव चक्षुरादिसंख्यायामिति विशेषपदमिति वस्तुगतिः।

प्रतीयमानतया भोगसाधनत्वं विषयत्वम्। अत्र यदि प्रतीतिपदेन साक्षात्कारो विवक्षितस्तदा वायोर्विषयत्वादौपचारिकं तत्स्पर्शस्य

विषयत्वम् नो चेत् सोपि विषय इति ।

तत्र शरीरमिति । तत्र—शरीरादिषु पृथिव्यामेवैतत् जलादिशरीरस्यायोनिजत्वात् । पृथिवीत्वं शरीरारम्भकवृत्ति द्रव्यारम्भकवृत्तिद्रव्यत्वन्यूनवृत्तिजात्यन्यूनवृत्तिजातित्वात् जलवत् । अत्रात्मत्वादौ व्यभिचारवारणाय द्रव्यारम्भकवृत्तीति । द्रव्यारम्भकवृत्तिजातित्वादित्युक्तौ तन्तुत्वादौ व्यभिचारस्तदर्थं द्रव्यत्वन्यूनवृत्तिजात्यन्यूनवृत्तीति । ननु द्रव्यत्वन्यूनवृत्तिजात्यन्यूनवृत्तीत्युक्तौ पृथिवीत्वेऽपि न याति मूर्तत्वादिन्यूनवृत्तित्वात् । आरम्भकपदस्य समवायिकारणपरतयाऽऽत्मत्वादौ व्यभिचारवारणाय द्रव्यपदम् तस्यापि सुखादिसमवायिकारणत्वात् । शरीरेतरमात्रारम्भकत्वे व्यभिचारवारणाय जातित्वादिति, तद्धि न शरीरारम्भकवृत्तीति । ननु द्रव्यत्वन्यूनवृत्तिजात्यन्यूनवृत्तित्वं द्रव्यत्वन्यूनवृत्तिजातिसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्, तच्च शरीरेतरमात्रारम्भकत्वेनाऽस्त्येव शरीरावयवे ऽसत्त्वात्तथाच कथं तत्र व्यभिचार इति चेन्न । एवं हि पृथिवीत्वस्यापि द्रव्यत्वन्यूनवृत्तिजातिन्यूनवृत्तित्वं स्यात् जलत्वादिसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । तथा च यद्यज्जातिप्रतियोगिकात्यन्ताभावसमानाधिकरणम् यद्यज्जातिसमानाधिकरणात्यन्ताभावप्रतियोगि तत्तज्जातिन्यूनवृत्ति,न च शरीरेतरमात्रारम्भकत्वं तथा पृथिवीत्वाद्यत्यन्ताभावसमानाधिकरणत्वात्,अन्यथा भूतत्वमूर्तत्वयोर्मिथो न्यूनवृत्तिता स्यात्, परस्परसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । अत एव यद्यत्समानाधिकरणं यद्यत्समानाधिकरणात्यन्ताभावप्रतियोगि तत्तन्न्यूनवृत्तीत्यपि न,भूतत्वमूर्तत्वयोः परस्परन्यूनवृत्तितापत्तेः। न चेष्टापत्तिः, अव्यवहारात्, तस्माद्यद्यत्प्रतियोगिकात्यन्ताभावासमानाधिकरणम् यद्यत्समानाधिकरणात्यन्ताभावप्रतियोगि तत्तन्न्यूनवृत्ति, न चैवं शरीरेतरमात्रारम्भकत्वं पृथिवीत्वादिसमानाधिकरणात्यन्ताभावप्रतियोगित्वेऽपि पृथिवीत्वादिप्रतियोगिकात्यन्ताभावसमानाधिकरणत्वात्, एवं च द्रव्यारम्भकपालादिवृत्तौ द्रव्यत्वन्यूनवृत्तिजात्यन्यूनवृत्तौ शरीरेतरमात्रारम्भकत्वे व्यभिचारवारणाय जातित्वादिति । यदि च मानुषशरीरस्य गन्धवत्तया पृथिवीत्वे सिद्धे पृथिव्याः शरीरारम्भकत्वं सिद्धमेव, तदा पृथिवीत्वमयोनिजशरीरारम्भकवृत्तीत्याद्येवानु-

मानम् । न च दृष्टान्तासिद्धिः, पूर्वनयेनैव पृथिवीत्वदृष्टान्तेन जलस्य शरीरारम्भकत्वप्रसाधने तत्रैव पर्याप्तेर्जलादौ शुक्रशोणितयोः पार्थिवत्वानियमेन योन्यसम्भवात् । एवं च पार्थिवशरीरस्याध्यक्षसिद्धतया तद्दृष्टान्तेन जलीयशरीरं प्रसाध्य तस्य च योनिजत्वपर्यवसानेन तद्दृष्टान्तेन पार्थिवायोनिजशरीरसाधनम् ।

यत्तु स्वर्गस्य सुखविशेषतया शरीरसापेक्षतया तस्य शरीरस्य योनिजत्वे तदवच्छेदेन गर्भवासादिदुःखोत्पत्तौ स्वर्गित्वं व्याहत्याऽयोनिजपार्थिवशरीरासिद्धिः दुःखानवच्छेदकशरीरावच्छेद्यसुखस्यैव स्वर्गत्वादिति लीलावत्यां वल्लभाचार्याः।तन्न,स्वर्गिणां जलीयादिशरीरेणाऽप्यन्यथासिद्धिः सम्भवति, न हि तेषां पार्थिवत्वं कुतोऽपि सिद्ध्यति येन स्वर्गानुरोधेनायोनिजत्वे पर्यवसानं स्यात्, न हि जलीयादिशरीरं वरुणादिलोक एवेत्यत्र मानमस्ति येन पुरंदरादिपुरे पार्थिवशरीरस्यैव सिद्धिः स्यात् । तस्मादुक्तनयेनैव पार्थिवायोनिजशरीरसिद्धिः । एवं च सुखानवच्छेदकं शरीरावच्छेद्यं दुःखान्तरम्, तदनुरोधेनापि न पार्थिवायोनिजशरीरसिद्धिः । योनिस्पर्शसुखवारणाय हि तथा कल्प्यत । तत्र च मातापित्रोर्योनिस्पर्शसुखेऽपि पुत्रस्य नारकीयत्वमुपपद्यते । जलीयादिशरीरेणान्यथासिद्धिश्च कथं वारणीया । एवञ्च स्पर्शवत्परमाणुत्वेन साक्षात्परंपरासाधारणशरीरादिभेदभिन्नद्रव्यमात्रसमवायिकारणतायां लाघवेन सिद्धायां सर्वेषां परमाणूनां शरीरेन्द्रियविषयान् प्रति स्वरूपयोग्यत्वेनादृष्टविशेषसहकारिणमासाद्य कदाचिच्छरीरं कदाचिदिन्द्रियं कदाचिद्विषयानारभन्ते तथा च जलादिपरमाणूनां शुक्रशोणितासम्भवे योनिजारंभकत्वमेव, पार्थिवानां तु यदा यथाऽदृष्टं तदा तथाऽऽरम्भकत्वं तेषां शुक्रशोणितनिरपेक्षाणां विषयाद्यारम्भकत्ववत शरीरारम्भकत्वस्याऽपि सम्भवात् । कृमिमशकादिशरीराणां च पार्थिवानां योन्यनपेक्षत्वमध्यक्षसाक्षिकमेवेति संक्षेपः ।

ननु शरीरस्य पाञ्चभौतिकत्वश्रुतेः कथमेकसमवायिकारणकं शरीरम्? न चैकस्य समवायिकारणतयाऽन्येषां निमित्तकारणतया च तदुत्पत्तिरिति भूतकारणकत्वेनापि भौतिकत्वोपपत्तेः पञ्चभूतसमवायिकारणत्वस्याश्रुतेरिति वाच्यम् । विनिगमनाभावेनाकाशव्यतिरिक्तानां निमित्तकारणत्वे प्रमाणाभावात्, आकाशस्य तु निःस्पर्शतया

द्रव्यसमवायिकारणत्वाभावेन श्रुतिसिद्धकारणत्वस्य निमित्तकारणत्वात्। न च भूतचतुष्कसमवायिकारणस्य शरीरकस्य न यथासम्भवमेकैकभूतात्मकत्वं विनिगमनाभावादेकारब्धस्यैवापरारभ्यत्वे तत्त्वस्यापि प्रसङ्गात्, नापि चतुरात्मकत्वं पृथिवीत्वादीनां व्याप्यवृत्तित्वे जातिसंकरप्रसङ्गात् अव्याप्यवृत्तित्वे अव्याप्यवृत्तित्वस्यापि प्रसङ्गादिति वाच्यम्। चित्रस्य सप्तमरूपस्येव दशमद्रव्यस्य स्वीकुर्वतुमर्हत्वादिति चेन्न। चित्रद्रव्यान्तरकल्पनापेक्षयैकैकसमवायिकारणकत्वस्य मन्तुमुचितत्वात्। तत्र मानुषादिशरीरे पृथिवीसमवायिकारणकत्वमेव गन्धस्य यावद्द्रव्यभावित्वात् भस्मारम्भकत्वाच्च। जलादिगुणानां यावत्सत्त्वं मानुषादिशरीरेऽनुपलब्धेः। एवं च पाञ्चभौतिकत्वप्रसिद्धिः शरीरे प्रमाणप्रापितापि न पञ्चसमवायिकारणकत्वेनाकाशमादायानुपपत्तेः, किन्तु पञ्चकारणकत्वेन, सा च भावकार्यतया समवायिकारणत्वेन विनाऽनुपपन्ना सम्भाविनाञ्चतुर्णां मिलितानां निरुक्तनयेन तत्त्वासम्भवेनैकस्य समवायिकारणत्वे पर्यवस्यति। तत्र पृथिवीवर्तिनां विना बाधकं पृथिवीत्वमेवोचितमनुग्राहकस्य पाकजरूपादेः सत्त्वात्, न हि यत्कनकनिकषगौरमङ्गमतिशयेन तदातपान्तश्यामं नोपलभ्यते। एवं वरुणलोकादौ जलादिशरीरमनुसञ्चर(?)तस्यापि स्पर्शवत्परमाणुत्वेन त्रिविधकार्यारम्भकत्वेन शरीरारम्भकत्वाज्जलीयादिशरीरस्य च वरुणलोकादावेवोचितत्वात्। अनेनैव न्यायेन विषयादिरूपेऽपि पृथिव्यादौ न विजातीयारम्भकत्वम्। वृक्षतृणादेस्तु शरीरत्वं श्रुतिसिद्धमपि श्रीमदाचार्यैः किरणावल्यामनुमानेन साधितं तत्रैवानुसन्धेयमिति दिक्।

देवर्षीणां–देवानां ऋषीणाम्। 'अणुभ्यः' इति मूलकारणनिर्देशः। यातनानारकिणां नरकपीडा तस्यै दंशादिद्वारेण क्षुद्रजन्तूनां मशकादीनां शरीराणि अयोनिजान्येव न तु मशकादीनां नरकपरतया व्याख्येयम्, तेषां सुखभागितयाऽनारकित्वादिति भावः। नारकिशरीरमपि अयोनिजमेवेति द्रष्टव्यम्।

ननु योनिशब्देन कारणग्रहणे कथं द्वैविध्यमत आह शुक्रेति। सन्निपातः–सम्बन्धः, गर्भवेष्टनञ्चर्मपुटकं जरायुः। पशवो–ग्राम्याश्चतुष्पदाः, आरण्या–मृगाः। सरीसृपाः–परितः सर्पणशीलाः सर्पादयः। इन्द्रियमिति। घ्राणं पार्थिवमिन्द्रियं तच्च सर्वप्राणिनां न तु कस्यचित्

घ्राणं पार्थिवं कस्यचिदन्यदीयम्, तस्य च पार्थिवत्वे बीजं गन्धव्यं- जकमित्यनेनोक्तम् । प्रमाणञ्च–गन्धोपलब्धिरिन्द्रियजा जन्यसा- क्षात्कारत्वात्सुखोपलब्धिवदित्यनेन गन्धोपलम्भकेन्द्रियसिद्धौ तदि- न्द्रियं पार्थिवं गन्धवत्त्वाद् घटादिवद् । गन्धवत्त्वात् रूपादिषु गन्धमात्र- व्यञ्जकद्रव्यत्वाद्वायूपनीतचम्पकभागवत्तस्य स्पर्शादीनामतीन्द्रियत- या तेषु गन्धमात्रव्यञ्जकत्वात्तेन संयोगं विना संयुक्तसमवायाभावेन गन्धाग्रहे गन्धव्यञ्जकत्वस्य सुस्थिरत्वात् (?) । द्रव्यत्वादित्यनुक्तौ स- न्निकर्षे व्यभिचारो मात्रपदानुपादाने मनसि गन्धमात्रव्यञ्जकद्रव्य- त्वादेतावत्प्रसिद्धिः गन्धत्वादेरप्यभिव्यञ्जकत्वात् । न चाप्रसिद्धे व्याप्तिग्रहः सम्भवतीति रूपादिषु गन्धमात्रव्यञ्जकद्रव्यत्वादिति हेतूकृतम् । एवं च रूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वादिति पर्याप्तम् । तत्रादिपदं व्यर्थं रूपाव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वा- दित्यनेनैव मनःप्रभृतौ व्यभिचारवारणेन सामञ्जस्यात् । धर्मिसा- धकानुमाने तु गन्धजन्यसाक्षात्कारः पक्षोऽसाधारणेन्द्रियजन्यत्वं साध्यं, तेन नानुमित्यादौ बाधो न वा मनसार्थान्तरम् । न च दृष्टा- न्तासिद्धिर्ज्ञानमात्रे मनसः साधारण्येऽपि सुखोपलब्धावसाधार- णत्वात् । जलाद्यनभिभूतैरित्यनेन कस्यचिद् घ्राणस्य यद्गन्धानभि- व्यञ्जकत्वं तत्र युक्ति रुक्ता, अत एव स्वतोऽपि श्लेष्माभिभूतं न ग्राहकमिति भावः । यत्तु यदि पृथिव्या गन्धाभिव्यञ्जकत्वं तदा सर्वस्या कुतो न भवति इत्याशङ्कायामेतदुत्थापनम् । तन्न शोभनम् । एवं हि घटादिरूपायाः पृथिव्या अग्राहकत्वे बीजत्वेनाभिभूतावयव- त्वमुक्तं भवति । न चैतत्सम्भवति, सर्वस्यास्तथात्वे मानाभावात्, स्वभावस्यापर्यनुयोज्यत्वे तथा पूर्वपक्षानवकाशाच्च, तथा च यदि किञ्चिद् घ्राणमुत्पत्तिमारभ्यैवाग्राहकं तदा तत्समाधानं कदाचित्त्व- ग्राहकत्वे दोषोपप्लुतत्वेनेति तत्त्वम् ।

विषयस्त्विति । अत्र द्व्यणुकादिप्रक्रमेणारब्ध इत्यनेन परमा- णुसमूह एव घटादिरिति नास्तिकादीनां सिद्धान्तवादोऽपाकृतः । सांख्यानां परिणामवादो वेदान्तिनां विवर्तवादश्च द्व्यणुकादिः सृष्टि- प्रक्रम इत्युक्तया महदादिः स इति निरस्तम् । परमाणुभिरेव क्रमि- कसंख्याप्रकर्षेण द्व्यणुकादिसृष्टिरिति च निरस्तम् । परमाणुभ्यां द्व्यणुकमारभ्यते द्व्यणुकैस्त्र्यणुकमित्यादि विवक्षणात् । परमाणु-

समूहस्य घटत्वे प्रत्यक्षत्वं न स्यात्। परमाणोः परमाणुत्वेनैव अप्रत्यक्षत्वात् लाघवात् अमिलितपरमाणुत्वेन तथात्वे गौरवात्, भवन्मते मिलितपरमाणुद्वयस्य प्रत्यक्षतापत्तेश्च।

ननु भवन्मते यथा महत्त्वे सत्युद्भूतरूपवत्त्वेन द्वयोर्मिलितयोरपि न प्रत्यक्षता बहुत्वाभावात्, एवं बहूनाममिलितानामपि मिलितत्वाभावाद् एवं बहूनां चक्षुरादिरूपतया मिलितानामपि उद्भूतरूपाभावात् इति चेन्न। मिलितत्वं हि समुदायत्वं परस्परसम्बन्धत्वं वा? नाद्यः—व्यस्तानामपि समुदायत्वसम्भवात्। न द्वितीयः—घटाद्यनाकारेणाप्येकत्र स्थितया परमाणूनां मिलितत्वसम्भवात्। घटाद्याकारेण मिलितत्वं विवक्षितमिति चेन्न। आकारविशेषस्य परमाणुभिन्नस्य स्वीकर्तव्यत्वे घटादेरेव स्वीकर्तव्यत्वात्—अविशेषात् प्रत्यक्षं प्रति। कुर्वद्रूपाः परमाणवः प्रत्यक्षा इति चेत्। कुर्वद्रूपत्वस्य क्षणिकतावादे निरसनीयत्वात्। यत्त्वेकत्वप्रत्ययानुपपत्तिः स्थूलत्वावभासाऽनुपपत्तिश्चावयविनि मानमिति। तत्र धान्यादिराशिवदुपपत्तेः(१)। किंच महत्त्ववान् घटो रूपवान् घट इत्यादिप्रतीतिसिद्धान्तात् महत्त्वादीनां प्रत्यक्षत्वप्रयोजकत्वमुचितं न त्वप्रामाणिकस्य कुर्वद्रूपत्वस्य। न चावयविसिद्धौ सकम्पत्वाकम्पत्वे आवृतानावृतत्वे रक्तत्वारक्तत्वे च विरुद्धे कथमेकत्र स्यातां परमाणुसमूहत्वे च केषुचिदेषु विधिः केषुचिद्धानिः उपपद्यते इति वाच्यम्। अवयविक्रियाया अवयवक्रियाऽविनाभूतत्वेन पाण्यादेरेकस्य सकम्पत्वेऽपि शरीरस्य निष्कम्पत्वात् सकम्पत्वासकम्पत्वयोर्विरोधाभावात् आवृतत्वं यदि सर्वावच्छेदेन चक्षुरादिसम्बन्धप्रतिबन्धकद्रव्यवता तदा साऽऽवृतेर्नास्त्येव। यदि च किञ्चिदवच्छेदेन सा तदा व्यवधायकद्रव्यसंयोगस्याव्याप्यवृत्तितया भावाभावावेकत्रोपपन्नावेव। एवं महारजनसंयोगस्याव्याप्यवृत्तितया रक्तत्वारक्तत्वेऽपि न विरुद्धे। ननु पाणिकम्पे शरीरस्याकम्पत्वे परदेशे पाणिसंयोगे शरीरसंयोगो न स्यात् कारणस्यान्यतरकर्मादेरभावादिति चेत्। कारणाकारणसंयोगेनैवोपपत्तेः, स एवायं वृक्ष इति मूलशाखयोः प्रत्यभिज्ञानाच्चावयविसिद्धिः। न च सैवैषा प्रदीपशिखेति वदुपपत्तिः, तत्र परिमाणभेदस्य विरुद्धधर्मस्य संसर्गस्य भेदकत्वात्। परिमाणा·

(१) अत्र पाठस्त्रुटित इव दृश्यते।

न्तरोत्पत्तिर्हि पूर्वपरिमाणनाशे सति भवति, न च पूर्वपरिमाणनाशो द्रव्यनाशं विनेति। ननु पाणिकम्पे शरीरस्य निष्कम्पतायां पूर्वदेशे पाणिविभागे शरीरस्य विभागो न स्यादिति चेन्न। कारणाकारणविभागेनैव तदुपपत्तेः। न च शरीरस्यावयवित्वे किञ्चिदवच्छेदेन पूर्वदेशविभागे किञ्चिदवच्छेदेन पूर्वदेशसंयोगो न स्यादिति वाच्यम्। तयोरव्याप्यवृत्तित्वेन तथोपपत्तेः तस्मात्प्रारम्भवाद एव न संघातवाद इति सिद्धम्। तात्त्विकोऽन्यथाभावः परिणामोऽतात्त्विकोऽन्यथाभावो विवर्त इति तु मतद्वयं कार्यकारणयोरभेदं भेदमादाय वा? आद्ये कार्यकारणभावानुपपत्तिः। द्वितीये प्रारम्भवाद एव पर्यवसानात्। अन्यथा भावो जन्यत इति चेत्। तस्यापि भिन्नत्वेऽभिन्नत्वे चोक्तोत्तरत्वात्। महदादिसर्ग इति तु महदादौ प्रमाणसापेक्षम् त्र्यणुकादौ प्रत्यक्षसत्त्वेन द्व्यणुकस्यापि अनुमानगम्यतया नास्मत्पक्षे प्रमाणापेक्षा। परमाणव एव वाऽन्तराले द्रव्यमासाद्य तत्तत्कार्यजनका इति त्ववशिष्यते। तत्रेदमुच्यते-परमाणूनामाहत्य घटाद्यारम्भकत्वेऽवयवानामतीन्द्रियत्वेन तत्संयोगरूपस्य कंबुग्रीवादेरप्रत्यक्षत्वापातात्। आन्तरालिककार्यजनने च तेषामनुपलम्भापत्तिः। न च परमाणुर्द्व्यणुकमारभ्य त्रसरेणुमारभते, एवं त्रसरेण्वादिकमारभ्य चतुरणुकादिकम्, तथाच नान्तरालिककार्यानुपलब्धिः। न च कपालादिसंयोगरूपस्य कंबुग्रीवादेरनुपलब्धिः कपालाद्यारभ्य घटाद्यारम्भादिति वाच्यम्। परमाणोस्त्रसरेण्वादिस्वरूपयोग्यत्वे द्व्यणुकाद्यनारभ्याप्यारम्भकत्वापत्तेः। आरब्धद्व्यणुकत्वेन त्र्यणुकारम्भकतेति चेत्। लाघवेन द्व्यणुकत्वेनैव तथात्वौचित्यात्। द्व्यणुकपरमाणुभ्यां द्व्यणुकारम्भ इति चेत्। तथापि गौरवात्, द्रव्ये संयुक्तानामेव समवायिकारणत्वात् परमाणुद्व्यणुकयोश्च समवायत्वात्, मूर्तानां समानदेशताविरोधेन द्व्यणुकादत्र्यणुकाद्योः परमाणावसम्भवाच्च। अवयवावयविभावानापन्नयोर्निबिडयोर्मूर्तयोर्यदवच्छेदेनैकस्य वृत्तिस्तदवच्छेदेनापरस्य वृत्तिविरोधात्। घटसत्त्वस्थले कपालसत्त्वादवयवावयविभावानापन्नयोरिति। चक्षुरालोकयोरेकत्र सत्त्वान्निबिडयोरिति। ननु संयोगेनैव मूर्तानां समानदेशताविरोध इह तु समवायेन वृत्तिरिति चेन्न। समवायेन क्वचित्तथा वृत्त्यदर्शनेन संयोगेनेत्युपादानस्यानौचित्यादिति संक्षेपः।

मृत्त्वादयो जातिविशेषा इत्याचार्याः। तत्रेति। भूप्रदेशा-भूभागाः। प्राकारेष्टकादयश्च मृत्तिकारूपा विकारा इत्यर्थः। भूभागग्रहणेन भुवोऽपि ग्रहणम्। उपलाः-सुलभपाषाणाः, मणयो-माणिक्यप्रभृतयः। वज्रं-हीरकम्, आदिपदेन गैरिकाद्याः। स्थावरा इति। वृक्षाः-स्कन्धशाखाशालिनः पुष्पफलभाजः, तृणान्युलपादीनि प्रसिद्धानि। फलपाकान्ता-ओषधयो यवादयः, गुल्मान्यापःकुष्माण्डीप्रभृतयः, लताः केतक्यादयो अवतानाः, आपुष्पाः फलिनो वनस्पतयः। शरीरग्रहणेन तदवयवानां करादीनां तद्विकाराणां क्षीरादीनां च परिग्रहः। एवमिन्द्रियग्रहणेन तदवयवावयविग्रहणेन तण्डुलतैलादयस्तद्विकाराः।

इति पृथिवी ॥

(व्यो०) रूपादयो ह्यसाधारणत्वाद्भेदका इति प्रतिज्ञातार्थसमर्थनार्थमसाधारणत्वमाह क्षितावेव गन्ध इत्यादि। अथोदके तेजसि वोपलम्भात् गन्धस्य अवधारणमनुपपन्नम्। न। संयुक्तस्य समवायेनोपलम्भात्, तथा ह्युदके वासकद्रव्यसम्पर्कात् गन्धाभिव्यक्तिदृष्ट्या तेजसि वेन्धनविशेषानुविधानादिति। यदि पुनः स्वभावत एव स्यात् गन्धः तेजसीन्धनविशेषं विना वासद्रव्यसम्पर्कञ्च विना वारिण्युपलभ्येत, न चैवमतो युक्तमेतत्-क्षितावेव गन्ध इति। रूपं शुक्लाद्यनेकप्रकारं क्षितावेव नोदके न तेजसि नियमेन शुक्लमेवोदके भास्वरं च तेजस्युपलभ्यते पृथिव्यास्त्वनेकप्रकारम्। तथाहि-पटादिभेदाद्भिन्नत्वात् पृथिव्याः काचित् शुक्ला काचिद्धरितेत्युपलम्भः। ननु युक्तं व्यक्तिभेदापेक्षयाऽनेकरूपसम्बन्धित्वं पृथिव्याः, या तु गोलकरूपा न तस्यामनेकप्रकारम्। अथ तत्रापि केचिद्भागाः शुक्लाः केचित् कृष्णा इत्याद्युपलम्भादनेकरूपसम्बन्धित्वम्। नावयवावयविनोरन्यत्वादवयवानामनेकरूपसम्बन्धित्वे कथमवयविनस्तथाभावः, अभ्युपगमे वा सूत्रव्याघातः। विभुनि द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामसम्भवादिति व्याहन्यतेति। व्यापके हि द्रव्ये समानेन्द्रियग्राह्याणां बहूनामपि सम्भवो दृष्टो. यथा शब्दानामाकाश इति तन्निरासायाविभुग्रहणम्। तथा अविभुनि द्रव्ये वि-

भिन्नेन्द्रियग्राह्याणाम् रूपरसादीनामसम्भवादिति समानेन्द्रियग्राह्यपदम्। समानेन्द्रियग्राह्याणामपि संख्यादीनां बहूनामविभुनि द्रव्ये सम्भवो दृष्टः, तद्व्यवच्छेदाय विशेषग्रहणम्। अतो बहूनां रूपाणामेकस्यां पृथिव्यामभ्युपगमे व्याघातः। अभ्युपगम्यापि ब्रूमः। शुक्लादीनां बहूनामेकत्र सद्भावे किमाश्रयव्यापित्वं प्रदेशवर्त्तित्वं वा? आश्रयव्यापित्वे सत्येकावयवसहितेऽप्यवयविन्युपलब्धे परावयवावरणेऽप्यनेकरूपं गृह्येत आश्रयव्यापित्वादेव। अथ प्रदेशवृत्तित्वं तथापि विशेषणमाश्रयव्यापित्वमिति विरुध्यते। अथैकं चित्रं तद्रूपमिति, यथा शुक्लं पीतमित्यादिविशेषः, तथा चित्रं रूपविशेष एव, अत्रोक्तम्—

चित्रं तदेकमिति चेदिदं चित्रतरं ततः।
यद्येकं तत् कथं चित्रम् चित्रञ्चेदेकता कथम्॥ इति।

एकं चित्रं चेत्यतिशयेनाश्चर्यमिति। न च परस्परविरुद्धानां रूपाणामेकरूपारम्भकत्वं न्याय्यम्। समानरूपारम्भकत्वेनोपलम्भाच्छुक्लाच्छुक्लमिति। अथ पृथिव्यामपां च शुक्लादिविशेषं रूपमात्रमुपलम्भान्यथानुपपत्त्या निश्चीयते। अन्यथा हि नीरूपत्वाच्चक्षुर्ग्राह्यत्वं न स्यात्—रूपवतो द्रव्यस्य चक्षुर्ग्राह्यत्वादिति। न चावयवरूपादेव चक्षुर्विषयत्वम्। अन्यरूपेण अन्यस्य चक्षुर्विषयत्वे वायोरपि तथाभावप्रसङ्गात्। अतश्चक्षुर्विषयत्वाद्रूपमात्रं क्षिताविति। नन्वेवमनेकप्रकारं क्षितेः रूपमिति विरुद्ध्यते—रूपमात्रस्य शुक्लाद्यन्तर्भावाभावात्। तथाहि—अनेकप्रकारशुक्लादिभेदभिन्नमित्युच्यते। रूपमात्रं च विशेषरहितमिति विरोधः। तदेतत्सर्वमविदितार्थम् शुक्लाद्यनेकप्रकारस्य रूपस्य क्षितावभ्युपगमात्। ननूक्तम्‘सूत्रविरोध’ इति। न, सूत्रार्थापरिज्ञानात्। तथाच सूत्रस्यार्थः-अविभुन्यव्यापके द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामेकाकाराणामसम्भव इति प्रतिषेधः नत्वनेकप्रकाराणाम्। कथमेतत्? अनेकाकारस्य रूपस्य क्षितावुपलम्भात्तथा रसस्य षड्भेदस्येति। अथैकाकाराणां बहूनां रूपाणां रसानाञ्चैकत्रासद्भावः तस्मान्नेष्यते वैयर्थ्यात्। तथाहि-एकेनैव शुक्लरूपेण रूपप्रत्ययस्य जनितत्वाद्द्वितीयस्य वैयर्थ्यमेव। तथा मधुररसेन मधुरप्रत्ययस्येति। अथ शुक्लादीनामेकस्य सद्भावे किं व्याप्यवृत्तित्वमुताव्याप्यवृत्तित्वमित्युक्तम्। तत्राव्या-

प्यवृत्तित्वे न विरोधः । शेषाणामाश्रयव्यापित्वमेवेत्यवधारणानभ्युपगमात् । अत एवैकावयवसहितस्य पटस्योपलम्भात्तदेकरूपोपलम्भोऽप्याश्रयव्यापितयाऽनेकरूपाणामनुपलम्भाच्चित्रप्रतिभासाभावः। अथ किं चित्रादुत्पद्यते चित्रमथाचित्रादिति । चित्रादुत्पत्त्यभ्युपगमे पटकारणकारणष्वपि चित्रप्रतिभासप्रसङ्गः। अथाचित्रादुत्पन्नं। तदा ह्येकरूपाः सर्वत्र चित्ररूपोत्पत्तिप्रसङ्गः । नैतद्युक्तम्। नानारूपाणि हि कारणानि नानारूपं कार्यमारभन्त इत्युपलब्धम् । न चैवं तत्कारणकारणेषु नानारूपाणि सन्तीति चित्रानुत्पादः। न च तन्तूनां नीलाद्यनेकरूपसम्बन्धित्वात्पटेऽप्यनेकरूपारम्भकत्वे किञ्चिद्बाधकमस्ति कारणगुणपूर्वप्रक्रमेण तथाविधस्य रूपस्योपादानात्। तथाहि-प्रत्येकं कारणेष्वविचित्रादपि रूपान्नीलान्नीलं पीतात्पीतमिति युक्तम्। भवतु चैवैकं चित्रं रूपं नीलादि रूपैरेकरूपारम्भाद्यथाहि शुक्लादिर्विशेषो रूपस्य तथा चित्रं रूपादिविशेष एव । यद्यपि शुक्लादिशब्दैर्न व्यपदिश्यते, तथापि स्वशब्देन व्यपदेशादस्तित्वम् । अथ विरुद्धानां नीलादीनां कथमेकरूपारम्भकत्वम्? यथा शुक्लानामिति । यथाहि बहूनि शुक्लरूपाण्येकं शुक्लरूपमारभन्त इत्युपलब्धम, तथा नीलादीनामपि चित्ररूपारम्भकत्वं दृष्टत्वादभ्युपगन्तव्यम । अथ चित्रशब्दस्य नानापर्यायत्वादेकं चित्रं चेतीदमेव चित्रमाश्चर्यमिति । तदसत्। यथा नानारूपेषु चित्रव्यपदेशः चित्रास्तन्तवो नीलादिरूपसम्बन्धिन इति. तथा तदारब्धेऽपि घटे चित्ररूपमस्येति। न चावश्यं नानारूपसम्बन्धित्वेपि पटादिषु चित्रव्यपदेशो दृष्टः नानारूपैस्तु कारणैरारब्धेऽवश्यं भवतीति । अथैकत्वाच्चित्ररूपस्यैकावयवसहितेऽप्यवयविन्युपलब्धे शेषावयवावरणे विचित्रप्रतिभासः स्यात्। न, सहकार्यभावात्। तथाहि-अवयवेषु नानारूपोपलम्भसहकारीन्द्रियमवयविनि चित्रप्रतिभासं जनयतीति अन्वयव्यतिरेकाभ्यामित्युपलब्धम् केन? शेषावयवारब्धे तद्रूपाणामग्रहणात् अवयविनि चित्रप्रतिभासाभावः। न च प्रतिभासादेकान्तेनासत्त्वम् । सहकार्यभावेनाप्युलम्भात्। यच्च रूपमात्रमुपलम्भान्यथानुपपत्त्या ज्ञायत इति कैश्चिदुक्तम्। तत्रापि न दोषो विप्रतिपद्यमानस्यानुमानोपन्यासात्। तथाहि शुक्लादिविशेषव्यतिरिक्तं चित्रं रूपं क्षितौ विद्यमानमपि वैयात्याद्यो न मन्यते तं प्रत्यनुमानं क्षितेरुपलम्भात् रूपत्वं विज्ञायत

इति । चक्षुषोपलम्भाच्च सिद्धे रूपवत्त्वे शुक्लादिशब्दैर्व्यपदेशासम्भवाच्चित्रशब्देनाभिधीयते इति सिद्धम् ।

एतेन रसो व्याख्यातः । रसः षड्विधो मधुरादिः क्षितावेव । व्यक्तिभेदो नैकस्यां च व्यक्ताविति । तथा चैकस्यामपि हरीतक्यामुपलभ्यते षड्विधो रस इति । अत एव षड्भेदस्यान्यत्रानुपलम्भादितरेभ्यो भेदकत्वम् । तथा गन्धो द्विविधः–सुरभिरसुरभिश्च । एकस्यां पृथिव्यां व्यक्तिभेदो न चेति पूर्ववत् । अथ सुरभिगन्धाभाव एवासुरभिरिति व्यवहारसम्भवात् गन्धस्य द्वैविध्यमनुपपन्नम् । नोभयोस्तीव्रतरादिभेदभिन्नत्वाद्यथाहि सुरभिगन्धे तीव्रततरादिव्यवहारस्तथाऽसुरभिगन्धेऽपीति सुरभिगन्धाभावे चैतन्नोपपन्नमभावस्य निरतिशयत्वादिति । स्पर्शोऽस्याः पृथिव्या अनुष्णाशीतत्वे सति पाकजः । अनुष्ण इत्युष्णस्पर्शव्यवच्छेदार्थम् । अशीत इति शीतात् । पाकज इति वायवीयात् । अथ पाकजोऽग्निसंयोग इत्युक्ते न व्यभिचारोऽस्तीति किमर्थमनुष्णाशीतग्रहणमिति चेत्, स्वरूपकथनार्थम् ।

अन्ये तु किल पाकादग्नेरुष्णस्पर्शो भवतीत्युष्णग्रहणमशीतग्रहणमेव तु स्वरूपार्थमिति । अथ रूपादीनामिव वैलक्षण्याप्रतिभासनान्न पाकजत्वं स्पर्शस्य । तन्न । प्रत्यक्षेण वैलक्षण्याप्रतीतावप्यनुमानेन पाकजत्वप्रसिद्धेः । तथा च पार्थिवस्पर्शः पाकजः पार्थिवविशेषगुणत्वात् तद्गतरूपादिवदिति । नन्वेवं सामान्यगुणानामपि पाकजत्वप्रसंगः पार्थिवगुणत्वरूपवदिति । नैतद्युक्तम् । सामान्यगुणानां पक्षीकरणेऽग्निसंयोगेनैवानेकान्तः । तथाहि–पार्थिवपरिमाणावग्निसंयोगोऽग्निसंयोगजो न भवति पार्थिवगुणश्चेति पार्थिवविशेषगुणत्वं व्यभिचरतीति । सपक्षैकदेशे वर्तमानस्यात्यन्तं विपक्षाद्वृत्तेः गमकत्वमेव । न च पक्षे प्रत्यक्षागमाभ्यां विरुध्यत इति न कालात्ययापदिष्टः । न च प्रकरणसमः–तत्त्वानुपलब्धेरप्रयोगात् । अतः पाकजस्पर्शादिकारणत्वादितरेभ्यो भिद्यते पृथिवीति ।

समानानां भावः सामान्यम् भेदाधिष्ठानमतो भेदमाह सा तु द्विविधेति । सा तु पृथिवी द्विविधा । केन रूपेणेत्याह–नित्या चानित्या च । नित्या परमाणुलक्षणा–परमाणुस्वभावा । कार्यलक्षणा कार्यस्वभावा त्वनित्येति भेदः । भेदे च सति सामान्यलक्षणमुपप-

द्यते इत्यसम्भवित्वाशंकाव्युदासः। सर्वस्य कार्यस्य विनाशे समवायिकारणाभावात् पुनरुत्पत्तिर्न स्यादित्याशङ्कानिरासार्थं च वाक्यम्-सा तु द्विविधा नित्या चा अनित्या च। अनित्यायाश्च नाशे नित्या पुनर्द्व्यणुकादिप्रक्रमेण स्वर्गादौ कार्यमारभत इति सिद्धम्। कथं पुनः परमाणुस्वभावा पृथिवी ज्ञायत इत्याशंक्याह-कार्यलक्षणा कार्येण लक्ष्यते ज्ञायत इति। तथाहि-कार्यं समवायिकारणपूर्वकं तत्कारणमप्यन्यसमवायिकारणजन्यमिति यावदाद्यं कार्यं तदपि समवायिकारणजन्यमिति। तज्जनकाः परमाणवः। तथा कार्यादल्पपरिमाणं समवायिकारणम्। तस्याप्यन्यदल्पपरिमाणमित्याद्यं कार्यं निरतिशयाणुपरिमाणैरारब्धमिति ज्ञायते। अथ तदवयवानामपि पर्यवसानं नेष्यते-नित्यकारणानभ्युपगमात्तर्हि कार्यस्याकस्मिकस्यासम्भवात्तत्कारणेऽप्यन्यं समवायिकारणमित्यनवस्थायां कार्यद्रव्यस्याल्पतरादिभेदो न स्यात्। तथाहि-अल्पकारणारब्धमल्पभूयःकारणारब्धमिति दृष्टम्। न च कार्यद्रव्यस्य नित्यकारणानभ्युपगमेनानवस्थायामेतदुपपद्यते। सर्वस्याप्यनन्तकारणजन्यत्वाविशेषादिति यथाऽनन्तकारणैरारब्धा गोलकरूपा पृथिवी तथा घटादिकार्यमपि इत्येकाकारताप्रसङ्गः। न च संख्याफलपरिमाणैरेकाकारतोपलब्धा घटादेर्भिन्नपरिमाणत्वात् भिन्नफलत्वाच्चेति। तथाहि-किञ्चिद्धीनमधिकतरं च पञ्चपलं दशपलं समानकारणैरारब्धं बहुभिश्चेति वैचित्र्यम्। तच्चानवस्थायां न स्यात्। न च नित्यानभ्युपगमे प्रलयावस्थायां सर्वस्य कार्यद्रव्यस्य विनाशे पुनरुत्पत्तिर्भवेत्। अभावस्य समवायिकारणत्वाभावादिति। यथा च प्रलयावस्थायां सम्भवति तथा च वक्ष्यामो भूतपरिक्षायामिति। अतो नानवस्था व्यावर्तनीया घटादिकारणकारणानां अल्पतरादिभावेनावस्थितानामादिकार्यमभ्युगन्तव्यम्। तदाद्यं कार्यं समवायिकारणजन्यं कार्यत्वाद्यद्यत्कार्यं तत्तत्समवायिकारणजन्यं यथा घटादि। तथा चैतत्कार्यं तस्मात्समवायिकारणजन्यमिति। न च कार्यत्वमभावेन व्यभिचरतीति वाच्यम्। स्वकारणसत्तासम्बन्धरूपत्वात्कार्यस्य। तथा घटादिकारणकारणेष्वल्पतरादिभावः क्वचिद्विश्रान्तः तरतमशब्दवाच्यत्वान्महापरिमाणवत्। यत्र विश्रान्तास्ते परमाणव इति। अथ सावयवाः परमाण-

वः मूर्तत्वाद्धटत्वत् । षट्कन युगपत् सम्बध्यमानत्वात् । तथा पूर्वभागो परभाग इति दिगुपलक्षितैर्देशैर्व्यपदिश्यमानत्वात्सावयवकार्यारम्भकत्वाच्च तन्त्वादिवदिति । सर्वमेतदाश्रयासिद्धम्-परमाणुसद्भावासिद्धेः । अथेष्यत एव परमाणोस्सद्भावस्तर्हि परमाणुसद्भावावेदकप्रमाणस्य प्रमाणान्तरस्याभ्युपगमात्तद्विपरीतानुमानं निर्विषयत्वादप्रमाणमिति । सद्य(?)परमाणवः परेणाभ्युपगमात्तस्यानिष्टापत्तिः क्रियत इति प्रसङ्गसाधनम् । तत्र यदि प्रमाणेनाभ्युपगता परेण परमाणवः तस्य प्रामाण्याभ्युपगमेऽनुत्थानं विपरीतानुमानस्य । अथाप्रमाणादेवं तर्हि तस्याप्रमाणतया परमाणुसद्भावो न सिध्यतीति किमनुमानोपन्यासेनाश्रयासिद्धताप्रसङ्गात । तथा परमाणवः सावयवाश्चेति प्रतिज्ञावाक्ये पदयोर्विरोधः । तथाहि-परमाणुशब्दस्य निरतिशयाणुवाचित्वं सावयवत्वे वाऽवयवापेक्षयाधिकपरिमाणत्वमिति विरोधः । न च समानाधिकपरिमाणत्वे समवायिकारणत्वमिति तदवयवाः परमाणवः तेषामपि सावयवत्वे तदवयवास्तेषामपि सावयत्वे तदवयवा इत्यनवस्थायामुक्तं दूषणम्-अल्पतरादिभेदानुपपत्तिरिति । अथ मा भूदनवस्थेति निरवयवाः परमाणवोभ्युपगम्यन्तेऽप्रमाणस्तर्हि तेन बाध्यमानत्वात् सावयवत्वानुमानमप्रमाणमिति । अथ निरवयत्वादणूनां षट्केन योगो दिग्देशव्यपदेशश्च न स्यात् । नान्यथापि भावात् । तथाहि-संयोगस्याव्याप्यवृत्तितया पूर्वोत्तरादिदिग्व्यवस्थिते युगपत्संबन्धेपि न सावयवत्वम् । एवं पूर्वभागो अपर इति यद्यस्ति व्यपदेशः सोपि मुख्ये बाधकोपपत्तेर्भाक्तो द्रष्टव्यः,-अव्याप्यवृत्तिसंयोगाधारत्वसामान्यादिति । यच्च सावयवारम्भकत्वम् तत्र यदि सहावयवैरारम्भकत्वं तदसिद्धम् निरवयवत्वात् । अथ सावयवस्य सदावयवैर्वर्तिष्यमाणस्य कार्यस्य जनकत्वं तदसिद्धम-परमाणुभ्यां द्व्यणुकारम्भात्तथाहि-ते हि नावयवसहिताः कार्यमारभन्ते न स्वात्मानं नित्यत्वात्, स्वात्मनि क्रियाविरोधाच्चेति तन्तुदृष्टान्तोपि साधनविकलः । ते हि नावयवसहिताः कार्यमारन्ते नाप्यवयवासहिता इति स्थितं कार्येण लक्ष्यते—नित्या पृथिवीति । अभेदवादिनिरासार्थं च द्विविधेति वाक्यम् । तथाहि-पृथिवी पृथिव्यन्तराद्भिद्यमाना किं पृथिवीरूपतया भिद्यते, उतापृथिवीरूपतयेति ।

पृथिवीरूपतया पृथिव्यन्तराद्भेदे तस्यापृथिवीत्वप्रसङ्गः । अथापृथिवीरूपतया भिद्यते या तर्हि भिद्यते सा पृथिवी न स्यात् । अथावान्तरविशेषसम्बन्धात् भेदस्तेऽपि यदि विशेषान्तरादनवस्था । अथान्तरेण विशेषं विशेषा भिद्यन्त पृथिव्यास्तथाभावप्रसङ्ग इत्युक्तं द्वैतवादिना । भेदमाह—सा च द्विविधा नित्या चानित्या च । नित्या पृथिवी नीरूपतयाऽनित्यातो भिद्यते । अनित्या तु नित्यातश्चेत्यवान्तरभेदादेव भेदः । अथ तेषामपि विशेषान्तराद्भेदाभ्युपगमेऽनवस्थेत्युक्तम् । तदसत् । तत्राप्यसाधारणधर्मस्यासाधारणधर्माद्भेदाभ्युपगमेऽपि जातिगुणक्रियादिरूपतया षट्स्वेवान्तर्भावादनवस्थायामप्यदोषः । व्यावृत्तस्वरूपं पदार्थानां निर्विकल्पकज्ञाने प्रतिभासत इत्युक्तोत्तरमेतत् । यदि वा लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धेः संशये सति तन्निरासार्थं वाक्यम्—सा तु द्विविधेति । नैकत्वमाकाशस्येव विप्रतिपत्तिनिरासार्थम् ।

कार्यलक्षणाया धर्मान्तरं निरूपयति—सा च स्थैर्य्याद्यवयवसन्निवेशविशिष्टेति । स्थिराया भाव स्थैर्यम् तदादिर्येषाम् मृदुत्वकठिनत्वादीनां ते स्थैर्यादयः ते चावयवानां सन्निवेशश्च रचनाविशेषः, तैर्विशिष्टेति—गुरुत्वाविधारकत्वस्यासम्भवात् । सर्वदा पतनं क्षितौ विद्यमानमपि पूर्वपरभागादवधारणान्नोपलभ्यते इति दिग्वाससां मतं तन्निरस्यते । स्थैर्यपदेन स्थैर्यं स्थिरत्वमपात इति यावत् । यदि पुनः पातः स्यात् गुरुत्वातिशयेन पातातिशयोपलब्धेः क्षितेरतिशयेन पातादुपरि क्षिप्तस्य लोष्ठादेर्भूमिसम्बन्धो न स्यात् । तथाहि—लोष्ठस्य यावदुपरिगमनं पुनर्मन्दमागमनं तावत्क्षितेः शीघ्रपातितया योजनशतादिव्यवधानं स्यादिति सम्बन्धाभावः । दृष्टस्तु सम्बन्ध इति ज्ञायते न पतनं क्षितेरिति । अत एवापातनान्यथानुपपत्त्या ज्ञायते गुरुत्वविधारकम् किञ्चिदस्तीति । अन्यथा हि गुरुत्वविधारकाभावे पातोऽवश्यं स्यादिति, स तु न भवतीति प्रतिबन्धोऽनुमीयते । अत्र हि गुरुणो द्रव्यस्य प्रतिबन्धकत्वे तस्यापि गुरुत्वयोगितया पातः स्यादिति वायोर्महतः प्रतिबन्धकत्वम् । दृष्टं ह्यल्पीयसापि वायोरुपरि पर्णादिव्यवस्थापने गुरुत्वविधारकत्वम् । पृथिवीप्रतिबन्धकस्त्वादिसृष्टावुत्पन्नोऽतिशयेन महान् पृथिवीमुदकादिसहितां तृणमिव धारयते । तथा स्थैर्यं पृथिव्या अक्षणिकत्वमि-

ति । क्षणिकत्वापाकरणार्थं च स्थैर्यग्रहणम् । यथा च क्षणिकत्वन्न सम्भवति तथा वक्ष्याम इति । ये तु निरवयवामकार्यां च पृथिवीं मन्यन्ते तन्निरासार्थमवयवसन्निवेशविशिष्टेति । अवयवा इह भागास्ते क्षितावुपलभ्यन्ते तत्सन्निवेशो रचनाविशेषः प्रत्यक्ष इति । तथावयवसन्निवेशविशिष्टत्वाच्च कार्यम् । तथाहि-पृथिवी कार्या अवयवसन्निवेशविशिष्टत्वाद्यद्यदवयवसन्निवेशविशिष्टं तत्तत्कार्यं दृष्टम् यथा घटादि, तथा चावयवसन्निवेशविशिष्टा पृथिवी तस्मात्कार्येति । ननु कार्यत्वेऽप्यवयवसन्निवेशविशिष्टत्वानुपलब्धेः बुध्यादावित्यप्रयोजकत्वादप्रमाणमिति जैमिनीयाः । तदसत् । सपक्षैकदेशवृत्तेर्गमकत्वाभ्युपगमात् । तथाहि-यद्यदवयवसन्निवेशवत् तत्तत्कार्यं दृष्टम् न पुनर्यद्यत्कार्यं तत्तदवयवसन्निवेशवदिति ब्रूमः । न च सपक्षैकदेशे वर्तमानस्यागमकत्वम्-धूमानुमानस्यागमकत्वप्रसङ्गात् । तथाहि-यदि धूमवत्त्वप्रयुक्तं स्यात् अग्निमत्त्वमन्तरेण धूमवत्त्वम् अग्निमत्त्वं न भवेदिति । अथ विषमव्याप्तिकत्वाद्यो यो धूमवान् स सोऽग्निमानित्येव व्याप्तिः, न पुनर्यो यो अग्निमान् स स धूमवानित्येवम्, तर्हि अवयवसन्निवेशवत्त्वस्यापि सपक्षैकदेशे वर्तमानस्य नाप्रयोजकत्वम् । अथाभूत्वा भावित्वस्यानुपलब्धेर्न क्षितेः कार्यत्वम् । किमत्र प्रत्यक्षेणानुपलब्धिः, अथ भूत्वा भावित्वस्यानुमानेन वा ? प्रत्यक्षेणानुपलब्धौ कस्यचिद्घटादौ नोपलभ्यत इत्यकार्यताप्रसङ्गः । अथ तत्राप्यभूत्वा भावित्वमवयवसन्निवेशत्वेन ज्ञायते इति क्षितावप्यवयवसन्निवेशवत्त्वेनैवाभूत्वा भावित्वं गम्यत इति, समानं=कार्यत्वेन च कर्तृपूर्वकत्वं गम्यत इति वक्ष्यामो भूतपरीक्षायाम् ।

तथा कार्यलक्षणाया धर्मान्तरमाह-अपरजातिबहुत्वोपेतेति । अपरा तु जातिः पृथिवीत्वापेक्षया घटत्वपटत्वादिरूपा । तस्या बहुत्वमपरिसंख्यातत्वम् , तदुपेता-तद्युक्तेति । न चैवं परमाणुलक्षणति वैलक्षण्यम् । तथा कार्यलक्षणायाः कार्यं निरूपयति शयनासनादिभेदेनानेकमुपकारं करोति इत्यनेकोपकारकरी च । यदेवार्थक्रियाकारि तदेव परमार्थसत् । अर्थक्रियाविरहो ह्यभावलक्षणमिति दर्शनस्य सत्तासम्बन्धेन सत्ताभ्युपगमेऽप्यभ्युपगमवादेन निरासार्थं चैतद्भवतीति । पृथिवीकार्यस्यानन्तत्वादशक्यं तत्परिज्ञानं मा भूदित्यवान्तरभेदेन वैधर्म्यम् । वीप्सायां प्रतिज्ञातमाह-त्रिविधं चास्याः

कार्यमिति। यथा ह्येवंभूतो धर्मः कार्यपरमाणुरूपतया नित्यानित्यभेदः कार्यरूपायां च स्थैर्यादिधर्मयोगोऽपरजातिर्बहुत्वं चास्याः पृथिव्यास्तथा त्रिविधं च कार्यमिति क्षितेः कार्यस्यानन्त्येपि शरीरादिरूपेण परस्परं व्यावृत्तात्मतया त्रिविधावस्थितस्य तत्त्वज्ञानविषयत्वम्। तथाहि–शरीरमिन्द्रियं विषय इति संज्ञा यस्य तच्छरीरेन्द्रियविषयसंज्ञकं सर्वं क्षितेः कार्यमिति ज्ञेयम्।

अन्ये त्वस्याः परमाणुलक्षणायाः त्रिविधं कार्यं शरीरादिरूपमिति मन्यन्ते। व्यवहितस्यापि इदंशब्देन क्वचित्परामर्शादिति। तत्र शरीरस्येतरस्माद्वैधर्म्यमाह शरीरं द्विविधमिति। विशेष्यस्य सामान्यापेक्षित्वाद्विशेष्याभिधानेऽवश्यं सामान्यं लक्षणं विद्यमानमन्तेवासिनोह्यतामित्यूहनशक्तेः संवर्धनाय न सामान्यलक्षणमवोचत्। तथाहि–शरीराभिधाने शरीरत्वे शरीरव्यवहारकारणं ज्ञायत एव लक्षणमिति। तथेच्छानुविधायिक्रियाश्रयत्वं नेतं शारीरात्सम्भवति इति शरीरवचनादर्थाल्लभ्यत इति स्वशब्देनावचनम्। ग्रन्थादौ तु शरीरादिद्वारेणेत्यतिव्याप्त्यभावः। अथ शारीरत्वं सकलशरीरव्यापकत्वाद्भेदान्तराद्व्यावृत्तेश्च युक्तं लक्षणम्। न चैवमिच्छानुविधायि क्रियाश्रयत्वम्–तस्य हि विपक्षाद्व्यावृत्तस्यापि सतः पक्षे सर्वत्रासम्भवात्। तथाहि–मृताद्यवस्थायां एतन्न सम्भवतीत्यव्यापकम्। अथ जीवच्छरीरस्यैतल्लक्षणमिति चेत्। तन्न। सुप्तमूर्छिताद्यवस्थायामप्यनुपलब्धेः। कथं तर्हीदं लक्षणम्? योग्यताश्रयणात्। तथाहि–शरीरमितरस्माद्भिद्यते साक्षादिच्छानुविधायिक्रियाश्रययोग्यत्वाच्छरीरत्वसम्बन्धाच्च। यस्त्वेवं न भवति न चासौ साक्षादिच्छानुविधायिक्रियाश्रययोग्यः शरीरत्वयुक्तश्च यथेन्द्रियादिरिति। आमरणाद्यस्य पटुत्वापटुत्वभ्यामिन्द्रियाणां पटुत्वापटुत्वे तच्छरीरमिति केचित्। तथा ह्यौषधोपयोगादपीन्द्रियेषु पटुत्वं सम्भवतीति आमरणादिति पदम्। तथाचाव्याधितस्य शरीरपटुत्वेनामरणान्तमिति। इन्द्रियपटुत्वं दृष्टं व्याधितस्य त्वौषधयोपयोगेन व्याध्युपशमे शरीरपटुत्वादेवेन्द्रियपटुत्वादिति पश्यामः। शरीरस्यापटुत्वादेवेन्द्रियेषु च कामलादिदोषाः सम्भवतीति तत्पटुत्वेन व्यावृत्त इति। पार्थिवं तु शरीरं मांसाद्यवयवजन्यत्वे सत्यन्त्यावयवित्वादिति द्रष्टव्यम्। मांसाद्यवयवजन्यस्याङ्गुल्यादेः शरीरव्य-

वहारात्रिविषयत्वादित्यन्त्यावयविपदम् । अन्त्यावयवित्वं चाशरीरस्यापि सम्भाव्यत इति मांसाद्यवयवजन्यपदम् । सामान्यलक्षणलक्षितस्य पार्थिवशरीरस्य विशेषलक्षणार्थं विभागः—शरीरं द्विविधम् । केन रूपेण? योनिजमयोनिजं च । पूर्वमुद्दिष्टेऽपि योनिजेऽर्थप्रकाशस्य विवक्षितत्वादयोनिजमाह—तत्रायोनिजमिति । योनिशब्दस्य कारणपर्यायत्वात्तन्निषेधो मा भूदाकस्मिकमित्याह—अनपेक्ष्यशुक्रशोणितमिति । योनिशब्दः सामान्यशब्दोऽपि कारणविशेषे शुक्रशोणितलक्षणे विवक्षित इति तन्निषेधेन कारणान्तरं लभ्यते । शुक्रशोणितमनपेक्ष्य कारणान्तरादुत्पन्नमयोनिजम् । केषां देवर्षीणां शरीरमिति । अयोनिजं तु शरीरं देवर्षीणां न त्वयोनिजमेव—योनिजत्वस्यापि श्रवणात् । अन्ये तु व्यभिचारनिषेधार्थमेकस्य देवपदस्य लोपेन समासं कुर्वते । देवाश्च देवर्षयश्च देवर्षयः तेषामिति । अत्र देवास्त्वष्टधा पिशाचादयः । तत्रापि कस्यचिद्योनिजत्वश्रवणेऽन्यद्विशेषणं न चिन्त्यम् । अथ केभ्यस्तच्छरीरं भवतीत्याह—धर्मविशेषसहितेभ्योऽणुभ्यो जायत इति । तथाहि—तच्छरीरोत्पत्तावणवः समवायिकारणं तत्संयोगश्चासमवायिकारणं धर्मविशेषो निमित्तकारणमिति कार्यैकार्थसमवायश्च द्रव्योत्पत्तौ संयोगस्येति । अथ देवर्षीणामयोनिजं शरीरमस्ति इति किं प्रमाणम् (?) अमागमः । तथाच—

> अयोनिजशरीराणि भवन्त्यद्भुतकर्मणाम् ।
> योनिजान्येव मौद्गल्य न मातृपितृजानि तु ॥

तथाहि—अद्भुतमुत्कृष्टं कर्म येषां ते तथोक्तास्तेषामुत्कृष्टकर्मवशादयोनिजानि शरीराणि भवन्ति । कारणमात्रनिषेधो मा भूदित्याह—योनिजानि कारणजान्येव । कथन्तर्हि तेषामयोनिजत्वमित्याह—न मातृपितृजानीति । पितृमातृशब्देन शोणितशुक्रयोरभिधानमुपचारेणेति । तथोत्कृष्टं कर्म द्वेधा—धर्मरूपमधर्मरूपञ्चेति । तत्र धर्मरूपाद्देवर्षीणामधर्मरूपाच्च क्षुद्रजन्तुयातनाशरीराणि । क्षुद्रजन्तवो यूकादयः । यातनाशरीराणि नारकीयशरीराणि, इति तान्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते । अथ देवर्षीणां शरीराणि धर्मविशेषादुपजातान्यप्यनुमानेन योनिजानीति प्रतीयन्ते । तथाहि—देवर्षिशरीराणि योनिजानि शरीरत्वादस्मदादिशरीरवदिति ।

एतच्चागमेन बाध्यमानत्वादप्रमाणमिति। तथानुमानेन चागमस्य बाधाद्देवर्षिशरीराणां सद्भावासिद्धेर्योनिजानुमानस्याश्रयासिद्ध-त्वादप्रमाणत्वप्रसङ्गः। न चानुमानस्यागमविषये तदुपघातेन प्रमाणता सम्भवति। युक्तं चागमानुग्राहकत्वम्। तथाहि-देवर्षिशरीराण्ययोनिजानि उत्कृष्टकर्मारब्धत्वात् शरभादिशरीरवत्। उत्कृष्टं कर्माधर्मरूपं शलभादिशरीरे देवर्षिशरीरे तु धर्मरूपमिति। विशेषेऽप्युत्कृष्टकर्मारब्धत्वमुभयत्राविशिष्टमिति न साधनहीनमुदाहरणम्। योनिजमाह-शुक्रशोणितसन्निपातजमिति। शुक्रशोणितयोस्सन्निपातात्सम्बन्धाज्जायत इति। शुक्रं पितुर्मातुः शोणितमिति तयोः सन्निपातसमकालं भोक्तुः कर्मवशादन्तःकरणसम्बन्धः। शुक्रशोणितयोः संयोगान्मोञ्जिताकारं द्रव्यमुत्पन्न...तदन्तमान्तरेण (?) तेजसा सम्बन्धाद्वेगापेक्षादवयवे क्रिया तदनन्तरं विभागात् द्रव्यारम्भकसंयोगविनाशः पुनरन्यस्मादाग्निसंयोगात्पूर्वरूपादयो व्यावर्तन्ते। अन्यस्माच्चापूर्वरूपाद्युत्पत्तिरेवमुत्पन्नपाकजेष्वणुष्वात्माणुसंयोगाद-दृष्टापेक्षा उत्पन्ना क्रिया विभागमारभते। तस्मात्पूर्वसंयोगव्यावृत्ता उत्तरसंयोगाद्व्यणुकोत्पत्तिरेवं द्व्यणुकैस्त्र्यणुकोत्पत्तिरित्यादिक्रमेण शरीरोत्पत्तिरिति। पुनर्मात्रा भुक्तं पीतं तन्मात्रयावतार्यते ततः पुनरान्तरा। न च सम्बन्धादवयवे क्रिया। पुनर्विभागात् संयोगविनाशस्ततो द्रव्यविनाशोऽन्यस्मादग्निसंयोगात्पूर्वरूपादिविनाशः अन्यस्माच्च रक्ताद्युत्पत्तिस्ततो द्व्यणुकादिप्रक्रमेण शरीरोत्पत्तिरिति न्यायः। शरीरेऽप्ययमुत्पत्तिलक्षणं द्रष्टव्यं यावद्धस्मीभाव इति। अन्यथा ह्याहारोपयोगस्याश्रयापचयाकारणत्वाद्वैयर्थ्यं स्यात्। न चारब्धशरीरा येऽवयवाः सहकारिप्राप्तौ शरीरान्तरमारभन्ते पुनस्सहकार्यन्तरप्राप्तावन्यच्छरीरमिति वाच्यम्। आरभ्यारम्भकवादप्रसङ्गात्। अथेष्यते वैकं द्रव्यमारभ्य तस्मिन्नविनष्टे पुनर्द्रव्यान्तरारम्भकत्वम्। न युक्तमेतत्। सर्वस्यापि कार्यद्रव्यस्य परमाणुवृत्तित्वप्रसङ्गात्। तथाहि-परमाणुभ्यां द्व्यणुकमारब्धं तस्मिन्नविनष्टे ताभ्यामेवान्यपरमाणुसहिताभ्यामन्यदारब्धम्-पुनरन्यपरमाणुसहितैरन्यदारभ्यत इति मूर्तानां समानदेशताप्रसङ्गः। तथाहि-परमाणुभ्यामारब्धं परमाण्वोर्वर्तते पुनरन्यसहिताभ्यामारब्धं तयोस्तस्मिंश्चेति मूर्तानामेकदेशत्वं स्यात्।

तेषान्तु परस्परव्यतिरिक्ताधारसमवायित्वं दृष्टम् । यत्र ह्येकमूर्तं समवेतं न तत्रान्यत् समवैति । अथैकदेशतापरिहारार्थं परमाणुभ्यामन्यसहकारिभ्यामारब्धमेकस्मिन्नेव परमाणौ वर्तते, पुनरन्यसहितैस्तैरारब्धमेकस्मिन्नेवेत्युच्यते । एवमप्येकस्मिन् द्रव्ये वर्तमानं कार्यद्रव्यं कारणविभागाभावादविनाशि स्यात् । तथा अद्रव्यं द्रव्यमनेकद्रव्यम् च द्रव्यमिति वचनव्याघातः । तथाहि—न विद्यते जन्यं जनकञ्च द्रव्यमित्यद्रव्यम् । परमाणूनां जनकं नास्त्याकाशादीनां जन्यं नापि जनकमित्यद्रव्यम्, नित्यद्रव्यमिति यावत् । अनेकद्रव्यं त्वनेकद्रव्यं जनकमस्येत्यनेन स्वरूपेण द्विविधमेवं द्रव्यमद्रव्यं नित्यमनेकद्रव्यजन्यं कार्यमिति । एकद्रव्यस्य च कार्यद्रव्यस्याभ्युपगमे व्याहतमेतद्भवतीति । न चैतस्य क्रमयौगपद्याभ्यामारम्भकत्वं स्याद्यमेकस्वरूपतया यावत्कर्तव्यं तावदेकस्मिन्काले कुर्यात् । अशेषकार्योत्पत्तौ समर्थस्यान्यानपेक्षितत्वादिति । युगपदशेषकार्यं कृत्वा पुनरकरणे हेतुर्नास्तीति । अथ पूर्वमारब्धं कार्यद्रव्यमपेक्ष्यारभन्ते, तर्हि पूर्वस्यारब्धकार्यस्यापि समवायित्वं कथं एकस्मिन्नेव द्रव्ये वर्तते । पूर्वस्मिन् स्ववृत्तावनेकं दूषणमभ्यूह्यम्—समानासमानजातीययोरारम्भकत्वासम्भवादित्यादि । तथा सर्वस्यापि कार्यद्रव्यस्य परमाणुवृत्तितायामिह तन्तुषु पट इह वीरणेषु कट इत्यादिप्रयोगो न स्यात्—तन्त्वादस्समवायित्वाभावादिति । कार्यद्रव्यस्य च विनाशे चान्तरकार्यस्यानुत्पन्नत्वादुपलम्भाभावः । अथ परमाणुभिः पूर्वपूर्वस्य कार्याविनाशे सत्युत्तरोत्तरकार्यारम्भादनेकं कार्यद्रव्यमित्यन्त्यस्य विनाशे पूर्वपूर्वस्यावस्थानादनेककार्योपलम्भ इति चेत् । नन्वेवं तर्हि कपालसंयोगविनाशेऽपि घटस्याविनाशप्रसङ्गः । तदवयवतदवयवसंयोगविनाशे च तदवयवावयवानां तेषां समवायित्वाभावेन तत्संयोगस्यासमवायित्वाभावादिति । समवायिकरणविनाशेनासमवायिकारणविनाशन वा द्रव्यस्य विनाशदर्शनात् । अथ परमाणावुत्पन्ना क्रिया संयोगविनाशद्वारेण द्रव्यविनाशिकेष्यते । तत्र यद्याद्यद्रव्यारम्भके परमाणावुत्पन्ना क्रिया विभागात् संयोगविनाशे सति द्रव्यं विनाशयेत्, तर्हि पूर्वपूर्वसंयोगस्योत्तरोत्तरसंयोगसहकारितयाऽशेषकार्योत्पत्तावसमवायिकारणत्वाभ्युपगमात् तद्विनाशेऽवश्यं सकलकार्यविनाश इति न किञ्चित् कार्यमुपलभ्येत । अथान्त्यपरमाणुसंयोगस्य पूर्व-

पूर्वपरमाणुसंयोगोपचितस्यैककार्यारम्भकत्वावसमवायिकारणत्वमिति तद्विनाशे तदारब्धस्यैव विनाशादवान्तरकार्यस्योपलम्भ एवेति चेत्। नन्वेवमपि परमाणुसंयोगस्य विनाशादुपजातो घटादिनाशोऽस्मदादेरतीन्द्रियः स्यात्। यथा ह्यापाकनिक्षिप्तेषु घटेष्वग्निसंयोगाद्विनाशः परमाणुक्रियाद्वारेणेति। प्रत्यक्षश्च कपालसंयोगविनाशात् घटस्य विनाशः तेन ज्ञायते कपालानां समवायित्वमित्यलं विस्तरेण।

अतः शरीरे प्रतिक्षणमाहारोपयोगानुपयोगे सत्युपचयापचयप्रपञ्चदर्शनात् पूर्वद्रव्यानिमित्तादुत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण चोत्पत्तिर्वाच्येति। यथा च परमाणुषु पाको द्व्यणुकादिप्रक्रमेण चोत्पत्तिस्तथा वक्ष्यामः पाकजोत्पत्ताविति।

इदानीं शुक्रशोणितसन्निपातजस्याप्यवान्तरवैधर्म्यमाह–तद्विविधं जरायुजमण्डजञ्चेति। तथाहि–शरीरं गर्भे प्रतिक्षणं पाकजोत्पत्तिन्यायेनोत्पद्यमानं निष्क्रमणकाले जरायुना वेष्टितत्वाज्जरायुजम्। अण्डजं मातृशरीरान्निःसृतमपि किञ्चित्कालमण्डोदरे पाकजोत्पत्तिन्यायेनावेष्टितमुत्पद्यत इत्यण्डजम्। केषां जरायुजमित्याह–मानुषपशुमृगाणाञ्चेति। मानुषाश्च पशवश्च मृगाश्चेति। पशुशब्देन संगृहीतानामपि मृगशब्देनाभिधानमरण्यजत्वादिति। अन्ये त्वेकस्य मानुषशब्दस्य लोपेन समासं कुर्वते–मानुषाश्च मानुषपशवश्च मृगाश्चेति। अत्र मानुषशब्देनाभिहितानां पशुशब्देनाभिधानेन तदेव दूषणमिति प्रयोजनञ्चिन्त्यम्। तथा मृगशब्देन सर्वपशूनामभिधानासम्भवादव्याप्तिरिति। अण्डजं केषामित्याह पक्षिसरीसृपाणामिति। पक्षिणश्च सरीसृपाश्चेति पक्षिसरीसृपाः तेषामिति। सरीसृपाः कुटिलं सर्पन्तीति सर्पादयो रूढिवशाच्चेति। शरीरस्य शरीरात्समानजातीयाच्च वैधर्म्यमभिधायेन्द्रियस्य वैधर्म्यनिरूपणार्थमाह–इन्द्रियं गन्धव्यञ्जकमिति। तथा इन्द्रियाणां नानात्वात्तद्व्यापिसामान्यलक्षणमर्थाल्लभ्यत एव करणत्वादतीन्द्रियत्वद्रव्यत्वनियताधिष्ठानवृत्तित्वे सत्यपरोक्षज्ञानजनकत्वादिति। अपरोक्षज्ञानजनकत्वं कर्तुरात्मनः संभवतीति तन्निरासाय करणत्वग्रहणम्। अतीन्द्रियस्य प्रदीपादेः करणत्वे सत्यपरोक्षज्ञानजनकत्वं दृष्टमिति तन्निराकरणार्थमतीन्द्रियपदम्। तथेन्द्रियार्थसन्निकर्षः करणत्वातीन्द्रियत्वे सत्यपरोक्षज्ञानजनक इति द्रव्यपदम्। तथा दिक्कालयोः

सर्वोत्पत्तिमतां निमित्तत्वात् करणत्वातीन्द्रियत्वद्रव्यत्वे सत्यपरोक्षजनकत्वमस्तीति नियताधिष्ठानवृत्तिपदम् । दिक्कालयोस्तु व्यापकत्वेन सकलकार्यजनकत्वेन नियताधिष्ठानासम्भवात् । अथात्मापि व्यापकत्वादनेन विशेषणेन व्यवच्छिन्न इति व्यर्थं कारणत्वपदम् । न, व्यापकस्यापि भोक्तृत्वेन शरीराधिष्ठानत्वात् । अतः इन्द्रियमितरस्माद्भिद्यते करणत्वातीन्द्रियत्वद्रव्यत्वनियताधिष्ठानवृत्तित्वे सत्यपरोक्षज्ञानजनकत्वात् । यस्तु न भिद्यते न चासावुक्तसाधनो यथा शरीरादिरिति । सामान्यलक्षणलक्षितस्य समानजातीयाद्भेदमाह—इन्द्रियं घ्राणम् इन्द्रियसामान्यलक्षणलक्षितत्वे सति गन्धव्यञ्जकत्वादितरेभ्यो भिद्यते । तथेन्द्रियं गन्धव्यञ्जकमिति कार्येण सद्भावं दर्शयति । तथाहि—गन्धोपलब्धिः करणकार्या क्रियात्वात्, या या क्रिया सा सा करणकार्या दृष्टा यथा छिदिक्रिया, तथा चेयं क्रिया, तस्मात् करणकार्येति । यच्च गन्धोपलब्धिसम्पादकं करणं तत् घ्राणं तच्च पार्थिवम् रूपरसगन्धस्पर्शेषु मध्ये नियमेन गन्धव्यञ्जकत्वात् । यद्रूपादिषु मध्ये नियमेन गन्धव्यञ्जकं तत्तत्पार्थिवं दृष्टं यथा कस्तूरिकादिद्रव्यम् । तथा च घ्राणं रूपादिषु मध्ये नियमेन गन्धप्रकाशकं तस्मात्पार्थिवमिति । ननु नियमेन गन्धव्यञ्जकत्वमसिद्धम् गन्धत्वगुणत्वसत्तादेरपि व्यञ्जकत्वादित्यतो रूपरसगन्धस्पर्शेषु मध्यत इति विशेषणम् । अथ पार्थिवत्वाविशेषात् घ्राणं गन्धस्येव रूपादिप्रकाशकमपि स्यात् रूपादेरपि पार्थिवगुणत्वात्, संयुक्तसमवायस्य च सम्बन्धस्याविशेषादन्यस्य च विशेषहेतोरभावात् इत्यत आह—जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणमतो गन्धस्यैव प्रकाशकमिति । कथमेतत् ज्ञायते ? किञ्चिज्जलाविनाऽसम्पृक्तैरनभिभूतैः पार्थिवावयवैरारम्भो घ्राणस्येति कार्यनियमात् । तथा घ्राणस्य व्यापारात् गन्धस्यैवोपलम्भो न रूपादेरिति दृष्टम । न च कारणनियमं विना कार्यनियमः सम्भवतीति किञ्चिज्जलाद्यसम्पृक्तैरुत्पादो ज्ञायते चादृष्टविशेषात् गन्धोपलब्धेस्सम्पादकादन्यथा हि घ्राणव्यापारात् गन्धस्यैवोपलब्धिर्न भवेत् । सा च दृष्टा । अतो ज्ञायतेऽन्यस्य कारणत्वासम्भवात् विशिष्टोत्पादो निमित्तम । स चादृष्टवशाददृष्टस्य च व्यवस्थाकारणत्वादिति । अभिप्रेतं चैतत् सूत्रकर्तुरिति—"भूयस्त्वात् गन्धवत्त्वाच्च गन्धज्ञाने

प्रकृतिः" पृथिवीति वचनात्। गन्धो ज्ञायते अनेनेति गन्धज्ञानं घ्राणं तस्मिन्नुत्पाद्ये प्रकृतिः कारणम् पृथिवी भूयस्त्वान्निमित्तादिति। यथा भूयसां पार्थिवावयवानां गन्धोपलब्धिसम्पादकादृष्टविशेषोपगृहीतानां जलादिना चातिरस्कृतवपुषां घ्राणजनकत्वम् नियमेन गन्धोपलब्धेर्ज्ञायते, भूयसां च पार्थिवावयवानां कारणत्वाभिधानाद्लघीयसानामपि जलाद्यवयवानामकारणत्वं लब्धम्। अत एव तेषां पार्थिवावयवानभिभावकत्वम्। तथा न परं विशिष्टादृष्टोपग्रहे सतीषज्जलावयवादिसम्पृक्तैरारम्भात् गन्धस्यैव प्रकाशकत्वं गन्धवत्त्वाच्चेति। पार्थिवत्वात् घ्राणस्य रूपादिमत्त्वमपि सम्भवतीति गन्धवत्त्वं उत्कर्षो विवक्षितः स्वगतगन्धोत्कर्षाच्च रूपादिषु च मध्ये संयुक्तसमवायाविशेषेपि गन्धस्यैव प्रकाशकमिति।

यदि वा काचिदेव पृथिवी गन्धोपलब्धेः कारणम् न सर्वेति विशेषहेतुर्नास्तीत्युक्ते वाक्यम् सम्बद्धयते भूयस्त्वात् गन्धवत्त्वाच्च गन्धज्ञाने प्रकृतिरिति। गन्धे ज्ञप्तिः ज्ञानं गन्धविषयकज्ञानन्तस्मिन्प्रकृतिः कारणम् पृथिवी भूयस्त्वाद्याकृतात् गन्धवत्त्वाच्चेति। अन्यो वार्थः–गन्धवत्त्वान्नियमेन गन्धोपलब्धेः कारणं विशेषहेतुर्नास्तीत्युक्ते वाक्यं सम्बद्ध्यम् घ्राणं तच्च गन्धवत् पार्थिवत्वाविशेषात्। घ्राणं कुत इत्याह भूयस्त्वादुक्तरूपादिति। अन्ये तु जलाद्यसम्पृक्तैः शुद्धैः पार्थिवावयवैरारम्भो विशिष्टादृष्टापेक्षैः भूयस्त्वमिति मन्यन्ते। तथा च भाष्यम्–जलाद्यनभिभूतैरसम्पृक्तैः केवलैः पार्थिवावयवैरारब्धं घ्राणमिति। अत्र चेषज्जलादिसम्पर्केऽप्यनभिभवस्य सम्भवादसंपृक्तैरिति विशेषणं न बुध्यामहे। न च भूयसां भावो भूयस्त्वमित्युक्तेऽन्येषामत्यन्तासम्भव उपलभ्यत इत्यलम्।

इन्द्रियं सर्वप्राणिनां गन्धव्यञ्जकमिति सामान्यविशेषात्मतयाभिधाय विषयस्वरूपनिरूपणार्थमाह विषयस्तु द्व्यणुकादिप्रक्रमेणारब्ध इति। ननु द्व्यणुकादिप्रक्रमेणारम्भः शरीरस्येन्द्रियस्य चास्तीत्यतिव्याप्तमिदं विषयलक्षणमिति। नैतदेवम्। शरीरेन्द्रिययोर्लक्षणाभिधानेन विषयाद्भेदसिद्धौ तदन्यत्वे सतीति विशेषणलाभात्। तथाहि–शरीरेन्द्रियान्यत्वे सति द्व्यणुकादिप्रक्रमेणारब्धत्वाद्विषयस्तस्य हि विषयभावोपकारकत्वात्। विषयस्तूपभोग्य इन्द्रियग्राह्यो वाऽस्मदादेः। अथ ह्यणुकं द्व्यणुकादिप्रक्रमेणोत्पन्नं शरीरेन्द्रि-

याप्यत्वे सत्यस्मदादीन्द्रियग्राह्यश्च न भवति अव्यापीदं विषयलक्षणमिति । द्व्यणुकादिप्रक्रमेणारब्ध इति विशेषणेन व्यवच्छेदात् । तथाहि–द्व्यणुकमादिर्यस्य प्रक्रमस्येत्यादिग्रहणम् । त्र्यणुकस्याऽप्यवरोध इति । असौ द्व्यणुकादिः स चासौ प्रक्रमश्चेति तेनारब्धो विषयः द्व्यणुकत्र्यणुकादिप्रक्रमेणारब्ध इति यावत् । त्र्यणुकं तु द्व्यणुकैरारब्धं द्व्यणुकादिप्रक्रमेणेति । त्र्यणुकानां त्वनियमेनारम्भकत्वं द्वयोर्बहूनाञ्चेति तदारब्धस्येन्द्रियविषयता सम्भाव्यत इति । विषयस्य च सामान्यलक्षणलक्षितस्याऽप्यवान्तरभेदेनानन्त्यात् सङ्ग्रहमाह त्रिविधः । केन रूपेण ? मृत्पाषाणस्थावरलक्षण इति । मृच्च पाषाणश्च स्थावराश्चेति लक्षणं स्वभावो यस्यासौ तथोक्तः । स्वभावस्तु मृदि मृत्त्वं पाषाणेषु पाषाणत्वमिति । ननु मृदादिभेदेन त्रैविध्यमनुपपन्नमिष्टकादेर्विषयस्यासङ्ग्रहादित्याशंकयाह तत्र प्राकाराश्चेष्टकाश्च तदादयो घटादयस्ते च मृद्विकारा इति मृच्छब्देन संगृहीताः । विकारस्तु विशिष्टवचनापन्नाया मृदोऽग्निसम्बन्धात्परमाणुक्रियाद्वारेण पूर्वद्रव्यविनाशे श्यामादिनिवृत्तावुत्पन्नपाकजैरारम्भादित्युच्यन्ते । तैरुत्पन्नपाकजैरारब्धेऽपि मृत्त्वं सामान्यं न निवर्तते इति मृच्छब्देनाभिधीयन्ते इति । पाषाणत्वसामान्ययोगिनो दर्शयति पाषाणादुपलमणिवज्रादय इति । तेषां च स्वरूपं तच्छास्त्रप्रसिद्धलोकव्यवहारतोऽवगन्तव्यम् । स्थावरत्वजातिसम्बन्धिनो दर्शयति स्थावरास्तृणौषधिवृक्षगुल्मलतावतानवनस्पतय इति । तृणमुभयवादिप्रसिद्धम् । ओषधयः–फलपाकान्ता धान्यादयः । वृक्षाश्च वृक्षत्वजातिसम्बन्धिनोऽशोकादयः । एवं गुल्मलतावतानादिविशेषोऽवगन्तव्यः । तदुक्तम्—

ओषध्यः फलपाकान्ता लतागुल्माश्च वीरुधः ।
फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ॥ इति ॥

इति द्रव्यग्रन्थे पृथिवीनिरूपणम् ।

(भा०) अप्त्वाभिसम्बन्धादापः । रूपरसस्पर्श-द्रवत्वस्नेहसंख्यापरिमाणपृथक्त्वसंयोगविभागपर-त्वापरत्वगुरुत्वसंस्कारवत्यश्च । एते च पूर्ववत्सि-द्धाः । शुक्लमधुरशीता एव रूपरसस्पर्शाः । स्नेहोऽम्भ-स्येव सांसिद्धिकं द्रवत्वञ्च । तास्तु पूर्ववद् द्विविधाः-नित्यानित्यभावात् । कार्यं पुनस्त्रिविधम्—शरीरेन्द्रि-यविषयसंज्ञकम् । शरीरमयोनिजमेव वरुणलोके पार्थि-वावयवोपष्टम्भादुपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां रसोपलम्भकमन्यावयवानभिभूतैर्जलावयवैरारब्धं र-सनम् । विषयस्तु सरित्समुद्रहिमकरकादिरिति ॥

(सू०) अप्त्वेति । अप्त्वं-जलत्वम्, तस्याभिमतसम्बन्धात्—समवायादापः पक्षीभूता इति शेषः । जलत्वन्तु त्रुटिपर्यन्तं स्फुटत-रप्रत्यक्षसिद्धम्, जलत्रुटेर्महाजलत्वेन जलोपादेयजलसमवेतत्वानु-मानाच्च परमाणुद्व्यणुकयोस्तत्सिद्धिरिति वदन्ति ।

एते—रूपादयः, पूर्ववत्—पृथिवीवत्, सिद्धा—मुनिसंमति-सिद्धास्तथा च 'रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च' (अ० २ आ० १ सू० २) इति सूत्रबलादेव जलस्य रूपादिविशेषगुणवत्त्वम्, रूपिषु चाक्षुषवचनात् सप्त संख्यादयः, पतनोपदेशाद् गुरुत्वम्, उत्तरकर्मवचनात् संस्कार इति । रूपरसस्पर्शानां प्रत्येकवत्त्वस्य घटादौ व्यभिचारेण जलेतरभेदकत्वासंभवादाह शुक्लमधुरशीता एव रूपरसस्पर्शा इति । शीता (स्पर्शा) इत्यत्र गुणवाचिनोपि शीतशब्दस्य न क्लीबता किन्तु पुंस्त्वमेव पुलिङ्गस्य स्पर्शशब्द-स्य विशेषणत्वात् । शुक्लं रूपमित्यत्र शुक्लपदस्य क्लीबत्ववदिति ध्येयम् । यद्यपि शुक्लमात्ररूपवत्त्वं स्फटिकादौ व्यभिचारान्न ज-लेतरभेदकम्, तथापि शुक्लेतररूपासमानाधिकरणभास्वररूपव-

दवृत्तिद्रव्यविभाजकधर्मवत्त्वे स्नेहानधिकरणावृत्तिशुक्लरूपवत्त्वे वा तात्पर्यम् । मधुरमात्ररसवत्त्वमपि मधुरान्यरसवदवृत्तिमधुररसवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वं वाच्यम्, नातः शर्करादावतिप्रसङ्गः । शीतमात्रस्पर्शवत्त्वं च शीतत्वशून्यस्पर्शवदवृत्तिस्पर्शवत्त्वपर्यवसितं ग्राह्यम् , नातः शीतत्वस्यैव व्याप्यतावच्छेदकत्वसम्भवाद्व्यर्थविशेषणत्वावकाशः ।

ननु स्नेहः क्षीरघृततैलादावतिप्रसक्तत्वात् कुतो जलस्य वै- (सा)धर्म्यमत आह स्नेहोऽम्भस्येवेति। घृतादौ स्निग्धत्वप्रतीतेस्तदुपष्टम्भकजलस्नेहोपाधिकत्वादिति भावः । ननु द्रवत्वं घृतादिसाधारणत्वात् कुतो जलस्य लक्षणमत आह सांसिद्धिकञ्चेति । सांसिद्धिकत्वं पाकाप्रयोज्यद्रवत्वगतो जातिविशेषः शैत्यसमानाधिकरणत्वम् । अत्रापि संख्यादयः स्नेहवैशिष्ट्य एव जलेतरभेदकाः बोध्याः, संख्यादिमात्रस्य पृथिव्यादावतिप्रसक्तत्वाद्भिन्नधर्मिकत्वाच्च न व्यर्थत्वशंकापि ।

तास्त्विति । ता आपोपि पूर्ववत् पृथिवीवत् नित्यानित्यभेदेन द्विविधा इत्यर्थः। कार्यमित्यस्य अपामित्यादिः । नन्वाप्यशरीरस्य योनिजत्वे पृथिवीत्वव्याप्तौ जलत्वव्यावृत्तिरेव विरुद्धजात्योरेकत्र सत्त्वायोगादत आह शरीरमप्ययोनिजमेवेति । अथ जलीयमपि शरीरं यद्यस्ति तत् कुतो नानुभूयत इत्यत आह वरुणलोक इति । तथाच विप्रकृष्टत्वान्न तस्यानुभवः। जलत्वं शरीरसमवायिवृत्ति द्रव्यारम्भकनित्यवृत्तिजातित्वात् पृथिवीत्ववत् इत्यनुमानं च तादृशशरीरे मानमिति भावः । नन्वाप्यदेहस्य पृथिव्यनारभ्यत्वे धारणाकर्षणानुपपत्तौ कथमुपभोगः सम्पद्यतामत आह पार्थिवेति । पार्थिवभागानामुपष्टम्भकाख्यसंयोगसत्त्वादाप्यशरीरमपि भोगायतनमित्यर्थः। तथाच तत्र विजातीयानां सम-

वायित्वमेव नाभ्युपेयते न तु कारणान्तरत्वमपीति भावः। आप्य-मिन्द्रियमाहेन्द्रियमिति। सर्वप्राणिनां–सर्वजातीयप्राणिनां रसो-पलम्भकमिन्द्रियं जलावयवैरारब्धं रसनं रसनसंज्ञकमित्यन्वयः। पित्तोपहतजिह्वानां रसग्राहकेन्द्रियसत्त्वे प्रमाणाभावमावेदयितुं वि-जातीयानभिभूतैरित्युक्तम्। पित्ताद्यनभिभूतैरिति तदर्थः। अत्र घ्राणस्य पृथिवीत्व इव रसनस्य जलत्वे प्रागुक्तमेव प्रमाणमनु-सन्धेयम्। करकादिरित्यादिना कूपाद्युपग्रहः। न च करकाया जलत्वे द्रवत्वापत्तिः तदारम्भकपरमाणौ सदैव द्रवत्वसत्त्वादिति वाच्यम्। तादात्म्येन करकाया एव समवायेन द्रवत्वं प्रति विरोधित्वात्। अदृष्टविशेषः करकायां द्रवत्वोत्पादप्रतिबन्धक इत्यपि कश्चित्॥

इति जलम्॥

---

(से०) पृथिवीनिरूपणानन्तरं प्रतिबन्धकजिज्ञासापगमे सत्यवस-रलक्षणया सङ्गत्या जलनिरूपणम्। उद्देशक्रमलक्षणानन्तरं जललक्षणे-ऽवसरः तस्योद्देशानन्तरमुद्देशेऽपि सम्भवात्। अप्त्वेति। अनित्यस्ने-हत्वेन जन्यतायां जनकतावच्छेदकत्वेन जन्यजलत्वसिद्धौ घटकत्वेन जलत्वसिद्धिः द्वितीयक्षणजन्मनि स्नेहादौ प्रथमक्षणे सतः करणता-वच्छेदकत्वेन जातिभिन्नस्य तस्यासम्भवात्। स्नेहात्यन्ताभावानधि-करणत्वस्य शीतात्यन्ताभावानधिकरणत्वादिना विनिगमनाविरहेण गौरवेण चानवच्छेदकत्वात्। ननु स्नेहं प्रति स्नेहात्यन्ताभावान-धिकरणत्वेन शीतादि प्रति तत्तदत्यन्ताभावानधिकरणत्वेन जन-कतेति चेन्न। एतावज्जनकतावच्छेदककल्पने गौरवात्। विनिग-मनाविरहाच्च क्वचित्स्नेहात्यन्ताभावः क्वचिच्छैत्यत्राधिकरणस्वभाव-स्यैव प्रयोजकत्वे तस्य वक्तुमशक्यत्वात्। जलमित्यनुगताकार-प्रत्ययादपि जलत्वसिद्धिः। स्नेहात्यन्ताभावानधिकरणत्वादिना तत्प्रत्ययस्य स्नेहतदत्यन्ताभावाद्युपस्थितिसापेक्षत्वेन विलम्बितत्वात्

स्नेहादिना तत्समर्थने प्रथमक्षणे जलं जलं न स्यादेव स्नेहात्यन्ताभावानधिकरणत्वादिना तुल्यतुलाधिरूपाणां लाघवगौरवयोरभावेन नैकस्य प्रवृत्तिनिमित्तत्वं नानेकस्य नानार्थत्वापत्तेरिति जलत्वं जातिरेव तथेति संक्षेपः ।

अभिसम्बन्धो–अभिमतसम्बन्धः समवायलक्षणः । तेनैकार्थसमवायादिवारणम् । आपः इतरेभ्यो भिद्यन्त इति शेषः । चतुर्दशगुणान्वर्णयति रूपेति ।

पूर्ववदिति । रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धा इति सूत्रात् रूपादयः सिद्धाः । चाक्षुषवचनपतनोपदेशोत्तरकर्मवचनैस्संख्यादय इति । पृथिव्यामिवात्रापि सूत्रमेव मानमित्यर्थः । रूपस्पर्शयोः प्रयोजकयोरभावे प्रत्यक्षत्वानुपपत्तिः रसाभावे रसनेन्द्रियस्याप्यस्य नीरसत्वे असाधारणरसव्यञ्जकत्वानुपपत्तिः । रूपादिष्वेकासाधारणव्यंजकस्य तद्वत्त्वनियमात् । स्नेहसांसिद्धिकद्रवत्वयोरभावे तत्प्रत्यक्षस्य भ्रमत्वे तदाश्रयधर्मान्तरकल्पनापत्तिः । संख्यादा तु पृथिव्याम् इव युक्तयोऽनुसन्धेया इति भावः । रूपरसस्पर्शानां येन रूपणासाधारण्यं तदाह शुक्लेति ।

यद्यपि पृथिव्यामपि कस्यांचिच्छुक्लं तथापि न पाकाप्रयोज्यम् । तेजसि तथात्वेऽपि नाभास्वरम् । एवं चापाकजाभास्वररूपवत्त्वं शुक्लेतररूपासमानाधिकरणाभास्वररूपवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वं वा स्वाभाविकलक्षणम्, शुक्लमेव रूपमिति वदतो भाष्यकृतोपि द्वितीयलक्षणे तात्पर्यसत्त्वात् । अपाकजरसवत्त्वं मधुरेतररससमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वं वा लक्षणम् । शीतस्पर्शस्तु स्वरूपेणैव लक्षणमित्यर्थः । क्वचित् शीतस्पर्शानुपलब्धिस्त्वातपादिस्पर्शेनाभिभवात् जलरूपस्य पाकजत्वेऽग्निसंयोगेन घटादाविव वैजात्यन्न्यूनाधिकभावो वा भवेत् , एवं रसस्यापि पाकदशायाम् । अपाकदशायां च क्वचिज्जले शुक्लेतरमधुरेतररूपरसोपलम्भस्तु पार्थिवद्रव्यौपाधिक , एवं जलीययो रूपरसयोर्जलीयतदुभयावधिकोत्कर्षापकर्षप्रतीतिरप्यौपाधिक्येव तदीययो रूपरसयोरेकाकारत्वादिति निधेयम् ।

स्नेह इति । तत्र केचित्–. स्नेहो न जलधर्मः तैलादिवदनुपलब्धेः, नापि पृथिवीविशेषगुणो घटाद्यवृत्तित्वात् किन्तु घृतादिवृत्तिः

पृथिवीत्वव्याप्यो जातिविशेष एवासौ । स च क्षीरत्वादिवदव-यवावयविवृत्तिजातिरित्याहुः ।

अत्राचार्याः । न तावत् परमाणावपि जातिरूपः स्नेहः तस्यापाकपातितस्य स्नेहदशावर्तिनो रूपादेर्नाशे सति व्यञ्जकापगमेन व्यक्तिसत्त्वेऽपि जात्यपगमप्रसङ्गः । न चैतदुचितम् । न च रूपादिनाशेपि तद्योग्यताया व्यञ्जिकायास्सत्त्वान्न स्नेहापगम इति वाच्यम् । तद्योग्यतायाः पार्थिवपरमाणुमात्रे सत्त्वेन सर्वत्र सिद्धत्वापत्तौ सर्वपृथिव्यां पृथिवीत्ववत् स्निग्धत्वापत्तेः । न च परमाणौ स्निग्धत्वं नास्त्येव, किन्तु क्षीरत्ववद्व्यणुकारम्भकपरमाणौ यथा तथा पाकजरूपादयः तद्विशिष्टैः क्षीरारम्भस्तथा स्निग्धद्व्यणुकारम्भकपरमाणुषु तदभावात् . विद्यमानानां रूपादीनां घृतद्व्यणुकादिप्रयोजकत्वेन स्निग्धद्व्यणुकाप्रयोजकत्वात् । न हि घृततैलवसापरमाणुसमानशीलं पाकजं रूपादि, येन तदारब्धेषु द्व्यणुकेषु स्नेह एकः स्यात् . किञ्च विसदृशरूपवद्भिः परमाणुभिर्विसदृशानि वसादीन्यारभ्यन्ते, एवं च वसाद्यारम्भप्रयोजकरूपादिसत्त्वात् भवतु परमाणुभिः वसाद्यारम्भः स्नेहवदारंभस्तु कथंचन घृतादिप्रयोजकान्येव तत्प्रयोजकानि घृततैलवसापरमाणूनां परस्परं विजातीयरूपवत्त्वात् ।

ननु जातौ न व्यंजकनियमः सुखादौ तदभावेऽपि सुखत्वादिजातिस्वीकारात्, तथा च परमाण्वादौ (?) परमाणौ पृथिवीत्वव्याप्यजात्यभावनियमस्य प्रामाणिकत्वे द्व्यणुकादौ वा स्नेहः स्थास्यति । ननु प्रथमपक्षे तेषां परमाणूनां नियमतः स्निग्धारम्भकत्वे घृतभस्मन्यपि स्नेहः स्यात् घृतारम्भकाणामेव परमाणूनां 'यद्द्रव्यमित्यादिनयेन भस्मारम्भकत्वात् परमाणुवर्तिजातेः कार्ये वृत्तिनियमात्, तथा च द्वितीयस्य मते सोपि न कार्यमात्रवृत्तिजातेरणुगतकारणप्रयोज्यनियमात्, रजःपरमाणुसमानशीलैः परमाणुभिः स्निग्धारंभानुपपत्तेश्चेति चेन्न । कपालगताया जातेः घट इव तन्तुगतायाः पट इव च परमाणुगतायाः स्नेहत्वजातेरपि घृतभस्मन्यसत्त्वेऽविरोधात् । यथोद्भूतरूपादप्यधस्तनतेजसस्तप्ततैलादावनुद्भूतरूपादपि तप्ततैलतेजस उद्भूतरूपतेजस्तथाऽदृष्टवैचित्र्यात् स्निग्धादप्यस्निग्धादपि वा स्निग्धमस्तु यथा वा तन्तोरतन्तुः पटस्तथा स्निग्धादस्निग्धं भस्म यथा वाऽपटात्त-

न्तोः पटास्तथाऽस्निग्धपरमाणोः स्निग्धारम्भः स्यात् अक्षीरात्पर-माणोः क्षीरारम्भः स्फुट एव, तत्र रूपादिविशेषस्येवात्राऽदृष्टविशेष-स्य प्रयोजकत्वात् । तथा च स्नेहो जातिरेवेति चेत् ।

स्निग्धतरादिप्रतीत्योत्कर्षापकर्षवत्त्वेन तयोर्गुणकर्मैकनियतत्वेन जातिरूपतया जातावसम्भावितत्वेन च स्नेहस्याजातित्वात् । तस्मा-द्गुण एव स्नेहः विशेषगुणलक्षणसत्त्वात् विशेषगुणश्च, न च घृ-तादावेव स्नेहः जलात्सङ्ग्रहाभावप्रसङ्गात् स्त्यानैर्घृतादिभिर्द्रुतैः का-चादिभिर्गोधूमादिचूर्णसंग्रहाभावेन तस्योभयकारित्वात् । संग्रहश्च धारणाकर्षणहेतुस्संयोगविशेषः न च घृतादावपि सः संयुक्तसमवा-येन जलगतस्यैव तत्र प्रतीतेः सम्भवात् शैत्यानुरोधेन तत्र जलोपष्टं-भकताया आवश्यकत्वात् । स्नेहस्योत्कर्षापकर्षवत्तया घृतादावुत्कृ-ष्टस्नेह उपलभ्यते परत्र त्वपकृष्ट इति को विरोधः? तैले सांसिद्धिक-द्रवत्वानुरोधेन जलभागस्यावश्यकतया तत्स्नेहेनैव प्रतीत्युपपत्तौ स्ने-हकल्पनायां मानाभावात् । तैले जलभागसत्त्वेऽपि न दहनप्राति-कूल्यमुत्कर्षविशेषस्नेहवत्त्वात् पार्थिवभागस्य वा तथैव स्वभावो यथा तदुपष्टंभकं न प्रतिबध्नातीति । तस्मात्स्नेहत्वेनैव जलसाधार-णविशेषगुण इति सिद्धम् । तैलादौ तु स्नेहात्स्यकल्पनात् इन्धनस्य पार्थिवभागस्यैव चोपष्टम्भस्य तथा महिमा यथोपष्टंभकेन पाथसा न भौमानलारंभप्रतिबंध इति कल्पनादित्युक्तमेव । यत्तु यथा जाठरो जातवेदा उभयधर्मः तथा तैलादिप्रक्षेपस्थले भौमोऽपीति तत्रोपष्ट-भ्योपष्टंभकयोः पार्थिवाप्ययोर्द्वयोरपि इन्धनत्वमेवेति । तन्न । भौमत्व-व्यवहारात् पार्थिवमात्रेन्धनस्य तेजसो भौमत्वात् ।

द्रवत्वं सांसिद्धिकद्रवत्वेन रूपेण जलस्यासाधारणमित्याह सां-सिद्धिकमिति । तैलस्य भौमानलेन्धनत्वेन क्षीरस्य पिण्डीभावेन पार्थिवत्वेऽवधारिते प्रतीयमानं सांसिद्धिकं द्रवत्वमम्भस इति भाव-नीयम् । करकायामपि सांसिद्धिकमेव द्रवत्वं भौमोष्माभावसहकृ-तेनादृष्टेन तु तत्र विलयनप्रतिबन्धो भौमोष्मणि निषण्णानां तु विशि-ष्टाभावेन भवति जलान्तरावैशिष्ट्यं न तु तेजःसंयोगस्तत्र समवा-यिकारणं येन नैमित्तिकत्वं स्यात् इति भावः । यत्तूपष्टम्भकपार्थिव-भागमाहात्म्यात्तत्र काठिन्यप्रतीतिरिति । तन्न । भूमिपतितानामपि त-थात्वापत्तेर्विलयनदशायां पार्थिवभागानुपलब्धेश्च । ननु भौमोष्मा-

भावसहचरितमदृष्टं विलयनं प्रतिबध्नातीत्यत्र विलयनशब्देन किंचिदन्यत् गृह्यते द्रवत्वमेव वा ? नाद्यः तस्मिन्प्रमाणाभावात्स्यंदनमेव गृह्यते इति चेत्। एवं हि द्रवत्वं तत्र तिष्ठतीति स्यात्, न चैतदुपपद्यते। चाक्षुषाणामनुपलब्धेः। न द्वितीयः एवं हि भौमोष्माभावसहकृतादृष्टाभावो विशिष्टाभावः कारणत्वेन वाच्यः, विशिष्टाभावश्च सम्बन्धाभावः। सम्बन्धश्च प्रकृते स्वरूपसम्बन्धोऽभावादृष्टयोः सम्बन्धान्तरस्याभावात्। स्वरूपसम्बन्धश्च धर्मिद्वयात्मक एव। एवं च प्रकृतधर्माभावः प्रकृते विशिष्टाभावः, स च भौमोष्मरूपोऽपि पर्यवस्यति। विशेषतास्य धर्मिणो भौमोष्मभावरूपत्वात्। एवं च भौमोष्मणस्तैजसः करकाद्रवत्वे कारणत्वमायातं, तथा च कथं न नैमित्तिकत्वमिति। भौमोष्मणामभावसहकृतमदृष्टमित्यत्र भौमोष्मसम्बन्धाभावसहकृतमदृष्टमिति वक्तव्यम्। भौमोष्मणां भूमौ सत्त्वेन सामान्यतस्तदभावाभावात्। एवं च भौमोष्मसम्बन्धकाभावकारणत्वेन तेजस्तेजःसम्बन्धयोगयोः कारणत्वेऽपि तेजःसंयोगासमवायिकारणत्वाभावेन नैमित्तिकत्वाभावात् तथा सति प्रतिबन्धकाभावान्तर्गततया निमित्तकारणत्वात् तेजःसंयोगत्वेनाकारणत्वात् भौमोष्माभावसहकृतादृष्टाभावत्वेनैव कारणत्वात्। एवं च तेजःसंयोगयोः करकाद्रवत्वे निमित्तकारणत्वेऽपि तत्रासमवायिकारणं द्रवत्वमेवेति न सांसिद्धिकत्वक्षतिरिति सङ्क्षेपः।

इदमत्र पर्यवसितसिद्धान्तरहस्यम्। करकागतं भौमोष्माभावविशिष्टमदृष्टं तथाभूतं तत्सम्बन्धाभावविशिष्टं वा तत्करकायां द्रवत्वप्रतिबन्धकं तदभावे कारणद्रवत्वात् कार्ये द्रवत्वमुपपद्यते। तत्र पूर्वनयेन करकासंयोगस्य सम्बन्धाभावपर्यवसन्नतया क्वचित् कारणत्वेऽपि न नैमित्तिकत्वं तस्य निमित्तकारणत्वात। असमवायिकारणत्वे नैमित्तिकत्वापत्त्या घृतवत् करकभस्मारम्भकत्वापत्तेरिति भौमोष्माभावविशिष्टदेशावस्थितिरेव वा विलयनप्रतिबन्धिका भौमोष्मविशिष्टदेशास्थितिर्वा तत्कारणमन्यथा नैमित्तिकत्वापत्त्याऽकृतकबाधादिति।

पूर्ववत्–पृथिवीवत्। शरीरेति। स्पर्शवत्परमाणुत्वेन त्रिविधकार्यारम्भकत्वेन त्रिविधकार्यारम्भकत्वे सिद्धे जलपरमाणोरपि शरीरारम्भकत्वे शुक्रादेः पार्थिवत्वे नियततयाऽयोनिजपर्यवसाने ब-

रुणलोकस्यापि दूरस्थतयाऽत्र योग्यानुपलब्धिबाधो न भवति । न च जलीयशरीरस्यातिश्लथतया कथं तेनाहारविहारादिरिति वाच्यम् । सर्वशरीराणां पाञ्चभौतिकत्वेनान्यावयवोपष्टम्भेन तदुपपत्तेः । जलीयेन्द्रियसिद्धिरपि घ्राणेन्द्रियसिद्धिरिव, तत्र गन्धसाक्षात्कारस्येव रससाक्षात्कारस्य तेन विनाऽनुपपत्तेः । न च तत्पार्थिवमेव तत्त्वे ग्राहकतापत्तेः लाघवात्पार्थिवेन्द्रियत्वेनैव गन्धग्राहकत्वात् । रूपाद्यव्यञ्जकत्वे सति पार्थिवरसव्यञ्जकद्रव्यत्वेन सक्तुरसाभिव्यञ्जकोदकवज्जलत्वसिद्धेः । मनसि व्यभिचारेण रूपाव्यञ्जकत्व इति । जलरसाभिव्यञ्जके कषायद्रव्यतदवयवे तु पार्थिवेति । सन्निकर्षे तद्वारयितुं द्रव्यत्वादिति । रूपाव्यञ्जकत्वं च परूपाव्यजकत्वञ्जातो दृष्टान्तासिद्धिः। पार्थिवरसाभिव्यञ्जकत्वं च परपार्थिवरसभिव्यञ्जकत्वं नातः पररूपाभिव्याञ्जिकायाम् स्वरसाभिव्यञ्जिकायां शर्करायां व्यभिचारः। रसनेन्द्रियं च सर्वेषां प्राणिनां जलीयमेव क्वचिच्च रसानभिव्यञ्जकत्वमभिभूतरसवत्त्वादभिभूतत्वात् वा विषयरूपं तु जलं प्रत्यक्षसिद्धमपीति भावः ॥

इति जलम् ।

---

( व्यो० ) इदानीं उद्देशवत् उद्दकस्य लक्षणपरीक्षार्थमाह—

अप्त्वाभिसम्बन्धादित्यादिप्रकरणम् । अप्त्वेनाभिसम्बन्धः अप्त्वेनाभिलक्षितः सम्बन्धः समवायो लक्षणमिति । तथाहि—आप इतरस्माद्भिद्यन्ते अप्त्वाभिसम्बन्धाद्ये तु न भिद्यन्ते न तेऽप्त्वाभिसम्बद्धा यथा क्षित्यादयः, न च तथापस्तस्माद्भिद्यन्त इति । व्यवहारो वा साध्यते विवादास्पदीभूतद्रव्यमापः द्रव्य इत्येवं व्यवहर्तव्यमप्त्वाभिसम्बन्धात् । ये त्वाप इत्येवं न व्यवह्रीयन्ते न तेऽप्त्वाभिसम्बद्धा यथा क्षित्यादयः, न तथेदं तस्मादापः इत्येवं व्यवहर्तव्यमिति । शेषं च लक्षणस्याक्षेपप्रतिसमाधानं पृथिव्यधिकारे ज्ञेयम् । एवं शब्दार्थनिरूपणाय शक्तेरतीन्द्रियत्वप्रतिषेधार्थं चाप्त्वाभिसम्बन्धादिति वाक्यम् पूर्ववद्योजनीयम् । पूर्वं हि पृथिव्यादीनां नवानामपि समवायिकारणत्वं गुणवत्त्वं क्षित्युदकात्मनां चतुर्दशगुणवत्त्वञ्चेत्युक्तम् । तत्र केषामुत्पत्तौ समवायिकारणत्वं कैर्गुणैर्गुणवत्त्वम् के वा

चतुर्दशगुणाः किं वा गुणात्मकं लक्षणमित्याह रूपरसस्पर्शस्नेहसां-
सिद्धिकद्रवत्वादिसंस्कारपर्यन्ता विद्यन्ते यासां तास्तद्वत्य इति ।
एते च पूर्ववदिति । गुणविनिवेशाधिकारे सिद्धाः । तथाहि रूप-
रसस्पर्शवत्य आपो द्रवाः स्निग्धाश्चेति पञ्चविशेषणाः सिद्धाः ते
चासाधारणत्वादितरस्माद्भेदका इत्यसाधारणताप्रतिपादनार्थमाह—
शुक्लमधुरशीता एव रूपरसस्पर्शाः सूत्रेण सामान्यशब्देनाप्यर्थाद-
भिहिता इति । तथाहि शुक्लमेव हि रूपं अभास्वरमप्सु मधुर एव रसः
शीत एव स्पर्श इति । तथा स्नेहोऽम्भस्येव सांसिद्धिकञ्च द्रवत्वमि-
ति । च परं स्नेहः सांसिद्धिकञ्च द्रवत्वमम्भस्येवेत्यसाधारणत्वमेषाम् ।
सांसिद्धिकमित्यग्निसंयोगानपेक्षम् , न त्वाकस्मिकं कार्यं कारणगुण-
पूर्वकम् । परमाणुषु च नित्यमिति । संख्यादयस्तु पूर्ववद्व्याख्येयाः ।
एवंलक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निराकरणा-
र्थमप्त्वसामान्यस्य च भेदाधिष्ठानत्वादिति । तत्समर्थनार्थमद्वैतवा-
दी चोदकस्योदकान्तराद्भेदं न प्रत्येति । तन्निराकरणार्थं सर्वस्य कार्य-
द्रव्यस्य विनाशे प्रलयावस्थायां च सर्गादौ पुनरुत्पत्तिर्न स्यात् । अभा-
वाद्भावोत्पत्तेरयोगादिति । बीजप्रतिपादनार्थं च तासु पूर्ववद्द्विविधा
इति वाक्यं व्याख्येयम् । यथा हि पृथिवी परमाणुस्वभावा नित्या कार्य-
लक्षणा त्वनित्या तद्वदापोऽपि इत्याह—नित्यानित्यभावादिति । नि-
त्यत्वादनित्यत्वाच्चेत्यनेन द्वैविध्यमित्यवान्तरभेदेन वैधर्म्यं दर्शयति ।
कार्यन्तु सत्यप्यानन्त्ये त्रिविधमिति ज्ञेयम् । केन रूपेणेत्याह शरीर-
मिन्द्रियं विषय इति संज्ञा यस्य तत्तथोक्तम् । शरीरस्य च सामान्य-
लक्षणं पूर्वोक्तमित्युत्पत्तिरेवोच्यते—शरीरमयोनिजमेवेति । न शुक्र-
शोणितसन्निपातजमिति । तच्चाप्येभ्यः परमाणुभ्यो जायते । वरुण-
लोके प्रसिद्धमागमादिति । अथाप्यं शरीरं द्रवत्वाधिकरणतया
न विशिष्टोपभोगाय कल्प्यत इत्याह पार्थिवावयवोपष्टम्भाच्चोपभो-
गसमर्थमिति । तथा ह्याप्यावयवाः समवायिकारणम् तत्संयोगाश्चा-
समवायिकारणम् पार्थिवावयवाश्च निमित्तकारणमिति । एवं तैज-
सा वायवीयाश्चेति । ननु चायुक्तमेतत् । शरीरस्य पाञ्चभौतिकत्वश्र-
वणात् । तथाहि—गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिक-
मिति । गन्धोपलब्धेः क्षितेः कारणत्वं क्लेदाच्चापां पाकात्तेजसः व्यू-
हाच्च रचनाविशेषाद्वायोरवकाशदातृत्वेन चाकाशस्येति पांचभूति-

कत्वम्। तच्च असत्। विभिन्नजातीयानामेकद्रव्योत्पत्तौ समवायित्वस्यादर्शनात्। न च विभिन्नजातीयावयवेषु समवेतं शरीरमुपलभ्यते। यदि च पञ्चानां समवायित्वं स्यादेवञ्च सत्येभ्यः कः पार्थिवान्यस्त्वाप्यस्तैजसावयवीयास्तेषु समवेतं शरीरमुपलभ्यते(?)। न चैवं तथा विचित्रगुणाधिकरणत्वात्समवायिकारणानां कार्येपि तद्वैचित्र्यं स्यात्। एवं च सति पार्थिवावयवे शुक्लादीनामन्यतमत्वं रूपं पाकजस्पर्शः स्यात्। आप्यावयवे च शुक्लमेव रूपं शीत एव स्पर्शः स्यात्। तैजसे भास्वररूपं उष्ण एव स्पर्शो वायवीये चानुष्णाशीतत्वे सति अपाकजस्पर्श एव स्यादिति। विचित्रावयवैरारब्धत्वाच्छरीरे वैचित्र्यमुपलभ्येत। न तूपलभ्यते तस्मादयुक्तमेतत्। अथावयवस्याप्यनेकभूतैरारम्भः। तथाहि-पार्थिवाप्याभ्यां परमाणुभ्यां द्व्यणुकं पुनराप्यतैजसाभ्यां तथा तैजसवायवीयाभ्यामारब्धमिति। एवं वायुशब्दतन्मात्राभ्यां एतानि द्व्यणुकान्युत्पन्नानि त्र्यणुकादिप्रक्रमेण शरीरमारभन्त इत्यभ्युपगमे च रूपादीनामुत्पत्तिर्न भवेत्। तथाहि-गुणाश्च गुणान्तरमारभन्त इति सूत्रेणानेकस्य गुणस्य गुणारम्भकत्वमुक्तम्। एवं च सति पार्थिवाप्याभ्यामणुभ्यामारब्धे द्व्यणुके गन्धोत्पत्तिर्न स्यात्। तस्य ह्येकत्वेनाजनकत्वादेवमाप्यतैजसाभ्यामारब्धे द्व्यणुके रूपाभावः। तथा वायुशब्दतन्मात्राभ्यामारब्धे स्पर्शाभाव इति। तदेवम् गन्धरसरूपस्पर्शानां द्व्यणुकेष्वभावे तत्कार्यकार्येष्वप्यभावादिति शरीरेप्यभावप्रसङ्गः। एतच्च द्व्यात्मकादिष्वपि समानम्। तथाहि–पार्थिवाप्याभ्यामारब्धे शरीरे गन्धानुत्पत्तिः। पार्थिवतैजसाभ्यामारब्धे गन्धरसानुत्पत्तिः पार्थिववायवीयाभ्यामारब्धे गन्धरसानुत्पत्तिः। एवं पार्थिवाकाशाभ्यामारब्धे चतुर्णामनुत्पत्तिरिति। न च द्रव्यारम्भकत्वं आकाशस्यामूर्तत्वादिति। मूर्तस्य हि स्पर्शवतो द्रव्यस्य द्रव्यारम्भकत्वदर्शनात्। एवमण्वादेरपि इतरसहकारित्वेनारम्भे दूषणमूह्यम्। तथा त्रयाणां पृथिव्यादीनां चतुर्णां चारम्भ इति पञ्चानां च कारणत्वमिष्यत इति पाञ्चभूतिकत्वमिष्टम्। समवायित्वं चैकस्यैवेति। पार्थिवे हि शरीरे पार्थिवस्यान्यस्मिन् गन्धअन्यस्येति(?)। पार्थिवे च क्लेदोपलम्भः संयुक्तसमवायेन पाकस्त्वान्तरानलसंयोगात्स च नोपलभ्यत एवेन्द्रियेण शरीरे सर्वदा, केवलं तु गुणान्तरप्रादुर्भावात् पूर्वशरीरनिवृत्ता उत्पन्नपाकजैरारम्भः कल्प्यते। अणू-

हस्त्ववयवरचनाविशेषः । स तु वायुकार्यो न भवत्येवावकाशदातृ-त्वञ्च मूर्तद्रव्याभावस्यैवेत्याकाशस्य लिङ्गमित्यलम् ।

इन्द्रियस्वरूपनिरूपणार्थमाह—इन्द्रियञ्च रसव्यञ्जकमिति । र-सोपलब्धिः करणकार्या क्रियात्वाद्या या क्रिया सा सा करणकार्या यथा छिदिक्रिया, तथा चेयं क्रिया, तस्मात्करणकार्येति । यच्च रसो-पलब्धिसम्पादकं करणं तदाप्यन्तद्रसनम् । रूपरसादिषु मध्ये नियमेन रसव्यञ्जकत्वाद्यद्यत् रूपादिषु मध्ये नियमेन रसव्यञ्जकं त-त्तदाप्यं दृष्टम् । यथादन्तान्तर्गतोदकम् । तथा चैवमेतत् । तस्मादा-प्यमिति । रसनव्यापाराद्रसत्वादीनामपि ग्रहणस्य सम्भवादसम्भ-वित्वं स्यादिति रूपादिषु मध्ये इति पदम् । तथाहि—शुष्ककण्ठस्य मोदकादिषु रसोपलब्धिर्नोपलब्धोदकसद्भावे तु रूपादिषु मध्ये रस-स्यैकस्योपलब्धिरिति सपक्षे सत्त्वमनाप्ये चैतन्न सम्भवतीति विप-क्षाद्व्यावृत्तिरिति । तदेतदसाधारणत्वादितरस्मात भेदकमपीति ज्ञेयम् । अथ कस्मात् किञ्चिदेवाप्यं द्रव्यं रूपादिषु मध्ये नियमेन र-सव्यञ्जकमिन्द्रियं चेत्याह—अन्यावयवानभिभूतैरीषत्सम्पृक्तैरपि ज-लावयवैरारब्धं रसनमिति रसस्यैव व्यञ्जकमिति । अन्ये त्वन्यावय-वानभिभूतैरसंपृक्तैः शुद्धैर्जलावयवैरारब्धमिति ब्रुवते । अस्य च सूत्रस्येदं भाष्यम्—भूयस्त्वाद्रसवत्त्वाच्चोदकं रसज्ञाने प्रकृतिरिति । भूयस्त्वादिति । भूयसामाप्यावयवानां रसोपलब्धिप्रापकादृष्टापेक्षाणां संयोगे सतीषदितरावयवसम्पर्के च विशेषोत्पाद उपदिश्यते । अत एवान्यावयवाभिभवानुपपत्तिः । जलावयवानां भूयस्त्वादितरेषां चा-ल्पत्वादिति । रसवत्त्वञ्च रसनेन्द्रियस्य रसोत्कर्षः । सामान्यशब्दे-नाप्यर्थोऽनुक्त इति रसो ज्ञायतेऽनेनेति रसज्ञानमिन्द्रियम् तस्मिन्नुत्पाद्ये प्रकृतिः कारणमुदकं भूयस्त्वाव्याकृतात्मनिमित्तात् तस्मादेतदेवेन्द्रि-यम् । रूपादिषु मध्ये नियमेन रसप्रकाशकञ्चेति । यदि वा "कार्यनि-यमः कारणनियमं विना न घटत इति" नियमेन रसनेन्द्रियाद्रसो-पलब्धेरेवोत्पत्तिः कुत इत्याह भूयस्त्वाद्रसवत्त्वाच्च निमित्ताद्रसे ज्ञप्तिः ज्ञानं तत्र प्रकृतिः कारणं रसनेन्द्रियमिति । तथाहि-संयुक्तसम-वायाविशेषेपि नियमेन रसोपलम्भान्यथानुपपत्त्या ज्ञायते नियमहे-तुः स चान्यस्यासम्भवाद्रसोत्कर्षं भूयस्त्वं चेति कल्प्यते । यदि वा रसोपालम्भान्यथानुपपत्त्यान्यस्यासम्भवात् ज्ञायते रसोत्कर्षे किं नि-

मित्तमित्याह–भूयस्त्वमिति । तथाहि–आप्यत्वाविशेषेपि रसस्यैवोत्कर्षो न रूपादेरिति भूयस्त्वं विशिष्टोत्पादे निमित्तम् । स चादृष्टवशाददृष्टस्य च व्यवस्थाहेतुत्वादिति । विषयं निरूपयति शरीरेन्द्रियव्यतिरिक्तो ह्यणुकादिप्रक्रमेणारब्धो विषयः । तस्य हि विषयभावेनैवोपकारित्वादिति । स तु सरित्समुद्रहिमकरकादिरिति ॥

( भा० ) तेजस्त्वाभिसम्बन्धात्तेजः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत् । पूर्ववदेषां सिद्धिः । शुक्लं भास्वरञ्च रूपम् । उष्ण एव स्पर्शः नैमित्तिकं द्रवत्वञ्च । तदपि द्विविधम्–अणुकार्यभावात् । कार्यं शरीरादित्रयम् -(१)शरीरमयोनिजमेव आदित्यलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकमन्यावयवानभिभूतैस्तेजोवयवैरारब्धं चक्षुः । विषयसंज्ञकम् चतुर्विधम्–भौमं दिव्यमुदर्यमाकरजञ्च । तत्र भौमं काष्ठेन्धनप्रभवमूर्द्ध्वज्वलनस्वभावम् पचनस्वेदनादिसमर्थम् । दिव्यमबिन्धनं सौरविद्युदादि । भुक्तस्याहारस्य रसादिभावेन परिणामसमर्थमुदर्यम् । आकरजं सुवर्णादि । तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति ॥

( सू० ) तेजस्त्वेति । तेजस्त्वस्याभिमतः सम्बन्धः समवायस्तमन्तर्भाव्य तेजः प्रत्यक्षीकर्तव्यमिति शेषः, नातः पञ्चम्यसङ्गतिः । पूर्ववदिति । 'तेजो रूपस्पर्शवत्' इति सूत्रकारवचनात् रूपस्पर्शौ, रूपिषु चाक्षुषवचनात् सप्त संख्यादयः, अद्भिः सामान्यवचनात् द्रवत्वम् , उत्तरकर्मवचनात् संस्कारस्तेजसीत्यर्थः । रूपमात्रं नीलघटादावतिप्रसक्तत्वान्न तेजसो भेदकमतो व्याचष्टे शुक्लं भास्वरञ्च रूपमिति । शुक्लं भास्वरं रूपं तेजसो लक्ष-

---

(१) शरीरेन्द्रियविषयसंज्ञकम् इत्यधिकः पाठः ।

णमित्यर्थः। शुक्लमपि रूपं यद्यपि स्फटिकादावतिप्रसक्तं, तथापि उष्णत्वसमानाधिकरणं तद्ग्राह्यं अत एवाभास्वरं चेत्युक्तम्। भास्वरत्वं तेजोरूपमात्रगतो जातिप्रभेदः। स्पर्शमात्रं पृथिव्यादौ गतमत आह उष्ण एवेति। उष्णान्यस्पर्शाभावविशिष्टः स्पर्श उष्णस्पर्शो वा तेजसः साधर्म्यमित्यर्थः। तदपि—तेजोपि, अणुर्नित्यः। तेजसः कार्यं विभजते कार्यमिति। शरीरादीत्यादिना इन्द्रियविषययोः परिग्रहः। तैजसदेहस्य योनिजत्वे पार्थिवत्वापत्तिरत आह शरीरमिति। योग्यानुपलब्धिबाधं निरसितुमाहादित्यलोक इति। भोगहेतुधारणाकर्षणादिसम्पत्त्यर्थमाह पार्थिवेति। सर्वप्राणिनां—पृथिवीजलादिसर्वजातीयजन्तूनां, रूपव्यञ्जकं तेजोवयवैरारब्धमिन्द्रियं चक्षुश्चक्षुर्नामकमित्यन्वयः। सर्वदा जलाद्युपहतगोलकस्य चक्षुष्ट्वसत्त्वे प्रमाणाभावादाहान्यावयवानभिभूतैरिति। जलाद्यवयवानभिभूतैरिति तदर्थः। आकरः—खनिस्ततो जातमाकरजम्। तत्र—भौमादिषु मध्ये। काष्ठेति। काष्ठरूपं यदिन्धनमुद्दीपकं तत्प्रभवमित्यर्थः। ऊर्ध्वेति। ऊर्ध्वं वह्निर्ज्वलतीति प्रतीतिसाक्षिकः क्रियाभेद ऊर्ध्वं ज्वलनं तदेव स्वभावोऽनौपाधिको यस्य स तथा, काष्ठादौ तु ज्वलनं तदाश्रयीभूताग्निसम्पर्कप्रयुक्तमिति भावः। न चायः पिण्डादिवह्नावव्याप्तिः, ऊर्ध्वज्वलनसमवायिकारणतावच्छेदकजातिमत्त्वस्य विवक्षितत्वादिति। पचनं—रूपादिपरावृत्तिः। स्वेदनं-कफाद्यपगमः। आदिना समयभेदेन सुखदुःखयोः परिग्रहः। दिव्यन्तेजो निर्वक्ति दिव्यमिति। अबिन्धनम्—आप एव इन्धनमुद्दीपकं यस्य तत्तथा। किन्तथाविधमित्याकांक्षायामाह सौरविद्युदादीति। आदिना खद्योतादितेजःपरिग्रहः। तदर्थं निर्वक्ति भुक्तस्येत्यादिना। भुक्तस्योदनादेर्यो रसादिपरिणामः पाकज-

रसमलधातूनामुत्पादस्तेषु निमित्तमित्यर्थः । सुवर्णादीनामित्यादिना रजतताम्राद्युपग्रहः । यद्यपि गुरोः पीतस्वर्णस्य पार्थिवत्वमेव तदुपष्टम्भे च तेजोन्तरे प्रमाणाभावः, पार्थिवस्वर्णस्य चात्यन्ताग्निसंयोगेऽपि द्रवत्वानुच्छेदः पीतान्यरूपानुत्पादश्च द्रवत्वस्यात्यन्तोच्छेदे रूपान्तरोत्पादे च तादृशस्वर्णस्य प्रतिबन्धकत्वकल्पनयापि सम्पादयितुं शक्यः, तथापि सिद्धान्तमात्रमनुरुध्य सुवर्णादेस्तैजसत्वमभिहितमिति ध्येयम् ॥

ननु सुवर्णादेस्तैजसत्वे द्रावितस्य तस्य मधुरादिरसाद्यनुभवो न स्यात्तेजसो नीरसत्वादाह तत्रेति । वस्तुतः पीत एव द्रावितस्वर्णस्याप्युपलब्धिः स च पार्थिवत्वात् सरस एवेति न माधुर्याद्यनुपपत्तिरिति द्रष्टव्यम् । इति तेजः ॥

( सं० ) रूपरसगन्धस्पर्शलक्षणचतुर्गुणां पृथिवीं निरूप्य त्रिगुणं जलं निरूपितम् । इदानीं द्विगुणं तेजो निरूपयति तेजस्त्वति । तेजःशब्दस्य पदतया प्रवृत्तिनिमित्तवत्तया भास्वरोष्णयोर्विनिगमकाभावेन विनिगमनाविरहस्योभयविधिनिषेधान्यतरनिष्ठत्वेनोभयविधौ नानार्थत्वापत्त्योभयनिषेधपर्यवसानेऽप्रवृत्तिनिमित्ततया तेजस्त्वजातिरापतति । न चाकाशादिपदे पारिभाषिकतया निर्निमित्ते व्यभिचारः, निमित्तवत्तायामपारिभाषिकपदत्वस्य हेतुत्वात् आकाशादिपदेऽपि निमित्तस्वीकाराद्वा । भास्वररूपोष्णस्पर्शयोरननुगततया भास्वरत्वोष्णत्वाभ्यामनुगमे तद्विशिष्टविशिष्टस्य तेजःशब्दवाच्यताया गौरवापत्तेश्च भास्वररूपादिकारणतावच्छेदकप्रविष्टतया तज्जातिः सिद्धेति भावः । तद्गुणान् गणयति रूपेति । पूर्ववदिति । यथा पाथःपृथिव्योर्गुणाः सूत्रकारवचनात् सिद्धाः तथा तेजसोऽपीत्यर्थः । तेजो रूपस्पर्शवदिति सूत्रं रूपस्पर्शयोर्मानम् चाक्षुषत्वप्रतिपादकसूत्रं संख्यादिषु अद्भिः सामान्यप्रतिपादकं सूत्रं द्रवत्वे उत्तकर्मप्रतिपादकं संस्कारे।भास्वरत्वं परप्रकाशकत्वव्यङ्ग्यं रूपत्वावान्तरजातिविशेषः तद्रूपं तेजस एव । एवं च भास्वद्रत्ववत्तेज इति भास्वरञ्च रूपमेवेति रूपपदोपादानं न तु लक्षणप्रविष्टत्वेन । शुक्लपदमपि तेजसो रूपं शुक्लमेवेति

स्वरूपकथनाय लक्षणे वैयर्थ्यात् । अग्नेररुणादिरूपोपलब्धिस्तु पार्थिवौपाधिकी तद्विरहे चन्द्रादौ शुक्लस्योपलंभात् । ननु चन्द्रादौ शुक्लत्वप्रतीतिरेवमन्यौपाधिकी तत्रेन्धनस्योपाधेः सम्भवादिति चेत् । जलरूपस्यान्यरूपानभिभावकत्वात् । जलवितनस्य नीलस्य सितिम्नोऽनुपलम्भात् । ननु वह्निरूपस्याभिभूतत्वे परप्रकाशकत्वं न स्यात् उद्भूतानभिभूतमहत्त्वसमानाधिकरणभास्वररूपस्यैव परप्रकाशकत्वात्, अन्यथा नयनरूपसुवर्णरूपतेजःपरमाणुरूपघटरूपाणां परप्रकाशकत्वापत्तेरिति चेत् । न, वह्निरूपशुक्लत्वस्याभिभूतत्वेऽपि वह्निरूपस्यानभिभवादित्येके । अनभिभूता वह्निप्रभैवाभिव्यञ्जिकेत्यपरे । सुवर्णरूपं त्वभिभूतत्वान्न प्रकाशयति न वा प्रकाशते महत्त्वसमानाधिकरणोद्भूतानभिभूतरूपस्यैव प्रत्यक्षत्वात् । अभिभवश्च बलवत्सजातियसम्बन्ध एव, तेनान्धकारेऽपि तदभिभूतम् ग्रहणपर्यन्तस्य गौरवग्रस्तत्वात् । ननु सुवर्णमन्धकारे किमिति न गृह्यते तेजोग्रह आलोकस्यासहकारित्वात्, प्रत्यक्षताप्रयोजकस्य महत्त्वे सत्युद्भूतरूपस्य सत्त्वादिति चेन्न । रूपपुरस्कारेण चक्षुषः प्रवृत्तेः । तत्र पृथिवीरूपस्यालोकाभावेनाग्रहात् तेजोरूपस्य चाभिभूतत्वादिति । उष्ण एवेति । चन्द्रादिषु तूष्णत्वानुपलम्भोऽनुद्भूतत्वात् । एवकारश्चन्द्रचामीकरचक्षुरादिष्वनुपलम्भहेतुकां विप्रतिपत्तिमपनेतुमित्यत्राचार्याः । चामीकरग्रहणमनुप्रासरपतित(?)स्पर्शस्याभिभूतत्वात् । अनुद्भूतत्वे सुवर्णस्याप्रत्यक्षत्वापत्तेः । उभयोरुद्भवस्य बहिर्द्रव्यप्रत्यक्षत्वप्रयोजकत्वेन वाच्यत्वात् । तथाच संख्यादेः पृथिवीजलत्वेनान्यथासिद्धत्वेऽपि द्रव्यत्वप्रत्यक्षत्वानुपपत्तेः आश्रयाप्रत्यक्षत्वे सामान्यगुणाप्रत्यक्षत्वात् । अणुकार्यभावान्नित्यकार्यभावात् । कार्यरूपमिति स्पर्शवत्परमाणुत्वेन तृतीयारम्भकत्वसिद्धौ शरीरारम्भकत्वप्राप्तौ शुक्रशोणितयोरभावेनायोनिजमेव शरीरम् । अनुपलम्भसत्त्वादलोकस्थित्या व्यवधानमित्यर्थः । पार्थिवेत्यादि पूर्ववत् ।

इन्द्रियमिति । स्पर्शवत्परमाणुतया इन्द्रियारम्भकत्वसिद्धौ तैजसेन्द्रियसिद्धौ तच्चक्षुरेव । चक्षुस्तैजसं रसाव्यञ्जकत्वे सति रूपव्यंजकद्रव्यत्वात् इत्यर्थः । ननु चक्षुः प्राप्यकार्यन्यथा वा ? आद्येऽप्यधिष्ठान एव स्थितं प्राप्नोति बहिर्गतं वा ? नाद्यः—अधिष्ठानस्थि·

तप्राप्तस्यार्थस्याधिष्ठानप्राप्तिप्रसङ्गाद्रसनवत्। नोत्तरः-तस्याधिष्ठानं परित्यज्य बहिर्गमनेऽग्राहकत्वप्रसङ्गादधिष्ठानसम्बद्धस्येन्द्रियस्य ग्राहकत्वात्, अपरित्यज्य बहिर्गमने चक्षुषा स्वाधिकपरिमाणवस्त्वग्रहणप्रसङ्गः। स्वारभ्यस्यास्य तावदवच्छेदेन प्राप्त्यभावात्-कियदंशस्याप्राप्तस्य ग्रहणं न स्यात् क्रामिकगत्या क्रमप्राप्त्या क्रामिकबोधसामग्रीसत्त्वात्। न चाग्रिमप्राप्तिरपि पूर्वबोधसामग्री गौरवात्। न च चक्षुरऋजुदेशगतं सद्वक्रीभूय तथाग्रं प्रसारयति यथा परापरयोर्द्वयोर्युगपत्सम्बध्नातीति वाच्यम्। एतावदप्रामाणिककल्पनाया अनुचितत्वात्। न च निर्गतं सद्यदैव मध्यभाग एव परेण सम्बद्धस्तदैव तदेवाग्रभागेन परेणेति यौगपद्यमुपपद्यते, पूर्वपरेणासम्बन्धस्तु वक्रगत्येति वाच्यम्। अपरस्या अपि कल्पनायाश्च प्रामाणिकत्वात्। अग्रावच्छेदेनैव चक्षुःसम्बन्धस्य ग्राहकत्वाच्चान्यथा मलमितनल(?)गोलकोपलब्धिप्रसङ्गात्। यत्तु तेजसः संसर्गि द्रव्यतया विनिर्गतं चक्षुर्बाह्यालोकाभ्यां प्राप्तसंसर्गाभ्यां जनितं तेजोन्तरञ्च युगपदुभयं परिच्छिनत्ति तदारब्धश्च नोद्भूतं रूपादि नात इन्द्रियजातिपातः। न चोद्भूतरूपेणोद्भूतरूपजनननियमोऽवस्थितेनोद्भूतरूपेणापि तैलेन तद्रूपस्य तेजसोऽजननात्। न च तत्राऽदृष्टाकृष्टास्तादृशा एव भागास्तथाभूतमारभन्त इति वाच्यम्। अदृष्टस्य अनुद्भूतत्वप्रयोजकतया आवश्यकत्वे तदाकर्षणपर्यन्तकल्पनाया अनुचितत्वादिति। एतच्च महारतारब्धेन(?) चक्षुषा प्राप्तस्य पृष्ठदेशस्थस्यापि ग्रहणप्रसङ्गात्। अपि च चक्षुषः प्राप्यकारित्वे स्फटिकाद्यन्तरितोपलम्भानुपपत्तिः स्फटिकादीनां प्रतिबन्धित्वेन प्राप्त्यभावादपि च प्राप्यकारितायाश्चक्षुषो महता वातेन दहनशिखाया इव इतरनयनादृजुदेशस्थितपदार्थप्रज्ञा न स्यात्, तस्मात् अप्राप्यकारि चक्षुः तथाच गोलकमवग्राहकं च तददृष्टविशेषविशिष्टं कर्णशष्कुलीवत्। नातः प्रसक्तान्धस्य ग्रह इति चेत्।

अत्राहुः-चक्षुः प्राप्यकारिग्राहकं तैजसत्वात् प्रदीपप्रभावत्। न च तैजसशरीरेण प्राप्तस्यापि ग्राहिणा व्यभिचारः शरीरभिन्नत्वेन विशेषणात्। न च गोलकतायां तैजसत्वमसिद्धम् तैजसत्वस्य प्राक्साधनेन गोलकताया वक्तुमशक्यत्वात्। न च प्राप्यकारित्वे रसनवदधिष्ठानसम्बद्धार्थग्राहित्वं स्यादिति वाच्यम्। प्राप्यकारिणोऽपि

प्रदीपस्याधिष्ठानासम्बद्धार्थग्राहकत्वात्। पृथुतरग्राहित्वमपि प्रदीप-
प्रभावत् पृथ्वग्रतयोपपद्यते, अन्यथा परभागावच्छिन्नस्यापि यच्चता(?)-
देर्ग्रहणप्रसङ्गः। एवं च यदा यावानग्रभागो भवति तदा तावत्तद्ग्राह्यं
परिच्छिनत्तीति न किमपि विरुध्यते शाखाचन्द्रमोधियो यौगपद्यधि-
यस्तु भ्रान्तत्वमेवातिशयितवेगतया कालभेदानाकलनेन भ्रमसम्भ-
वात्प्रमात्वबाधकप्राप्यकारित्वे भित्त्यादिव्यवहितग्रहणमसमञ्जसमेव।
स्फटिकाद्यन्तरितोपलम्भोऽपि स्फटिकादीनां स्वभावस्वच्छतया ते-
जोवात्यप्रतिबन्धकतया, अन्यथा दीपप्रभाया अपि प्रतिबन्धापत्तेः।
विद्युत्प्रभाया इव चातिशयितवेगतयैव न नायनस्य तेजसो वात्या-
दिना दूरमपनयनं कराभ्यां तु तस्यापि वारणं वस्तुस्वभाववैचित्र्य-
स्य नियोगपर्यनुयोगानर्हत्वेन हुताशनशिखाया वायुनाऽन्यत्र नयने-
ऽपि चक्षुषोऽनपनयनात्। किञ्चाप्राप्यकारित्वे भित्त्यादिव्यवहितस्य
कुतो न ग्रहणम्। ग्राह्यग्राहकयोरन्तरालवर्तिनः प्रतिबन्धकत्वादिति
चेत्। अन्तरालवर्तिना तृणादिना परभागवर्तिनो महीधरादेरग्रह-
णप्रसङ्गात्। ग्राह्याधिकपरिमाणमध्यवस्थितं प्रतिबन्धकमिति चेत्।
न। उच्चमारुह्य ग्राह्याधिकपरिमाणे मध्यस्थितेऽपि परभागस्थितस्य
ग्रहणात्। ग्राह्यग्राहकयोर्महदन्तरालस्थप्रतिबन्धकमिति चेत्। ग्रा-
हकपदेन गोलकग्रहण उच्चस्थितान्तरालमित्यादेस्तत्सम्भवात्सक-
लशरीरग्रहणेऽपि तत्सम्भवात्, तस्माद्भित्त्यादिप्रतिविघातकत-
यैव प्रतीतिप्रतिबन्धकमिति प्राप्यकारितासिद्धिरिति। यत्तु क्षणमात्रा-
वस्थायिषु भावेषु कश्चित्कंचित् कार्ये योग्यः कश्चित् क्वचिदेव प्रत्य-
क्षस्वरूपयोग्यो घटः प्रत्यक्षीक्रियते नान्यः, तथाभूतश्च भित्तिपर-
भागस्थितो घट इति न प्रत्यक्ष इति। तन्न। सर्वान् प्रति भित्तिपर-
भागस्थितस्यायोग्यत्वे भित्तिपरभागस्थितेनाप्यग्रहणप्रसङ्गात्। भि-
त्त्यर्वाग्भागस्थितं प्रति भित्तिपरभागावस्थितोऽयोग्य इति चेत्।
पूर्वन्यायेन निराकृतत्वात्। कुर्वद्रूपत्वमेव योग्यत्वमिति चेन्न। अस्य
क्षणभङ्गनिराकरणेन निराकर्तव्यत्वात्। भित्तिपरभाग एवाकुर्वद्रूप-
त्वं नार्वाग्भागस्थिते कदापि इत्यत्र नियामकस्यान्वेष्टव्यत्वात्। त-
स्मात्सिद्धं चक्षुः प्राप्यकारि गोलकमितश्च। एवं च रसनादयोऽपि
जिह्वादिभिन्ना इन्द्रियत्वेनातीन्द्रियत्वादिति सर्वमनवद्यमिति।
किञ्च चक्षुर्घटयोः सहकारितया परस्परसम्बन्धापेक्षायामपि प्राप्य-

कारित्वादिति संक्षेपः।

भौमादयो-भूम्यादौ भवाः। आकरं खनिः, काष्ठपदमुपलक्षण तया तृणादीनपि संगृह्णाति। ऊर्ध्वेति जातिनियतो धर्मस्वभाव इत्युच्यते। परार्थतामाह-पचनेति। पाको विक्लेदनं रूपादिपरावृत्तिः, स्वेदनं वातश्लेष्मणोरपगमः, आदिग्रहणाच्छीतादिदुःखोपशमः। अबिन्धनमाप एवेन्धनं यस्य तेनौदर्यव्यावृत्तिः। भौमेप्येतदर्थमेव पार्थिवमात्रेन्धनत्वं विवक्षणीयम्। विद्युदादीत्यादिपदाद्वडवानलादिः। आहारस्येत्यत्र भावव्युत्पत्तौ भुक्तस्येत्यनेन सामानाधिकरण्यानुपपत्त्या कर्मव्युत्पत्तिरास्थेया। तत्र चोदनादित्वेनैव तद्ग्रहो नातः तत्पौनरुक्त्यम्। रसादीत्यादिग्रहणात् मलादिपरिग्रहः रसादय एव परिणामः। सुवर्णादीत्यादिपदाद्रजतादयः।

ननु सुवर्णं पीतमगुरुत्वाश्रयत्वेन प्रतीयमानं पार्थिवमेव, अपि च नैमित्तिकद्रवत्वाश्रयतयापि तत्तथा तस्य पार्थिवे एव घृतादौ दर्शनात्। न च पृथिवीत्वेन न नैमित्तिकद्रवत्वसमवायिकारणता-घटादौ द्रवत्वापत्तेः, नापि पृथिवीत्वव्याप्येन घृतत्वादिनाऽननुगमापत्तेरित्यदृष्टविशेषसाचिव्येन तत्प्रयोजकत्वे तेजस्यपि नैमित्तिकं द्रवत्वमिति वाच्यम। तेजसि नैमित्तिकद्रवत्वस्य सुवर्णातिरिक्तेऽप्रसिद्ध्या सुवर्णादेः पार्थिवत्वान्नैमित्तिकद्रवत्वप्रयोजकादृष्टसाचिव्यस्य पृथिवीतेजसोर्द्वयोः कल्पनापेक्षया पृथिव्यां दृष्टत्वेन पृथिव्यामेव कल्पनायाः उचितत्वात्। एवं च सुवर्णं पार्थिवं नैमित्तिकद्रवत्वाश्रयत्वात् घृतवत्। न चाप्रयोजकत्वं निरुपाधित्वादिति चेन्न।

अत्यन्ताग्निसंयोगेन किञ्चिद्द्रवत्वमुच्छिद्यते किञ्चित्तु नेति सर्वानुभवसिद्धम्। तत्रोच्छिद्यतावच्छेदकं न नैमित्तिकद्रवत्वं द्रवत्वं वा सुवर्णद्रवत्वस्योच्छेदापत्तेः। नापि घृतादिद्रवत्वमननुगमापत्तेः। नापि तेजोद्रवत्वं घृतादावभावात् इदानीं तेजसि द्रवत्वासिद्धेश्च। तस्मात्पृथिवीत्वमेवोच्छिद्यताप्रयोजकम्। एवं च सुवर्णद्रवत्वं यदि पार्थिवं स्यात् तदाऽसति प्रतिबन्धके वह्न्यनलसंयोगेनोच्छिद्येत, जलामिलितघृतादौ तथा दर्शनात्। नन्वग्निसन्निधेतेन जलशोषणेन जलद्रवत्वमप्युच्छिद्यते, तथाच कथं पार्थिवत्वमुच्छिद्यतेप्रयोजकमिति चेन्न। तत्र जलनाशेन द्रवत्वनाशात्। अग्निसंयोगेन नाशात् लाघवेन पार्थिवत्वस्य तेषू-

च्छेदप्रयोजकत्वे तथात्वसिद्धेः । एवं च सुवर्णं न पार्थिवमिति सिद्धे सांसिद्धिकद्रवत्वाभावेनाजलत्वे सिद्धे रूपवत्त्वेन तेजस्त्वं सिद्ध्यति । रूपवत्त्वं च बहिरिन्द्रियप्रत्यक्षद्रवत्ववत्त्वात् तस्य प्रत्यक्षत्वाभावे द्रवत्वस्याप्यप्रत्यक्षत्वापत्तेः सामान्यगुणत्वात्, न तु सुवर्णादिभिन्नानित्यद्रवत्वमेवोच्छेद्यताप्रयोजकम् गौरवात् । ननु द्रुतद्रुततरादिक्रमेण सुवर्णद्रवत्वोपलम्भात्पूर्वपूर्वसुवर्णद्रवत्वमप्यग्निसंयोगादुच्छिद्यत इति चेन्न । तस्याप्याश्रयनाशेनैव द्रवत्वनाशात् , अन्यथा काष्ठां प्राप्तस्यापि द्रवत्वस्य तत्राग्निसंयोगेन नाशापत्तेः, अग्निसंयोगेनोच्छिद्यमानद्रवत्वाधारस्य भस्मपर्यवसानदर्शनाच्च । यत्तु पृथिव्यां रूपस्यात्यन्तानलसंयोगेनाप्रतिबध्येनोच्छेददर्शनेन सुवर्णस्य चातथात्वेनापार्थिवत्वमिति तद्रूपस्यातीन्द्रियतया विवाददशायामुच्छेदानुच्छेदयोरसिद्धेः । पार्थिवभागद्रवत्वरूपयोरुच्छेदप्रतिबन्धकतया द्रुतद्रव्यान्तरसिद्धौ द्रुतस्य घृतस्य लाक्षायां तदुभयोच्छेदाप्रतिबन्धकतापातत्वात् पृथिवीभिन्नत्वसिद्धौ सांसिद्धिकद्रवत्वासिद्धा पार्थःपार्थक्यप्राप्तौ तेजस्त्वसिद्धिः । न चोच्छेदकजातीयस्य कथं प्रतिबन्धकत्वं तदसिद्धिदशायामस्य विचारस्याश्रयासिद्धत्वात् , सिद्धिदशादशायां धर्मिग्राहकप्रमाणबाधितत्वात् उपष्टंभकभागमात्ररूपाद्युच्छेदकप्रतिबन्धकत्वेन सिद्धा च न तृणादौ तदुभयोच्छेदकप्रतिबन्ध इत्यपरे । तदपि न विचारचातुरीतरङ्गिणीतरलतरङ्गपातप्रयासमतिक्रामति । तथाहि–धर्मिग्राहकप्रमाणाद्धि पीतपार्थिवभागातिरिक्तद्रुतं किञ्चित्प्रतिबन्धकत्वेन सिद्ध्यति द्रुतस्य जलस्य प्रतिबन्धकत्वदर्शनात् अदृष्टादेः कस्यचित् तथात्वेन कल्पनेऽदृष्टकल्पनापत्तेः । तच्च पार्थिवेन सिद्ध्यतु । न न चोच्छेद्यद्रवत्वाश्रयजातीयं कथमुच्छेदप्रतिबन्धकद्रवत्वाश्रय इति वाच्यम् । उच्छेदकजातीयस्य तेजसः कथं प्रतिबन्धकत्वमिति समानत्वात् धर्मिग्राहकमानस्योभयत्र साम्यात् । पृथिवीत्वासिद्धिपर्यन्तं तत्र धर्मिव्यापार इति चेत् । तेजस्त्वसिद्धिपर्यन्तमपि तदभावात् । प्रत्युत पृथिव्यां द्रवत्वदर्शनात् पृथिवीत्वकल्पनाया एवोचितत्वात्, तस्मान्नानया रीत्या तेजस्त्वसिद्धिः । अपि चोपष्टम्भकभागरूपावच्छेदकप्रतिबन्धकत्वं तस्य धर्मिग्राहकात्सिद्ध्यतु तन्मात्रप्रतिबन्धकत्वं कुत इति विचारणीयम् । पीतो भागः स्वरूपोच्छेदप्रतिबन्धकद्रवद्रव्य-

सम्बद्धो भूयःकालिकप्रबलानलसम्पर्केऽपि अनुच्छिद्यमानरूपवत्त्वात् जलमध्यस्थितपटवदिति वानुमानात् दृष्टान्तासिद्ध्या स्वरूपमात्रप्रतिबन्धकेत्याद्यसाधनात् । न च यदेकत्र यथा सिद्ध्यति तदाऽपरत्र न सिद्ध्यति शब्दकारणत्वेन सिद्धस्याकाशस्य संयोगादिकारणत्वात् । न च तत्र प्रमाणसत्त्वाद्भवतु तथा प्रकृते तु तदभावात्, प्रत्युत बाधकसत्त्वात् न तथेति वाच्यम् । तर्हि मदुपन्यस्तां विचारसोपानपरम्परामारुह्य दूरमागम्यताम् । धर्मिग्राहकप्रमाणस्य तथा सामर्थ्योपन्यासस्त्वसन्न्यास एव, तस्मात्पार्थिवद्रवत्वेनैव लाघवात् अत्यन्तानलसंयोगनाश्यतायाः कल्पनात् सुवर्णद्रवत्वमपार्थिवम् । जलादावपि सुवर्णवद्द्रवत्वं नाग्निसंयोगान्नश्यति इति उदीरितमेव । पार्थिवश्च भागो यदि द्रुतस्तदा द्रुततेजोभागसम्बन्धादेव तद्द्रवत्वं नोच्छिद्यते घृतादौ जलसम्बन्धस्य प्रतिबन्धकत्वेन प्रकृते द्रुतान्तराभावेन तेजस एव तथा सामर्थ्यकल्पनात् । अपूर्वकल्पनातः पूर्वसजातीयकल्पनायाः पूर्वतनाचार्यैः पूरितत्वात् । यदि च द्रुततेजोमिलितं मध्यमध्यासितस्यास्य जलमिलितमषीसख्यं तदा न काप्यनुपपत्तिरिति तर्ककार्कश्यविलासलालसमनसां सुमनसामस्मत्प्रदर्शितनयेन सुगमः पंथाः । ननु तेजसि तत्र कथं रसानुपलब्धिरत आह तत्रेति । इति तेजः ॥

(व्यो० ) इदानीं उद्देशवतस्तेजोलक्षणपरीक्षार्थमाह—तेजस्त्वाभिसम्बन्धादिप्रकरणम् । तेजस्त्वेनाभिसम्बन्धस्तेजस्त्वोपलक्षितसमवायो लक्षणमिति । तथाहि—तेज इतरस्माद्भिद्यते तेजस्त्वाभिसम्बन्धाद्ये तु न भिद्यन्ते न ते तेजस्त्वाभिसम्बन्धाः, यथा क्षित्यादयः, न च तथा तेजः, तस्मादितरस्माद्भिद्यत इति । व्यवहारो वा साध्यते । तथा तेजश्शब्दस्य सामान्यवानर्थ इति ज्ञापनार्थमतीन्द्रियशक्तिप्रतिषेधार्थञ्च पूर्ववद्व्याख्येयम् । एवं समवायित्वगुणवत्त्वप्रतिपादनार्थं च रूपादिवाक्यम् । तथाहि रूपस्पर्शादयः संस्कारपर्यन्ता विद्यन्ते यस्य तत्तद्वदिति ।

पूर्ववदेषां सिद्धिरिति । यथा पृथिव्यधिकारे रूपादयो विशेषगुणा गुणविनिवेशाधिकारे सिद्धास्तद्वदिहापीति । तथा तेजो रूपरसस्पर्शवदिति सूत्रेण विशेषगुणा उक्तौ तौ चासाधारणत्वादितरस्माद्भेदकावित्यसाधारणतामाह । शुक्लं भास्वरञ्च रूपं प्रकाशनशीलमिति । उष्ण एव स्पर्शः न स्पर्शान्तरमिति । नैमित्तिकञ्च द्रवत्वमिति सं-

रूपादयश्च पूर्ववदिति । त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद्द्रवता सम्पद्यते । अद्भिः सामान्यं यथा भवतीति सूत्रेण द्रवत्वमुक्तम् ।

लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासायाद्वैतवादिनश्च प्रतिषेधाय सामान्यसमर्थनाय बीजसद्भावप्रतिपादनाय च तदपि द्विविधमिति पूर्ववद्वाक्यं व्याख्येयम् । तथाहि–न केवलं पृथिव्युदकञ्च द्विविधम् । किन्तर्हि ? एतदपीति । तेजोऽपि द्विविधमिति । केन रूपेणेत्याह अणुकार्यभावादिति । परमाणुस्वभावं नित्यं कार्यस्वभावं चानित्यम् । कार्यस्याचानन्त्यादपरिज्ञानं मा भूदित्याह कार्यं शरीरादित्रयमिति । शरीरमिन्द्रियं विषयमित्यनेन रूपेण ज्ञेयमित्यवान्तरवैधर्म्यम् । शरीरस्य सामान्यलक्षणमुक्तमित्युत्पत्तिरेवोच्यते शरीरमयोनिजमेवेति।अयोनिजं हि शुक्रशोणितसन्निपातानपेक्षम् । धर्मविशेषसहितेभ्योऽणुभ्य इति । तैजसाः परमाणवः समवायिकारणं तत्संयोगाश्चासमवायिकारणं पार्थिवाद्यवयवाश्च निमित्तकारणमिति । तच्चादित्यलोके सिद्धमागमात् । अथ तेजोवयविनः क्षणिकतायां तदारब्धं विशिष्टोपभोगाजनकमित्याह । पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थमिति । तच्च शरीरं सामान्यलक्षणलक्षितत्वे सति तेजोवयवैरारब्धत्वादितरस्माद्भिद्यत इति विशेषलक्षणं ज्ञेयम् ।

अथेन्द्रियस्वरूपनिरूपणार्थमाह—इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकमिति । रूपोपलब्धिः करणकार्या क्रियात्वाद्या या क्रिया सा सा करणकार्या, यथा छिदिक्रिया, तथा चेयं क्रिया तस्मात्करणकार्येति । यद्रूपोपलब्धेः सम्पादकं करणं तच्चक्षुरिति । तच्च तैजसं रूपादिषु मध्ये नियमेन रूपव्यञ्जकत्वात् यद्यद्रूपादिषु मध्ये नियमेन रूपव्यञ्जकम् तत्तैजसम् यथा प्रदीपं, तथा च रूपादिषु मध्ये नियमेन रूपव्यञ्जकं चक्षुस्तस्मात्तैजसमिति । चक्षुषो हि रूपवद्द्रव्यादिप्रकाशकत्वोपलब्धेर्नियमेन रूपप्रकाशकत्वमसिद्धं स्यादिति रूपादिषु मध्य इति पदम् । रूपरसगन्धस्पर्शेषु मध्ये नियमेन रूपव्यञ्जकत्वं विवक्षितमिति । अथ तैजसत्वाच्चक्षुषा रूपस्येवोष्मप्रकाशकत्वमपि स्यात् , तस्य हि तैजसत्वात्संयुक्तसमवायस्याविशेषादन्यस्य च विशेषहेतोरभावादित्याह अन्यावयवानभिभूतैस्तेजो-

वयवैरारब्धं चक्षुरतो रूपस्यैव व्यञ्जकम् । तथाहि-ईषत्पार्थिवावयव-संयुक्तैरनभिभूतैस्तेजोवयवैरारब्धं चक्षुरिति रूपस्यैव व्यञ्जकम् । अथेत्थंभूतारम्भे किं प्रमाणम् ? कार्यनियमः । तथाहि—चक्षुर्व्यापाराद्रूपादिषु मध्ये रूपस्यैवोपलब्धिर्दृष्टा । सा च कारणनियमं विना न स्यादित्यन्यस्यासम्भवाद्विशिष्टोत्पादोऽत्र निमित्तम् । स चादृष्टात् रूपोपलब्धिसम्पादकात्तस्य हि वस्तुव्यवस्थाहेतुत्वादिति । अस्य च सूत्रस्येदं भाष्यम् । भूयस्त्वाद्रूपवत्त्वाच्च रूपज्ञाने प्रकृतिः कारणं तेज इति । रूपं ज्ञायते ऽनेनेति रूपज्ञानं चक्षुस्तस्मिन्नुत्पाद्ये प्रकृतिः कारणं तेजो भूयस्त्वान्निमित्तादतो रूपस्यैव प्रकाशकमिन्द्रियञ्चेति । भूयस्त्वं हि भूयसां तेजोवयवानां विशिष्टादृष्टोपगृहीतानामीषदितरावयवसम्पर्कें चारम्भकत्वमिति । यदि वा रूपे ज्ञाप्तिर्ज्ञानं तस्मिन्नेव रूपादिषु मध्ये कारणं चक्षुः । कुत इत्याह-भूयस्त्वादव्याकृताद्रूपवत्त्वाच्चेति । रूपवत्त्वं हि रूपोत्कर्षो विवक्षितः, अन्यथा हि तैजसत्वादुष्णस्पर्शवत्त्वमपि संभाव्यत इति विशेषाभिधानमनर्थकं स्यात् । यदि वा रूपादिषु मध्ये रूपस्यैवोपलम्भा[illegible]नुपपत्त्या ज्ञायते रूपोत्कर्षः । कुतो भवतीत्याह-भूयस्त्वादुक्तरूपादिति । अथ महत्त्वादनेकद्रव्यत्वाच्चक्षुषः कस्मादिन्द्रियेणोपलंभो न भवति? प्रदीपस्येव विशिष्टरूपाभावाद्यत्र हि रूपवद्द्रव्यस्य चक्षुस्पर्शनाभ्यामुपलंभ इति । रूपविशेषस्तु यत्कृतार्थोऽचाद्विषये रूपोपलब्धिर्यद्भावाच्च महदनेकद्रव्याश्रयस्याप्यनुपलब्धिस्स उद्भवसमाख्यातो रूपधर्मसहकारिविशेष इति । दृष्टं च रूपविशेषाभावाद्वारिस्थिते तेजसि महदनेकद्रव्यत्वेप्यग्रहणम् उद्भूतरूपस्य । प्रदीपस्यान्धकारेपि ग्रहणम् । उपभोगार्था हि सृष्टिर्भावानामिति रूपस्योद्भवे चक्षुषोऽन्धकारेपि ग्रहणे दृष्टसत्त्वानामुपभोगानुत्पत्तिः स्यादिति तदुप[illegible]प्रापकादृष्टवशेनानुद्भूतरूपं चक्षुर्जनितं प्रजापतिना । तथोष्णस्पर्शोद्भवेप्यनेकचक्षुस्सन्निपातात्प्रीतिकरे वस्तुनि नर्तक्यादौ ग्रीष्मसमयेत्युष्णैर्मरीचिभिरिव दाहः स्यादित्यदृष्टवशादेवोष्णस्पर्शस्याप्यनुद्भवः कल्प्यत इति ।

विषयस्वरूपनिरूपणार्थमाह-विषयलक्षणं विषयस्वरूपम् । चतुर्विधमिति । केन रूपेणेत्याह—भौमं दिव्यमुदर्यमाकरजञ्चेति । विषयलक्षणेन शरीरेन्द्रियाद्व्यावृत्तस्य विषयस्यावान्तरवैधर्म्यमेतदिति ।

तत्र भूमौ भवं भौमम्। काष्ठान्येवेन्धनानि यस्य तेभ्यः प्रभवत्युत्पद्यते इति तत्प्रभवमितीन्धनविशेषादितरस्माद्भिद्यते। तच्चोर्ध्वज्वलनस्वभावमिति अमुष्मादपि इतरस्माद्भिद्यत एव। यदेवार्थक्रियाकारि तदेव परमार्थसदिति दर्शनस्य सत्तासम्बन्धेनापि सत्त्वाभ्युपगमवादेन प्रतिषेधार्थः। क्रियानिरूपणञ्च न स्वेदनादिसमर्थमिति। दिव्यमबिन्धनविशेषाद्विशिष्यते इत्याह—अबिन्धनमिति। आपः इन्धनं यस्य न त्वाप एवेति। तच्च सौरमित्यादित्यसम्बद्धम्। विद्युदादीत्यादिपदेन उल्कापातादेर्ग्रहणमिति। एवमुदरे भवमुदर्यम्। तच्च भुक्तस्याहारस्य रसादिपरिणामेति। रसमलधातुपरिणामार्थम्। परिणामश्च परमाणुषु पूर्वरूपादिनिवृत्तौ उत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण रसादिद्रव्यारम्भ इति वक्ष्यामः पाकजोत्पत्तौ। आकरजं चेति। आकराज्जातं सुवर्णादि। आदिग्रहणात्त्रपुसीसलोहरजतानां ग्रहणम्। अथैतेषां तैजसत्वे किं प्रमाणम्? आगमः "तथा चाग्नेरपत्यं प्रथमं सुवर्णम् इरा वैष्णवी? सूर्यसुताश्च गावः" इति। अथाग्नेर्जातं तज्जातीयं भवतीति अनेकान्तादसाधनमेतत् तथा चाग्नेर्जातं धूमादि न तज्जातीयम्, तदसत् अपत्यव्यवहारस्य साजात्यापेक्षयैव दृष्टत्वात्। तथाहि-न कार्यमात्रे अपत्यव्यवहारो दृष्टः। किं तर्हि? समानजातीये यथा मानुषापत्यमिति। नन्वेवं चेतनेष्वेवापत्यव्यवहारोपलब्धेरचेतनेऽनुपपत्तिः। न। तेजोधिष्ठायतनस्य चेतनतया तदपेक्षयास्योपपत्तेः। यदि वाग्निकार्यस्यानेकत्वेऽप्यग्नेरपत्यं सुवर्णमिति विशेषाभिधानात्समानजातीयत्वं लभ्यते। अविशेषविवक्षायां तु कार्यान्तरमपत्यमित्यभिदध्यात्, आगमान्तराद्वा विशेषप्रतिपत्तिरित्यलम्। तथा प्रथमं सुवर्णम् इत्यभिधानाद्गुरुत्वाधिकरणत्वात् पार्थिवं सुवर्णादीत्यनुमानमागमबाधितत्वादप्रमाणम्। आगमिके हि विषयेऽनुमानप्रवृत्तेः प्रतिषेधात्। तेषां तैजसत्वे रसाद्युपलब्धिस्तर्हि कथम्? संयुक्तसमवायात्। तथाहि—संयुक्तं सुवर्णादौ पार्थिवं द्रव्यं तत्र समवेता रसादयः उपलभ्यन्त इत्याह—तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति। अथ द्रव्यत्वमप्येवमस्तु, किमर्थं तस्य तेजोगुणवत्त्वमिति चेत्। न पार्थिवादस्य विशेषोपलब्धेः। तथाहि-पार्थिवं लाक्षादि अग्निसंयोगाद्भस्मतामापाद्यमानं दृष्टम्। सुवर्णादौ च भृशमप्यग्निसंयोगातिशयेन द्रवत्वमेव। उष्णस्पर्शानुद्भवश्चात्रादृष्टात्॥ इति तेजः॥

( भा० ) वायुत्वाभिसम्बन्धाद्वायुः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारवान् । स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः । गुणविनिवेशात् सिद्धः । अरूपिष्वचाक्षुषवचनात् सप्त संख्यादयः । तृणकर्मवचनात् संस्कारः । स चायं द्विविधोऽणुकार्यभावात् । तत्र कार्यलक्षणश्चतुर्विधः—शरीरमिन्द्रियं विषयः प्राण इति । तत्रायोनिजमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं शरीरव्यापि त्वगिन्द्रियम् । विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गः तिर्यग्गमनस्वभावो मेघादिप्रेरणधारणादिसमर्थः । तस्याप्रत्यक्षस्यापि नानात्वं संमूर्छनेनानुमीयते । संमूर्छनं पुनः समानजवयोर्विरुद्धदिक्क्रिययोर्वाय्वोः सावयविनोरूर्ध्वगमनेनानुमीयते तदपि तृणादिगमनेनेति । प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदात् प्राणापानादिसंज्ञां लभत इति ॥

( सू० ) वायुत्वेति । वायुत्वं नाम जातिभेदस्तस्याभिमतसम्बन्धं समवायमन्तर्भाव्य वायुः पक्षीकृत इति शेषः । न च तादृशे मानाभावः, स्पर्शविशेषस्य वह्निमात्रस्य च जनकतावच्छेदकत्वेन च तत्सिद्धेरिति भावः । वायोर्द्रव्यत्वसिद्ध्यर्थं गुणानाह स्पर्शेत्यादि । स्पर्शवत्तामात्रं पृथिव्यादौ गतमत आह स्पर्शोऽस्येति । अस्य—वायोरनुष्णाशीतापाकजः—साधर्म्यमित्यर्थः । अत्रानुष्णपदेन तेजसः अशीतपदेन जलस्य अपाकजपदेन पृथिव्यादेर्व्युदासः । न चावयविनां घटादीनां स्पर्शस्य

पाकजन्यत्वात्तत्रातिव्याप्तितादवस्थ्यम्, अपाकजपदेन पाकजस्पर्शवद्वृत्तिद्रव्यविभाजकधर्मसमानाधिकरणस्य पृथिव्यवृत्तेर्वा विवक्षितत्वात् इति भावः। स चेति। निरुक्तस्पर्शश्चेत्यर्थः। वायुः स्पर्शवानिति सूत्रासिद्ध इत्यर्थः। संख्यादिषु सूत्रकारसंमतिमाह अरूपिष्विति। अरूपिषु नीरूपयावत्द्रव्येष्वचाक्षुषसंख्यादिवचनाद्वायौ सप्त संख्यादयः सिद्धा इति विभक्तिव्यत्ययेनान्वयः। यद्यपि संख्यादीनां प्रत्येकं वायुत्वेऽप्यतिप्रसक्तम्, तथापि नीरूपस्पर्शवद्वृत्तित्वेन विशेषितमेव संख्यापृथक्त्वसंयोगविभागानां प्रत्येकधर्मवत्त्वं साधर्म्यम्। परत्वापरत्वसंस्कारास्तु नीरूपस्पर्शवद्वृत्तित्वेनैव विशेषितास्तथेत्यदोषः। तृणेति। तृणे कर्म वायुसंयोगात् इति सूत्रकारवचनात्संस्कार इत्यर्थः। तथाच नोदनाद्यजन्यं बाणादिकर्म वेगवद्द्रव्याभिघातजं विलक्षणक्रियात्वादिसनुमाने तस्य तात्पर्यादिति भावः। ननु यद्यसावणुरेव तर्हि तदीयस्पर्शो न ग्राह्यः स्यादणुगतस्पर्शस्यातीन्द्रियत्वनियमात्,अथाणुभिन्न एव तदावयवधारायां अनवस्था अणुभिन्नमूर्तानां सावयवत्वनियमादत आह स चायमिति। अयं वायुर्द्विविधोऽणुलक्षणोऽणुभिन्नस्वरूपः। तत्र तयोर्मध्ये। चत्वारो विधा दर्शयति शरीरमिति। ननु वायवीयत्वे तस्यायोनिजत्वे पृथिवीत्वापत्तौ वायुत्वव्याघात इत्यत आह तत्रायोनिजमेवेति। तत्र वायौ शरीरमित्यग्रेन्वयः। सप्तम्यर्थः समवेतत्वम्। तत्र तेषु शरीरादिषु मध्ये इत्याचार्याः। तादृशदेहयोग्यानुपलब्धेर्बाधं निरस्यति मरुतां लोक इति। वायुत्वं शरीरवृत्ति द्रव्यारम्भकनित्यवृत्तिजातित्वादित्यनुमानादेव तत्सिद्धेरिति भावः। ननु पार्थिवान्यस्य भोगावच्छेदकपार्थिवावयवोपष्टम्भ्यत्वनियमात्तदनुपष्टब्धस्य कथमुपभोगावच्छेदकत्वमत आह पार्थिवेति। चोऽव-

धारणे । पार्थिवावयवोपष्टम्भादेवेत्यर्थः । उपभोगस्य समर्थमव-च्छेदकम् । वायवीयमिन्द्रियमाह इन्द्रियमिति । सर्वप्राणिनां पार्थि-वाप्यादिसर्वजातीयप्राणिनां रूपग्राहकं वाय्ववयवैरारब्धं त्वगि-न्द्रियं त्वगिन्द्रियसंज्ञकमित्यर्थः । कुष्ठाद्युपहतचर्मणां स्पर्शग्राह-केन्द्रियसत्त्वे मानाभावादाह पृथिव्यनभिभूतैरिति । नन्वत्वगिन्द्रि-यं यदि करचरणादीनामेकमात्राधिष्ठेयं तदाऽन्यसंयुक्तदशायां घटादेः स्पार्शनं न स्यादत आह सर्वशरीरव्यापीति । सर्वावय-वावच्छेदेन शरीरवृत्तीत्यर्थः । केशदन्तनखलोम्नां न शरीरावय-त्वं देहानन्तरमेव तदुत्पादस्यागमसिद्धत्वादतो नातिप्रसङ्गः । विषयात्मकं वायुमाह उपलभ्यमानेति । साक्षात्कारयोग्यस्पर्शा-श्रयीभूत इत्यर्थः । तेन यस्य वायोः स्पर्शो नोपलभ्यस्तत्र ना-व्याप्तिः । वायोर्नीरूपत्वे प्रत्यक्षसम्भवात्तत्रानुमानमाह स्पर्शेति । स्पर्शः शब्दो धृतिः कम्पश्च लिङ्गानि यस्य स तथा । तथा-हि व्यजनचालनोत्तरमनुभूयमानः पृथिव्याद्यवृत्तिस्पर्शो द्रव्या-श्रितः स्पर्शत्वाद्धटस्पर्शवत् । एवं पत्रादेर्मर्मरशब्दः सवेगस्प-र्शवद्द्रव्याभिघातजो विलक्षणशब्दत्वात् दलद्वयविभागजशब्द-वत् । तथा धृतिः वेगवद्द्रव्यसंयोगप्रयुक्ता अप्राणिगुरोरप-तनत्वात् नौकादिपतनवत् । पक्षिप्रभृतेः प्रयत्नप्रयुक्ते तदपतने न व्यभिचारः । एवमश्वत्थदलादेः कंपः सस्पर्शवेगवद्द्रव्याभिघात-जः कर्मविशेषत्वात् दण्डाभिहतघटादिक्रियावत् इत्यादिप्रयोगसं-भवादिति भावः । तिर्यग्गमन इति । तिर्यग्गमनस्वभावोऽस्य कादा-चित्कत्वं फूत्कारादेः सरलगतिविशेषसामग्रीवशादिति । मेघादी-ति । आदिना पत्रघर्मादिप्रेरणम् । संचारो धारणम् पतनप्रतिबन्ध-कम् । आदिना शैत्याद्युपष्टंभः । तेषु समर्थोऽनुकूल इत्यर्थः ॥ इति वायुः ॥

( से० ) इदानीं रूपादिषु स्पर्शमात्रगुणं वायुं निरूपयति—वा-

युर्जात्यभिन्नद्रव्यविभाजकोपाधिमाननेकवृत्तिद्रव्यविभाजकोपाधिमत्त्वात् पृथिवीवत्। वायुत्वस्यानेकसमवेतत्वनित्यत्वयोर्जातिस्वरूपयोर्बाधकाभावात्। न च क्लृप्ततया पाकजानुष्णाशीतस्पर्शेनैव वायुत्वव्यवहारः, तस्याननुगततयाऽनुगमकजातिविशेषान्तर्भावेन प्रकृतोपाध्यन्तर्भावेन वा शक्यते गौरवात्, भ्रमदशायां शीतो वायुरिति प्रत्ययाच्च। तथा सति शीतोष्णाशीतापाकजस्पर्श इति प्रत्ययार्थः स्यात्। स च विरुद्धविषयकतयाऽनुपपन्नः नहि विशेषदर्शने सति भ्रमो विभ्रमं बिभ्रति। अपि चावयवगतप्रकृतस्पर्शसमवायिकारणतावच्छेदकमनित्यवायुत्वम्। नच वायुत्वासिद्धौ इदं सिध्यति दण्डत्वासिद्धौ नीलदण्डत्वासिद्धेः। न च तादृशस्पर्शवत्त्वमेव तत्, प्रागुदर्शितनयात्। नच प्रकृतस्पर्शात्यन्ताभावविरोधिमत्त्वस्पर्शात्यन्ताभावात्यन्ताभाववत्त्वप्रकृतस्पर्शात्यन्ताभावानधिकरणत्वेषु एकं तथा, विनिगमनाविरहात् नानार्थत्वापत्तेः। शीतो वायुरित्यादिप्रत्ययविरोधाच्च प्रकृतस्पर्शात्यन्ताभावात्यन्ताभावादेः शीतादिविरोधित्वात्, तस्माद्वायुत्वं जातिसिद्धम्।

तस्य द्रव्यत्वसाधकतया गुणानाह स्पर्शेति। येन रूपेण वायुत्वव्यवस्थापकता स्पर्शस्य तदाह स्पर्श इति। अत्र सत्यन्तेन जलतेजसोर्व्यावृत्तिः, अपाकज इति पृथिव्याः। अपाकजत्वञ्च पाकाप्रयोज्यत्वं, तेन न पार्थिवावयविन्यतिव्याप्तिः। तत्सिद्धिस्तु व्यापकनिवृत्त्याऽवान्तरविशेषस्य पाकजत्वव्यापकत्वात् पृथिव्यां मृदुकठिनत्वादेरिव वायुस्पर्शे तदभावात्। वायुः स्पर्शवान् इति सूत्रेण स्पर्शवत्त्वसिद्धिः। स्पर्शवत्तां विना द्रव्यारम्भकत्वानुपपत्तेश्च स्पर्शवत्परमाणुत्वेनैव द्रव्यारम्भकत्वात्। अन्यथा मनसोऽपि तदापत्तेः। अरूपिद्रव्यसमवायेन संख्यादिष्वचाक्षुषत्वं वदता सूत्रकृता बाधकं विना सामान्यशब्दस्य विशेषनिष्ठत्वकल्पनेन वायावपि अरूपिद्रव्ये समवायः स्वीकृतः। परमाण्वादिषु संख्यां विना द्व्यणुकादिषु परिमाणानुपपत्तिः तदभावेऽग्रिमकार्ये तदभावः, संयोगाभावेऽसमवायिकारणाभावाद् द्व्यणुकाद्यनुत्पत्तिः, विभागाभावे परमाणुद्वयसंयोगस्य नित्यतया द्व्यणुकनाशानुपपत्तिः, पृथक्त्वाभावे सङ्ख्यापरिमाणयोरनुपपत्तिः व्यापकनिवृत्तेः, संयुक्तसंयोगाऽल्पीयस्त्वादेः परत्वादिकारणसुलभत्वात् परत्वापरत्वयोरपि सिद्धिः। तृणे कर्म वायुसंयोगादिति सूत्रेण संस्का-

रः सिद्ध्यति । तस्य हि नोदनत्वाभिघातत्वाभ्यां कारणता तत्र च परत्ववेगप्रवेश इत्याह गुणेत्यादिना । अणुकार्यभावाद्–अकार्यकार्यभावात् । पृथिव्यादीनां कार्यं त्रिविधं वायोस्तु चतुर्विधमित्याह तत्रेति । स्पर्शवत्परमाणुतया वायुपरमाणूनां त्रितयारम्भकत्वे सिद्धे शरीरारंभकत्वमपि सिध्यति । तच्च शरीरमयोनिजमेव शुक्रादेरभावात् । स्थितिरस्य वायुलोके । उपभोगसामर्थ्यं तु पार्थिवाद्यवयवोपष्टंभादित्याह तत्रेति । पूर्वेणेन्द्रियारम्भकत्वे सिद्धे तत्त्वगिन्द्रियमेव । तत्त्वगिन्द्रियं वायवीयं रूपाव्यञ्जकत्वे सति परकीयस्पर्शव्यञ्जकद्रव्यत्वात् स्वेदशैत्याभिव्यंजकव्यजनपवनवत् । मनसि व्यभिचारवारणाय सत्यन्तम् । ऊष्मणां प्रत्यासत्तिघटकतया स्वस्पर्शव्यञ्जकव्यभिचारवारणाय परकीयेति । प्रत्यासत्तौ तद्वारणाय द्रव्यत्वादिति । तुल्यन्यायतया सर्वेषामेव त्वगिन्द्रियं वायवीयं क्वचित्स्पर्शाव्यञ्जकमभिभूतारब्धत्वादभिभूतत्वाद्वेत्याह इन्द्रियमिति । सर्वशरीरव्यापीत्यनेन यावति त्वगिन्द्रियं तावदेव शरीरमित्युक्त्या केशादीनां त्वगिन्द्रियानाधारत्वान्न शरीरत्वं किन्तु संयोगिद्रव्यत्वमात्रमित्युक्तं भवति ।

विषय इति । उपलभ्यमानस्पर्शत्वेन वायोः प्रत्यक्षत्वं वार्यतेऽथ पाताभिधाने वैयर्थ्यात् प्रत्यक्षे पृथिव्यादौ तथानभिधानात् । ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् प्रत्यक्षो वायुः । उपलभ्यमानस्पर्शाधिष्ठानित्वं तु प्रत्यक्षत्वसाधकतयैव प्रत्यक्षत्वे विप्रतिपन्नं प्रति भाष्यकृता निरुक्तम् । न चोष्मणि व्यभिचारः, पक्षसमत्वात् । ननूद्भूतरूपवत्त्वं उपाधिः, नच रूपादौ साध्याव्यापकता, बहिर्द्रव्यत्वपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् । यत्र बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं तत्र घटादौ वा रूपसत्वात् साध्यव्यापकत्वात् । बहिर्द्रव्ये प्रत्यक्षस्पर्शाश्रये वायौ रूपासत्त्वेन साधनाव्यापकत्वात् । न चाप्रयोजकतया न स साध्यव्यापको, बहिर्द्रव्यप्रत्यक्षानुगतस्य कार्यस्य तस्यैवानुगतस्य कारणत्वात् । न तावत् बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं कार्यमहत्त्वगुणसमानाधिकरणविशेषगुणवत्त्वं वा तत्र प्रयोजकं, रसनगतपित्तद्रव्यस्योद्भूततिक्तरसस्य वायूपनीतोद्भूतगंधचम्पकादिभागस्य च प्रत्यक्षत्वापत्तेः । नापि बहिरिन्द्रियग्राह्यानेकविशेषगुणवत्त्वं, प्रभाया त्रसरेणोश्चाप्रत्यक्षत्वापत्तेः तत्र रूपमात्रस्य प्रत्यक्षत्वात्, तस्मात् महत्त्वस-

हृचरमुद्भूतरूपवत्त्वमेव तत्र प्रयोजकं तथा चोपाधिः साध्यव्यापक इति चेत्। नोद्भूतरूपापेक्षयोद्भूतस्पर्शस्यैव सामान्यस्य प्रयोजकत्वौचित्यात्। न च वायोः प्रत्यक्षत्वे तद्गतसंख्यादिप्रत्यक्षतापत्तिः पृष्ठलग्नवस्त्रादेस्तदप्रत्यक्षत्वेऽपि प्रत्यक्षत्वात्, तस्माद्वायुः प्रत्यक्षः। अपि च त्वगिन्द्रियव्यापारानन्तरं वायुर्वातीति प्रतीतेर्वायुः प्रत्यक्षः। न च स्पर्शं गृहीत्वा तेनैव लिङ्गेन वायुर्वातीति प्रत्येतीति वाच्यम्। वायुलिङ्गस्यानुष्णाशीतापाकजस्पर्शस्याप्रत्ययेपि शीतो वायुर्वातीति प्रत्ययात्। स्पर्शेन वायोरनुमाने च स्पर्शोयं क्वचिदाश्रित इत्याद्याकारिकानुमितिः स्यात्, तस्याः प्रसिद्धसाध्यकस्थले पक्षविशेष्यकत्वनियमात् न त्वनुमेयवायुविशेष्यकापि च स्पर्शेन वाय्वनुमानेपि तत्र गतिप्रतीतिर्न स्यात्। प्रत्यक्षत्वं वायोस्तद्गतकर्मणोऽपि प्रत्यक्षत्वात् उपपद्यते। न च संयोगविभागाभ्यां गत्यनुमानं, तयोरप्रत्यक्षगतयोरप्रत्यक्षत्वात्। न च सुखदुःखविशेषाभ्यां संयोगविभागावनुमाय ताभ्यां तदनुमानम्, सर्वस्य वायोः सुखदुःखाजनकत्वेन सुखदुःखाजनकेऽपि वायौ वायुर्वातीति प्रतीतेः। न हि सर्वासु अवस्थासु वायुसंयोगे विभागे सुखं दुःखं वाऽऽवश्यकमिति प्रामाणिकम्, भवति तु ग्रीष्मोष्मतप्तजन्तोः पवनसंयोगे सुखं तद्विभागे च दुःखमेवमन्यत्रापि क्वचित्, न तु सर्वत्र। भवति तु सुखदुःखाभावस्थलेऽपि वायुर्वातीति प्रतीतिरिति। न च वायोः स्पार्शनत्वे चाक्षुषप्रत्यक्षत्वमपि स्यात् द्रव्यस्य तथाभूतस्यैव स्पार्शनत्वनियमादिति वाच्यम्। बाध्यमानप्रयोजकत्वेन तथा नियमानङ्गीकारात्। न हि द्रव्यचाक्षुषत्वं द्रव्यस्य स्पार्शने कारणं चक्षुषानुपलंभेऽपि अन्धकारे त्वचा घटोपलंभात्। न च विनिगमनाविरहात् रूपस्पर्शयोरुभयोरपि प्रत्यक्षत्वप्रयोजकत्वम्, सामान्यविशेषभावेनोत्सर्गस्यैव विनिगमकत्वात्। न चोद्भूतस्पर्शस्य प्रयोजकत्वे प्रभाया अप्रक्षत्वापत्तिः, इष्टापत्तेः। तत्र ग्रहणं तु तेजोरूपस्यैव, तस्माद्वायुः प्रत्यक्ष इति चेत्।

अत्राहुः-उद्भूतस्पर्शवत्त्वस्य प्रयोजकत्वे प्रभाया अप्रत्यक्षत्वं स्यात् तथासति चलति पक्षकादौ प्रभारूपदर्शने तत्संयोगविभागयोर्ग्रहणं न स्यात्। न च पूर्वदेशानुपलंभोत्तरदेशोपलभाभ्यां विभागसंयोगयोरनुमानम्, देशस्य मानसतया तत्रोपनीतस्य देशस्य भानात् का प्रत्यक्षापेक्षेति वाच्यम्। उपनायकत्वेन तत्र प्रत्यक्षापेक्षणात्। तस्मादुद्-

भूतरूपवत्त्वमेव प्रत्यक्षताप्रयोजकमिति वायुरप्रत्यक्ष इति ।

परे तु—उद्भूतरूपवत्त्वस्य प्रत्यक्षताप्रयोजकत्वे नयनगतपित्तद्रव्यप्रभयोः प्रत्यक्षता स्यात् । इष्टापत्तौ तद्गतसंख्यादिग्रहणापत्तिरनिष्टा स्यात् । एवमुद्भूतस्पर्शवत्त्वस्य प्रयोजकत्वे ग्रीष्मोष्मप्रभूतेरपि प्रत्यक्षसंख्यादिव्याप्यं प्रत्यक्षत्वं स्यात्, तथाच सामान्यतया प्राप्तमुत्सर्गमुल्लंघ्यापि विनिगमनाविरहात् रूपस्पर्शवत्त्वे प्रत्यक्षत्वप्रयोजके, तथाच तदभावात् वायुरप्रत्यक्ष इति कीर्तयन्ति ।

नच तत्र नये प्रभाया अप्रत्यक्षत्वे पक्ष्यादिसंयोगाप्रत्यक्षत्वापत्तिः, नयद्वयेऽपि वायोरप्रत्यक्षत्वस्वीकारे संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगकर्मणामप्रत्यक्षत्वापत्ति । न चेष्टापत्तिः, क्रमेण हस्तलग्ने संख्यायाः अधकरतलाद्यवच्छेदेन लग्ने परिमाणस्य क्रमेण लग्ने पृथक्त्वस्य करतलादौ लग्ने संयोगस्य तद्विहाय गते विभागस्य कफोणिकरतललग्नयोरन्यफूत्कारयोरपरत्वपरत्वयोर्मन्दामन्दभावेन प्रसरतोर्वेगकर्मणोश्च प्रत्यक्षत्वात् । अपि चोद्भूतरूपवत्त्वस्य प्रत्यक्षत्वप्रयोजकत्वे प्रभा त्वचा परिच्छिद्येत । न च त्वाच एव उद्भूतस्पर्शवत्त्वं प्रयोजकमिति वाच्यम् । चाक्षुषत्व एवमुद्भूतरूपवत्त्वस्य प्रयोजकत्वे सामान्यप्रयोजककल्पनानौचित्यात् इति वायुः प्रत्यक्ष इति । एवञ्चैवं पर्यवसन्नम्—द्रव्यचाक्षुषत्व उद्भूतरूपवत्त्वं प्रयोजकं द्रव्यस्पार्शनत्वे उद्भूतस्पर्शवत्त्वम् बहिर्द्रव्यप्रत्यक्षं तु कार्यतावच्छेदकमेव न भवति येन रूपवत्त्वस्योभयोर्वा प्रयोजकत्वे वायुरप्रत्यक्षः स्यात् । एवं च नयनगतपित्तद्रव्यादेरुद्भूतरूपवत्त्वसत्त्वाच्चाक्षुषत्वमेव वायुप्रभृतेरुद्भूतस्पर्शवत्त्वसत्त्वात् त्वाचत्वमेव घटादावुभयसमावेशणादुभयम् । न च वायोस्त्वाचत्वे घटवत्संख्यादेः त्वचा ग्रहणापत्तिः, महावायोः संसर्गिद्रव्यतयाऽवान्तरवायुभिरारब्धस्य त्वचा स्वसंबन्धेनैकत्वग्रहात् अवयवानां तु संख्यान्तरं मिलनेन न परिच्छिद्यते घटितघटानां कपालानामिव । परिमाणमपि यावदवच्छेदेन त्वचा सम्बन्धः तावदवच्छेदेन परिच्छिद्यत एव पर्वतादेरिव न हि चक्षुष इव त्वचोऽपि पृच्छप्रता(?) (स्वच्छता)येनाधिकग्रहापत्तिः स्वरूपापत्तिमासादयेत् । पृथक्त्वमपि त्वक्सम्बद्धयोर्वायुघटयोरध्यक्षमेव द्वयोस्त्वक्सम्बन्धानन्तरं घटाद्वायुः पृथगिति प्रत्ययात् । घटे वायुः संयुक्त इति करपरामर्शेन सततगतेः संयोगोऽपि नाभवत्ययोग्यः । एवं संयुज्य प्रयातस्य पवनस्य वि-

भागो नापरिभाव्य इहेदानीमतो विभक्तो वायुरिति प्रत्ययात्। पर-त्वापरत्ववेगकर्मणां तु गतिरुक्तैव। प्रभायाश्चाक्षुषत्वे संख्यादेः प्र-त्यक्षतायामस्यैव न्यायस्यानुसरणीयत्वम्। तस्मान्न वायुरस्पार्शन इति चेत्।

अत्र ब्रूमः बहिरिन्द्रियतज्जन्यद्रव्यलौकिकप्रत्यक्षत्वं बहिर्द्रव्यलौ-किकप्रत्यक्षत्वं वा कार्यतावच्छेदकं बाधकं विना कार्यमात्रवृत्तिधर्म-त्वात् घटत्ववत् न हि कार्यमात्रवृत्तिन एव कार्यतावच्छेदकाः भ्र-मत्वादीनामतथात्वापत्तौ दोषादीनां प्रमोषापत्तेः। न चात्र नी-लघटत्ववदर्थः समाजो बाधकस्तत्र न हि नीलसामग्र्या नीलगु-णस्य घटसामग्र्या घटस्य जनयानोभयोः(?) सम्बन्धेन नीलघटोपप-त्तौ नीलघटत्वेन कार्यता अन्यथैव नीलघटस्य सिद्धत्वात्, प्रकृते तु न भिन्नसामग्रीककार्यद्वयघटितं कार्यतावच्छेदकं येन तथा स्यात्। नापि जन्यघटज्ञानादाविव इह कारणासम्भवो बाधक उद्भूतरूपवत उद्भूतस्पर्शवतो वा कारणत्वसम्भवात्। एवं च महत्त्वे सत्युद्भूतरूपवत्त्वं महत्त्वे सत्युद्भूतस्पर्शवत्त्वं च तादृश-प्रत्यक्षताप्रयोजकमिति वायुरप्रत्यक्षः। न च विनिगमनाविरहादुभ-योः प्रयोजकत्वे प्रभापक्षिसंयोगयोरप्रत्यक्षापत्तिः अस्मिन्नये कर्मणां प्रत्यक्षत्वेन तेन पूर्वदेशविभागोत्तरदेशसंयोगानुमानात्। अयं पक्षी पूर्वदेशविभागपरदेशसंयोगवान् कर्मवत्त्वादित्यनुमानसम्भवात्। येषां कर्मातीन्द्रियं तेषां का गतिरिति चेत्। अपरगृहचर्चायाः साम्प्रतमप्रस्तुतत्वात्। एवं च फूत्कारादौ संयोगविभागादिप्रतीतिः आनुमानिक्येव। न च वायोरप्रत्यक्षत्वे शीतो वायुर्वातीति प्रतीतिः कथं स्यात्, शीतस्पर्शेन वायुलिङ्गत्वारोपदशायां वाय्वनुमानेऽपि स्पर्शो वायवीय इति धीः स्यात् न तु वायुः शीत इति वाच्यम्। आनुमानिकबोधोत्तरं तथाविधमानसोपनीतभानस्वीकारात्। गत्यवगतिरपि धूल्यादिगतिविशेषाणां शरीरदुःखविशेषाणां वाय्व-भिघातजन्यत्वमनुमाय तेन कर्मानुमानात्। अयं दुःखविशेषो वाय्व-भिघातजो दुःखविशेषत्वात् इत्यनुमानसम्भवात्। शीतो वायुर्वा-तीति विशिष्टप्रतीतिरप्युपनीतबोधाद्यादाय सुगमैव उपनीतमानस-बोधस्यैवासौ दुःखविशेषः शीतवाय्वभिघातजन्मा इत्याद्यनुमान-स्य सम्भवात्। निरुक्तस्य कार्यतावच्छेदकत्वे प्रमाणप्रतिपन्ने विनि-

गमनाविरहात् रूपस्पर्शयोर्द्वयोः प्रत्यक्षत्वप्रयोजकत्वे प्रमिते प्रभा-वाय्वादौ संयोगादिप्रतिपत्तेः आनुमानिकत्वेनैव प्रतिपत्तव्यत्वात्। एवं च सामान्य इव चाक्षुषत्वयोरपि तदेव प्रयोजकम्। न च सामान्यविशेषयोरेकप्रयोज्यताऽयुक्ता द्रव्यत्वेन जन्यगुणसंयोगयोः प्रयोजकत्वात्। भवतु वा चाक्षुषत्वे रूपवत्त्वं स्पार्शनत्वे स्पर्श-वत्त्वं प्रयोजकं सामान्यसामग्रीविरहादेव न प्रभोष्मणोश्चाक्षुषत्वस्पा-र्शनत्वे। न चोत्सर्गात् स्पर्शवत्त्वमेव प्रयोजकम्, ऊष्मणः प्रत्यक्षत्वे तद्गतसङ्ख्यादिप्रत्यक्षतापत्तेरुक्तत्वादिति न वायुः प्रत्यक्ष इति। न च यत्र सुखदुःखाजनकत्वं तत्र कथं कर्मप्रत्ययः? स्पर्शप्रत्य-याभ्यां संयोगविभागावनुमाय कर्मानुमानात्।

वस्तुतस्तु रूपस्पर्शयोः सामान्यविशेषभावाभावेन उत्सर्गासं-भवेऽपि नोद्भूतरूपस्पर्शयोस्तथाभावः। तथा च विनिगमनाभा-वेन द्वयोरध्यक्षताध्यक्षत्वेन जगत्प्राणः प्रत्यक्षप्रमाणप्रमेय इति। न चोद्भूतस्पर्शवत्त्वस्य प्रयोजकत्वे प्रभा प्रत्यक्षा न स्यादिति वाच्यम्। उद्भूतरूपस्य तथात्वेनोष्मा तथा स्यादिति वक्तुं शक्यत्वात्। न चोष्मणस्तथात्वे तद्गतसंख्यादिरुयातिस्त्वाची स्यादिति वाच्यम्। प्रभाया अपि तथात्वे तद्गतसंख्यादश्चा-क्षुषत्वापत्तेरभ्युपतेत्वात्। न च प्रभाया एकतया तद्गतमेकत्वं गृह्यत एव तदवयवानां त्वत्युष्णसंसृष्टतया न संख्याभेदप्रत्यय इति वाच्यम्। ऊष्मण्यप्यस्य न्यायस्य समानत्वात्। किञ्चोष्मसङ्ख्यादेः प्रत्यक्षत्वे चाक्षुषत्वं स्यादिति नोद्भूतस्पर्शवत्त्वमात्रं प्रत्यक्षताप्रयो-जकम्। न चोभयोः प्रयोजकत्वे प्रभाया अप्रत्यक्षत्वे पक्षिकाण्डादौ तत्संयोगादिग्रहो न स्यादिति वाच्यम्। रूपेण प्रभामनुमाय त-त्पूर्वापरदेशोपलंभाभ्यां विभागसंयोगयोरनुमानात्। एवं च वायुर्न प्रत्यक्ष इति सिद्धमिति सङ्क्षेपः।

न चैवमुद्भूतरसोऽपि प्रयोजके प्रविशत्विति वाच्यम्। उभय-वादिसिद्धतया प्रत्यक्षाणां वह्न्यादीनामप्रत्यक्षत्वापत्तेरिति।

अनुमेयत्वे वायोस्तत्र लिङ्गमाह स्पर्शेति। अयं स्पर्शः क्वचिदाश्रि-तस्स्पर्शत्वात् घटस्पर्शवत्। न जलानलाश्रितो अनुष्णाशीतत्वात्। न चैतदाश्रयः पृथिवी रूपराहितत्वात्। न चाभिभूतत्वादग्रहेण रूप-राहित्यमसिद्धमिति वाच्यम्। अभिभावकस्य रूपस्याभावात्। ते-

जोरूपस्य पृथिवीरूपाभिभावकत्वे घटादावपि तथात्वापत्तेः । अन्धकारेऽभिभावकाभावेन प्रत्यक्षत्वापत्तेश्च, सुवर्ण उपष्टम्भकस्यैवात्र नियतसम्बद्धस्य कस्यचिदभिभावकस्याभावात् । न चोद्भूतमेव रूपं, पार्थिवरूपस्पर्शयोः पाकजतया तुल्ययोगक्षेमतयैकोद्भवे परोद्भवनियमात् ।

ननु नायं नियमो नयनगतपित्तद्रव्यस्य रूपोद्भवेऽपि स्पर्शानुद्भवात् । एवं स्पर्शोद्भवे रूपानुद्भवस्य सुवचत्वात् तुल्ययोगक्षेमतया नयननिष्ठपित्तद्रव्येनैव क्षारीकृतत्वात् । अपि च पृथिव्यां रूपस्पर्शावेव पाकजाविति न, किन्तु रूपरसगन्धस्पर्शाः । एवं च तज्जन्यानां तन्महिम्ना तुल्ययोगक्षेमत्वे रसनगतपित्तद्रव्यवायूपनीतचम्पकभागयो रसगन्धयोरुद्भूततया अन्येषामपि तथात्वं स्यात् पाकजत्वे समानेऽप्यदृष्टवैषम्यात् वैषम्यस्य रूपस्पर्शयोरपि साम्यात् । एवं च शब्दधृतिकम्पा अपि अनुद्भूतरूपोद्भूतस्पर्शपार्थिववर्तिन एव द्रव्यान्तरकल्पनायां कल्पनागौरवञ्च । शीतद्रव्यादुपनायिकापि तथाविधा पृथिव्येवेति चेत् ।

अत्र वल्लभाचार्याः-त्वगिन्द्रियं न मनो बहिरिन्द्रियत्वात्, न श्रोत्रं शब्दाग्राहकत्वात्, न पार्थिवं जलीयन्तैजसं वा गन्धरसरूपाग्राहकत्वात्। न च पृथिव्यादिषु एकप्रकृतिकमेव घ्राणादि भेदात्तु न गन्धादिग्राहकत्वमिति वाच्यम् । लाघवेन पार्थिवेन्द्रियत्वादिनैव घ्राणादिषु त्वग्भिन्नत्वस्य विशेषणस्य त्वचः पार्थिवत्वादिति सिद्धिसापेक्षत्वात् । एवञ्च त्वचः पार्थिवत्वसिद्धौ घ्राणलक्षणे त्वग्भिन्नत्वं विशेषणम्, दत्ते च तस्मिन् विशेषणे पार्थिवेन्द्रियस्यापि त्वचो न गन्धग्राहकत्वमिति अन्योन्याश्रयः । तस्मात्त्वगिन्द्रियोपादानत्वेन द्रव्यान्तरसिद्धौ वायुत्वे तत्प्रसिद्धस्यापि भुक्ताप्रभंजनादेः तत्रैवान्तर्भावः । पृथिवीत्वे रूपानुद्भवादितदुपपादकादृष्टकल्पनागौरवात् । गौरवाभावाच्च न पार्थिवम् धूमे त्वधूमतामापन्ने गौरवावसायात् वायौ तु कस्यामपि दशायां तदभावात् । एवं च शब्दादयोऽपि रूपवद्द्रव्यमन्तरा भवन्तस्तत्कृता एवेति संक्षेपः ।

शब्दादिषु अनुमानप्रकारस्तु-असौ पर्णादिषु शब्दसन्तानः स्पर्शवत्वेगद्रव्यसंयोगजन्मा विभागाजन्यशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् । विभागजे हेतोः अभावादेव न व्यभिचारः । शब्दजे तु विभागामूलके संयोगमूलकत्वादेव केवलशब्दमूलकस्य

शब्दस्याभावात् । नभसि तृणादीनां धृतिः स्पर्शवत्द्रव्यसंयोगजा ऽस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् । अत्र पृथिव्यादीनां बाधात् पक्षधर्मताबलात् वायुसिद्धिः । एतत्तृणकर्म नोदनाभिघातान्यतरजन्यं गुरुत्वाद्यजन्यकर्मत्वात् प्राप्यप्रवाहपतिततृणकर्मवत् । अत्रापि बाधावधूतपृथिव्यादिसिद्धिः पक्षधर्मतैव पवनसाक्षिणीति।

वह्नेरूर्ध्वज्वलनवदत्र तिर्यग्गमनं स्वाभाविकमित्याह तिर्यगिति । प्रयोजनमाह मेघादीति । ननु वायोरप्रत्यक्षत्वे तत्र नानात्वप्रत्ययः कुतः इत्यत आह तस्येति । यद्यपि अप्रत्यक्षस्य संख्या प्रत्यक्षा न भवति, तथापि अनुमानादवगन्तव्येत्यर्थः। न च वायुर्नाना स्पर्शवत्त्वात् इति एकस्मिन् घटे व्यभिचारः, प्रत्यक्षस्पर्शवत्त्वादित्यपि तथा तत्कथं नानात्वानुमानमत आह संमूर्छनेनेति ।

ननु सम्मूर्छनमेकस्मिन् घटे घटान्तरे वास्ति न तु तत्र नानात्वमतआह संमूर्छनम्पुनरिति । वायुत्वमनेकवृत्ति सजातीयमूर्छनवद्वृत्तिधर्मत्वात् जलत्ववदिति । सजातीयगर्भहेत्वर्थमेव वायोरित्युक्तम । संमूर्छनलक्षणं तु तत्तद्वाहिर्भावेनैव अन्यथा पृथिव्यादीनां संमूर्छनं न स्यात् । अनुमानं तु वायुत्वमनेकवृत्ति तत्प्रयुक्तसाजात्यकसंयोगवद्वृत्तिधर्मत्वात् जलधर्मवदित्याकारं सम्मूर्छनगर्भस्य हेतुत्वे वैयर्थ्यात् । सजातीयसंयोगवद्वृत्तिधर्मत्वादिति हेतुत्वे तद्घटत्वे व्यभिचारः धर्मान्तरेण यः सजातीयः तत्संयोगवत्यैतद्घटे सत्वात् । संयोगगर्भत्वेनैव हेतोरुपपत्तौ सम्मूर्छनकथनं तिर्यग्गमनस्वभावस्य वायोः कथमूर्ध्वगमनमिति शङ्कास्कन्दनार्थं निम्नाभिसर्पणस्वभावानामपामिव सम्मूर्छनेनोर्ध्वगमनोपपत्तेः। ननु सन्निपातः संयोगः सोऽपि कथमतीन्द्रियस्य ज्ञातव्य इत्यत आह सोऽपीति। वायुः सम्मूर्छनवान् ऊर्ध्वगमनविशेषवत्त्वात् जलविशेषवदित्यनुमानात्सम्मूर्छनसिद्धिरित्यर्थः । अतीन्द्रियस्य ऊर्ध्वगमनमपि । अतीन्द्रियं कथं ज्ञातव्यमिति शङ्कायां तस्यानुमेयत्वमुक्तम् । अनुमानञ्च वायुरूर्ध्वगमनवान् स्वसंयोगे ऊर्ध्वगमनविशेषकारित्वात्तृणाद्यूर्ध्वगमनकारिहुताशशिखावत् । सावयविनोरित्यनेनावयवानामवयवविवक्षायां महत्त्वविशेषवचनेन वायुस्तृणादीन् ऊर्ध्वं नयतीति स्वभावोक्तिः । सावयविनोरित्यनेन महत्त्वविशेषवत्ता विवक्षिता नातस्त्रसरेणवादावतिप्रसक्तिः ।

चतुर्थीं विधामाह प्राण इति । शरीराभ्यन्तरचारी वायुः प्राण इत्यर्थः । विषयात्स्थानभेदमुक्त्वा क्रियाभेदमाह रसेति । आहारस्य सारो विकारो रसः, मलं मूत्रादि, धातवो रुधिरादयः शुक्रान्ताः; एतेषां प्रेरणादिहेतुरित्यर्थः। ननु प्राणस्य पञ्चविधत्वे कथं मूर्तानां समानदेशताऽत आह एक इति । यथा एक एव देवदत्तः पाठकः पाचक इति क्रियाभेदाद्व्यवह्रियते तथा एक एव शरीराभ्यन्तरचारी वायुर्मुखनासिकाभ्यां निर्गमनात् प्राण इति रसादीनामधोनयनादपान इति ऊर्ध्वन्नयनादुदान इति सम्यं नयनात्समान इति नाडीमुखेषु विततनात् व्यान इति सञ्ज्ञां लभत इत्यर्थः । लाघवादपि प्राणवायुः एक एव संज्ञाभेदेन संज्ञिनो भेदाभावादिति ॥ वायुः ॥

( व्यो० ) इदानीं वायोरुद्देशवतो लक्षणपरीक्षार्थम् वायुत्वाभिसम्बन्धादित्यादिप्रकरणम् । वायुरिति लक्ष्यनिर्देशो वायुत्वाभिसम्बन्धादिति लक्षणम् । वायुत्वेनाभिसम्बन्धः वायुत्वेनोपलक्षितः समवाय इति। समवायो ह्यतिव्यापकत्वादलक्षणं स्यादिति वायुत्वपदम्। वायुत्वं चासम्बद्धमपक्षधर्मतया गमकं न स्यादिति पक्षधर्मताज्ञापनार्थमभिसम्बन्धपदम्। तथा च वायुत्वेनेतरस्मात् भिद्यते वायुत्वाभिसम्बन्धाद्य तु न भिद्यन्ते न ते वायुत्वेनाभिसम्बद्धाः, यथा क्षित्यादयः। न च तथा वायुत्वेनानभिसम्बद्धो वायुः । तस्मादितरस्माद्भिद्यत इति। व्यवहारो वा साध्यते । शेषञ्च लक्षणस्य दूषणप्रतिसमाधानं पृथिव्यधिकारे ज्ञेयम् । तथा वायुशब्दस्य सामान्यवानर्थ इति ज्ञापनार्थमतीन्द्रियशक्तिप्रतिषेधार्थं च पूर्ववद्व्याख्येयम् । समवायित्वगुणवत्त्वप्रतिपादनार्थं स्पर्शादिवाक्यम् । स्पर्शादयः संस्कारपर्यन्ता विद्यन्ते यस्यासौ तद्वानिति । स्पर्शश्चासाधारणत्वादन्यस्माद्भेदकत्वादिति असाधारणतामाह स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकज इति । अनुष्ण इत्युष्णस्पर्शव्यवच्छेदः । अशीत इति शीतस्पर्शादपाकज इति पार्थिवात् । स च गुणविनिवेशात् द्वितीयाध्याये सिद्धो वायुः स्पर्शवानित्यनेन सूत्रेण । अत्र च स्पर्शवानिति सामान्यशब्देनाप्यर्थादयं विशेषो विवक्षितः-अनुष्णाशीतत्वे सत्यपाकजस्पर्शवानिति । अरूपिष्वचाक्षुषत्वादिति सूत्रेण संख्यादयः सिद्धाः । तथाहि-रूपविशेषवति द्रव्ये चाक्षुषाः तद्विपरीते चाचाक्षुषा इत्यपरेणापि सूत्रेण रूपिषु संख्यादीनां सद्भावोऽभिहित एव ।

तथा चारूपिषु समवेताः संख्यादयः परं चक्षुर्ग्राह्या न भवन्तीति प्रतिषेधः । तथा तृणकर्मवचनादिति वायुसंयोगात्तृणे कर्मेति सूत्रं दर्शयति । वायुसंयोगश्च तृणकर्मोत्पत्तौ सापेक्षः कारणमिति प्रयत्नादेरभावाद्वेगापेक्षः कारणमिति संस्कारः सिद्धः । तथा वायुत्वसामान्यस्य भेदाधिष्ठानत्वादिति तत्समर्थनार्थालक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासार्थमद्वैतवादिप्रतिषेधार्थं बीजसद्भावप्रतिपादनार्थञ्च । स चायं द्विविधः अणुकार्यभावादिति वाच्यम् । तथा ह्यणुस्वभावो नित्यः कार्यस्वभावस्त्वनित्य इति ।

अवान्तरवैधर्म्यं दर्शयति । कार्यलक्षणः कार्यस्वभावश्चतुर्विध इति । केन रूपेणेत्याह—शरीरमिन्द्रियं विषयः प्राण इति । शरीरोत्पत्तिमाह–शरीरमयोनिजञ्चेति । अयोनिजञ्च शुक्रशोणितसन्निपातमनपेक्ष्योपजातम् । धर्मविशेषसहितेभ्योऽणुभ्य इति । तथाहि–वायवीयाः परमाणवः समवायिकारणम् तत्संयोगाश्चासमवायिकारणम् क्षित्यादि च निमित्तकारणमिति । तच्च मरुतां लोके सिद्धमागमात् । अथ वायोस्तिर्यग्गतिशीलत्वात् क्षणिकत्वाच्च तदारब्धशरीरमुपभोगजनकं न स्यादित्याह—पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थमिति ।

इन्द्रियस्वरूपनिरूपणार्थमाह–इन्द्रियं स्पर्शोपलम्भकमिति । तथाहि–स्पर्शोपलब्धिः करणकार्या क्रियात्वाद्या या क्रिया सा सा करणकार्या यथा छिदिक्रिया । तथा चेयं क्रिया, तस्मात्करणकार्येति । यत्तत्स्पर्शोपलब्धेः सम्पादकं करणं तद्वायवीयम् रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकत्वात्, यद्यद्रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकं तद्वायवीयं दृष्टम् यथा व्यजनानिलः, तथा च रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकं त्वगिन्द्रियम् । तस्माद्वायवीयमिति । त्वगिन्द्रियस्य स्पर्शत्वद्रव्यत्वादिव्यञ्जकत्वोपलब्धेर्नियमेन स्पर्शव्यञ्जकत्वमसिद्धं स्यादिति रूपादिषु मध्य इति विशेषणम् । व्यजनानिले तु तद्गतस्पर्शव्यक्तौ यद्यपि रूपाद्यसम्भवः तथापि शीतादिस्पर्शव्यञ्जकत्वंसद्भावाद्विशेषणसद्भावः । अथ वायवीयत्वाविशेषे कस्मात्किञ्चिदेव स्पर्शव्यञ्जकमिन्द्रियमिति त्वगिन्द्रियं चेत्याह पृथिव्याद्यनभिभूतैर्वायवीयैर्विशिष्टादृष्टोपगृहीतैरीषदितरावयवसंपृक्तैः शुद्धैर्वाऽऽरब्धम् । अतः स्पर्शस्यैवाभिव्यञ्जकमिन्द्रियञ्चेति । तच्च शरीरव्यापि स-

र्यत्र स्पर्शोपलम्भाद्विज्ञातम् । तस्य च संज्ञा त्वगिन्द्रियमिति । त्वगिति शरीरावगुण्ठकं चर्म, तत्स्थानमिन्द्रियमुपचारेण त्वगिन्द्रियमित्युक्तम् । अथ त्वगिन्द्रियस्य विशिष्टोत्पादे किं प्रमाणम् ? । कार्यनियमः । तथा च रूपादिषु मध्ये स्पर्शस्यैवोपलम्भान्यथानुपपत्त्या ज्ञायते कारणनियमः । स चान्यस्यासम्भवाद्विशिष्टोत्पादे निमित्तमिति कल्प्यते । अस्य च सूत्रस्येदं भाष्यम् । भूयस्त्वात् स्पर्शवत्त्वाच्च स्पर्शज्ञाने प्रकृतिर्वायुरिति । स्पर्शो ज्ञायते ऽनेनेति स्पर्शज्ञानमिन्द्रियमिति तस्मिन्नुपाद्ये प्रकृतिः कारणं वायुर्भूयस्त्वान्निमित्तादतस्तदेवेन्द्रियं रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकमिति भूयस्त्वमिति । भूयसां विशिष्याद्दृष्टोपगृहीतानां वाय्ववयवानामीषदितरावयवसम्पर्कैरारम्भकत्वम् । यदि वा स्पर्शे ज्ञप्तिर्ज्ञानम् तस्मिन्नेव रूपादिषु मध्ये प्रकृतिः कारणं वायुः । कुत इत्याह भूयस्त्वाद्व्याकृतात् स्पर्शवत्त्वाच्चेति । स्पर्शवत्त्वं चास्य स्पर्शोत्कर्षो विवक्षितः । यदि वा स्पर्शस्यैवोपलम्भान्यथानुपपत्त्या ज्ञातः स्पर्शोत्कर्षः कस्माद्भवतीत्याह–भूयस्त्वान्निमित्तादिति ।

ननु सर्वमेतदसम्बद्धम्, वायुसद्भावे प्रमाणाभावात् । न, प्रत्यक्षेणोपलम्भात् । तथाहि–स्पार्शनव्यापारादपरोक्षज्ञानमुत्पद्यमानं दृष्टम्–वायुर्वाति शीतो वायुरुष्णो वायुरिति । न चेदं लिङ्गं लिङ्गसम्बन्धानुस्मरणं परामर्शज्ञानान्तरमुत्पद्यत इति नानुमानप्रभवम् । शब्दं विनाप्युत्पत्तेर्न शाब्दमितीन्द्रियानुविधानादिन्द्रियजम् । यत्र चापरोक्षज्ञानं तत्प्रत्यक्षम् । अथ महत्त्वादनेकद्रव्यवत्त्वात् रूपविशेषाच्च द्रव्यं प्रत्यक्षमिति सूत्रविरोधः । न,सूत्रार्थापरिज्ञानात् । तथाच सूत्रार्थः अपरोक्षज्ञानसद्भावे सति समस्तं व्यस्तञ्च लक्षणमिति ज्ञेयम् । यत्र ह्यपरोक्षं ज्ञानं तत्र अमीषां समस्तव्यस्तानां कारणत्वम् । तथा ह्यात्मा महत्त्वादेव प्रत्यक्षः । वायुस्तु महत्त्वानेकद्रव्यवत्त्वाभ्याञ्च । यत्र चक्षुःस्पर्शनाभ्यां विज्ञानं द्रव्ये तत्र समस्तं लक्षणमिति । प्राधान्यं तु यथादर्शनमभ्युपेयम् । तथाहि–रात्रावग्निर्दूरेप्युपलभ्यते रूपातिशयान्महत्त्वानेकद्रव्यवत्त्वेप्यग्रहणं पर्वतादेरिति रूपस्य प्राधान्यमेवमालोकस्य सद्भावे दूरेपि पर्वतादेर्ग्रहणम् । महत्त्वे त्वल्पप्राधान्यमित्युत्प्रेक्ष्यम् ।

अथ यत्र स्पार्शनप्रत्यक्षत्वं तत्र दर्शनस्यापि व्यापारो दृष्ट ओघ-

शब्दादौ संख्यादयश्च प्रत्यक्षा इति इहापि तथाभावः स्यात्, न चास्त्यतः स्पर्शमात्रमेव प्रत्यक्षं वारिस्थिते तेजस्युष्णतावदिति । यथा वारिस्थिते तेजस्याश्रयाप्रत्यक्षत्वेप्युष्णताग्रहणं तद्वदिहाप्याश्रयाप्रत्यक्षत्वेपि स्पर्शस्यैव ग्रहणमिति । नैतदेवम् । वारिस्थिते तेजसि रूपस्यानुद्भूतत्वात्स्पर्शमात्रस्य प्रत्यक्षत्वं युक्तम् । यत्र हि रूपोद्भवः कारणं प्रत्यक्षत्वे । न चावश्यं चक्षुषापि ग्रहणम् । संख्यादयश्च प्रत्यक्षा रूपानुद्भवे च न ग्रहणमिति । दृष्टश्च वायौ न रूपविशेषः प्रत्यक्षतायां कारणमिति चक्षुषाऽग्रहणम् । संख्यादेरप्रत्यक्षत्वं युक्तम् । अथ रूपविशेषाभावे अप्रत्यक्षत्वमेव स्यादिति चेत् । न आत्मना व्यभिचारात् । तथा ह्यात्मा रूपविशेषाभावेऽप्यन्तःकरणप्रत्यक्षः । संख्यादयः प्रत्यक्षा अप्यात्मनि रूपविशेषाभावादेव अप्रत्यक्षा इति । अथ द्रव्यस्पार्शनप्रत्यक्षत्वं रूपविशेषसद्भावे सत्येव दृष्टम् घटादौ, तथा च रूपस्पर्शव्यतिरिक्तद्रव्यालम्बनत्वेऽनुसन्धानज्ञानं च प्रमाणमस्ति 'यमहमद्राक्षं चक्षुषा तमेवैतर्हि स्पृशामि यं वाऽस्प्राक्षं स्पार्शनेन तं पश्यामीति', न च वायावेतदस्तीति स्पर्शमात्रालम्बनमिति चेत् । तदेतदसत् । रूपं विनापि वायोः स्पार्शनेन प्रत्यक्षत्वात् । अथ साध्यमेतत् । दृष्टस्य साध्यत्वे सत्यतिप्रसङ्गात् । तथाहि—स्पर्शनव्यापाराद्वायावपरोक्षज्ञानमिन्द्रियाभावव्यतिरेकाभ्यामुत्पद्यमानं दृष्टमित्युक्तम् । तस्य च साध्यत्वे घटादावपि दर्शनस्पर्शनप्रत्यक्षं साध्यमेव स्यात् । अथेन्द्रियानुविधानान्न साध्यमेतत्, समानं वायावपि । यथेदमनुसन्धानम् । तद्धीन्द्रियग्राह्यत्वाद्धटादावुपपन्नम्, वायोरेकेन्द्रियग्राह्यत्वादसम्भवेनातीन्द्रियवदिति । न चानुसन्धानादेव घटादिज्ञानस्य रूपादिव्यतिरिक्तद्रव्यालम्बनत्वम् । किन्तर्हि ? घटादिज्ञानस्य विलक्षणत्वात् रूपादिव्यतिरिक्तार्थालम्बनत्वम् । तत्र चानुसन्धानस्यापि प्रामाण्यमिति । नैवं वायुर्वाति शीतो वायुरिति ज्ञानस्य स्पर्शज्ञानविलक्षणत्वाद्व्यतिरिक्तार्थालम्बनत्वम् । न च स्पर्शोपलम्भनादनुमानजं ज्ञानमेतदिति वाच्यम् । अविनाभावसम्बन्धानुस्मरणादेरभावात् । अननुभूयमानस्यापि सम्बन्धानुस्मरणादपि व्यापारस्य कल्पनाऽन्यथाऽपि—घटादिज्ञानस्याप्यनुमानताप्रसङ्गात्, वायुप्रत्ययसमानाधिकरणश्चायं प्रत्यय इति वाय्वालम्बन एव ।

अन्ये त्वनुमानेनापि वायोः प्रत्यक्षतां व्यवस्थापयन्ति । स्वयं प्रत्यक्षेणोपलब्धोऽप्यर्थः परस्मै प्रतिपाद्यमानोऽनुमानेनैव प्रतिपाद्यत इति मन्यमानाः । तथा चाऽस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानो वायुः अस्मदादित्वगिन्द्रियप्रत्यक्षः अनुद्भूतरूपान्यत्वे सति अस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानत्वात्, यो योऽनुद्भूतरूपान्यत्वे सत्यस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानः स सोऽस्मदादित्वगिन्द्रियप्रत्यक्षः यथा घटादिः । तथा चानुद्भूतरूपान्यत्वे सत्यस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानो वायुस्तस्मादस्मदादित्वगिन्द्रियप्रत्यक्ष इति । परमाणूनां हि योगिविवक्षयोपलभ्यमानस्पर्शाधिष्ठानत्वमिति अस्मदादिविशेषणं हेतोर्द्धर्मिणश्चेति । साध्यस्याप्यन्येन्द्रियविवक्षया प्रत्यक्षत्वानभ्युपगमात्त्वगिति विशेषणम् । योगिनां चेन्द्रियान्तरेणापि ज्ञानं सम्भवतीति अस्मदादिग्रहणम् । अस्य च प्रत्यक्षधर्मत्वसद्भावेऽपि प्रतीत्यभावो दूषणम् इत्युक्तम् । तच्चासत्, प्रतीतेः समर्थितत्वात् । अथ प्रतीतिरेवास्त्वलमनुमानेन विप्रतिपद्यमानस्यानुमानोपन्यासात् ।

नन्वेवं सर्वेषामप्यतीन्द्रियाणामस्मदादिप्रत्यक्षत्वं स्यात् प्रमेयत्वादिति हेतुना । न परप्रतिपत्त्यैव बाध्यमानत्वात् । तथाहि—परो विजानाति न मेऽस्ति परमाण्वादिविषयज्ञानमिति । स्वयमपरोक्षज्ञानसद्भावे सति परप्रतिपादनायानुमानोपन्यासो युक्तः । स च वायावस्ति न परमाण्वादाविति । तथा परमाण्वादिरस्मदादीन्द्रियविषयत्वे परमाण्वादिरूपतां जह्यात् । महत्त्वादियोगिन्यस्मदादीन्द्रियव्यापारोपलब्धेरिति ।

इदानीं प्रत्यक्षेण वायुसद्भावे व्यवस्थापिते विषयनिरूपणार्थमाह विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूत इति । उपलभ्यमानश्चासौ स्पर्शश्च तस्याधिष्ठानभूत इति व्याख्या । तत्र चास्मदादिप्रतिपादनाय शास्त्रस्यारम्भादस्मदादिविशेषणमप्यूह्यम् । उपलम्भोपीन्द्रियद्वारेणैव विवक्षित इति । अन्यथा हि प्रमाणान्तरेणोपलम्भः शरीरादावप्यस्तीति उपलभ्यमानस्पर्शाधिष्ठानत्वं व्यभिचारि विषयलक्षणं स्यात् । एवमस्मदादीन्द्रियोपलभ्यमानस्पर्शाधिष्ठानत्वादितरस्माद्भिद्यते । विषय इति वा व्यवहर्तव्यः । तथा न परं विषयलक्षणो वायुरस्मदादीन्द्रियप्रत्यक्षोऽनुमानावगम्यश्चेत्याह—

स्पर्शशब्दधृतिकम्पलिङ्ग इति । स्पर्शश्च शब्दश्च धृतिश्च कम्पश्चेति लिङ्गानि यस्यासौ तथोक्त इति । तथा ह्यनुष्णाशीतत्वे सति अपाकजस्पर्शः क्वचिदाश्रितो गुणत्वात्, यो यो गुणः स स आश्रितो दृष्टः । यथा रूपादिः, तथा चायं गुणस्तस्मादाश्रित इति । गुणत्वं चास्य सामान्यवत्त्वेऽद्रव्यत्वे च सति नियमेनाचाक्षुषप्रत्यक्षत्वाद्रसवदिति । अचाक्षुषप्रत्यक्षत्वं घटादावस्तीति नियमग्रहणम् । तथापि स्पर्शत्वादिसामान्ये नियमेनाचाक्षुषप्रत्यक्षत्वं न च गुण इति व्यभिचारः तदर्थं सामान्यवत्त्वे सतीति विशेषणम् । सामान्यवत्त्वं द्रव्यादित्रयस्यास्तीति नियमेनाचाक्षुषप्रत्यक्षपदम् । सामान्यवत्त्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वं वाय्वादावस्तीति अद्रव्यत्वे सतीति पदम् । अस्य पक्षधर्मत्वे सति पक्षैकदेशवर्तमानस्यात्यन्तं विपक्षाद्व्यावृत्तस्याबाधितविषयत्वादसत्प्रतिपक्षत्वेन गमकत्वम् । अथास्त्वनुष्णाशीतत्वे सत्यपाकजस्पर्शस्याश्रितत्वमपाकजत्वे तु किं प्रमाणम् ? पाकजरूपादिवियोगात्तथाहि—पाकजस्पर्शः पाकजरूपादिसहितो दृष्टो घटादाविति । अस्यापि पाकजत्वे तथाभावः स्यात् । अथ सद्भावेऽप्यनुद्भूतत्वात्तेषामनुपलम्भः, तन्नान्यत्राऽभावात् । न हि पाकजस्पर्शोपलम्भे रूपादीनामन्यत्रात्यन्तानुपलम्भो दृष्ट इति । न चात्र रूपादीनामस्तित्वप्रमाणमस्तीत्यनुद्भवानुपपत्तिः । सद्भावेऽनुद्भवकल्पनोपपत्तेः । अथासद्भावे किं प्रमाणमिति चेत् । अत्यन्तानुपलब्धिरेव । तथाहि—विवक्षितस्पर्शाधिकरणं गुरुत्वरहितं सम्भवतीति । सहचरिता रूपादयो न कदाचिदुपलभ्यन्ते प्रमाणत इत्यसन्तः । तथा पाकजस्पर्शस्य गुरुत्वसाहचर्योपलब्धेरस्यापि पाकजत्वे तत्सद्भावः स्यात् । गुरुत्वसम्बन्धे चोर्ध्वं पर्णादिधारणानुपपत्तिः । तस्यापि गुरुत्वसम्बधितया तत्प्रसङ्गात् । न च पाकजस्पर्शाधिकरणं गुरुत्वरहितं सम्भवतीति । पार्थिवस्पर्शविलक्षणत्वान्न पृथिव्यां वर्त्तते, नाप्युदकतेजसोरनुष्णाशीतत्वादन्यत्रासम्भव एवेति । यत्रायं वर्तत असौ वायुरिति ।

तथाऽऽद्यः शुकशुकाशब्दः सन्ततानुमितः स्पर्शवद्द्रव्यसम्बन्धकार्यः विभागजशब्दजशब्दान्यत्वे सति शब्दत्वात्, यो यो विभागजशब्दजशब्दान्यत्वे सति शब्दः स स्पर्शवद्द्रव्यसंयोगकार्यो यथा भेरीदण्डसंयोगजः शब्दः । तथा चायं तस्माद्यथोक्तसाध्य इति । ननु

विभागजशब्दादस्य विशेषानुपलब्धेः सन्दिग्धं तदन्यत्वे सतीति विशेषणम्। न, रूपादिमतां घनावयवसन्निवेशभाजां कारणविभागपूर्वकविभागस्य शब्दारम्भकत्वोपलब्धेस्तदभावस्त्वविवादास्पद इति विभागजत्वाभावात्। तथा विभागजत्वे शुकशुकादिशब्दस्य शाखादिषु कम्पसमानकालोपलब्धिर्न स्यात्। सा तु दृष्टा। नचात्र शाखादिवायुविभागस्य शब्दारम्भकत्वं युक्तम् कारणविभागजत्वानुपपत्तेरतस्तदन्यत्वे सतीति विशेषणम् न सन्दिग्धमेव। धृतिः धारणमाकाशे पर्णादीनामवस्थानम्। तच्च स्पर्शवद्द्रव्यसंयोगकार्यं प्रयत्नाभावे सति धारणत्वात्, यद्यत्प्रयत्नाभावे सति धारणं तत्तत् स्पर्शवद्द्रव्यसंयोगकार्यं यथाऽऽधारगतोदकं तथा चेदं तस्मात्स्पर्शवद्द्रव्यसंयोगकार्यमिति। पक्षिणां मूर्छनमित्याह—सम्मूर्छनं पुनः समानजवयोर्वाय्वोर्विरुद्धदिक् क्रिययोः सन्निपातो हि संबन्धः। स च कयोर्वाय्वोः किं विशिष्टयोरित्याह समानजवयोः। समानस्तुल्यो जवो वेगो ययोस्तौ समानजवौ तयोरिति। अन्यथा ह्येकस्याल्पजवत्वे बलीयसाभिभवान्न संमूर्छनमिति। तथा ह्येकादिक्क्रिययोर्न संमूर्छनमित्याह विरुद्धे दिशाक्रिये ययोस्तौ विरुद्धादिक्क्रियाविति। तथा ह्येकस्य प्राचीनदिग्गमनमन्यस्य च तदभिमुखमागमनमिति क्रिययोर्विरोधः। अन्ये तु विरुद्धायां दिशि क्रिये ययोस्तौ तथोक्ताविति मन्यन्ते। अत्राविरोधश्चिन्तनीयः। अथेत्थंसन्निपातः कुतः प्रतीयत इत्याह सोपि सन्निपातः सावयविनोरूर्ध्वगमनेनानुमीयते। सहावयविभिर्वर्तेते यौ तौ सावयविनाविति तदवयवा अपि महान्तोऽवयविन इति ज्ञापनार्थमिदमुक्तम्। अन्यथा हि सावयवयोरिति स्यात्। अन्ये त्ववयविनोऽत्र तृणादयो विवक्षिताः न तदवयवा इति मन्यन्ते। अथ वायोरेवोर्ध्वगमनं कथं प्रतीयत इत्याह तदपि तृणादीनामूर्ध्वगमनेनेति। तथाहि तृणादीनामूर्ध्वगमनं चेतनत्वान्न प्रपन्नात् भवति। नापि वेगात् क्वचिन्मन्दगतित्वात्। आद्यकर्मोत्पत्तौ च तदभावात्। अन्यस्य च सामर्थ्यानुपलब्धेर्वेगवद्द्रव्यसम्बन्धोऽनुमीयते। न च तत्पार्थिवमाप्यं वा तस्यापि गुरुत्वाधिकरणतयोर्ध्वगमने गुरुत्वरहितं निमित्तान्तरं वाच्यम्। न चात्राग्नेरूर्ध्वज्वलनस्वभावतया तत्संयोगात्तृणादीनामूर्ध्वगमनमिन्धनविशेषाभावेनोर्ध्वज्वलनासंभवात्तदनुपलब्धेश्च। न चान्यस्यात्र सामर्थ्यमिति। वायुसम्ब-

न्धात्तृणादीनामूर्ध्वगमनमिति ज्ञायते । तस्य तिर्यग्गतिशीलतयोर्ध्वं गमनम् अन्तराले नान्यथा संभाव्यत इति वाय्वन्तरेण प्रतिबन्धः । तथाहि वायुर्बलीयानपरेण च बलीयसा प्रतिबन्धसन्निपातात्स्वां गतिं विरहय्योर्ध्वं गच्छति । तत्संयोगाच्च तृणादीनामूर्ध्वगमनमिति सिद्धं—तृणादीनामूर्ध्वगमनेन वायोरूर्ध्वगमनम्, तेन च सन्निपातः स्वतस्मान्नानात्वमिति ।

अथ प्राणाख्यस्य वायोरुपलभ्यमानस्पर्शाधिष्ठानतया विषयान्तर्भावेऽपि प्राधान्यज्ञापनार्थं विशिष्यार्थक्रियाकारितया पृथगभिधानम् । तथा तत्त्वज्ञानिनो योगाभ्यासे प्रवर्तमानस्य प्राणोऽत्यन्तमुपकारीति पृथगुच्यत इत्याह—प्राणोऽन्तःशरीरे रसमलधातुप्रेरणादिहेतुरिति । तथा ह्यन्तःशरीरे वर्तमानत्वात् प्राण इत्युक्ते रसादिभिर्व्यभिचारः, तदर्थं रसमलधातूनां प्रेरणादिहेतुरिति । तथापि रसादिप्रेरणादिहेतुत्वात् प्राण इत्युक्तेऽदृष्टादिषु व्यभिचारः, तदर्थमन्तःशरीरे वर्तमान इति । न चादृष्टादयोऽन्तःशरीरे वर्तन्ते अदृष्टस्य चात्मवृत्तित्वादीश्वरस्य चावृत्तिमत्त्वादिति । तदेवमन्तःशरीरे वर्तमानो रसादिप्रेरणहेतुत्वादितरस्माद्भिद्यते । प्राण इति वा व्यवहर्तव्यः । यदि वा वायुसामान्यलक्षणानुवृत्तौ सत्यामन्तःशरीरे वर्तमानत्वाद्रसादिप्रेरणहेतुत्वाच्च प्राण इत्युक्ते व्यभिचाराभावः । अथासौ किमेकोऽनेक इत्याह—एकः सन् क्रियाभेदादपानादिसंज्ञां लभत इति । अथ वास्तवभेदः कस्मान्नेष्यते ? बाधकोपपत्तेस्तथाहि-पञ्च वायवः शरीरे यदि व्याप्त्या वर्तन्ते तदा संबन्धादेको वायुर्भवतीति पञ्चत्वनिवृत्तिः, अथाप्राप्त्या तथाप्येकेन शरीरस्य व्यापकत्वादपरेषामसंभव इति मन्यमानः क्रियाभेदेन भेदमाह । स एव मुखनासिकाभ्यां निष्क्रमणशीलो वायुः प्राणाख्योऽधोनयनान्मलादेरपानः समं नयनात् समानः ऊर्ध्वं नयनादुदानः विविधमनेकप्रकारेण नयनाद्व्यानः इति । ॥ इति वायुः ॥

**( भा० ) इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतस्यान्ते वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षास-**

मकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः। तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिंश्च सति पूर्वपूर्वस्य विनाशः, ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धाश्चात्मानस्तावन्तमेव कालम्।

ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां पूर्वादिशा परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेवाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिप्रक्रमेण महापृथिवी समुत्पन्ना संहताऽवातिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमुत्पद्यते॥

तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्माऽतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूप-

ज्ञानभोगायुषः सुतान्प्रजापतीन् मानसान् मनुदेवर्षि-पितृगणान् मुखबाहूरुपादतश्चतुरो वर्णान् अन्यानि चोच्चावचानि च सृष्ट्वाऽऽशयानुरूपैर्धर्मज्ञानवैराग्यै-श्वर्यैः संयोजयतीति ॥

(सू०)प्रसङ्गादाह चतुर्णामिति। चतुर्णां पृथिव्यादीनां महाभूता-नां परमाण्वपेक्षयाऽपकृष्टपरिमाणवताम्, तेन द्व्यणुकस्याप्युपग्रहः। सृष्टिसंहारस्य-सृष्टिप्राक्कालीनप्रलयस्य, तेन महाप्रलयस्य व्युदासः। विधिः-क्रमः । सृष्टिसंहारयोरुत्पत्तिप्रलययोर्विधिः कथ्यत इत्यर्थ इत्याचार्याः। ब्राह्मेण मानेनेति।

मानुषेनैकवर्षेण देवानां दिनमुच्यते।
तेषां शतत्रयं षष्टियुक्तं वर्षस्तु दैवतः ॥
दैववर्षसहस्राणि द्वादशाहश्चतुर्युगम् ।
चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते ॥

इति स्मृतिसिद्धब्रह्मदिनमानेन यद्वर्षशतं तस्याऽन्ते ब्रह्मणो-ऽपवर्गकाले मृत्युकाले। ब्रह्मेशानप्रभृतीनामपीन्द्रादिवज्जीवप्रभे-दत्वमतेनेदम् । ब्रह्मणः परमात्मनोऽस्मदाद्यदृष्टोपगृहीतयातृदेह-विच्छेदकाल इति वाऽर्थः । संसरतीति संसारः शरीरं तत्र, खिन्नानां-विविधदुःखानुभाविनाम् । निशीति । ब्राह्मेण माने-त्यनुषज्यते ।

चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥

इति स्मृतेः। निशीत्यस्य निशातुल्य इत्यर्थ इत्याचार्याः। विश्रामार्थं-खेदोपशमार्थम्, सकलभुवनपतेस्त्रिभुवननियन्तुर्महेश्वरस्य परमात्म-नः, संजिहीर्षा-संहारसामग्रीविशिष्टेच्छा तत्समकालमदृष्टानां

वृत्तिनिरोधे सतीत्यत्रान्वितमिदम् । संजिहीर्षासमकालं-संजिहीर्षोत्तरकालमिति त्वाचार्याः । तेषां चापरमाण्वन्तो विनाश इत्यत्रान्वयोऽभिप्रेतः । यद्यपि शरीरादिकमपि महाभूतमेव, तथाप्यत्र महाभूतपदं प्रागुक्तविषयपरम् । उपनिबन्धकं-जनकम् । सर्वात्मगतेति । सर्वेषामात्मवृत्त्यदृष्टानां वृत्तिः फलोपधानं तस्य निरोधे प्रतिबन्धे सतीत्यर्थः । फलानुत्पत्त्या जन्यद्रव्यत्वावच्छिन्नं प्रति ब्रह्मरात्रित्वेन प्रतिबन्धकत्वमित्याभिप्रायः । प्रलयहेतुभूतादृष्टमेव जन्यद्रव्यनिरोधकमिति त्वाचार्यमतन्तु प्रलयप्राक्क्षणएव तादृशादृष्टस्योत्पत्त्यभ्युपगमे शोभत इति ध्येयम् ।

महेश्वरेति । महेश्वरेच्छासहितैरात्मपरमाणुसंयोगैर्जनितेभ्यः परमाणुकर्मभ्य इत्यर्थः । पञ्चम्या जन्यत्वमर्थस्तच्चाग्रिमविभागेऽन्वितम् । तत्संयोगनिवृत्तौ-शरीराद्यारम्भकाणां परमाणुसंयोगानां निवृत्तावित्यर्थः । तेषां-शरीराणामिन्द्रियाणां च, आ-सम्यक्प्रकारेण द्व्यणुकनाशादिक्रमेणेति यावत् । परमाण्वन्तः-परमाण्ववसानकः । प्रलये विषयसंज्ञकानां नाशे विशेषं दर्शयन्नाह तथेति । महाभूतानां- विषयसंज्ञकानाम् । अनेनैवेति । परमाणुक्रियाविभागादिक्रमेणैवेत्यर्थः । उत्तरोत्तरस्मिन्निति । प्रथमं पार्थिवस्यैव विषयस्य विनाशस्ततो जलस्योत्तरकालं तेजसः पश्चाद्वायोर्विनाश इत्यर्थः। अयं च क्रमः श्रुतिसिद्धत्वादुपात्त इत्याचार्याः । ननु पृथिव्युदकज्वलनपवनानां क्रमेणैव ध्वंसवतः कालस्य प्रलयत्वानुपपत्तिः, कार्यद्रव्यानाधिकरणकालस्यैव तत्त्वादत आह तत इति । पृथिव्यादिचतुर्णां नाशोत्तरमित्यर्थः । प्रविभक्ताः-कार्यद्रव्यरहिताः । कार्यद्रव्यराहित्यं कार्यभावानधिकरणत्वेऽप्युपपद्यमानं न खण्डप्रलयत्वनिर्वाहकम् महाप्रलयस्यापि तत्त्वादतस्तद्व्यावृत्त्यर्थमाह धर्मेति । धर्माधर्मभावनाख्यसं-

स्कारैरनुविद्धा विशिष्टा आत्मानश्चावतिष्ठन्त इति पूर्वेणान्वयः । चकाराद्गगनादिनित्यवर्गस्य पाकजरूपाद्यनित्यवर्गस्य चोपग्रहः । तावन्तमेव कालं–ब्राह्ममानेन शतवर्षपर्यन्तं कालमित्यर्थः । तथाच स एव कालः कार्यद्रव्यानधिकरणत्वे सति कार्याभावानधिकरणत्वात् खण्डप्रलयो न त्वन्यस्तथेति भावः ।

खण्डप्रलये धर्मादेः सत्त्वे प्रमाणमावेदयितुमुत्तरसृष्टिं व्युत्पादयति तत इति । महाभूतानां सृष्टिसंहारयोर्द्वयोर्विधानस्य पूर्वं प्रतिज्ञातत्वात् संहारविधिमुक्त्वा सृष्टिविधिमाह तत इति त्वाचार्यस्वरससिद्धस्तत इत्यस्यावतारक्रमः । प्राणिनां–संसारिणाम्, भोगस्य– सुखदुःखान्यतरस्य, भूतये–निष्पत्त्यर्थम्, सिसृक्षाया सृष्टिसामग्र्युपहितेच्छाया अनन्तरं उत्तरकालं सर्वाणि याग्यात्मगतान्यथ च वृत्तिलब्धानि लब्धवृत्तीनि अदृष्टानि तत्सापेक्षेभ्यः तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ सत्यां तेषां पवनपरमाणूनां पूर्वदिशा विभागादिक्रमेण(जातेभ्यः)परस्परसंयोगेभ्यो यानि द्व्यणुकानि तदादिक्रमेण महान् वायुरुत्पन्नो नभस्याकाशादौ दोधूयमानोऽत्यर्थं कम्पमानास्तिष्ठति। मूर्तान्तरानुत्पत्त्या तदुपगमस्याप्रतिहतत्वादिति भावः । तदनन्तरं–महापवनस्योत्पत्त्यनन्तरम्, तस्मिन्नेव पवने आप्येभ्यो जलारम्भकेभ्यः परमाणुभ्यः (प्रागुक्तरीत्या)तेनैव क्रमेण द्व्यणुकादिक्रमेण महान् सलिलनिधिः समुत्पन्नः पोप्लूयमानोऽत्यर्थं प्लवनशीलास्तिष्ठति । पवनाभिभूतस्य पयसः प्लवनातिशये बाधकाभावादिति भावः। तदनन्तरं सलिलनिधेरुत्पत्त्यनन्तरं, तस्मिन्नेव–सलिलनिधौ, संहता–कठिना, देदीप्यमानोऽ–त्यर्थं प्रकाशमानः । एवं–वायुजलतेजःक्रमेण, अयं च क्रमः श्रुतिसिद्ध इत्युपात्तः। महेश्वरस्याभिध्यानं–ब्रह्माण्डोत्पत्तिगोचरज्ञानमिच्छा वा । तन्मात्रान्न तु तदीयशरीरमध्य-

पेक्षणीयमिति मात्रशब्दस्यार्थः । तैजसेभ्य इति समवायिकथनम् । पार्थिवेत्युपष्टम्भककथनम् । तथासत्येव तैजसाण्डस्य हिरण्मयत्वसंभवात् । सर्वलोकानां तदण्डस्थानां पितामहं सर्वैर्भूर्भुवःस्वरादिलोकैः सहितं, प्रजासर्गे—प्रजासृष्टिनिमित्तं, नियुंक्ते—प्रजाः संसृजेत्याज्ञापयति महेश्वर इत्यर्थाद्गम्यते, अत एवाह स चेति । न च महेश्वरेणैव सहकारिवशेन प्रजानिर्माणसंभवाद्व्यर्थं ब्रह्मणेति वाच्यम् । शरीरनिष्पाद्यानामादिकार्याणां निःशरीरेणेश्वरमात्रेणानिष्पत्तिस्तदर्थं ब्रह्मणोऽप्यपेक्षणीयत्वात् ।

अथ ब्रह्मैव यद्यज्ञः स्यात्कथं कर्म कुर्यात्, यदि वा क्वचिदनुरक्तः स्यात्कथं तदनिष्टमुत्पादयेत्, यदि चानीश्वरः स्यात् जानानोऽप्यसौ दुष्करं वेधकर्म कथं साधयेदत उक्तमतिशयज्ञानेत्यादि ।यदा त्वीश्वर एव तत्तत्कार्यवशाद्ब्रह्मादिदेहं परिगृह्णाति 'नमः कुलालेभ्यः कर्मकारिभ्य' इत्यादिश्रुतिप्रमाणकत्वादिति मतम् ,तदा ब्रह्मणीश्वरस्य नियोगः कार्यानुकूलतत्तत्कृतिसहकृतत्वरूपो बोध्यः । कर्मविपाकमिति । प्राणिनां यानि कर्माणि तेषां विविधं पाकं फलोपधानकालं विदित्वेत्यर्थः । मानसान् अयोनिजान् सुतान् मरीच्यत्रिप्रभृतीन्, सृष्ट्वेत्यग्रेऽन्वयः । प्रजापतीन्—दक्षादीन् । मनवः—स्वायंभुवाद्याः, देवा आदित्यादयो, ऋषयो भरद्वाजाद्याः, पितरः— कव्यवाहनाद्याः तेषां प्रत्येकं गणानित्यर्थः । मुखेति । मुखाद्ब्राह्मणं बाहुभ्यां क्षत्रियम् ऊरुभ्यां वैश्यं पद्भ्यां शूद्रमित्येवं चतुरो वर्णानित्यर्थः । तथाच श्रुतिः "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इति । उच्चावचानि—उत्कृष्टापकृष्टानि भूतप्रेतादीनि । आशयः—पूर्वजन्मसंस्कारः, तदनुरूपैस्तत्सदृशैरित्यर्थः। धर्मज्ञानवैराग्यैश्वर्यैरित्युपलक्षणम्। अधर्माज्ञानावैराग्यानैश्वर्यैरित्यपि द्रष्टव्यम्॥

( से० ) ननु 'नहि कदाचिदनीदृशञ्जगत्' इति न्यायेन प्रलयाभावेन वर्तमानलोकसन्तानैरेव वेदसम्प्रदायानुवर्तने किमिति भगवता वेदवक्तृत्वस्वीकारः, प्रलयस्वीकारे तु कथं तदनन्तरं घटादिलिप्यादिसम्प्रदायः ? कथं वा शक्तिपरिच्छेद उपदेष्टुरभावात्। न च भगवानुपदेष्टा, निष्प्रयोजनस्योपदेष्टृत्वाभावात्। किञ्च परमाणूनां साम्येन कथं कार्यवैचित्र्यम्। न चादृष्टवैचित्र्यात्। तदृष्टादेरारम्भकस्य सत्वे प्रलयानुपपत्तेः। न चादृष्टस्य वृत्तिनिरोधे सति सः, पश्चाद्वृत्तिप्रापकाभावात् सृष्ट्यनुपपत्तेः। अपि चानधिष्ठितानामेषां कार्यजनकत्वानुपपत्तिरचेतनत्वात्, अधिष्ठातृत्वं च न परमाण्वसाक्षात्कर्तृणामस्मदादीनां तदसाक्षात्कर्तुः तदधिष्ठातृत्वानुपपत्तेः। नापि भगवता निष्प्रयोजनस्याधिष्ठातृत्वादर्शनादिति समाकुलं जिज्ञासुकुलं समाश्वासयन् आह इदानीमिति। सृष्टिसंहारयोर्विधिः न तु सृष्टेः संहारस्य विधिः सृष्टिप्रकारकथनविरोधात्। प्रथमं संहारकथनस्य तु सृष्टिसंहारयोः प्रवाहेनानादित्वद्योतनं प्रयोजनम्, आकस्मिकप्रतिज्ञाक्रमातिक्रमस्य परमसावधानस्य भाष्यकर्तुः अन्यथानुपपत्तेः। एवं च प्रतिज्ञाक्रमातिक्रमस्यानादित्वद्योतनमेव प्रयोजनम्, अन्यथा वैयर्थ्यात् इति क्रमातिक्रमादेवाऽनादित्वं प्राप्तम् इत्येके। संहारं प्रतिपाद्य तदानन्तर्यविशिष्टां सृष्टिं बोधयता प्रकृतसंहारः सृष्टेः पूर्वं न च सृष्टिं विना संहार इति पूर्वमपि सृष्टिरायाति इति प्रवाहित्वमेतयोरित्यपरे।

ब्रह्मणेति। चतुर्युगसहस्रामितं ब्रह्मणो दिनं तावत्येव रात्रिरीदृशेनाहोरात्रेण पक्षादि परिकल्प्य वत्सरं परिकल्प्य ब्रह्मणः वर्षशतगणना कर्तव्येत्याशयः। वर्षशतान्ते वर्षशतं प्राप्य न तु वर्षशतात्यये तत्रापवर्गस्यैव भावेन ब्रह्मणोऽवर्तमानत्वात्। यदा कथंचित् एव सुकृतविशेषवशेन ब्रह्मा भवति तदा ब्रह्मणो ऽपवर्गकाले मोक्षकाल इति व्याख्येयम्। अस्मिन्पक्षे येऽसङ्कल्पितफलकर्मकर्तारः साकारोपासनापरिवासितचेतसो यतयस्ते "हिरण्यगर्भपदवीमनुप्राप्य परिमुज्यन्त" इत्यागमस्य ब्रह्मत्वं प्राप्यापवृक्ता भवन्ति इत्यर्थकतया अस्मिन्नर्थे प्रामाण्यम्।यदा तु भगवानेव त्रिमूर्तिर्भवतीति पक्षः, तदा ब्रह्मणो नित्यमुक्ततया अपवर्गकाले देहत्यागकाल इति व्याख्येयम्। श्रुत्यर्थस्तु–हिरण्यगर्भपदवीमनुप्राप्य ब्रह्मलोकं गत्वा मु·

को भवतीत्येयप्रमेयः। नो विरोधः अन्यथाऽऽगमेन ब्रह्मणोऽमुक्तत्वप्रतिपादनेन भगवतो ब्रह्मत्वमिति पक्षस्यामूललूनत्वापत्तेः।

संसारे जन्ममरणादिप्रवाहे खिन्नानां विविधोपद्रवैः निस्सहीभूतानां निशि रात्रिकल्पे निरस्ततद्दीपवर्तिरविरश्मिजालस्य कालविशेषपदेन चानित्यद्रव्याधारत्वग्रहणेन प्रलयस्य रात्रित्वाभावात्। न च तच्छून्यस्यैव लक्षणत्वे रात्रित्वं तत्रास्त्विति वाच्यम। "नाहो न भूमिर्न च खं न रात्रिः" इत्यागमविरोधात्। न च यथा नखमित्यस्य खव्यवहारो नास्तीत्यर्थः तथा न रात्रिरित्यस्य रात्रिव्यवहारो नास्तीत्यर्थ इति वाच्यम्। आकाशस्य नित्यतया तत्र मुख्यार्थबाधेन लक्षणयाऽऽगमस्य नेयत्वात्, एकत्र लक्षणया यत्र लक्षणां विनाप्युपपत्तिः तत्र लक्षणाया अकर्तव्यत्वात्। नच भाष्यवाक्ये वा लक्षणा तस्मिन् वा लक्षणेत्यत्र किं नियामकमिति वाच्यम्। लौकिकवाक्यानुरोधेन वेदस्यान्यथा नेतुमनुचितत्वात्। अस्यार्षत्वेऽपि लौकिकत्वात् अन्यथा "सर्वौदुम्बरी वेष्टयितव्येति" वाक्यमनुरुध्यौदुम्बरीं स्पृष्ट्वा इत्यादिश्रुतिरपि अन्यथा नीयेतेति सङ्क्षेपः।

विश्रामार्थ—प्रलये शरीराद्यभावेन दुःखाभावात्।महेश्वरत्वे हेतुत्वेन सकलभुवनपतेरित्युक्तम्। समकालमनन्तरकालं कार्यकारणयोः पौर्वापर्यनियमात्। ननु भगवदिच्छाया एकतयेदानीमपि कथं न प्रलयो भगवत्संजिहीर्षायाः सत्त्वात् इति चेन्न। संजिहीर्षात्वविशिष्टायास्तस्या इदानीमभावात्, सिसृक्षात्वविशिष्टाया एव सत्त्वात्। ननु संजिहीर्षात्वं न जातिः एकव्यक्तिकत्वात्। न चाऽस्मदादीच्छायामपि संजिहीर्षात्वसत्त्वादनेकत्वम्, जातेरकदाचित्कत्वेनेदानीमपिभगवदिच्छायां संजिहीर्षात्वसत्त्वापत्तेः। न च व्यक्तौ कादाचित्की जातिरिति घटादौ दृष्टं येनात्रापि तथा कल्प्येत। न च संहारविषकत्वं संजिहीर्षात्वं तच्च नेदानीं भगवदिच्छायामिति वाच्यम्। विषयिणि सतिपश्चात्तद्विषयकत्वस्याभावात्। न च घटज्ञानं जातं सत् पश्चात् घटं विषयीकरोति इति कस्यापि सम्मतम्। किञ्चेच्छादावन्यप्रवणं विषयत्वमन्यत्रात्र, ज्ञानञ्च भगवतः सर्वदा सर्वविषयकं, तथाचेच्छादयोऽपि तथा, न चास्मदादीनां घटविषयकज्ञानेच्छा घटविषयकत्वे विलम्बत इति कस्यापि रोचते। न च संजिहीर्षात्वं संहारसामग्रीसमकालीनत्वमिति तस्याः कादाचित्कत्वान्नेदानीं भगवदिच्छायाः

संजिहीर्षात्वमिति वाच्यम् । प्रकृतिप्रत्ययकविभागकल्पनायामस्या- र्थस्याप्रतीतेः, जिगमिषेत्यत्र गमनेच्छाया इव संजिहीर्षेत्यत्र संहारे- च्छाया एव प्रत्ययात् । न च संजिहीर्षाशब्दः सामग्रीविशेषविशिष्टे- च्छायां रूढ एवेति वाच्यम् । कस्य कारणस्य विलम्बादिदानीं सा- मग्रीविलम्ब इत्यनिर्वचनात् । न तावददृष्टविलम्बः, तस्य प्रलयाव्य- वहितकाल उत्पत्तौ प्रमाणाभावेनेदानीमपि सत्त्वात् , तस्मादनुपपन्न- मेतत् यतः संजिहीर्षासमकालमिति चेत् । तत्कालविशेषविल- म्बेनैव सामग्रीविलम्बात् । न च कालस्य साधारणतया तस्य च सर्वदा सत्त्वात् कथं तद्विलम्बेन विलम्ब इति वाच्यम् । कार्यविशेषे कालविशेषस्यासाधारणकारणत्वस्यापि दृष्टत्वात् । दृष्टं यत्नविशेषे कालविशेषस्यासाधारणकारणत्वमिति । तस्मात्का- लविशेषाभावादेव नेदानीं संजिहीर्षात्वमिति सर्वं सुस्थम् । अत एव आचार्यचरणाः 'स च कालविशेषो वर्षशतादिशब्दवाच्य' इति । स चोपाधिरित्यर्थः । शरीरेन्द्रियमहाभूतोपनिबन्धकानां-शरीरञ्च इ- न्द्रियञ्च महाभूतानि च तदुपनिबन्धकानां तदुत्पत्तिस्थितिहेतू- नाम् । न च द्व्यणुकाप्राप्तिः, परमाणुभ्योऽधिकपरिमाणतया लक्षण- या महाभूतपदेन तस्यापि ग्रहणात् । सर्वात्मगतादृष्टानां-सर्वात्म- समवेतादृष्टानाम् अदृष्टे गुणे गत्यभावात् । अदृष्टानि चात्र सृष्टिकार- णानि विवक्षितानि प्रलयहेतोरुद्धवृत्तितया निरुद्धवृत्तित्वाभावात्, वृत्तिनिरोधः-प्रलयहेतुनाऽदृष्टेन प्रतिबन्धः ।महेश्वरेच्छसमगतस्ततः(?) संयोगनाशः ततो द्व्यणुकनाशे सकलकार्यपरम्परानाश इत्याहात्माणु- संयोगजकर्मभ्य इति । महेश्वरेच्छा चात्माणुसंयोगश्च ताभ्यां जातेभ्यः कर्मभ्यः अदृष्टवदात्मसंयोगात् परमाणुषु क्रिया ततोऽविशेषपरमाणुमा- त्रावस्थितिरित्यर्थः । परमाणुत इत्येतावतैव चरितार्थत्वे आङ्शब्द- स्याऽवयववचनत्वनिरासमुखेनावधित्वं द्योत्यतेऽन्यर्थमिति न्यायात् । तथैव तस्य व्याख्यानम् । अनेनैव प्रकारेणेति । उत्तरस्मिन् उत्तरस्मिन् सतीति । जलादौ सति पृथिव्या ज्वलनादौ सति जलस्यानिले स- ति ज्वलनस्येत्यर्थः । कार्यविनाशे सति प्रकृतिरेव तिष्ठति नतु परमाणवोऽप्रामाणिकत्वादिति साङ्ख्यमतव्युदासायाह तत इति । ततस्तस्मिन्नाशे सतीत्यर्थः । आचार्यैस्तु ततस्तदेत्यर्थ इत्युक्तः । तत्र तेषां पदार्थोपेक्षायां किं बीजमिति नावधारयामः । परमाणूनां

प्रामाणिकत्वात् प्रकृतेरेवाप्रामाणिकत्वान्नैवमित्याशयः। प्रविभक्ताः कार्यद्रव्यारम्भकसंयोगरहिता अत एव कार्यद्रव्यरहिता इत्यर्थः।

धर्मेति। अन्यथा प्रलयोत्तरं सृष्ट्यनुपपत्तिरदृष्टस्य सर्वोत्पत्तिमन्निमित्तकारणत्वात् संस्कारं विना गृहीतदेहस्यापि आत्मनः स्मरणाद्यनुपपत्तेरित्याशयः। अन्यस्य नित्यवर्गस्यावस्थितिस्तु नोक्ता नित्यत्वादेव प्राप्तेः। आत्मनः किमित्युक्तेति चेन्न। धर्मादिस्थितिकथनाय शब्दविन्यासे कर्तव्ये तथैव शब्दविन्यासस्य जातत्वात्। अग्रिमसृष्ट्यनुरोधेन धर्मादिस्थितावुक्तायामन्यदपि सृष्ट्युपपादकधर्मादिवन्नित्यं तिष्ठतीत्युक्तं भवति। तेन पाकजा रूपादयस्तिष्ठन्तीति सिध्यति, अन्यथा सृष्ट्यादौ पार्थिवद्व्यणुके रूपाद्यसिद्ध्यापत्तेः।प्रागभावश्च तिष्ठति परमाणुषु वेगकर्मणी च तिष्ठतः। कर्म विना कालावच्छेदानुपपत्तौ तावन्तमेव कालमिति प्रलयपरिमाणासिद्धेः, वेगं विना कर्मानुपपत्तेः। नैमित्तिकद्रवत्वं न परमाणुष्वङ्गीक्रियते,यदा लाक्षादिषु द्रवत्वमुत्पद्यते तदैव तत्परमाणुष्वपि द्रवत्वोत्पत्तिसम्भवात्। न हि सृष्ट्यादौ तेजःसंयोगानुत्पत्तिदशायां किञ्चित्पार्थिवं द्रुतमुत्पद्यते इत्यत्र प्रमाणमस्ति, तथात्वे तु तिष्ठतु नैमित्तिकद्रवत्वमपि परमाणुषु पार्थिवरूपादिवत्। द्वित्वादिकं तु परमाणुषु भगवदपेक्षाबुद्ध्या तदैवोत्पद्यते द्व्यणुकपरिमाणनिर्वाहाय न तु प्रलयकालेषु तिष्ठति प्रमाणाभावात्। न च समवायिकारणस्य परमाणोः समवायिकारणस्यैकत्वस्य निमित्तकारणस्य भगवदपेक्षाबुद्धेः सत्त्वे कथं न द्वित्वोत्पत्तिरिति वाच्यम्। अदृष्टस्य निरुद्धवृत्तित्वात्। एवं च परमाणुक्रियासत्त्वेऽपि संयोगविभागावपि नोत्पद्येते, तथाच प्रविभक्ताः संयोगरहिता इत्येवार्थ इति तत्त्वम्।

वस्तुतस्तु कर्मणः कालावच्छेदकत्वं क्षणादिनिर्वाहकतया। क्षणश्चोत्पन्ने कर्मणि यावन्न विभागस्तावत्काल इत्येवंरूपो, न च द्वितीयक्षणे विभागानुत्पत्ताविदमुपपद्यते। न च संयोगं विना विभागोत्पत्तिरिति संयोगविभागौ स्त एवेति। एककर्मावच्छिन्नकालो निमेषस्तस्य चतुर्थो भागः क्षण इति संयोगविभागौ विनापि क्षणलक्षणोपपत्तेर्न तौ स्त इति वा। अतएवाचार्यचरणैः प्रलये स्थितिहेतुसंयोगविभागौ न गणितौ। द्रव्यारम्भकसंयोगवर्जिता इति विश-

पकथनेन संयोगमात्रस्वीकारस्तेषां हृदि चकास्तीति चेन्न। संयोगवर्जिता इत्यत्रैव तात्पर्यात्। प्रलये प्रमाणं तु कार्यद्रव्यत्वं कार्यद्रव्यानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति भावकार्यवृत्तिधर्मत्वात् शब्दत्ववदिति। शब्दत्वं हि कार्यद्रव्यानधिकरणाकाशाधिकरणशब्दध्वंसप्रतियोगिनि शब्दे वर्तते, एवं कार्यद्रव्यत्वमपि स्थास्यति। न च तदधिकरणं कार्यद्रव्यानधिकरणमाकाशादिः संभवति आकाशादौ कार्यद्रव्यध्वंसाभावात्। परमाण्वादिस्तु कार्यद्रव्यध्वंसाधिकरणमपि न कार्यद्रव्यानधिकरणं तथा च कार्यद्रव्यानधिकरणतदधिकरणकालसिद्धिः। स एव च प्रलयः। यदि च खण्डप्रलयत्वेन नैवं सिद्ध्यति तदा भावकार्याधिकरणकार्यद्रव्यानधिकरणाधिकरणध्वंसप्रतियोगिवृत्तीति साध्यम्। हेतौ ध्वंसत्वे व्यभिचारवारणाय भावेति। आत्मत्वादौ व्यभिचारवारणाय कार्येति। एवं च भावकार्याधिकरणं कार्यद्रव्यानधिकरणं कालः खण्डप्रलय इति लक्षणं सिद्ध्यति। कार्यद्रव्याधिकरणं कालः सृष्टिरिति सृष्टिलक्षणम्। महाप्रलयलक्षणन्तु भावकार्यानधिकरणकालत्वम्। तत्सिद्धिस्तु भावकार्यत्वं स्वाश्रयानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति भावकार्यवृत्तिधर्मत्वात् कार्यद्रव्यत्ववदिति। न च शब्दत्वादौ व्यभिचारस्तत्रापि खण्डप्रलयमादाय साध्यसत्त्वात्। न च पाकजरूपत्वादौ स, पक्षसमत्वात्। न च द्रव्यत्वादौ व्यभिचारो मात्रपदस्य देयत्वादिति संक्षेपः।

ततः–प्रलयानन्तरम्। पुनरित्यनादितामाह। एवं च सर्गप्रलययोरनिदंप्रथमता सिद्धा। भोगेति। भोगश्च यद्यपि न सुखसाक्षात्कारो दुःखसाक्षात्कारेऽव्याप्तेः, नापि दुःखसाक्षात्कारः सुखसाक्षात्कारेऽव्याप्तेः, नापि सुखदुःखान्यतरसाक्षात्कारः, सुखसाक्षात्कारो दुःखसाक्षात्कारो वा भोग इत्येतावतैवोपपत्तौ विशेषवैयर्थ्यात्, अव्याप्तिवारकस्य विशेषणस्यानुपादेयत्वात्, अपि च अलौकिकप्रत्यासत्तिमादायावर्तमानसुखादिसाक्षात्कारेऽतिव्याप्तिः। तथापि समानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्यजातिमल्लौकिकसाक्षात्कारो भोग इत्यवधेयम्। व्यधिकरणभगवत्साक्षात्कारविषयताव्याप्यज्ञानत्वादिरपि जातिर्भवतीति ज्ञानादिसाक्षात्कारेऽनतिप्रसक्तये समानाधिकरणेति। समानाधिकरणालौकिक-

प्रत्यक्षमादायानतिप्रसक्तये समानकालीनेति । नहि योगिज्ञानं प्रमेयमित्यादिविज्ञानं वा सकलस्वविषयज्ञानसमानकालीनमिति । एवं च यत्र यत्र ज्ञानत्वं तत्र तत्र स्वाश्रयसमानाधिकरणसमानकालीनसाक्षात्कारविषयत्वमित्यादिर्व्याप्तिर्नास्ति तेन पुंसाऽज्ञातस्यापि ज्ञानस्य नाशात् सुखदुःखे तु ज्ञाते नश्यत इत्यवधेयम् । वृत्तिलब्धादृष्टापेक्षेभ्य इति । लब्धवृत्त्यदृष्टापेक्षेभ्य इत्यर्थः । आत्माणुसंयोगेभ्य इति । अदृष्टवदात्मसंयोगात् क्रियोत्पत्तिरित्यर्थः । यद्यपि प्रलयकालीनक्रिययैव सर्वात्मादृष्टस्य वृत्तिलाभे सति संयोगोत्पत्तिः सम्भवति तथाप्ययमपि पक्षः संभवतीत्युक्तः । नन्वदृष्टवदात्मसंयोगस्य क्रियाहेतुत्वे किं मानमिति चेत् । या क्रिया यदीयव्यधिकरणगुणजन्या सा तत्संयोगकारणकेति व्याप्तेः सत्त्वात् । ननु क्रियापदेन कार्यमात्रग्रहणे घटरूपे कपालादिव्यधिकरणरूपजन्ये कपालघटसंयोगासमवायिकारणत्वशून्ये व्यभिचारः, कर्मग्रहणे मन्त्रकृतशाखाचलन आकाशीयव्यधिकरणगुणमन्त्रात्मकशब्दजन्य आकाशशाखासंयोगाजन्ये व्यभिचार इति चेत् । यत्कर्मादृष्टाद्वारकयदीयव्यधिकरणगुणगणजन्यं तत्तत्संयोगकारणकमिति व्याप्तिसत्त्वात् । अत एव नेश्वरज्ञानादिजन्ये घटादिकर्मणि तत्संयोगजन्ये व्यभिचारः । ईश्वरज्ञानस्य कार्यमात्रकारणत्वे त्वदृष्टद्वारकत्वादिति । दोधूयमानो—भृशं कम्पमानः, प्रतिबन्धकपृथिव्या अनुत्पत्तेरप्रतिबद्धगतित्वात् । गतिश्चास्य तिर्यगेव पवनजातिनियतत्वात् । तदनन्तरम्पवनोत्पत्त्यनन्तरम् । तेन द्व्यणुकादिना पोप्लूयमान आधारीभूतपवनवेगात् ।तदनन्तरं—जलोत्पत्तेरनन्तरं,तस्मिन् जलनिधौ महापृथिवी, महत्त्वं प्राथम्यात् खननाद्यभावात् । संहता—निबिडावयवा, अतिवाताद्यभावेनाविशीर्णत्वात् ।देदीप्यमानोऽभिभावकाभावात् । एवमुक्तेन क्रमेण । अभिध्यानमिच्छा न तु कुलालादेरिव कायव्यापारापेक्षेत्यर्थः । ब्रह्माण्डोत्पत्तौ पार्थिवपरमाणूनामुपष्टंभकत्वकथनेन तस्य सुवर्णमयत्वमुक्तं भवति ।

तस्मिन्नण्डे सर्वलोकपितामहं शरीरिणामाद्यम् सकलभुवनसहितञ्चतुर्दशभुवनसहितं विनियुंक्ते–'त्वमेवकुर्वि'ति । स चेति चकारो भगवतः समुच्चयार्थः ईश्वरान्यकर्तृक ईश्वरस्यापि कर्तृत्वात्तस्य साधारणकर्तृतया ब्रह्माद्यसाधारणकर्तृकेन ब्रह्मादेरप्याक्षेपात् ।

अतिशयेन ज्ञानादिभिः संपन्नः, अज्ञत्वे पराधिष्ठानापेक्षा स्याद्वैराग्ये रागात्पापिष्ठमपि सुखेन योजयेदसामर्थ्यलक्षणेऽनैश्वर्ये जानन्नपि न कुर्यात् न हि कपालादि जानन् कुलालः कलशीङ्करोतीति। कर्मविपाकमिति । कस्य कर्मणोऽधुना भोग इत्येवं रूपम्। प्रजापतयस्तत्तत्कालनियतप्रजास्रष्टारः दक्षादयो,मनवः स्वायंभुवप्रभृतयो राजधर्मप्रवर्तयितारः, देवाः हविर्भागभोक्तारः आदित्यादयः, ऋषयश्च प्रथमं वेदाध्येतारो गौतमादयः, पितरः स्वधाधिकारिणः कव्यवाडनलादयः, गणाः कूष्माण्डप्रभृतयो बलिभागिनः । सुतान् मानसानिति च प्रजापतिप्रभृतौ सम्बध्यते । गणशब्दोऽपि समूहवचनतया सर्वत्राभिसम्बध्यते इत्येके। मुखादिपदेन वर्णविशेषारम्भकादृष्टविशेषोपगृहीतभूतभेदग्रहणम् । अन्यानि–तिर्यगादीनि, उच्चावचानि–प्रकृष्टनिकृष्टानि । आशयानुरूपैः पूर्वजन्मसंस्कारसुसदृशैः। धर्माधर्मेत्याद्युपलक्षणमधर्माज्ञानावैराग्यानैश्वर्यैरित्यपि बोद्धव्यम् । ब्रह्मणो नियोज्यत्वे भगवद्भिन्नतापक्षे, तत्स्वरूपत्वे तु भगवत्स्वरूपो ब्रह्माऽनियुक्त एव सृजतीति मन्तव्यम् । एवं च यदापि ब्रह्मा भगवदनुग्रहपात्रं जीवविशेषः तदापि तस्य नियोगोऽन्तर्यामितया प्रेरणमात्रं ब्रह्मणः पूर्वं भगवच्छरीराभावेन त्वमेवं कुरु इति वागात्मकनियोगाभावात् । ब्रह्मणो वेदाध्ययनाय शरीरस्यावश्यकतया वागात्मक एव नियोग इति वा । एवञ्च ऋषयः प्रथमं वेदाध्येतार इत्यन्यापेक्षया, सर्वापेक्षया ब्रह्मणः प्रथममध्येतृत्वात् । तथाच प्रलयसिद्धौ तदनन्तरं वेदप्रणयनं भगवत एव । न च घटादिसंप्रदायानुपपत्तिः,भगवतैव भूतावेशन्यायेनास्मदाद्यदृष्टसृष्टस्वतन्त्रशरीरेणैव प्रवर्तनात् । प्रयोजकवृद्धप्रयोज्यवृद्धभावापन्नानेककायग्रहणेन शक्तिग्रहोऽपि भगवत एव । न च निष्प्रयोजनतया किमितीयतीं कष्टसृष्टिं स्वीकरिष्यतीति वाच्यम् । तस्य सकलव्यापारस्य परार्थत्वात् । अत एव परमाण्वाद्यधिष्ठानमपि तेनोपपद्यते वैचित्र्यञ्चादृष्टादिवैचित्र्यादेव समर्थनीयमिति । वृत्तिलाभश्च निरोध इव कालभेदादेव भविष्यतीति । इति सृष्टिवादः ।

अथ प्रासङ्गिकं किञ्चिद्विचार्यते । घटादिपरमाणूनां घटादिजनकत्वमेव पटादिजनकत्वेन हि पार्थिवत्वमपि वा ? घटादिजनकत्वमेवेति तावत्प्राप्तम् अन्यकारणस्यान्यत्राजनकत्वात् । वार्परमाणोष्पाथ-

सप्रादुर्भाव इति । ननु स्पर्शवत्परमाणुत्वेन द्व्यणुकत्वेन कार्यकारणभावात्, न त्वमुकपरमाणुत्वेनामुकद्व्यणुकत्वेन गौरवात्, तथाच घटारम्भकात्परमाणोः कदाचित् पटोत्पत्तौ किं बाधकमिति चेत् । विशेषं विना घटारम्भदशायां घटपरमाणुभ्यः पटारम्भापत्तेरिति ।

अत्रोच्यते । न तावत् घटादिपरमाणुषु घटाद्यारम्भकताप्रयोजको जातिविशेषः सम्भवति परमाणुषु पृथिवीत्वादिव्याप्यजातेरभावात् .किन्तु रूपादिविशेषशालिनस्ते कार्यविशेषमासादयन्ति रूपादयस्तु न परमाणुषु नियताः किन्तु पाकात्कदाचिद्घटानुकूला जायन्ते, तथाच यैरेव परमाणुभी रूपादिविशेषमासाद्य घटघटना तैरेव विशेषान्तरमासाद्य पटप्रादुर्भावोऽपि । यत्र च दृष्टो रूपादिविशेषो जलपरमाण्वादौ तत्राऽदृष्टविशेषसंसृष्टा एव ते कार्यविशेषमारभन्ते, तथाच परमाणूनाम्न कार्यविशेषजनकत्वनियमोऽत एव क्षीरपरमाणुभिरेव प्रतश्च नस(?)नाप्यैर्दधिजन्म पटादिपरमाणुभिरेवं सम्भव इति सकलशास्त्रश्चरहस्यम् ।

ननु भगवतः सिसृक्षादि तत् सिद्धौ स्यात् सा तु प्रमाणमपेक्षते, न च तदस्ति । ननु शब्दः प्रमाणं वक्तृनिष्ठयथार्थवाक्यार्थज्ञानगुणजन्यत्वेन वेदे वक्त्रन्तरासंभवात् भगवानेव ज्ञायते । न चाध्यापकधारैव तद्गुणाधारः स्वातन्त्र्यस्यातन्त्रत्वादिति वाच्यम् । प्रलयोत्तरं प्राथमिकवेदप्रामाण्याय तस्य स्वीकार्यत्वात् । न च सृष्ट्युत्तरसिद्धयोगर्द्धयः सृष्ट्यन्तरे वेदार्थं साक्षात्कृत्य जीवा एव वेदप्रणेतार इति वाच्यम् । जातयोगानाममुक्तानां प्रलयेऽवस्थितौ प्रमाणाभावात्, तैः कायनिकायमासाद्य झटिति निखिलकर्मोपभोगेन मोक्षार्जनात् । न च भोगलम्पटतयाऽग्रिमसृष्टौ भोगार्थं ते कर्मावस्थापयन्तीति वाच्यम् । तेषां भोगलम्पटतायां मानाभावात्, निर्दोषतया नीरागत्वात्, प्रतिसृष्टि सर्वज्ञान्तरकल्पने गौरवात् । तस्मादीश्वर एव वेदवक्ता इति चेत् । न । यथार्थयोग्यताज्ञानस्यैव शाब्दगुणत्वात् समानाधिकरणत्वात्, न त्वनुमितौ यथार्थलिङ्गपरामर्शो गुणो, न च वह्निमति धूलिपटलं धूमत्वेन ज्ञात्वाऽनुमातुं संभवतीति । भगवत एव स वाच्य इति चेत् । स्वरूपसद्बोध्यवति हेतुज्ञानस्यैव गुणत्वात्, न तूपमितौ यथार्थसादृश्यज्ञानं गुणो, न च प्रकृतशाब्द-

वाच्ये सादृश्यं सादृश्यत्वेन प्रतीत्योपमातुः संभवतीति।तदाधारतया भगवाननुरोद्धव्य इति चेन्न । स्वरूपसद्बोध्यवति सादृश्यज्ञानस्यैव भ्रमप्रमासाधारणस्य तत्र गुणत्वात् । ननु संशयविपर्ययोत्तरप्रत्यक्ष-प्रमायां विशेषधर्मो गुणो, न च प्रमातुर्विशेषे भ्रान्तत्वे तत्र तावत्तं भगवन्तं विना गत्यन्तरमन्तःकरणमुपारोढुमर्हतीति चेन्न । स्वरूपसद्बोध्यवति विशेषज्ञानस्यैव गुणत्वात् ।

वस्तुतस्तु स्वरूपसद्विशेष्यसम्बद्धविशेषणज्ञानमेव सर्वत्र गुण इति न गुणपरतन्त्रतया भगवत्सिद्धिः ।

केचित्त्वनित्यप्रमायामनुगतायाम् अनुगतस्य गुणान्तरस्य वक्तु-मशक्यतया भूयोऽवयवेन्द्रियसन्निकर्षयथार्थवाक्यार्थलिङ्गसादृश्य-ज्ञानानामननुगतत्वात् प्रकृतार्थविषयिणी भगवत्प्रमैव गुण इत्याहुः । तदपि न । कार्यकारणयोरुभयोरपि प्रमात्वस्याननुगतस्य प्रवेशे-नाननुगतत्वात् । तस्मान्न गुणाश्रयतया भगवत्सिद्धिरिति सिद्ध-म् । न च प्रमाणान्तरमस्तीति मीमांसकाः ।

अत्र न्यायकुसुमाञ्जलौ आचार्यचरणैरुक्तमनुरुध्य वदामः । द्व्यणुकादिस्तावत्सर्गो, न च द्व्यणुकमपरिमाणमेवोत्पद्यते, न च द्व्य-णुकपरिमाणं प्रति परमाणुपरिमाणमेवासमवायिकारणमणुपरिमा-णस्यासमवायिकारणत्वाभावात्, किन्तु परमाणुद्वित्वं तत्र च नास्म-दादीनामपेक्षाबुद्धिः कारणं तस्याः शरीरसापेक्षत्वात्, शरीरस्य च द्व्यणुकाद्यतत्कालीनत्वात्, तस्मात्सर्गादिद्व्यणुकपरिमा-णासमवायिकारणद्वित्वनिर्वाहकापेक्षाबुध्यधिकरणत्वेन यदुकुल-धुरीणः सिद्ध्यति । कश्चित् वेदे वाक्यार्थज्ञानपूर्वको प्रमाणवाक्य-त्वात् महाभारतवत् । न च शुकवदुच्चरिते प्रमाणवाक्ये व्यभिचारः, पक्षसमत्वात् । न चेदानीन्तनवेदेऽध्यापकवाक्यार्थज्ञानमादाय सि-द्धसाधनम्, वेदत्वेन सर्गादिवेदस्यापि पक्षतया पक्षतावच्छेदकावच्छे-देन साध्यासिद्धेरभावात् ।यादृशी साध्यसिद्धिरपेक्षिता तस्यां सत्या-मेव सिद्धसाधनात् । शुकवदुच्चरितं लौकिकमेव वा प्रमाणवाक्यं किंचित् पक्षो, वाक्यार्थज्ञानकारणकत्वं च साध्यं, न च तत्र वक्तुर्वा-क्यार्थज्ञानं संभवति तस्य तदानीं शुकसदृशत्वात् । शुकोच्चारितमेव वा प्रमाणवाक्यं पक्षः, तत्र च ब्रह्मण्यदेवस्यैव वाक्यार्थज्ञानमाया-स्यति । वाक्यार्थज्ञानं च वाक्यप्रयोगं प्रति अवश्यं कारणं सति वा-

क्यार्थज्ञाने कवीनां काव्यरचनादर्शनात् असति चादर्शनात् अ-न्वयव्यतिरेकाभ्यां कार्यकारणभावव्यवस्थितेः । अप्रमाणवाक्यश्रु-तौ तु न वाक्यार्थज्ञानं कारणं शुकाद्युदीरिते तादृशि शुकादीनां वाक्यार्थज्ञानाभावात् ,भगवतस्त्वशेषविशेषदर्शित्वेनासद्वाक्यार्थज्ञा-नाभावात्। ननु अप्रमाणवाक्येऽपि वाक्यार्थज्ञानान्वयव्यतिरेकौ दृश्ये-ते तत्कथमत्र कारणतेति चेत् । तद्विशेषं प्रति कारणत्वेऽपि अन्यत्रा-कारणत्वाद् "ययोर्विशेषयो" रिति न्यायस्य बाधकाभावसापेक्षत्वात् । प्रकृते च भगवतोऽसदर्थावगाहिज्ञानासम्भवेन बाधकसत्त्वात् प्रमाणवा-क्ये तु तदसत्त्वेन न्यायप्रवृत्तेरव्याहतत्वात् । अपि च कर्तुरुपादान-गोचरापरोक्षज्ञानसम्भवेन वाचकघटितत्वपक्षे भावकार्यमात्रज-नकत्वमुपादानकत्वम् । उपादानपदपदे कारणपदाभिषेके तु कार्यमा-त्रतया च क्षित्यादिकर्तृतया भगवत्सिद्धिः । ननु कर्तृत्वेन कारण-तायां घटत्वादिनैव कार्यता तथा च कथं क्षित्यादौ कर्तृसिद्धिरिति चेत् । उत्पत्तिमत्वेन भावत्वे सति भावत्वेन वा सामान्यतः कार्यत्व-स्योत्सर्गाख्यतर्केणानुगृहीतत्वात् घटत्वादीनामनेकतया प्रकृत-स्य सखण्डोपाधितया गुरुत्वेऽप्येकतया लघुत्वात् सामान्यविशेषापे-क्षया गुरुत्व एवोत्सर्गसाम्राज्यात् । एवं च यत्र विशेषापेक्षया सा-मान्यस्य लघुत्वं तत्रोत्सर्गलाघवयोर्द्वैराज्यम्, यत्र तु सामान्यतः त-त्रोत्सर्गस्यैव साम्राज्यम् । यत्र तु विशेषे लाघवं तत्रोत्सर्गस्य पदप्रच्युतिरेव । यत्त्वेककर्तृत्वावच्छिन्नकारणतानिरूपितकार्यताव-च्छेदकं कथं घटत्वाद्यनेकमिति । तन्न । द्रव्यत्वेन कारणतायाः संयो-गविभागत्वादिना कार्यतायाः सत्त्वात् । वस्तुतस्तु कर्तृत्वेन घटत्वेन न कार्यकारणभावः क्वचिदपि घटोत्पत्त्यापत्तेः, किन्तूत्पत्तिमत्त्वादिक-मेव तत्कार्यतावच्छेदकम् । ननु कुलालत्वादिना घटत्वादिनाऽवश्यं कार्यकारणभावःक्वचिदप्यघटस्य कुलालात्पटस्य चानुत्पत्तेः, त-थाच किमर्थं सामान्यतः कार्यकारणभाव इति चेत् । न । 'ययोर्वि-शेषयो'रित्यादिन्यायेन सामान्यतः कार्यकारणभावव्यवस्थितेः, कुलालत्वादिना च न जातिस्मितया(?) ब्राह्मणादिनापि घटा-दिजननात्, किन्तु घटोपादानगोचरापरोक्षज्ञानचिकीर्षाकृ-तिमत्त्वात्, एवञ्च घटोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वा-दिना घटत्वादिना विशेषकार्यकारणभावे सामान्यतोऽपि तदायाति

निरुक्तन्यायात्। ज्ञानादेश्च कर्तृकारणतावच्छेदकत्वेऽपि न कारणक्षति-रिति इन्द्रियार्थसन्निकर्षसन्निकृष्टेन्द्रियन्यायात् । ननूपादानगोचरापरोक्षज्ञानादिमत्त्वेनात्मनः कारणता भवतु तादृशज्ञानादिशून्येऽतिप्रसंगवारणाय, तादृशज्ञानादीनां तु कारणत्वे किमित्यात्मनिष्ठत्वमवच्छेदके प्रविशति दोषस्य कस्यचिदभावात् इति चेत् । तर्हि इन्द्रियसन्निकर्षत्वेन कारणत्वं भवतु सन्निकर्षत्वस्यातिप्रसक्तत्वात् सन्निकृष्टेन्द्रियत्वेन तु किमिति कारणत्वमिन्द्रियत्वस्यानतिप्रसक्तत्वात् इति साम्यात् । न च सन्निकृष्टेन्द्रियादपि बोधापत्तिः, सन्निकर्षस्य सहकारित्वात् । न चैवमिन्द्रिये विनिगमनाविरहाभावेऽपि अवच्छेदकमपीन्द्रियं कारणं प्रमाणं विना प्रमानुत्पत्तेः, ज्ञानादेस्त्ववच्छेदकस्य कारणत्वेन प्रमाणत्वमन्वयव्यतिरेकयोरवच्छेदकेऽपि दर्शनात् इति वाच्यम् । एवमपि ज्ञानादेरवच्छेदकत्वे कर्तुः कारणत्वानपायात् । अनुमानं तु क्षितिः सकर्तृका भावकार्यत्वात् घटवत् । न च भूधरप्रभृतौ व्यभिचारः, पक्षसमत्वात् । साध्याभाववत्तया निश्चिते हेतुसन्देहस्य सन्दिग्धानैकान्तिकत्वात् । अन्यथा पक्षेऽपि सन्दिग्धानैकान्तिकतापत्तेः । न च पक्षातिरिक्ते स दूषणम्, प्रतिज्ञाविषयत्वस्य पक्षत्वे स्वार्थानुमाने सदिग्धानैकान्तिकत्वापत्तेः, संशयविषयत्वस्य पक्षत्वे पक्षसमस्यापि पक्षत्वात् । न चादृष्टद्वारा रूपादृयुपादानपुरोडाशादिगोचरापरोक्षज्ञानादिमता क्षितिजननात् सिद्धसाधनमर्थान्तरता वा, उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वावच्छिन्नजनकतानिरूपितजन्यताश्रयत्वस्य साध्यत्वात् । तर्हि पुरोडाशादिगोचरज्ञानादिमतः क्षितौ तथाऽजनकत्वमिति । न चैवं क्षितिमात्रकर्तृसिद्धौ तस्य न जगत्कर्तृत्वासिद्धिरिति वाच्यम् । ज्ञानादेः शरीरनिरपेक्षतयाऽनादिनिधनत्वसिद्धौ निष्कारणकतया किञ्चिद्विषयकत्वस्य सर्वविषयकत्व एव पर्याप्त्या सर्वकर्तृनिर्वाहकरूपसत्त्वेन सर्वकर्तृत्वात्, अत एवास्मदादिकर्तृकेऽपि स कर्ता शरीरानिरपेक्षत्वं चातः सर्गादिद्व्यणुकपूर्वसत्त्वसर्गादेश्च प्रलयसाधनेन सिद्धत्वात् । ननु क्षित्यादेः पक्षत्वे लाघवात् एकः कर्ता सिध्यतु, क्षितिमात्रस्य तु पक्षत्वे तत्र कर्तृसाधनेतरभूधरादौ प्रत्येकं कर्ता साधनीयो, न च तावत्कर्तुरेकत्वे किञ्चित्प्रमाणमस्ति न हि नानानुमानविषये लाघवं प्रवर्तते इति चेत् । क्षितिकर्तुरेव पूर्वनयेन जगत्कर्तृत्वोपपत्तौ भूधरादौ पुनः

कर्तृसाधनस्य व्यर्थत्वात्। ननु दृष्टान्ते शरीरिणः कर्तुः दर्शनेन तद्विपरीतस्य च पक्षे विवक्षितत्वात् विशेषविरोध इति चेत्। दृष्टान्तदृष्टविलक्षणस्य पक्षे विवक्षितत्वमात्रस्य विरोधत्वे पर्वतो वह्निमान् धूमादित्यत्रापि तदापत्तेर्महानसे व्यञ्जनसहचरितस्य सत्त्वेन पक्षे तद्विलक्षणस्य विवक्षितत्वात्। ननु व्याप्त्या शरीरी कर्ता साध्यः, पक्षधर्मतया त्वशरीरी, न च तयोरसहकारित्वेऽनुमानसम्भवः, तथा चायमेव विरोध इति चेत्। व्याप्त्या व्यापकतावच्छेदकावच्छिन्नस्य साधनेन शरीरिणोऽसाधनेन विषयविरोधाभावात्, अन्यथा प्रसिद्धानुमानेऽपि व्यञ्जनसहचारिततदसहचारितासिद्ध्या विषयविरोधापत्तेः। ननु प्रकृतानुमानेन नित्यं ज्ञानं सिद्ध्यति ज्ञानत्वनित्यत्वे च विरुद्ध इति। न। ज्ञानत्वानित्यत्वयोर्विरोधस्यासिद्धेः आकाशतदीयज्ञानादौ परस्परपरिहारदर्शनात्। विरोधस्य दोषत्वप्रसिद्धिस्तु चन्दनप्रभववह्निमानयमसुरभिरूपमयत्वादित्याद्यादाय। नन्वयं विरुद्ध एव हेत्वाभास इति कुतो विशेषविरुद्धत्वेन गण्यते इति चेत्। विरुद्धस्य विशेषस्यैव। विशेषविरुद्धात्को विशेषः इति चेत्। साध्यहेतुविशेषयोर्विरुद्धेन यो विरोधस्तस्यैव विशेषविरोधपदेन ग्रहणात्।

ननु शरीरसापेक्षस्यैव कार्यजनकत्वात् तेन विना कथमीश्वरः कर्तेति चेत्। शरीरपदेन साक्षात्प्रयत्नाधिष्ठेयग्रहणे द्व्यणुकादावपि जनितव्ये साक्षात् प्रयत्नाधिष्ठेयस्य परमाण्वादेः सत्त्वात् इन्द्रियाश्रयस्य सुखाद्यवच्छेदकस्य वा ग्रहणे कर्तुस्तदपेक्षाया अनवच्छेदकत्वात्। दण्डादीनां साक्षादधिष्ठानासंभवेन हि साक्षादधिष्ठेयं शरीरमपेक्षते कुलालादिर्भगवांस्तु साक्षादेवाधितिष्ठति परमाण्वादिकमिति किं साक्षादधिष्ठेयान्तरेण। ननु कर्तृत्वेन न जनकता किन्तु शरीरकर्तृत्वेन तथैवान्वयव्यतिरेकात् कुविन्दादेः कार्यदर्शनात् मुक्तात्मनश्चादर्शनात्, तथा च तत्र न भावकार्यत्वादिना जन्यता किन्तु कार्यविशेषत्वेनेति कथमीश्वरः सिद्ध्यतीति चेत्। एतस्य विशेषकार्यकारणभावरूपत्वेन कर्तृत्वेन भावकार्यत्वेन सामान्यकार्यकारणभावस्यावश्यकत्वात्। अपि च शरीरिकर्तृत्वेन न विशेषकारणता, किन्तु शरीरत्वेनैव, तथा च कर्तुः कर्तृत्वेन सामान्यकारणतैवेति। ननु क्षितिरकर्तृका शरीराजन्यत्वात् आ-

काशवदिति प्रतिषेधोऽस्तु इति चेन्न । शरीरपदस्य व्यर्थत्वादाकाशादावन्यजन्यत्वेनैव व्याप्तेर्व्याप्यस्यैव पक्षधर्मत्वेऽनुमितिजनकत्वात् । अत एव स्वरूपासिद्धिवारकं विशेषणं न दीयते इति प्रवादो येन विशेषणेन विना व्याप्तिर्गृहीतुं न शक्यते तस्यैव हेतौ सार्थकत्वात्, अत एव रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धिवारकतया व्याप्तिग्राहकतया रूपादिषु मध्ये इति सार्थकम् । ननु शरीराजन्यत्वादित्यत्र शरीरजन्यत्वाभावोऽखण्डाभावो हेतुरखण्डाभावे च न वैयर्थ्यमित्यागौतमं प्रवाद इति चेन्न । तत्राजन्यत्वस्योपाधित्वात आकाशादौ साध्यव्यापकत्वात् क्षित्यादौ साधनाव्यापकत्वात् । ननु भवदनुमानेऽपि शरीरजन्यत्वमुपाधिः घटादौ साध्यव्यापकत्वात् क्षित्यादौ साधनाव्यापकत्वात् इति चेत् । अनुकूलतर्काभावेन तस्य साध्याव्यापकत्वात्, साध्यहेत्वोश्च व्याप्तिग्राहकस्य कार्यकारणभावग्राहकस्य अनुकूलतर्कस्य दर्शितत्वात् प्रतिरोधानुमानेऽनुकूलतर्कस्याप्यभावाच्च ।

ननु कुलालादेरिष्टसाधनताज्ञानस्यानुमितिरूपस्य घटादौ जनकत्वात् तस्य च भगवति बाधात् कथं घटादिदृष्टान्तेन सिद्ध्यतीति चेत् । अपरोक्षज्ञानवतः साधने घटादेः दृष्टान्तीकृतत्वात् । ननु कुलालादेरनुमितिरूपमिष्टसाधनताज्ञानमेव चिकीर्षाप्रवृत्तिद्वारा घटादि साधयति न त्वपरोक्षज्ञानम्, तथा च कथं तद्दृष्टान्तेनापरोक्षज्ञानवतः सिद्धिरिति चेत् । अपरोक्षज्ञानस्याप्युपादानप्रत्यक्षत्वेन प्रवृत्तिकारणत्वात् न तूपादानप्रत्यक्षं विना कोऽपि प्रवर्तते इति दृष्टम् । ननु कुलालादेः प्रवृत्तेर्जन्यत्वात् सिद्ध्यति तत्कारणतयेच्छा ज्ञानं च, भगवत्प्रवृत्तेस्तु नित्यत्वात् किमिति तत्त्वज्ञानादिस्वीकार इति चेत् । प्रवृत्तिकारणत्वेन इच्छायास्तत्कारणत्वेन च ज्ञानस्यानङ्गीकारात् कार्यप्रयोजकत्वेनैव त्रितयाङ्गीकारात् । सृजति च भगवान् परार्थमेवेत्युक्तमेवेति सङ्क्षेपः ।

लीलावतीकृतस्तु कुलालादीनां घटादौ ज्ञानादिकमेव कारणमन्वयव्यतिरेकानुविधायित्वात्, कर्तृत्वं तज्जनकीभूतज्ञानादिमत्त्वमेव, कर्तरि कारकत्वव्यवहारस्तु 'सविशेषणे हि' ति न्यायेन ज्ञानादिपर्यवसन्न एवौपचारिको वा । न च ज्ञानादीनां कपालादिप्रत्यासत्तिघटकतयाऽऽत्मनः कारणत्वं कारणप्रत्यासत्तेः कारणत्वादिति वाच्यम् । वि-

षयताया एव तत्र प्रत्यासत्तित्वात् । न च घट आत्मजन्यः कार्यत्वात्सुखादिवदिति वाच्यम् । अप्रयोजकत्वात् सुखादौ समवायिकारणत्वेन तदपेक्षणात् , अन्यथाऽऽकाशादिजन्यतापि स्यात् शब्दादेर्दृष्टान्तस्य सत्त्वादित्याद्यभिप्रायेण किञ्चिदाहुः ।

ननु प्रतिकूलतर्कास्तु बाधक इति चेत् । क्षितिर्यदि सकर्तृका स्यात् शरीरजन्या स्यात् अल्पज्ञज्ञानजन्या स्यात् इत्यादितर्काणां विपर्ययापर्यवसायित्वेनाभासत्वात्, विपर्ययापर्यवसानस्य व्यर्थविशेषणत्वादिना स्फुटत्वात् । यदीश्वरः कर्ता स्याच्छरीरी स्यादनित्यज्ञानवान् स्यादित्यादितर्काणामीश्वरसिद्ध्या निराकृतत्वात् । ननु ज्ञानत्वं न नित्यवृत्त्यात्मविशेषगुणवृत्ति जातित्वात् सुखवदिति चेत् । न । अप्रयोजकत्वात् ।

एवमन्या अपि युक्तयो भगवत्यनुमन्तव्याः । तथा हि लक्षणानुरोधेन नानार्थे विनिगमनानुरोधेन च तात्पर्यज्ञानं शाब्दबोधे कारणं सम्भवति लाक्षणिका नानार्थाश्च शब्दा वेदेऽपि । न च तत्रान्यस्य तात्पर्यं सम्भवत्यध्यापकानां सर्गादावसम्भवादिति तात्पर्याश्रयतया भगवत्सिद्धिः । तात्पर्यं च तत्प्रतीतीच्छयोच्चरितत्वमित्यादिरन्यत्र विस्तरः ।

भगवत्साधने युक्त्यपेक्षा तु नास्तिकानां तत्तुल्यानां मीमांसकानां च । आस्तिकास्तु वेदशिरोभिर्वेदान्तराच्च व्यासशुकदेवादिवाक्याच्च तमवधार्य निःसंशया अनासादितपंका जलमिवानाविष्कृतपातकाः प्रायश्चित्तमिवाकृतबलवद्द्वेषाः शरणमिवानास्वादितगरला भेषजपानमिवास्वीकृतदुर्गममार्गास्सार्थमिव अनपेक्षितधना दुःपार्थिवानुग्रहमिव चित्तामिति(?) चित्रीभवतु विचित्रभगवच्चरित्रानुपस्थितेषु त्रासेषु त्राणान्तरमिवापेक्षितेषु पुमर्थेषु वा कारणान्तराणीव न जगन्नाथे नाथे रमाया युक्तिमपेक्षन्त इति ।

ननु सिद्ध्यत्वेवमीश्वरो जगत्कारणत्वेन तज्ज्ञानादीनां तु अवच्छेदकत्वेन दण्डत्वादिवदन्यथासिद्धिग्रस्ततयाऽकारणत्वमेवायातम् , तथा च भूयान् सिद्धान्तविप्लव इति चेत् । अत्र कुलालादीनां कर्तृत्वेन कारणता, कर्तृत्वं चोपादानगोचरकृतिमत्त्वमेव धात्वर्थस्वरसात् । एवं च ज्ञानेच्छयोरनवच्छेदकतया कारणत्वमेव उगततया तु कुलालावेच्छी(?) प्रवृत्तिमुत्पाद्य जनयतीति व्यापारतया प्रवृ-

त्तिरपि कारणं प्रवृत्तिं विनेच्छामात्राद् घटाद्यनुत्पत्तेः, तथा च यथेश्वर-त्वस्यावच्छेदकस्यापि विनिगमनाविरहातिरिक्तस्थलेऽपि प्रमाणबलेन कारणत्वम् तथा प्रवृत्तेरपि । किञ्च चेष्टा तावद् घटादिकारणतया घटयतीति, सर्वसम्प्रतिपन्नचेष्टा च प्रयत्नवदात्मसंयोगजन्यतया प्रयत्नजन्या, तस्मात्प्रयत्नस्यापि घटादिघटकता न विरुद्धा, न ह्य-वच्छेदको व्यापारमपेक्षत इति क्वचिद्दृष्टम् तस्मात्कार्यजनकजन-कतया दण्डादिवत्प्रयत्नः कारणमपि अनुगततया तु कुलालादिका-रणतावच्छेदकः कुलालत्वादेर्जातेरुपाधेर्वाऽन्यस्य वक्तुमशक्य-त्वात् । तथाहि कुलालत्वं जातिः प्रथमवकुलालस्य सिसृक्षया घटनि-र्मातुः कुलालत्वेन व्यवहारेण यावद्द्रव्यभावित्वात्, नाप्युपाध्य-न्तरं सम्भवतीति घटकर्तृत्वस्यैव कुलालत्वात् । कर्तृत्वञ्चोपादानगो-चरकृतिमत्त्वमेवेति वदामः ।

ननु कुलालस्येष्टसाधनताज्ञानसत्त्वात् भगवत्यपि तदापत्तिः इति चेत् । जगत एव तदिच्छाविषयतयेष्टसाधनताज्ञानस्य भगवतः स-त्त्वात् । ननु कुलालदृष्टान्तेन तस्येष्टसाधनतानुमितिः स्यादिति चेत् । इष्टसाधनताशब्दादपि कुलालस्य प्रवृत्त्यनुमितित्वस्याप्रयोजकत्वात् । ननु भगवतोऽनुमितिरेव आयातु प्रत्यक्ष इन्द्रियेऽनपेक्षाया इवानु-मितौ लिङ्गानपेक्षाया उचितत्वादिति चेत् । उपादानप्रत्यक्षस्य कुला-लादेरावश्यकत्वात् भगवत्यपि कर्तरि तस्योपगमात् । ननु कुला-देः प्रयत्नस्य जन्यतया भवतूपादानप्रत्यक्षापेक्षा नित्ये तु भगवत्प्रय-त्ने किमित्येवमिति चेत् । इच्छादीनां विषयताया अन्यप्रवणतया नि-र्वाहार्थं ज्ञानपरिकल्पनात् उपादानप्रत्यक्षं विनोपादानविषयकप्र-वृत्तेरसम्भवेनोपादानविषयकप्रवृत्त्या व्याप्ययोपादानविषयकप्रत्य-क्षस्य व्यापकस्योन्नुगतत्वादिति संक्षेपः । इतीश्वरः ॥

( व्यो० ) अथेदानीं भूतानां परीक्षाशेषनिवर्तनद्वारेणेश्वरपरी-क्षार्थं चतुर्णामित्यादिप्रकरणम् । तथाहि—भूतानामुद्देशानन्तरं पूर्व-प्रकरणेषु लक्षणपरीक्षाभिधानेऽपि सृष्टिसंहारविधिर्नोक्तस्तथेश्वरः ऊर्ध्वनमस्कारव्याजेनोद्दिष्टो लक्षणतश्च प्रधानत्वात् धर्मपरीक्षा-मन्तरेण परीक्षितुं न शक्यत इति प्रकरणारम्भः । सृष्टिसंहारविधिश्च तुल्यतयैकस्मिन्नेव प्रकरणेऽभिधीयते । प्रतिप्रकरणाभिधाने तु प्रकर-णचतुष्टयमेतावत्स्यादिति सङ्ग्रहरूपताव्याघातः । नन्वेवं वैधर्म्या-

वसरे साधर्म्यप्रतिपादनमन्याय्यम् । न । प्रत्येकं भूतेषु सृष्टिसंहारविधेर्वैलक्षण्येऽप्येकत्राभिधानात्साधर्म्यज्ञानम् , न परमार्थतः । न च वैधर्म्येऽभिधीयमाने यद्यत्साधर्म्यं तत्प्रतिषेधः । यथा पृथिव्यादीनां परमाणुकार्यरूपतया त्रैविध्यं कार्यञ्च शरीरादित्रयं परस्परवैलक्षण्याद्वैधर्म्येऽपि न साधर्म्यरूपतां विजहातीति ।

अत्र चतुर्णामित्युक्ते न ज्ञायते केषामतो महाभूतानामिति । महद्ग्रहणम् अणुव्यवच्छेदार्थम् । नन्वेवं द्व्यणुकस्यापि सृष्टिसंहारवतो व्यवच्छेदः स्यान्न, महदारम्भकत्वेन तस्यापि महच्छब्दवाच्यत्वात् । तथाहि—द्व्यणुकादिप्रक्रमेणोत्पत्तिविधानात्संहारस्य च परमाण्वन्तस्य द्व्यणुकेऽपि सृष्टिसंहारविधौ प्रतिज्ञा कार्यैव । सा चैवं कृता स्यात् । तथापि महाभूतानामित्युक्ते न ज्ञायते कियतामिति तथापि चतुर्णां महाभूतानामित्युक्ते न ज्ञायते केषामितः पृथिव्यादीनामिति लभ्यते । न चाकाशस्यैतद्व्याख्यानावसरसमत्यावस्त्ववसरः(?) । तदेवं चतुर्णां महाभूतानां सृष्टिसंहारयोर्विधिः(प्रकारः) तावेव चाभिधीयेतेऽनेनेति विधिः प्रमाणं, ताभ्यां वा प्रमाणभूताभ्यां विधिर्विधाता कर्तोच्यत इत्यावर्त्यमानमनेकार्थमेतदेव वाक्यम् । तत् ब्राह्मेण मानेनेत्यादिना संहारविधेर्व्याख्यानं क्रमातिक्रमेणादौ संसारस्यानादित्वज्ञापनार्थम् । तथाहि—संहारात्पूर्वं सृष्टिर्लभ्यते, ततोऽपि संहार इत्यनादित्वम् । स च संहारः कथं भवतीत्याह महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाश इति । तेषां शरीरेन्द्रियाणामारम्भकेष्वणुषु द्रव्यारम्भकसंयोगनिवृत्तौ द्व्यणुकविनाशे तदारब्धस्यापि निवृत्तिरिति आह—महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः परमाणुर्यावत्तावद्विनाश इति । द्रव्यारम्भकसंयोगनिवृत्तिः स्वकारणाणुविभागेभ्यस्ते च महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः ॥ तथाहि—महेश्वरेच्छा निमित्तकारणमात्मनामणुभिः संयोगाश्चासमवायिकारणमणवस्तु समवायिन इत्यणुषु कर्माण्युत्पद्यन्ते । कस्मिन्नवसर इत्याह सर्वात्मसु गताश्च तेऽदृष्टाश्च तेषाम्, किंविशिष्टानां ? शरीरेन्द्रियमहाभूतान्युपनिबध्यन्ते सम्पाद्यन्ते यैस्तेषां वृत्तिः फलदानसामर्थ्यं तस्योपभोगाद्युगपन्निरोधे विनाशे सति । स च संजिहीर्षासमकालम् । यदा हि सकलभुवनपतेर्महेश्वरस्य संहर्तु-

मिच्छा सम्पद्यते। सा च किमर्थं? प्राणिनां संसारे शरीरोपादानपरित्यागद्वारेण खिन्नानां निशि रात्राविव विश्रामार्थम्। यथा हि शरीरव्यापारादहनि खिन्नानां तदभावाद्रात्रौ विश्रामस्तथेहापि इति। कदा च संजिहीर्षा? ब्रह्मणोऽपवर्गकाले। यदा ह्यधिकारसमाप्तौ ब्रह्मापवृज्यते स वर्षशतावसाने वर्तमानस्य ब्रह्मणो भवतीति। केन मानेनेत्याह ब्रह्मण इदं ब्राह्मं तेनेति। तत्पुनर्युगं द्वादशसहस्रं युगकल्पं विद्धि चतुर्युगमेतत्सहस्रपर्यन्तं तदहर्ब्राह्ममुच्यते। इत्येवंविधैर्दिनैर्मासादयोऽपि वक्तव्या इति मानम्। एवं यथा ब्रह्मणोऽपवर्गकाले महेश्वरस्य संजिहीर्षासमकालं विशिष्टादृष्टानां वृत्तिनिरोधे सति शरीरेन्द्रियाणां विनाशस्तथा पृथिव्युदकज्वलनपवनानामनेनैव क्रमेणेति। परमाणुषु कर्मोत्पत्तौ विभागेभ्यः सत्संयोगनिवृत्तिद्वारेणोत्तरस्मिन्नुत्तरस्मिन्सति पूर्वस्य पूर्वस्य विनाश इत्युत्पत्त्यपेक्षया पूर्वमुत्पन्नम्, तत्र उत्तरस्मिन् उत्तरस्मिन् विद्यमाने सति विनश्यतीति। तथा ह्युत्तरस्मिन् सति पूर्वं वायोर्विनाशः तदनन्तरमुदकस्येत्यादि।

अन्ये त्वेतद्वाक्यं पाठापेक्षयैव विवक्षितमिति मन्यन्ते। तथाहि—यथा शरीरेन्द्रियाणां विनाशः तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानां विनाशः अनेनैव क्रमेणेति, पाठक्रमेण न क्रमान्तरेणेति। एवञ्च शरीरेन्द्रियमहाभूतानां विनाशे तदाश्रितानां गुणकर्मणामपि विनाशः। ततः प्रविभक्ताः कार्यानाधाराः परमाणवोऽवतिष्ठन्ते। तथा न परं परमाणवो धर्माधर्मसंस्कारैरनुविद्धाः सम्बद्धा आत्मानश्चावतिष्ठन्ते। अथान्येषामपि सामान्यादीनामवस्थाने किमर्थं विशेषाभिधानमिति चेत्। द्रव्यविनाशस्य परमाणवन्तताज्ञापनार्थमात्मनाञ्च धर्मादिविनाशकारणाभावाद्धर्माधर्मसंस्कारानुविद्धानामवस्थानं न केवलानामिति। अन्यथा हि निमित्ताभावात्पुनरुत्पत्तिर्न स्यात्। अथ कियन्तं कालमेवमवस्थानमित्याह तावन्तमेव कालमिति। ब्राह्मेण मानेन वर्षशतं यावदिति।

ततः पुनर्वर्षशतान्तेऽपि विश्रामप्रापकादृष्टनिवृत्तौ प्राणिनां कर्मविपाकोपलम्भात् भोगभूतये भोगभूत्यर्थं महेश्वरस्य सिसृक्षा स्रष्टुमिच्छा सम्पद्यते। तदनन्तरं पवनपरमाणुषु समवेतानि कर्माण्युत्पद्यन्ते। केभ्यः कारणेभ्य इत्याह—तत्संयोगेभ्यः तेषां भोगिनां संयोगाः परमाणुभिः तेभ्यः इत्यसमवायिकारणनिर्देशः। ते च कर्मारम्भे

सापेक्षा इत्याह सर्वात्मगतवृत्तिलब्धाऽदृष्टापेक्षेभ्य इति । सर्वात्मसु भोगिषु गताः सर्वात्मगतास्ते च ते वृत्तिलब्धाऽदृष्टाश्चेति । वृत्त्या सहकारिकारणेन लब्धाश्च तेऽदृष्टाश्चेति तथोक्तास्तानपेक्षन्त इति तदपेक्षास्तेभ्य इति । न तु वृत्तिर्लब्धा यैरिति व्याख्यानम् । अत्र निष्ठान्तस्य पूर्वनिपातप्रसङ्गात् । अथ काऽसौ वृत्तिरदृष्टानां सहकारिकारणम्? विश्रामप्रापकादृष्टाभावोपलक्षितः कालविशेषः, तत्सद्भावे कार्यकरणात् । तथाहि ब्राह्ममानेनापरिपूर्णे वर्षशते विश्रामप्रापकाऽदृष्टस्य प्रतिबन्धकस्य भावादुपभोगप्रापकादृष्टसद्भावेऽपि सृष्टिर्न भवति परिपूर्णे तु वर्षशते विशिष्टाऽदृष्टाभावादुपभोगप्रापकादृष्टानां सृष्ट्यै व्यापार इति । प्रतिबन्धकाभावविशिष्टः कालो वृत्तिस्तेषामिति ज्ञायते । महेश्वरस्यापि तत्सद्भाव एव सिसृक्षा भवतीति । तदेवं पवनपरमाणुषु कार्योत्पत्तौ सत्याम् अनन्तरं विभागस्तस्मात्संयोगनिवृत्तौ तेषां परमाणूनां परस्परसंयोगेभ्यो द्व्यणुकान्युत्पन्नानि त्र्यणुकान्यारभन्त इत्यादिक्रमेण महान्वायुः समुत्पन्नो नभस्याकाशे दोधूयमान इत्यतिशयेन कम्पमानस्तिष्ठति । स चादावुत्पन्नोऽतिशयेन वेगसम्बन्धात् गुरुत्ववतामपातहेतुर्भवति । दृष्टं च वायोः पर्णादिप्रतिबन्धे सामर्थ्यम् । अयं चातिशयेन महत्त्वे सति वेगसम्बन्धादुदधिसहितां पृथिवीं तृणमिव धारयत इति न चित्रम् । तदनन्तरं वायूत्पत्त्यनन्तरं तस्मिन्नेव वायावधिकरणभूते तावदिति । आप्येभ्यः परमाणुभ्यस्तेनैव क्रमेणेति । कर्मोत्पत्तिद्वारेण विभागेभ्यः संयोगनिवृत्तौ परस्परसंयोगेभ्यो द्व्यणुकान्युत्पद्यन्ते ततस्त्र्यणुकमित्यादिक्रमेण महान् सलिलनिधिः समुद्रः समुत्पन्नः पोप्लूयमानोऽत्यर्थं प्लवमानस्तिष्ठति । तदनन्तरं सलिलोत्पत्त्यनन्तरं तस्मिन् सलिलनिधावधिकरणे पार्थिवेभ्यः परमाणुभ्यः पूर्वक्रमेण द्व्यणुकत्र्यणुकोत्पत्तिरिति । एवमादिक्रमेण महापृथिवी समुत्पद्यते । सा चोत्पन्ना संहताऽवतिष्ठते । तस्मिन्नेव महोदधौ अधिकरणे तैजसेभ्यः परमाणुभ्यः पूर्ववद् द्व्यणुकोत्पत्तिक्रमेणोत्पद्यते महांस्तेजोराशिः । स चोत्पन्नो देदीप्यमानोऽत्यर्थं प्रकाशमानस्तिष्ठति । न च तेजसो जलेन विरोधादाधाराधेयभावानुपपत्तिरिति वाच्यम् । आधाराधेयभावस्याप्युपलब्धेः । यथा वाडववरुणाविति । अन्ये तु

Fabruary 1929.

THE

# CHOWKHAMBA SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 374.

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

**प्रशस्तपादभाष्यम् ।**

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया
महामहोपाध्यायपद्मनाभमिश्रकृतया सेतुव्याख्यया
विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया व्योमवत्या च समन्वितम् ।
वाराणसीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षेण पं० गोपी-
नाथकविराजेन न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

## PRASHASTAPÂDABHÂSHYAM

BY Prishstadevâchârya

WITH COMMENTARIES:

Sûkti, BY JAGADISA TARKÂLANKÂRA,
Setu, BY PADMANABHA MISHRA, &
Vyomavati, BY VYOMASHIVACHÂRYA.

*Edited by*

GOPINÂTH KAVIRAJ, M. A.
PRINCIPAL GOVERNMENT SANSKRIT COLLEGE
SARASVATI BHAVAN BENÂRES.
and
DHUNDHIRÂJ SHÂSTRI Nyâyopâdhyâya.

FASCICULUS IV-४.

*PRINTED PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३७४

*Printed by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

Agents:

1 Luzac & co, Booksellers, LONDON.

2 Otto Harrassowitz, Leipzig: GERMANY.

3 The Oriental Book-supplying Agency, POONA.

विरोधपरिहारार्थं तस्मिन्नेव महोदधाविति वाक्यं पृथिव्यां सम्बन्धयन्ति। तदनन्तरं तस्मिन् पृथिव्युत्पादे सति तैजसेभ्यः परमाणुभ्यः द्व्यणुकादिप्रक्रमेण महांस्तेजोराशिरिति। पूर्वमनेनैवमुक्तप्रकारेण समुत्पन्नेषु चतुर्षु महाभूतेषु सत्सु महेश्वरस्याभिध्यानमात्रादिच्छामात्रान्न शरीरादिव्यापारादिति। तथा तत एव निमित्तात्तैजसेभ्यः परमाणुभ्यः पृथिवीपरमाणुसहितेभ्यो महदण्डमारभ्यते। किंविशिष्टं महदिति। अत्र हि तैजसाः परमाणवः समवायिकारणम् पार्थिवावयवाश्च निमित्तकारणं महेश्वराभिध्यानञ्चेति। द्व्यणुकान्युत्पन्नानि त्र्यणुकादिप्रक्रमेण महदण्डमारभन्त इति। तस्मिंश्चाण्डान्तर्देशे ब्रह्माणमुत्पादयति। किंविशिष्टमित्याह—चतुर्वदनकमलमिति। चत्वारि कमलानीव वदनानि यस्यासौ तथोक्तस्तमिति। सर्वेषाञ्च लोकानां भूरादिसत्यान्तानां पितामहं स्वामिनम्। तथा सकलभुवनैः सहितञ्चेति। तमुत्पाद्य महेश्वरः प्रजासर्गे विनियुङ्क्ते—ब्रह्मन् प्रजासर्गं कुर्विति। स च महेश्वरेण विनियुक्तो ब्रह्मातिशयेन ज्ञानं च वैराग्यं चैश्वर्यं चेति तथोक्तानि तैः सम्पन्नो युक्तः, अत एव प्राणिनां कर्मविपाकं विदित्वा सुतान् सृजति। किं विशिष्टान्? प्रजापतीन् प्रजायाः स्वामिनः, कर्मानुरूपं ज्ञानं च भोगश्चायुश्च येषां ते तथोक्तान् कर्मानुरूपज्ञानभोगायुष इति। तथा मनसि भवान्मानसान्मनोव्यापारेण सङ्कल्पमात्रेण सम्पादितान्न कायिकव्यापारेणेत्यतस्तानिति। तथा मनवश्च देवाश्च ऋषयश्च पितरश्चेति तथोक्तास्तेषां गणाः समूहास्तांश्च सृजति। तथाहि—चतुरो वर्णान् ब्राह्मणक्षत्रियविट्शूद्रान् कर्मानुरूपभोगज्ञानायुषः सृजति। केभ्य इत्याह—मुखबाहूरुपादतो यथासंख्यमिति। तथान्यानि चोच्चावचान्युत्तमाधमभावेनावस्थितानि भूतानि सृजति। एतांश्च पूर्वोक्तान् सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति। यस्य हि यादृशं कर्म तस्य तादृशानि धर्मज्ञानवैराग्यैश्वर्याणि सम्पादयतीति।

ननु सर्वमेतदसम्बद्धम् ईश्वरसद्भावे प्रमाणासम्भवात्। तत्र। अनुमानागमाभ्यां तत्सद्भावसिद्धेः। तथा चानुमानम्—क्षित्यादिषु सृष्टिसंहारौ कर्तृपूर्वकाविति। अथ सृष्टिसंहारयोर्भूतेष्वप्रसिद्धेरनुमानाभाव इति चेत्। रचनावत्त्वेन तत्सिद्धेः। तथाहि—क्षित्यादीनि कार्याणि रचनावत्त्वात्। यद् यद् रचनावत्तत्तत् कार्यं यथा घटा-

दिति। तथा रचनावत् क्षित्यादि तस्मात् कार्यमिति। न च रचनावत्त्वमन्तरेणापि कार्यत्वमुपलभ्यत इत्यप्रयोजकत्वं वाच्यम्। सर्वस्यापि सपक्षैकदेशवर्तमानस्यागमकत्वप्रसङ्गात्। तथाहि-धूमस्याप्यप्रयोजकत्वं तदन्तरेणाप्यग्निमत्त्वोपलब्धेः। अथ यत्र धूमस्तत्राग्निरिति व्याप्तिः? एवं तर्हि यत्र रचनावत्त्वं तत्र कार्यत्वमिति समानम्। तथाच घटादावप्यभूत्वा भावित्वं प्रत्यक्षेणानुपलब्धं रचनावत्त्वेनैव साध्यते। तथेदं संहारे समानमिति। सिद्धे च कार्यत्वे कर्तृपूर्वकत्वं साध्यते। तथाच विवादास्पदं बोधाधारकारणं कार्यत्वाद् यद् यद् कार्यं तत्तद् बोधाधारकारणम् यथा घटादि, तथा चेदं कार्यं तस्मात् बोधाधारकारणमिति। अस्य च पक्षधर्मत्वे सति सपक्षे वर्तमानस्य विपक्षादत्यन्तव्यावृत्तेरबाधितविषयत्वादसत्प्रतिपक्षत्वेन गमकत्वम्। नन्वेवमशेषज्ञेयज्ञानाधारविधातृपूर्वकत्वे साध्ये साध्यविकलो दृष्टान्तः कुम्भादावसर्वज्ञपूर्वकत्वेन व्याप्तस्य कार्यत्वस्योपलब्धेः। तथा विरुद्धश्च हेतुः-न विवादास्पदं सर्वज्ञपूर्वकं कार्यत्वात् घटवत्। असर्वज्ञपूर्वकत्वे च साध्येऽभिप्रेतस्यासिद्धिरिति। नैतदेवम्। बोधाधारेऽधिष्ठातरि साध्ये न साध्यविकलत्वम्। नापि विरुद्धत्वम्। न च कार्यत्वं बुद्धिमन्तमधिष्ठातारं व्यभिचरतीत्यव्यभिचारोपलम्भसामर्थ्यादुपलभ्यमानं पक्षे क्षित्यादिसम्पादनसमर्थमेवाधिष्ठातारं साधयतीति। न च क्षित्याद्युपादानोपकरणानभिज्ञः क्षित्यादिसम्पादनसमर्थ इति परमाण्वादिविषयज्ञानं तत्कर्तुर्लभ्यते। पक्षधर्मताप्रसादात्सर्वं चानुमानं सामान्येन व्याप्तिग्रहणबलात् प्रवर्तमानं पक्षधर्मताबलात्साध्यविशेषं साधयतीति दृष्टम्। न च विस्फूर्जतापि परेणाऽत्र बोधाधारकारणत्वकार्यत्वयोः सामान्यव्याप्तेर्व्याघातः शक्यसाधनः। विशेषेण तु व्याप्तिविरहादसाधनत्वे धूमस्याप्यसाधनत्वप्रसङ्गः। तत्राप्यपास्ताशेषविशेषेणाग्निमात्रेण धूममात्रव्याप्तेरुपलम्भादिति। तथा चात्राऽपि विशेषविरोधः संभवत्येव-अयं पर्वतः पर्वतावलम्ब्याग्निमान् न भवति धूमवत्त्वात्। योयो धूमवान् स स विशिष्टाग्निमान्न भवति यथा रसवतीप्रदेशः, तथा चायं तस्माद्यथोक्तसाध्य इति। अथ धूमस्याग्निमात्रेण व्याप्तेरुपलंभाद्यत्रोपलम्भस्तत्रैवाग्निस्तत्रैवाग्निप्रसाधकत्वाद्विरुद्धतानवकाश इति चेत्, इहापि समानम्—कार्यत्वस्य बुद्धिमता व्याप्ते-

रुपलम्भात्पक्षे तत्साधकत्वमिति। अथ धूमप्रदेशोऽग्निना व्याप्तो दृष्ट इति प्रदेशान्तरेऽप्यग्निमत्त्वं प्रसाधयतीति युक्तम्। नन्वेवं तर्हि कार्यत्वमपि यत्रोपलब्धं तत्रोत्पादनसमर्थेनैव कर्त्रा व्याप्तमिति पक्षेपि क्षित्यादिसम्पादनसमर्थं कर्तारं गमयेत्। यश्चेदमनुमानं न विवादास्पदं सर्वज्ञपूर्वकमिति। तत्र विशेषप्रतिषेधस्य शेषाभ्युपगमे सामर्थ्योपलब्धेरसर्वज्ञपूर्वकत्वं स्यात्। कार्यत्वस्य कर्त्रव्यभिचारादिति। यश्चासावसर्वज्ञः स यदि क्षित्युत्पादनसमर्थः संज्ञामात्रं भिद्येतेति। अथासमर्थः कथं क्षित्यादेः कर्ता। अथ परस्य सर्वज्ञत्वविशेषः कार्यत्वेन हेतुनाऽभिप्रेतस्तत्प्रतिषेधार्थं विधेरसज्ञपूर्वकमिति, तत्र विशेषप्रतिषेधस्य शेषाभ्युपगमे सामर्थ्योपलब्धेर्विरुद्धानुमानं न कर्तृमात्रस्येति चेत्। न। कथमत्र क्षित्यादिसम्पादनसामर्थ्ये संज्ञाभेदमात्रमसामर्थ्ये तु कार्यानुत्पत्तिरिति। दृष्टं च कार्ये तथा समस्तविशेषप्रतिषेधे निराधारस्य सामान्यस्याप्रसिद्धेः निर्विषयत्वेनाप्रमाणताप्रसङ्गः। न चेदमप्रमाणं सामान्यव्याप्तेः प्रतिषेद्धुमशक्यत्वात्। अथ विशिष्टविशेषप्रतिषेधः,तथा विशेषाभ्यनुज्ञायां विशेषान्तरोपगमप्राप्तिः। वामेनाक्ष्णा न पश्यतीति यथा। अथाग्निधूमयोः प्रत्यक्षेण सम्बन्धसिद्धेरनुमानप्रवृत्तिर्युक्ता नैवमत्रेति चेत्। न, इहापि कार्यत्वस्याधिष्ठानपूर्वकत्वेन सम्बन्धसिद्धेरप्यनुमानं वर्तत एव। अथाग्निरनुमानादूर्ध्वमपि प्रत्यक्षो नैवमीश्वर इत्यनुमानं कथमिति चेत्। न। अत्यन्तपरोक्षस्यापि चक्षुरादेरुपलब्ध्यनुमेयत्वात्तथात्र सामान्येन क्रियायाः कारणकार्यत्वोपलब्धेः अनुमानमिति। अभ्युपपन्नञ्च कार्यत्वस्य शरीरादिमता कर्त्रा व्याप्तत्वात्। घटादौ तथा भूतस्यैवात्र सिद्धिरिति वाच्यम्। दृष्टान्तदार्ष्टान्तिकयोरुत्कर्षापकर्षेण प्रत्यवस्थानस्य सर्वानुमानोच्छेदकत्वात् तथाह्यविद्यमानस्य शरीरादेरापादनमुत्कर्षः विद्यमानस्य च सर्वज्ञत्वादेरपकर्षणमपकर्षः न च सर्वे दृष्टान्तधर्मा दार्ष्टान्तिकेऽपि भवन्ति। अभेदे दृष्टान्तदार्ष्टान्तिकव्यवहारोच्छेदप्रसङ्गात्। न हि छिदिक्रियायाः करणं कुठारादि दृष्टमिति रूपोपलब्धिक्रियायामपि तथा भवति। यथा चात्रापास्तविशेषण कारणेन क्रियायाः व्याप्तत्वादनुमानम्, एवमीश्वरानुमानेऽपीत्यनुत्थानं जातिप्रयोगस्य।

एतेन यदाह–कस्यचिद्धेतुमात्रत्वस्य यद्यधिष्ठातृतोच्यते कर्मभिः

सर्वजीवानां तत्सिद्धेः सिद्धसाधनमिति। तदपास्तं भवति। तथाहि बुद्धिमत्यधिष्ठातरि साध्ये कथमचेतनेन कर्मणा सिद्धसाधनम्। तस्याप्यचेतनतया अधिष्ठात्रपेक्षत्वात्, तथाहि-सर्वमचेतनं चेतनाधिष्ठितं प्रवर्तमानं दृष्टम्। यथा तन्त्वादि। तथाच कर्मादि। न चास्मदाद्यात्मैवाधिष्ठायकः तस्य, तद्विषयज्ञानाभावात्। तथा चास्मदाद्यात्मनो न कर्मविषयं ज्ञानमिन्द्रियजम्। नापि परमाण्वादिविषयम्। न च तदभावे तस्य प्रेरकं दृष्टम्। न चाचेतनस्याकस्मात्प्रवृत्तिरुपलब्धा। प्रवृत्तौ वा परिनिष्पन्नेऽपि कार्ये प्रवर्तेत-विवेकशून्यत्वात्। अथाचेतनात्मनाऽधिष्ठितं च क्षीरं प्रवर्तते। तन्न। गोवत्सप्रयत्नाभावे मृतावस्थायामप्रवृत्तेः। सर्वं चास्मदाद्यनधिष्ठितं पक्षेऽन्तर्भूतमिति न साध्येनैव साधनस्य व्यभिचारः सर्वानुमानोच्छेदप्रसङ्गात्। तथा चाचेतनान्यस्मदन्येनानाधिष्ठितानि कार्योत्पत्तौ बुद्धिमदधिष्ठितानि अचेतनत्वाद्यद्यदचेतनं तत्तद् बुद्धिमताधिष्ठितम् प्रवर्तमानं दृष्टं, यथा तन्त्वादि तथा चैतानि। तस्माद्यथोक्तसाध्यानि। अथ कर्तुः शरीरादिमत्त्वोपलब्धेरीश्वरेऽपि तथाभावः किमत्र साध्यते, यदि शरीरादिमत्त्वेपि क्षित्यादिकर्तृत्वमभ्युपगम्यते। अथ शरीरादिमत्त्वादसर्वज्ञस्य न क्षित्यादिकर्तृत्वं तर्हि कार्यस्य कर्तृव्यभिचारादशरीरस्यैव कर्तृत्वमभ्युपेयम्। न च शरीरादिमत्त्वे प्रमाणमस्ति। अथ कर्तृत्वमेव प्रमाणम्। तद्व्याहतमेव। कर्तृत्वेन शरीरादिमत्त्वं शरीरादिमत्त्वाच्च क्षित्याद्यकर्तृत्वमिति। नचेदं स्वतन्त्रसाधनम् आश्रयासिद्धत्वात्। तथाहि-सिद्धे कर्तृसद्भावे कर्तृत्वस्य शरीरादिमत्त्वस्य च पक्षधर्मत्वं स्यान्न चैतदभ्युपगतम्। अथ परेण क्षित्यादिकर्ताभ्युपगत इत्यनिष्टापादनमेतत्। तत्र यदि प्रमाणायातस्तदुपगमस्तेनैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य। न चैतस्यानेनैव बाधः। अस्य तन्मूलत्वात्। अथ प्रमाणं विनैवाभ्युपगतः परेण, तर्हि प्रमाणं विना प्रमेयस्यासिद्धेः किं विपरीतानुमानेन। तस्याश्रयासिद्धताप्रसङ्गात्। समानं चैतदन्येष्वपीश्वरप्रतिषेधहेतुष्विति। तथा शरीरसम्बन्धे सति नियतदेशतया युगपदनियतदेशं कार्यं न स्यात्। तत्तु दृष्टम्। अथैकमानियतदेशस्य कार्यस्योत्पत्त्या व्यापि शरीरमस्पृश्यमतीन्द्रियं चेष्यते। तन्न, दृष्टविपरीतत्वात्। परं चाशरीरस्यैव कर्तृत्वमभ्युपेयामिति। तथाहि-नि-

त्यशरीरासंभवात् तच्छरीरं तत्संपाद्यमेवेति किं शरीरान्तरेण विना चारभ्यते शरीरान्तराभ्युपगमे तदन्यशरीरयुक्तेन संपाद्यत इति। शरीरपरम्परायामुपक्षीणत्वात्। भगवतो नान्यत्कार्यं प्रादुर्भवेदिति। अथाशरीरस्यैव शरीरकर्तृत्वं तत्कार्यावसरेऽपि न बाध्यत इति। तथा संहारावस्थायां शरीरस्य विनाशे पुनः सर्गादावशरीरस्याकर्तृत्वे कार्योत्पत्तिर्न स्यात् इत्यशरीरस्यैव कर्तृत्वमभ्युपगतम्। अथ प्रयोजनापेक्षितया कर्तॄणां प्रवृत्तेरुपलंभात्तदभावाच्चेश्वरप्रवृत्त्यभाव इति चेत्। तदसत्। कार्यसद्भावेन कर्तृसद्भावसिद्धेस्तस्य च स्वयं परिपूर्णत्वात्परार्था प्रवृत्तिर्गम्यते। यदि वा प्रवृत्तिशीलत्वाद्भगवतो नायं पर्यनुयोग इति। यथाहि-भास्वान् प्रकाशनशीलत्वात् पदार्थान् प्रकाशयति एवमितरोऽपि कार्यकारणरूपत्वात् कार्यं करोतीति। अथाशरीरस्येच्छामात्रेण कथं प्रेरकत्वम्? यथाऽस्मदाद्यात्मनः शरीरादिप्रेरकत्वमिति। अथ सत्येव शरीरे प्रेर्यप्रेरकत्वम्, इहापि सत्येव परमाणौ प्रेर्यप्रेरकत्वमिति समानम्।

अथ सिसृक्षा संजिहीर्षा वा महेश्वरस्य यदि नित्या सततं कार्योत्पत्तिः, अथानित्या सापि ईश्वरेच्छां विना न भवतीत्यपरामिच्छान्तरं तदप्यनित्यत्वादीश्वरेच्छाधीनमित्यनवस्थायां तत्सम्पादन एवोपक्षीणत्वात् भगवतो न कार्यान्तरे व्यापारः स्यात्। अथेश्वरेच्छां विनापि ईश्वरेच्छा सम्पाद्यते। तर्हि कार्यान्तरेऽप्येवमस्तु। अथ नित्यापि सहकारिप्राप्तौ कार्यं करोति। सहकारिणामपि नित्यत्वे सततं कार्योत्पत्तिरनित्यत्वे वा तानपि सहकारिणः संपादयन्ती सहकार्यन्तरमपेक्षते। तेषामप्यनित्यत्वे पुनः सहकार्यन्तरमित्यनवस्थायां पूर्वदोषानुषङ्गः।

नैष दोषः। चेतनोत्पन्नादृष्टसद्भावे सतीच्छायाः कार्यकरणात्। तथाहि सहकारिसंपादनेऽप्यन्यं सहकारिणमपेक्षते तत्राप्यन्यामित्यनादित्वं परिहारः। उक्तं चेच्छायाः सृष्टौ संहारे च सहकारीति। तथा—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥

इत्यागमेन प्रसिद्धः। न च स्वरूपप्रतिपादकानामप्रामाण्यम्। प्रमाजनकत्वस्य सद्भावात्। तथाहि-प्रमाजनकत्वेन प्रमाणस्य प्रामाण्यं न प्रवृत्तिजनकत्वेन तच्चेहाप्यस्त्येव। प्रवृत्तिनिवृत्ती तु पुरु-

षस्य सुखदुःखसाधनत्वाध्यवसाये समर्थस्यार्थित्वात् भवत इति। अथ विध्यङ्गत्वादमीषां प्राधान्यं न स्वरूपत्वादिति चेत्। तदसत्। स्वार्थप्रतिपादकत्वेन विध्यङ्गत्वात्। तथाहि—स्तुतेः स्वार्थप्रतिपादकत्वेन प्रवर्तकत्वम्, निन्दायाश्च निवर्तकम्। अन्यथा हि तदर्थापरिज्ञाने विहितप्रतिषिद्धेष्वविशेषेण प्रवृत्तिनिवृत्ती स्याताम्। तथाविधवाक्यस्यापि स्वार्थप्रतिपादनद्वारेणैव पुरुषप्रेरकत्वं दृष्टम्। एवं स्वरूपपरेष्वपि वाक्येषु स्यात्, वाक्यरूपताया अविशेषाद्विशेषहेतोश्चाभावादिति। तथा स्वरूपार्थानामप्रामाण्ये "मेध्या आपो दर्भाः पवित्रममेध्यन्मशुचौ" त्येवंरूपापरिज्ञाने विध्यङ्गतायामविशेषेण प्रवृत्तिनिवृत्तिप्रसङ्गः। न चैतदस्ति, मेध्येष्वेव प्रवर्तन्ते अमेध्येषु च निवर्तन्त इत्युपलम्भात्। तदेव स्वरूपार्थेभ्यो वाक्येभ्योऽर्थस्वरूपावबोधे सतीष्टे प्रवृत्तिनिदर्शनादनिष्टे च निवृत्तिरिति ज्ञायते—स्वरूपार्थानां प्रमाजनकत्वेन प्रवृत्तौ निवृत्तौ वा विधिसहकारित्वमिति। अपरिज्ञानेन तु प्रवृत्तावतिप्रसङ्गः।

अथ स्वरूपार्थानां प्रामाण्ये ग्रावाणः प्लवन्त इत्यादीनामपि यथार्थता स्यात्। न। मुख्ये बाधकोपपत्तेः। यत्र हि मुख्ये बाधकं प्रमाणमस्ति तत्रोपचारः कल्प्यते, तदभावे तु प्रामाण्यमेव। न चेश्वरसद्भावप्रतिपादकेष्वस्ति किञ्चिद्बाधकमिति। तदेवं सृष्टिसंहारप्रतिपादकानामपि वाक्यानां स्वरूपेऽर्थप्रामाण्याद्विपरीतार्थकल्पनाऽन्याय्येति।

एतेन शाक्यपक्षोऽपि प्रतिषिद्ध एव। तथाहि—शाक्या अपि दृष्टान्तदार्ष्टान्तिकयोरुत्कर्षापकर्षेण प्रत्यवतिष्ठन्ते। तत्र चोक्तमेव प्रतिसाधनमिति। तच्च जात्युत्तरम्। यत्कार्यं यादृशा कर्त्रा व्याप्तमुपलब्धं यदुपलब्धेरतत्क्रियादर्शिना केनाप्येतत्सम्पादितमिति बुद्धिर्भवति तदेवोपलभ्यमानं तादृशमेव कर्तारं गमयेत्, तदुक्तं—

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
सन्निवेशादि तद्युक्तम् तस्मात्तदनुमीयते॥

न च क्षित्यादिकार्यं कर्त्राविनाभूतं दृष्टमिति कथं कर्तारं गमयेत्। अथ सत्यपि भेदे कार्यशब्दसाम्यादनुमानम्, एवन्तर्हि धूमे पाण्डुत्वमग्निना व्याप्तमुपलब्धमिति प्रासाददेशादावप्युपलभ्यमानमग्निं गमयेत्। तदुक्तम्—

वस्तुभेदे प्रसिद्धस्य वस्तुसाम्यादभेदिनः ।
न युक्तानुमितेः पाण्डुद्रव्यादिति हुताशने ॥

यदि किञ्चित् कार्यं कर्तृविनाभूतं दृष्टमिति अपरिदृष्टया विनाभावस्यापि तत्पूर्वकत्वं स्यात् । तथासति घटादेर्मृद्विकारस्य कुलालपूर्वकत्वोपलम्भात् वल्मीकादीनामपि तत्पूर्वकत्वं स्यात्, तदुक्तम्—

अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः कारणसिद्धा वल्मीकस्यापि तत्कृतः ॥

कथन्तर्हि इदं क्षित्यादि कार्यं कर्मजमिति कथं हि कर्मजं जगतां वैचित्र्यमित्युक्तम् । तच्च चेतना मानसं कर्मेति न विज्ञानार्थान्तरमिति । सर्वमेतदसम्बन्धम् । सामान्येन कार्यत्वस्य व्याप्तबुद्धिमता व्याप्तेरुपलम्भात् क्षितावपि तत्सिद्धेः । सर्वं चानुमानमन्यत् सामान्येन व्याप्तिग्रहणापेक्षं प्रवर्तत इत्युक्तम । न किञ्चिदप्यनुमानं पक्षे व्याप्तिग्रहणापेक्षं संभवतीत्यदूषणमेतत् । क्षित्यादि कार्यं न कर्तृव्याप्तमुपलब्धमिति । न चेत्थंभूतं कार्यं कर्तृविनाभूतं नोपलब्धमित्यनुमानाभाव इति वाच्यम् । सर्वानुमानोच्छेदप्रसङ्गात् । तथाहि—कृतकत्वादनित्यत्वं शब्देऽभ्युपगतम् अत्रापि शक्यते वक्तुं यच्छब्दे कृतकत्वं तन्नान्यत्रानित्यत्वाविनाभावितयोपलब्धमित्यनुमानाभावः । अथ सामान्येन कृतकत्वानित्यत्वयोरन्यत्र व्याप्तिग्रहणे सत्यनुमानं न पक्ष इति चेत् । समानमीश्वरानुमानेऽपीति । न चात्र शब्दसामान्यमेव कार्यत्वस्योभयत्राव्यभिचारिणः सद्भावात् । न चैवं पाण्डुत्वमग्नेर्गमकम् तस्याग्निमन्तरेण सद्भावेन व्यभिचारित्वादिति । एवं च वल्मीकादावपि मृद्विकारत्वं कुलालपूर्वकत्वे लिङ्गं व्यभिचारात् । तस्य हि प्राकारेष्टकादिष्वकुलालपूर्वकेष्वपि सद्भावात् । यच्चेदं कर्मजं जगतां वैचित्र्यमिति तदिष्यत एव । यदि नामाचेतनत्वात् कर्म चेतनाधिष्ठितं कार्यकरणे प्रवर्तत इतीश्वरस्यापि सद्भावः परस्यापि सद्भावः । यद्यपि चेतनेनैव कर्म तथापि नापि तस्य चिदाधारत्वं चेतनत्वमेव । न च तस्य बोधेन तादात्म्यम् । आत्मगुणत्वस्य वक्ष्यमाणत्वात् । नापीदमेकशाखाप्रभवत्वानुमानेन तुल्यम । तत्र ह्येकशाखाप्रभवत्वेन हेतुना फलान्तराणां पाके साध्ये प्रत्यक्षेण बाधादप्रामाण्यं युक्तम् । न चैवमीश्वरानुमान इति । न च शरीरादिमत्त्वेन क-

र्तृत्वं व्याप्तमिति तदभावात्तस्याप्यभाव इति वाच्यम्। कार्यानुमानस्य चाव्यभिचारित्वे कर्तृसद्भावसिद्धेः। न चात्र व्यापकानुपलब्धेर्बाधकत्वम्। अनुमानस्यानुमानान्तरेण बाधायोगात्। पूर्वानुमानेन च धर्मिसद्भावसिद्धावुपकृतविषयत्वमसिद्धेर्वा न पक्षधर्मत्वमिति। अथ नित्यस्याव्यतिरेकित्वात्सामर्थ्यञ्च दुरन्वयमित्यकर्तृकत्वमेवेश्वरस्य। तन्न। क्षणिकत्वप्रतिषेधस्य वक्ष्यमाणत्वात्। अयं चेश्वरवादोऽस्मद्गुरुभिर्विस्तरेणोक्त इति नेह प्रतन्यते॥

(भा०) आकाशकालदिशामेकैकत्वादपरजात्यभावे सति पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति–आकाशं कालो दिगिति। तत्राकाशगुणाः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः। तत्र शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः। श्रोत्रग्राह्यत्वाद्विशेषगुणभावाच्च न दिक्कालमनसाम्। पारिशेष्याद् गुणो भूत्वा आकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गाविशेषादेकत्वं सिद्धम्। तदनुविधानात्पृथक्त्वम्। विभववचनात्परममहत्परिमाणम्। शब्दकारणत्ववचनात् संयोगविभागाविति। अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम्। समानासमानजातीयकारणाभावाच्च नित्यम्। सर्वप्राणिनां च शब्दोपलब्धौ निमित्तम्। श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः। शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धस्तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बाधिर्यमिति॥

(सू०) गर्गरीगर्तादिभेदेनाकाशस्य दण्डलवमुहूर्तादिभे-

देन कालस्य पूर्वपश्चिमादिभेदेन दिशश्च नानात्वात् आकाशत्वादिजातिसत्त्वेन पृथिव्यादिसंज्ञेवाऽऽकाशादिसंज्ञापि द्रव्यत्वावान्तरजातिनिमित्तकैवेति मतं निरस्यन्नाहाऽऽकाशेत्यादि । एकैकत्वं प्रत्येकनिष्ठभेदाप्रतियोगित्वं ततोऽपरजातेर्द्रव्यत्वावान्तरजातेरभावेऽभावत्वे सतीत्यर्थः, तथा चाकाशं न द्रव्यत्वव्याप्यजातिमत् आकाशनिष्ठभेदाप्रतियोगित्वात् , यन्नैव तन्नैवं यथा घट इत्याद्यनुमानात् द्रव्यत्वावान्तरजातिनिरासात् न तन्निमित्तकाकाशादिसंज्ञाः । न च हेतोः स्वरूपासिद्धिः, अग्रे प्रतिकर्तव्यत्वादिति भावः । पारिभाषिक्य इति । यद्यप्याधुनिकसङ्केतशालिन्येव संज्ञा पारिभाषिकी प्रकृते च शब्दवत्त्वाद्युपाधिप्रवृत्तिनिमित्तकत्वादौपाधिक्येव संज्ञा वक्तुमुचिता, तथाप्युभयावृत्तिधर्मावच्छिन्नसङ्केतवत्त्वमेव पारिभाषिकसंज्ञात्वमित्यभिप्रायेणेदम् । अनुगतोपाध्यवच्छिन्नसंज्ञाया एवौपाधिकत्वोपगमात् । यत्तु–निरवच्छिन्नसङ्केतशालित्वमेव पारिभाषिकत्वम्, आकाशपदाद्धर्मान्तरानवच्छिन्नस्यैव केवलस्य गगनस्योपस्थितेः, अन्यथाऽऽकाशं शब्दवत् इत्यादेः पौनरुक्त्यापत्तेः । न चैवमाकाशत्वमित्यादिप्रयोगो न स्यात् प्रकृत्यर्थतावच्छेदकधर्मस्यैव त्वतलाद्यर्थत्वादिति वाच्यम् । व्यावर्तकधर्मस्यैव त्वतलादिना भावप्रत्ययेनाभिधानात्–इत्याचार्यमतम् । तन्न साधीयः—आकाशादिपदात् स्वरूपतो गगनादेर्भानेऽनुभवविरोधात् कारणबाधाच्च । न च शब्दवत्त्वाद्युपलक्षित एव धर्मिण्याऽऽकाशादिपदस्य शक्तिग्रहात्ताद्रूप्येणान्वयबोधो न तु तदपि शक्यतावच्छेदकमिति वाच्यम् । घटत्वादेरप्युक्तरीत्या शक्यतावच्छेदकत्वहान्यापत्तेः । सहप्रयोगस्याकाशपदवाच्यः शब्दवानित्यर्थकत्वेनाप्युपपत्तेरिति संक्षेपः ।

तत्र–आकाशादित्रिकमध्ये । अत्र शब्दः स्वत एव, संख्यादिस्तु विशेषणान्तरावच्छिन्न एवाऽऽकाशस्य वैधर्म्यमित्यग्रे प्रतिपादयिष्यते ।

अथाऽऽकाशे धर्मिणि प्रत्यक्षं न मानम् तदसत्त्वात् । आरक्तमाकाशं धवलमाकाशमित्यादिचाक्षुषेण प्रभामण्डलस्यावगाहनात्, अन्यथा रूपस्यापि तत्रोपेयत्वे षड्गुणत्वव्याघातापत्तेः । किन्तु शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानमेव तत्र मानमुपेयम्, तच्च पृथिव्यादिद्रव्यवृत्तित्वेनाप्युपपन्नम् नातिरिक्तस्य साधकमतः पृथिव्यादिगुणत्वे क्रमेण बाधकमाह शब्द इत्यादिना । शब्दो न स्पर्शवद्विशेषाणां पृथिव्यादिचतुर्णां गुण इति साध्यार्थः । अत्र हेतुः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादिति । परत्वापरत्वयोर्व्यभिचारस्य वारणाय सत्यन्तम्, प्रतिनियतेन्द्रियग्राह्यत्वे सतीत्यर्थकम् । तन्मात्रत्वञ्च रूपादौ व्यभिचारितो विशेष्यदलम् । आश्रयसमवायिकारणवृत्तिसजातीयगुणपूर्वकजातीयान्यत्वादिति तदर्थः । हेत्वन्तरमाह अयावदिति । आश्रयनिष्ठध्वंसाऽप्रतियोगिवृत्तिगुणत्वावान्तरजातिशून्यत्वादित्यर्थः । हेत्वन्तरमाह आश्रयादिति । आश्रयाविषयकसाक्षात्कारविषयत्वात् आश्रयविषयकसाक्षात्कारविषयान्यगुणत्वादिति वार्थः । अथ शब्दो यदि न पृथिव्यादिगुणः कथं तर्हि वीणायां ध्वनिरित्यादिको व्यवहारः ? सत्यम्, शरीरे सुखमित्यादाविव वीणादेरवच्छेदकतामात्रेण तथा प्रत्ययात् ।

उत्तानास्तु कथितहेतूनामप्रयोजकत्वाद्वीणादिगुण एव शब्दः, शब्दविशेषं प्रति वीणात्वादिना हेतुत्वस्यावश्यकत्वे समवायिकारणतायामेव तत्पर्यवसानस्य लाघवेनौचित्यात् । न च वीणागुणस्य कर्णासंनिकृष्टत्वेन श्रावणप्रत्यक्षानुपपत्तिः, वी-

णावच्छेद्यशब्दव्यक्तेरपि तथात्वेन तन्मतेऽप्येतद्दोषस्य तुल्यत्वात् । वीचीतरङ्गन्यायेन वीणानवच्छेद्यशब्दस्यैव कर्णावच्छेद्यतायाः सिद्धान्तसिद्धत्वात् । वीणाद्यवच्छेद्यशब्दस्यैव तत्तत्कर्णपर्यन्तव्यापित्वोपगमे तु वीणासमवेतशब्दस्यैव तत्कर्णावच्छेद्यत्वस्वीकारस्याप्यदृष्टस्य संभवात्, तत्तत्कर्णावच्छिन्नशब्दस्य ग्रहं प्रति तत्तत्कर्णत्वेन हेतुत्वकल्पनयैवातिप्रसङ्गभङ्गे शब्दप्रत्यक्षं प्रति श्रवणसमवायस्य हेतुतायां मानाभावादिति आहुः ।

अथ माऽस्तु पृथिव्यादिचतुर्णां गुणः शब्दः किन्त्वात्मगुण एव भविष्यति तथाऽप्यातिरिक्तमाकाशं नागतमेवेत्यत आह बाह्येति । मानसान्यसाक्षात्काराविषयत्वादित्यर्थः । नात्मगुण इत्यग्रेऽन्वयः । शब्दो न बुद्धिमद्गुण इति तदर्थः, तेनात्मत्वजातिशून्येश्वरीयगुणत्ववादिनां न सिद्धसाधनस्यावकाशः । हेत्वन्तरमाह आत्मान्तरेति । आत्मानमन्तराकृत्य ग्राह्यत्वात् आत्माविषयकप्रत्यक्षविषयत्वादिति यावत् । आत्मद्वयग्राह्यत्वादित्यर्थस्तु न युक्तः शब्दमात्रस्य पुरुषद्वयावच्छेद्यत्वेन स्वरूपासिद्धत्वादिति ध्येयम् । अत्मन्यसमवायात्–आत्मसमवेतान्यत्वात्, आत्मगुणान्यत्वस्यैव साध्यत्वान्नात्र साध्याविशेषः । अहङ्कारेणेति । आत्मधर्मिकाश्रयान्यत्वप्रमाविषयत्वादित्यर्थः । अहं न शब्दवान् इति प्रतीतेः प्रमात्वस्य सर्वसिद्धत्वादिति भावः ।

माऽऽस्तामात्मगुणः शब्दस्तथापि दिगादिगुण एव स्यादत आह श्रोत्रेति । शब्दो न दिक्कालमनसां प्रत्येकस्य गुणः श्रोत्रग्राह्यत्वादिति गुणपदस्यानुषङ्गेण प्रयोगार्थः श्रोत्रपदग्रहणस्य लौकिकत्वलाभार्थम् । विशेषगुणत्वाच्चेति । चक्षुर्ग्राह्यगुणत्वव्याप्यजातिशून्यगुणत्वादित्यर्थः । पारिशेष्यात्–पृथिव्याद्य-

ष्टद्रव्यगुणत्वबाधात् । गुणो भूत्वेति । शब्दो द्रव्यस्य गुणो गुणत्वादित्यनुमानमेव पृथिव्याद्यष्टद्रव्यगुणत्वबाधात्तदन्य-द्रव्यगुणत्वं साधयदतिरिक्तस्याकाशस्य साधकमित्यर्थः । ननु संख्या पृथिव्यादावपि सत्त्वात्कथमाकाशस्य वैधर्म्यमत आह शब्दलिङ्गादिति । शब्दस्य यल्लिङ्गत्वं व्याप्यत्वं तदविशेषा-देकत्वं सिद्धं वैधर्म्यत्वेन, तथा च शब्दव्याप्यसंख्यावत्त्वमेव वैधर्म्यं तच्च न पृथिव्यादाविति भावः । यद्यपि शब्दलिङ्गत्वा-दित्येव वक्तुमुचितम्, तथापि पृथक्त्ववत् संख्यायामपि कुत्र-चित् शब्दव्याप्यत्वमित्यर्थलाभार्थं शब्दलिङ्गत्वाविशेषादित्यु-क्तम् । अत एव शब्दानुविधाय्येव पृथक्त्वं वैधर्म्यमाह तदनुवि-धानादिति । तस्य शब्दस्यानुविधानात् व्याप्यत्वात् पृथक्त्वं वैधर्म्यत्वेन सिद्धमित्यर्थः । ननु परिमाणं द्रव्यमात्रेऽतिप्रसक्तमतः शब्दसमवायिनिष्ठपरिमाणमेवाकाशस्य वैधर्म्यं वाच्यं तच्चाप्रसिद्धम् गगनस्य परिमाणवत्त्वे मानाभावादत आह विभववचनादिति । महानाकाशस्तथा चात्मेति (७अ० १आ०-२२) सूत्रेण गगनस्य विभुत्ववचनादित्यर्थः । परममहत्त्वं परिमाणं सिद्धमिति पूर्वेणा-न्वयः। संयोगविभागयोरपि द्रव्यमात्रेऽतिप्रसक्तत्वादाह शब्देति । संयोगविभागपदाभ्यां शब्दासमवायिकारणयोः संयोगविभाग-योरभिधानात् संयोगविभागौ वैधर्म्यम् शब्दासमवायिकार-णस्य मूर्तेन सह संयोगस्य विभागस्य वा गगनादन्यत्रासत्त्वादिति भावः । यद्यपि प्रागुक्तधर्मिग्राहकमानादेवास्य द्रव्यत्वं सिद्धम् तथापि संयोगादिसत्त्वादपि तत् साधयितुं शक्यत इति तद्-व्याह अत इति । संयोगादिसत्त्वादित्यर्थः । अत्र हेत्वन्तरमाह गुणवत्त्वादिति । अग्रिमचकारयोजनया गुणवत्त्वाच्चेत्यर्थः । द्रव्यं—द्रव्यत्ववत् । नित्यत्वे प्रमाणमाह अनाश्रितत्वादिति ।

असमवेतभावत्वादित्यर्थः । नित्यमित्यग्रेऽन्वयः । अनाश्रितत्वादित्यस्य विभुत्वादित्यर्थस्तथा च द्रव्यत्वस्यैव साधकोऽयं हेतुरिति यथाश्रुतमेव श्रेय इत्यपि वदन्ति । नित्यत्वे हेत्वन्तरमाह समानेति । कारणमत्र समवायिकारणं तच्चाकाशस्य सजातीयं विजातीयं च नास्ति, न ह्याकाशसजातीयमाकाशान्तरमस्ति नापि तद्विजातीयं पृथिव्यादिकं समवायिकारणम् । तस्येन्द्रियप्रकृतित्वं दर्शयति सर्वप्राणिनामिति । विभुनस्तस्य सर्वप्राणिशब्दोपलब्धिनिमित्तत्वे सर्वेषामेव सर्वशब्दोपलब्धिप्रसङ्ग इत्यत आह श्रोत्रभावेनेति । ननु तथापि स दोषस्तस्य विभुन एव श्रोत्रभावादित्यत आह श्रोत्रं पुनरिति । ननु श्रवणविवरसत्त्वेपि कथं कश्चिद्बधिर इत्यत आह शब्दनिमित्तेति । उपभोग्यवीणादिशब्दा विषयतया निमित्तानि यस्य तादृशोऽयमुपभोगस्तत्प्रापकाभ्यां धर्माधर्माभ्यामुपनिबद्ध इत्यर्थः । तथा च तादृशधर्मरहितस्य तादृशविवरसत्त्वेपि बाधिर्यमित्याह तस्य चेति ॥

इत्याकाशम् ॥

( से० ) क्रमप्राप्तमाकाशमाहाकाशेति । अत्र प्रतिप्रकरणं त्रिषु पारिभाषिकसंज्ञाकथने ग्रन्थगौरवं भवतीत्याकाशप्रकरण एव तदुक्तम् । पारिभाषिकत्वं च जातिरूपप्रवृत्तिनिमित्तरहितसंज्ञात्वम् । अत एव भगवता भाष्यकृतापि तत्र हेतुत्वेन जातितोऽपरजात्यभावः इति एकव्यक्तिकसामान्यानङ्गीकारेण तत्र द्रव्यत्वव्याप्यजातेरभावेन न जातिप्रवृत्तिनिमित्तमित्यर्थस्य भाष्ये स्फुटत्वात् । न चैवं सामान्यादावपि पारिभाषिकी संज्ञा स्यात् । यत्तु प्रवृत्तिनिमित्तं विना संज्ञा पारिभाषिकी सम्प्रदायाचार्यैरुक्तम् तदेकदेशिमतम्, तथाहि आकाशपदस्य धर्मिमात्रशक्तत्वे ततस्तन्मात्रस्मृतिः निर्विकल्पकरूपा स्यात् । न च निर्विकल्पकरूपा स्मृतिर्भवत्यविकल्पकाच्चाकाशपदाद् धर्मिमात्रोपस्थितौ तदनन्तरमाकाशपदप्र-

योगानुपपत्तेः निर्विकल्पस्य व्यवहाराजनकत्वात्। न चाप्रवृत्तिनिमित्तस्यापि शब्दाश्रयत्वस्योपस्थितिः, तेन रूपेणोपस्थिते शक्तिग्रहादिति वाच्यम्। सम्बन्धितया स्मारकस्य पदस्यासम्बन्धिनः शब्दाश्रयत्वस्यास्मारकत्वात्, अन्यथा घटत्वादेरपि तथैव स्मृतिसंभवे संज्ञामात्रस्य पारिभाषिकत्वापत्तेः, तस्मात् यथाभाष्यमेव पारिभाषिकत्वपरिभाषोचितेति। नन्वेवं शब्दवत्त्वादावपि प्रवृत्तिनिमित्तापेक्षा स्यादिति चेत्, तद्गतासाधारणधर्मस्य तत्रापि प्रवृत्तिनिमित्तत्वेनेष्टापत्तेः, अन्यथाऽऽकाशादौ त्वतलादेः प्रयोगो न स्यात् तस्य प्रवृत्तिनिमित्तार्थकत्वात्, निर्बीजलक्षणाया अनुचितत्वात्, शब्दगुणकमाकाशमिति सहप्रयोगस्तु पिककोकिलन्यायेन समाधेयः। एवं च यदि शब्दगुणत्व एव प्रचुरप्रयोगः, तदा तदेव प्रवृत्तिनिमित्तम्। यदि चाष्टद्रव्यातिरिक्तद्रव्यत्वादावपि समः प्रयोगः, तदा नानार्थन्याय एव। प्रवृत्तिनिमित्तलक्षणं तु शक्यत्वे शक्यवृत्तित्वे च सति स्वभिन्नशक्यानधिकरणत्वम्। अत्र द्रव्ये द्रव्यपदप्रवृत्तिनिमित्ततां वारयितुं स्वभिन्नशक्यानधिकरणत्वमिति। घटद्रव्यस्य द्रव्यपदशक्यत्वेऽपि द्रव्यपदशक्यकपालवृत्तित्वेऽपि च स्वभिन्नद्रव्यत्वलक्षणशक्याधिकरणत्वात्। प्रमेयत्वादौ केवलान्वयिन्यव्याप्तिवारणाय स्वाभिन्नेति, तस्य स्वस्वरूपशक्याधिकरणत्वेऽपि स्वभिन्नशक्यानधिकरणत्वात्। आकृतावतिव्याप्तिवारणाय शक्यवृत्तित्वे सतीति, तस्याः शक्यत्वेऽपि शक्यवृत्तित्वाभावादवयवसंयोगरूपत्वेनावयव एव वृत्तेः। घटत्वे द्रव्यपदप्रवृत्तिनिमित्ततां वारयितुं शक्यत्व इति, तस्य द्रव्यपदशक्यघटवृत्तित्वेऽपि द्रव्यपदशक्यद्रव्यत्वानधिकरणत्वेऽपि द्रव्यपदशक्यत्वाभावात्। नचाभिधेयत्वादावव्याप्तिः स्वभिन्नप्रमेयत्वादिरूपशक्याधिकरणत्वात्, न हि अभिधेयपदप्रवृत्तिनिमित्तमभिधेयत्वं स्वभिन्नस्याभिधेयपदार्थस्य प्रमेयत्वादेरनाश्रय इति। किञ्च आकृतित्वस्यापि शक्यतया तत्राप्यव्याप्तिः, घटपदशक्यत्वावच्छेदकधर्मस्यैव प्रवृत्तिनिमित्तत्वात्। शक्यतावच्छेदकत्वं च शक्यतया सह प्रवृत्तिनिमित्तमात्रगतः स्वरूपसम्बन्धविशेष इति संक्षेपः।

द्रव्यत्वसाधकतया गुणानाह तत्रेति। नन्वाकाश एव नास्ति कस्य द्रव्यत्वासिद्धिरत आह शब्द इति। अनुमानात्सिद्धिरित्याशयः।

नन्वाकाशः प्रत्यक्ष एव कुतो न भवति? न च स्वरूपाभावात् न चाक्षुष इति वाच्यम् । नीलं नभ इति प्रत्ययेन रूपवत्त्वादिति चेत् । सुरशिखरिगतेन्द्रनीलमणिप्रभाया एव तत्र भानात् । न चैवं नभसि तद्धानानुपपत्तिः, तत्रैवारोपात् । न चास्य भ्रमस्य चाक्षुषत्वे नभोविशेष्यकत्वानुपपत्तिः बहिरिन्द्रियजबोधे विशेष्ययोग्यतायाःतन्त्रत्वादिति वाच्यम् । बहिरिन्द्रियजबोधे उपनीतस्य विशेषणतया भाननियमेऽपि नभसि नीलिमेति प्रत्ययोत्तरं नीलमत्र इति मानसप्रत्ययस्य सत्त्वात् चक्षुरनुविद्यमानस्य नैल्यग्रह उपक्षयात् । यथा प्रमेयमित्यादिप्रत्यक्षे सामान्यप्रत्यासत्तिसत्त्वेनायोग्यस्यापि विशेष्यतया भानं तथा ज्ञानप्रत्यासत्तावपि विशेष्यतया भाने को विरोधः? ज्ञानप्रत्यासत्त्या बहिरिन्द्रियं विशेषणतयैव भासत इत्यत्र बीजाभावात् । न च विशेषणज्ञानस्य वृत्तत्वात् सविशेषणक एव बोध इति वाच्यम् । मानसेऽपि तथापत्तेः । ज्ञातत्वेऽपि विशेष्यविशेषणभावनियामकस्यादृष्टस्यैवोचितत्वात् मानसे तथैव वक्तव्यत्वात् । नभसस्तु नीलत्वे सन्निकृष्टेऽपि नैल्यप्रत्ययापत्तिः । आलोकस्याभिभावकत्वे दूरेऽपि तदनापत्तिः । तस्मात् नीरूपमेव नभस्तथाच न चाक्षुषद्रव्यमिति सिद्धम् ।

परे तु इह पक्षी नेह पक्षीति चाक्षुषवैतस्याधारतया काशत इति निखिलपरीक्षकसाक्षिकमाधारान्तरस्य बाधितत्वात्, तथाच नभोभिन्नद्रव्यचाक्षुषे रूपत्वं प्रयोजकमिति अनन्यगत्याऽऽयातीत्याहुः।

अत्राचार्याः आलोकमण्डलस्यान्यत्रगमने तत्र पक्षिगमनोमत्रैव(?) पक्षीति व्यवहारापत्तिः पक्षिणस्तत्रैव स्थितौ पूर्वालोकमण्डलस्यान्यत्र गमने तत्रैव पक्षीतिव्यवहारानापत्तिश्च । न चाधिकरणसाजात्यमादाय तथा, आलोकाभावेऽपि इह पक्षीत्यादिप्रतीतेः प्रमातृमात्रप्रमितत्वात् । तस्मान्नालोकमादाय पक्षीत्यादिप्रथा, अपि तु मूर्ताभावमादाय । न चालोकादेर्विद्यमानत्वात् कथं मूर्ताभावस्तत्रेति वाच्यम् । निबिडमूर्ताभावस्याधारत्वात् । न च मूर्ताभावस्यैकतयाऽन्यत्र गतेऽपि पतत्रिणि तत्रैव पक्षीति प्रत्यक्षापत्तिरिति वाच्यम् । भूभागविशेषोऽर्द्धदेशावच्छिन्नमूर्ताभावस्याधारत्वेन प्रतीत्या तस्य चान्यत्राभावात्, आकाशस्तु नाधारतया प्रतीयते तस्य व्यापकतया देशाभेदेऽपि तत्रैव पक्षीति प्रत्ययापत्तिः । न चाकाशभागस्तथा, त-

स्य व्यापकत्वे तद्दोषतादवस्थ्यात् , अव्यापकत्वे मूर्ततया सह पतत्रिणाऽन्यत्रगमनेतु तत्रैवेति प्रत्ययापत्तेः। नन्व वे(?)तिप्रत्ययानुरोधेन तस्य भागस्य कल्पने धर्मिग्राहकमानेन तस्य मूर्तस्याप्यवगतेः सिद्धिर्दूषणानां सिद्धिपराहतत्वादिति वाच्यम् । एतादृशभागकल्पने प्रमाणाभावात् नभसो निरवयवत्वेन निर्भागत्वात् प्रतीतेरन्यथैवोपपत्तेरित्याहुः ।

अत्र वयम् । मूर्ताभावस्य पक्ष्याधारत्वे मानाभावः, तदधोभागस्थिते पटे घटे पट इत्येव प्रतीयते न तु घटत्वे पट इति । तथा न जातिराधार इतिवत् भूतले घटाभाववति पटसत्त्वे भूतले पट इत्येव प्रतीयते न तु घटाभावे पट इतीति न्यायसाम्यात् । तस्मादिहेति सामान्याकारया प्रतीत्या न मूर्ताभावस्याधारत्वमिति । नाप्याकाशस्य, तस्यापि पक्ष्याद्याधारत्वे मानाभावात्, अन्यथा तस्यापि सर्वाधारत्वेन परिगणनानापत्तेः। आकाशे पक्षीति प्रत्ययात्तथेति चेत् । तर्हि स एवोपनीत इह पक्षीति प्रत्यक्षे भासतां किमित्यरूपस्य प्रत्यक्षत्वाऽङ्गीकार इति न मूर्ताभावस्य सर्वाधारतास्वीकारः ।

वस्तुतस्तु सर्वाधारत्वेनावधारितयोर्दिक्कालयोर्मध्ये इदानीमित्यादिप्रत्ययविलक्षणतया कालमुपेक्ष्य दिशमेवेहेति प्रत्ययः प्रकाशयति । तस्य व्यापकत्वेऽपि मूर्ताभावस्यैवावच्छेदकविशेषण व्यवच्छेद इति, अन्यथाऽऽकाशचाक्षुषतापक्षेऽपि तस्य व्यापकतामाश्रित्य समाधेयतापत्तेः ।

परमार्थतस्तु नभसः सर्वाधारत्वे सर्वकारणतापि स्यात् । न चोत्पत्स्यनाश्रयत्वात न तथा, नभसि पक्षिणोः संयोग उत्पन्न इति प्रत्ययात् । न चासौ भ्रमः, आकाशे पक्षीत्यादिप्रत्ययस्यापि तथात्वापत्तेरित्याद्यालोचयामः ।

शब्दस्तावन्न सामान्याद्यात्मकः, कार्यत्वस्योत्पन्नः कोलाहल इत्यादिबुद्धिसिद्धत्वादिति हेतुः । प्रत्यक्षश्च शब्दस्य स इति नासिद्धिः। बाह्यपदश्चेन्द्रियस्य विशेषणं नातो मनसापि ग्रहादसिद्धिः । न चैकमात्रेन्द्रियग्राह्ये प्रभाकर्मणि व्यभिचारः, प्रभाया अपि उक्तनयेनाप्रत्यक्षतया तत्कर्मणोप्यप्रत्यक्षत्वात । एवं प्रत्यक्षस्य शब्दस्य कर्मभिन्नत्वे सिद्धे तदृष्टान्तेन शब्दत्वहेतुम·

तीन्द्रियस्यापि कर्मभिन्नत्वमनुमेयम् । नाप्यभावो निःप्रतियोगिक-
त्वात् । निःप्रतियोगिकत्वं च सप्रतियोगिकत्वेन कदाप्यनुल्लेखात् ।
न द्रव्यं रूपाग्राहकेन्द्रियवेद्यत्वात् रसवत् सामान्यगुणस्याश्रयाग्राह-
केनेन्द्रियेणाग्रहणादिति परिशेषेण विशेषगुणत्वे सिद्धे स्पर्शवद्द्र-
व्यस्य तत्प्रतिषिध्यते—शब्दो न स्पर्शवत्विशेषगुण इति । अत्र हे-
तुः प्रत्यक्षत्वे इति । साध्ये यदि प्रतियोगिनि विशेषपदं नोपादी-
येत तदा घटपटद्वित्वे व्यभिचारः, यदि स्पर्शवत्पदन्नोपादीयते तदा
सुखादौ । हेतौ प्रत्यक्षत्वे सतीत्यनुपादाने परमाणुगुणैर्व्यभिचारः ।
प्रत्यक्षत्वादित्युक्तौ घटरूपादौ । कारणगुणपूर्वकत्वे हि संख्यादि-
शब्दानां संख्याद्युत्पत्त्यनन्तरमेव तत्र शब्दः प्रतीयेत रूपादिवत
कारणप्रक्रमेण तत्रोत्पादविलम्बाभावात् । न चोत्पद्यत एव भ-
वदभिमतोत्पादकस्य तु व्यञ्जकत्वस्याभावान् न प्रतीयते इति
वाच्यम । दण्डादिसंयोगस्य व्यञ्जकत्वे तदपगमे शब्दोपलम्भानाप-
त्तेः, उपलभ्यते हि दण्डादिसंयोगविगमेऽपि शब्दः । उत्पादकत्वे तु तद-
पगमेऽपि उपलंभ उपपद्यते एव । किञ्च वर्णानां स्पर्शवद्गुणत्वपक्षे
मुखमाधारो वाच्यो व्यंग्यत्वे च तेषामेकव्यञ्जकसत्त्वे सर्वेषामु-
पलम्भप्रसङ्गः । न च प्रतिनियतव्यञ्जकव्यंग्यत्वात नैकाभिव्यक्तिस-
मये पराभिव्यक्तिरिति वाच्यम् । तथाहि वर्णा न प्रतिनियतव्यञ्जकव्यं-
ग्या अन्यूनानतिरिक्तदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्वपरि-
माणवदित्यनुमानात् । अत्र सत्यन्तमात्रे घटरूपरसयोर्व्यभिचारश्चक्षुर-
सनलक्षणप्रतिनियतव्यञ्जकव्यंग्यत्वात्, समानेन्द्रियग्राह्यत्वाभावाच्च
विशिष्टे हेतौ न व्यभिचारः । सत्त्वयोर्व्यभिचारवारणाय सत्यन्तम् ।
तयोर्गुणवत्त्वव्यक्तिमात्रलक्षणप्रतिनियतव्यञ्जकव्यंग्यत्वेऽपि द्रव्यमात्र-
वृत्तित्वेन द्रव्यादिवृत्तित्वेन च न्यूनातिरिक्तदेशवृत्तित्वादिति । इदानी-
मेकधर्मिकयोर्भिन्नकालोत्पन्नयोर्द्वित्वयोर्व्यभिचारो भिन्नचक्षुःसंयोगघ-
टितसमवायव्यञ्जकत्वात्, एकवस्तुप्रतियोगिकयोर्मूलशाखावच्छिन्न-
संयोगयोश्च व्यभिचारः—तत्र तदवच्छिन्नभिन्नचक्षुःसंयोगव्यंग्यत्वात्
तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वस्य न्यूनवृ-
त्तित्वस्य तदवच्छिन्नप्रतियोगिताकान्योन्याभावसमानाधिकरण-
त्वस्याधिकवृत्तित्वस्य चाभावेनान्यूनानतिरिक्तदेशवृत्तित्वात् समा-
नेन्द्रियग्राह्यत्वाच्च हेतुसत्त्वादिति चेत् । न । एकावच्छेदेनेति विशेष-

णप्रक्षेपाद्वित्वयोः काललक्षणावच्छेदकभेदात् संयोगयोः शाखादि-लक्षणावच्छेदकसत्त्वात् । नन्वेवमेकावच्छेदेन विद्यमानत्वे सति समानेन्द्रियग्राह्यत्वादित्येव हेतुरस्तु व्यर्थमन्यूनानतिरिक्तदे-शत्वमिति चेन्न । शाखावच्छिन्नयोः श्येनतच्चरणसंयोगयो-र्व्यभिचारात् तच्चरणसंयोगयोः चक्षुःप्रतियोगिकयोर्भिन्नयोः संयुक्तसमवायघटकत्वेन व्यञ्जकत्वात् उक्तविशेषणोपादाने च न व्यभिचारो निरुक्तन्यूनातिरिक्तदेशवृत्तित्वात् । न चार्द्ध-निखातवंशपरिमाणैकत्वयोर्व्यभिचारः एकत्वग्रहणे एकत्वव्यञ्जकस्य परिमाणाव्यञ्जकत्वात् इति वाच्यम् । परस्परव्यभिचारिव्यञ्जक-स्य व्यंग्यत्वाभावेन घटादिना दण्डस्य संयोगजन्यत्वे सिद्धे सिद्ध-मकारणगुणपूर्वकत्वमिति । न च यस्याग्निसंयोगेन परमाणौ रूपा-द्युत्पत्तिस्तत्कारणगुणप्रक्रमेणान्त्यावयविनि तथा वाय्वादिसंयोगेन शङ्खादौ शब्दोत्पत्तिरपि स्यादिति वाच्यम् । पार्थिवविशेषगुणस्य स-र्वस्य पाकप्रयोज्यत्वानियमात् । तथा च शब्दो न पृथिवी-विशेषगुणः पाकाप्रयोज्यत्वात् । न च दवदहनदह्यमानविपिनादे-र्भागासिद्धिः, शब्दान्तरं पक्षीकृत्य प्रकृतानुमाने तत्पक्षीकृत्य तद्दृष्टा-न्तेन पृथिवीगुणत्वाभावसाधनात्, तत्र च शब्दत्वस्यैव हेतुत्वात् । एवं चैतस्य दृष्टान्तत्वेन जलादिवृत्तित्वेन शङ्कितशब्दानामथ ते शब्दा न स्पर्शवद्विशेषगुणाः शब्दत्वात् प्रकृतशब्दवदित्यनुमानविषयते-ति हृदयम् ।

द्वितीयो हेतुः प्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वादिति ! अत्र परमाणुगुणानां पाकनाश्यतया व्यभिचारवारणाय प्रत्यक्षत्वे स-तीति । घटादिद्वित्वाभावे द्वावेव तद्वारणाय सुखादौ (?) साध्यप्रति-योगिविशेषणेषु पूर्वोक्तो न्यायः । तृतीयो हेतुराश्रयादन्यत्रोपलब्धे-श्च इति । शब्दो न शङ्खादिविशेषगुणः शङ्खाद्यसम्बद्धेन्द्रियग्राह्यत्वात् सुखवत् । अत्र साध्ये विशेषपदस्य न कृत्यम् । अक्षरार्थस्त्वाश्रयादाश्र-यत्वेनाभिमताच्छङ्खादेरन्यत्र दूरस्थितेनेन्द्रियेणोपलम्भादिति शङ्खा-नां हीन्द्रियेण संयुक्तसमवायेन ग्रहणम्, न च दूरस्थयोः संयोगः सम्भवतीति भावः । एवं शङ्खादीनां गुणो न भवति शङ्खाद्यवयव-गुणापूर्वकत्वात् शङ्खादिषु सत्सु निवृत्तेश्चेति सिद्धम् । ननु आ-काशगुणत्वेऽपि भेर्याद्यवच्छेदेनोत्पन्नशब्दः कथं गृह्यते श्रवणास-

म्बन्धादिति चेत् । वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा यः शब्दः कर्णशष्कुल्यवच्छिन्ने नभस्युत्पन्नस्तस्यैव परिच्छेदात् । यस्तु तत्रैव प्रथममुत्पन्नस्तत्र नानयोर्न्याययोः प्रचारः । अनयोश्च न्याययो-र्व्यवस्थितो विकल्पः । प्रागभावपवनयोरैक्ये वीचीतरङ्गन्यायः तद्भे-दे तु कदम्बगोलकन्यायः । ननु वायुगुण एव भवतु शब्दः, तथाच तत्र कारणगुणपूर्वकत्वं यावद्द्रव्यभावित्वम् श्रवसः सम्बन्धश्च सम्भाव्यते इति चेत् । श्रोत्रस्य रूपादिषु यद् बहिरिन्द्रियं यद्गुण-ग्राहकं तद्गुणवदिति व्याप्त्या शब्दवत्त्वे शब्दस्य वायवीयत्वे वाय-वीयत्वापत्तौ त्वगिन्द्रियाभेदप्राप्तौ स्पर्शशब्दग्राहकत्वे नानार्थत्वापत्तौ बाह्यताकोप एकप्रकृतिकत्वेऽपि अदृष्टवैचित्र्यात् त्वक्श्रवसोर्भेदे सर्वेन्द्रियाणामेकप्रकृतिरिति दिक् ।

आत्मगुणत्वाभावं साधयति बाह्येति । गन्धादिविलक्षणानामा-त्मगुणानामान्तरत्वादित्यर्थः । अपि च नात्मगुणः आत्मान्यसमवा-यात् गन्धादिवत् । तत्रासिद्धिशङ्कायामाह आत्मान्तरग्राह्यत्वा-दिति । आत्मान्तरात्मनोन्तर्मध्ये आत्मन्यग्राह्यत्वादात्मगुणाना-मात्मनि ग्रहणात् । अत्राप्यसिद्धिसम्भावनायामाह अहङ्कारे-णेति । अहंत्वसामानाधिकरण्येन अप्रतीयमानत्वात् इत्यर्थः । वीणा वाद्यते इत्याद्यनुभवादहं वाद्य इत्याद्यननुभवाच्च अहन्त्वसा-मानाधिकरण्येनाप्रतीयमानत्वात् तत्तदात्मन्यसमवायः तत आत्म-गुणत्वाभाव इति भावः । ननु अहं वदामीति व्यवहारादहन्त्वसा-मानाधिकरण्यं तत्र प्रतीयत एवेति चेन्न । कृतावेव तत्प्रत्यायकत्व-स्य तत्र प्रतीतेः कृतेरेव प्रत्ययात् । दिगादिगुणत्वं वारयति श्रोत्रपदस-मभिव्याहारेण ग्राह्यत्वादित्यनेन प्रत्यक्षत्वं प्राप्यते । तथा च न दि-गादिगुणः शब्दः प्रत्यक्षत्वादित्यनुमानम् । विशेषगुणाभावात् इति भा-ष्यपाठानुरोधेन न दिक्कालमनसामिति वाक्यशेषो शेषाद्यैराचार्यै-रुक्तः तत्र च वैयधिकरण्यविशेषगुणाशङ्कया शब्दो न दिक्कालमनो-गुणो विशेषगुणत्वात् इत्युक्तम् । पारिशेष्यादिति । ननु पारिशेषेण तदाश्रयाष्टद्रव्यातिरिक्तत्वं सिद्ध्यतु द्रव्यत्वसिद्धिस्तस्य कुत इत्य-त आह गुणो भूत्वेति । शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानोत्तरं द्रव्याश्रितशब्दोऽष्टद्रव्यातिरिक्ताश्रितोऽष्टद्रव्यानाश्रितत्वात् इत्य-नुमानेनाष्टद्रव्याश्रितत्वं सिद्ध्यतीत्यर्थः । यद्वा प्रथमानुमानानन्तरं

शब्दाश्रयो द्रव्यमष्टद्रव्यातिरिक्तं तदवृत्तिधर्मवत्त्वादित्यनुमानो-त्तरमष्टद्रव्यातिरिक्तद्रव्यसिद्धौ शब्दो अष्टद्रव्यातिरिक्तद्रव्याश्रितो-ऽष्टद्रव्यानाश्रितत्वे सति गुणत्वात् , यन्नैवं तन्नैवं यथा गन्धादिरि-ति व्यतिरेकीति भावः। स चाकाशः पृथिव्यादिवन्न नानेत्याह शब्देति। शब्देन हि आकाशः सिद्ध्यति, स चैकेनापि विभुना सर्वत्रोपपद्य-त इत्यनेकसिद्धिगौरवापहतेत्यर्थः । नन्वेकेनाकाशेनोत्पत्तिः तस्य परममहत्त्वे स्यात् तदेव कुतः इत्यत आह विभवेति। विभववान् महानाकाशस्तथाचात्मेति सूत्रादित्यर्थः।सर्वमूर्तसंयोगित्वरूपविभुत्वेन तस्य परममहत्त्वं सिद्ध्यतीति सूत्रार्थः। विभुत्वसिद्धिस्तु स्पर्शशून्य-द्रव्यत्वादित्याशयः । मनोभिन्नत्वे सतीत्यपि विशेषणात्, तेन न मनसि व्यभिचारः। परममहत्परिमाणमित्यस्य परममहत्त्वं परिमा-णमित्यर्थः। तेन विभिन्नपदत्वाभावः। परममहतः परिमाणमिति वा सामानाधिकरण्य एवाऽऽत्वविधानादित्याचार्याः। वर्धमानोपाध्या-यास्तु कर्मधारयेऽपि नात्वं महच्छब्दस्यैवाऽऽत्वविधानात्। अत्र तु तदन्तस्य परममहच्छब्दस्य विद्यमानत्वात्। तत्रैव विधौ तदन्तवि-धिः यत्रोत्तरपदापेक्षाया अभावात् आनास्ति यथा जराशब्दस्य ज-रसादेशे तत्र जराशब्द इव तदन्ते जराशब्देऽपि तदादेशसत्त्वात् अत्र विधौ उत्तरपदापेक्षाया अभावादात्वविधौ तु सापि(?)नहि केवलस्य महच्छब्दस्याऽऽत्वं विधत्ते। किन्तु सोत्तरपदस्य, नहि यथा महाघट इति भवति तथा महेति। उत्तरपदानपेक्षायामपि तद्विधौ 'इष्टकेषी-कामालानां चिततूलभारिषु (पा०अ०६-आ०३सू०६५) इत्यत्र विशे-ष्य तदन्तविधिविधानवैयर्थ्यप्रसङ्गः। तस्मादुत्तरपदसापेक्षतयाऽत्र तदन्तविधौ व्युदस्ते प्रतिप्रसवतया विशेषविधानं घटते। तदन्त-विधेः सार्वत्रिकत्वे तु विघटितं भवति । ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति परिभाषया प्रकटमेवोत्तरपदापेक्षया तदन्तवि-धिव्यासेधादित्यभिप्रायकमाहुः।

अयमत्र प्रघट्टकतात्पर्यार्थो द्रव्यत्वेन तावत्संख्यापृथक्त्वपरिमा-णानि प्राप्तानि तत्र च नानात्वे गौरवापत्त्या एकतायामागताया-मणुत्वतो दश दिक्षु युगपच्छब्दोत्पादकत्वानुपपत्त्या महत्त्वसि-द्धौ पृथिव्यादिवदपकृष्टमहत्त्वसत्त्वे नित्यत्वापत्तौ कार्यकारणभे-दे नानात्वक्षत्याऽनन्यगत्या परममहत्त्वमहतामिति। एवं चात्मदृष्टान्तेन

कथं परममहत्त्वं सिद्ध्येत् । न च प्रत्यक्षगुणवत्त्वानुरोधेन परममहत्ता तस्य महत्त्वमात्र एव विश्रामादिति रिक्तम्, तथा च लाघवादेकत्व-सिद्धिः । तदनुपपत्त्या चैकपृथक्परममहत्त्वयोः सिद्धिरिति संक्षेपः ।

यद्यपि विभववचनादेव संयोगः सिद्धः तस्मिंश्च सिद्धे विभागो-ऽपि तयोः समनियमात्, तथाप्युपायस्येति न्यायेनोपायान्तरमाह श-ब्देति । संयोगाद्विभागाच्छब्दाच्च शब्दस्य निष्पत्तिरिति सूत्रादित्यर्थः । द्वितीयादिर्हि शब्दः शब्दजः प्रथमं प्रत्यसमवायिकारणमपेक्षितं तच्च संयोगाद्येवेति भावः । एवं च संख्यादिषु विभागान्तेषु सिद्धेषु न व्यापकनिवृत्त्या धर्मिग्राहकप्रमाणसिद्धस्य द्रव्यत्वस्य निवृत्तिरि-त्याह अत इति । गुणवत्त्वात्–संख्यादिगुणवत्त्वात् । ननु द्रव्यस्य विभुद्रव्यत्वं वक्तव्यम् तच्चानाश्रितत्वव्याप्यं, न च तदस्तीति व्या-पकनिवृत्त्या तन्निवृत्तिरत आह अनाश्रितत्वादिति । संख्यादिरूप-गुणसत्त्वाद् द्रव्यमनाश्रितत्वसत्त्वाच्च विभुद्रव्यं व्यापकनिवृत्तेर-भावादिति भावः । ननु द्रव्यत्वे नित्यत्वं स्यात् , न च तत्र प्रमाण-मस्तीत्यत आह समानेति । आकाशं प्रति आकाशान्तरं न कार-णम्, एकत्वेन तदभावात् । नापि विजातीयं, द्रव्यस्य विजाती-यसमवायिकारणत्वाभावादित्यर्थः । निष्कारणकभावस्य च नित्य-त्वं सिद्धमेवेति हृदयम् । शब्दाश्रयतया परार्थत्वं प्राप्तमेव शब्दा-ग्राहकतयात्या * * * अत्र पत्रत्रयं त्रुटिः (१)

( व्यो० ) इदानीमाकाशस्योद्देशवतो लक्षणपरीक्षार्थं प्रकरणम् ।

आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्तीति । एताश्च समुच्चयं विना आकाशादीनां लक्षणमित्याह आकाशं कालो दिगिति यथासंख्यम् । तथाहि–इतिशब्दस्य प्रत्येकम-भिसम्बन्धादाकाशमिति संज्ञा आकाशे काल इति काले दिक्संज्ञा दिशि न तिस्रोऽप्येकस्मिन्निति । अथ कस्मादिमाः पारिभाषिक्यः ?

---

(१) इत परं कालग्रन्थस्य कियदंशपर्यन्तं सेतुर्नोपलभ्यते मुख्यादर्शभूते एकमात्रे अलवरपुस्तकालयस्थसेतुपुस्तकप्रतिलिपौ-पत्रत्रयत्रुटिर्मध्य एव यथालिखिताऽस्ति तथैवात्र मुद्रितमन्य-स्मिंश्च काशिकराजकीयसरस्वतीभवनस्थेपि पुस्तके एवमेवोपलभ्यत इति सं० ।

द्रव्यगुणकर्मात्मकस्य निमित्तस्याभावात्। अथाऽऽकाशत्वादि सामा-न्यलक्षणं निमित्तं भविष्यतीत्याह अपरजात्यभाव इति। अपरा हि जातिः द्रव्यत्वापेक्षयाऽऽकाशत्वकालत्वदिक्त्वरूपा। सा तु न स-म्भवत्येव, आकाशादेरेकत्वात्सामान्यस्य च नानाधिष्ठानत्वादिति। नचाऽऽकाशादीनां पारिभाषिक्यः तिस्रः सञ्ज्ञा भवन्तीति साधर्म्या-भिधानं न सम्बद्धम्, वैधर्म्यावसरेण सञ्ज्ञानां परस्परव्यावृत्ततया वैधर्म्यरूपत्वादेकत्राभिधानं च शास्त्रस्य सङ्ग्रहरूपत्वादिति। तथा ऽऽचाकाशमितिसंज्ञा अनादिकालप्रवाहायत्ता नान्यत्र सम्भवतीत्य-साधारणत्वाल्लक्षणम्। एतच्च विशेषणमर्थाल्लभ्यते। तथा ह्याका-शमितरस्माद्भिद्यते अनादिकालप्रवाहायाताकाशशब्दवाच्यत्वात्,य-स्त्वितरस्मादनाकाशादेर्न भिद्यते, न चासावेवम्,यथा क्षित्यादि, न च तथाऽऽकाशस्तस्माद्भिद्यत इति। ननु पारिभाषिक्यः संज्ञा न सम्भ-वन्त्येव निमित्तचतुष्टयाभावस्यैव निमित्तत्वादिति चेत्। तथाहि-यत्र द्रव्यगुणकर्मसामान्यात्मकं निमित्तं न सम्भवति तत्रैव प्रवर्तते नान्य-त्रेति तदभावो निमित्तम्। नैतदेवम्। स्वानुरक्तप्रत्ययहेतोर्निमित्तस्यात्र विवक्षितत्वात्। यथा हि द्रव्यगुणसामान्यानुरक्तो दण्डीत्यादिव्यव-हारः तथा च नायमाकाशादिव्यवहारस्तदभावानुरक्त इति पारि-भाषिक्य एव। पूर्वं हि द्रव्याणां समवायित्वं चोक्तम्। तत्र कैर्गुणैः गुणवत् केषामुत्पत्तौ समवायिकारणं किञ्च गुणात्मकं लक्षणमित्या-ह-तस्य गुणाः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागा इति। एतैर्गुणैः गुणवदत्र केषांचिदुत्पत्तौ समवायिकारणं शब्दश्चासाधा-रणत्वाल्लक्षणमिति। ननु सर्वमेतदाश्रयासिद्धमाकाशसद्भावे प्रमाणाभावात्। न। प्रत्यक्षेणानुपलम्भेपि अनुमानेन सद्भावसिद्धेः। किमनुमानमित्याह शब्द इति। तथाहि-शब्दः क्वचिदाश्रितः गुण-त्वाद्यो यो गुणः स सः क्वचिदाश्रितो यथा रूपादिस्तथा चायं गुण-स्तस्मादाश्रित इत्यर्थः। अथ पृथिव्यादेर्गुणो भविष्यतीत्याह-न स्पर्शव-द्विशेषगुणः शब्दः अस्मदादिप्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्,यो योऽस्मदादिप्रत्यक्षत्वे सत्यकारणगुणपूर्वकः सस स्पर्शवतां विशेषगुणो न भवति यथा सुखादिस्तथाचायं यथोक्तसाधनस्तस्मात् स्पर्शवतां विशेषगुणो न भवतीति। ननु चात्र विशेषगुणप्रतिषेधे साध्ये सामान्यगुणप्राप्तिः विशेषप्रतिषेधस्य शेषाभ्यनुज्ञायां सामर्थ्योपल-

धेः, अथ सामान्यगुणप्रतिषेधस्तथापि विशेषगुणप्राप्तिरिति । नैतदेवम् । प्रतियोग्यपेक्षत्वात्पक्षादिव्यवस्थायाः । तथाहि-परेण क्षित्यादिविशेषगुणवत्त्वं शब्दस्याभ्युपगतं तस्यैव प्रतिषेधः, सामान्यगुणत्वञ्च नेष्टमेव । शेषाभ्यनुज्ञा तु यत्रोभयोः प्रमाणेन प्रसिद्धिः तत्रैकप्रतिषेधेऽन्यस्याप्रतिषिद्धस्यावस्थानम् । यथा दर्शनं सव्येतरचक्षुर्भ्यां संपाद्यं दृष्टमित्येकप्रतिषेधेऽन्यस्याप्रतिषेधादवस्थानमिति । न चैवं शब्दस्य क्षित्यादिसामान्यगुणत्वं परस्य सिद्धमित्यदूषणमेतत् । अत एव यद्यपि संयोगविभागादेरस्मदादिप्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वम् । तथापि स्पर्शवद्विशेषगुणत्वं नास्तीति सपक्षेऽन्तर्भावादनैकान्तिकत्वाभावः । रूपादयश्च विपक्षास्ते च कारणगुणपूर्वका इति साधनशून्या एव । तथापि पार्थिवपरमाणुरूपादयोऽकारणगुणपूर्वकाः स्पर्शवतां विशेषगुणाश्चेति व्यभिचारस्तदर्थमस्मदादिप्रत्यक्षत्वे सतीति विशेषणम् । ते तु योगिनामेव प्रत्यक्षा इति । अस्मदादिप्रतिपादनाय शास्त्रस्यारम्भादस्मदादिविशेषणं तु लभ्यते । अन्ये तु संयोगादिभिर्व्यभिचारपरिहाराय शेषाभ्यनुज्ञावाक्यदुद्धृत्य विशेषपदं हेतुपदेन सह सम्बन्धयन्ति । तथाहि-न स्पर्शवतां गुणः शब्दोऽस्मदादिप्रत्यक्षत्वे विशेषगुणत्वे च सत्यकारणगुणपूर्वकत्वात् सुखादिवत् । अत्र हि सामान्यतो विशेषयोगात् सामान्यप्रतिषेधाद्विशेषप्रतिषेधो भवत्येव, ब्राह्मणनिषेधाद्राजसनादिप्रतिषेधवदिति । अत्र च प्रतिज्ञावाक्ये समासान्तर्गतं पदं हेतुपदेन कथं सम्बध्यत इति चिन्त्यम् । नन्वकारणगुणपूर्वकत्वादिति हेतुरसिद्धः परदृष्ट्या संयोगाद्विभागाच्छब्दाच्च कारणगुणाच्छब्दस्य नित्यत्वाभ्युपगमात्, तथाहि-शब्दस्य कारणमाकाशं तद्गुणाश्च संयोगादयः कारणगुणास्ते कारणमस्येति कारणगुणपूर्वकत्वम् । नैवम् । अभिप्रायापरिज्ञानात् । तथा चायमर्थो विवक्षितः । समवायिकारणेषु गुणाः कारणगुणास्ते पूर्वं कारणं यस्य गुणस्य असौ कारणगुणपूर्वको यथा पटरूपादिस्तन्तुरूपादिपूर्वक इति । न चैवं शब्दस्याकाशस्याकार्यत्वेन समवायिकारणगुणाभावादिति । अथ स्वदृष्ट्या कारणगुणपूर्वकत्वम्, तथा च भेरीशब्दस्तदवयवशब्दपूर्वकस्तथा शङ्खशब्दश्चेति । न । तेषामनुपलम्भात्, तथाहि-शङ्खशब्दकाले शङ्खावयवशब्दा नानुभूयन्त इति, यथा पटरूपानुभव-

काले तन्तुरूपाणामनुभव इति । अथाभिभूतत्वादनुपलम्भः, तन्नास्तित्वे प्रमाणाभावात्। तथाहि-तदवयवशब्दाश्चिरोत्पन्ना एवावयविनि शब्दमारभन्त इति न प्रमाणमस्ति । यदि वाऽवयवशब्दानामवयविशब्दैरभिभूतत्वात् विद्यमानानामप्यनुपलम्भस्तदभावे सति तदुपलम्भः स्यात्, रासभशब्दाभावे वीणाशब्दस्येव । यथाहि वाद्यमानायां वीणायां रासभसन्निधौ विद्यमानस्यापि वीणाशब्दस्याभिभवादनुपलम्भः पुनः अभिभावकाभावात् उपलम्भो दृष्टो, न चैवम् अवयविशब्दाग्रहेऽपि अवयवशब्दानामस्ति संवेदनम् । न च कारणगुणपूर्वकेषु कारणाभिभावकत्वं दृष्टं तथा शब्दाभिभवेपीति तु शब्दस्य ग्रहणात् मन्दस्याग्रहणमिति । न चावयविशब्दोपलम्भकाल एव अवयवशब्दानामग्रहणं पूर्वमपि अनुपलम्भात् । यावद्द्रव्यभावित्वं च कारणगुणपूर्वकानाम् । न च सत्कार्यवादबलेनावयवावयविशब्दानां सद्भावेपि व्यञ्जकाभावादनुपलम्भ इति वाच्यम् । तन्निषेधस्य वक्ष्यमाणत्वात् । न चावयवशब्दानामवयविशब्दवैलक्षण्यादसमवायित्वं वाच्यम् । तस्य हि समानजातीयेष्वत्यन्तविजातीयेषु च दर्शनात् । यथाहि कारणगताद्रूपाच्छुक्लतमात् कार्ये तथाभूतं रूपमेवं रसादिष्वपीति । तथाऽत्यन्तविजातीयस्यासमवायिकारणत्वम् । यथा प्रचयाख्यः संयोगः संख्या च परिमाणोत्पत्तौ । न चैवं शब्दः, तथाहि-भेरीशब्दो गंभीरस्तदवयवशब्दाश्च तद्विधर्माण इत्येवं शङ्खादिशब्देष्वप्यूह्यम् । न च सर्वस्य सुखदुःखमोहात्मकत्वात् सुखादिदृष्टान्तात् साध्यसाधनमिति मन्तव्यम् । प्रधानवादप्रतिषेधात् । सुखादीनां च आत्मगुणत्वात् । तथा न स्पर्शवतां विशेषगुणः शब्दोऽस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वात् । यो योऽस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावी स स स्पर्शवतां विशेषगुणो न भवति, यथा सुखादिः, तथा चायमस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावी तस्मान्न स्पर्शवतां विशेषगुण इति । ये च स्पर्शवतां विशेषगुणाः तेऽस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभाविनो यथा रूपादयः । अत्रापि पार्थिवपरमाणुरूपादिव्यवच्छेदार्थमस्मदादिप्रत्यक्षत्वे सतीति पदम् । न च संयोगादिभिर्व्यभिचारः, पूर्वोक्तन्यायात् । नापि यावद्द्रव्यभावित्वम् शब्दस्य, रूपादिवदप्रतीयमानत्वात् । तथाऽऽश्रयादन्यत्रोपलब्धेश्चेति हेत्वन्तरञ्च समुच्चये, न परं पूर्वोक्ताभ्यामाश्रयादन्यत्रो-

पलब्धेश्च न स्पर्शवद्विशेषगुणः शब्द इति । ननु शब्दस्य यथाऽऽका-
शमाश्रयस्तस्मादन्यत्रोपलब्धिरसिद्धा तत्रैवोपलम्भात् । न । पराभ्यु
पगमेन भेर्यादेराश्रयशब्देनाभिधानात् । तथाहि—भेरीशब्दस्तद्गुणो
न भवति ततोऽन्यत्रोपलभ्यमानत्वात्, यो यस्ततोऽन्यत्रोपलभ्यते
स स तद्गुणो न भवति, यथा सुखादिः, यश्च तद्गुणः स
तत्रैवोपलभ्यते यथा रूपादिः, न च तथा शब्दस्तस्मात् तद्गुणो
न भवतीति । नन्वसिद्धमेतत् शब्दस्य तत्रैवोपलम्भात् । तथा-
हि—भेर्यां शब्द इति प्रतिभासो दृष्टो रूपवत्, न चान्यथा भवितु-
मर्हतीति । न च श्रोत्रस्य तत्रासन्निधानमहङ्कारिकत्वेन व्यापकस्य तत्र
सद्भावात् । नापि सर्वशब्दानामुपलब्धिप्रसङ्गः, अदृष्टवशेन नियत
देश एव वृत्तेरात्मलाभादिति । अव्यापकस्य च वा तद्देशं यावत्परि-
माणाभ्युपगमः । यत्र चाश्रयप्रतिभासाभावः तत्र शब्दस्यैव स्वाश्रय-
परिमाणद्वारेण श्रोत्रदेशमागमनम् । तदेतदसाम्प्रतम् । इह भेर्यां
शब्द इति प्रतिभासस्य सन्तानानुमानद्वारेणाधिष्ठानदेश एव प्रतिभा-
सात् । ननु चात्र विशेषहेतोरभावान्निश्चयाभाव एव, किम् तत्स्थ-
स्यैव शब्दस्योपलम्भः सन्तानानुमितस्य वेति । न तत्स्थस्यैवो-
पलम्भः, क्वचिदाश्रयवियुक्तस्यापि श्रोत्रदेशे प्रतिभासात् । न चैवं
स्पर्शवतां गुणाश्चाश्रयवियुक्ता गृह्यन्त इति नासिद्धत्वं हेतोः । अथ
स्पर्शवद्गुणत्वेऽपि गन्धस्येव तदाश्रयागमनात् उपलम्भो भविष्य-
तीति चेत् । न । गन्धस्य स्पर्शवत्गुणत्वप्रसिद्धावाश्रयाविच्छेदेन
घ्राणाधिष्ठानदेश एव प्रतिभासात् सूक्ष्मस्य तदाधारस्यागमनं
युक्तम् । न चैवं शब्दस्य तथा सूक्ष्मद्रव्याधारस्य भेरीशब्दस्याग-
मनमेव न युक्तम्, भेर्यां समवेतस्योत्पादात् । न ह्यन्यत्र समवेत-
मन्यत्र समवैतीति । समवेत्यवादेन त्वागमनेपि तदवयवशब्दा भेरी-
शब्दाश्चेति प्रतिभास एव प्रसङ्गः, सूक्ष्मद्रव्यसमवायस्याविशेषात् ।
तथा भेरीदण्डाभिघाताद्भेर्यामुत्पन्नः शब्दो नागच्छत्येवाश्रयस्य तत्रा-
वस्थानात् । तदवयवेषु च सूक्ष्मेषु ये जाताः शब्दास्तदाश्रयस्याग-
मनात् आगच्छन्तीत्यभ्युपगमे भेर्यादिगम्भीरध्वनेरश्रवणमेव स्यात् ।
न चाहङ्कारिकत्वाद् व्यापकस्य भेर्यादिदेशे वृत्तिर्घटत इति मन्तव्यम् ।
पूर्वमेवाहङ्कारिकत्वप्रतिषेधात् । न च श्रोत्रेण भेर्यादिदेशग्रहणम् सं-
भवतीति तदवच्छेदेन शब्दस्य ग्रहणाभावप्रसङ्गः । अथ प्रसिद्धसमय-

स्य शब्दश्रवणादाश्रयानुमाने सत्ययं भेरीशब्द इत्यवच्छेदेन प्रतिभासत इति चेत्। आयातस्तर्हि मदीयं पन्थानम्। कथम्? शब्दश्रवणात् सन्तानद्वारेणाश्रयानुमिताविह भेर्यां शब्द इति प्रतिभासाभ्युपगमात्। तदेवमाश्रयादन्यत्रोपलभ्यमानत्वाच्च स्पर्शवद्विशेषगुणः शब्द इति सिद्धम्। तथैकस्मिन्नेव वाद्ये वाद्यमाने बहूनां षड्जादिभेदानामुपलम्भाच्च तद्गुणत्वम्। तथाहि-यदाऽऽतोद्यगुणः स्याच्छब्दः कथं बहूनां शब्दानां समानेन्द्रियग्राह्याणामविभुनि द्रव्ये सद्भावः स्यात्। अथ चित्ररूपवदेतत्स्यात्। न। तत्रैकरूपस्यारम्भात्। तथाहि-नानारूपाण्येकं कार्यमारम्भन्त इत्युक्तम्। नचैवं नानाशब्दैरेकः शब्द आरभ्यमाणो दृष्ट इति। न चात्र चित्ररूपवदेकस्मिन् काले चित्रशब्दप्रतिभासः सम्भवति, क्रमेण प्रतिभासनात्। तथा रूपादिवच्चित्रोत्पादेऽभ्युपगते युगपदुपलब्धिप्रसङ्गः। न च क्रमेणाभिव्यक्तिः, सद्भावे प्रमाणाभावादित्युक्तत्वात्। संयोगाच्च क्रमेणोत्पत्त्यभ्युपगमे शब्दस्य न स्पर्शवद्विशेषगुणत्वं तद्वैधर्म्यादित्यलमतिविस्तरेण।

ननु चात्र हेतूपन्यासानन्तरं प्रतिज्ञोपन्यासादवयवव्यत्यये किं प्रयोजनम्। शास्त्रे नायं नियम इत्युपदर्शनमेव। तथा ह्यवयवविपर्यासवचनमप्राप्तकालं नाम निग्रहस्थानं जल्प एव न शास्त्रे इत्युपदर्शयति। उदाहरणाद्यवयवलाभार्थमित्यन्ये। तच्चैतद्व्यत्ययं विनाप्यर्थकथनादेव, तस्यानेकधाभ्युपगमात्। नन्वेकेनैव प्रमाणेनार्थस्य परिच्छेदादेकस्मिन्नर्थेऽनेकहेतूपन्यासो व्यर्थ एव। यदि वा प्रमाणान्तरोपन्यासोऽन्यथानुपपत्त्या ज्ञायते—न प्राक्तनस्यार्थपरिच्छेदे सामर्थ्यमपूर्वार्थपरिच्छेदकत्वं वा, अधिगतार्थस्यानुवादकत्वात्। तथा ह्यधिगतेऽप्यर्थे प्रमाणान्तरप्रवृत्तावविश्रामप्रसङ्गः। तस्मादन्योन्यव्यावृत्तविषयत्वात् प्रमाणानामनेकहेतूपन्यासो परिज्ञानायैव। नैतदेवम्। सर्वत्र व्यवस्थानभ्युपगमात्। तथा ह्येकस्मिन्नेवार्थेऽनेकोपायदर्शनं शास्त्रे न दोषाय, तस्य हि परानुग्राहकत्वात्। तथा विभिन्नाभिप्रायाः प्रतिपाद्या इत्यनेकहेतूपन्यासात्। कश्चित् केनचिदल्पप्रयासेनैव प्रतिपद्यते इति। न चात्र कस्यचिदप्रामाण्यम्, सर्वेषामपि प्रमाजनकत्वात्। न च प्रमाणपरंपराप्रसङ्गः, परिच्छिन्नेऽप्यर्थेऽवश्यं प्रमाणान्तरोपन्यासानभ्युपगमात्। तथाहि-यत्र प्रमाणान्तरसद्भावः तत्रैव तदपेक्षा, न तदभावेपीति। यथा शब्देनाऽवगते-

ऽनुमानेनापि बुभुत्सिते अनुमानेनाप्यधिगते प्रत्यक्षेणेति । तथा प्रत्यक्षेऽप्येकेन करणेनोपलब्धेः पुनः करणान्तरेणेति । तथा एकस्मिन् सुखसाधनेऽर्थेऽनेकप्रमाणप्रवृत्तौ सुखातिशयश्च प्रयोजनमिति । न चानधिगतार्थगन्तृत्वं प्रमाणसामान्यलक्षणम्, प्रत्यभिज्ञानादेरप्रामाण्यप्रसङ्गात् । तथाह्यधिगत एवार्थे प्रत्यभिज्ञानमनुमानं च प्रवर्तत इति वक्ष्यामः । अथैकदेशवृत्तिविशेषगुणत्वात् क्षणिकविशेषगुणत्वाच्च सुखादिवदात्मगुणो भविष्यतीत्याह—न बाह्येन्द्रियप्रत्यक्षत्वादित्यादि । अथ प्राक्तनानुमानस्य निर्दुष्टतायामनुमान्तरस्यानुत्थानमेव । नात्मगुणत्वे सति शब्दस्य श्रोत्रेणापरिच्छेदादाश्रयासिद्धत्वमनुमानयोः । तथाहि—श्रोत्रमात्मा न भवत्यकर्तृत्वात्, नाप्यन्तःकरणमेव श्रोत्रम् तस्य हि बहिःकरणत्वात् । अभ्युपगमे वा यावत् सुखाद्युपलब्धिः तावच्छब्दोपलब्ध्या भवितव्यमिति बाधिर्यन्न स्यात् । अथ शब्दग्रहणमन्तःकरणस्योपरतव्यापारात् । एवं तर्हि सुखादीनामग्रहणं स्यात्, न च करणं चक्षुराद्येकत्रोपरतव्यापारमन्यत्रार्थप्रकाशकं दृष्टम् । क्षित्यादिवायुपर्यन्तश्च श्रोत्रं न भवत्येव, घ्राणादिसंपादने सामर्थ्यावधारणात् । दिक्कालयोश्च श्रोत्ररूपता न भवत्येव, भौतिकत्वात् बाह्येन्द्रियाणाम् । पारिशेष्यादन्यच्छ्रोत्रम् । तेन त्वात्मगुणस्य शब्दस्याग्रहणमेव स्यादित्याश्रयासिद्धत्वम् । गृह्यते च बाह्येन्द्रियेण शब्दस्तस्मादात्मगुणो न भवतीति । तथाच शब्दो नात्मगुणो बाह्येन्द्रियप्रत्यक्षत्वात्, यो यो बाह्येन्द्रियप्रत्यक्षः स स आत्मगुणो न भवति, यथा रूपादि, तथा चायं तस्मादात्मगुणो न भवतीति । वैधर्म्येण तु सुखादयः । ततश्च नात्मगुणः शब्दः आत्मान्तरग्राह्यत्वात् रूपादिवत् । आत्मगुणाश्चात्मान्तरग्राह्या न भवन्ति सुखादयः । ननु शब्दस्यात्मान्तरग्राह्यत्वं व्यक्त्यपेक्षया न सम्भवत्येव । तथाहि—या शब्दव्यक्तिरेकस्मिन् श्रोत्रे समवेतोपजाता सा नान्यत्रेति । जात्यपेक्षया तु सुखादेरप्यात्मान्तरग्राह्यत्वादिति अनैकान्तिकत्वम् । नैतदेवम् । येनात्मना क्रियते शब्दः तस्मादन्येनापि गृह्यते, न चैवं सुखादिरिति, तथाहि—तीव्रतराभिघातादेका शब्दव्यक्तिर्महान्तमाकाशदेशं व्याप्योपजायत इत्यनेकैरुपलभ्यत एव । न चाव्याप्यवृत्तित्वेन विरोधः, स्वाश्रयाव्यापकत्वात् । न च सन्तानाभ्युपग-

मो निरुध्यते तीव्रतरादिभेदभिन्नानां शब्दानामुत्पत्त्यभ्युपगमात्। तथा ह्यस्ति तीव्रतराभिघातादेका शब्दव्यक्तिर्महान्तमाकाशदेशं कल्पितं व्याप्योपजायते। ततस्तीव्रतर इत्यादिक्रमेणानुभवात्। तथा व्यक्त्यपेक्षायामात्मान्तरग्राह्यत्वं न सम्भवतीति ब्रुवतः सन्तानाभ्युपगमादपसिद्धान्तप्रसङ्ग इति। न चेतोपि आत्मगुणः शब्द आत्मन्य समवेतत्वात्, रूपादिवत्,ये चात्मगुणाः ते तत्रैव समवेताः सुखादय इति। अथात्मन्यसमवेतत्वं साध्यम् न विशिष्यत इत्याह-अहङ्कारेण वियुक्तग्रहणादिति। तथाहि-नात्मनि समवेतः शब्दोऽहङ्कारेण वियुक्तत्वाद्रूपादिवत्। ते चात्मनिमित्तं विना न प्रवर्तन्त इति प्रयोगदर्शनादात्मोपकारित्वं निमित्तमिति कल्प्यते। अथ दिक्कालमनसां गुणा भविष्यतीति तन्निषेधार्थमाह श्रोत्रग्राह्यत्वादित्यादि। तथा च शब्दो न दिक्कालमनसां गुणः श्रोत्रग्राह्यत्वात्। यद्यच्छ्रोत्रग्राह्यं तत्तद्दिक्कालमनसां गुणो न भवति, यथा शब्दत्वादि। तथाच शब्दः श्रोत्रग्राह्यः तस्माद्दिक्कालमनसां गुणो न भविष्यतीति। ये तु तद्गुणा श्रोत्रग्राह्या न भवन्ति यथा संख्यादय इति। तथाच दिक्कालमनोऽव्यतिरिक्तस्य श्रोत्रस्य प्रतिपादनात्, तत्तद्गुणत्वे तेन ग्रहणाभावप्रसङ्गः। तथाहि-दिक्कालाभ्यां न सम्बद्धमिति तत्समवेतस्य शब्दस्याग्रहणम्। मनसश्चाणुपरिमाणत्वात् तद्गुणत्वे गम्भीरध्वनेरश्रवणप्रसङ्गः। तदभावे च क्वचित्प्रदेशे शब्दस्यानुत्पत्तिः स्यात्। न च कार्यैणैव कारणस्य तत्र सद्भावः, कार्यस्यान्यथापि भावात्। नापि विभुद्रव्यविशेषगुणानां सुखादीनामिव परमाणुविशेषगुणानामिन्द्रियेणोपलम्भो दृष्टः। परमाणुपरिमाणं च मनः। तदेवं दिक्कालमनोगुणत्वे शब्दस्य श्रोत्रग्राह्यत्वं न स्यादिति। बाधकञ्चेदम्-तथा विशेषगुण एव वैशेषिकस्तस्य भावादिति। तथाहि—दिक्कालमनसां पक्षीकरणे वैशेषिकगुणाभावो सिद्धः स्यादस्यैव विशेषगुणत्वादिति व्यतिरेकमुखेनान्यो हेतुर्व्याख्यायते। तथाहि-दिक्कालमनसां वैशेषिकगुणाभाव इत्युक्ते शब्दस्तु विशेषगुण इति हेतुर्लभ्यते एव। तथाच शब्दः दिक्कालमनसां गुणो न भवति,विशेषगुणत्वात्,यो यो विशेषगुणःस स दिक्कालमनसां गुणो न भवति, यथा रूपादिः, तथा चायं विशेषगुणस्तस्मान्न दिक्कालमनसां गुणः शब्द इति। अन्ये तु न दिक्कालमनसां गुणः शब्दः इति साध्ये वैशेषिकगुणा-

भावः साध्याच्च विशिष्यत इति मन्यमाना हेत्वन्तरं प्रवर्त्ते । तथाहि—न दिक्कालमनसां गुणः शब्दो गुणत्वेन गुणिनो लिङ्गत्वात्, यो यो गुणत्वेन गुणिनो लिङ्गः स स दिक्कालमनसां गुणो न भवति यथा सुखादयः, तथा चायं शब्दो गुणत्वेन गुणिनो लिङ्गस्तस्मात् तद्गुणो न भवतीति । ये तु दिक्कालयोर्लिङ्गं न ते गुणत्वेन गुणिनो लिङ्गम्, यथा पूर्वापरादिप्रत्यया युगपदादिप्रत्ययाश्चेति । ते हि तद्विशिष्टत्वात्तयोर्लिङ्गम् । गुणत्वेन चात्मनः । तथा युगपदादिशब्दाः पूर्वापरादिशब्दाश्च यद्यपि तद्विशिष्टत्वात्तयो-र्लिङ्गम् तथापि गुणत्वेन आश्रयान्तरानुमापका इत्यलमतिविस्तरेण ।

मनोगुणत्वे चोक्तमेव दूषणमिति परिशेषात् गुणो भूत्वाऽऽकाशस्याधिगमे परिच्छेदे कर्तव्ये लिङ्गमिति । परिशेषस्तु प्रसक्तप्रतिषेधेऽन्यत्र प्रतिषेधात(१) । तदेवं साधनं व्यतिरेकाव्यभिचारेणैव विषयव्यवस्थापनायालम् । तथाहि–शब्दः पृथिव्युदकज्वलनपवनदिक्कालात्ममनोव्यतिरिक्तद्रव्याश्रयः तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणत्वात् यस्तु तद्व्यतिरिक्ताश्रयो न भवति न चासौ तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणो यथा रूपादिः । न च तथा शब्दस्तस्मात्तद्व्यतिरिक्तद्रव्याश्रयः शब्द इति सिद्धमाकाशम् । तत् किमेकमुतानेकमित्याह–शब्दलिङ्गाविशेषादेकत्वं सिद्धम् । शब्दो हि लिङ्गमाकाशस्याविशिष्टतया नानात्वाप्रतिपादकमिति । नन्वसिद्धमविशिष्टत्वं विचित्रत्वाच्छब्दानाम् । तथाहि कार्यवैचित्र्यं कारणवैचित्र्यं विना न स्यादिति तीव्रादिभेदभिन्नानां शब्दानां विचित्रेणैव कारणेन भवितव्यमिति नानात्वसिद्धिस्तदाश्रयस्य । यदि च कारणवैचित्र्यं विनापि कार्यवैचित्र्यमिष्येत, परमाणूनामपि चातुर्विध्यं न स्यात्, तत्राप्येकस्मादेव कारणाद्विचित्रं क्षित्यादिकार्यं भविष्यतीति । अथात्र कार्यवैचित्र्येण कारणवैचित्र्यानुमानमिति चेत् । तच्छब्दवैचित्र्येऽपि समानमित्यलम् । तदसत् । सहकारिवैचित्र्येणापि शब्दवैचित्र्योपलब्धेर्न तदाश्रयस्य नानात्वम् । तथाच तीव्रतमादभिघातात्तीव्रतमः शब्दो मन्दाच्च मन्द इत्यादि ।

---

(१) प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेष इत्यर्थः ।

न च क्षित्यादावप्येवमस्त्विति वाच्यम्। तत्र हि चतुर्विधं कार्यं इतरेतरव्यावृत्तादुपादानादुत्पद्यमानं दृष्टमिति तज्जातीयाः परमाणवश्चतुर्विधा एव प्रतीयन्ते। कार्यवैचित्र्यं तु सामग्रीवैचित्र्यादेव। तत्र क्वचित्कारणभेदः क्वचित् कर्मभेदोऽन्यस्य चेति यथासम्भवं ग्राह्यम्। अत्र कारणभेदेनापि शब्दवैचित्र्योपपत्तेर्न समवायिकारणात् भेद इति सत्यम् एतच्छब्दलिङ्गाविशिष्टत्वान्नानात्वाप्रतिपादनमिति। अथ नानात्वाप्रसिद्धावप्येकत्वं प्रमाणं विना न सिद्ध्यति इत्यभिधेयं प्रमाणमिति चेत्। न। द्रव्यत्वादेव संख्यासद्भावसिद्धौ नानात्वे प्रमाणाभावादेकत्वमेव सिद्ध्यतीति। तथा सङ्ख्यानन्तरं परिमाणमवसरप्राप्तं परित्यज्य क्रमातिक्रमेण पृथक्त्वनिरूपणं कस्मादित्याह तदनुविधानात्तेनैकत्वेनानुविधानं साहचर्य्यम्। यत्र ह्येकत्वं तत्र-तत्रावश्यमेकपृथक्त्वमिति। नन्वेवं परिमाणेपि तदनुविधानमस्त्येव। तथाहि यत्रैकत्वं तत्रावश्यं परिमाणं भवतीति। न। विशेषानुविधानाभावात्। यथाहि यत्रैकत्वं तत्रावश्यमेकपृथक्त्वं भवतीति विशेषानुविधानम्, नचैवं यत्रैकत्वं तत्रावश्यमणुत्वं स्थूलत्वञ्चेति विशेषानुविधानमस्तीति पूर्वं पृथक्त्वं निरूप्यते। तथा परममहत्परिमाणमाकाशे कुतः प्रमाणादित्याह–विभववचनादिति। "विभवान्महानाकाशस्तथा चात्मा, तदभावादणु मन" इति७-अ-१आ-२२-२३सूत्रे दर्शयति। विभवात् कारणात् महानाकाश इति सामान्यशब्देनास्यार्थात्परममहत्त्वं विवक्षितम्। तथाहि–विभुनो द्रव्यस्य परममहत्त्वं सिद्धम् आत्मादाविति इहापि तथा साध्यते। आकाशं परममहद्विभुत्वादात्मवदिति। सर्वेषां चाविभूनां पक्षीकरणे केवलव्यतिरेकानुमानम्। आकाशादीनामात्मपर्यन्तानां परममहत्त्वं विभुत्वादित्युक्ते येषां तु परममहत्त्वं नास्ति न तेषां विभुत्वमिति व्यतिरेकः। अथ किमिदं विभुत्वं सर्वैर्मूर्तैः संयोग इति। अन्ये तु सर्वत्रोपजातानां शब्दानामाकाशे समवायस्तत्सद्भावे अपूर्णोद्रिक्तता विभुत्वमिति मन्यन्ते। यदि गुणपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात्परममहत्त्वमिति साध्यते। तथा शब्दकारणवचनात् संयोगविभागाविति संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिरिति सूत्रं दर्शयति। तथाहि–संयोगविभागौ शब्दोत्पत्तेरसमवायिकारणमित्यभिधानादाकाशे समवायो लभ्यते। अन्यथा हि प्रत्यासत्तेरभावादसमवा-

यिकारणत्वं न स्यात्। न चान्यदसमवायिकारणमस्तीति यत एवं गुणवद्दाकाशमतो गुणत्वादनाश्रितत्वाच्च द्रव्यं परमाणुवदिति। तथाहि-परमाणोर्गुणवत्त्वमनाश्रितत्वं च दृष्टं द्रव्यत्वं चास्ति। अद्रव्ये चैतन्न सम्भवति। अथ किमाकाशं नित्यमुतानित्यमित्याह-समानासमानजातीयकारणासम्भवाच्च नित्यम्। तथाहि न समानजातीयं समवायिकारणमाकाशस्यैकत्वात्। नाप्यसमानजातीयमसमवायिकारणमस्ति। समानजातीयाभावेन तत्संयोगस्याप्यभावात्। न च समवाय्यसमवायिकारणं विना वस्तुभूतस्य कार्यस्योत्पत्तिः सम्भवतीत्यकार्यत्वान्नित्यत्वं सिद्धमाकाशस्य। अतश्च सर्वप्राणिनां शब्दोपलब्धौ निमित्तं कारणम्। आकाशस्यैकत्वेऽप्यनेकार्थक्रियाकारित्वं दर्शयति। न च सत्तामात्रेणाकाशं शब्दोपलब्धेः कारणम्। सर्वत्र सर्वप्राणिनामविशेषेण शब्दोपलब्धिप्रसङ्गः, सर्वशब्दानामाकाशे समवायाविशेषादत आह श्रोत्रभावेन श्रोत्रत्वेनेति। किं तच्छ्रोत्रमित्याह—श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेश इति। श्रूयते अनेनेति श्रवणम्, तच्च तद्विवरं चेति तथोक्तं श्रवणविवरमिति संज्ञा यस्य नभोदेशस्यासौ श्रवणविवरसंज्ञकः कर्णशष्कुल्याकाशः संयोगोपलक्षित इति। तथा शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्ध इति। शब्दो निमित्तं यस्यासौ तथोक्तः स चासावुपभोगश्च तं प्रापयत इति तत्प्रापकौ तौ च धर्माधर्मौ ताभ्यामुपनिबद्धः सहकृत इति। नन्वेवमपि कर्णशष्कुल्याकाशसंयोगोपलक्षितविशिष्टादृष्टोपगृहीतो नभोदेशस्तस्माद्‌र्थान्तरं न भवतीति सर्वशब्दोपलब्धिः स्यात्। नैतदेवम्। कर्णशष्कुलीसंयोगोपलक्षितस्य नभसः श्रोत्रत्वे तस्याऽव्याप्यवृत्तितया न सर्वेषां ग्रहणम्। तथा यद्यपि कर्णशष्कुलीसंयोगैकार्थसमवायित्वाच्छब्दानां तथा विशिष्टप्रत्यासत्तेरभावादग्रहणम्। यो हि कर्णशष्कुलीसंयोगस्य सांनिध्यभाक् शब्दः स एवोपलभ्यते। न चैवम् सर्वशब्दास्तेषामव्याप्यवृत्तित्वात्। न च कर्णशष्कुलीसंयोगावरुद्धनभोदेशव्यतिरिक्तदेशे सर्वेषामुत्पादनादग्रहणम एवेति वाच्यम्। शब्दोपलंभान्यथानुपपत्त्या सन्तानन्यायेन श्रोत्रदेशमागतस्य प्रतिपाद्यमानत्वादित्यलम्। अथ कस्माद्बधिराणां कर्णशष्कुलीसंयोगावरुद्धनभोदेशसद्भावेऽपि शब्दाग्रहणं सहकार्यभावादित्याह-

तस्य च नित्यत्वे सत्युपभोगनिबन्धकस्य शब्दोपलब्धौ सहकारिणोऽदृष्टस्याभावाच्छब्दोपलब्धिर्न भवतीति बाधिर्यमुपपद्यत एव इत्याकाशम् ।

(भा०) कालः परापरव्यतिकरयौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम् । तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्ताभावाद्यदत्र निमित्तं स कालः । सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुस्तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्द्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । काललिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानात् पृथक्त्वम् । कारणे काल इति वचनात् परममहत्परिमाणम् । कारणपरत्वादिति वचनात् संयोगः । तद्विनाशकत्वाद्विभाग इति । तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे । काललिङ्गाविशेषादञ्जसैकत्वेऽपि सर्वकार्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकवद्वा नानात्वोपचार इति ॥

(सू०)कालो-महाकालः। परापरेति(१)। परापरपदे भावप्रधाने परत्वापरत्वार्थके, ते चात्र दैशिकपरत्वापरत्वभिन्ने परत्वापरत्वे कालिके बोध्ये। ज्येष्ठः परः कनिष्ठोऽपर इति प्रतीतिविषयौ हि गुणविशेषौ परत्वापरत्वे, (२)तथा हि कनिष्ठजन्मनोऽन्तरे

[ १ ] कालमाह परापरेति पाठान्तरम् ।
[ २ ] तद्बुद्धिरिति पाठान्तरम् ।

यावन्तस्तपनपरिस्पन्दास्तदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्मनि ज्येष्ठे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वज्ञानेन परत्वम् अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वज्ञानेनापरत्वं च कनिष्ठे जन्यत इति हि गुणनिरूपणे(१) वक्ष्यते । तथा च तादृशपरत्वापरत्वयोर्व्यतिकरोऽतिमिलनं(२) स च यौगपद्यायौगपद्ययोश्चिरक्षिप्रयोः प्रत्ययाश्चेति(३)द्वन्द्वः, ते लिङ्गानि ज्ञापका यस्य स काल इत्यर्थः । ननु कथं परत्वापरत्वयोः कालज्ञापकत्वम् इति चेत् । इत्थम्—उक्ततपनपरिस्पन्दास्तावत्सु कालेषु प्रत्यासन्ना एव परत्वापरत्वोत्पादकाः, अन्यथा युगपदुत्पन्नयोरपि तैः परत्वापरत्वे उत्पाद्येताम् । अत्र उपजायमानयो-(४)स्तयोरसमवायिकारणन्तत्तपनपरिस्पन्दविशिष्टद्रव्यस्य ज्येष्ठकनिष्ठवृत्तिः संयोगो वाच्यः, तद्विशिष्टद्रव्यं च न कालं विनाऽन्यत् सम्भवति, अन्यस्य द्रव्यस्य तपनपरिस्पन्दवैशिष्ट्याप्रतीतेः । कालस्य च तदानीमिदानीं परिस्पन्दा इति प्रतीत्या विषयीकरणात् तदानीमित्यस्य चान्ततः(५) कालरूपत्वादित्थं च परत्वापरत्वे काललिङ्ग इति बोध्यम् । इदमुपलक्षणम् । पुष्पफलादीनां कादाचित्कत्वमपि तल्लिङ्गम् । न च पुष्पादीनां राशिविशेषस्थरविणैव सम्भवात्कादाचित्कत्वं न कालानुमापकमिति वाच्यम् । पुष्पादिना सह रवेः सांनिध्याभावेन कालस्यैव तत्सांनिध्यघटकत्वात् । यौगपद्यमेककालता, अयौगपद्यमनेककालता, चिरत्वं दीर्घकालता, क्षिप्रत्वमल्पकालता ।

---

[ १ ] द्वित्वनिरूपणे इत्यपि पाठः ।

[ २ ] करो मिलनमिति पाठान्तरम् ।

[ ३ ] यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययाश्चेति पाठान्तरम् ।

[ ४ ] उत्पद्यमानयोस्त० ।

[ ५ ] अन्तत इति क० मु० पुस्तके नास्ति । चान्तरा इति पाठान्तरम् ।

अत्र च कालशब्देन सूर्यगत्यादयः कालोपाधय एवोच्यन्ते। काल-स्यैकत्वादेव तेषां प्रत्ययैः कालोऽनुमीयत इत्यर्थः। नन्वेभिः प्रत्ययैः कथं कालानुमानं कालस्यासिद्धत्वेन साध्यज्ञानाभावा-दित्यतोऽन्यथानुपपत्त्या कालकल्पकमेवानुमानमित्याह तेषा-मिति। पूर्वप्रत्ययतो विलक्षणानां विषयेषु घटादिषु तेषां प्रत्ययानामुत्पत्तावित्यन्वयः। पूर्वप्रत्ययो हि पूर्वसिद्धद्रव्यादि-विषयः प्रत्ययः ततो विलक्षणानां यौगपद्यायौगपद्यचिरक्षिप्रादि-विषयाणामित्यर्थः। तथा हि घटा युगपदुत्पद्यन्ते युगपन्नश्यन्ती-त्यादिप्रत्ययेषु तावद्युगपदुत्पत्तौ पूर्वसिद्धद्रव्यघटादिप्रत्ययविषय-तो विलक्षणो विषयः, स च प्रत्यय ऐन्द्रियको नातीन्द्रियं कालं विषयीकर्तुं शक्नोति। अत एकां सूर्यक्रियां पूर्वसिद्धेष्वनन्वितां विषयीकरोति उत्पद्यमानघटादेश्च प्रत्यासत्त्यभावात् सूर्यक्रिया-धिकरणकत्वासम्भवात्, अन्यथाऽनुपपत्त्या तत्प्रत्यासत्तिघटकः कालः कल्प्यत इत्यर्थः। यदत्र निमित्तमिति। यदत्र प्रत्यास-त्तिघटकमित्यर्थः। तस्य समस्तकार्यपदार्थकारणत्वमाह सर्व-कार्याणामिति। उत्पत्तिराद्यक्षणसम्बन्धः, स्थितिः स्वप्राग-भावध्वंसानधिकरणकालसम्बन्धः, विनाशो ध्वंसः, तद्धेतुः, अत एव सर्वोत्पत्तिमन्निमित्तकारणत्वमस्य साधर्म्यमुक्तम् प्राक्। तद्धेतुत्वे प्रमाणमाह तद्व्यपदेशादिति। तेन कालेनोपाधिभूत-सूर्यक्रियाप्रत्यासत्तिघटकेन सहाधिकरणतया विशिष्य व्यप-देशादित्यर्थः। भवति हि इदानीमुत्पन्नः श्वः परश्वो वा उत्प-त्स्यत इदानीमस्ति इत्यादिव्यपदेशैरधिकरणत्वेन विशिष्य कालो व्यपदिश्यत इति। उत्पत्त्यादिव्यवहारात् व्यवहारा-न्तरस्यापि हेतुतामाह क्षणलवेति। स्वजन्यविभागानधिकरणं क्रियाधिकरणकालः क्षणः, क्षणद्वयं लवः, अक्षिपक्ष्मसंयोग-

निमित्तकर्माधिकरणं कालो निमेषः, अष्टादश निमेषा स्युः काष्ठा, त्रिंशत्तु ताः कलाः, मुहूर्तयामादयः प्रसिद्धा एव, प्रलयः संहारकाल उक्त एव, तेषां व्यवहाराणां हेतुश्च हेतुभूतज्ञानविषय इत्यर्थः। द्रव्यत्वेन तस्य गुणानाह तस्य गुणा इति। संख्यासु मध्ये तस्यैकत्वमेव संख्येत्याह काललिङ्गेति। कालस्य लिङ्गं हि परत्वापरत्वे प्रागुक्ते समस्तज्येष्ठकनिष्ठवृत्तीनां तद्वयानां स्वज्ञानेनोत्पादकाः अन्तरा वर्तमानास्तपनपरिस्पन्दास्तत्प्रत्यासत्तिघटकस्य कालस्याविशेषादेकेनैव कालेन निर्वाहेऽनेकत्वकल्पनायां गौरवादिति भावः। तथा च काललिङ्गीभूतपरत्वापरत्वयोः सूर्यप्रत्यासत्तिघटककालविशेषस्याविशेष एव परम्परया काललिङ्गपरत्वापरत्वयोरविशेषो बोध्यस्तस्मादित्यर्थः। [ यद्यपि कालघटौ द्वाविति प्रतीतिविशेषाद्वित्वमपि काले वर्तत इत्येकत्वमात्रानुपपत्तिः, तथापि स्वसजातीयद्वितीयवृत्तिसंख्याराहित्ये सति एकत्वं सिद्धमित्यर्थः। ] तदनुविधानादिति। एकत्वानुविधानादित्यर्थः। य एकः सोऽन्यस्मात्पृथगिति अनुविधानम्। कारणे काल इति। कारणे कालाख्या इति (२अ.२ आ.९.१सू.)सूत्रकारवचनम्। परत्वापरत्ववतोः समस्तज्येष्ठकनिष्ठयोस्तपनपरिस्पन्दप्रत्यासत्तिकारणे काले परममहत्त्वं सिद्ध्यतीति तत्सूत्रार्थः। समस्तज्येष्ठकनिष्ठप्रत्यासत्तिकारणत्वं च नाविभुनः सम्भवतीति विभुनः परममहत्त्वमावश्यकमिति तत्सूत्रेण प्रतिपादितमित्यर्थः। कारणपरत्वादिति। कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति हि (७अ.२आ.२२)सूत्रम्। कारणपरत्वादित्यादेरर्थः–कारणं परत्वस्य कारणमपरत्वस्य तच्च काल इति बोध्यम्। तस्माद्धेतोर्ज्येष्ठे परत्वात् कनिष्ठे चाऽपरत्वात् परत्वापरत्वे तयोः सिद्धे इत्यर्थः।

---

[ ] चिह्नितः पाठः क्वचित् पुस्तके नास्ति।

कालस्य हेतुत्वं च सूर्यपरिस्पन्दाधिकरणतया तत्प्रत्यासत्तिघटकस्यास्य संयोगद्वारेत्यतः कालस्य संयोगः सिद्ध इत्यर्थः। तद्विनाशकत्वादिति। परापरपुरुषक्रियया हि तादृशपुरुषकालविभागः स च पूर्वसंयोगविनाशकतयैव सिद्ध इत्यतस्तद्विनाशकत्वादित्यर्थः। तस्याकाशवदिति। आकाशस्य यथा गुणवत्त्वाद्द्रव्यत्वं समानासमानजातीयकारणाभावान्नित्यत्वं च तथा तस्यापीत्यर्थः। ननु कालस्यैकत्वे नित्यत्वे च कथमतीतानागतवर्तमानतया स व्यवह्रियते अतीतानागतादिभेदेनैकत्वासम्भवात् अतीतानागतयोर्नाशप्रागभावप्रतियोगिरूपत्वेन नित्यत्वासम्भवाच्चेत्यत आह काललिङ्गेति। काललिङ्गाविशेषादेकत्वं सिद्धमिति प्रागुक्तम्, तच्च व्याख्यातमेव। तस्मादञ्जसा तत्त्वेनैकत्वे सिद्धे तस्य कालस्य नानात्वोपचार इत्यन्वयः। उपचारे हेतुमाह सर्वकार्याणामिति। आरम्भः आद्यकृतिस्तत्सान्निध्यादिह प्रागभाव एव आरम्भः, क्रिया च व्यापारः, अभिनिर्वृत्तिः फलं, स्थितिर्विद्यमानता, निरोधो ध्वंसः, एतैरुपाधिभिर्नानात्वोपचार इत्यर्थः। तथाहि—भविष्यति पट इत्यत्र पटस्य धर्मिणोऽसत्त्वेपि तदीयप्रागभावसत्त्वौपाधिकी(१)कालस्य भविष्यत्ता, कुरुते घटमित्यत्र घटासत्त्वेऽपि तद्धेतुकुलालव्यापारविद्यमानत्वौपाधिकी कालस्य वर्तमानता, स्मारयति पूर्वानुभवोऽनुभूतमर्थमित्यत्र पूर्वानुभवासत्त्वेपि तत्फलस्य स्मरणस्य विद्यमानतौपाधिकी कालस्य वर्तमानता, एवं चकार घटमित्यत्र घटकुलालयोर्विद्यमानत्वेपि घटोत्पादकक्रियाप्रध्वंसौपाधिकी कालस्यातीततेत्यर्थः। औपाधिके व्यवहारे दृष्टान्तमाह मणिवदिति। स्फटिकमणिवदित्यर्थः। स्फटिकमणेरेकत्वेऽपि यथा जपापुष्प-

[१] सम्बन्धौपाधिकीति पाठान्तरम्।

नीलोत्पलादिसान्निध्यौपाधिकरक्तनीलादित्वेन नानात्वेन व्यवहारस्तथेत्यर्थः। ननु जपारक्तत्वादेः स्फटिकावृत्तित्वेन तत्र भ्रान्त्यैव व्यवहारः, कालवृत्तिना प्रागभावादिना तूपाधिना न भ्रान्त्या व्यवहार इति दृष्टान्तदार्ष्टान्तिकवैषम्यमत आह पाचकवदिति। पाचकवदित्युपलक्षणमिदम्। पुरुषस्यैकत्वेऽपि तद्वृत्तिपठनपचनादिक्रियौपाधिको यथा पाठकपाचकतया नानात्वव्यवहारस्तथेत्यर्थः॥

( से० ) **** न्द्रान्तरितजन्मायमल्पतरतपनपरिस्पन्दान्तरितजन्मेति मत्योरस्ति परत्वापरत्वे प्रति हेतुता तयोरेव च सन्निकृष्टबुद्धिर्विप्रकृष्टबुद्धिरिति नाम तयोश्च विशिष्टबुद्ध्योः क्रिया विशेषणं पिण्डो विशेष्यः न च विशिष्टबुद्धिः सम्बन्धमन्तरा सञ्चारमाचरति। न चेह संयोगसमवायौ सम्भवतः, क्रियाया अद्रव्यत्वात् पिण्डादन्यत्र स्थितेश्च। नापि स्वरूपसम्बन्धः सम्बन्धान्तरं वा, तत्साधकस्याभावात्, तस्मादत्र कश्चित्परम्परासम्बन्धो वक्तव्यः। न चात्र शब्दतच्छ्रवसोरिव समवायो मत्याश्रयस्य पिण्डेऽसमवायात्। नापि चक्षुघटरूपयोरिव संयुक्तसमवायः मत्याश्रयस्य भाति पिण्डेनासंयोगात्, तस्मात्संयुक्तमात्रं क्रियायाः समवाय इति घटकतया (?) कालघटकतेति व्योमशिवाचार्याः। तत्राचार्यैर्व्योमादिभिरन्यथासिद्धिमाशङ्क्य नभसः स्वघटितसम्बन्धेन परत्र परधर्मोपनायकत्व एकभेर्यभिघात सर्वभेरीषु शब्दोत्पत्तिप्रसङ्गः, नभसः स्वघटितसम्बन्धेन तस्याभिघातस्य सर्वत्र भेर्यां सत्त्वात्। आत्मनोऽपि स्वघटितसम्बन्धेन परत्र परधर्मसंक्रामकत्वे वाराणसीस्थेन नीलिम्ना पाटलिपुत्रस्थितस्फटिकमणेरुपरञ्जनप्रसङ्गः। न च कालोऽपि क्रियावदभिघातनैल्ये किमिति नोपनयतीति वाच्यम्। कालसिद्धावस्य भेर्यन्तरे भेर्यन्तराभिघातस्य परम्परासम्बन्धघटको न भवति संयुक्तसमवायसत्त्वात्। न चैवं सति सर्वत्र शब्दोत्पत्त्यापत्तिः साक्षात्सम्बन्धस्य शब्दोत्पादकत्वात्। एवमात्मनोऽपि परधर्मोपनायकत्वमिष्टमेव। तत्र चातिप्रसङ्ग इष्टापत्तिरेव। न हि वाराणसीस्थनैल्यपाटलिपुत्रस्थितस्फटिकशकलयोर्न संयुक्तसंयुक्तसमवायोऽस्ति। न च भवत्वाकाशात्मघटितसंयुक्तसंयुक्तसमवायो न तु सम्बन्ध इति वाच्य-

म् । संयुक्तसंयुक्तसमवायस्य सम्बन्धतायाः संयुक्तसंयुक्तसमवायेनावच्छेदात् लाघवात् , न त्वाशाद्यघटितत्वत्वमपि विशेषणं गौरवात् । यदपि कालमादाय नातिप्रसङ्गो धर्मिग्राहकमानबाधादिति । तदपि नाऽऽचार्यतात्पर्यविषयः । क्रियामात्रोपनायकत्वेन कालासिद्धेः क्रियोपनायकत्वेनैव सिद्धेः, न हि यदान्यकार्यकारित्वेन सिद्ध्यति तत्रान्यकार्यकारित्वेन सिद्ध्यति । तत्रान्यकार्यकारित्वं धर्मिग्राहकमान बाधितम् । क्षित्यादिजनकत्वेन सिद्धस्य भगवतो घटादिजनकत्वे धर्मिग्राहकमानबाधापत्तेः, तस्मात्कालेऽपि अतिप्रसङ्गः स्यादेव । न च कालो यदि क्रियोपनायकः स्याद्धर्माभिघातादिकमप्युपनयेदिति अतिप्रसङ्गो न सम्भवति व्याप्तेरभावादिति वाच्यम् । आकाशादावप्यस्यातिप्रसङ्गभङ्गस्य वक्तुं शक्यत्वात् । न च कालो नान्यदुपनयति प्रयोजनाभावात् क्रिया तूपनयति परत्वाद्युत्पत्तेः प्रयोजनस्य सत्त्वादिति वाच्यम् । आकाशेऽप्येतावतोऽक्षरस्य वक्तुं शक्यत्वात् । किञ्च कालस्य क्रियोपनायकत्व क्रियापिण्डयोः परम्परा ***त्रुटितपत्रमेतान्निरंकपत्रस्य***(१)प्रसङ्गस्याश्रयासिद्धेः । न हि यो न सिद्धः तत्रासावप्युमुक्तं कुर्यादिति वक्तुं शक्यते सिद्धौ च धर्मिग्राहकमानबाधो निरुक्तक्रमेण क्रियामात्रोपनायकत्वेन तस्य सिद्धेरित्यालोचयन्ति । अत्र किञ्चित्सप्रपञ्चं वर्णयामः । यदुक्तमम्बरस्य स्वघटितपरंपरासंबन्धेन परत्र परधर्मोपसंक्रामकत्व एकभेर्यभिघाते सर्वभेरिष्वभिघातापत्तौ सर्वत्र शब्दोत्पत्तिः स्यादिति । तच्च सुमनसां तेषामेव मानसमुल्लासयति लिखनं तु एकदेशिमतेन, न ह्यत्रान्यधर्मोपनायकत्व परधर्मस्य परत्र प्रापकत्वं कालस्यापि तथात्वे वत्सलति भास्वति जाते ऽस्थिरतापत्तेः, किन्तु परम्परासम्बन्धघटकत्वम् । नचाऽऽकाशो **अत्र त्रुटितपत्रम्* सम्बन्धघटकत्वं तन्मलयादावपि कालस्यास्ते, अपि च सूर्यक्रियायाः पिण्डेन स्वरूपसम्बन्ध एवेह क्षणेऽपि पिण्ड इत्यादिप्रतीत्याऽवसीयतेऽन्यथा द्रव्येण संयुक्तसंयुक्तसमवायो रूपादिना समवायिसंयुक्तत्वतद्धटकतया तत्कल्पनेति । न च क्षित्यादिजनकत्वेन सिद्धस्यापि भगवतो भवतु घटादिकर्तृत्वं कर्तृतादिप्रयोजकस्य तथा वादि-

(१) अत्रापि पूर्ववत्पाठस्त्रुटितो लक्ष्यते स च पाठकैः स्वयं योजनीयः । एवमग्रेऽप्यनुपदम् ।

ज्ञानादेः सत्त्वात् । कालस्य तु क्रियोपनायकत्वेन सिद्धस्य किमित्य-भिघाताद्युपनायकत्वमिति वाच्यम् । अभिघातादिनापि परम्परासम्बन्धघटकत्वसत्त्वात्, तस्मादाकाशादिभिरेव परम्परासम्बन्धोपपत्तौ किमिति कालकल्पनेति । किञ्चासौ बहुतरतपनपरिस्पन्दान्तरितजन्मासावल्पतरतपनपरिस्पन्दान्तरितजन्मेत्यनयोः प्रतीत्योस्तपनपरिस्पन्दानां पिण्डे न सम्बन्धो न विषयः, किन्तु पिण्डजन्माभिभूयोऽल्पतद्व्यवहितत्वं, यथा कनकाचलोऽमलो भूयो देशव्यवहितस्थितिः। विन्ध्याचलः कृतस्वल्पदेशव्यवहितस्थितिरित्यादौ, न ह्यत्र व्यवधायकदेशानां कनकाचलादौ सम्बन्धः परिस्फुरति, किन्तु तत्स्थितौ व्यवहितत्वमात्रमिति कालपरिकल्पनेति पूर्वपक्षपरिकल्पनेति सङ्क्षेपः ।

आचार्यचरणांस्तात्पर्यवर्णनेनान्वयामः । आकाशघटितस्य संयुक्तसमवायस्य विशिष्टबोधजनकत्वे काशीस्थेन नीलिम्ना पाटलिपुत्रस्थितस्य स्फटिकस्य समवायाभावग्रहेण समवायेन सुरभिजलप्रत्ययानुदयेऽपि संयुक्तसमवायाभावग्रहेण तेन सुरभिजलमिति प्रत्ययवत(?), तस्मात् विशिष्टबोधप्रयोजकत्वेन सम्बन्धः सिध्यंस्तद्घटकत्वेन कालमेवोल्लासयतीति । न च कालघटितस्यापि सम्बन्धस्य विशिष्टबोधसमर्थकत्वेऽतिप्रसङ्गोऽसिद्धावाश्रयासिद्धेः, सिद्धौ धर्मिग्राहकस्यान्यस्य वा दूरस्थितस्फटिकादौ नीलादिविशिष्टबोधजनकत्वे प्रमाणस्याभावात् । न च स्वरूपसम्बन्धेनैवोपपत्तिः, सम्बन्धान्तरासम्भव एव तस्य स्वीकारात् । न चेदानीं घट इत्यादि प्रतीत्या स्वरूपसम्बन्धस्यावश्यकत्वे किमिति तत्सम्बन्धान्तरकल्पनेति वाच्यम् । इदानीं घट इति प्रतीत्या क्रियाया आधारत्वं प्रतीयतेऽसौ बहुतरतपनपरिस्पन्दवानित्यत्र घटस्य, तथाच विलक्षणप्रतीत्या विलक्षणमितमिति चेत्, सन्निकृष्टविप्रकृष्टबुद्धिश्चायं बहुतरतपनपरिस्पन्दावच्छिन्न इत्याद्याकारा नातः क्रियया सम्बन्धाप्रतीतिरित्युक्तिः परमादद्यात् । न च क्रियानिष्ठत्वमेव सन्निकृष्टविप्रकृष्टबुद्धौ भासतां तत्र च स्वरूपसम्बन्ध एव भासते, न हि कालस्य कालोपाधेः क्रियाया न सर्वाधारत्वम् । न च सर्वाधारतायां स्वरूपसम्बन्धातिरिक्तं सम्बन्धान्तरमस्ति रूपाद्याधारतायां संयुक्तसंयुक्तसमवायासम्भवात् । अपि चोत्पत्तिराद्यक्षणसम्बन्धः सम्बन्धश्च प्रकृतः स्वरूपसम्बन्ध एवेति सकलशिष्टदार्शनिकानुशिष्टः पन्थाः । एवञ्च

भूयोऽल्पक्रियासम्बन्धावपि स्वरूपसम्बन्धपर्यवसायिनावेवेति कि-मिति सामयिकसत्तास्वीकारः। न चैकमनोनिष्ठसंख्यादिभिन्नाः सर्वे धर्मा विशेष्यगुणशून्यैकयुविरहदशायां सति पदार्थे पर-त्वाद्यनुत्पत्त्यापत्तिः, क्रियात्वमेव तत्रानुगमकं महाप्रलयसा-धारणतदनापत्तेः, क्रियात्वप्रकारककालत्वप्रकारकप्रत्यययोर्वैलक्ष-ण्याऽननुभवाच्च। न च विशेषणे क्रियाभागे कालत्वस्यासत्त्वा-त् कथं द्रव्यगतं तदादाय क्षणादिवदवच्छिन्नकालस्वरूप-स्यैव क्षणादित्वात्। एवं च क्षणे घट इत्यादिर्जगदाधारताव्य-वहारोऽपि कालमादायैव क्रियादेस्तदवच्छेदकतामात्रम्। न चैवं का-लोपाधेः प्राचीनग्रन्थेषु निर्विवादः सर्वाधारताप्रवादो न स्या-दिति वाच्यम्। एकदेशिदर्शनमाश्रित्य तथोपदेशात्। एवं चोत्पत्त्या-दिरपि कालविशेषसम्बन्ध एव न तु क्रियासम्बद्धसन्निकृष्टविप्रकृष्ट-बुद्धिरपि तदल्पत्वभूयस्त्वावगाहिनी। एवं च कालसिद्धावसमवायि-कारणमपि तत्संयोग एव मूर्तान्तरसंयोगशून्ये द्व्यणुके भगवद्बु-द्धिनिर्वर्त्यपरत्ववत्प्रयत्नसंयोगमादाय समाधेरसमावेशात्। एवं च दिक्सिद्धिरपि दिग्गतकारणगतव्यवहारात्, एवं सूर्यसंयोगो दिवी-तिप्रतीत्यावैलक्षण्यात् अस्माभिः पितृचरणसरसिजानुसरणम्। अपि-सामर्थ्यासादितयौगपद्यादिप्रत्ययेऽपि कालो विषयो नतूपाधिः, त-था चैतत्प्रत्ययविषयतया कालसिद्धिरिति भाष्यार्थः। अत्रापि विष-यान्तरेणान्यथासिद्धिं वारयति तेषामिति। घटादिषु रूपधानीय(?)-मित्यादिप्रत्ययविलक्षणा हि युगपज्जात इत्यादिप्रत्यया उत्पाद्यन्ते, तत्र च निमित्तान्तरस्य विषयान्तरस्य रूपादेरसंभवात् यन्निमित्तं यो विषयः स कालोविलक्षणे प्रत्ययोत्पत्तिस्तावत् प्रामाणिकी। सा च विषयतया कालं व्यवस्थापयतीति भावः। एवं च उत्पत्तावित्यग्रे प्रामाणिकयामित्यध्याहार्यम्। परार्थतामाह सर्वेति। उत्पत्तिराद्यक्ष-णसंबंधः स्थितिः स्वप्रागभावध्वंसविरहः विनाशः प्रसिद्ध एव। य-द्यपि उत्पत्तेः कालगर्भतया न जन्यत्वं तथापि स्वरूपसम्बन्धात्मके स-म्बन्धे द्वितीयो भागः कालातिरिक्ततया जन्यत एव। स्थितिस्तु प्रा-गभावादिविरहस्य पटाद्यात्मतयाऽनन्यैव। आचार्यस्तूत्पत्तिरात्मला-भः स्थितिराविनाशात् क्रमवत्सहकारिसम्बन्धः। तत्रात्मलाभ आ-त्मस्वरूपं स्वरूपस्य च जन्यतोचितैव न तु यथाकथञ्चित् रूपा-

ह्युत्पत्त्याधारत्वेनाद्यघट उत्पन्नो घटे सहकारिसम्बन्ध उत्पन्नोऽद्य विनाश उत्पन्न इति व्यपदेशात् उत्पत्त्या आधारस्य च पूर्ववर्तिनः कारणत्वं दुर्वारमिति भावः। नातः क्षणे व्यभिचारः। क्षणादिव्यवहारः कालकृत एव इत्याह क्षणेति । कालोपाध्यनधिककालोपाधिः क्षणापेक्षया न्यूनस्य कालोपाधेरभावात् , अन्यस्तु कालोपाधिः क्षणाद्यधिक एव, तल्लक्षणज्योतिःशास्त्रानुसारेणादेशाऽयमिति भावः। विशेषगुणशून्यतां बोधयितुं तद्गुणेषु सामान्यगुणानेव गणयति तस्येति। तत्र प्रमाणमाह द्रव्यत्वादित्यर्थः । आकाशवदस्यापि एकत्वमेवेत्याह कालेति । परत्वादिविशेषेन हि कालोऽनुमीयते स चैकेनैव विभुनोपपद्यत इति नानेकस्य तस्य सिद्धिरित्यर्थः। एकत्वव्यापकत्वात् एकपृथक्त्वसिद्धिरित्याह तदिति। कारणे कालाख्या इति वचनात् परममहत्परिमाणसिद्धिरित्याह कारण इति। कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति सूत्रे कारणत्वात् परत्वापरत्वे लक्षणया संयोगविशेषो सिद्ध्यत इति । अयमाशयः। कालपिण्डसंयोगस्य परत्वादिकारणतया काले संयोगसिद्धिरिति। तदिति। सत्याश्रये विभागस्यैव संयोगनाशकत्वादित्यर्थः। धर्मिग्राहकमानेन लाघवसहकारिवशात् सिद्ध्यत् एकत्वं स्वव्यापकतया पृथक्त्वं व्यवस्थापयति। एकस्याल्पपरिमाणस्य चतुर्दशभुवनवर्तित्वादिकारणत्वानुपपत्त्या तावन्निखिलमूर्तसंयोगसिद्धौ परममहत्परिमाणसिद्धिः। स्फटिकादौ जपादियोगात् यथा नानात्वोपचारः तथा कालेऽपि इत्यर्थः। भविष्यदादिव्यवहारो हि द्वेधा क्वचिद्धर्मिणमादाय क्वचित् धर्मं, पटो भविष्यतीत्यत्र धर्मिणमादाय पटप्रागभावस्यैव सत्त्वात्, पटं भावयिष्यति कुविन्द इत्यत्र धर्मिणः कुविन्दस्य सत्त्वेऽपि पटोत्पादनानुकूलव्यापारलक्षणतद्धर्मप्रागभावावस्थित्या भविष्यत्ताव्यवहारः । अत्र प्रागभावप्रतियोगित्वलक्षणं भविष्यत्वं तस्य कुविन्देऽभावेऽपि व्यापारस्य भविष्यत्वात् भवति तत्र भविष्यत्वव्यवहारः। उत्पद्यते पटः इत्यत्र न धर्मिणो वर्तमानता पटस्यासत्त्वात्, अत्रापि पटव्यापारस्य पटाजनकत्वात् पटोत्पत्तेः पूर्वमसत्त्वाच्च किन्तु पटोत्पत्त्यनुगुणकुविन्दादिव्यापारस्य वर्तमानतया तत्र वर्तमानताव्यवहारः। एवं च क्वचित् तस्यैव वर्तमानता क्वचिदन्यस्य सत्त्वम्। यः तदीयोऽन्यदीयो वाऽनुभवः स्वविषयं स्मारयति इ-

त्यादौ त्वनुभवादिव्यापारवर्तमानतैव। अस्यात्मेत्यादौ तु धर्मिण एव वर्तमानता। अभूत् पट इत्यादौ पटसत्त्वेऽपि पटोत्पादनानुकूलव्यापारातीतत्वव्यपदेशः। नष्टः पट इत्यादौ तु धर्मिनाशादेव। एवं च धर्मप्रभृतीनां प्रागभावादिप्रतियोगितया भविष्यदादित्वं तदुपलक्षितः कालो भविष्यदादिः। एवं चैतत्कृत एव काले त्रिविधो व्यवहारो न तु मुख्य इति तत्त्वम्। यत्र काले यस्य प्रागभावस्तत्र स भावी यस्य ध्वंसः सोऽतीतो य विद्यमानः स वर्तमानः। काले वर्तमानत्वादिव्यवहारस्तूपाधिवर्तमानत्वादिकृतो, यथा मध्याह्नोऽस्तीति प्रातः कालोऽतीतः सायंकालो भविष्यतीति। अत्र मध्याह्नत्वादिप्रयोजकोपाधिसत्त्वादिभिरेव काले वर्तमानादिव्यवहारो, निरुपाधिस्तु नित्यं वर्तमान एवेति सारम्। अक्षरार्थस्तु प्रारम्भपदेन प्रागभावो गृह्यते क्रियापदेन व्यापारो अभिनिवृत्तिपदेन च सिद्धिवाचकेन प्रकृते धर्मो लक्ष्यते स्थितिनिरोधौ तु विद्यमानतानाशौ प्रसिद्धावेव। एवं च प्रागभावसहिताभ्यां व्यापारधर्मिणोः स्थितिनिरोधाभ्यां काले नानात्वव्यवहारः क्वचित् व्यापारप्रागभावादेः क्वचिद्धर्मिप्रागभावादेर्भविष्यदादिव्यवहारः। सर्वकार्याणामिति तु नानात्वोपचार इत्यत्रान्वेति सर्वकार्यसम्बन्धी नानात्वोपचार इति तदर्थः। तथा च प्रागभावादिभिरुपाधिभिः घटादिसम्बन्धी काले भविष्यदादिव्यवहारः इति। यथा स्फटिकादौ लौहित्यादिप्रतीतिर्भ्रान्त्या तथा नात्रेत्याह पाचकवद्वेति समयः॥

( व्यो० ) इदानीमुद्देशवतः कालस्य लक्षणपरीक्षार्थं कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्ग इत्यादि प्रकरणम्॥

अत्र च कालसद्भावप्रतिपादकमेव लिङ्गमितरस्माद्भेदकं भवतीति मन्यमानो लक्षणान्तरं नावोचत्। तथाहि—काल इतरस्माद्भिद्यते परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गत्वाद्यस्तु न भिद्यते न चासावुक्तलिङ्गो यथा क्षित्यादिः। न च तथा कालस्तस्माद्भिद्यत इति। व्यवहारो वा साध्यते विवादगोचरापन्नं द्रव्यं काल इति व्यवहर्तव्यम् परापरव्यतिकरादिलिङ्गत्वादिति। अथ प्रतिबन्धानुपलब्धेः कथमेतानि कालसद्भावे लिङ्गं भवन्ति। विशिष्टकार्यतया, विशिष्टं कार्यं विशिष्टात् कारणादुत्पद्यमानं दृष्टम्, परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययाश्च विशिष्टं कार्यमिति विशि-

ष्टकारणपूर्वकत्वं साध्यते तथाच परापरयोर्दिक्कृतयोर्व्यतिकरवि-
पर्ययो गृह्यते। यत्र हि दिग्विवक्षयोत्पन्नं परत्वं तत्रैवापरत्वं यत्रैवाप-
रत्वं तत्रैव परत्वमुत्पद्यमानं दृष्टमित्यर्थान्तरञ्च। व्यवहर्तृनिमित्ताद्
व्यतिरेकः संभवतीति। तथा चाधमजातीये दिग्विवक्षया परस्मिन्
स्थविरपिण्डे वलीपलितादिसान्निध्यमपेक्षमाणस्य उत्कृष्टजातीयं
युवानमवधिं कृत्वेतरस्मात्परो विप्रकृष्टोऽयमिति बुद्धिर्भवति, तामपे-
क्ष्य परेण कालप्रदेशेन योगात्परत्वमिति। स्थविरं चावधिं कृत्वोत्कृ-
ष्टजातीये यूनि परदिग्भागव्यवस्थितेऽपि रूढश्मश्रुकार्कश्यमपेक्षमा-
णस्य सन्निकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्यापरेण कालप्रदेशेन योगा-
दपरत्वस्योत्पत्तिरिति। अत्र दिक्संपादितपरत्ववैलक्षण्यान्न तदेव
निमित्तम्। नापि निकृष्टजातीयतया जातिकृतं परत्वं संभवति। न च
क्षित्यादेरन्यतमं निमित्तं सामर्थ्यानवधारणात्। यस्तु शिष्यते स
काल इति। नन्वेकस्मिन्नेव दिने पाकजोत्पत्तिन्यायेन पिण्डयोः स-
मुत्पादात् कथं परत्वापरत्वम्? उत्पत्तेःप्रभृत्यादित्यपरिवर्तनापेक्षया,
तथाहि–जन्मनःप्रभृत्येकस्य दित्यपरवर्तनानि भूयांसीति परत्वम्,
अन्यस्य चाल्पीयांसीत्यपरत्वम्। अथादित्यपरिवर्त्तनमेवास्तु किं
कालेनेति चेत्। न। युगपदादिप्रत्ययानुमेयत्वात्। न चादित्यपरिवर्तना-
देव युगपदादिप्रत्ययाः संभवन्तीति। एकस्मिन्नेवादित्यपरिवर्तने स-
र्वेषामनुत्पादात्, व्यपदेशाभावाच्च। तथाहि–युगपत्काल इति व्य-
पदेशो न युगपदादित्यपरिवर्तनम् इति। न च क्रियैव काल इति
वाच्यम्। युगपदादिप्रत्ययाभावप्रसङ्गात्। तथाहि- क्रियायाः
क्रियारूपतया विशेषाभ्युपगमादिति प्रत्ययाभावः परापरव्यतिकरा-
भावश्च। न च क्रिया काल इति प्रतीयते, यदि च कर्तृकर्मव्यति-
रिक्ता विशिष्टप्रत्ययसंपादिका क्रिया स्यात् संज्ञाभेदमात्रम्। अव्यति-
रेके तु विशिष्टप्रत्ययाभाव एवेत्यलं विस्तरेण।

तथा युगपत्भावो यौगपद्यम्। बहूनां कर्तृणां कार्य-
कारणं बहूनां कार्याणामात्मलाभ इति। तथाहि युगपदेते
कुर्वन्तीति कर्त्रालम्बनं ज्ञानं युगपदेतानि कृतानीति कार्यालं-
बनं च दृष्टम्। न चात्र कर्तृमात्रं कार्यमात्रं चालम्बनमतिप्र-
सङ्गात्। तथाहि यत्र क्रमेण कार्यं तत्रापि कर्तृकर्मणोः सद्भावात् स्या-
देतद्विज्ञानम्। न चास्ति कतरस्माद्विशिष्टं कर्तारं कार्यं वाऽऽलम्ब्यो-

त्पद्यते विज्ञानमेतदिति ज्ञायते । यच्च तद्विशेषणं क्षित्यादिविलक्षणं स काल इति न यौगपद्यायौगपद्यक्रम इति । अयुगपदेते ब्रुवन्तीति कर्त्रालम्बनं ज्ञानमयुगपदेतत् कृतमिति कार्यालम्बनं ज्ञानम्। अत्रापि विशिष्टयोः कर्तृकर्मणोरालम्बनत्वात् क्षित्यादिविलक्षणं निमित्तं वाच्यमिति कालसिद्धिः । तथैक एव कर्ता किञ्चित् कार्यं चिरेण करोति व्यासङ्गादनर्थित्वाद्वा किञ्चित् क्षिप्रम् तदर्थितया तत्र चिरेण कर्तुं क्षिप्रं कृतमिति प्रत्ययो विलक्षणत्वाद्विलक्षणं कारणमाक्षिपतीति । न च कार्यमेव निमित्तम् । तस्योभयत्र समानत्वात् । नापि कर्तैव तस्यापि साधारणत्वात्। न च निर्निमित्तं कदाचित् भावादतो विलक्षणेन निमित्तेन भवितव्यम् इत्यत आह–तेषां युगपदादिप्रत्ययानां विषयेषु कर्तृषु कार्येषु, किं विशिष्टानां पूर्वप्रत्ययविलक्षणानाम् । पूर्वप्रत्ययाः कर्तृकार्येषु तत्प्रत्ययास्तद्विलक्षणानामुत्पत्तावन्यस्य क्षित्यादिरूपस्य निमित्तस्यासम्भवाद्यान्निमित्तं स काल इति । अथ कालस्यैकरूपतया विलक्षणप्रत्ययानामभावप्रसङ्ग एव । अथ क्रियावैलक्षण्याद्विलक्षणः कालस्तद्वैशिष्ट्याच्च प्रत्ययवैशिष्ट्यमिति चेत् । एवं तर्हि दुरुत्तरमितरेतराश्रयत्वम्। तथाहि–क्रियायाः क्रियारूपतया विशेषाभावात् कथं कालविशेषकत्वम्। अथ युगपत्क्रियाविशेषितो युगपत्कालस्तद्विशेषिता च युगपत्क्रियेतीतरेतराश्रयत्वमेव । नैतदेवम् । निर्विकल्पिकायां संविदि परस्परव्यावृत्तक्रियास्वरूपावगमे सति तद्विशिष्टः कालस्तस्माच्च युगपदादिप्रत्यया इत्युपगमान्निर्विकल्पकाच्च सविकल्पोत्पत्तिरिष्यते । यदि वा स्वरूपेणैव क्रियाया विशिष्टत्वं तत्सहकारी कालो युगपदादिप्रत्ययसंपादक इति । न चात्र विशेषणं कालः। किं तर्हि ? विशिष्टकार्योत्पत्तौ विशिष्टेन निमित्तेन भवितव्यमिति । अन्ये तु विशेषणत्वात् गृहीतस्य व्यापार इत्यनुमानादेः व्यापारानुपलब्धेः प्रमाणं च विनाऽसम्भवादिति कालस्य प्रत्यक्षतां ब्रुवते । तथाहि–विशेष्यज्ञानान्यथानुपपत्त्या विशेषणे ज्ञानं कल्प्यते । तच्च प्रमाणान्तरव्यापारानुपलब्धेः प्रत्यक्षमेव । ननु सर्वेषामेव कारकाणां विशेष्यज्ञानोत्पत्तौ व्यापारविशेषेऽप्येकमेव विशेषणं नान्यदिति विशेषहेतुर्नास्तीति न स्वालम्बनज्ञानसहितस्य विशेष्यज्ञानोत्पत्तावेकस्यैव व्यापारादयमेवानुरागः । स्वानुरक्तप्रत्ययजनकश्च विशेषणं नाकारार्पकं नापि स्वशब्दाभिलप्यज्ञानजनकमसम्भवात् ।

न हि स्वाकारार्पकत्वं विशेषणस्य, आकारवादप्रतिषेधात् । नापि विशेषणशब्दाभिलप्यं विशेष्ये ज्ञानं सम्भवति, पुरुषे दण्ड इति ज्ञानानुत्पत्तेः । अथ दण्डस्यातिशयाधायकत्वानुपपत्तेर्विशेषणत्वाभाव इति चेन्न । विशेष्यज्ञानजनकत्वेनास्यैवातिशयत्वात् । तज्ज्ञानं चातिशयः, तत्सद्भावे कार्यसद्भावात् । अथ विशेषणविशेष्ययोर्भिन्नज्ञानालम्बनत्वेन प्रमाणमस्तीति चेत्, तथाहि-विशेष्यज्ञानमुत्पत्तेः पूर्वं विशेषणस्य न तद्रूपतां दर्शयति न क्रमेण प्रमाणमिति । न च विभिन्नज्ञानालम्बनत्वं विशेषणविशेष्यभावेन व्याप्तम् । नापि विशेषणविशेष्यभावः क्रमेणेत्युभयथापि व्यभिचारात् । तथाहि-लिङ्गलिङ्गिनोः विभिन्नज्ञानलम्बनत्वेऽपि न विशेषणविशेष्यभाव इति व्यभिचारः । न च क्रमे साध्ये विशेषणविशेष्यभावो हेतुः, साधारणत्वात्तस्य सपक्षविपक्षाभ्यां व्यावृत्तेरिति । तथापि भिन्नज्ञानालम्बनत्वे विशेषणविशेष्ययोरनुमेयप्रतिपत्तेः प्रत्ययलक्षणत्वं स्यात् । तथा ह्यनुमानात् गृहीतं विशेषणमिन्द्रियार्थसन्निकर्षेण सह व्यापारात् प्रत्यक्षसामग्र्यामन्तर्भूतमिति तज्जनिता प्रतिपत्तिरग्निमानेष देश इति प्रत्यक्षफला स्यात् । न चाग्नेर्निराधारस्य पूर्वमनुमानं सम्भवति । तथाग्निरप्यनुमीयमानोऽग्नित्वविशिष्टः प्रतीयत इति पूर्वमग्नित्वग्रहणम् । तत्राप्यग्निर्विशेषणमित्यन्योन्याश्रयत्वम् । अथाग्नौ समवायोऽग्नित्वस्य विशेषणम् । तत्राप्यग्नित्वमग्निर्वा विशेषणमिति तदेव दूषणमविशिष्टस्य सर्वत्र सद्भावात् विशेषकत्वानुपपत्तिः । अथ पर्वतोऽग्नेर्विशेषणम् । तत्रापि पर्वतत्वं तत्र च समवायो विशेषणमिति पूर्ववद्दूषणम् । अथाग्निसंयोगः पर्वतस्याग्नेश्च विशेषणम् तस्यापि संयोगिनौ तयोरपि संयोग इति पूर्वदोषप्रसङ्गः । तस्मादनुमानं प्रमाणीकुर्वता विशेषणविशेष्यालम्बनमेकविज्ञानमभ्युपेयम् । एवञ्च धूमविशिष्टस्य पर्वतस्योपलंभादग्निविशिष्टे प्रतिपत्तिर्भवति । अथैकज्ञानालंबनयोरङ्गुल्योरिवैकज्ञानालम्बनपक्षे कथं विशेषणविशेष्यभावः प्रधानोपसर्जनभावेन स एव कस्मादिति चेत् । विभिन्नज्ञानालम्बनत्वेपि समानम् । तथाहीदं विशेषणमिदं विशेष्यमिति विभिन्नज्ञानालम्बनत्वाविशेषे कथं नियमः । प्रधानोपसर्जनभावादिति चेत् । इष्टम् । तदेकज्ञानलम्बनत्वेपीति दोषाभावात् । अथैकश्चायं विशेषणविशेष्यभावो न धर्मपदार्थान्तर्गतः तद्यतिरेकप्र-

तिषेधात् । नापि द्रव्यादिपदार्थान्तरगतः । षट्सूपलम्भात् इति । नहि द्रव्यादीनामन्यतमः षट्सूपलभ्यत इति । अथ विशिष्टप्रत्ययहेतुरदृष्टो विशेषणविशेष्यभाव इति चेत् । तस्य चैकतायामिदं विशेषणमिदं विशेष्यमिति व्यवस्थानुपपत्तिः । विशेषणविशेष्यत्वस्यैकत्वादिति । तथाहि यदेव विशेषणत्वं तदेव विशेष्यत्वमित्येकस्य पुरुषस्यैकस्मिन्नेव काले तदेव विशेषणं विशेष्यं चेति स्यात् । न चैतदस्ति । तस्माद्विशिष्टादृष्टो न विशेषणविशेष्यभावः । अथ नैको दृष्टो विशेषणविशेष्यप्रतिनियतः तथापि विशेषणविशेष्ययोर्भावो न स्यात् । अतो यथासम्भवं विशेषणविशेष्यभावो ग्राह्यः, क्वचित्संयोगः क्वचित् समवाय इति । तथा चाभावेपि विशेषचक्षुरादिसम्बन्ध एव विशेषणविशेष्यभावस्तेन सता च विशिष्टप्रत्ययजननात् । न चादृष्टस्यान्यत्र कारणं निषिध्यते । सकलकार्येषु साधारणत्वात् । नाप्यदृष्टो दृष्टकारणम् प्रत्याचष्टे । शरीरादेरप्यभावप्रसङ्गात् । तथाहि–सुखादिसंपादकोऽदृष्ट एवास्त्वलं शरीरादिपरिकल्पनयेति । अथादृष्टसद्भावेऽपि शरीरादयो दृष्टत्वादभ्युपगम्यन्ते । तर्हि विशेष्यचक्षुरादिसम्बन्ध एव दृष्टत्वाद्विशेषणविशेष्यभावोऽभ्युपगन्तव्यः । अथ विशेषणे तस्यावृत्तेः कथं तद्भाव इति चेत् । नादृष्टवद् व्यापारापेक्षया तद्वृत्तित्वात् । अथैकज्ञानालम्बनत्वे सुरभि द्रव्यमिति विभिन्नेन्द्रियग्राह्ययोर्विशेषणविशेष्यभावो न स्यात् । नहि विभिन्नेन्द्रियाभ्यामेकं विज्ञानं संपाद्यं दृष्टमिति । न विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनत्वे बाधकोपपत्तेरनुसन्धानज्ञानमेतत् । तथाहि—घ्राणेन गन्धमुपलभ्य चक्षुषा स्पर्शनेन वा द्रव्यं पश्चान्मनसाऽनुसन्धत्ते–सुरभि द्रव्यमिति । न च सर्वं विशेष्यज्ञानमनुसन्धानज्ञानमिति वाच्यम् । तत्र हि बाधकानुपपत्तेः । तथा विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनतायामेकदण्डिनमहमद्राक्षमिति स्मरणं न स्यात् । तस्य ह्यनुभवानुरूपत्वात् । अथ पुरुषप्रत्ययसामानाधिकरण्याद्दण्डिनमानयेत्यादिप्रयोगेषु पुरुषस्यैकक्रियासम्बन्धात् तदालम्बनमेव विशेष्यज्ञानमिति चेत् । न पुरुषस्य विशेष्यतया प्राधान्यात् । क्रियासम्बन्धः सामानाधिकरण्यं चोपपद्यत एवेत्यलमिति विस्तरेण ।

अन्ये त्वेकज्ञानालम्बनत्वे विशेषणविशेष्यभावो न स्यात् । तयोः करणकर्मरूपत्वादिति मन्यन्ते । तथाहि विशिष्यते अने-

नेति विशेषणं करणम्। विशिष्यत इति विशेष्यं कर्म। तच्चैकज्ञानालम्बनतायां न स्यात् उभयोः कर्मत्वादिति। नाप्य-ज्ञातव्यापारे सहकारित्वाविशेषाच्चक्षुरादिभ्यो विशेषः स्यादि-ति तज्ज्ञानं कल्प्यते। यदि च दण्डत्वविशिष्टो दण्डः पुरुषस्य वि-शेषणमिष्येत तस्याप्यन्यादित्यनवस्था। दण्डश्चेद्दण्डत्वस्य वि-शेषणमितरेतराश्रयत्वं च स्यादिति विशेष्यज्ञानाभावप्रसङ्गः। अ-स्ति च विशेष्यज्ञानमिति तदन्यथानुपपत्त्या विशेषणज्ञानमात्रं ज्ञा-यते। यच्चेदं विशेष्यज्ञानमुत्पत्तेः पूर्वं विशेषणस्यानन्तरूपतां द-र्शयतीत्युक्तम्। तत्र कथं विशेषणरूपतेति विचार्यम्। नहि दण्डे दण्डत्वादिवद्विशेषणरूपता प्रतिभाति। अथ स्वानुरक्तप्रत्ययजन-कत्वं विशेषणत्वम्। तच्च यदि स्वालम्बनज्ञानसहितस्य विशेष्य-ज्ञानजनकत्वमभ्युपगमव्याघातः। न चैकविज्ञानालम्बनत्वेऽनुरागार्थं पश्यामः, तच्छब्दाभिलप्यत्वादेः प्रतिषेधात्। नापि क्रमो विशेषण-विशेष्यभावहेतुरनभ्युपगमात्। विशेष्यज्ञानं तु विशेषणज्ञानं दर्श-यत्येव। अन्यथा हि तद्विशिष्टतायोगात्। यच्चेदमनुमानादप्रतिपत्तेः प्रत्यक्षफलकत्वमिति। तच्चासत्। बाधकसद्भावेनात्रैकज्ञानालम्ब-नत्वाभ्युपगमात्। न चैवं सर्वत्र बाधकमस्तीति। अन्ये तु धूमोप-लम्भानन्तरमग्न्यनुमाने सत्यग्निमानयं पर्वत इति ज्ञानं प्रत्यक्षफ-लमेवेति ब्रुवते, अन्यथा ह्ययमित्यपरोक्षतानिर्देशो न स्यात्। अत्र च साध्ये धर्मविशिष्टधर्मिणः साध्यत्वे कथमेतत् साधनं स्यादि-ति वाच्यम्। यच्चेदं विशेषणविशेष्यभावः किमेकोऽनेको वेति। तत्रैकत्वाभ्युपगमेऽपि न विशेषणविशेष्ययोरव्यवस्था निमित्तान्तर-स्यासाधारणस्य सद्भावात्। तथाहि विशेषणं स्वानुरक्त-प्रत्ययोत्पादकत्वेनेत्युक्तम्। विशेष्यं तु विशेष्यज्ञानविषयत्वेन, वि-शेषणविशेष्यभावस्तु परं विशेष्यज्ञानोत्पत्तौ सहकारी न पुनर्व्यव-स्थाकारणमिति। न च संयोगसमवायावेव विशेषणविशेष्यभावः। तयोः समवाये अभावे वाऽभावात्। अत्रापि विशिष्येन्द्रियसम्ब-न्धोऽस्तीति चेन्न। तस्य विशेषणावृत्तित्वात्। नाप्यदृष्टवद्व्यापारा-पेक्षया तद्वृत्तित्वं संयोगसमवाययोरन्यत्रानुपलब्धेः। तथाहि-संयो-गसमवाययोर्यदि व्यापारापेक्षया विशेषणवृत्तित्वमिष्येत। विशेष्य-सम्बन्धं विनाऽभावसमवाययोर्ग्रहणम् स्यात्, यत्र हि तयोर्वृत्तिस्तत्रैव

ग्रहणजनकत्वोपलब्धेः। अदृष्टस्य त्वात्मसमवेतस्यापि सकलकार्यो-त्पत्तौ साधारणत्वात्। संयोगादिसद्भावे तदभावे च केवलस्य व्या-पारोऽभ्युपगम्यत एव। स चोभयत्र व्यापारापेक्षया सम्बद्ध इव स-म्बद्धो न परमार्थतः। न चोपचरितस्येन्द्रियासहकारित्वम्, अपरोक्ष-ज्ञानस्यान्यथासम्भवेन तद्भावसिद्धेः। दृष्टश्च श्रोत्रान्योपचरितस्यापि शब्दज्ञानसहकारित्वमिति। यच्चेदं सुरभि द्रव्यमित्याद्यनुसन्धान-ज्ञानमित्युक्तम्। तदसत्। अन्यत्राप्येवंप्रसङ्गात्। न चात्र विभिन्नज्ञा-नालम्बनत्वे किञ्चिद्बाधकमस्तीति तदेवाभ्युपेयम्। नापि दण्डिन-महमद्राक्षमिति स्मरणानुपपत्तिः। विशेषणज्ञानजनितसंस्कारस्य विशेष्यज्ञानसहकारिणः संस्कारारम्भेणापि तद्भावात्। यच्चेदमेक-ज्ञानालम्बनत्वेपि विशेष्यस्य प्राधान्यात् क्रियासम्बन्धः सामाना-धिकरण्यं च घटत इति। तन्न। प्राधान्यस्यैव विचार्यत्वात्। एक-ज्ञानालम्बनतायां हि किं कृतं प्राधान्यमिति चिन्त्यम्। सामाना-धिकरण्यं त्वेकज्ञानालम्बनत्वाविशेषे पुरुषप्रत्ययेन न च दण्डप्रत्यये-नेति विशेषणहेत्वाभावः। अथ विभिन्नविशेषण निमित्तयोरेक-स्मिन्नर्थे वृत्तेः सामानाधिकरण्यम्। दण्डीतिप्रत्यये दण्डो विशेषणं पुरुष इति। न चैवं दण्डस्य विशेषणत्वेऽन्यद्विशेषणमस्तीति सामा-नाधिकरण्यम्। नैतदेवमनेकस्य प्रमेयस्य प्रतिभासाभ्युपगमात्। त-थाहि न दण्डीति ज्ञाने दण्डत्वाद्यपि प्रमेयं प्रतिभासत इत्यभ्युपगमे कथं न सामानाधिकरण्यम। तथा सूत्रव्याघातश्च। समवायिनः श्वै-त्याच्छ्वैत्यबुद्धेश्श्वेते बुद्धिस्तत्कार्यकारणभूते कार्यकारणस्वभावे इति। न पुनर्भूताभिधानमुपमायां मुख्ये बाधकानुपपत्तेः, ना-पि प्रमेयविशेषादेव प्रत्ययविशेषः सहकारिवैलक्षण्येनापि भावात्। नन्वेवं तर्हि विशेषणवत् सम्बन्धेऽपि ज्ञानं कल्पनीयम्। तच्च तदनुरा-रागस्याप्रतिभासेन चक्षुरादिवदगृहीतस्यापि व्यापाराभ्युपगमात्। नाप्यभेदोपचाराद्विशेषणविशेष्यभावः। पुरुषो दण्ड इति ज्ञानानु-पपत्तेः। अथ विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिं गृहीत्वा सङ्कलय्यैव तथा प्रत्येति नान्यथेति सङ्कलनाज्ञानमिति चेत्। नैतद्यु-क्तम्। एतावतो ज्ञानकलापस्य सद्भावे प्रमाणभावात्। तथाहि--परं विशेष्यज्ञानमुत्पद्यमानं दृष्टम्। तच्चान्यथा न घटत इति विशेषणेपि ज्ञानं क्लृप्तम् न पुनर्ज्ञानान्तरसद्भावे प्रमाणमस्तीति। न चेदं निर्विषयं

कल्पनाज्ञानमर्थान्वयव्यतिरेकानुविधानात्, बाधकानुपपत्तेश्च। तदेवं गृहीतस्य विशेषणस्य विशेष्यज्ञानजनकत्वाल्लिङ्गादिव्यापारानुपलब्धेश्च प्रत्यक्षत्वं कालस्येति। सत्यम्। तथैकज्ञानालम्बनत्वेपि युगपदादिप्रत्यया न कालस्य लिङ्गम्। तस्यापि विशेषणतयालम्बनत्वात्। अमीषाञ्चेन्द्रियानुविधानेन प्रत्यक्षफलत्वादित्यलम्।

सर्वकार्याणामुत्पत्तौ कारणत्वं प्रतिज्ञातमाह—सर्वकार्याणामुत्पत्तिस्थितिविनाशहेतुरिति। उत्पत्तिरात्मलाभो भावानां, स्थितिः क्रमभाव्यनेककार्यकर्तृत्वं, विनाशः प्रध्वंसस्तेषां कारणमिति। अत्र तु यद्यपि सर्वकार्याणां हेतुरित्युक्ते सर्वमेतल्लभ्यते तथाप्यवान्तरविशेषापेक्षया भेदकथनम्। अथ तेषां हेतुः काल इति कथं ज्ञायते इत्याह—तद्व्यपदेशादिति। तथा ह्युत्पत्तौ कालेन व्यपदेशा मध्याह्ने उत्पन्नोऽपराह्णे उत्पन्न इति। स्थितौ च मध्याह्नं यावत् स्थितोऽपराण्हश्चेति। विनाशे तु प्रातर्विनष्टो वर्षान्ते विनष्ट इत्यादि। कारणेन तु कार्यस्य व्यपदेशो यथा चाक्षुषं विज्ञानं मानसं विज्ञानमिति। अथ करणेनापि व्यपदेशः सम्भवत्येव—मूर्ताः परमाणवो दण्डी पुरुष इति। सत्यम्। तथापि सम्बन्धे सति व्यपदेशोपलब्धेः, न चान्यः सम्बन्धोऽत्र सम्भवतीति कार्यकारणभावो ज्ञायते। अथास्ति संयोगो, न गुणकर्मादेरव्यपदेश्यताप्रसङ्गात्। अस्ति च तत्रापि व्यपदेशः पूर्वाण्हे शब्दः तथोत्क्षेपणमित्यादि। अथायं व्यपदेशः संयुक्तसमवायात् भविष्यतीति। नाभावे तदभावप्रसङ्गात्। अतः कार्यकारणभाव एव सम्बन्धोऽभ्युपेयः। तस्य हि व्यापकत्वादिति। तथा नियत एव काले कुसुमादेः कार्यस्योपलम्भो न कालान्तर इत्यन्वयव्यतिरेकाभ्यां तस्य कारणत्वं विज्ञायते। तथाहि वसन्तसमय एव पाटलादिकुसुमानामुद्भवो न कालान्तर इत्येवं कार्यान्तरेष्वप्यूह्यम्। तथा प्रसवकालमपेक्षत इति व्यवहारात् कारणत्वं कालस्य। तथाहि—सहकारिण्यपेक्षोपलब्धेः कालस्य सहकारितामन्तरेण प्रसूतावयं व्यवहारो न स्यात्। तथा न परं युगपदादिप्रत्ययहेतुः, क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसम्वत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुश्चेति। तथाहि—परमाणोश्चावरुद्धनभोदेशत्यागोपलक्षितः कालः क्षणः। तद्द्वयं लवः। प्रोक्तानिमेषश्च लवद्वयम्। काष्ठा निमेषाः पञ्चदश चेह

प्रकीर्तिताः । त्रिंशत् काष्ठा कला प्रोक्ता कला त्रिंशन्मुहूर्तकः । इत्येवं मासादेरपि लक्षणं पुराणप्रसिद्धं ग्राह्यमिति । स चायं क्षणादिव्यवहारो विशिष्टनिमित्तमाक्षिपति । नचान्यत् निमित्तं सम्भवतीति क्रियादेः प्रतिषेधादिति कालसद्भावसिद्धिः । तस्य समवायित्वगुणत्वप्रतिपादनार्थं तस्यैव गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागा इति वाच्यम् । अत्र केषांचिदुत्पत्तौ समवायिकारणमेतैर्गुणैर्गुणवान् काल इति । अथ द्रव्यत्वादेव संख्यासद्भावसिद्धौ किमेकोऽनेको वेति संशये तन्निरासायाह—काललिङ्गाविशेषादेकत्वं सिद्धमिति । कालस्य यल्लिङ्गं युगपदादिप्रत्ययरूपं तदविशिष्टमिति नानात्वाप्रतिपादकत्वम् । ननु चासिद्धमेतद्युगपदादिप्रत्ययानां परस्परं विशिष्टत्वात् न च कार्यवैलक्षण्यं कारणवैलक्षण्यं विना भवतीति नानात्वमेव न्याय्यम् । सत्यम् । कार्यवैलक्षण्याद्विज्ञायत एव सामग्रीवैलक्षण्यम् । तच्च सहकार्यन्तरानुप्रवेशेनापि घटत इति कथं कालस्य नानात्वम् । उक्तञ्चात्र विशिष्टक्रियोपचितस्य विशिष्टप्रत्ययजनकत्वमिति । न चैवं परमाणूनां चातुर्विध्यं व्याहन्यत इति पूर्ववद्वाच्यम् । तदेवं नानात्वे प्रमाणाभावाद्द्रव्यस्य च सङ्ख्येयत्वादित्येकत्वं सिद्धम् । तथा तदनुविधानात् पृथक्त्वमिति । तेनैकत्वेनानुविधानं साहचर्याद्यत्र ह्येकत्वं तत्रावश्यमेकपृथक्त्वं भविष्यतीति । न चैवं परिमाणविशेषणसाहचर्य्यमस्तीति ज्ञानार्थं क्रमातिक्रमेण पृथक्त्वनिरूपणमिति । तथा कारणे काल इति वचनात् परममहत्परिमाणमिति । युगपदादिप्रत्ययानां कारणे कालाख्येति सूत्रं दर्शयति । तथाहि— युगपदादिप्रत्ययानां कारणे काल इत्याख्या सञ्ज्ञेति ते च प्रत्ययाः सर्वत्र भवन्तीति व्यापकत्वं कालस्य । तस्माच्च परममहत्त्वमिति । यदि चाणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात्परममहत्त्वमिति पूर्ववद् वाच्यम् । तथा कारणपरत्वादिवचनात् संयोग इति कारणपरत्वात्-कारणापरत्वाच्च कार्यै परत्वापरत्वे इति सूत्रं दर्शयति । कारणपरत्वं हि कालपिण्डसंयोगः परत्वोत्पादकत्वादुपचारेण विवक्षित इति वक्ष्यामः परत्वपरीक्षायाम् । तद्विनाशकत्वाद्विभाग इति । तस्य हि संयोगस्य कृतकत्वादवश्यं विनाशेन भवितव्यम् । स च सर्वत्राश्रयविनाशाभावाद्विभागादेव विनश्यतीति विभागः सिद्ध इति । अथ कालस्य कथं द्रव्यत्वं नित्य-

त्वं चेत्याह तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे इति । तथाहि गुणवत्त्वादनाश्रितत्वाच्च द्रव्यं कालः । समानासमानजातीयकारणासम्भवाच्चाकार्यत्वेन नित्य इत्यतिदेशार्थः । ननु चात्र कालस्यैकतायां वर्तमानादिव्यवहारः कथं स्यादित्याह काललिङ्गाविशेषादञ्जसैकत्वेपीत्यादि । यद्यपि काललिङ्गाविशेषादञ्जसा मुख्यया वृत्यैकत्वं सिद्धम् । तथापि सर्वकार्याणां प्रारंभश्च क्रियाभिनिर्वृत्तिश्च स्थितिश्च निरोधश्चेति तथोक्तास्त एवोपाधयः तद्भेदान्नानात्वमिति । तथा च प्रारम्भक्रियोपलक्षितोऽनागतः कालः अभिनिर्वृत्तिरात्मलाभः तदुपलक्षितश्च वर्त्तमानः तथा स्थितिः क्रमभाव्यनेककार्यकर्तृत्वं तदुपलक्षितोऽपि वर्त्तमान एव तस्य यावद्वस्तुसद्भावः व्याप्यत्वाद्यावद्धि वर्त्तते वस्तु तावद्वर्तमान इति । तथा निरोधो विनाशः तदुपलक्षितश्चातीत इति । अथ कथं नानात्वमुपचर्यत इत्याह मणिवत् पाचकवद्वेति । यथा मणेः स्वरूपापरित्यागेनैवोपाधिभेदादुपचर्यते नानात्वं पीतो रक्त इति । तद्वदिहापि भिन्नक्रियोपाधिवशाद्वर्तमानादिभेद इति । यथा वा स्वरूपापरित्यागेनैव पुरुषस्य नानाक्रियावशात् पाचकादिभेदस्तद्वदिहापीति । वास्तवे हि भेदबाधकोपपत्तेः । तथाहि यदि वर्तमानादेर्वास्तवो भेदः व्यापकत्वं च स्यात् । एकस्य वस्तुनोऽनेककालसम्बन्धाद्व्यपदेश्यता प्रसज्यते । न हि वर्तमानेन व्यपदेशः । अतीतानागताभ्यामपि सम्बन्धात्, नाप्यतीतेनेतराभ्यामपि सम्बन्धादव्यापकत्वम् । तर्हि नानेकस्य पुरुषस्यैकस्मिन्नेव देशे अतीतानागतवर्तमानप्रत्ययाः प्राप्नुवन्ति । ते तथा दृष्टास्तथा चैकस्य विद्यमानक्रियोपलम्भादेकस्मिन्नेव देशे वर्तमानप्रत्ययस्तत्रैवान्यस्य क्रियोपरमादतीतप्रत्ययोऽन्यस्य चोत्पद्यमानक्रियोपलम्भादनागत इति क्रियावशादेव नानाप्रत्ययजनकत्वं पुनर्वास्तवोऽस्य भेद इति स्थितम् ॥

इति कालः ॥

---

**(भा०) दिक् पूर्वापरादिप्रत्ययलिङ्गा । मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अप-**

रोत्तरेण उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति, सा दिगिति ॥

तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । कालवदेते सिद्धाः । दिग्लिङ्गाविशेषादञ्जसैकत्वेऽपि दिशः परममहर्षिभिः श्रुतिस्मृतिलोकव्यवहारार्थं मेरुं प्रदक्षिणमावर्त्तमानस्य भगवतः सवितुर्ये संयोगविशेषास्तेषां लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः सञ्ज्ञाः कृताः, ततो भक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात् पुनर्दश सञ्ज्ञा भवन्ति—'माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ऐशानी ब्राह्मी नागी चेति' ॥

(सू०) दिशमाह दिगिति । लिङ्गं प्रमाणं, पूर्वापरादिप्रत्यय एव तत्र तादृशप्रमाणमित्यर्थः । एतादृशप्रत्ययस्य जनकत्वेन दिक् सिध्यतीत्यर्थः । तदेव विशदयति मूर्तद्रव्यमिति । अमूर्तद्रव्यस्य पूर्वादिप्रत्ययावधित्वं पूर्वादिप्रत्ययाविषयत्वं च न दृष्टमित्यत उभयत्र मूर्तत्वम् । काले पूर्वापरादिव्यवहारस्त्वतीतत्वाद्यौपाधिक एवेति बोध्यम् । पूर्वेणेत्यादिकं स्वार्थिकेणप्रत्ययान्तम्, पाणिनिमते तु स्वमते स्वार्थिकतृतीयान्तम् । इदं पूर्वमित्यादिरर्थः । अन्यनिमित्तासंभवादिति । पूर्वस्यां दिशीत्येवमेव व्यवहारः, न च दिशोऽन्यत्तन्निमित्तं भवितुमर्हति। कालो यदि तन्निमित्तं तदा पूर्वकाल इत्यादिरेव व्यवहारः, पूर्वदिग्वर्तीनि वर्तमानवस्तुन्यपि सत्त्वात् । द्रव्यत्वेन तत्र संख्यादिगुणपंचकमाह तस्यास्त्विति। कालवदेत इति। यथा काललिङ्गकालिकपरत्वापरत्वाविशेषात् कालस्यैकत्वं तथा दिग्लिङ्गदैशिकपरत्वापरत्वाविशेषाद्दिशोऽप्येकत्वमित्यर्थः । तथाहि

एकदेशमधिकृत्य कश्चित्पूर्वः कश्चिदपर इति प्रतीत्या पूर्वापरयोर्वस्तुनोः परत्वापरत्वे विषयीक्रियेते। अन्तरा बहुतरसंयुक्तसंयोगाल्पतरसंयुक्तसंयोगज्ञानं च तयोरुत्पादकम् । तयोरसमवायिकारणानि च ते संयोगाः परापरवस्तुनोः प्रत्यासत्त्यभावादनुपपन्नाः, अतः प्रत्यासत्तिघटिका दिक्कल्प्यते । तस्याश्च समस्तपरापरप्रत्यासत्तिघटकत्वमविशिष्टमत एकत्वमेव दिश इत्यर्थः। दिग्लिङ्गकल्प्यमानदिशोऽविशेषण दिग्लिङ्गस्याविशेषः । यथा काले एकत्वानुविधानात्पृथक्त्वं तथा दिश्यपि। पूर्वदर्शितसूत्रात् यथा काले परममहत्त्वं तथा दिश्यपि । यथा पूर्वदर्शितापरसूत्रात् काले संयोगस्तथा दिश्यपि। यथा काले तद्विनाशकत्वाद्विभागस्तथा दिश्यपीत्यर्थः ।

ननु यदि दिगेकैव तदा कथं प्राच्यादयो दश दिश इति व्यवहार इत्यत आह दिग्लिङ्गाविशेषादिति । दिग्लिङ्गाविशेषो व्याख्यात एव। तस्मादञ्जसा दिश एकत्वे सिद्धेऽपि परममहर्षिभिर्मरीच्याद्यैः प्राच्यादिभेदेन दशविधा दिशः संज्ञाः कृता इत्यर्थः । किमर्थमित्यत आह श्रुतिस्मृतिलोकव्यवहारार्थमिति। 'प्राचीप्रवणे देशे यजेते'ति 'न प्रतीचीशिराः शयीत' इति श्रौतो व्यवहारः । 'आयुष्यं प्राङ्मुखो भुंक्ते' इति स्मार्तः। 'दक्षिणेन याही'त्यादिर्हि लौकिकव्यवहारस्तदर्थमित्यर्थः। ताः संज्ञाः किं पारिभाषिक्यः किं वा नेत्यत आह अन्वर्था इति। अन्येषामनुगतस्वार्था अन्येषां सम्बन्धस्वार्था इत्यर्थः । स्वार्थो हि दिशोऽन्येषां सम्बन्ध इत्यन्वर्थाः प्राच्यादिसंज्ञा इत्यर्थः । केषां सम्बन्धस्वार्था इत्यत्राह भगवतः सवितुरिति । लोकपालपरिगृहीतेति । सुमेरुं पर्वतं प्रदक्षिणं यथास्यात्तथा आवर्तमानस्यावर्तयतो(१) भगवतः सवितुर्ये संयोगविशेषाः पूर्वाचलोपरिभागावच्छिन्ना

(१) वेष्टयत इति पाठान्तरम् ।

आकाशसंयोगविशेषास्तेषामिन्द्रादिलोकपालपरिगृहीतादिग्देशानां च सम्बन्धस्वार्थाः संज्ञा इत्यर्थः । दिग्देशानामित्यत्र चार्थः पूरणीयः । तथाचैकस्या एव दिशस्तादृशरविसंयोगतादृशदिग्देशौपाधिक्यो दश संज्ञा इत्यर्थः । प्राच्यादिभेदेनेति । प्राच्यवाचीप्रतीच्यादिभेदेन भिन्नाः संज्ञा इत्यर्थः । प्रथमम-त्राञ्चति सूर्य इति प्राची । अवाक् तदनन्तरमत्राञ्चति सूर्य इति अवाची । प्रतीपमत्राञ्चति इति प्रतीचीत्यादि यथाकथञ्चिद-नुगतार्थता बोध्या । नक्षत्रमण्डलापेक्षया यतः पृथिवी सा दिगधः । पृथिव्यपेक्षया नक्षत्रमण्डलं यतः सा दिगूर्ध्वा इति बोध्यम् । अवान्तरोर्ध्वाधोव्यवहारश्च वह्निज्वाला यत्र याति तदूर्ध्वं गुरुद्रव्यं यत्र पतति तदध इत्येवं रीत्या । ननु सूर्यसंयोगवशाल्लोकपा-लपरिगृहीतदिग्देशवशाच्च दिशां भेदेन संज्ञादशकं प्रसक्तमित्यत आह अतो भक्त्येति । अभक्त्याऽभेदेन तद्देशदिशां भेदापरिग्रहेण दशविधाः संज्ञा इत्यर्थः । तासामेवेति । उपाधिभेदेन भिन्नत्वेन व्यवह्रियमाणानां तासां दिशामेवेत्यर्थः ॥

( से० ) अथावसरसङ्गत्या दिशमुपदिशति दिगिति । पूर्वापरा-दिप्रत्ययलिङ्गतामेव स्फोरयति मूर्तेति । ईदृशि प्रत्यये विभुनो द्रव्य स्यावध्यवधिमद्भावोऽस्ति इत्यत्र मूर्तपदं, न ह्याकाशात् घटः पूर्वेणेति स-म्भवति घटस्थलेऽप्याकाशसत्त्वात् अत एव न घटाकाशः पूर्वेणेति । नन्वाकाशात् घटः पूर्वेणेति मा भवतु व्यापकतया तदवधिकपूर्वस्या-सम्भवात्, व्यापकतयैव तु घटावधिकपूर्वभागेऽपि सत्तया घटाकाशः पूर्वेणेति प्रत्यये किमपूर्वं तथाच किमिति चेत्, आकाशस्य व्याप-कतया तदवधिकपूर्वदेशमात्रावस्थितत्वभावाभिप्रायेण तथाभिधानात्। इदं पूर्वेणैतस्मादित्यादीदं पूर्वमित्याद्यर्थे । ननु परिशेषं विना कथं दिक् सिद्धिरत आह अन्येति । आद्यो भास्वत्संयोग इह निमित्तं इदम-स्मात्प्रथमादित्यसंयोगसिद्धमित्यर्थकत्वात् । न च प्रथमादित्यसंयोगो अन्यत्र घटादौ साक्षात्सम्बन्धेन सम्भवति स्वरूपसम्बन्धस्तु सम्ब-

न्धान्तरात् संभवति, परंपरासम्बन्धघटकस्तु न पृथिव्यादिः पृथिव्या-द्यसम्बद्धेऽपि पतत्रिप्रभृतौ पूर्वापरादिप्रत्ययप्रागभावादाकाशात्मनो-स्त्वतिप्रसङ्गभयादेव ततो व्यावृत्तौ, कालस्तु न परधर्ममात्रोपनायको-ऽतिप्रसङ्गात्। क्रियासंयोगयोस्तु नैको येन क्रियामात्रोपनायकतया सि-द्धस्य कालस्य संयोगोपनायकत्वं स्यात , तस्मात् कालः क्रियामा-त्रोपनायकतयैव सिद्ध इति संयोगोपनायकमन्यत्कल्पनीयम्। किञ्च कालोपनयेन सर्वप्रमातृसाधारणो व्यवहारस्तन्यते वर्तमानादेः स-र्वान् प्रति समानत्वात् , असौ तु व्यवहारो न प्रमातृमात्रसाधारणो-ऽस्माकं प्राच्या अन्येषां प्रतीचीत्वात् , तस्मादसाधारणव्यवहारनि-दानं द्रव्यान्तरमेव कल्पनीयम्। तदेव दिग्। नचोपाधिना संयोगेनै-वान्यथासिद्धिर्येनैव संयोगेनैकस्य प्राचीव्यवहारः तेनैवापरस्य प्रती-चीव्यवहारेण संयोगस्य सर्वसाधारणत्वाद्दिक्षु धर्मिग्राहकमानाद-साधारणव्यापारोपहारप्रापकतया याति। न च कालोऽप्यसाधारणं व्यवहारं कल्पयति अत्र मध्याह्नस्यान्यत्रार्द्धरात्रत्वादिति वाच्यम्। अत्र दिशोऽपि प्रयोजकत्वात् केवलकालकलितास्तु साधारण एव वर्तमानादावसाधारण्यानिरीक्षणादित्याचार्याः।

ननु इदमस्मात्पूर्वमित्यस्येदमस्मात्प्रथमादित्यसंयोगासिद्धमिति नार्थः तथा प्रत्ययेऽवधिमतोऽभावे अवधिभानानुपपत्तेः। नचावधि-भानं विनासौ प्रथमादित्यसंयोगसंयोगसम्बद्ध इति प्रत्ययो नोपप-द्यते येन तादृशो विषयस्य सावधित्वं स्यात्। नाप्येतदपेक्षयेदं प्रथ-मादित्यसंयोगसन्निहितमित्यर्थः। तथा चावध्यवधिमद्भाव उपप-द्यत इति वाच्यम्। अत्र प्रत्यय आदित्यसंयोगस्य घटे प्रत्ययेन स-न्निधानमात्रप्रत्ययेनोपनायिका नापि क्षणाः। न चैतदपेक्षयेदमादित्य-संयुक्तसंयोगाल्पीयस्त्ववदित्यर्थकत्वम् अस्मादिदं पूर्वमित्यस्य भूय-स्त्वं तु प्रतीचीप्रत्ययमितिवाच्यम्। अत्र घटकानामेव पतत्रिस्फुरणेन दिशो परिस्फुरणात्(?)तदपेक्षयेदं संयुक्तसंयोगाल्पीयस्त्ववदितिवत्। अत्र हिमवत्संयुक्तोऽयं प्रदेशः तत्संयुक्तोऽयमित्यादिसंयुक्तसंयोगा-ल्पीयस्त्वमधिकत्वे तु भूयस्त्वम्। किञ्च संयोगस्य साधारणत्वमुक्तं तदप्युक्तनिर्वर्त्यमेव। यद्वा इदमस्मात्पूर्वमित्यस्येदमस्मादुत्तरसन्निहि-तादित्यसंयोगवदित्यर्थः, तत्सन्निधानसन्निधानेनावध्यवधिमद्भाव आहत एव आदिमादित्यसंयोगयोगस्तु न घटकमन्तरा घटते घटिका च

दिगेव। संयोगस्य च साधारणमप्राप्तिरेव विचित्राभ्यामपि संयोगाभ्यां योगं विना विशिष्टव्यवहारानुपपत्तेः । वैशिष्ट्यं च दिगेकानिवर्त्यमेव। यद्वा इदमस्मात्पूर्वमित्यस्योदयाचलसन्निहितसंयोगादित्यर्थः। इदमस्मात्पश्चिममित्यस्येदमस्मादस्ताचलसंयोगवदित्यर्थः। तथाचैकस्यैव संयोगस्ययदपेक्षयोदयाचलसान्निध्यं तदपेक्षया प्राचीव्यवहारजनकत्वं यदपेक्षयाऽस्ताचलसान्निध्यं तदपेक्षया प्रतीचीव्यवहारजनकत्वमिति साधारण्यं स्फुटमेव।एवमस्मात्पूर्वमित्यस्येदमस्मादुदयाचलसंयुक्तसंयोगाल्पीयस्त्ववद् इत्यर्थः। तस्य चोदयाचलस्वल्पसंयोगपरम्परावादित्यर्थः। न च संयोगपरंपरान्यवृत्तिरित्यत्र विना दिशं युज्यते। किञ्च संयोगस्य असाधारणव्यवहारप्रापकत्वं न धर्मिग्राहकात् न वा प्रमाणान्तरात्सिद्धम्। तथाच धर्मिग्राहकादेव प्रमाणात्सर्वसाधारणासाधारणव्यवहारसम उपह्रीयते नहि मथुरातः प्राग्दिश्यवस्थितायां काश्यां केनापि प्रमात्रा ततः प्रत्यगवस्थितत्वं व्यवह्रीयते। काश्या एकः कश्चित् प्रमाता स्वापेक्षया प्रागवस्थितत्वं व्यवहरति कश्चित्तु प्रत्यगवस्थितत्वमित्यसाधारणामिति चेत्। एवं हि येव किञ्चिदवधिका प्राची सैव किञ्चिदवधिका प्रतीचीत्यवधिभेदमादायासाधारण्यमुपवर्ण्यते ईदृशञ्चासाधारण्यं कालवलयति(?)।यो हि कालो विद्यमानापेक्षयाऽतीतत्वादनुत्पन्नापेक्षया भविष्यत्वाद्यदपेक्षया वर्तमानः तदपेक्षया सर्वे वर्तमानत्वेन व्यवह्रियते इति चेत्। यदपेक्षया प्राची तदपेक्षया सा सर्वैः प्राचीत्वेन व्यवह्रियते इति साधारण्यस्य दिश्यपि सम्भवात्। इदं तु असाधारण्यं सम्भवति चलस्य यस्यापेक्षयैव काशी प्रागवस्थिता तस्यैव प्रत्यगवस्थिता भवति य एव काश्याः प्रत्यगवस्थितः स एव चेत् प्राग् गच्छति तदैतस्य सुघटत्वात्। कालस्तु य एव यदपेक्षया वर्तमानं व्यवहारं तनोति स एव नातीतादिव्यवहारं तदपेक्षयेति वैलक्षण्यात् । एवं चैवंविधलक्षणव्यवहारसमर्पकतया दिक्कालयोर्वैलक्षण्यमक्षतम्। युक्त्यन्तरं तु दिक्साधकं कालग्रन्थादवसेयम्।

अत्रापि सामान्यगुणा एवेत्याह तस्या इति। एकविशेष्यविधेः शेषनिषेधफलकत्वादिति भावः। अत्र प्रमाणमाह कालवदिति। लाघवादेकत्वं तद्व्यापकत्वादेकपृथक्त्वम्। विश्ववर्तिपरत्वादिव्यवहारप्रापकतया परममहत्परिमाणं परत्वाद्यसमवायिकारणतया संयो-

गस्तद्विनाशकत्वाद्विभाग इत्यर्थः । एकत्वे नानात्वव्यवहारं कालवत् कथयति दिगिति । पूर्वादिप्रत्ययादिलिङ्गाविशेषात् । न चैकयैवोपपन्नामनेकां व्यवस्थापयति इत्यर्थः । 'प्राचीप्रवणे यजेते'त्यादिः श्रौतो व्यवहारः, 'आयुष्यं प्राङ्मुखो भुङ्क्ते' इत्यादिः स्मार्तः, 'काशीमलर्कपुरात्पूर्वेण याही'त्यादिलौकिकव्यवहारस्तात्सद्ध्यर्थं सर्गादिप्रभवैर्महर्षिभिः मेरुं प्रादक्षिण्येन गच्छतो भास्वतः संयोगविशेषमनुसृत्य प्राच्यादयो दश संज्ञाः कृताः । प्राच्यादीनामेव चेन्द्रादीन् पुरस्कृत्यैन्द्र्यादयः संज्ञा निर्वर्तिताः पूर्वादिसंज्ञाश्च प्रकृतभाष्यस्योपलक्षणत्वात् प्राग् अस्यां सविताऽञ्चतीति प्राची अवाग् अञ्चति, प्रतीपमञ्चति, उदगञ्चति, इत्यवाच्यादयः । प्रागवाच्यादयस्तु दिग्द्वयान्तरालतया नेयाः । सूर्यापेक्षया यतः पृथिवी साऽधस्तात् पृथिव्यपेक्षया यतः सूर्यः सोर्ध्वम्, एवं च दश यौगिक्यः संज्ञा उपचारतो भवन्ति । वस्तुतस्तु एकैव दिगिति भावः । यदपेक्षयोदयाचलसन्निहिता या दिक् सा तदपेक्षया प्राची व्यवहिता तु प्रतीची पूर्वाभिमुखस्य पुंसः दक्षिणदिग्भागावच्छिन्ना दिग् दक्षिणा वामभागावच्छिन्नोदीची । दक्षिणत्वोदीचीनत्वे च शरीरावयवजातिविशेषावित्यपि वदन्ति । क्वचिदेकादश दिशो गणिताः तत्र यथा प्राच्यवाच्योरन्तराले दिग् प्रागवाची तथोर्ध्वाधोन्तरालादिक्संज्ञयेति दिक् ॥

(व्यो०) इदानीं दिशोऽवसरप्राप्ताया लक्षणपरीक्षार्थं दिक् पूर्वापरादिप्रत्ययलिङ्गेत्यादि प्रकरणम् ।

दिगिति लक्ष्यनिर्देशः । पूर्वापरादिप्रत्ययलिङ्गेति लक्षणम् । तथा पूर्वश्चापरश्च पूर्वापरौ तावादिर्येषामिति तथोक्तास्ते च ते प्रत्ययाश्चेति ते लिङ्गं यस्याः सा तथेति संग्रहोक्ते विवरणार्थमाह । मूर्तमवधिं कृत्वा मूर्त्तेष्वेव द्रव्येषु विषयभूतेषु एतस्मान्मूर्तद्रव्यादिदं मूर्तं पूर्वेण दक्षिणेनेत्यादिदेशप्रत्यया यतो निमित्तात् भवन्ति सा दिगिति । तथाच दिगितरेभ्यो भिद्यते पूर्वापरादिप्रत्ययलिङ्गत्वाद्यस्तु न भिद्यते न चासावेव यथा क्षित्यादिरिति । व्यवहारो वा साध्यः । ननु च पूर्वापरादिप्रत्ययाः परस्परापेक्षितया मूर्तेष्वेव भवन्तीत्यसिद्धं लक्षणाभिधानम् । नैतदेवम् । परस्परापेक्षितायामुभयाभावप्रसङ्गात् । तथाहि—यदि पूर्वमपेक्ष्यापरप्रत्ययोऽपरं

चापेक्ष्य पूर्वप्रत्यय इत्येकाभावे अन्यतराभावादुभयाभावप्रसङ्गः। न च निर्निमित्तः, कदाचिदुत्पन्नत्वादन्वयव्यतिरेकाभ्यां मूर्तद्रव्यस्य व्यापारोपलब्धेरङ्गुल्यादिव्यपदेशाच्चालम्बनत्वम्। न च तस्या वि-शिष्टस्य प्रत्ययजन्मनि व्यापारः, सर्वत्राविशेषेण पूर्वापरादिप्रत्यया-विशेषप्रसङ्गात्। अथ मूर्तद्रव्यमेवावधिभूतं निमित्तमिति चेत्। न तस्य सर्वप्रत्ययेष्वविशेषात्। तथाहि तस्य निमित्ततायां यत्रैव पूर्वप्रत्ययस्तत्रैव दक्षिणादिप्रत्ययाः प्रसज्येरन्नविशेषात्। नापि सङ्केत एव निमित्तम्। तस्य हि निमित्तं विना सर्वत्राप्रसिद्धे वृत्तेः। तथा ह्येकं निमित्तं विनैकत्र सङ्केतितः पूर्वशब्दो नार्थान्तरे प्रवर्तते अथास्ति पू-र्वादिशब्दानां सङ्केतप्रवृत्तेः कारणमेकं यत्सद्भावादर्थान्तरेऽपि प्रवृत्तिरि-ति चेत्। सा तर्हि दिगिति। अथाविशिष्टतया दिशो परादिप्रत्यया वासनावशाद्भवन्तीति चेत्। तन्नाबाध्यमानत्वात्। अबाध्यमानं ज्ञानं निर्विषयं न भवत्येव। शुक्लादिविज्ञानवद्विषयस्य चाङ्गुल्यादि-व्यपदिश्यमानस्यान्वयव्यतिरेकाभ्यां व्यापारोपलब्धेरित्युक्तम्। न च वासनैवात्र निमित्तम्। तस्याबोधकव्यतिरेकेणासंभवादिति पूर्व-न्यायादतो विशिष्टप्रत्ययाः पूर्वापरादयो न विशिष्टनिमित्तमन्तरेण भवन्ति। न चान्यन्निमित्तं क्षित्यादिरूपं सम्भवतीत्यतो निमित्तान्त-रासम्भवाद्यदत्र निमित्तं सा दिगिति विशेषणविशेष्यं न्यायः सर्वो-त्पत्तौ कारणत्वं कालवद्द्रष्टव्यम्।

समवायित्वगुणवत्त्वप्रतिपादनार्थमाह—तस्यास्तु गुणाः सं-ख्यापरिमाणपृथक्त्वसंयोगविभागा इति। तत्र चातिदेशं करोति—कालवदेते सिद्धा इति। तथा दिग्लिङ्गाविशे-षात् विशेषलिङ्गाभावाच्चैकत्वं दिशः सिद्धम्। ननु पूर्वापरादिप्रत्य-याः परस्परं विलक्षणस्यैव निमित्तस्य प्रतिपादका इति नानात्वमेव युक्तम्। न। सहकारिवैलक्षण्येनापि प्रत्ययवैलक्षण्योपपत्तिरित्युक्त-न्यायादतो द्रव्यत्वादेव संख्यायोगसिद्धौ नानात्वे प्रमाणाभावादेक-त्वं सिद्धम्। तेनैकत्वेनानुविधानात् साहचर्यादेकपृथक्त्वं चेति। पूर्वा-परादिप्रत्ययानां कारणे दिगाख्येति वाक्येन परममहत्त्वम्। तथाच पूर्वापरादिप्रत्ययाः सर्वत्र निमित्तं विना न सम्भवन्तीति दिशो व्या-पकत्वात् परममहत्त्वम्। तथा कारणपरत्वात् कारणापरत्वाच्च परत्वा-परत्वे इति सूत्रेण संयोगः सिद्धः। तथाहि—कारणपरत्वं परत्वो-

त्पादको दिक्पिण्डसंयोगः। अपरत्वं च अपरत्वोत्पादको विवक्षित इति वक्ष्यामः परत्वपरीक्षायाम्। संयोगश्च कृतकत्वादवश्यं विनाशी-त्याश्रयविनाशस्य सर्वत्रासम्भवाद्विभागादपि नश्यतीति विभागः सि-द्ध इत्यतिदेशार्थः। तथा गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम्। समानासमा-नजातीयकारणासम्भवाच्च अकार्यत्वेन नित्यत्वं चेति द्रष्टव्यम्। अथै-कस्या दिशः प्राच्यादिव्यवहारः कथं स्यादित्याह—दिग्लिङ्गाविशे-षादञ्जसैकत्वेपीत्यादि। तत्र हि यद्यपि दिशो लिङ्गानामविशेषान्नाना-त्वाप्रसिद्धावञ्जसा मुख्यया वृत्त्यैकत्वं सिद्धम्। तथापि सवितुर्ये संयोगाः लोकपालपरिगृहीतादिक्प्रदेशैः सहेति विभक्तिपरिणामः। यदि वा भगवतः सवितुर्ये संयोगास्ते केषामिति विवक्षायां संब-न्धस्यापि विद्यमानत्वाद्युक्तैव षष्ठी। लोकपालपरिगृहीतादिक्प्रदेशा-नामिति। अन्वर्थाः अनुगतार्थाः प्राच्यादिभेदेन दशविधाः दशप्र-काराः संज्ञाः कृताः परमर्षिभिरिति। किमर्थमित्याह—श्रुतिश्च स्मृतिश्च लोकश्चेति तथोक्तास्तेषां संव्यवहारार्थमिति। श्रौतो हि व्यव-हारो 'वायव्यां गवयमालभेत'। स्मार्तस्तु 'प्राङ्मुखो भुञ्जीत'। लौ-किको'प्यस्मद्वृद्धाः प्राङ्मुखा यजन्तेस्मे'त्यादि व्यवहारस्य प्रसिद्ध्य-र्थमिति। अथ लोकपालपरिगृहीतदिक्प्रदेशैः संयोगो भगवतः कथं भवतीत्याह—मेरुं प्रदक्षिणमावर्तमानस्येति। प्रदक्षिणं हि यथा भवति तथा मेरुं परिभ्रमतोपि विशिष्टसंयोगाः तद्वशाच्च प्राच्यादि-व्यवहारः, अन्वयव्यतिरेकाभ्यामुपलम्भाच्च। तथाहि—उदयस-मये सवितुर्दिक्प्रदेशेन योगात्प्राचीति व्यवहारः। तत्र हि प्राक् प्रथममञ्चति इति कृत्वा। एवं मध्यान्हसमये दिक्प्रदेशेन संयोगाद्द-क्षिणेति व्यवहारः। तथा चापराण्हे तद्योगात् प्रतीचीति च। एव-मुदीच्यादिष्वपि वाच्यम्। नन्वेवं तर्हि स एवादित्यसंयोगोस्तु पूर्वा-परादिव्यवहारविषयत्वे अन्यादित्यपरिकल्पनायामनवस्था स्यादिति निमित्तान्तरमेव न्याय्यम्। न चादित्यपरिवर्तनं सर्वत्र सम्भव-तीति। तत्र पूर्वापरादिव्यवहाराभावप्रसङ्गः। तस्मादेकाप्यनेकसं-योगोपाचिता विशिष्टव्यवहारसमर्थेत्यभ्युपगन्तव्या। अतो भक्त्यो-पचारेण दश दिशः सिद्धास्तासां चोपचरितदिशां देवतापरिग्रहव-शात् पुनर्दश संज्ञा भवन्ति। महेन्द्रेण परिगृहीता माहेन्द्री वैश्वान-रेण परिगृहीता वैश्वानरीत्येव न्यास्वपीति।

इति दिक्॥

( भा० ) आत्मत्वाभिसंबन्धादात्मा। तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते। वास्यादीनामिव करणानां कर्तृप्रयोज्यत्वदर्शनात् शब्दादिषु प्रसिद्ध्या च प्रसाधको ऽनुमीयते। न शरीरेन्द्रियमनसामज्ञत्वात्। न शरीरस्य चैतन्यं घटादिवत् भूतकार्यत्वात् मृते चासंभवात्। नेन्द्रियाणां करणत्वात् उपहतेषु विषयासान्निध्ये चानुस्मृतिदर्शनात्। नापि मनसः करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात् स्वयंकरणभावाच्च। परिशेषादात्मकार्यत्वात् तेनात्मा समधिगम्यते। शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठाताऽनुमीयते प्राणादिभिश्चेति। कथम्? शरीरपरिगृहीते वायौ विकृतकर्मदर्शनाद् भस्त्राध्मापयितेव निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव देहस्य वृद्धिक्षतभग्नसंरोहणादिनिमित्तत्वात् गृहपतिरिव अभिमतविषयग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा गृहकोणेषु पेलकप्रेरक इव दारकः नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनादनेकगवाक्षान्तर्गतप्रेक्षकवदुभयदर्शी कश्चिदेको विज्ञायते। सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते। ते च न शरीरेन्द्रियगुणाः। कस्मात्? अहङ्कारेणैकवाक्यताभावात् प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद् बाह्येन्द्रियाप्रत्यक्षत्वाच्च तथाहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति।

**तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः । आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः । धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात् । संस्कारः स्मृत्युत्पत्तौ कारणवचनात् । व्यवस्थावचनात् संख्या । पृथक्त्वमप्यत एव । तथाचात्मेति वचनात् परममहत्परिमाणम् । सन्निकर्षजत्वात् सुखादीनां संयोगः । तद्विनाशकत्वाद्विभाग इति ॥**

( से० ) आत्मानमाह आत्मत्वेति । समवायेन ज्ञानाश्रयतावच्छेदकमात्मत्वं जातिरीश्वरसाधारणी । सा चान्यात्मन्यप्रत्यक्षत्वेऽपि योगिव्यक्तेरात्मनि मनसा प्रत्यक्षीक्रियते, परमाणावप्रत्यक्षमपि पृथिवीत्वद्रव्यत्वादिकं घटादाविव चक्षुषा । मानसप्रत्यक्षस्यापि तस्यानुमेयत्वमप्याह तस्य सौक्ष्म्यादिति । सौक्ष्म्यं बहिरिन्द्रियग्रहणयोग्यताविरहस्तस्मादप्रत्यक्षत्वेऽपि बहिरिन्द्रियाप्रत्यक्षत्वे सत्यपि करणैः श्रोत्रादिभिस्तस्याधिगमोऽनुमितिरित्यर्थः । ननु करणानां श्रोत्रादीनामतीन्द्रियत्वात्कथं तैरनुमानमित्यत आह शब्दाद्युपलब्ध्यनुमितैरिति । शब्दाद्युपलब्धिभिः श्रोत्राद्यनुमानं यथा–शब्दाद्युपलब्धयः करणसाध्याः पुरुषव्यापारत्वात् दात्रादिकरणकच्छिदादिक्रियावत् इति । श्रोत्रादिभिरात्मानुमितिस्तु यथा–श्रोत्रादीनि कर्तृव्यापार्याणि करणत्वाद्वासीवत् । वासी छिदाकरणमस्त्रविशेषः(१) । वास्यादौ साध्यहेत्वोः सहचारं दर्शयति वास्यादीनामिवेति । आत्मनि प्रमाणान्तरमपि दर्शयति शब्दादिषु प्रसिद्ध्या चेति । शब्दादिष्विति षष्ठ्यर्थे सप्तमी । शब्दादीनामित्यर्थः । शब्दादीनां प्रकृ-

(१) यन्त्रविशेष इति पाठान्तरम् ।

ष्टया सिद्ध्या ज्ञानेन प्रसाधको ज्ञाताऽनुमीयत इत्यर्थः। तदनुमानं यथा—ज्ञानं क्वचिदाश्रितं कार्यत्वाद्गन्धवदिति। आश्रितत्वं च समवायेन बोध्यम्। तेन न शरीरेण सिद्धसाधनम्। ननु शरीरे बहिरिन्द्रिये मनसि वा समवेतं ज्ञानमस्तु इत्यत आह न शरीरेन्द्रियेति। एषां नाधिगम इत्यनुषङ्गः। तत्र हेतुमाह अज्ञत्वादिति। तेषां ज्ञानानाश्रयत्वादित्यर्थः। तेषां प्रत्येकं चैतन्याभावं ग्राहयति न शरीरस्येति। चैतन्यमिति। चैतन्यं ज्ञानं तन्न शरीरस्य। तत्र हेतुमाह घटादिवदिति। भूतत्वात्कार्यत्वाच्चेति हेतुद्वयम्। घटादिवदिति दृष्टान्तः।

नन्वप्रयोजकमिदं भूतस्य कार्यस्य वा चैतन्याश्रयत्वे को विरोध इत्यत आह मृते चेति। यदि शरीराश्रितं चैतन्यं स्यात्तदा मृते शरीरेऽपि स्यात् तत्र तदसम्भवात् तददर्शनादशरीराश्रितं(१) चैतन्यमित्यर्थः। बहिरिन्द्रियाणां चैतन्याभावं ग्राहयति नेन्द्रियाणामिति। न बहिरिन्द्रियाणामित्यर्थः। हेतुमाह करणत्वादिति। जलानयनकरणघटादिरत्र दृष्टान्तः। अत्राप्यप्रयोजकत्वमाशंक्यान्यदाह उपहतेष्विति। अनुस्मृतिर्हि ज्ञानविशेषः। सा यदि श्रोत्रादीन्द्रियसमवेता स्यात्तदा बाधिर्यादिहेतुरोगविशेषादिना उपहतेष्विन्द्रियेषु सत्सु स्मृतिर्न स्यादाश्रयस्योपहतत्वात्, तेषूपहतेष्वपि दृश्यमाना तत्स्मृतिराश्रयान्तरमधिगमयतीत्यर्थः। स्मृतेरिन्द्रियान्वनाश्रयत्वे हेत्वन्तरमप्याह विषयासांनिध्यादिति। इन्द्रियेण स्वेन जन्यैव स्मृतिरिन्द्रियसमवेता वाच्य ऽन्यथातिप्रसङ्गात्, तथाचेन्द्रियस्य प्रतिरोधकाद्विषयविनाशात् विषयस्येन्द्रियासान्निध्यादिन्द्रियेण तदजननेऽपि दृश्यमाणा स्मृतिः आश्रयान्तरमधिगमयतीत्यर्थः। न च स्वजन्या-

---

(१) तदसम्भवान्न शरीराश्रितमिति पाठान्तरम्।

नुभवजन्यसंस्कारसत्त्वात्तत्स्मृतिरिति वाच्यम् । संस्कारस्येन्द्रियावृत्तित्वात्, अन्यथा इन्द्रियस्योपघाते नाशे वा स्मृतिर्न स्यात् । नन्वेवं भूतत्वेन कार्यत्वेन वा चैतन्यस्य शरीरवृत्तित्वे उपघाते विषयासान्निध्ये च स्मृतिदर्शनात् बहिरिन्द्रियावृत्तित्वे चाभूतेऽजन्येऽनुपहते केनाप्यप्रतिबद्धे विषयसान्निकर्षे च मनोरूपेन्द्रिये चैतन्यमास्ताम् इत्यत आह मनस इति ।

अयमभिप्रायः । ज्ञानाश्रयत्वेनानुमीयमानं मनो कर्तैव स्यात् न ज्ञानकरणं, तथाच चक्षुरादीन्द्रियाणां युगपत्तत्तद्विषयसन्निकर्षे मनसस्तत्तदिन्द्रियसान्निकर्षापेक्षां विना युगपदनेकस्यालोचनस्य ज्ञानस्य प्रसङ्गात् करणस्यैव कर्तुरेव व्यापारमात्रजनननियमाभावात् । अथ यदिन्द्रियसंयुक्तं मनस्तदीयविषयविषयकमेव ज्ञानं मनसा स्वस्मिन् जन्यते इत्युच्यते इति चेत्, तथापि ज्ञानाश्रयतयैव सिद्धं मनो न करणतयेत्यतस्तदेवात्मेति पर्यवसितम्, मन इति तस्य संज्ञामात्रभेदः स्यात् । तथा चात्मा तावतैव सिद्ध एव स्यात्, परन्तु युगपदनेकव्यापारापत्तिवारणार्थमेकमात्रव्यापारजननहेतुकरणमनुमातुमवशिष्यते । तच्च मनोग्रन्थे वक्ष्यत इति भावः । ननु करणतयैव मनोऽनुमाय तत्रैव ज्ञानाश्रयताऽनुमास्यत इत्यत आह स्वयं करणभावाच्चेति । स्वस्मिन्नित्यर्थे स्वयमिति । करणतयाऽनुमाने स्वस्मिन्मनसि ज्ञानकरणभावात् ज्ञानकरणत्वात् न ज्ञानाश्रयत्वमित्यर्थः । ज्ञानाश्रयासिद्धौ निराश्रयस्य ज्ञानस्यैवासिद्धौ तत्करणानुमानं न सम्भवति । ज्ञानाश्रयानुमाने च ज्ञानकरणभिन्न एवासौ सिद्ध इति मनसः करणतामात्रं, ततो न ज्ञानाश्रयत्वमित्यर्थः । आत्मकार्यत्वादिति । चैतन्यस्येति शेषः ।

ननु शब्दादीनां ज्ञानेनैव तदाश्रय आत्मानुमीयत इत्युक्तं

आत्मपदार्थसाधने च न स्वात्म(पदार्थ)मात्रसाधनमुद्देश्यम्, किन्तु सकलात्मसाधनमेव; तथाच परज्ञानस्याप्रत्यक्षत्वेनानुमात्राऽज्ञातत्वात्कथं तज्ज्ञानेन तदनुमानमित्यतः सकलात्मसाधकप्रत्यक्षहेतुना तत्साधयति शरीरसमवायिनीभ्यामिति। प्रयत्नवान् विग्रहस्य शरीरस्याधिष्ठाता संयोगी, स्वपरसाधारण आत्माऽनुमीयत इत्यर्थः। केन हेतुनाऽनुमीयत इत्यत्राह (स्वपरसाधारण) प्रवृत्तिनिवृत्तिभ्यामिति। प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ, तत्पदद्वयस्य तज्जन्यक्रियापरत्वेन प्रवृत्तिनिवृत्तिजन्यक्रियाभ्यामित्यर्थः। क्रियामात्रस्य वाय्वादौ व्यभिचारात्प्रवृत्तिनिवृत्तिजन्यक्रिये एव प्रत्येकं हेतू। तयोः क्रिययोः प्रवृत्तिनिवृत्तिजन्यतां ग्राहयति हिताहितेति। तयोः प्राप्तिपरिहारौ यथासंख्यं बोध्यौ। तद्योग्याभ्यामित्यर्थः। वाय्वादिक्रिया तु न वाय्वादेर्हिताहितप्राप्तिपरिहारयोग्या। शरीरं प्रयत्नवत्संयुक्तं हिताहितप्राप्तिपरिहारयोग्यक्रियावत्त्वात् इत्यनुमाने हेतोः पक्षवृत्तित्वं साधयति शरीरेति। शरीरं समवायि ययोस्तादृशीभ्यामित्यर्थः। तत्र दृष्टान्तमाह रथकर्मणेति। प्रयत्नवतः सारथेः रथाधिष्ठानं यथा रथकर्मणाऽनुमीयत इत्यर्थः। हेत्वन्तरमाह प्राणादिभिश्चेति। आदिना शरीराभ्यन्तरचारिअपानादिसमस्तवायुपरिग्रहः। ननु प्राणादेः प्रयत्नवदनधिष्ठितशरीरेऽपि सम्भवोऽस्तु कथं तेषु व्याप्तिरिति पृच्छति कथमित्यनेन। उत्तरयति शरीरपरिगृहीत इति। वायोर्हि स्वाभाविकी तिर्यग्गतिस्तस्योर्ध्वाधोगतिरूपं कर्म तु विकृतं कर्म, तद्दर्शनाच्छरीरेऽधिष्ठाता प्रयत्नवाननुमीयते इत्यर्थः। अत्र दृष्टान्तः भस्त्रेति। भस्त्रा कर्मकारस्य वायुप्रेरकचर्मपुटिका तदाध्मापयिता तदीयवायुक्रियाजनकः कर्मकार इत्यर्थः। प्रयोगस्त्वेवम्—जीवच्छरीरं प्रयत्नवदधिष्ठितं संमूर्छनरहितविकृत-

क्रियवाय्वाश्रयत्वात् भस्त्रावदिति । हेत्वन्तरमाह निमेषोन्मेषेति । नियतेन वायूवाद्यभिघातजन्यभिन्नतया नियतेन स्वाभाविकेन निमेषोन्मेषरूपचक्षुःपक्ष्मकर्मणा विग्रहस्याधिष्ठाता प्रयत्नवाननुमीयत इत्यर्थः । दारुयन्त्रनिमेषोन्मेषकर्मणा दारुयन्त्रप्रयोक्ता शिल्पीव । प्रयोगस्त्वेवं-जीवच्छरीरं प्रयत्नवदधिष्ठितं वाय्वाद्यभिघातजन्यभिन्ननिमेषोन्मेषवत्त्वात्ताद्दशनिमेषोन्मेषविशिष्टदारुयन्त्रवदिति । हेत्वन्तरमाह देहस्येति । देहस्य वृद्धिः पुष्टिः, क्षतभग्नयोः संरोहणम् पूर्वावस्थावत्करणम्, आदिना चेष्टापरिग्रहः । तन्निमित्तत्वादित्यर्थः । प्रयत्नवान् देहस्याधिष्ठातानुमीयत इत्यनुषङ्गः । अत्र दृष्टान्तो गृहपतिरिवेति । आदिपदग्राह्येण हेतुनाऽनुमाने तु न गृहपतिर्दृष्टान्तः, गृहस्य चेष्टाभावात्, प्रयत्नाधानशरीरक्रियाया एव चेष्टात्वात् । प्रयोगस्त्वेवं-जीवच्छरीरं प्रयत्नवदधिष्ठितं वृद्ध्यादिमत्वात् वृद्ध्यादिमद्गृहादिवदिति । हेत्वन्तरमाह अभिमतेति । बहुषु वस्तुषु पुरःस्थितेष्वपि यत्र वस्तुनि दिदृक्षा सोऽभिमतो विषयस्तद्ग्राहकं करणं चक्षुस्तत्सम्बन्धनिमित्तेन मनःकर्मणा विग्रहस्याधिष्ठाता प्रयत्नवाननुमीयत इत्यर्थः । विषयेन्द्रियसंयोगहेतोर्मनःकर्मणः प्रयत्नवन्तं विनाऽन्याप्रयोज्यत्वादन्यथा सुषुप्तस्यापि मनसा ताद्दशसंयोगजननापत्तेः, गृहकोण इत्यादिरत्र दृष्टान्तः । पेलकं खेलाविशेषं शिशूनां जतुगुटिका । गृहकोणेषु व्यवस्थिते गुटिकान्तरे वस्त्वन्तरे वा पेलकप्रेरको दारकः शिशुरिवेत्यर्थः । अभिमतविषयगुटिकासंयोगहेतुगुटिकाकर्मणापि तत्प्रेरकः शिशुरनुमीयते । प्रयोगस्त्वेवम्-मनः प्रयत्नवदधिष्ठितम् अभिमतविषयसंयोगहेतुगतिमत्त्वात् यथोक्तदारकप्रेरितपेलकवदिति । अभिमतसंयोगस्तु चक्षुषस्तद्धेतुक्रियमनसः, पेलके त्वभिमतः संयोगः स्वस्यैवेति विशेषो बोध्यः । रसनेन्द्रियवि-

कारेणापि तदनुमानमाह नयनाविशेषेति । नयनविषयस्तिन्तिड्याद्यम्लद्रव्यं तस्यालोचनं चक्षुषा ग्रहणं तदनन्तरं रसानुस्मृतिः तदीयाम्लरसस्मरणम् । तत्क्रमेणेति । तत्क्रमेण रसनेन्द्रियस्य विक्रियाया रसनायामुदकाविर्भावरूपस्य(१)विकारस्य दर्शनादुभयदर्शी अम्लद्रव्यतद्रसद्वयदर्शी तदुभयज्ञाता आत्मा यथाऽनुमीयत इति परत्रान्वयः । क्रमेणेत्यत्र क्रमश्च अम्लरसस्मरणानन्तरं तद्ग्राहकस्यातीन्द्रियस्यानुमानम् , ततस्तदिन्द्रियस्य विकारदर्शनादित्यर्थः । रसनेन्द्रियविकारस्याम्लद्रव्यरसतदुभयज्ञानं विनाऽनुपपत्तेः, तदुभयज्ञानस्य तदुभयज्ञातारं तच्छरीराधिष्ठातारं विनाऽनुपपत्तेरिति क्रमेण तच्छरीराधिष्ठाता तदुभयदर्शी अनुमीयत इत्यर्थः । अत्रोभयदर्शित्वमात्रे दृष्टान्तमाह अनेकगवाक्षेति । गवाक्षो गृहाच्छादनजालमार्गः अनेकतच्छिद्रैः प्रेक्षकपुरुषवदित्यर्थः, तस्याप्युभयदर्शित्वात् । सुखादिगुणैरपि तदनुमानमाह सुखदुःखेत्यादि । सुखादिकं द्रव्यसमवेतं गुणत्वादित्यनुमानेन गुणैर्गुण्यनुमीयत इत्यर्थः । नन्वत्र शरीरसमवेतत्वेनार्थान्तरं स्यादित्यत आह ते च गुणा इति । कस्मादिति । शरीरेन्द्रियगुणत्वाभावः कस्मादिति पृच्छति । अहङ्कारेणेति तदुत्तरम् । अहमिति बुद्धिविशेषेणेत्यर्थः । तदेकवाक्यताभावादित्यर्थः । अत्राभावपदं विरोधपरम् । एकवाक्यतापदं च समानाधिकरण्यानुभवपरम् , तथा च अहंकारेण सह सामानाधिकरण्यानुभवविरोधादित्यर्थः। तथाहि योऽहं जन्मान्तरे कृतपुण्यकर्मा सोऽहमिदानीं सुखी योऽहं कृतपापकर्मा सोऽहमिदानीं दुःखी योऽहं पुण्यकर्म करोमि सोऽहं जन्मान्तरे सुखमिच्छामि दुःखं च द्वेष्मि योऽहं जन्मान्तरे सुखमिच्छामि सोऽहं धर्मार्थं यज इत्येवमहन्त्वेन येषां सुखादीनां सामानाधि-

(१) रसनायाः घूर्णिकाविर्भावणरूपस्येति पाठान्तरम् ।

करण्यमनुभूयते तेषां सुखादीनां शरीरवृत्तित्वविरोधादित्यर्थः । न ह्यहन्त्वसामानाधिकरण्येनानुभूयमानयोर्जन्मद्वयीयपुण्यसुखा-द्योः शरीरवृत्तित्वं, सम्भवति जन्मद्वये शरीरभेदात् जन्मद्वयवर्ति-अभिन्नपदार्थेनैवोपपत्तेः, स एव सुखाद्याश्रयः । ननु योऽहं गौर आसं सोऽहमिदानीं दुःखात् कृष्णः योऽहं कृश आसं सोऽहमिदानीं स्थूल इत्यत्राहंपदार्थसमानाधिकरणगौरत्वकृशत्वादीनां बुद्धिः शरीरभेदमेवावगाहत इति नात्माभेदं गौरत्वादेरात्मन्यभावात् इति चेन्न। तत्र शरीरेऽहंपदार्थाबुद्धेर्भ्रमत्वात् पूर्वदर्शितप्रतीत्या बाधि-तत्वेन प्रमात्वात् अवस्थाभेदेन शरीरभेदात् शरीराभेदबुद्धेरपि तत्र भ्रमत्वात् । न चैवं चैत्रगृहे जातस्य शिशोरवस्थाभेदेन शरीरभेदे चैत्रपुत्रत्वव्याघात इति वाच्यम् । चैत्रपुत्रशरीरारम्भ-कारब्धशरीरान्तरस्यापि चैत्रपुत्रत्वस्वीकारात् । एवमिन्द्रियगु-णत्वाभावोपि बोध्यः । इन्द्रियाणामपि जन्मद्वये भेदात् । सुखा-दीनां शरीरेन्द्रियगुणत्वाभावे हेत्वन्तरमप्याह प्रदेशेति । एक-देशमात्रवृत्तिगुणत्वादित्यर्थः । इदं च शरीरेन्द्रियसंयोगविभाग-योर्व्यभिचारि अतो न शरीरेन्द्रियगुणा इत्यत्र न स्पर्शवद्विशे-षगुणा इत्यर्थः । तेनोक्तसंयोगे श्रोत्रेन्द्रियनिष्ठशब्दे च न व्य-भिचारः । हेत्वन्तरमाहायावद्द्रव्येति । सुखादयो न शरीरस्ये-न्द्रियस्य वा गुणा अयावद्द्रव्यभावित्वात् आश्रयद्रव्ये सत्यपि तत्र स्वसमानजातीययावतामभावादित्यर्थः । सुखादीनामाश्र-यो हि कदाचित् सुखादिजातीययावतामभाववान्, शरीरमिन्द्रि-यं वा न कदाचिदपि स्वगुणरूपादिजातीयानां यावतामभाववदि-त्यर्थः । अत्र चोत्पत्तिक्षणं विनेति बोध्यम्, तत्क्षणे शरीरेन्द्रि-ययोरप्यगुणत्वात् । हेत्वन्तरमाह बाह्येन्द्रियेति । बाह्येन्द्रियप्र-त्यक्षवृत्तिगुणत्वव्याप्यजातिराहित्यादित्यर्थः । तेनेन्द्रियगुणस्य

बाह्येन्द्रियाप्रत्यक्षत्वेपि न तत्र व्यभिचारः। यथोक्तजातिराहित्याभावात्। सुखादिकं तु तद्राहितमेवात्मसाधकम्। प्रत्यक्षमाह अहंशब्देनेति। अत्र विषयीकृतत्वादिति पूरणीयम्। अहंशब्दपदं च अहमित्येवं प्रत्यक्षपरम्। तथा चाहमितिप्रत्यक्षविषयत्वादित्यर्थः। ईदृशप्रत्यक्षस्य च न शरीरं विषयः, अहं शरीरीति भेदेन प्रतीतेरिति भावः। नन्वहमिति प्रत्ययः पृथिव्यादिकमेव विषयीकरोत्वित्यत्राह पृथिव्यादिशब्देति। अहं पृथिवीत्येवं शब्दप्रयोगाभावादित्यर्थः।

आत्मनो गुणानाह तस्य गुणा इति। एषु गुणेषु सूत्रकारसम्मतिमप्याह आत्मलिङ्गेति। आत्मनो लिङ्गानि साधकानि तेषामधिकारे कथने बुध्यादयः सिद्धा इत्यर्थः। बुध्यादीनां तद्गुणत्वाभावे तल्लिङ्गवचनानुपपत्तेरिति भावः। धर्माधर्मसिद्धौ तत्सम्मतिमाह धर्माधर्माविति। विहितनिषिद्धकर्मभ्यां धर्माधर्मौ जन्येते कालान्तरभाविनोः सुखदुःखयोर्विहितनिषिद्धकर्मभ्यां साक्षाज्जनयितुमसामर्थ्येन तद्व्यापारौ स्थिरौ धर्माधर्मौ कल्प्येते। तत्र व्यधिकरणावपि धर्माधर्मौ भिन्नात्मनि सुखदुःखे जनयेतामित्यत्र सूत्रकारेणोक्तम् आत्मान्तरगुणानामात्मान्तरगुणेष्वकारणत्वादिति। व्यधिकरणधर्माधर्मात्मकगुणानां व्यधिकरणसुखदुःखात्मकगुणाजनकत्वादिति तदर्थः। ततो धर्माधर्मौ सिद्धावित्यर्थः। धर्माधर्माभावे ईदृशाकाङ्क्षासमाधानयोरसम्भवादिति भावः। संस्कारसिद्धौ सूत्रकारसंमतिमाह संस्कारः स्मृत्युत्पत्ताविति। 'आत्ममनसोः संयोगात् संस्काराच्च स्मृति'रिति सूत्रम् स्मृत्युत्पत्तौ संस्कारस्य हेतुत्वकथनात् संस्कारस्तद्वचनात्सिद्ध इत्यर्थः। संख्यायां सूत्रकारसंमतिमाह व्यवस्थावचनात्संख्येति। 'नानात्मानो व्यवस्थात'

इति सूत्रम् । अहमयमित्यादि व्यवस्थावशादात्मानो नानेति तदर्थः । नानात्वं च बहुत्वसंख्या इत्यतस्तद्वचनात् संख्या सिद्धेत्यर्थः । तद्वचनादेव पृथक्त्वसिद्धिरित्याह अत एवेति । अत एव-बहुत्वसंख्यायाः पृथक्त्वाभावेऽसम्भवादित्यर्थः । आत्मनि परममहत्त्वपरिमाणे सूत्रकारसंमतिमाह तथा चात्मेति । विभवान्महानाकाशस्तथा चात्मेति च सूत्रम् । तथाचेति । आकाशतुल्य एवेत्यर्थः । आकाशतुल्यत्वेनात्मकथनात् परममहत्त्वमित्यर्थः । नन्वात्मनो विभुत्वं कुत इति चेन्न । अविभुत्वे शरीरावच्छिन्नत्वं वाच्यम्, अवच्छिन्नद्रव्यत्वे च मूर्तत्वं वाच्यं, तच्च मूर्तत्वं यदि नित्यं तदा परमाणुत्वनियमात् । अथास्त्वसौ परमाणुरिति चेत् । न । प्रत्यक्षज्ञानादिगुणाश्रयत्वबाधात् । अथास्त्वसावयवीति चेन्न । अवयविनोऽनित्यत्वनियमेन उत्पत्तिविनाशप्रसङ्गात् , तथाच तस्मिन्नष्टे शुभाशुभकर्मफलभोक्ता कश्चिन्न स्यादित्यर्थः । तत्र संयोगविभागौ साधयति संनिकर्षजत्वात्सुखादीनामिति । संनिकर्षः-संयोगः, सुखादीनां तज्जन्यत्वादित्यर्थः । स च संयोगः शरीरात्मनोः, तदनपेक्षत्वे शरीरानवच्छिन्नात्मभागेपि सुखाद्युत्पत्तिप्रसङ्गात् । एवमात्मनः संयोगश्च, तदनपेक्षत्वे सर्वदा सुखाद्युत्पत्तिप्रसङ्गात् । तद्विनाशकत्वादिति । तादृशसंयोगस्य तावन्न सार्वदिकत्वं तथात्वे नित्यतापत्तेः सदैव सुखाद्युत्पत्तिप्रसङ्गाच्च । ततस्तस्य विनाशो वाच्यस्तस्य च विभागेनैव नाश इत्यतस्तद्विनाशकत्वाद्विभागसिद्धिरित्यर्थः ॥

इत्यात्मा ।

( से० ) अथावसरप्राप्तमात्मानं निरूपयति आत्मत्वेति। ननु आत्मत्वजातौ किं प्रमाणम् ? न तावदनुगताकारा बुद्धिः परात्मनः परस्याप्रत्यक्षतया घटो घट इतिवदात्माऽऽत्मेति प्रत्यक्षाभावात् । नापि सुखसमवायिकारणतावच्छेदकतयाऽऽत्मत्वसिद्धिः ईश्वरे सुखसमवायिकारणतापत्तेः । न चेष्टापत्तिर्भवति तु न तत्रानन्दो धर्माभावादिति वाच्यम् । नित्यस्य स्वरूपयोग्यस्य फलोपधाननियमात् । न च देवदत्तस्यात्मा यज्ञदत्तस्यात्मेत्यात्याद्यनुगमबलात् आत्मत्वावगम इति वाच्यम् । अस्यात्मशब्दस्य स्वरूपवचनत्वेन घटादिसाधारण्यात् । न चात्मशब्दप्रवृत्तिनिमित्ततया तदवगमः, प्रवृत्तिनिमित्तस्य जातौ पक्षपाताभावात् तस्मान्नात्मत्वं जातिरिति चेत्।आत्मशब्दस्य द्रव्यत्वादि प्रवृत्तिनिमित्तं पृथिव्यादिसाधारण्यात्, न सुखवत्त्वं भगवत्यभावात्,न ज्ञानवत्त्वमिच्छाप्रयत्नाभ्यां विनिगमनाविरहात्। विनिगमनाविरहेण सर्वेषां प्रत्येकं प्रवृत्तिनिमित्तत्वे नानार्थत्वापत्तेः।मिलितस्य तथात्वे गौरवग्रासादिति, विनिगमनाविरहस्य सर्वेषामप्रवृत्तिनिमित्तत्वपर्यवसानात् प्रवृत्तिनिमित्ततयाऽऽत्मत्वजातिसिद्धिरिति सङ्क्षेपः।

ननु जातौ साधकमिव बाधकमप्यस्ति अनेकवृत्तित्वाभावात्, न च परात्मवृत्तितया न तदभावः,परात्मनाः परस्याप्रत्यक्षत्वात् प्रमाणान्तरस्य चाभावात् अत आह तस्येति। ननु कथमात्मनः सौक्ष्म्यं विभुत्वादिति चेत्। न । सौक्ष्म्यपदेन इन्द्रियग्रहणयोग्यताविरहस्य विवक्षितत्वात् तस्य चात्र सुलभत्वात्। मनसः स्वाकर्षकादृष्टवत् एकद्रव्यस्य ग्राहकत्वात् त्वक्चक्षुषो रूपवत्येव द्रव्ये प्रवृत्तेः इन्द्रियान्तरस्य द्रव्याग्राहकत्वात् । तथा चाप्रत्यक्षस्यात्मनः पक्षीभूय श्रोत्रादिभिः करणैरनुमानं क्रियते । करणान्यपि यद्यपि न प्रत्यक्षाणि , तथापि शब्दाद्युपलब्धिभिः क्रियाभिः पक्षीभूयैवानुमीयते पक्षज्ञानमात्रस्य कारणत्वादिति। प्रयोगस्तु–श्रोत्रादीनि कर्तृप्रेर्याणि करणत्वात् वास्यावत्। शब्दाद्युपलब्धयः सकर्तृकाः क्रियात्वाच्छिदिक्रियावत् इति च । प्रथमप्रयोगे व्याप्तिं दर्शयति वास्यादीनामिति। ननु सहचरदर्शनमात्रेण व्याप्तौ कुठारादीनां करणानां पाण्यादिकरणप्रयोज्यत्वदर्शनात् करणमात्रे तथा स्यादिति चेत् । अनवस्थालक्षणप्रातिकूलतर्कपराघातेन यत्र यत्र

करणत्वं तत्र तत्र करणप्रयोज्यत्वमिति व्याप्तेरभावात् । यत्र करणत्वं तत्र कर्तृप्रयोज्यत्वमिति व्याप्तौ तु न कोऽपि प्रतिकूलस्तर्कः । किञ्च चक्षुरादीनामेकानधिष्ठितत्वे योऽहं चक्षुषा स्वर्धुनीस्रोतः पश्यामि सोऽहं श्रवसः श्रुतीः शृणोमि इति प्रतिसन्धानं न स्यात् प्रतिसन्धातुरभावादिति । ज्ञानं क्वचिदाश्रितम् गुणत्वाद्रूपादिवदिति प्रकारेणाप्यात्मसिद्धिरित्याह शब्दादिष्विति । शब्दादिषु प्रसिद्धा शब्दादिज्ञानेन प्रसाधको ज्ञानाश्रयः पक्षीभूयानुमीयते इत्यर्थः । अनुमानप्रकारस्तु दर्शित एव ।

ननु ज्ञानं शरीरादिष्वेव स्थास्यतीत्यत आह न शरीरेति । चैतन्यमिति शेषः । शरीरादयो न चैतन्याश्रयतया व्यवहर्तव्या अज्ञत्वादित्यर्थः । एतदेव विवृणोति न शरीरस्येति । शरीरं न चैतन्याश्रयो भूतकार्यत्वात् । घटवत् । कार्यपदोपादानं तु अनुकूलतर्कसूचनाय । सचेत्थं शरीरस्य चैतन्यत्वे जातस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानविरहात् । पूर्वजन्मानुभूतव्याप्तिस्मृत्या हीष्टसाधनतामनुमाय बालस्तत्र प्रवर्तते । न च पूर्वापरजन्मनोश्चेतनस्य भेद एतदुपपद्यते देवदत्तानुभूतस्य यज्ञदत्तेनास्मरणात् । अभेदस्तु चेतनस्य शरीरभिन्नत्वे एव घटते पूर्वापरजन्मनोः शरीरभेदादिति । शरीरं पक्षीकृत्यानुमाय चैतन्यपक्षकमनुमाह मृत इति । चैतन्यं न शरीरविशेषगुणो यावद्द्रव्याभावित्वात् शब्दवत् इत्यर्थः । शरीररूपवदिति व्यतिरेकी वा । न इन्द्रियाणामिति । इन्द्रियाणि न चैतन्याधिकरणानि करणत्वात् कुठारवदित्यर्थः ।

अत्रानुकूलतर्कमाह उपहतेष्विति । स्मृतिस्तावदनुभवकार्याऽननुभूते स्मृतेरदर्शनात् । चक्षुषश्चानुभवाश्रयत्वे तस्मिन्नष्टे रूपादिस्मरणं न स्यात् अनुभवितुरभावात् । ननु अनुभवेन यथा मीमांसकानां मते ज्ञातता विषयः आधीयते तथा मतान्तरे संस्कारस्तत्रैवाधीयते, तथाच विषया एव स्मर्तार इत्यत उक्तं विषयासान्निध्ये चेति । असांनिध्यं–नाशः । एवं च विषया अपि न स्मर्तारः स्मृतिदशायामसत्त्वादित्यर्थः । किञ्च अन्यनिष्ठेनानुभवेनान्यत्र स्मरणाधायकसंस्काराधाने देवदत्तानुभूतस्य यज्ञदत्तेन स्मरणप्रसङ्गः, तथा चानुभवसंस्कारस्मरणानां एकाश्रयतया नित्येन्द्रियव्यतिरिक्तश्चेतन इत्यर्थः । अनुस्मृतिपदं चानुभवात्पश्चाद्भावितया

स्मृतिपरमेव। यद्वा विषयोपघातादेरनु पश्चात्स्मृतिदर्शनादित्यर्थः। यद्वा इन्द्रियाणां न स्मरणं तेषां विषयसान्निध्य एव ज्ञानजनकत्व-दर्शनात् स्मृतेश्च तदसान्निध्येऽपि जायमानत्वादित्यर्थः। आचार्यैस्तु विषयाणां न चैतन्यं जीवनाविरहात् इत्याद्यध्याहृत्य तत्रानुकूलतर्कतया विषयनाशे स्मृतिदर्शनादिति योजितम्। तदेकदेशिमत-सन्दर्भाशुद्धेर्न युक्तम् शरीरन्द्रियमनसामित्येवोपक्रमात्, विवरणे तेषामेवौचित्यादध्याहारं विनैव मदुक्तनयो न ग्राम्यः शुद्धश्च। स्मृतिजनकतया कल्पमानः संस्कारलक्षणोऽनुभवव्यापारस्तु स्मृतिसमानाधिकरणे एव कल्पते संस्कारस्मरणवतोः स्मरणे जनयितव्ये परस्परसहकारिणोः साक्षात्प्रत्यासत्तौ लाघवात्। तस्मादनुभवसंस्कारस्मरणानां सामानाधिकरण्यानुसारेण न शरीरेन्द्रिययोश्चैतन्यमिति सिद्धम्। किञ्च चक्षुरादीनां चैतन्ये रूपादिविषयं प्रति नियमेन प्रतिशरीरं बह्वात्मानः स्युः तथा चैकमत्यं न स्यात्।

ननु मनसि नैते दोषास्तस्य नित्यतया पूर्वापरजन्मनोरेकतया प्रवृत्त्याद्युपपत्तेः, सर्वविषयतया च विषयप्रतिनियमाभावात्, तत्र भूतत्वमिवात्र मूर्तत्वं बाधकं भविष्यति इति चेत्, ना, अप्रयोजकत्वात् इत्यत आह नापीति। मनसो हि ज्ञानाश्रयत्वे कर्तृता स्यात्, तथा च तत्कारणसापेक्षं ज्ञानं जनयति तन्निरपेक्षं वा? नान्त्यः, क्रियायाः करणनिष्पाद्यत्वनियमात्। चक्षुरादीनि करणानि सन्तीति आद्य एव पक्ष इति चेत्, तेषामनेकतयैकं करणमेकदा एकामेव क्रियां जनयति इति नियमानुपप्लवेन चक्षुरादिषु युगपद्विषयसन्निहितेषु युगपन्निर्विकल्पकादिप्रसङ्गस्मृतेः। अपि च पूर्वानुभवानामेव करणत्वे तेषामनेकतया स एव दोषः, तस्माद्यासङ्गावर्जितैकज्ञानजनिमनुरुद्ध्य किञ्चिदेकं करणान्तरं कल्पनीयम्। एवं च ज्ञानाश्रयः कर्ता तदुपकरणं च करणं मनः, तच्च न ज्ञानाश्रयः करणत्वेनैव सिद्धेरित्याह स्वयमिति। मनो न ज्ञानाश्रयः करणत्वात् कुठारादिवदित्यर्थः। येन प्रमाणेन मनः सिध्यति तेन प्रमाणेन करणत्वेनैव सिध्यति, तथा च क्रियाश्रयत्वलक्षणं कर्तृत्वं न धर्मिग्राहकमानबाधितमिति भावः। गौरोऽहं जानामीति शरीरधर्मसामानाधिकरण्यानुभवाच्छरीरधर्मत्वं ज्ञाने प्रसक्तमिन्द्रियमनोधर्मत्वमपि ज्ञानजनकतया सिद्धानां तेषां ज्ञानाश्रयत्वस्यापि सम्भवा-

दाकाशादिषु तु प्रसक्तिरेव नास्तीत्यभिप्रेत्याह अत इति । आत्मकार्यत्वात् पृथिव्याद्यसमवेतत्वे सति भावकार्यत्वात्तैश्चैतन्यैः(१) ज्ञानं पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितं पृथिव्याद्यसमवेतत्वे सति भावकार्यत्वात् गन्धवदिति व्यतिरेकीति भावः । ननु ज्ञानेन कथं परात्मसिद्धिस्तस्यापि अतीन्द्रियत्वात् अत आह शरीरेति । ननु शरीरसमवायिनीभ्यामिति व्यर्थं प्रवृत्तिनिवृत्तिभ्यामित्यत्र चैकस्य वैयर्थ्यमेकेनैवोपपत्तेः, हिताहितप्राप्तिपरिहारयोग्याभ्यामिति च तथा । न च नोदनाजन्यायां शरीरक्रियायां व्यभिचारवारणाय तत् प्रयत्नवत् संयोगजन्यत्वाभावादिति वाच्यम् । परप्रेरितशरीरस्यापि कदाचिद्गङ्गाजलादिसंयोगयोः सम्भवेन तस्या अपि हिताहितप्राप्तिपरिहारार्थत्वात् । न च प्रत्येकं हेतुता तथा च नैकवैयर्थ्यम्, योग्याभ्यामित्यन्तेन च चेष्टाया हेतुत्वमादर्शितं तत्र तस्या एव प्रायेण हिताहितप्राप्तिपरिहारार्थत्वात्, शरीरसमवायिनीभ्यामिति स्वरूपकथनं तादृशक्रियायाः शरीरतदवयवैरेव समवायादिति वाच्यम् । चेष्टाया हेतुत्वे प्रत्येकं हेतुताव्याघातात् अन्यप्रसङ्गेऽन्यस्वरूपकथनस्यानुपयोगात्, रथे चेष्टाया अभावेन दृष्टान्तत्वानुपपत्तेश्चेति चेन्न । शरीरं प्रयत्नवत्संयुक्तं चेष्टावत्त्वात्, यन्नैवं तन्नैवमिति व्यतिरेकिणि तात्पर्यात् । शरीरसमवायिनीभ्यामिति च पक्षधर्मतोपदर्शनात् रथकर्मणा सारथिवदिति त्वनुमाने दृष्टान्तः, यथा रथस्य कर्मविशेषे कदाचिददृश्यमानसारथ्यनुमानं तथा प्रकृतानुमानमित्यर्थात्।एवं च यज्ञदत्तादिचेष्टा प्रयत्नवदात्मसंयोगजन्या चेष्टात्वात् मच्छरीरचेष्टावदित्यनुमानं सम्भवति । चेष्टात्वं चेष्टेतत्यनुगतदृष्टिसाक्षिको जातिविशेष एव, प्रयत्नवदात्मसंयोगसमवायिकारणकत्वेसाध्याविशेषात् । प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्च आत्मनो लिङ्गानीति सूत्रार्थमाह प्राणादिभिश्चेति । प्राणस्य लिङ्गताप्रकारं पृच्छति कथमिति । उत्तरं शरीरेति । शरीरं भोक्तृप्रयत्नवदधिष्ठितं मूर्छनाजन्यतिर्यक्जायमानातिरिक्तकर्मवत्पवनत्वात् भस्त्रावत् । शारीरो वायुः भोक्तृप्रयत्नवदधिष्ठितः संमूर्छनाजन्यतिर्यग्गत्यातिरिक्तकर्मवत्पवनत्वात् भस्त्राव-

(१) एतद्व्याख्यानुसारेण तैरात्मेति भाष्यपाठोऽनुमीयते किन्तु सर्वत्रैकवचनान्त एवोपलभ्यत इति एकवचनान्त एव मुद्रितः । सं० ।

दित्यनुमानं तु सूत्रविरुद्धम् प्राणस्यालिङ्गत्वाप्रतीतेः। ननु भस्त्रायाः दृष्टान्तत्वमनुपपन्नं तत्रापि लोहकारात्मनोऽसिद्धेः, सिद्धौ वा तेनैवात्मत्वसिद्ध्यर्थमनुमानमतः सूत्रकृता लिङ्गान्तरस्य परामृष्टं परामृशति निमित्तेति। ननु नयने स्पन्दो निमेषादिः, न च स सर्वप्रयत्नकार्यो वातविकारजनिते व्यभिचारात् अत उक्तम् नियतेनेति। सहजो निमेषादिः, न च स अनुमापक इत्यर्थः। निमेषत्वादिकं जातिः अनुगतव्यवहारात् प्रकृते तु न निमेषत्वमित्यपि वदन्ति। प्रयोगस्तु इदं शरीरमसाधारणप्रयत्नवदधिष्ठितं निमेषवत्त्वात् दार्यन्त्रवत् इत्यत्रेश्वरेणार्थान्तरमपाकर्तुमसाधारणेति भोक्तृपदं वा देयम्। यद्यपि भगवत्सिद्ध्याप्यात्मत्वस्यानेकवृत्तित्वं सिद्ध्यत्येव, तथापि नानाजीवसिद्ध्यर्थमयमारम्भः। नन्वत्र दृष्टान्तासिद्धिः दारुयन्त्रे निमेषोन्मेषयोरभावात् अत आह देहस्येति। वृद्धिश्च क्षतभग्नयोर्विघटितविश्लिष्टयोः संरोहश्च ताभ्यामित्यर्थः। ईषच्छिन्नं विश्लिष्टमेतच्च मृते नास्तीति जीवनदशायां तद्वैलक्षण्यमायातीति भावः। प्रयोगस्तु भोक्तृप्रयत्नवदधिष्ठितं वृद्धेरित्यादिः। वृक्षादेः पक्षसमत्वान्न व्यभिचारः। ननु सूत्रे जीवनपदं श्रूयते भाष्ये तु आदिपदेन तदुपगृह्य वृद्ध्यादिलिङ्गत्वं कथयताऽन्यथा कथं गतमिति चेन्न। आत्मविशेषगुणकारणात्ममनःसंयोगस्य जीवनपरशरीरेऽसिद्ध्या तदुपेक्षासम्भवात्। ननु वात्यानीतधूल्यादिपातेन स्थलवृद्ध्या व्यभिचार इत्यत आह अभिमतेति। मनो जन्यप्रयत्नवदधिष्ठितं जन्यप्रयत्नासमवाहितसामग्र्यजन्यकर्मवत्त्वात् बालकप्रेरितजतुगुलवत्।

ननु यत्र सुप्त्यनन्तरं ज्ञानं भवति तत्र यथाऽदृष्टादेव मनसः क्रिया तथाऽन्यत्रापि प्रयत्नं विनैव स्यादिति चेत्। इच्छानुविधायिनि कर्मणि प्रयत्नस्य हेतुत्वात्। ननु साक्षात्प्रयत्नाधिष्ठानं प्रत्यक्षगुणवत एव भवति वायवीयशरीरस्याप्रत्यक्षत्वेऽपि प्रत्यक्षगुणवत्त्वात् मनस्तु नैवमिति कथं साक्षात्प्रयत्नाधिष्ठितत्वमिति चेत्। साक्षात्प्रयत्नाधिष्ठितत्वस्यासाध्यत्वात् दृष्टान्तेऽपि तदभावात्। एवं चादृष्टविशेषसहकृतानागन्तुकसंयोगवतामेव मनोवहनाडीप्रत्यक्षं तद्विषयकः प्रयत्नः तेन तत्र क्रिया तया स्पर्शवद्वेगवन्नाड्या सम्बन्धान्मनसि क्रियोत्पत्त्याभिप्रायात्। एतेन त्वचा कथं नाडीज्ञानमनागन्तुकसंयोगस्याहेतुत्वात् अन्यथा शरीरस्य नित्यप्रत्यक्षापत्तेरित्यपास्तम्।

अनन्यगत्याऽदृष्टविशेषसाहाय्येन कदाचिन्नाडीप्रत्यक्षस्यानागन्तुक-हेतुसंयोगेनापि जननात्, अन्यथा मलादिक्रियानुपपत्तेरिति दिक्। अक्षरार्थस्तु अभिमतो विषयो रूपादिः तद्ग्राहकं करणं चक्षुरादि तेन यो मनःसम्बन्धस्तन्निमित्तेन मनःकर्मणा प्रयत्नवान् सिद्ध्यति। कर्म-विशेषस्य प्रयत्नानुविधानदर्शनात् गृहकोणव्यवस्थितजतुगुलक-कर्मणोऽर्भकजन्यत्वादिति। नन्वत्रापि दृष्टान्तासिद्धिः स्वाभिन्नस्य बालकस्य प्रयत्नवत्त्वासिद्धेरत आह नयनेति। चक्षुषा जम्बीरफला-दे रूपग्रहणानन्तरं रसस्मृतिर्भवति एकसम्बन्धिज्ञाने सत्यपरस्मार-कसंस्कारोद्बोधात्। एवं चक्षूरसनाभ्यां रूपरसनाभ्यां रूपरसग्राहक एक एव अन्यस्य सम्बन्धिज्ञानेऽन्यस्य संस्कारानुद्बोधात्। यथैकग-वाक्षेण सम्बन्धिनं दृष्ट्वा परगवाक्षस्मृतेत्यर्थः। रसनाविक्रिया दन्तोदक-सम्भवलक्षणा। अनुमानं चेन्द्रियाणि चेतनाद् भिद्यन्ते नियतविषय-त्वाद्गवाक्षवत्। नन्विन्द्रियाणामचैतन्यं प्रागेव सिद्धम् आत्मसाधनं तु प्रस्तुतमनेन न भवत्येवेत्यत आह सुखेति। मुखप्रसादादिसुखाद्य-नुमापितेन सुखादयो द्रव्याश्रिता गुणत्वात् रूपादिवदित्यनुमानमित्य-र्थः। सुखादयो न सामान्यात्मका अभूत्वाभावित्वात्, न कर्मात्मकाः संयोगाजनकत्वात्, न नित्यद्रव्याणि कार्यत्वात्, नानित्यद्रव्याणि स्पर्श-शून्यत्वात् गुणत्वमेषां सिद्धमिति भावः। ननु द्रव्याश्रितत्वसिद्धाव-पि शरीरादिनार्थान्तरमत आह ते चेति। शिष्याकांक्षामाह कस्मा-दिति। उत्तरं अहङ्कारेणेति। अहङ्कारैकवाक्यता अहन्त्वसमाना-धिकरणं तद्भावानधिकरणादित्यर्थः। सुखादयो न शरीरादिविशे-षगुणाः अहन्त्वसामानाधिकरण्यात् रूपवदिति व्यतिरेकिणा ज्ञान-वद्भिन्नत्ववारणाय वा प्रयोगाः। अत्रानुमानविशेषपदस्याखण्डाभावः शरणम्। विशेषगुणत्वं च सुखादेः स्वाश्रयसमानाधिकरणं द्रव्यविभा-जकोपाध्यत्यन्ताभावसमानाधिकरणवृत्तिगुणत्वन्यूनवृत्तिजातिशून्य-त्वेन स्नेहवत् साधनीयम्। न च स्पर्शादौ तादृशजातिमत्यपि विशेषगुणत्वं व्यापकव्यभिचारस्यादोषत्वात्। न चाहं गौर इत्या-दिप्रतीतेरहन्त्वमपि शरीरवृत्त्येव भवत्विति वाच्यम्। शरीरस्या-त्मतायां तस्य परिमाणभेदेन भिन्नतया बाल्येऽनुभूतस्य यौवने स्म-रणानुपपत्तेः इत्यस्वरसादपि चाह प्रदेशेति। समानाधिकर-णात्यन्ताभावप्रतियोगित्वादित्यर्थः। अत्र विशेषपदाभावे संयोगादौ

व्यभिचारः। एवं च सुखादयो न शरीरेन्द्रियविशेषगुणाः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् संयोगादिवदिति प्रयोगः। न च शब्दे व्यभिचारः तस्य श्रोत्रेन्द्रियगुणत्वादिति वाच्यम्। शब्दान्यत्वेन विशेषणात्। एवमयावद्द्रव्यभावित्वादित्यत्रापि बाह्यत्वादावपि। श्रोत्रगुणस्य शब्दस्य कदाचिदतीन्द्रियस्य सम्भवादनुद्भूतत्वादिति। वस्तुतस्तु बाह्येन्द्रियाप्रत्यक्षत्वं चक्षुरादिरूपादौ व्यभिचारीति। मानसप्रत्यक्षत्वं तदर्थज्ञानं च दृष्टान्तः तस्य शरीरेन्द्रियगुणत्वस्य प्रागेव निषेधात्। व्यतिरेके शरीररूपादिर्वा दृष्टान्तः। आचार्यास्तु न शरीरेन्द्रियगुणा इत्येव प्रथमसाध्यमुक्तवन्तः। तत्र शरीरात्मसंयोगादौ व्यभिचारवारणाय मात्रगुण इति। साध्याहारस्तु तेषामेकदेशिनमनुगृह्य अन्यथा सन्दर्भविरोधात्। ननु ज्ञानसंस्कारौ शरीरगुणौ मा भवतः सुखादयस्तु तद्गुणा भवन्ति प्रतिसन्धानं च योऽहमिदानीं कृष्णः पूर्वं गौरः इति वद् भविष्यतीति चेत्। न। ज्ञानेच्छाप्रयत्नानामसामानाधिकरण्ये देवदत्तस्येष्टसाधनताज्ञाने यज्ञदत्तस्य चिकीर्षायां विष्णुमित्रो यजेत। एवं द्वेषेऽपि नासामानाधिकरण्यम्। अन्यस्मिन्ननिष्टसाधनताज्ञानवत्यन्यस्मिन् द्वेषप्रसङ्गात्। सुखदुःखे अपि न तथा अन्यस्मिंश्चन्दनकण्टकस्य स्पर्शमनुभवति परस्य सुखदुःखोत्पादप्रसङ्गात्। ननु यथात्मसंयोगस्य साधारण्येऽपि यददृष्टाकृष्टं यच्छरीरं तदवच्छेदेनैव तस्य तत्र ज्ञानं तथा तददृष्टाकृष्टशरीर एव ज्ञानादिच्छाद्युत्पत्तिरिति वैयधिकरण्येऽपि नातिप्रसङ्ग इति चेत्। न। ज्ञानेच्छाद्याश्रययोः करणयोः साक्षात्प्रत्यासत्तौ सम्भवन्त्यां परंपराप्रत्यासत्तिकल्पनाया अकल्पत्वात्। किन्तु सुखादीनां शरीरादिगुणत्वे मनोवेद्यत्वापत्तिः तद्गुणानामपि मनोवेद्यत्वे अन्धादिभी रूपादयोऽपि गृह्येरन्। न च यथा किञ्चिच्छरीरगुणेषु चक्षुर्वेद्यं यथा रूपं किञ्चिज्ज्ञानेन्द्रियवेद्यं यथा स्पर्शादि तथा किञ्चिदेव मनोवेद्यमस्त्वति वाच्यम्। चक्षुरादीनां प्रतिनियतविषयत्वेन तथा सम्भवात् मनसस्तु सर्वविषयत्वात्। ननु स्वातन्त्र्येण बहिःपदार्थविषयत्वे मनसोऽपि नियमो भविष्यतीति चेत्। मनसो बहिः पदार्थे स्वातन्त्र्ये प्रमाणाभावात् लाघवेन सामान्यत एव मनसो बहिः पदार्थेऽस्वातन्त्र्यकल्पनात् अन्यथाऽन्योन्याश्रयात्। सुखादीनां शरीरगुणत्वसिद्धौ तद्भिन्ने बहिर-

र्थे स्वातन्त्र्यं तस्मिंश्च तद्गुणत्वमिति ।

ननु ज्ञानादयोऽपि शरीरगुणा एव । न चान्येनानुभूतस्यान्येनास्मरणात् प्रतिशरीरभेदाद्भेदेऽपि वा तथात्वे चैत्रमैत्रयोरतिप्रसङ्ग इति वाच्यम् । कार्यकारणभावस्य नियामकत्वादिति चेत् । मात्राऽनुभूतस्य पुत्रेण स्मरणप्रसङ्गात् । समवायसम्बन्धेन कार्यकारणभावस्तथेति चेत् । पूर्वापरशरीरयोः कार्यकारणभावाभावात पूर्वशरीरनाशानन्तरं परशरीरोत्पत्तेः खण्डपटमहापटपरिपाटीपाटवात् । किञ्च बाल्येऽनुभूतस्य वार्धके स्मरणानापत्तिः, अन्तरा तरुणतनुसम्भवेन वृद्धविग्रहस्य बालकलेवरानारब्धत्वात्। न च परस्परकार्यकारणभावोऽस्त्येव वृद्धस्थविरयोरिति वाच्यम् । शरीरयोः कार्यकारणाभावात् । न च क्षणिकत्वपक्षमाश्रित्य संयोगसन्निधिस्वीकारेण शरीराच्छरीरोत्पत्तिरिति वाच्यम् । तस्यानुपदमेव निरस्यत्वात् । इन्द्रियगुणत्वेऽपि प्रत्यक्षत्वाविरोधात् । न च शब्देतरेत्यादीन्द्रियलक्षणव्याघातः स्मृत्यजनकेत्यादेस्तल्लक्षणस्य करणात् । न चातीन्द्रियनिष्ठतयाऽतीन्द्रियत्वं वायुस्पर्शस्येन्द्रियकत्वात् सामान्यगुणानामेवातीन्द्रियनिष्ठानामतीन्द्रियत्वात् । न च गौरोऽहं सुखीत्यादिप्रत्ययाच्छरीरधर्मत्वं प्रसक्तं शरीरधर्मेण गौरत्वेन सामानाधिकरण्यानुभवात् इन्द्रियधर्मत्वस्य तु किं प्रसञ्जकमिति वाच्यम् । मनो मे दुःखितं मनो मे हृष्टं स्पर्शानुसुखो वायुः रसनदुःखानि निम्बपत्राणि इत्यादिप्रत्ययानामिहापि सत्त्वादिति चेत् । न । इन्द्रियाणां मिथो यथोचितानां सुखाद्याश्रयत्वे योऽहं रूपसुखवान् सोऽहं स्पर्शसुखवानिति प्रत्यभिज्ञानानुपपत्तेः । न च विना बाधं बोधः प्रामाण्यमनुभवति प्रामाण्यस्यैवौत्सर्गिकत्वात् इति । किञ्चाहंशब्दः सार्थकः शब्दविशेषत्वात् घटादिशब्दवदिति ततोऽपि परात्मा सिध्यतीत्याह तथाऽहंशब्देनेति । ननु पृथिव्यादिभिरेवासावर्थवान् भविष्यतीत्यत आह पृथिव्यादिव्यतिरेकादिति । यदि पृथिव्येवाहंशब्दार्थः स्यात् तदाऽहं पृथिवीति सामानाधिकरण्यं स्यात् तच्च नैवमिति भावः । ननु अहं गौर इति सामानाधिकरण्यभानात् गौरं शरीरमेवाहंपदार्थो भविष्यतीति चेत । बाल्यानुभूतस्य यौवने स्मरणानुरोधेन बाल्ययौवनयोरेकस्याहंपदार्थत्वात् ।

नन्वयुक्तमेतत् क्षणिकतायां सिद्धायामनुभवितृस्मर्त्रोरेकस्यापह-

स्तितत्वात् । न चातिप्रसंगोऽनुभवितृभिन्नेनापि समर्थेन स्मरणार्ज-नाद् असमर्थेन चानर्जनात् । न च चिरविनष्टोऽनुभवः संस्कारं विना कथं स्मरणं सूते संस्काराङ्गीकारे च तस्य स्थिरत्वे कथं सर्वक्षणिकतेति वाच्यम् । विनष्टस्याप्यनुभवस्य निर्व्यापारस्यापि समर्थतया स्मरणजनकत्वात्, सुषुप्त्या प्रहराद्यन्तरितस्यापि प्रथमजागरान्त्यज्ञानस्य द्वितीयजागरीयाद्यज्ञानजनकत्वस्य बौद्धाचार्यैरङ्गीकारात् । तत्र क्षणिकत्वे विप्रतिपत्तिर्घटः स्वोत्पत्त्यव्यवहितो-त्तरक्षणवर्तिध्वंसप्रतियोगी न वा ? अत्र विधिकोटिः नास्तिकानां निषेधकोटिः आस्तिकानाम् । विधिकोटिप्रसिद्धिः एतद्घटोत्पत्त्यव्यवहितो-त्तरक्षणवर्तिध्वंसप्रतियोगिनि तत्कालनष्टे एतत्कालनष्टे पूर्वकालनष्टे पूर्वोत्पन्ने कस्मिंश्चित् पदार्थे स्वपदेन पक्षीकृतस्यैतद्घटस्यैव ग्रह-णात् । एतद्घटे चैतस्य सिद्धौ क्षणिकत्वमक्षतमेव । तदुत्तरकालोत्पन्ने निषेधप्रसिद्धिः, तत्र तदुत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगि-त्वाभावादिति बौद्धाधिकारवर्धमानटीकाव्याख्यायामस्मत्पितरः ॥

कार्यं स्वसमवायिकारणसमानकालीनं न वेति विप्रतिपत्तिः । अत्र विधिकोटिरास्तिकानाम् । कार्यस्य स्वसमवायिकारणसमानकालीन-त्वेनाशंकाभावाद् अग्रेऽपि कार्यावस्थिते स्थैर्यस्थैर्यात् । निषेधकोटिर्ना-स्तिकानाम् । कार्यकाले समवायिकारणाभावे कारणभावः, उत्तरकाले कार्यनाशाद्विधिप्रसिद्धिः पक्षीकृतकार्यसमवायिकारणसमानकाली-ने तत्वान्तरेऽसमानकालीने तु निषेधप्रसिद्धिः । अनुमानं च तत्का-लवृत्तिस्स एतद्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगी यथोभयसम्प्रति-पन्नः कश्चिदेतत्कालवृत्तिश्चैतत्कालोत्पन्न इति बौद्धानामुपनयोदाहरण-योरवावयवत्वादेतत्कालवृत्तेः कस्यांचिदग्रिमदक्षिणक्षणे नाशस्य बौद्धै-रपि अङ्गीकारात् पूर्वमपि परसत्ताऽङ्गीकारादिति चेत् । न, अप्रयोजक-त्वात् । न च अहेतुको विनाश इति विलम्बप्रयोजकविलम्बप्रतियोगि-नोऽभावात् जातस्य द्वितीयक्षण एव विनाश इति वाच्यम् । एवंसति प्रतियोगिनोऽपि अनपेक्षणे प्रतियोगिकाले तत्प्राक्काले च विना-शस्य सदातनतायां सर्वदा भावासत्त्वे सर्वशून्यतावादापत्तेः । विना-शकालेऽपि कदाचिद्भावास्तिष्ठति तयोरविरोधादिति चेत् । विना-शस्य भावसत्त्वाविरोधित्वेऽन्यस्य विरोधिनो भावात् सर्वदा भाव-सत्ताया तस्यापि सदातनत्वापत्तेः । प्रागभावदशायां न भाव इति

सदातनत्वमिति चेत् । कालमादाय ध्वंसव्यापकतापत्तेः । ध्वंसो ऽहेतुकोऽविनाशित्वादिति चेत् । ध्वंसः सहेतुक उत्पत्तिमत्त्वादिति विरोधात् । न चात्र भावत्वमुपाधिर्घटादौ ध्वंसे च साध्यसाधनव्यापकाव्यापकत्वादिति वाच्यम् । भवदनुमानेऽप्युपाधेः सम्भवात् । प्रागसत्तारहित्यस्य गगनप्रागभावादौ साध्यव्यापकस्य ध्वंसे साधनाव्यापकत्वात् । ननु जायमानस्य भावस्य विनश्वरत्वमविनश्वरत्वं वा ? न कदापि विनाशो नाश्यात् स्वभावव्ययाभावात् गोरश्वत्ववत् नहि कारणकार्यसहस्रेनापि गोरश्वो भवति। प्रथमे तु नाशस्य कारणान्तरसापेक्षत्वञ्च स्यात्, गोत्वे कारणान्तरापेक्षायाः अदर्शनात् । तथा च विलम्बाभावादुत्पन्नस्य द्वितीयक्षण एव विनाश क्षीणमेव क्षणिकत्वम् । किञ्च विनाशस्य सकारणकस्य भावाभेदो नोचित एव विरोधात् सामग्रीभेदात् विनाशकालेऽपि भावोपलम्भापत्तेश्च । घटतद्विनाशयोर्भेदे तु विनाशे जातेऽपि घटोपलम्भापत्तिरन्यस्मिन् जातेऽपि अन्योपलम्भस्य गवाश्वादौ दर्शनात् । जातेनाप्यश्वेन गौर्न तिरोधीयते नाशेन तु न खरस्तथा क्रियते इति चेत् । तिरोधानस्य भावाभिन्नत्वाभिन्नत्वाभ्यां दोषस्य निरुक्ताभिन्नत्वात् । अपरञ्च ध्रुवभावित्वं नियतत्वम् । नियते च कृपाणस्यायोमयत्वे हेत्वन्तरापेक्षा न कस्यचिद् अध्यक्षाऽनियते च स्वारुणिमादावेव तन्निरीक्षणात् । तथा च नियतानां भावविनाशानां न हेत्वन्तरापेक्षत्वमित्यपि लोकस्य विनाशस्य न सकारणकत्वम् । अभावं करोति इत्यस्य भावं न करोतीत्यर्थकत्वादिति चेन्न । भावस्य विनश्वरता यदि विनाशात्मकता स्यात्, तदा विनाशस्य भावकारणभिन्नकारणापेक्षा न स्यादभेदे कारणभेदाभावात् । न चाभेदः प्रामाणिको, घटस्य विनाश इति भेदानुभवात् विनाशार्हवस्तुनि विनश्वरत्वं सम्भवति । न चैतावता विनाशस्य कारणानपेक्षा तण्डुलानां पाकानाश्रयत्वे पाके कारणानपेक्षापत्तेः । स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगि विनश्वरत्वमीदृशि च स्वभावे विनाशोऽहेतुक एवायाति, हेत्वपेक्षायां कदाचित् विलम्बापत्तेः हेतुसमवधानस्यानियतत्वादिति चेत् । एतादृशस्य विनश्वरत्वस्य अस्माभिरनभ्युपगमात् । न चाश्वोत्पत्तौ गोरिव विनाशोत्पत्तौ घटानुवृत्तिः स्यादिति वाच्यम् । अश्वस्य गोनिवृत्तिरूपत्वाभावाद्विनाशस्य घटनिवृत्तिरूपत्वात् निवृत्तौ जातायामनुवृत्तेरसम्भवात् । अन्यः कथ-

मन्यनिवृत्त्यात्मेति चेत् । स्वभावस्य नियोगपर्यनुयोगानर्हत्वात् । अन्यथा प्रागभावनाशे प्रतियोग्यात्मनि प्रागभावोऽनुवर्तेत । तत्रे· ष्टापत्तौ प्रागभावप्रतियोगिनोः समानकालत्वे तयोः सामयिको वि· रोधो भज्येत । ध्रुवभावित्वं च न प्रतियोग्युत्पत्त्यव्यवहितोत्तरक्षणभा· वित्वमहेतुकत्वं वाऽस्माकं तयोरसिद्धेः, न ह्यस्माकं दर्शने ध्वंस उत्पत्तेरव्यवहितोत्तरक्षणे जायतेऽहेतुको वाऽऽवश्यकत्वत्तादिति चेत् । व्यभिचाराद्घाते रावशक्या अपि (?) मुद्गरपातादिसापेक्ष· तया सहेतुकतया व्यभिचारात् सहेतुके घटादावावश्यके व्यभिचा- राच्च । घटादेरनावश्यकत्वे ध्वंसस्याप्यनावश्यकत्वमित्य लिप्संति(?) प्रतियोग्यन्यानपेक्षत्वं ध्रुवभावित्वमिति चेत् । अन्यतरासिद्धेः अस्मन्नये प्रतियोग्यन्यस्यापि कारणत्वाद्भावतादात्म्यम् । अभावे ध्रु· वभावित्वमिति चेत् । भावाभावयोरभेदे भावस्यापि निरुपाख्यतापत्तौ शून्यवादापत्तेः, अभावस्यापि सहेतुकभावाभेदेन सहेतुकतापत्तेश्च । प्रतियोगिकारणकत्वलक्षणेन ध्रुवभावित्वं नतु सकारणकत्वं सि· ध्यति मातृत्वेन वन्ध्यात्वसिद्धिप्रसङ्गात् ।

नन्वस्तु नवीनसौगतावगतादनुमानात् क्षणिकत्वसिद्धिः । तथा· हि यत्सत् तत् क्षणिकं यथा जलधरः सन्तश्च घटादय इति । न च दृष्टान्तासिद्धिः, प्रसाध्यङ्गकस्यापि(?) अनुमानस्य प्रामाणिकत्वात् । न च व्याप्तिग्राहकप्रामाण्यादेव सत्त्वसाध्यसिद्धेरनुमानवैयर्थ्यम्, सत्त्वस्य पक्षतानवच्छेदकत्वात् घटादित्वेनैव पक्षतावच्छेदकसाध्य· सामानाधिकरण्यस्यानुमितिविषयस्याप्रतीतेः । ननु क्षणिकत्वव्याप्तिः सत्त्वे नास्तीति यद्यपि वक्तुं न शक्यते क्षणिकत्वस्वीकारापत्तेः खपु· ष्पव्याप्तिर्नास्तीत्यभिलापस्य प्रामाणिकानामभावः, तथापि स्वोत्पत्त्य· व्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वव्याप्तिः सत्त्वे नास्तीति वक्तुं शक्यते एव स्वपदेनैकघटग्रहणे तदितरत्र कस्मिंश्चित्प्रसिद्धेः । न ह्येतद्घटोत्पत्त्यव्यवहितोत्तरक्षणे कोऽपि नश्यतीति तार्किकानामपि साम्प्रतम् । तथाच विपक्षबाधकाभावात् व्याप्तेरग्रहात् कथमनुमानम् ।

अपि चाऽर्थक्रियाकारित्वं सत्त्वमनुगतमननुगतं वा ? अनुगतत्वे तुच्छतापत्तौ कथं हेतुता ? अननुगतत्वे च धर्म्यभेदपर्यवसानेन कथं पक्षधर्मता स्वस्य स्वस्मिन्नवृत्तेरिति चेन्न । विकल्पोपस्थित· स्यालीकस्यापि अस्मिन्नये हेतुत्वात्, हेतुज्ञानमात्रस्य कारणत्वात्,

हेतुज्ञानस्य सर्वत्र सविकल्पकतया प्रमाणत्व एव पर्यवसानात् । अलीके च स्वलक्षणप्रत्यासत्तिसत्त्वेन पक्षधर्मत्वात् स्वलक्षणालीकयोः प्रत्यासत्तिरलीकाऽनलीका वेति तु विचारान्तरम्। अलीकत्वेऽपि हेतुवद्दोषाणां व्यापकत्वात् । अर्थक्रियाकारित्वग्रहस्तु प्राक्सत्त्वेन प्राक्सत्त्वग्रहस्तु बीजत्वादिना न त्वर्थक्रियाकारित्वेनैव येनान्योन्याश्रयः स्यात् । न चाप्रयोजकत्वं नोद्धृतमिति वाच्यम् । अर्थक्रियाकारित्वरूपस्य सत्त्वस्य हेतुत्वे सति तदुद्धारस्यातिस्फुटत्वात् । भवतापि सत्प्रत्ययालम्बनस्यार्थक्रियारित्वरूपत्वौचित्यात्, सत्ताजातेः सामान्यादावभावात् । प्रामाणिकत्वस्य तत्त्वे ध्वंसे सत्प्रत्ययानुदयप्रसङ्गः। उद्धारः कथमिति चेत्। तृतीयप्रकाराभावेनार्थक्रियाव्यापकयोः क्रमाक्रमयोः स्थिरेऽसम्भवात् । कथमसम्भव इति चेत्। क्रमपक्षे प्रथमार्थक्रियाकरणकाले द्वितीयार्थक्रियासामर्थ्ये तस्या अपि तदैव करणापत्तिः। असामर्थ्ये तु यदि सर्वदा तदाऽग्रेऽपि करणापत्तिः। इदानीमसामर्थ्येऽग्रे सामर्थ्ये विरुद्धधर्माध्यासाद्भेदापत्तिरिति क्रमपक्षः स्थिरेऽस्थिरः। अक्रमेऽपि तथैवैकदा सर्वा अर्थक्रिया उत्पाद्य स्थितस्य भावस्य पुनस्तासु सामर्थ्ये पुनस्ता जनयेदेव पूर्ववत्सामर्थ्याविशेषात् । असामर्थ्ये तु विरुद्धधर्माध्यासः। क्रमपक्षे क्रियाकर्मानुपलम्भापत्तिश्च। क्षणिके तु नोभयोरसम्भवो यत्र सामर्थ्यं तत्राक्रमस्यैव स्वीकारात्, क्रमिकास्वर्थक्रियासु कारणानामपि क्रमिकत्वात् । नन्वक्षणिकाप्रसिद्धेः कथं यत्र क्षणिकं तत्र सदिति व्यतिरेकव्याप्तिग्रह इति चेत् । अलीक एवालीकयोरेवाक्षणिकत्वासत्त्वयोर्व्याप्तिविकल्पात् ।

यद्वा सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गात् कुसूलक्षेत्रवर्तिनोर्बीजयोर्भेदसिद्धौ क्षणिकतायां पर्यवसानम्। सामर्थ्यासामर्थ्ये एवासिद्धे इति चेत्। प्रसङ्गविपर्ययाभ्यां च तयोः सिद्धेः । कुसूलस्थं बीजं यदि समर्थं स्यात् तदेतत्क्षणाव्यवहितोत्तरक्षणे कुर्यात् सामग्रीनिविष्टबीजवत्, न च करोति तस्मान्न समर्थमिति कुसूलस्थे स्पर्शसामर्थ्यासिद्धेः। क्षेत्रस्थं बीजं यद्यसमर्थं स्यात् तदा न कुर्यात् सामग्रीनिविष्टबीजवच्छिलाशकलवद्वेति क्षेत्रस्थस्य सामर्थ्यसिद्धेः । न च प्रथमप्रसङ्गे सामग्रीनिविष्टत्वमुपाधिः, तस्या अव्यापाद्यत्वात् ।

ननु सामर्थ्यपदेन फलोपधानग्रहणे यदि फलोपहितं स्यात्तदा फलं स्यात्, न च फलोपहितमिति प्रसङ्गविपर्ययोः पर्यवसान

आपाद्यसाध्याविशेषादसमर्था व्यावृत्तिः सामर्थ्यं कारी व्यावृत्तिश्च कारित्वमिति व्यावृत्तिभेदाददोष इति चेत् । स्वरूपतो व्यावृत्तौ भेदेन लोकत्वप्रसङ्गात्(?) स्वरूपवत्त्वात् । न ह्यत्र घटत्वपटत्वयोरिव स्वतो व्यावृत्तिस्तद्भेदस्तत्र घटपटयोरिवात्रासामर्थ्यकारिणोः भेदाभावात् । अश्वत्थत्ववृक्षत्वयोरपि भेदः सम्भवति अश्वत्थत्वस्य घटादेरपि व्यावृत्तिरूपत्वात् वृक्षत्वस्याश्वत्थत्वादेरेव तद्रूपत्वात् । न च कारी समर्थ इति शब्दभेदात् ज्ञानव्यक्तिभेदात् वा भेद इति वाच्यम् । घटत्वकुंभत्वयोरपि भेदापत्तेः । ननु सहकारिसाहित्यं सामर्थ्यं फलोपधानं तु कारित्वमिति तयोर्भेद इति चेत् । कुसूलस्थ आपादकस्य पराभिमतत्वासिध्याऽऽपादकासिद्धेः तर्के आपादकस्य पराभिमतत्वसिद्ध्यैव सिद्धेः । असहकारिसहिते कारित्वप्रसञ्जन इष्टापत्तेश्च । ननु स्वरूपयोग्यता सामर्थ्यम्, तथा च कुसूलस्थं बीजं यदि स्वरूपयोग्यं स्यात् तदा फलोपहितं स्यात् इति न प्रसङ्गासङ्गतिरिति चेत् । स्वरूपयोग्यतापदेन बीजत्वग्रहणे विपर्ययपर्यवसानस्य न च करोति,(?)तस्मान्न बीजमिति पर्यवसाने बाधापत्तेः, तत्र बीजत्वस्य त्वयापि अभ्युपगमात् । कुर्वद्रूपत्वग्रहणे वाऽसिद्धिर्मया तदनङ्गीकारादिति चेन्न। अङ्कुरकारणतावच्छेदकरूपत्वेन विशिष्यानिर्द्धारितेनापादनात्। ननु समर्थोऽपि भावः सहकारिवैधुर्यान्नाजयतीति चेत्। सहकारिण उपकारकत्व उपकारकस्यापि सहकारितयोपकारपरम्परापत्त्याऽनवस्थित्यापत्तेः, अनुपकारकानां तु सहकारित्वेऽतिप्रसङ्गात् । ननु नातिप्रसङ्गः स्वभावात् केषांचिदेव सहकारित्वात् कारणत्वं, तथा च सकलसमवधाने कार्यमिति चेत् । समवधानस्यैव जनकत्वापत्तेः स्वोत्पत्त्यव्यवहितोत्तरक्षणे फलोपहितस्यैव जनकत्वादवश्यकल्पमानेन समवधानेन घटकानामनन्यथासिद्धेश्च । समवधानस्याजन्यत्वे च प्रागपि कार्यापत्तिः । जन्यत्वेन च जन्यधर्मानाश्रये गुणादौ कथं तदवस्थितिः। समवधानस्यासहकारित्वे कथं कार्यजनकत्वम्। सहकारित्वेऽपि तत्समवधानापेक्षायां समवधानपरम्परापत्त्याऽनवस्थित्यापत्तेः। सहकारिणोऽपि तस्यासमवहितस्यैव जनकत्वे बीजस्यापि तथात्वापत्तौ केवलादपि कार्यापत्तिः । ननु विलम्बकारिता भावस्य स्वभावः, तथा च कथमुत्पत्तेरनन्तरमेव कारित्वमिति चेत्। यदा जनयति तत्पूर्वमस्य स्वभाव

स्य स्थितौ तदर्थजननापत्तिः । निवृत्तौ च स्वभावनिवृत्तौ कथमवस्थितिः । तस्मात् स्वोत्पत्त्यव्यवहितोत्तरक्षणकारित्वमेव भावस्य स्वभाव इति भावनीयम् ।

ननु बीजानि प्रतिक्षणं भिन्नानि तेषु च किञ्चिदङ्कुरप्रसवसमर्थमिति तवाभिप्रायः, तथासति केवलादपि बीजादङ्कुरापत्तिः यः समर्थः स सहकारिसमवहित एवोत्पद्यते इति चेत् । तेषां प्रत्येकं कार्ये सामर्थ्ये नानाकार्योत्पादापत्तिः । मिलितस्य तथात्वे मिलितस्य स्वरूपाद्भेदे भवतोऽपि समवधानपक्षोक्तदोषापत्तिः, अभेदे तु स्वरूपानां भेदेन कार्यभेदापत्तिस्तदवस्थैवेति चेत् । बीजपृथिव्यादीनां प्रतिक्षणं भिन्नानां किञ्चिद्बीजादिस्तथोत्पद्यते यथा स्वाव्यवहितोत्तरक्षण एव करोति । स्वभावश्च भिन्नानामपि तेषामेककार्यजनकत्वमेव दर्शनानुरोधेन स्वभावकल्पनावकल्पनात्। अङ्कुरप्रसवसमर्थाश्च बीजादयः परस्परं प्रत्यासन्ना एव भवन्तीत्यपि स्वभावः । प्रत्यासत्तिश्चास्मिन्नये सर्वेषां तत्कार्यकुर्वद्रूपाणामुत्पाद्यवस्तुसंयोगः तस्य तत्कार्यस्य स्वीकारे तत्कालेभावात् । एवञ्च ये समर्थास्ते सहिता एव भवन्ति कुर्वन्ति च । ननु समर्थाः सहकारिविलम्बेन सन्तोऽपि कार्यं नार्जयन्तीति पक्षस्सहकारिसमवहिताः कुर्वन्ति तद्रहिताश्च न कुर्वन्तीति कारणस्वभावे स्थैर्यमेवायात्विति चेत् । स्वभावभेदेन भेदापत्तेः । सहकारिविरहे न कुर्वन्तीति स्वभावे स्वकारणोद्भूतानपि सहकारिणो निराकृत्य न कुर्युः स्वभावभङ्गप्रसङ्गात् । सहकारिसमवधाने कुर्युरिति च स्वभावे सदा सहकारिणः परिरभ्य तिष्ठेयुः कुर्युश्च, अन्यथा स्वभावभङ्गप्रसङ्गः । अस्माकं च ये समर्थास्ते समवहिता एव कुर्वन्त्येव च । येऽसमर्थास्तेऽसमवहिता एव न कुर्वन्त्येव चेति पूर्वदोषः। किञ्च कारणानां फलोपधाने कारणत्वमेव प्रयोजकं न तु सहकारिसमवहितकारणत्वं गौरवात् । एवं च कुसूलस्थस्य बीजस्य कारणत्वे फलोपधानं स्यादेव, तस्मात्कारणीभूतं बीजं पृथगेव । ननु कुसूलस्थबीजस्य प्रतिक्षणभिद्यमानस्य न काचिदर्थक्रिया दृश्यते इत्यसत्त्वापत्तौ तत्सन्ताने कथमङ्कुरकारिबीजजन्मेति चेत् । द्विविधा अर्थक्रिया समभागा विषमभागा च । तत्र कुसूले पूर्वपूर्वबीजेनाग्रिमाग्रिमबीजारंभ एवेति समभागैवार्थक्रिया, क्षेत्रपतिता त्वङ्कुरोत्पत्तिरिति विषमभागा । तस्मा-

त्सर्वेषामर्थक्रियासत्त्वात् सत्त्वमेव। ननु कुसूले यावद्बीजं तिष्ठति तावदेकमेव भवत्वकार्यैकस्वभावात्, अङ्कुरजनकं तु ततो भिन्नं भवतु, भिन्नस्वभावत्वात्। तथाच कथं कुसूलस्थबीजं प्रति क्षणभेदो विरुद्धधर्मासंसर्गादिति चेत। अङ्कुर इवाङ्कुरप्रसवक्षमबीजेऽपि तावद्बीजापेक्षाऽऽवश्यकी । तत्र स्थिरस्य कुसूलस्थितबीजस्य तत्र सामर्थ्ये उत्पत्त्यनन्तरमेव तदुत्पत्त्यापत्तिः । एवं च किञ्चिदेव बीजं तत्र समर्थं तत्रापि बीजे न स्थिरस्य सामर्थ्यं तदैवार्जनापत्तेरिति अग्रिमाग्रिमबीजपरम्पराप्रापिका पूर्वपूर्वबीजपरम्परा सिद्ध्यति । तया च क्षणिकत्वपर्यवसानात्। किञ्च क्षणलक्षणाविरोधिसंसर्गादपि भेदः। न च क्षणभेदात् कोऽपि भेदो न सिद्ध इति वाच्यम् । अस्माकं मते सर्वत्रैव सिद्धेः । एवं चान्यविरुद्धधर्मसंसर्गादिव क्षणभेदादपि भेद इति क्षणिकत्व एव पर्यवसानम । एकक्षणस्थायिषु कथं भेद इति चेन्न। विरुद्धधर्मान्तरसंसर्गात। बीजक्षित्यादीनां नैरन्तर्यं च सान्तरत्वाभाव एव। स चालीकोऽपि विशेषको तद्व्यावृत्तिवत्। एवं च सिद्धे क्षणिकत्वे कथं ज्ञानात्मनोर्गुणगुणिभावः समकालत्वाभावात् कार्यकारणभावात् । तथा च पूर्वं ज्ञानमेवाग्रिमाग्रिमज्ञानकारणं, ज्ञानप्रवाह एव चात्मा । तथा च वैशेषिकदर्शनमसद्दर्शनमेवेति चेत।

अत्राहुः। यथा क्रमाक्रमयोर्व्यापकयोर्निवृत्तौ स्थिरेऽर्थक्रिया न सम्भवति तथा सापेक्षत्वनिरपेक्षत्वयोर्व्यापकयोर्निवृत्तौ क्षणिकेऽपि न सम्भवति। अत्रापि तृतीयप्रकाराभावेन तयोरेव व्यापकत्वात्। तन्निवृत्तिः कथमिति चेत्। इत्थम्। बीजं क्षणसहकारिसापेक्षमङ्कुरं सूते तन्निरपेक्षं वा? सापेक्षत्वे कारणमपेक्षणीयासन्निधेर्न करोतीति मयेव त्वयाप्यनुमतम्। मम तु कारणमपेक्षणीयं विना तिष्ठति न च तवेति परं विशेषः। निरपेक्षत्वे कृषीवलो बीजं क्षेत्रादिना किमिति संयोजयतीति वाच्यम्। समर्थबीजोत्पादनायेति चेत । समर्थबीजकरणेऽपि बीजस्य सापेक्षत्वनिरपेक्षत्वयोरुक्तदोषात्। नन्वनपेक्षत्वे भवतु दोषः सापेक्षत्वे तु न । न च सहकारिविलम्बेन कार्यकारित्वे स्थैर्यापत्तिः। सतः सहकारिविलम्बप्रयुक्तकार्याविलम्बकत्वं स्थैर्यात्, अस्माभिस्तु सहकारिण इव तस्यापि विलंबाविलम्बनात्। सापेक्षत्वे तु तैः सह कार्यकारित्वं न तु तद्विलम्बेन सतः कार्याजनकत्वम्, तत्प्राप्य च ज-

नकत्वं येन सहकारिसत्त्वसत्त्वक्षणयोः सत्त्वात्तेषां क्षणावस्थायित्वं स्यात् । तथा च व्यापकनिवृत्त्या क्षणिकार्थक्रियानिवृत्तिरिति चेत् । एवं हि कारणस्य सहकारिणः समवधानस्यावश्यकत्वे यदेव कुसूलपतितं क्षेत्राद्यसमवहितं नाङ्कुरकारि तदेव क्षेत्रादिसमवहितमङ्कुरं करोतीति तथैव स्वीक्रियतामापामरं तथैव व्यवहारात्, किं स्वदर्शनानुरतकतिपयव्यवहारानुस्मरणेन । अन्यथा अतिप्रसङ्गादेकवाक्यतापन्नद्वित्रिव्यवहृतव्यवहारस्यापि संभवात् तदनुसरणानौचित्यात् । किञ्च कुसूलस्थबीजस्याङ्कुरं प्रति शिलाशकलवदसामर्थ्ये कथं बीजे क्षेत्रपतितेऽङ्कुरो भवति न शिलाशकले । बीजे साक्षात्परम्पराङ्कुरजनने सामर्थ्यमस्ति न शिलाशकले तस्मात् क्षेत्रपतितादपि तदनुत्पत्तेरिति चेत् । बीजजातीययोः साक्षात्परम्परासामर्थ्यद्वयकल्पनागौरवात्, एकस्मिन्सामर्थ्ये साक्षात्कृतयोः सहकारिसमवधानासमवधानयोरेव मन्तुमुचितत्वात् । अपि च किञ्चिदेककुसूलस्थमेवाल्पसमयेऽतीते क्षेत्रादियोगे सति स्वल्पसमयोत्तरमेवाङ्कुरं सूते किञ्चित् भूयसि काले गतेऽङ्कुरं सूते तथा क्वचित्परम्परायाः स्वल्पत्वं क्वचिच्चानल्पत्वमिति कल्पनाच्च यस्य शीघ्रं सहकारिलाभः स शीघ्रमेव सूते यस्य तु चिरेण स चिरेणेत्येव श्रेयः । सहकारित्वं च यथा तव मते नोपकारकत्वम्, किन्तु सहयजनकत्वं तथा ऽस्मन्नयेऽपि । अन्यच्च पुञ्जात्पुञ्जोत्पत्तिपक्षे येनैव स्वभावेन बीजस्याङ्कुरजनकत्वं तेनैव क्षित्यादिजनकत्वं स्वभावान्तरेण वा? आद्ये कार्याभेदापत्तिः कारणाभेदात् । न च बीजस्यैकत्वेऽपि सहकारिभेदमादाय सामग्रीभेदेन कार्यभेदे नैकत्वमिति वाच्यम् । पश्चात् प्रतिपक्षे(?) सर्वेषां सर्वत्र कारणत्वेन सहकारिभेदाभावात् । न च यत्र बीजमुपादानत्वेन जनकं सोऽङ्कुरः क्षित्यादौ तु निमित्ततया जनकत्वं तत्र क्षित्यादावेवोपादानत्वादिति वाच्यम् । एकत्र निमित्तत्वोपादानत्वविरुद्धधर्मसंसर्गापत्तेः । कार्यतदभावयोर्न विरोध इति चेत् । कालभेदेन सहकारिलाभालाभयोरप्यविरोधे स्थैर्यपर्यवसानात् । स्वभावभेदेन बीजस्य क्षित्यङ्कुरजनकत्वे नित्यत्वापत्तिः स्वभावेनापि अभेदे बीजशिलाशकलयोरपि अभेदापत्तिः । कार्यभेदेन रूपभेदो न विरुद्ध इति चेत् । कालभेदेन सहकारिलाभालाभयोरपि तथात्वात् । एवं च स्थिर एव सहकारिसमवधाने करोति तदसमव-

धाने न करोतीत्येतावन्वयव्यतिरेकौ क्षणिकेऽपि नाक्षतौ सहकारि-समवधाने करोतीति त्वया स्वीकारे सहकारिविनाकृतो न करो-तीति पर्यवसानात्, अन्यथाऽन्वयस्यैव भङ्गापत्तेः, तथा चानयोर्भे-दात् भेदे क्षणिकस्यापि भेदापत्तिः, अन्यथा तु स्थैर्यस्थैर्यापत्तिः। अपरञ्च सामग्न्यसमवधानदशायां यद्बीजे सामर्थ्यमुच्यते तत्कुतः ? न तावद्बीजत्वाभावस्य सत्त्वात्। नापि शिलाशकलवत् कार्या-जनकत्वात् क्षित्यादिसमवधानेऽपि शिलाशकलात् कार्यानुत्पत्तेः। अस्माच्चोत्पत्तेर्वैलक्षण्यात् कुर्वद्रूपत्वाभावादसामर्थ्यमिति चेन्न। अस्याप्रामाणिकत्वात्। जनकत्वाजनकत्वयोर्विरोध इति चेत्, एककार्यं प्रति स्वरूपयोग्यत्वायोग्यत्वयोः अनङ्गीकारात्। कालविरोध इति चेत्। अद्य काले तयोर्विरोधात् कालभेदेन चाविरोधात्। अस्माकं मते एकस्य कालभेदाभावात्। कालभेदेनाविरोधो नोभयसंमत इति चेत्, यद् बीजं यस्मिन् काले सहकारिसमवहितं न तदन्यस्मिन् काले सहकारिसमवहितम। न च सहकारिसमवहितत्वं बाधादेव नाङ्गीक्रियते द्रव्यसमवधानस्यैव स्वीकारेण क्षणिकेऽपि सहकारि-समवधानासमवधानयोः कालभेदेन सत्त्वात्। अन्यस्मिन् काले बीजमेव नास्तीति चेत्। समवधानस्याप्यभावात् तस्मात्कालभेदेन न विरोध इति सिद्धम्।

एवं च फलोपधानानुपधानयोर्विरोधेऽप्यसावेव समाधिरनु-सरति। न चासौ समाधिः अतीतानागतनानाकालत्वावगाहमाना क्षणिकत्वे तु न किम्। अपि च कुर्वद्रूपत्वं जातिर्भवतोच्यते सा चेदे-कव्यक्तिवृत्तिः कथं जातिः ? कथं वाऽननुगतानामनुगताङ्कुरजनक-त्वमनेकव्यक्तिवृत्तित्वे शालित्वादिव्याप्यभिन्नभिन्नस्वीकारेऽङ्कुरजननं तु यवाद्यननुगम इति। शालिमाषादिवृत्तेरेकस्य स्वीकारे जातिसाङ्क-र्यम्, शालित्वस्य कुसूलस्थे सत्त्वेन कुर्वद्रूपत्वाभावात् कुर्वद्रूपत्वस्य शालित्वपरिहारेण माषादौ सत्त्वात् क्षेत्रस्थे शालौ द्वितयसत्त्वात्। ननु जातिसाङ्कर्यस्य दूषणत्वे घटत्वं कथं जातिः घटत्वस्य सुवर्ण-घटे सत्त्वेन पृथिवीत्वस्य पटादौ तत्परिहारेण सत्त्वात् पार्थिवघटे द्वितयसत्त्वात्। सुवर्णे उपष्टम्भकभाग एव घटत्वं तेजोभागे तु गौणो व्यवहार इति चेत्। विना बाधं मुख्यार्थत्यागायोगात् पाषाणत्व-घटत्वाभ्यां साङ्कर्यात्–परस्परपरिहारेण पाषाणमृद्घटयोः सत्त्वेन

पाषाणघटे द्वितयसत्त्वात् । घटत्वं संस्थानवृत्त्येव न द्रव्यवृत्तीति चेन्न । तत्राप्यन्यतरकर्मादिजन्यतावच्छेदकजातीनां साङ्कर्यात् महान् घट इति गुणसामानाधिकरण्येन प्रतीतिश्चेति चेन्न । पाषाणत्वादिव्याप्यनानाघटत्वस्वीकारात् अनुगतव्यवहारस्य संस्थानविशेषवत्त्वेनैवोपपत्तेः । वस्तुतस्तु घटत्वस्य संस्थानवृत्तित्वेऽन्यतरकर्मजन्यतावच्छेदकादिव्याप्यं जातिद्वयमेवायाति द्रव्यवृत्तित्वे तु पाषाणत्वकाष्ठत्वादिव्याप्यं नानेति द्रव्ये घटत्वव्यवहारः संस्थानविशेषवत्त्वेनैव । अत एव यस्मिन्नेव सुवर्णसंस्थानविशेषदशायां कर्तव्यव्यवहार तस्मिन्नेव तदभावे न तथा व्यवहार इति । महान् घट इत्यादिगुणादिसामाधिकरण्यानुभवोऽपि संस्थानविशेष एव । जातिविशेषश्च संस्थानेऽवश्यं स्वीकर्तव्यः । संयोगविशेषः कुम्बग्रीवेत्यादौ विशेषान्तरस्य वक्तुमशक्यत्वादित्यादिरन्यत्र विस्तरः ।

ननु कुर्वद्रूपत्वजातेरभावेऽयं कुर्वद्रूप इति व्यवहारः किञ्चिदिति चेत् । सकलसहकारिसान्निध्योपाधिनैव तदुपपत्तेः । एवं च सहकारिसान्निध्यासान्निध्यात्मके कुर्वद्रूपत्वाकुर्वद्रूपत्वे अपि कालभेदमादायाविरुद्धे । ते च देशभेदेन सामर्थ्यासामर्थ्ये भवतोऽपि मते। एतद्देशे समर्थस्य देशान्तरेऽपि सामर्थ्ये तत्रापि करणप्रसङ्गः । एवञ्च कालभेदेनापि सामर्थ्यासामर्थ्ययोः को विरोधः । अपि च क्षणिकोऽपि भावः सत्त्वदशायामर्थक्रियायां समर्थश्चेत् किं न करोति समर्थस्य प्रतिक्षेपायोगात् । समर्थोऽपि असत्त्वान्न करोतीति चेत् । सत्त्वस्य सामर्थ्यरूपत्वेऽसत्त्वस्यासमर्थरूपत्वात् । एते च कालभेदेन सामर्थ्यासामर्थ्ये भवतो मते । ननु क्रमकारित्वाक्रमकारित्वयोर्भावस्य कस्य संभव इति चेत् । यत्र कार्ये क्रमिकाः सहकारिणः तत्र क्रमकारित्वमेव यथा घटेन क्रमिकजलाहरणादौ । अक्रमिकसहकारिसम्पत्तौ चाक्रम एव यथा घटरूपाद्युत्पत्तौ । एवं च यत्र कार्ये तत्कालं सहकारिमिलनं तत्राक्षेपकारित्वमेव यथा घटस्य स्वरूपाद्युत्पत्तौ । यत्र तु विलम्बेन सहकारिणः सान्निध्यं तत्र क्षेपकारित्वमेव । क्षेपाक्षेपौ च विलम्बाविलम्बौ । न च नानास्वभावत्वे धर्मिभेदो, धर्म्यभेदादेकस्मिन् बीजे बीजत्वकुर्वद्रूपत्वयोः त्वयाप्यङ्गीकारात् । ननूक्तं सहकारिणो न जह्यादेव वा स्वरूपत्यागस्यानुचितत्वात् तत्र किमुत्तरमिति चेत् । सहकारिसमवधाने सति कारित्वस्य तदसमवधाने

सति चाकारित्वस्य धर्मात्मकत्वेन धर्मिस्वरूपात्मत्वाभावात् । एवं च विरुद्धधर्माध्यासाभावात् सिद्धं प्रत्यभिज्ञया याथार्थ्यमनुस च त्यां(?) स्थैर्यम। यत्र तु विरुद्धधर्मसंसर्गः तत्र सा न मानं, यथा सैवेषा प्रदीपशिखा इत्यादौ खर्वत्वादीनां विरुद्धधर्माणां सत्त्वात् । एवं च लब्धमपि कारणत्वं न फलोपधानावच्छेदकं सहकारिसमवधाने सति तत्त्वस्य गुणेऽपि प्रामाणिकत्वात् । एवं च यदि सामर्थ्यं स्यात् तदा कुर्यादित्यस्य यदि स्वरूपयोग्यं स्यात् तदा फलोपहितं स्यात् इत्यर्थकत्वे प्रयोजकत्वम् । यदि फलोपहितं स्यादित्यर्थकत्वे यदि कुर्वद्रूपं स्यादित्यर्थत्वे वाऽस्माकमापादकास्वीकारः। तस्मात् यद्बीजं कदाप्यङ्कुरकारणैः समवहितं भविष्यति तत्फलोपधाननियतं यस्य तु तत्समवधानं विनैव नाशः तत्र स्वरूपयोग्यतामात्रं नित्ये तु स्वरूपयोग्ये फलोपधाननियमः सहकारिसमवधाननियमात् । किञ्च बीजत्वेन बीजस्य कस्याञ्चित् अर्थक्रियायामसामर्थ्ये तेन रूपेण असत्त्वापत्तिः तुरगत्वेनेव (?) यद्येन रूपेणासमर्थं तस्य तेनासत्त्वात् पटत्वेन घटे तथा दर्शनात् । सामर्थ्ये तु सा क्रिया नाङ्कुरं कुसूलस्थबीजसन्तानात् अङ्कुरानुत्पत्तेः, नापि बीजमङ्कुरजनकात् बीजानुत्पत्तेः तदनुज्ञानमेवार्थक्रिया भविष्यति । न चाज्ञातविनष्टे बीजे कथं तत्, तत्सर्वज्ञज्ञानस्य ततोऽपि सम्भवात् । न च तज्ज्ञानस्य नित्यत्वात् कथं समर्थक्रियात्वमस्माभिः तस्यापि क्षणिकस्य स्वीकारादिति चेन्न । एवं हि सर्वस्य बीजस्य सर्वस्मिस्तादृशज्ञाने सामर्थ्ये एकबीजस्यान्यबीजोत्पत्तिज्ञानेऽपि जनकत्वापत्तिः। अस्य बीजस्य तज्ज्ञानजनकसहकारिसमवधानाभावान्न तज्ज्ञानजनकत्वमिति चेत् । एवं हि समर्थस्यापि किञ्चिज्ज्ञानजनकसहकारिसमवधानम किञ्चिज्ज्ञानजनकसहकार्यसमवधानञ्चेत्येकस्यैव समर्थस्य सहकारिसमवधानासमवधानयोः त्वयाप्यङ्गीकारात् । एवं कुर्वद्रूपत्वविशेषणाङ्कुराणां जनकत्वे कुसूलस्थबीजेऽङ्कुरार्थिनः प्रवृत्त्यापत्तिः । इष्टप्रयोजकताज्ञानमेव प्रवर्तकमिति चेत् । कस्यचिद् बीजस्याङ्कुरादर्वागेव नाशेनेष्टप्रयोजकत्वस्य बीजे निर्णेतुमशक्यत्वात् । संशयसाधारणं ज्ञानमत्र प्रवर्तकमिति चेत् । क्षणिकताऽसिद्धिः । अत्र बीजे कुर्वद्रूपत्वे एव प्रमाणाभावादिति क्षणिकताभङ्गासञ्जकसङ्क्षेपः

चतुर्दशगुणान् प्रयुक्तान्गणयति तस्येति । तत्र बुद्ध्यादयः प्रत्यक्षसिद्धा अपि सूत्रादपि सिद्धा इत्याह आत्मलिङ्गेति । प्रमाणादिसूत्रे बुद्धिः कण्ठरवेण नोक्तेति चेत् । सूत्रेण विनाऽस्याऽप्रत्ययत्वात् देवदत्तबुद्ध्या विष्णुमित्रस्येच्छाद्यदर्शनेनाऽऽत्मनीच्छादिकथनेन जनकतया तत्समानाधिकरणबुद्धेः सूचितत्वात् । ननु धर्माधर्मयोः प्रमाणमेव नास्ति । न च श्रुतिरेव मानं विधिप्रत्ययस्यास्मिन्नये इष्टसाधनत्वादावेव शक्तेरपूर्वस्याशक्यत्वात् । न च चिरकालविनष्टयागब्राह्मणद्वेषादीनां कालान्तरभाविस्वर्गनरकप्रसवासमर्थतया धर्माधर्मयोः सिद्धिः, व्यापारतया धर्माधर्मयोः सिद्धावप्यात्मनिष्ठत्वे प्रमाणाभावादित्यत आह—धर्माधर्माविति । अन्यगतौ धर्माधर्मौ नान्यत्र सुखदुःखजनकाविति सूत्रकाराभिप्रायात् सुखादिसमानाधिकरणधर्मादिसिद्धिरित्यर्थः । अयमभिप्रायः । व्यधिकरणयोर्धर्माधर्मयोः सुखादिजनकत्वे यागकर्तरीवान्यस्यापि तदुत्पत्त्यापत्तिर्वैयधिकरण्याविशेषात् । यत्कृत्या यौ धर्माधर्मौ जातौ तस्यैव तौ सुखादि जनयत इति चेन्न । ऋत्विजां स्वर्गभागित्वप्रसङ्गात् । ते दक्षिणार्थिन इति चेत् । न, तथापि तत्कृत्या धर्मस्य जनितत्वात् । तस्मात्समानाधिकरणयोरेव तयोः सुखदुःखादिजनकत्वम् । अत एव पितृयज्ञादावपि पित्रादिगतधर्मकल्पनेत्याचार्याः । विस्तरश्चास्य शब्दपरीक्षादौ ।

संस्कारोऽपि फलसमानाधिकरण एव कल्पनीयः व्यापारस्य फलसामाधिकरण्ये लाघवादित्याह संस्कार इति । चिरविनष्टस्यानुभवस्य फलजनकत्वान्यथानुपपत्त्या कल्पमानस्य संस्कारस्य स्मृतिवैयधिकरण्येऽन्येनानुभूतस्यान्येन स्मरणप्रसङ्गः इत्यर्थः । आत्मनः किमाकाशवदेकत्वं पृथिव्यादिवन्नानात्वं वेत्यत आह व्यवस्थेति । नानात्मानो व्यवस्थात इति सूत्रात् पृथिव्यादिसाम्यमित्यर्थः । व्यवस्था च कश्चिन्मुक्तः कश्चिद्बद्धः कश्चित् पण्डितः कश्चिन्मूर्खः कश्चित् सुखी कश्चित् दुःखीत्यादिः । न हि मुक्तिसंसारौ एकस्य युगपत् सम्भवतः समानाधिकरणदुःखासमानकालीनदुःखध्वंसस्य मुक्तित्वात् । न च तदात्मनः तदैव संसारित्व इदं सम्भवति संसारस्य दुःखत्वात् । न चैषा व्यवस्था मा भवतु । मूढत्वपण्डितत्वे सुखदुःखे एकस्य शरीरभेदेन किं न भवत इति चेत् । देवदत्तयज्ञदत्तयोरेक-

त्वे देवदत्तानुभूतस्य यज्ञदत्तेन स्मरणप्रसङ्गात् । यथा पूर्वजन्मानुभूतं शरीरभेदेन न स्मरति तथा प्रकृतेऽपीति चेत् । शरीरभेदस्य अस्मरणे प्रयोजकत्वात् तत्त्वे स्तनपाने प्रवृत्त्यापत्तेः । पूर्वजन्मानुभूतसर्वास्मरणस्य संस्कारलोपादिनोपपत्तेः । न च प्रकृते तथा सम्भवति देवदत्तस्याप्यस्मरणप्रसङ्गात् । न च जीवनान्यथानुपपत्त्या शरीरभेदेऽपि प्रकृतजन्मानुभूतस्मृतिः कल्प्यते । न च प्रकृते काचिदनुपपत्तिरस्तीति वाच्यम् । अनुपपत्तेः कल्पकत्वात् । स्मरणे संस्कारोद्बोधादेरेव तन्त्रत्वात् । तस्य च प्रकृते सुलभत्वात् । नन्वात्मन एकत्वपक्षेऽपि अविद्याभेदात् भेदः, तथा चान्याविद्यावच्छिन्नानुभूतं नान्याविद्यावच्छिन्नः स्मरति । मुक्तिसंसारावपि चैवमुपपद्येते यस्य अविद्याविलयस्तस्य मुक्तिः यस्य च न तस्य संसारित्वात् । ईश्वरानीश्वरव्यवस्थापीत्थं सुस्थैव मायोपाधेरीश्वरत्वात् अविद्योपाधेश्च जीवत्वादेकस्यैवाज्ञानस्य स्वाश्रयाव्यामोहकत्वेन मायात्वात् स्वाश्रयव्यामोहकत्वेनाविद्यात्वात् । तथा च न काप्यनुपपत्तिरित्युपनिरवन्निणार(?)इति चेत् । अविद्यायां प्रमाणाभावात् । न च व्यावहारिककार्यानुरोधेन तदनुरूपकारणतया विद्यासिद्धिः, जगतः पारमार्थिकत्वात् । न चात्मनामनेकत्वे श्रुतिसिद्धान्तविरोधः, तस्य मुमुक्षुणाऽऽत्मतत्त्वे सर्वं विहायान्तःकरणं निवेशनीयमिति तात्पर्यकत्वात् तदर्थमस्य जगत आत्मनश्चासत्कल्पनोपन्यासात् । यथा स्वं मोक्षानुपयोगि तथा स्वभिन्नमन्यदपीति तात्पर्यात् । यद्यपि प्रतियोगितयाऽन्यस्यापि ज्ञानमुपयुज्यत एव, तथापि प्रधानतया स्वात्मज्ञानमेव मोक्षोपयोगीत्यावेदितत्वात् । संख्यासिद्ध्या संख्यानुरूपं पृथक्त्वमपि सिद्ध्यतीत्याह पृथक्त्वमिति । एकसूत्रनिर्दिष्टमाकाशतुल्यपरिमाणतामाह तथाचेति । अणुत्वे सुखादीनामतीन्द्रियत्वापत्तिः मध्यमपरिमाणत्वे च जन्यतया वीतरागजन्मापत्तिरिति परममहत्त्वमित्यर्थः । सन्निकर्षेति । शरीरात्मसंयोगस्य निमित्तकारणत्वादात्मनः संयोगस्यासमवायिकारणत्वादित्यर्थः । तद्विनाशकत्वादिति । आत्ममनसोर्नित्यतयाऽऽश्रयनाशाभावाद्विभाग एव विनाशक इत्यर्थः ।

( व्यो० ) इदानीमात्मनो लक्षणपरीक्षार्थमात्मत्वाभिसम्बन्धादि-

त्यादि प्रकरणम् । आत्मत्वेनाभिसम्बन्ध आत्मोपलक्षितः समवायो लक्षणमिति । तथा ह्यात्मेतरस्मात् भिद्यते आत्माभिसम्बन्धाद्य-स्त्वितरस्मादनात्मनो न भिद्यते न चासावात्मत्वेनाभिसम्बद्धो-यथा क्षित्यादिरिति । न च तथाऽऽत्मा तस्माद् भिद्यत इति । व्यव-हारो वा साध्यः । तथा शब्दार्थनिरूपणपरत्वेन पूर्ववद्वाक्यं योज-नीयम् । तथा लक्षणस्याक्षेपप्रतिसमाधानं पूर्ववद्वाच्यम् ।

ननु सर्वमेतदसम्बद्धम् , आत्मसद्भावे प्रमाणाभावात्,तथाहि न प्रत्यक्षेणोपलभ्यते रूपादिवत्स्वभावानवधारणात् ,नाप्यनुमानमस्त्या-त्मप्रतिबद्धमित्याशङ्क्याह तस्य सौक्ष्मादप्रत्यक्षत्वे सति करणैः श-ब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते इति । सौ-क्ष्म्यं रूपविशेषैकार्थसमवेतमहत्त्वाद्यभावोऽभिप्रेतो नाणुपरिमा-णसम्बन्धित्वमत एव तस्याप्रत्यक्षत्वम् । ननु चायुक्तमेतत्, अहमिति प्रत्यये तस्य प्रतिभासनात् । तथाच सुख्यहं दुख्यहमि-च्छावानहमिति प्रत्ययो दृष्टः । न चायमनुमापूर्वकः, लिङ्गलिङ्गिसम्ब-न्धानुस्मरणव्यापारस्यासंवेदनात् । नापि शब्दः, तेन विनाऽप्यु-त्पद्यमानत्वात् । नापि विपर्ययज्ञानमेतत्, अबाध्यमानत्वात् । नापि संशयज्ञानं, तद्रूपस्यासंवेदनात् । अतः प्रमारूपत्वादवश्यं प्रमाणान्तर-प्रतिषेधे प्रत्यक्षस्यैव व्यापारः न शरीरालम्बनमन्तःकरणव्यापार-णोत्पत्तेः । तथाहि-न शरीरमन्तःकरणपरिच्छेद्यं बहिर्विषयत्वात् । नन्वेवं कृशोऽहं स्थूलोऽहमिति प्रत्ययस्तर्हि कथम् ? मुख्ये बाधकोपप-त्तेरुपचारेण । तथाहि मदीयो भृत्य इति ज्ञानवन्मदीयं शरी-रमिति भेदप्रत्ययदर्शनात् । भृत्यवदेव शरीरे ऽप्यहमिति ज्ञानस्यौपचारिकत्वमेव युक्तम् । उपचारस्तु निमित्तं विना न प्रवर्त-त इत्यात्मोपकारकत्वं निमित्तं कल्प्यते । आत्मनि तु मुख्यत्वम् , सुखीति ज्ञानेन समानाधिकरणत्वात् । तथाहि यत्र सुखीति ज्ञानं तत्रैवाहमिति ज्ञानस्योपलम्भः सुखादियोगश्च शरीरादिव्यति-रेकेणात्मन्येवेति वक्ष्यामः । यच्चेदं रूपादिवत् स्वभावानवधारणा-दिति । तदसत् । अहमिति स्वभावस्य प्रतिभासनात् । नचार्था-न्तरस्यार्थान्तरस्वभावेनाप्रत्यक्षत्वं दोषः, सर्वपदार्थानामप्रत्यक्षता-प्रसङ्गात् । नच परकीयेऽप्यात्मनि अहमिति प्रतिभासप्रसङ्गः स्यात् , तस्यात्मान्तरप्रत्यक्षत्वात् । प्रत्यक्षजं चेदं विज्ञानं न प्रमाणान्तर-

प्रभवमित्युक्तम् । न चात्मान्तरेणात्मान्तरस्याप्रत्यक्षतायां स्वात्मनोऽपि तथाभावप्रसङ्गः । स्वसंविदा बाध्यमानत्वात् । नापि रूपान्तरस्य संख्यादेः प्रत्यक्षताप्रसङ्गः । तस्य प्रतिभासाभावेनाप्रत्यक्षत्वात् । तथाहि—यत्र हि रूपविशेषस्य प्रत्यक्षत्वं तत्रैव संख्यादयः प्रत्यक्षा इत्युक्तम् पूर्वम् । अथात्मनः कर्तृत्वादेकस्मिन् काले कर्मत्वासम्भवेनाप्रत्यक्षत्वम् । तन्न । लक्षणभेदेन तदुपपत्तेः । तथाहि—ज्ञानचिकीर्षाधारत्वस्य कर्तृलक्षणस्योपपत्तेः कर्तृत्वम्, तदेव च क्रियया व्याप्यत्वोपलब्धेः कर्मत्वं चेति न दोषः, लक्षणतन्त्रत्वाद्वस्तुव्यवस्थायाः । न चानयोरेकस्मिन्धर्मिणिरेकस्मिंश्च काले कर्तृकरणयोरिवास्तु विरोधः । तथाहि स्वातन्त्र्यं कर्तृत्वं पारतन्त्र्यञ्च करणत्वमिति त्वनयोर्विधिप्रतिषेधरूपत्वादभिन्ने धर्मिण्यसम्भवो युक्तः, न चैवं कर्तृत्वकर्मत्वयोरिति । अत एव मदीयं शरीरमित्यादिप्रत्ययेष्वात्मानुरागसद्भावेप्यात्मनोऽवच्छेदकत्वम् । श्रीहर्षं देवकुलमिति ज्ञाने श्रीहर्षस्येवोभयत्रापि बाधकसद्भावात्, यत्र ह्यनुरागसद्भावेपि विशेषणत्वे बाधकमस्ति तत्रावच्छेदत्वमेव कल्प्यत इति । अस्ति च श्रीहर्षस्य विद्यमानत्वमात्मनि कर्तृत्वकरणत्वयोरसम्भव इति बाधकम् । न चैकस्मिन्नेव धर्मिणि कर्त्रादिविभागस्योपलब्धेरवास्तवत्वमेव न्याय्यम्, लक्षणभेदस्य वास्तवत्वाद्येषां तु लक्षणभेदो नास्ति तेषामेष दोष इति । कल्पनाज्ञानञ्च पूर्वमेव निरस्तमिति न कल्पनासमानोऽपि ताकारणादिव्यवस्था(?) । तदेवं कर्त्रादिप्रविभागस्य भिन्ननिमित्तत्वादेकस्मिन्नेवात्मन्यनुमानेन प्रत्यक्षेण वा परिच्छिद्यमानेन तदेव कर्तृत्वं न दोषायेति । नन्वेवमात्मन्यहमितिप्रत्ययस्य प्रत्यक्षफलत्वात्तस्य सौक्ष्म्यादप्रत्यक्षत्वे सतीत्यसम्बद्धं वाक्यम् । न बाह्येन्द्रियविवक्षयास्यभिधानात्, तथाहि—कस्मादात्मा क्षित्यादिवत् बाह्येन्द्रियप्रत्यक्षो न भवतीत्युक्ते वाक्यं सम्बध्यते—तस्य सौक्ष्म्याद्रूपविशेषैकार्थसमवायस्य महत्त्वस्यानेकद्रव्यत्वसहचरितस्याभावान्न बाह्येन्द्रियप्रत्यक्षत्वम् । तत्र प्रत्यक्षेप्यप्रत्यक्षाभिधानाल्लभ्यते । तस्मिंश्च सति करणैः श्रोत्रादिभिः समधिगमः क्रियते । यदि वा करणैः श्रोत्रादिभिरित्युभयत्रापि योज्यम् । तथाहि—शब्दोपलब्धिः करणकार्या क्रियात्वात् छिदिक्रियावदेवं शेषेष्वपीति । तस्य सौक्ष्म्याद्यथोक्तात् करणैः श्रोत्रादिभिरप्रत्यक्षत्वे सति तैरेव लिङ्गभूतै-

स्तस्याधिगमः क्रियते । श्रोत्रादीनामपि सद्भावेऽनुमानमाह—शब्दाद्युपलब्ध्यनुमितैरिति । शब्दस्पर्शरूपरसगन्धोपलब्धिक्रियाभिरनुमीयन्त इति तदनुमितानि तैरिति । तथाहि—शब्दोपलब्धिः करणकार्या क्रियात्वाच्छिदादिक्रियावत्। एवं शेषेष्वपीति। व्याप्तिप्रतिपादनार्थमाह—वास्यादीनामिव करणानां कर्तृप्रयोज्यत्वदर्शनादिति । यथा वास्यादीनि करणानि कर्तृप्रयोज्यानीति तद्वच्छ्रोत्रादीन्यपि करणानि, तस्मात् कर्तृप्रयोज्यानि । तथाहि—श्रोत्रादीनि करणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति । अथात्र सर्वगतात्मप्रयोज्यत्वे साध्ये साध्यविकलत्वम् , विपर्यये वा सिद्धसाधनमिति । न, सर्वानुमानेषु सामान्येनैव साध्यसाधनभावोपपत्तेर्विशेषणानुव्याप्त्यभावे सर्वानुमानोच्छेदप्रसङ्गः । प्रमाणं चानुमानमिति वक्ष्यामस्तदधिकारे । सिद्धे च कर्तृसद्भावे तस्य शरीरादिव्यतिरेकः परिशेषात् । तथा न परं करणैः शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते । शब्दादिषु विषयेषु प्रसिद्धिर्विज्ञानं तया प्रसाधकः समवायिकारणमात्मानुमीयते । तथाहि–शब्दादिज्ञानं क्वचिदाश्रितं गुणत्वात् , यो यो गुणः स स आश्रितो यथा रूपादि, तथाच गुणो ज्ञानं तस्मादाश्रितम् । समवायिकारणपूर्वकत्वं कार्यत्वाद्रूपादिवदेव । अथ शरीराद्याश्रितं भविष्यतीति सिद्धसाधनमित्याशङ्क्याह—न शरीरेन्द्रियमनसामिति । तथाहि—परे मन्यन्ते प्राणवच्छरीरे सति भावात् तदभावे चाभावाच्छरीरधर्म एव चैतन्यमिति । एवमिन्द्रियादिष्वप्यूह्यम् । तन्निषेधार्थं न शरीरेन्द्रियमनसां चैतन्यमिति। व्यवहारे साध्ये न साध्याविशिष्टो हेतुरज्ञत्वादिति। यदि वा स्वसिद्धान्तोपदर्शनमेतत्। अस्मत्सिद्धान्ते नामीषां चैतन्यमिति । नन्वेवं यदि शरीरस्य चैतन्यं नास्ति तर्हि किमर्थं परैरुक्तः चैतन्यविशिष्टः कायः पुरुषः तथेन्द्रियभावव्यतिरेकानुविधानादिन्द्रियाणां चेत्याशङ्क्याह—अज्ञत्वादिति । न हि विदुषो बाधकमुपलभमानस्यैव वचांसि प्रवर्त्तन्त इति । तथा मन्यन्त एभिरिति मनांसि शरीरेन्द्रियाण्येव तेषां न चैतन्यं तत्कारणानामज्ञत्वादचेतनकारणारब्धत्वादित्यर्थः, इति केचित् ।

अथ कारणानामज्ञत्वं कुतः कार्यज्ञानात् । नन्वेवमितरेतराश्रयत्वम्। घटादिकार्यस्याचेतनतयोभयवादिसम्प्रतिपत्तेः कारणानामज्ञत्वं सिद्धम् । तज्जातीयाश्च परमाणवः शरीरस्यारम्भका इति अचेतनका-

रणारब्धत्वे तस्याप्यचेतनत्वम्। एवमिन्द्रियेष्वपि । यदि च परमाणुषु चैतन्यं स्यादेकस्मिन्नेव शरीरे पुरुषानन्त्यात् प्रतिसन्धानादिव्यवहारोच्छेदप्रसङ्गात् । शरीरेन्द्रियाणाञ्च चैतन्यस्योत्पत्तावन्वयव्यतिरेकौ कारणत्वादपि सम्भवतः कथं तदाधारत्वमिति । अथैवमदृष्टकल्पनादोष इति चेन्न । प्रमाणोपलम्भात् । तथाहि—प्रत्यक्षवदनुमेयस्यापि अर्थस्याप्यस्त्येव सद्भावः । तत्र शरीरस्य चैतन्यप्रतिषेधार्थमाह—न शरीरस्य चैतन्यमिति । अत्र तु चैतन्यस्य पक्षीकरणे भूतकार्यत्वमसिद्धं स्यादिति शरीरमेव पक्षीक्रियते । तथाहि—शरीरं परपरिकल्पितं चैतन्यशून्यं भूतत्वात् कार्यत्वाच्च । यत् भूतं यच्च कार्यं तच्चैतन्यशून्यं यथा घटः । तथा शरीरं तस्मादचेतनमिति । अन्ये त्वेक एव भूतकार्यत्वादिति हेतुर्विवक्षित इति मन्यन्ते । तच्चासद् । व्यभिचाराभावात् ।अथ भूतकार्यत्वादित्युक्तेऽस्त्यात्मना व्यभिचार इति चेत् । न । तस्य साध्यत्वात्। सिद्धे च व्यभिचारो भवतीति । यस्य चात्मा प्रसिद्धस्तं प्रत्यनुमानोपन्यासो व्यर्थ एव । तथा कार्यत्वादित्युक्ते नास्ति व्यभिचार इति व्यर्थमेव स्यात् भूतपदम् । न च चेतनया व्यभिचारः, तस्याश्चैतन्यशून्यत्वेन सपक्षत्वादिति हेतुद्वितयमेव युक्तम्। अवयवव्यत्यये तूक्तमेव प्रतिसमाधानम् ।

तथा मृते चासम्भवादिति । मृतावस्थायां चैतन्यस्य रूपादिवदनुपलब्धेर्न शरीरविशेषगुणत्वम् । तथाहि—चैतन्यं शरीरविशेषगुणो न भवति सति शरीरे निवर्तमानत्वात् । ये हि सति शरीरे निवर्तन्ते ते तद्विशेषगुणा न भवन्ति—यथा संयोगादयः। ये तु शरीरविशेषगुणास्ते तस्मिन् सति न निवर्तन्ते, यथा रूपादय इति । न च विशेषगुणत्वप्रतिषेधेन सामान्यगुणवत्त्वप्राप्तिः । प्रतियोग्यपेक्षितत्वात् पक्षादिव्यवस्थायाः । तथाहि—चैतन्यस्य परेण शरीरविशेषगुणत्वमेवेष्टम्, तस्यैव प्रतिषेधः क्रियते । न चात्र शरीरस्यैव पक्षीकरणम् । मृते चासम्भवाच्चैतन्यस्येति हेतोर्व्यधिकरणताप्रसङ्गात् । तथेन्द्रियाणां चैतन्यप्रतिषेधो—नेन्द्रियाणां चैतन्यं करणत्वाद्वास्यादिवत् भूतत्वात् कार्यत्वादित्यपि द्रष्टव्यम् । इतोऽपि नेन्द्रियाणां चैतन्यं तदुपघातेऽपि स्मृतिदर्शनात् । न च गुणिविनाशे गुणस्य सद्भावो दृष्टः । तथाहि—स्मरणमिन्द्रियगुणो न भवति यथा घटवि-

नाशेऽपि पटरूपादिरिति । तथाच स्मरणमिन्द्रियविनाशेपि भवति तस्मान्न तद्गुण इति । यदि चेन्द्रियाणां चैतन्यं स्यात् करणं विना क्रियायाश्चानुपलब्धेरिति करणान्तरैर्भवितव्यम् । तानि करणानीन्द्रियाणि विवादास्पदानि चात्मान इत्येकस्मिन्नेव शरीरे पुरुषबहुत्वमभ्युपगतं स्यात् । एवञ्च सति देवदत्तोपलब्धेऽर्थे यज्ञदत्तस्येवेन्द्रियान्तरोपलब्धेऽर्थे न स्यादिन्द्रियान्तरेण प्रतिसन्धानम् । तत्तु दृष्टमतो नेन्द्रियाणां चैतन्यम् । यदि चैकमिन्द्रियमशेषकरणाधिष्ठायकं चेतनमिष्येत । सञ्ज्ञाभेदमात्रमेव स्यात् । अथ विषयगुणश्चैतन्यं भविष्यतीति तन्निषेधार्थमाह—विषयासांनिध्ये चानुस्मृतिदर्शनात्। तथाहि—विषयासांनिध्ये तद्विनाशे वाऽनुस्मृतिर्दृष्टा न तत् गुणतद्विनाशे भवतीति । अथ मनोगुणो भविष्यतीति तत्प्रतिषेधार्थमाह–नापि मनसश्चैतन्यं गुणः करणत्वाद्रूपादिवत् । यत्कर्तृ मनस्तदपि सुखाद्युपलब्धौ यदि करणान्तरमपेक्षेत संज्ञाभेदमात्रमेव स्यात् । तथाहि–यत्तत्सुखाद्युपलब्धेः करणं तदेवान्तःकरणं यच्चेतनं मनः स एवात्मा स्यात् । अथ करणान्तरं नापेक्षते तर्हि करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गः । तथाहि—मनसश्चैतन्ये युगपद्रूपरसस्पर्शशब्दज्ञानानि प्रसज्येरन् । चक्षुरादीनां मनःसम्बन्धे सति करणान्तरानपेक्षाणां स्वविषयैः सम्बन्धात् । तथाहि—स्मृतियौगपद्यञ्च करणानपेक्षित्वात् । न चैकस्य क्रमेण कार्यजनकत्वम्, पूर्वस्वरूपस्यापरिभ्रंशात्, नापि युगपदेव सर्वं कृत्वा पुनरकरणे हेत्वभावात् । प्रतिकार्यञ्च पूर्वस्वरूपव्यावृत्त्यभ्युपगमे क्षणिकताप्रसङ्गः । अथ करणस्यापि मनसश्चैतन्यम् । तन्न, स्वयं करणभावाच्चेति । तथाहि—चैतन्यं प्रधानक्रिया सा च कर्तरि कर्मणि वा समवैति । न करणे भवितुमर्हति, अनुपलम्भात् । न हि करणं प्रधानक्रियाश्रयो दृष्ट इति स्वकीयापेक्षया तु सर्वस्य कर्तृत्वमेवेति । तदेवं परिशेषादात्मकार्यत्वाच्चैतन्यस्य, तेनात्मा समधिगम्यते । कः पुनरयं परिशेषः ? प्रसक्तेषु शरीरादिषु जात्यादिषु च विषयेषु चैतन्यप्रतिषेधे तथा तदाश्रयस्य व्यवस्थापनाज्ञानात्वाधिगमादाकाशादीनामेकत्वेनाप्रसक्तेः शिष्यते च द्रव्यान्तरमिति परिशेषः—केवलव्यतिरेक्यनुमानम् । तथाच ज्ञानं क्षितिजलज्योतिरनिलाकाशदिक्कालमनोव्यतिरिक्तद्रव्याश्रयम् तदु-

वृत्तौ बाधकप्रमाणसद्भावे सति गुणत्वात्, यस्तु तद्व्यतिरिक्ताश्रयो न भवति न चासौ तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणो यथा रूपादिः। न च तथा ज्ञानं तस्माद् व्यतिरिक्ताश्रयमिति।

ननु सर्वमेतदसम्बद्धं क्षणिकत्वेनाश्रयाश्रयिभावानुपपत्तेः। तथा च पदार्थानामर्थक्रियया सत्त्वं व्याप्तम्। सा च क्रमयौगपद्याभ्यामक्षणिकेषु न सम्भवति। क्रमेण जनकत्वमेकस्वरूपत्वात्, यदेव हि पूर्वकार्योत्पत्तौ स्वरूपम् तदेवोत्तरकार्येष्वपीति सर्वेषामेकताप्रसङ्गः, कारणवैलक्षण्यं विना कार्यवैलक्षण्यस्याशक्यसाधनत्वात्। अथ कार्यवैलक्षण्यादेव ज्ञायते—प्रतिकार्यं पूर्वस्वरूपनिवृत्तावन्यदेव स्वरूपं भावानां भवतीति। तर्हि स्वरूपस्यावस्थानाभ्युपगमात् तथा सत्त्वप्रसङ्गः। अथावस्थितस्यापि क्रमयौगपद्याभ्यां सहकारिप्राप्तौ तथैव जनकत्वमिति चेत्। न। तस्य तस्मिन् अतिशयाधायकत्वेनातिशयनिवर्तकत्वेन च तयोरव्यतिरेकादन्यत्वमेव। व्यतिरेकेपि तद्भावेपि भावस्य कथं कार्यस्य जनकत्वं दृष्टमिति। न ह्यर्थान्तरजन्मन्यर्थान्तरस्य क्रियाजनकत्वं दृष्टमिति। अनुपकारके वस्तुन्यपेक्षैव न स्यादिति सहकारित्वाभावः। अथ सहकारिणामपि सहकार्यन्तराधीनं सामर्थ्यम्, तदापि यदि सहकार्यन्तरादित्यनवस्थैव स्यात्। अथ सहकार्यन्तरं विनैव सहकारिणां स्वत एव सामर्थ्यमिति चेत्। एतच्चान्यत्रापि समानमित्यलम्। तदेवमक्षणिकेभ्यो व्यावर्तमानार्थक्रिया स्वव्याप्तं सत्त्वं गृहीत्वा व्यावर्तते इत्यसन्तो क्षणिकाः। तदेवं बाधकोपलम्भात् पक्षपक्ष एवाक्षणिकशङ्काव्यवच्छेदसिद्धौ सत्त्वमेव क्षणिकसाधनमिति। तथा निर्हेतुकत्वाद्विनाशस्योत्पत्त्यनन्तरमेवाभाव इति क्षणिकत्वम्। ननु मुद्गरादिव्यापारेण घटादिविनाशस्योत्पादोपलम्भादयुक्तमेव तत्। नात्मभागसङ्गतौ तद्व्यापारात्। यदि च हेतोरर्थान्तरभूतो विनाश उत्पाद्येत। तदा तदभावस्यानुपलम्भो न स्यात्, तत्स्वरूपस्यापरिभ्रंशात्। तथा भावस्यैव कारणजनकत्वाभ्युपगमे भावरूपत्वप्रसङ्गश्च। न चार्थान्तरत्वाविशेषात्तस्मिन्नुपजाते कस्यचिद्भावस्यानुपलम्भो न सर्वस्येति विशेषहेतुरस्ति। नापि कारणापेक्षितायामवश्यं भावः स्यात्। वस्त्रे रागस्येव सापेक्षित्वावश्यंभावित्वयोर्विरोधात्। तथाहि—वस्त्रे रागः सम्पद्यमानः कारणसद्भावाद्भवति अभावे न भवति एवं कश्चिद्वस्तुनो विनाशहेतुप्रतिबन्धादभावाद्वा

विनाशित्वमपि स्यात् । यदि चाविनश्वरस्वरूपाणां हेतुतो विनाशो, गगनादीनामपि नित्यतयाभ्युपगतानां विनाशः प्रसज्येत । अथ नङ्क्ष्युर्भावस्य हेतुता । ततो विनाशवत् किं तत्कल्पनया । तत्स्वरूपत्वादेवावश्यं विनापि हेतुं विनाशो भवतीति । यदि करणकार्यत्वं च स्याद्विनाशस्य कृतकत्वात् तद्विनाशेऽवश्यंभावोन्मज्जनं स्यात् तस्मान्न तस्य किञ्चित् भवति, न भवत्येव केवलमिति भाव लक्षणस्थितधर्मानाश इति । न चाक्षणिकत्वे प्रत्यभिज्ञानं प्रमाणम् । तस्य कल्पनाज्ञानत्वात् । तदेतत्सर्वमविदितार्थम्, कल्पनाज्ञानस्य पूर्वमेव निरस्तत्वात् । अथ स एवायमिति ज्ञाने विरुद्धोल्लेखादेकत्वमयुक्तम् । तथाहि—स इत्यतीताकारं ज्ञानमयमिति च वर्तमानाकारम् । न च विरुद्धाकारयोरेकत्र सम्भवो दृष्ट इति ।

तदसत् । आकारवादप्रतिषेधे पूर्वानुभवजनितसंस्कारस्मरणसहकारीन्द्रियेण स एवायमित्युभयोल्लेखि ज्ञानं जन्यते । तस्य चार्थान्वयव्यतिरेकानुविधानात् निर्विषयत्वमयुक्तम । अथास्तु प्रत्यभिज्ञानादवस्थायित्वमर्थानाम् अर्थक्रियाकारित्वं तु कथम । सहकारिसांनिध्ये सतीति । तथाहि—क्रमेणसहकारिसद्भावे सति क्रमेण जनकत्वम, युगपत् सद्भावे च युगपच्चेति । यच्चोक्तम्—किन्तस्य सहकारिणा क्रियते इति । नाकिञ्चित् । किन्तर्हि ? सद्भावे कार्यमेवान्यथासहकारित्वायोगात् । यदि वा तस्य सामर्थ्यं कारकसाकल्यमेव क्रियते तत्सद्भावे कार्यजननादसामर्थ्यन्तु वैकल्यं निवर्तते । साकल्यवैकल्ययोः परस्परसद्भावस्थितिविरोधात् । न च तयोराविर्भावतिरोभावाभ्यामर्थस्य तथाभावप्रसङ्गः । तयोस्तद्व्यतिरेकात् । न च सहकारिणामर्थान्तरत्वाविशेषादविशेषेण सर्वभावसहकारित्वम् । नियतस्यैव सद्भावे भावव्यतिरेकाभ्यां कार्यजनकत्वदर्शनात् । नापि सहकारिणां सहकार्यन्तरात् सामर्थ्यम् । तन्निरपेक्षाणामपि परस्परसांनिध्ये तत्समुदायस्यैककार्यजनकत्वोपलब्धेः, दृष्टं चक्षुरूपालोकमनस्काराणां परस्परसांनिध्ये सत्येककार्यजनकत्वम् । न चान्येतराधिपत्येनास्यावस्थायामतिशयः संपद्यत इति वाच्यम् । अव्यतिरेके तदभावात्, नहि स एव तस्यैवातिशयो भवतीति । तथातिशयरहितानामतिशयजनकत्वमिति कार्यान्तरेऽपि न बाधास्ति । अथाऽतिश-

युक्तानामतिशयजनकत्वम्, एवं तर्हि तेषामप्यन्यस्मात्त्वतिशयः संप- द्यत इत्यभ्युपगमेऽनवस्थायां विवक्षितकार्यानुत्पत्तिप्रसङ्गः। तस्मा- त्सहकारिणां परस्परसांनिध्यमेवातिशय इति युक्तमुत्पश्यामः। तदेवं कार्यवैलक्षण्यं सामग्रीवैलक्षण्यात् भवतीति न प्रतिकार्य- मन्यत्वं भावानाम्। यश्चायमक्षणिकानां क्रमयौगपद्याभ्यामर्थक्रि- याप्रतिषेधः स विशेषप्रतिषेधस्याऽवश्यं शेषाभ्यनुज्ञायां समर्थ इति प्रकारान्तरेणार्थक्रियाप्रसङ्गः। न च तदसत्त्वग्राहकं प्रमाणम- स्तीति। तथा परस्पराधिपत्येन कार्यजनकत्वाभ्युपगमात्। रूपा- दीनामेकैकमनेकरूपादेर्युगपत् कारणमित्यभ्युपगमे यौगपद्यप्रति- षेधादेव तदन्तर्भूतः क्रमो निषिद्ध इति तस्य स्वशब्देन पुनर्वचनम् पुनरुक्तमेव स्यात्। तथाहि—यथा रूपं युगपद्रूपरसगन्धस्पर्शा- नारम्भते तथा रसादयोऽप्येकैकविवक्षायां तत्रैव क्रम इत्येकस्यैव प्रतिषेधो वाच्यः। न चैकमेकस्मादेवोत्पद्यते तदारभते चेति नियमः सम्भवति। न चान्यथैकस्य क्रमेणानेककार्यजनकत्वं प्रतिक्षणमन्य- त्वाभ्युपगमात्, तस्मात् सहकारिसद्भावे सति क्रमयौगपद्या- भ्यामर्थक्रियाजननात् अक्षणिकानां नासत्त्वमिति। नापि नानात्व- मिति, सत्त्वादिति हेतोरव्यतिरेकः। न च पक्ष एव तस्य व्यति- रेकः, तस्य रूपान्तरत्वात्। यच्चेदमक्षणिकत्वेन विरोधात् भावत्कपक्ष एव अक्षणिकशङ्काव्यवच्छेदसिद्धौ बाधकम्। इत्येतदसत्। विरोधि- प्रतिपत्तिमन्तरेण विरोधप्रतिपत्तेरयोगात्। अथाक्षणिकस्तद्विरोधि प्रतीयत एव। स तर्हि प्रतिपत्तिरूपार्थक्रियाकारित्वादसन्न भवति इति कथमस्यास्माद् व्यतिरेकः। यदि चाक्षणिकशङ्काव्यवच्छेदो बाधकादेव प्रतीयेत सत्त्वादिति हेतोर्वैयर्थ्यं स्यात्। तस्याप्यतद्रूपव्यवच्छेद- विषयत्वादिति। अथ मौलेन हेतुना क्षणित्वमेव साध्यते। तच्च यदि स्वलक्षणादिभिन्नं कथमनुमानपरिच्छेद्यं तस्य हि सामान्य- विषयत्वादिति। न च सत्त्वादिति हेतोः सपक्षविपक्षाभ्यामन्वयव्यति- रेकाभ्यामन्तरेण गमकत्वं न्याय्यम्। असाधारणस्यापि गमकत्व- प्रसङ्गात्, सर्वस्य च पक्षान्तर्भावात् सपक्षविपक्षाभाव एव। अथ कल्पनासमारोपितस्वात्पक्षादिव्यवस्थायाः कल्पनासमारोपिते सप- क्षेऽन्वयस्तदारोपित एव व्यतिरेक इति गमकत्वम्। एवं तर्हि क- ल्पनासमारोपितपक्षादिव्यवस्थापेक्षं काल्पनिकमनुमानमित्यबा-

स्तवं क्षणिकत्वमेव स्यात् । अथ विनाशस्य निर्हेतुकत्वेन क्षणिकत्वम् । तन्न । निर्हेतुकत्वस्यापि कतिपयकालावस्थायित्वेन विनाशे विरोधाभावात् । न च निर्हेतुकत्वं युक्तम् । भाव इवाभावेऽप्यन्वयव्यतिरेकाभ्यां हेतोर्व्यापारोपलम्भात् । अथ मुद्गरादिव्यापारात् कपालसन्तानस्योत्पादो, न तस्य विरोध्युत्पन्नत्वात् । न च कपालसन्तानस्तस्यावरणमिति, प्रागिव तत्कालेऽप्युपलभ्येत । आवरणत्वेऽपि तद्विनाशे तस्योपलम्भः स्यात् । न च कपालसन्तानेन घटस्य विरोधः, तत्कारणत्वात् कपालानाम् । अर्थान्तरे विनाशे भावस्योपलम्भ इत्युक्तम् । तन्न । तयोः सहावस्थितिविरोधात् । तथाहि भावे तूत्पन्ने अभावस्याग्रहणम् । तत्काले तु भावस्येति दृष्टम् । नन्वेवं घटकाले तत्प्रागभावस्य विनाशे तस्याप्यन्यः प्रागभावः तस्याप्यन्यो विनाश इत्यनवस्था स्यात् । तद्भावेऽपि न दोषः । कार्यनिष्पत्तेर्दर्शनादिति केचित् ।

अन्ये त्वनवस्थायां किल कार्यस्य परिसमाप्तिर्न स्यादिति घटतत्प्रागभावविनाशयोः एक एव प्रागभाव इति मन्यन्ते ।

गुरवस्तु घटकाले तत्प्रागभावस्यानुपलब्धेः स एव तस्य प्रतिषेधः । प्रागभावस्तु घटस्येति तयोः सहावस्थितिविरोधादिति ब्रुवते ।

अथाभावस्यार्थान्तरत्वाविशेषात्तस्मिन्नुपजाते सर्वेषामनुपलम्भः स्यात् । न, तस्मिन्नुत्पन्ने कस्यचिदनुपलम्भेन तयोरेव विरोधसिद्धेः यथार्थान्तरत्वाविशेषेपि किञ्चिदेव कारणं कस्यचिदेव कार्यस्य हेतुर्न सर्वस्येति प्रतिनियमो दृष्टः तद्वदभावस्य नियतेनैव भावेन विरोधो दृष्ट इत्यदूषणमेतत् । यच्चेदं विनाशस्य कारणापेक्षितायामवश्यम्भावो न स्यात् , वस्त्रे रागस्येव सापेक्षित्वावश्यम्भावित्वयोर्विरोधादिति । तदसत् । एकत्र व्यभिचारेण सर्वत्र तथाभावस्यानुपलब्धेः । तथा सापेक्षित्वेपि सवितृग्रहनक्षत्रताराणां चोदयास्तमयोपलब्धेर्निरपेक्षत्वे चोदयानन्तरमेवास्तमयः स्यात् । समर्थस्योपक्षेपायोगादिति । अवश्यं चोदितस्य सवितुरस्तमयो भवतीति । अथोक्तम्—नश्वरभावस्य विनाशाभ्युपगमे किं हेतुनेति । तत्र विनाशात्मकत्वासम्भवादवश्यं नश्वरविनाशयोग्यस्यैव हेतौ विनाशो न गगनादेरिति । तथा स्वकारणादित्थंभूत एवोत्पन्नो

भावो येनास्यावश्यं विनाशहेतुना भवितव्यमिति । अथ तर्हि कारणाद्युत्पद्यमानत्वादभावस्य भावादविशेषप्रसङ्गः । तन्न । स्वरूपभेदस्योपपत्तेर्यथाहि कारणादुत्पद्यमानाः रूपादयः परस्परं स्वरूपभेदात् भिद्यन्ते । तथाऽभावोपि भावादिति । अस्ति च द्रव्यादिषड्लक्षणालक्षितत्वं भावपरतन्त्रेण गृह्यमाणत्वमभावस्य रूपमिति । अथोत्पत्तिमत्वादभावस्य विनाशे भावोन्मज्जनप्रसङ्ग इत्युक्तम् । तदा सद्भाववद्धर्मविलक्षणत्वादभावधर्माणां यथा चानुत्पत्तिमतः प्रागभावस्य विनाशः तथोत्पत्तिधर्मिणोपि विनाशस्याविनाश इति । न च विनाशविनाशे भावोन्मज्जनम् तस्य तद्रूपत्वादतत्कारणत्वाच्च । तथाहि—घटविनाशविनाशो न घटरूपो, नापि तत्कारणमिति कथं तस्योन्मज्जनप्रसङ्गः। न च भावस्यासत्त्वं प्रत्यक्षादिप्रमाणैर्व्यवसीयमानत्वात् , तथाहि— इह भूतले घटो नास्तीति ज्ञानमिन्द्रियभावव्यतिरेकानुविधानादिन्द्रियजम् । न च निर्विषयो घटाभावविशिष्टभूतलालम्बनत्वात् । अथ घटविविक्तभूतलोपलम्भ एव घटानुपलम्भो नाभावादिति चेत् । अव्यतिरेके तु घटावष्टब्धेऽपि भूतले स्यान्नास्तीति ज्ञानम् । तस्मात् घटाभावोपलम्भ एव घटस्यानुपलम्भो नोपलम्भाभावमात्रमिति । न च विनाशानभ्युपगमे भावस्य प्रागिव पश्चादप्यवस्थानादनुपलम्भो घटते । अथ क्षणस्थायित्वमेव द्वितीयक्षणे तस्यानवस्थानम् । तर्हि स एव तस्याभावो यत्सद्भावे द्वितीयक्षणे तस्यानुपलम्भ इति । अन्यथा हि इन्द्रियादेस्तादवस्थ्याद्विनाशाभावे नित्यस्यानुपलम्भो न स्यात् । यच्चेदं–न तस्य किञ्चिद्भवति न भवत्येव केवलमिति–उन्मत्तभाषितमेतत् । अनुत्पन्नविनाशस्य पूर्वमप्युपलम्भो न स्याद्विनष्टत्वादेव । अभावेन चाविरोधे पश्चादप्यवस्थानमिति नित्यत्वं स्यात् । तथा क्षणिकत्वे सति–अनुभवितुर्विनष्टत्वादन्यस्य स्मरणं न स्यात् । न हि देवदत्तानुभूतेऽर्थे यज्ञदत्तस्य स्मरणमिति । अथ नानासन्तानेषु कार्यकारणभावस्याभावादस्मरणम् , एकस्मिंश्च सन्ताने बुद्धीनामस्ति कार्यकारणभाव इत्याहितसकलपूर्ववासनाकं कार्यज्ञानमुत्पद्यत इति कारकानुभूतेऽर्थे तस्य स्मरणं युक्तमेव । नैतदेवम् । कार्यकारणभावेपि नानात्वस्य तादवस्थ्याद्देवदत्तादिसन्तानेष्विव कथं स्यात् स्मरणम् । न च सन्तानसद्भावे प्रमाणमस्ति । बुद्धेर्बुद्ध्यन्तरकार्यत्वे प्रमाणाभावात् । अथास्ति बोध-

March. 1929.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 375

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

## प्रशस्तपादभाष्यम् ।

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया
महामहोपाध्यायपद्मनाभमिश्रकृतया सेतुव्याख्यया
विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया व्योमवत्या च समन्वितम्
वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यक्षेण पं० गोपी-
नाथकविराजेन न्यायोपाध्याय पं०दुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

## PRASHASTAPÂDABHÂSHYAM

BY Prhśhstadevâchârya

WITH COMMENTARIES:

Sūkti,-BY JAGADISA TARKÂLANKÂRA,
Setu,-BY PADMANÂBHA MISHRA, &
Vyomavati,-BY VYOMASHIVACHARYA.

*Edited by*

GOPINÂTH KÂVIRÂJ, M. A.
PRINCIPAL, GOVERNMENT SANSKRIT COLLEGE.
SARASVATI BHAVAN BENÂRES,
and
DHUNDHIRÂJ SHÂSTRI Nyâyopâdhyâya.

FASCICULUS V-५.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1928.

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तवकः—३७५

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares,*

Agents:
1 Otto Harrassowitz, Leipzig:
GERMANY.
2 The Oriental Book-supplying Agency,
POONA.

रूपतेति चेत् । तथाहि—बोधरूपं कार्यं बोधादेव भवति । यथा शुक्लाच्छुक्लमित्यादि । नन्वेवं तर्हि धूमस्याग्निजन्यत्वं न स्यात् । समानजातीयस्य धूमक्षणस्य भावात् । अथ विलक्षणादप्यग्निक्षणाद्धूमस्योत्पत्तिरिष्येत । बोधस्यापि विलक्षणाच्छरीरादेरुत्पत्तिर्भविष्यतीति न बोधान्तरसद्भावे प्रमाणमस्ति । अथ किञ्चित् सादृश्यतयाऽग्निर्धूमस्य कारणम । तदा ज्ञानोत्पत्तौ शरीरादावपि समानम् । तथा कृष्णादपि शुक्लस्योत्पत्तिर्भवेत् किञ्चित्सादृश्यसद्भावात् । अत्यन्तसमानजातीयं च समनन्तरकारणमित्यभ्युपगम्यमाने रूपज्ञानादेव रूपज्ञानं रसज्ञानादेव रसज्ञानं सुखादेव सुखं दुःखादेव दुःखमिति सन्तानानन्त्यं स्यात् । नचाऽस्ति संवेदनमिति । अथैतेषां युगपदसंवेदनमननुभूयमानक्षणानामुत्पत्तेः, तर्हि तेन विना तस्यानुत्पत्तेस्तत्सन्तानोऽप्यभ्युपगन्तव्यः । तथाच सति तदैव तेषां संवेदनमसंवेदनं चेति प्राप्तम् । न चैतदस्ति । तस्मान्न सर्वं ज्ञानं ज्ञानान्तरजन्यमिति प्रतिबन्धोऽस्ति । न च विनाशस्याव्यतिरेकादनुभवस्यावस्थाने स्मरणं युक्तम् । अथ द्वितीयक्षणे तस्यानुभवस्याभावादनवस्थानमिति चेन्न । अव्यतिरेके हि तेनाविरोधादवस्थानमेव । व्यतिरेके तु सहानवस्थितिविरोधाभ्युपगमेऽस्मद्दर्शनानुप्रवेशः । तस्मात् स्मरणमवस्थितमात्मानं प्रसाधयतीति । न च क्षणिकत्वे सति कार्यकारणभावो घटते । तथाच यदैव कार्यस्योत्पादस्तदैव कारणस्य विनाशः, स चोत्पादान्न भिद्यत इत्यभ्युपगमे सहोत्पन्नयोर्न स्यात् कार्यकारणभावः सव्येतरगोविषाणयोरिव । विनश्यदवस्थं च कारणमिष्टं वैशेषिकैर्विनाशस्य हेतुमत्वात् । निर्हेतुकविनाशवादिनां च भावविनाशाव्यतिरेकेण विनश्यदवस्थानं सम्भवत्येव । तस्य विनाशकारणसाकल्यरूपत्वात् । नापि स्वसंविद्वादिनः कार्यकारणभावग्रहणमस्ति । कारणसंविदः स्वात्मन्येव पर्यवसानात् । तथा कार्यसंविदोपीति न कारणज्ञानम् कार्यसत्तामनुभवति, तत्सत्ताकाले तस्यातीतत्वात् । न च ज्ञानान्तरमेकम् कारणसत्ताकाले कार्यसत्तां तदभावे चासत्तां विजानातीति । अथ कार्यकारणज्ञानाभ्यां वासनाक्रमेणास्ति विकल्पज्ञानं कार्यकारणभावग्राहकमिति चेत् । तस्याप्येतद्रूपसमारोपत्वाभ्युपगमेऽप्रमाणत्वेन कार्यकारणभावस्यासिद्धिरेव । तथाहि यद्यत्र समारोप्यते तत्तत्रावास्तवमेव । यथा शङ्खे पीतादिरिति । अथ पूर्वाप-

लब्धानुसन्धानं विकल्पज्ञानमिति चेत्। एवं तर्हि कार्यकारणभाव-ग्रहणं विना न वासना। तदभावात् तदध्यवसायाविकल्पः कथं भविष्यतीति, अनुभवानुरूपत्वाद्वासनायाः। न च बोधादन्या वासना सम्भवतीत्युक्तम् पूर्वम्। तस्मादवस्थितं प्रतिसन्धातारमन्तरेण तु कार्यकारणभावस्याग्रहणमेवेति। अयं तु क्षणभङ्गोऽस्मद्गुरुभिर्विस्तरेण निरस्त इति नेह प्रतन्यते। तदेवमक्षणिकत्वे सत्याश्रयाश्रयिभावस्योपपत्तेः सत्यमेतत्-परिशेषाद्विज्ञानस्यात्माश्रितत्वमिति।

तथा प्रवृत्तिनिवृत्तिभ्यामात्मा ज्ञायते। किं विशिष्टाभ्याम्? शरीरसमवायिनीभ्यां हिताहितप्राप्तिपरिहारयोग्याभ्यामिति। हितं सुखमहितं दुःखं तयोः प्राप्तिपरिहारौ तद्योग्याभ्यां तत्समर्थाभ्यामिति। व्याप्तिप्रतिपादनार्थमाह-यथा रथकर्मणा सारथी रथस्याधिष्ठाता तद्वदात्मा विग्रहस्य शरीरस्याधिष्ठाताऽनुमीयते। तथाहि-जीवच्छरीरं प्रयत्नवदधिष्ठितं जीवच्छरीरसमवायिहिताहितप्राप्तिपरिहारसमर्थप्रवृत्तिनिवृत्त्याश्रयत्वात् रथवत्। प्रवृत्तिनिवृत्त्याश्रयत्वं वाय्वादौ व्यभिचरतीति हिताहितप्राप्तिपरिहारसमर्थपदम्। तथा शाखायन्त्रनिपीडितस्य प्राणिनः शाखाकर्माऽहितनिवर्तकमधस्तनस्थफलादिप्राप्तेर्हितप्रापकञ्चेति तदर्थं शरीरसमवायिपदम्। तथापि नदीस्रोतःपतितशवकर्मणा व्यभिचारः तद्व्यधःस्तनस्य शुनस्तनूपयोगात्सुखं भक्ष्यत इति सुखप्रापकमुपरिष्टाच्च स्नानं कुर्वतस्तपस्विनो दुर्गन्धतया दुःखं जनयतीति तन्निवर्तकं चेति तदर्थं जीवच्छरीरपदम्। नन्वेवमपीदं विशेषणं विपक्षादिव सपक्षादेरपि रथादेर्निवृत्तिं दर्शयति इत्यसाधारणत्वमेव स्यात्। नहि रथे जीवच्छरीरसमवेतं क्रियाश्रयत्वमस्ति। अथ जीवच्छरीरसमवायिहिताहितप्राप्तिपरिहारयोग्या क्रिया प्रयत्नवत्कार्या विशिष्टक्रियात्वात् रथक्रियावत्। इहापि न सविशेषणस्य हेतोः सपक्षसद्भावः। तथा सुप्तस्य नावारूढस्य यथोक्तविशेषणक्रिया अभिप्रेतेन प्राप्तिहेतुरहितेन निवृत्तिहेतुश्च, न च प्रयत्नवत्कार्येति व्यभिचारः। तस्मादिच्छानुविधायिक्रियाश्रयत्वं हेतुरिति। तथाहि-जीवच्छरीरं प्रयत्नवदधिष्ठितमिच्छानुविधायिक्रियाश्रयत्वाद्रथवत्। क्रिया वा प्रयत्नवत्कार्या इच्छानुविधायिक्रियात्वात् रथक्रियावत्।

तथा प्राणादिभिश्चेति । प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मालिङ्गानीतिसूत्रं दर्शयति अथात्मना साधर्म्यमनुपलब्धेः कथमेषाङ्गमकत्वमित्याह शरीरपरिगृहीते वायौ विकृतकर्मदर्शनाद्भस्त्राध्मापयितेवानुमीयत इति, व्याप्तिप्रतिपादनमेतत् । प्रयोगस्तु-जीवच्छरीरं प्रयत्नवदधिष्ठितं जीवच्छरीरपरिगृहीतवाय्वाश्रयत्वात् भस्त्रावत् । वाय्वाश्रयत्वमन्येषामप्यस्तीति विकृतग्रहणम् । विकारस्तु तिर्यग्गतिशीलस्य वायोर्यदूर्ध्वमधोगमनम् । तथापि वायुर्वाय्वन्तरेण प्रतिहत ऊर्ध्वं गच्छतीति परिगृहीतपदम् । तथाह्यन्तःसुषिरवृक्षे छिद्रप्रदेशेन प्रविष्टस्य वायोरूर्ध्वमधश्च गमनं सम्भवतीति शरीरपदम् । तथापि शुष्कानुबद्धशरीरे प्रविष्टस्य विकारः सम्भवतीति जीवग्रहणम् । नन्वेवमपि जीवच्छरीरपरिगृहीतविकृतवाय्वाश्रयत्वं भस्त्रादेर्न सम्भवतीति साधनविकलताप्रसङ्गः । तन्न भस्त्रासाधर्म्यात् । भस्त्राशब्देन महिषीशरीरस्य विवक्षितत्वात् उपचारेण । यथाहि भस्त्राध्माप्यते प्रयत्नवता तथा महिषीशरीरामिति दृष्टमतः साध्यसाधनाधिकरणत्वम् । यदि वा जीवच्छरीरपरिगृहीतविकृतो वायुः प्रयत्नवदधिष्ठितः जीवच्छरीरपरिगृहीतविकृतवायुत्वात् भस्त्रापरिगृहीतविकृतवायुवत् । यथोक्तविकृतवायुकर्म प्रयत्नवत्कार्यम् यथोक्तस्य वायोर्विकृतकर्मत्वात् भस्त्रापरिगृहीतविकृतवायुकर्मवत् ।

तथा निमेषोन्मेषकर्मणा नियतेनेति । न वातदोषादुत्पन्नेन । दारुयन्त्रप्रयोक्तेवात्माऽनुमीयत इति व्याप्तिप्रतिपादनमेतत् । यथा हि प्रयत्नवताऽधिष्ठितस्य दारुयन्त्रस्य निमेषोन्मेषकर्म तथा जीवच्छरीरस्यापीति । अक्षिवर्त्मनोः संयोगार्थम् कर्म निमेषः, उन्मेषस्तु विभागार्थमिति । तथाहि-जीवच्छरीरं प्रयत्नवदधिष्ठितम् निमेषोन्मेषकर्माधारस्यावयवित्वाद्दारुयन्त्रवत् । अक्षिवर्त्मनी तु प्रयत्नवदधिष्ठिते निमेषोन्मेषकर्माधारत्वात् दारुयन्त्राक्षिवर्त्मवत् । निमेषोन्मेषकर्मणी वा प्रयत्नवत्कार्ये निमेषोन्मेषकर्मत्वात् दारुयन्त्रनिमेषोन्मेषकर्मवत् ।

तथा देहस्य वृद्धिक्षतभग्नसंरोहणादिनिमित्तत्वात् गृहपतिरिवात्माऽनुमीयत इति व्याप्तिप्रतिपादनमेव । वृद्धिरवयवोपचयः । क्षतस्य शस्त्रादिसम्बन्धात्, भग्नस्य वास्यः (?)

संरोहणं लोकप्रसिद्धम् । व्यस्तं चैतद्विवक्षितम् । सामस्त्ये हि व्यवच्छेद्याभावात् । तथा जीवच्छरीरं प्रयत्नवदधिष्ठितम् वृद्धि-निमित्तत्वात् भग्नसंरोहणादिनिमित्तत्वाच्च गृहवत् । आदिशब्देन केशादेरुद्भवनं पुरुषगुणपूर्वकं व्याख्येयं गृहेऽलङ्कारविशेषवत् । अन्यथा हि मृतावस्थायामप्येतत् स्यान्न चैतदस्ति । तथा वृद्धिक्ष-तभग्नसंरोहणानि प्रयत्नवत्कार्याणि तद्रूपत्वात् गृहगतवृक्षा-दिवत् । ननु सर्वमेतदनैकान्तिकमचेतनेषु वृक्षादिषूपलम्भात् । त-थाच प्रवृत्तिनिवृत्त्योः प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानमिति सूत्रेणेच्छानुविधायिक्रिया परत्र चैतन्ये प्रतीयत इत्युच्यते । तथाहि स्वात्मनि विशिष्टप्रवृत्तिनिवृत्त्योश्चैतन्यकार्यत्वेनोपलम्भादन्यत्रोपल-म्भने तत्कार्यत्वं युक्तम् तदभावस्तु वृक्षादौ । यच्चेदं पादप्रसारणादि तदयसोऽयस्कान्ताभिसर्पवद्वस्तुस्वाभाव्याद् भविष्यतीति । आगमस्तु सुलभत्वादुपचारेणापि व्याख्यातुं शक्यत एवेत्यनैकान्तिकत्वमेव । अथ तदधिष्ठायकस्य सद्भावान्नानैकान्तिकत्वमिति चेत् । न । तस्य लोष्ठादिष्वपि सद्भावेन वृद्धिक्षतभग्नसंरोहणप्रसङ्गात् । तदेतत् सर्व-मसांप्रतम्, वृक्षादेरपि पक्षान्तर्भावात् । न च साध्येनैव साधनस्य व्यभिचारः, नापि सूत्रव्याघातः, तत्रापि प्रवृत्तिनिवृत्त्योः सद्भावात् । तथाच द्रव्यसंनिधाने पादप्रसारणं न वस्तुस्वाभाव्याच्छरीरेपि तद्भावप्रसङ्गात् । नियतद्रव्याभिलाषश्च वृक्षायुर्वेदे परिपाठितस्तेषां ज्ञायते तदुपभोगे पुष्पादिदर्शनात् । आगमस्य चौपचारिकत्वमयु-क्तम्, मुख्ये बाधकानुपपत्तेरित्यलम् । अथ वालुकादिनिचयेषु प्रयत्नं विनापि वृद्धेरुपलम्भात् व्यभिचारः । न, ईश्वरप्रयत्नस्य तत्रापि सद्भा-वाभ्युपगमात् । तस्यापि पक्षेऽन्तर्भावाच्छरीरवत् पुरुषगुणपूर्वकत्वं साधनीयमिति ।

तथाभिमतविषयग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा गृहकोणेषु पेलकप्रेरक इव दारकः आत्माऽनुमीयत इति व्याप्तिप्रतिपादनमेव । यथाहि गृहे दारकः पेलकैः संक्रीडमानो हस्तस्थितपेलकेन मध्यस्थं पेलकमभिहत्य पेलकान्तरेण सम्बन्ध-यति तद्वदात्मापि शरीरे मनसा चक्षुरादिकमभिहत्य विषयैः संयोज-यतीति । तथा चाभिमतश्चासौ विषयश्च रूपादिस्तद्गृह्णातीति तद्ग्राहकम् । तच्च ग्रहणं चक्षुरादि तेन सह सम्बन्धस्तन्निमित्तेन

मनःकर्मणा ज्ञायते । प्रयोगस्तु—जीवच्छरीरं प्रयत्नवदधिष्ठितम-भिमतविषयग्राहककरणाधारत्वात् गृहवत् । मनो वा प्रयत्नवत्प्रेर्यम् अभिमतविषयग्राहककरणसम्बन्धित्वात् हस्तस्थितपेलकवत् । मनःकर्म वा प्रयत्नवत्कार्यम् अभिमतविषयग्राहककरणसम्बन्धित्वात् हस्तस्थितपेलकवत् । मनसो वा चक्षुरादिसम्बन्धः प्रयत्नवत्कार्योऽभिमतविषयग्राहककरणसम्बन्धत्वात् पेलकान्तरसम्बन्धिसम्बन्धवत् । चक्षुरादयो वा प्रयत्नवत्प्रेर्या अभिमतविषयग्राहककरणत्वात् पेलकान्तरवत् । विषयसम्बन्धो वा प्रयत्नवत्कार्योऽभिमतविषयग्राहककरणसम्बन्धिसम्बन्धत्वात् कोणस्थितपेलकसम्बन्धवत् ।

तथा नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसविक्रियादर्शनात् अनेकगवाक्षान्तर्गतप्रेक्षकवदुभयदर्शी कश्चिद्विज्ञायत इति व्याप्तिप्रतिपादनमेव । तथाहि येन रूपादि विशिष्टरसाविनाभावितयोपलब्धं तस्य नयनविषयालोचनानन्तरमिति नयनस्य विषयो रूपम् तत्रालोचनात् विज्ञानं तदनन्तरमविनाभूते रसेऽनुस्मृतिर्भवति । तत्क्रमेण रसनविक्रियेति रसनानुस्मरणानन्तरं रसबुद्धिः । ततः प्रयत्ने सति मनसि क्रियाप्रबन्धाद्रसनेन्द्रियसम्बन्धस्तस्माद्रसनान्तर्गतोदकसम्प्लवलक्षणो विकारः सम्पद्यत इत्युत्पत्तिक्रमः । ज्ञप्तिक्रमस्तु रसनेन्द्रियविकारान्मनःसम्बन्धस्तेनापि मनसि क्रियाप्रबन्धोऽनुमीयते । तस्मात् प्रयत्नस्ततोपिच्छा तया च स्मरणं ततः संस्कारस्तस्माच्चानुभवः तेनानुभवेनानुभविता ज्ञायत इति । अत्र तु ममेति प्रतिसन्धानं सर्वत्रोपलब्धमित्येककर्तृकत्वं निश्चीयते । भिन्नकर्तृकेषु ममेति प्रतिसन्धानव्यावृत्तेः । नहि देवदत्तादिषूत्पन्ना स्मरणादयो यज्ञदत्तेन मम स्मरणं ममेच्छेति संवेद्यन्ते इन्द्रियाणां तु प्रतिनियतविषयत्वात् साहचर्यानुपलब्धाविन्द्रियान्तरोपलब्धेऽर्थे न स्यादिन्द्रियान्तरेण स्मरणं तदभावाद्रसनेन्द्रियस्य विकारासंभव एव स्यात् । स चोपलब्ध इत्युभयदर्शी ज्ञायते । अथ शरीरस्यैव चक्षूरसनाधिष्ठायकत्वे रूपरसयोः साहचर्योपलब्धौ स्मरणमिति चेत् । न । तस्यानवस्थत्वात् । तथाहि—कुवलयामलकबिल्वादीनामिव परिमाणभेदस्य शरीरे सद्भावादनवस्थत्वम् । न ह्यनवस्थपरिमाणेऽप्यवतिष्ठमाने परिमाणवति परिमाणप्रतिषेधादुत्तरपरिमाणेन शक्यं भवितुमिति

परिमाणान्यथानुपपत्त्या पूर्वपरिमाणनिवृत्तिः । सा चाश्रयविनाशादेवेत्यन्यत्वम्। न च शरीरस्य शरीरान्तरारम्भकत्वम्। एकस्यारम्भकत्वप्रतिषेधात् । कार्यकारणाविरोधेन सर्वेषामुपलम्भप्रसङ्गात् । अथावस्थाभेदमात्रं नावस्थायिनो भेद इति चेत् । तन्न। यद्यवस्था परिमाणं तद्भेदे तस्याप्यवश्यं भेदः। अथावयवविशेषः तद्विनाशेपि तदारब्धस्य विनाशात्। नापि रूपादयस्तेषामप्याश्रयविनाशेन विनाशात्। न च संयोगि समवायि वा धर्मान्तरमस्तीति। शरीरस्यान्यत्वेन स्मरणाद्यसम्भव एव । अथ बुद्धौ कारणवासनासंक्रान्तिक्रमेण स्मरणोत्पत्तौ रसनेन्द्रियविकारः सम्पद्यत इति चेत् । न क्षणिकत्वे सति स्मरणस्य पूर्वमेव प्रतिषेधात् । तस्मादेककर्तृका स्मरणेच्छादयो ममेति प्रतिसन्धीयमानत्वाद् विभिन्नकर्तृकेषु प्रतिसन्धानाभावः। एककर्तृकेषु तु नर्तकीभ्रूविक्षेपे कृतसमयानामस्ति ममेति प्रतिसन्धानम् । अथ नित्यस्यानुपकारित्वादात्मनः किमनुभवाद्यैः क्रियत इति चेत् । न किञ्चिदनुभवादेरनोपकारित्वात्तेन हि सत्यनुभविता स्मर्तेति व्यपदेशात् । तत्कार्यं वा तस्योपकारः । तथा चानुभवेन तस्य संस्कारः क्रियते । तेन तु स्मरणमुपकारः तेनापि स्वकार्यमित्युत्तरोत्तरेऽभ्यूह्यम । न चानुभवादेराविर्भावतिरोभावाभ्यामनुभवितुस्तथाभावः, तद्व्यतिरेकात् । अथ व्यतिरेके कथमात्मनोऽनुभवादिर्नान्यस्येति चेत् । तेन सम्बन्धात् । सम्बन्धस्य तु सम्बन्धान्तरानपेक्षस्यापि सम्बन्धिनिष्ठस्योपलब्धेर्नाप्यनवस्थेति वक्ष्यामः। न चान्यस्यानुभवोत्पादेऽन्यस्याऽनुभवितेति व्यपदेशो दृष्टः । अथानुभवादेरात्मन्यतिशयाधायकत्वासंभवे व्यपदेशासम्भव इति चेत् । नास्यैवातिशयत्वात्तत्प्रागभावश्चानतिशयो निवर्तत इति । कारकसाकल्यं वातिशयस्तद्वैकल्यं चानतिशय इत्युक्तपूर्वम् । न चाव्यतिरेकेऽतिशयः संभाव्यत इत्यलमतिविस्तरेण ।

तथा पूर्वोक्तैः सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते । तथाहि सुखादयः क्वचिदाश्रिताः गुणत्वाद्रूपादिवत् । अथ शरीरेन्द्रियगुणा भविष्यन्तीत्यत आह ते च सुखादयो न शरीरेन्द्रियगुणाः। कस्मादित्याह अहङ्कारेणैकवाक्यत्वाभावादिति । अहंप्रत्ययेनासमानाधिकरणत्वाद्विज्ञानवत् । ये तु शरीरेन्द्रियगुणाः तेऽहङ्कारेण समानाधिकरणा न भवन्ति रूपादय इति। अथ रूपवानहमिति प्रत्ययदर्शना-

दयुक्तमेव तत् । न मुख्ये बाधकसद्भावेनास्य गौणत्वात् । तथा चाहमितिप्रत्ययालम्बनत्वं पूर्वमेवोक्तमिति शरीरगुणैरुपचरितमेव सामानाधिकरण्यम्, स्मरणज्ञानेन तु सामानाधिकरण्यमहं स्मरामीति दृष्टम् । न च शरीरे स्मरणं समवेतमित्युक्तम् । इतश्च न शरीरेन्द्रियगुणाः सुखादयः प्रदेशवृत्तित्वाद्विशेषगुणाश्चाश्रयव्यापकाः रूपादय इति । शरीरविशेषगुणप्रतिषेधे साध्ये न संयोगादिभिरनेकान्तस्तेषामपि च पक्षत्वात् । तथा न शरीरेन्द्रियविशेषगुणाः सुखदुःखादयो यावद्द्रव्याभावित्वाच्छब्दवत् ये तु तद्विशेषगुणास्ते यावद्द्रव्यभाविनो रूपादय इति । न च पार्थिवपरमाणुरूपादिभिर्व्यभिचारः, तेषामपि साध्याधिकरणतया सपक्षत्वात् । तथाहि शरीरेन्द्रियविशेषगुणप्रतिषेधे साध्ये तेऽपि संयोगादिवत्तद्विशेषागुणा भवन्तीति सपक्षा एव । इतोऽपि न शरीरेन्द्रियविशेषगुणाः सुखादयो बाह्येन्द्रियाप्रत्यक्षत्वात् विज्ञानवत् । ये तु तद्विशेषगुणास्ते बाह्येन्द्रियप्रत्यक्षाः रूपादय इति । गुरुत्वादीनां तु बाह्येन्द्रियप्रत्यक्षत्वेपि न शरीरेन्द्रियविशेषगुणत्वमिति व्यभिचाराभावः । बाह्येन्द्रियप्रतिषेधेन चान्तःकरणप्रत्यक्षत्वं विवक्षितमिति । तथ शरीरविशेषगुणाश्च प्रत्यक्षाः । न चैवं सुखादय इति । अथ त्रिगुणात्मकत्वात् सर्वं सुखदुःखादिसमन्वितमिति नात्मविशेषगुणत्वम् । न, त्रिगुणात्मकप्रतिषेधस्य वक्ष्यमाणत्वात् प्रधानप्रतिषेधावसरे । यथा च सुखदुःखादिभिर्गुणैस्तथाहंशब्देनात्मा ज्ञायत इति । अहंशब्दो बाह्यबाधितैकपदत्वादवश्यं वाच्यमपेक्षते । न च पृथिव्याद्येवाभिधेयं पृथिव्यादिशब्दव्यतिरेकाद्वैयधिकरण्यमिति । यदि पुनः पृथिव्यादिकमर्थमभिदध्यादहमितिशब्दस्तच्छब्देन सामानाधिकरण्यं स्यादहं पृथिव्यहमुदकमित्यादि । न चैतद्दृष्टम् । तस्मादात्मन्येवाहमितिशब्दस्य प्रवृत्तिर्युक्तेति । विषयान्तरे हि प्रवर्तमानः शब्दो नार्थान्तरमभिधत्त इत्यबाधितैकपदम् । अथ शब्दानां वाच्यवाचकभावानुपपत्तेर्निर्विषयत्वमस्येति चेत् । न । वाच्यवाचकभावस्य वक्ष्यमाणत्वात् ।

तदेवमात्मन्यवस्थिते तस्य द्रव्यत्वसमवायिकारणत्वक्षणिकैकदेशवृत्तिविशेषगुणवत्त्वप्रतिपादनार्थं चतुर्दशगुणप्रतिज्ञा, तां दर्शयति—तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कार-

संख्यापरिमाणपृथक्त्वसंयोगविभागा इति। एते तु सूत्रकारेण प्रतिपादिता इत्याह आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धा इति। तथा धर्माधर्मावात्मान्तरगुणानामकारणवचनादित्यात्मगुणानामात्मान्तरगुणेष्वकारणत्वादिति सूत्रं दर्शयति। तथाहि—दानधर्मः प्रतिग्रहधर्मः संपद्यत इत्यनयोः पूर्वापरभावनियमात् कार्यकारणभाव इत्याशङ्कापरिहारार्थमेतत् सूत्रम्। आत्मान्तरगुणानामात्मान्तरगुणेष्वकारणत्वात्। धर्माधर्मौ चात्मगुणाविति नात्मान्तरगुणोत्पत्तौ कारणं स्यात् न ह्यात्मगुणात् सुखादात्मान्तरे सुखम् दुःखाच्च दुःखमुत्पद्यमानमुपलब्धम्। अथ दुहितरि वर्तमानं सुखं जामातरि सुखसम्पादकं दृष्टमिति। अयुक्तमेतन्न तदनुभवेन तदुपपत्तेः। तथाहि दुहितरि मुखप्रसादादिकमुपलभ्य सुखमस्याः समुत्पन्नमित्यनुमानान्मन्यमानायाः स्वानुभवात् मानसं सुखमुत्पद्यते। न तत् सुखात्तद्विनाशे हि कालान्तरेणोत्पत्तेरिति। तदेवं दानधर्मस्य प्रतिग्रहधर्मोत्पत्तौ कारणत्वप्रतिषेधपरेणापि सूत्रेणात्मनि धर्माधर्मयोः सद्भावोऽभिहितः, तथा वक्ष्यामश्च तत्परीक्षायाम्। संस्कारस्मृत्युत्पत्ताविति स्मृतिर्वासनाख्यादिति सूत्रं दर्शयति। तथाहि—स्मृतिः कार्यत्वादवश्यं कारणमपेक्षते। न चानुभवः कारणम्, तद्विनाशेऽप्युत्पत्तेः। अथानुभवप्रध्वंसः कारणमन्वयव्यतिरेकवत्त्वात्। तदसत्। तस्य निरतिशयत्वात्तीव्रादिभेदभिन्नस्य स्मरणस्यानुपपत्तिप्रसङ्गात्। न हि कारणातिशयं विना कार्यस्यातिशयो युक्तः अभ्यासवैयर्थ्यं च प्रध्वंसातिशयस्य कर्तुमशक्यत्वादतः सातिशयमात्मसमवेतं किञ्चिदसाधारणं कारणमस्ति। यतस्तत्समवेता स्मृतिर्जायते। न च दृष्ट एव तस्य सकलकार्योत्पत्तौ साधारणत्वादसाधारणं त्वात्मसमवेतं सुखदुःखलक्षणं कार्यं दृष्टमिति स्मृतेरन्यदसाधारणं कारणं वाच्यम्। तथाहि स्मृतिरात्मसमवेता साधारणकारणे सत्युत्पद्यते आत्मसमवेतासाधारणकार्यत्वात्सुखवत्। तस्मादनुभवेनात्मनि संस्काराधाने सति स्मरणमुत्पद्यत इति स्थितम् स्मृतिर्वासनाख्याद् भवतीति। तत्र व्यवस्थावचनात् सद्भवेति सुखदुःखादि व्यवस्थातो नानात्मान इति सूत्रं दर्शयति। का पुनरियं व्यवस्था? सुखदुःखादीनां नियमः। तथा ह्येकस्य सुखमन्यस्य दुःखमन्यस्येच्छेति व्यवस्थोपलब्धा।

ऐकात्म्ये त्वेकस्य सुखित्वे सर्वेषां सुखित्वं दुःखितायां सर्वेषु दुःखित्वं चेत्यव्यवस्थाप्रसङ्गः नियमहेतोरभावात् । अथास्ति शरीरभेदो नियामक इति चेत् । नानुसन्धानप्रसङ्गात् । यथाहि बालकौमारयौवनावस्थाभेदेन शरीरस्य भेदेऽप्येकत्वादात्मनः प्रतिसन्धानं मम सुखमासीत् बालावस्थायामित्युपलब्धमेवं सर्वशरीरेष्वपि प्रसङ्गः । न चैतदस्ति । तस्मादेकत्वव्यापकं प्रतिसन्धानमात्मनोऽश्वमहिषादिशरीरेभ्यो व्यावर्तमानं स्वव्याप्तमेकत्वं गृहीत्वा व्यावर्तते इति नानात्म्यम् । तथा ह्यश्वमहिषादिशरीरेष्वात्मा धर्मी आत्मत्वे सति व्यक्तिभेदेन नानेति साध्यम् शरीरान्तरोपलब्धेऽर्थे शरीरान्तरेणाप्रतिसन्धायकत्वाद्यत्र चैकस्तत्रास्ति प्रतिसन्धानम् । यथा बालकौमारयौवनशरीरेष्विति व्यतिरेकः । केवलव्यतिरेकाव्यभिचारेण हेतोर्गमकत्वम् वक्ष्यामो लैङ्गिकज्ञाने । तथैकस्मिन्नपि शरीरे मम पादे वेदना शिरसि वेदना इत्येकत्वादात्मनः प्रतिसन्धानं दृष्टम् । न च जन्मान्तरशरीरानुभूते गर्भशरीरानुभूते चास्मरणवदश्वादिशरीरोपलब्धेष्वस्मरणं युक्तम् । गर्भशरीरानुभवस्यापटुत्वाज्जन्मान्तरसंस्कारस्य च मरणदुःखेनाभिभवात् । न चैवमश्वादिशरीरानुभूतेषु स्मरणे कारणमस्ति । अथ भेदसद्भावे प्रमाणानुपपत्तेः सर्वमेकमिति कल्प्यते । न प्रत्यक्षेणैव परस्परव्यावृत्तात्मनां पदार्थानां भेदप्रतिभासे सत्येतस्मादयं भिन्न इति सविकल्पकज्ञानोत्पत्त्यभ्युपगमात् नेतरेतराश्रयत्वमनवस्था वा । अनियमेन तु विशेषणविशेष्ययोर्विधिप्रतिषेधयोर्ग्रहणमिष्टम् । यदत्र विशेषणं तत्पूर्वं गृह्यते । विशेष्यं तु पश्चादनियमस्तु विशेषणविशेष्यभाव इति । ननु चात्र भेदो व्यावृत्तिरितरेतराभाव इत्यभ्युपगमे व्यावृत्तेर्भेदः कथं स्वयं व्यावृत्तिरूपत्वात्तद्विपरीतास्तु व्यावृत्तिमपेक्षन्ते । अथायं भेदप्रतिभासोऽविद्यासमारोपित इति चेत् । नात्माव्यतिरेकेण तदसम्भवात् । व्यतिरेके त्वेकत्वानिवृत्तिः । यदि च विद्यानिवृत्तिरूपा स्यादविद्या सा कथं तुच्छस्वभावतया भेदेन व्यवहारं जनयेत् । न च बाधकानुपपत्तेः भेदप्रतिभासो भ्रान्तः । नापि कल्पितरूपाणां वास्तवार्थक्रियाजनकत्वं न्याय्यम् । रज्ज्वा तु सर्पज्ञानाद्वास्तवादेव भक्षणं कार्यम(?) न कल्पितार्थादिति । न च सर्वस्यैकत्वे प्रमाणमस्तीति कथं विद्यानिबन्धनमेकत्वज्ञानम्, यथा च प्रमाणं विना सर्वस्यैकत्वमेवं नानात्वमपि

स्यात्। प्रमाणाभावस्योभयत्राविशेषात्। अथास्त्येकत्वे प्रमाणमागम इति चेत्! एकत्वानिवृत्तिः प्रमाणादेर्वास्तवभेदत्वात्, अभेदे तु प्रमाणप्रमेयव्यवस्थानुपपत्तिरिति कथं स्वयं ज्योतिरेवायमात्मेति। अथामी पदार्था यदि परमात्मनो व्यतिरेकिणः कथं प्रकाशन्ते। अप्रकाशस्य प्रकाशायोगात्। अथ प्रकाशन्ते, न परमात्मव्यतिरेकिणः तस्यैव प्रकाशस्वरूपत्वादिति चेत्। नैतदेवम्। विभिन्नस्वरूपसम्बन्धिनां प्रत्यक्षादिप्रमाणैः सम्वेदनात् प्रकाशरूपता भावस्वरूपसम्बन्धित्वं बोधरूपता वा स्यात्। सा तु पदार्थेषु न सम्भवतीत्यसत्त्वेन परमात्मनोऽप्यसत्त्वप्रसङ्गः पदार्थान्तरस्वरूपस्य पदार्थान्तरे सत्त्वाविशेषात्। यदि चैक एव स्यादात्मा तस्यैकत्र विमोक्षे सर्वत्र तथा भाव इत्यप्रयाससाध्यो मोक्षः स्यात्। तथा कस्यचिदमुक्तावन्यस्याप्यमुक्तिरिति सर्वेषामनिर्मोक्षप्रसङ्गः। अथ परमात्मनो जीवात्मनां निस्सरणं संसारस्तस्मिन्नेव लयो मुक्तिरिति चेन्न। तेषां तस्मादभेदे कस्य मुक्तिः संसारो वाऽभेदे वा द्वैतहानिरिति। तथा विद्यापरिच्छिन्नात्मप्रदेशानां मुक्तिरविद्यापरिच्छिन्नात्मप्रदेशानां संसार इत्यत्राप्येतदेव दूषणमूह्यम्। परमाणवस्तु क्षित्यादेः कार्यस्योपादानकारणं कार्यपरिमाणाद्धीनपरिमाणस्य कारणस्योपलब्धेः। न च परमात्मा, तस्य व्यापकत्वात् न चामूर्तोपादानसमवेतमूर्तमुत्पाद्यमानं दृष्टमिति। यदि चानेकमणुपरिमाणं चोपादानं परमात्मेति स्यात्। सञ्ज्ञाभेदमात्रम्। परमाणवस्तु पूर्वमेव व्यवस्थापिताः। यच्चैकत्वप्रतिपादकं वाक्यम् तत्परमात्मापेक्षया व्याख्येयम्। तस्य हि कार्यानुमानेन पूर्वमेव व्यवस्थापनात्। यच्चेदम्—एक एवायमात्मा देहेदेहे व्यवस्थित इति, एकस्मिन् शरीरेऽनेकत्वप्रतिषेधार्थमेतत्। तथा ह्येकस्मिञ्छरीरेऽनेकं विज्ञानमात्मेति शाक्या मन्यन्ते। तत्प्रतिषेधार्थं प्रतिशरीरमेको नानेकः तथा नानात्वप्रतिपादमेव वाक्यमस्तीत्यलमतिजल्पितेन।

पृथक्त्वमप्यत एवेति। यत एव नानात्वमत एव नानापृथक्त्वम्। तथा चात्मवचनात्परममहत्परिमाणमिति विभवान्महानाकाशस्तथा चात्मेति सूत्रं दर्शयति। यथा विभवान्महानाकाशस्तथात्मापीति विभुत्वादेव परममहत्त्वं सिद्धम्। अथ शरीरपरमाणत्वादात्मनोऽसिद्धं परममहत्त्वं तथा चाल्पशरीरेऽल्पो महति महानात्मेति न शरीरव्यतिरेकेणात्मनोऽस्तित्वे प्रमाणमस्ति। नन्वेतस्मिन् पक्षे संकोचविका-

शधर्मकत्वात् बालशरीरेप्यात्मनो विनाशे वृद्धावस्थायां नानात्मा सम्पद्यत इत्यन्यत्वे स्मरणं न स्यात् । न च पूर्वपरिमाणस्यानिवृत्तावुत्तरपरिमाणेन शक्यं भवितुमिति पूर्वपरिमाणस्याश्रयविनाशादेव निवृत्तिः । स्वर्गादिस्थानेषु शरीरसम्बन्धानुपपत्तौ उपभोगो न स्यात् अत इष्यत एव गमनम् । तर्हि मूर्तत्वे सति महापरिमाणत्वात् यत उत्पत्तिस्तत्कारणं वाच्यमिति भूतचैतन्यवत्प्रतिषेधः । तथा धर्माधर्मयोरात्मगुणत्वात्तदाश्रयस्याव्यापकत्वे न स्यात् अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणुमनसोस्त्वाद्यं कर्मेति तयोः स्वाश्रयसंयोगापेक्षित्वात् । यथा प्रयत्नो हस्तकर्मण्यात्मसंयोगापेक्षस्तथा धर्माधर्मावात्मसंयोगं विना न कर्म कुर्यातामात्मगुणत्वात् । न च तत्रान्यत् कारणमस्तीति स्वाश्रयसंयोगापेक्षोऽदृष्ट एव कारणमतो व्यापकत्वाच्च परममहत्त्वम् । तथा योगी खल्वृद्धौ प्रादुर्भूतायां सेन्द्रियाणि शरीराणि निर्माय युगपद् भोगानुपभुङ्क्ते इति श्रूयते तच्च विभवात्मन्युपपद्यते नाव्यापक इति । तथा सुखादीनां सन्निकर्षजत्वात् संयोगः सिद्धः । सुखादयो हि कार्यत्वादसमवायिकारणमपेक्षन्ते न चान्यत्संभवतीत्यात्मान्तःकरणसंयोगः सिद्धः । स च कृतकत्वादवश्यं विनाशीत्याश्रयविनाशाभावाद्विभागादेव विनश्यतीति विभागसिद्धिः ॥

इत्यात्मा ॥

(भा०)मनस्त्वाभिसम्बन्धान्मनः । सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूत्वो(१)त्पत्तिदर्शनात् करणान्तरमनुमीयते । श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तरभावा(२)च्चान्तःकरणम् । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराः । प्रयत्नज्ञानायौगपद्यवचनात् प्रतिशरीरमेकत्वं सिद्धम् । पृथक्त्वमप्यत

(१) अत्र सूक्तिकारमतेन—अभूतत्वोत्पत्तीति पाठोऽनुलब्धयः ।
(२) ग्राहकान्तराभावादित्यत्र जगदीशसंमतः पाठः ।

एव । तदभाववचनादणुपरिमाणम् । अपसर्पणोपसर्पणवचनात् संयोगविभागौ । मूर्त्तत्वात् परत्वापरत्वे संस्कारश्च । अस्पर्शवत्त्वाद्द्रव्यानारम्भकत्वम् क्रियावत्त्वान्मूर्तत्वम् । साधारणविग्रहवत्त्वप्रसङ्गादज्ञत्वम् । करणभावात्पारार्थ्यम् । गुणवत्त्वाद्द्रव्यम् । प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारि चेति ॥ * ॥

इति प्रशस्तपादभाष्ये द्रव्यपदार्थः ॥

---

(सू०) मन आह मनस्त्वेति । ज्ञानजनकसंयोगहेतुक्रियाजनकतावच्छेदको मनस्त्वं नाम जातिविशेषः,स चाऽतीन्द्रियः ऐन्द्रियकावृत्तित्वात् तदभिमतसम्बन्धादित्यर्थः । मनोऽभावे मनस्त्वस्याप्यभावान्मनसि प्रमाणमाह सत्यपीति । आत्मन इन्द्रियैरिन्द्रियस्यार्थैर्विषयैः सान्निध्ये सन्निकर्षे सत्यपि ज्ञानसुखादीनामभूतत्वोत्पत्तिदर्शनात् कदाचिदभूतत्वकदाचिदुत्पन्नत्वदर्शनात् करणान्तरमनुमीयत इत्यर्थः। तच्च करणं मन इत्यर्थः । अयमर्थः। आत्मेन्द्रियार्थसान्निध्ये कारणे सत्यपि ज्ञानसुखादीनामभूतत्वं कारणान्तरविरहादेव, अनन्तरं तेषामुत्पत्तिश्च कारणान्तरप्राप्त्या इत्यतस्तत्कारणमन्यासम्भवात् मन एव कल्प्यत इत्यर्थः । अन्यासम्भवस्तु अन्यस्मिन् समस्ते सत्यपि तदनुत्पत्तिदर्शनात् बोध्यः ।

मनःसाधकं हेत्वन्तरमाह श्रोत्रादीति । ननु स्मृतिरिन्द्रियेणैव जन्यत इत्यत आह श्रोत्रादीति । श्रोत्रादीन्द्रियाणामव्यापारे सत्यपीत्यर्थः । न च स्मृतिः संस्कारेणैव जन्यतां किं मनसेति वाच्यम्। स्मृतेः कादाचित्कत्वानुपपत्तेः । संस्कारस्य तत्पूर्वमपि सत्त्वात् व्याप्रियमाणं मनःसहकारित्वं यदा समासाद-

यति तदा संस्कारः स्मृतिं जनयति नान्यदेत्यविरोधः ।

मनःसाधकं हेत्वन्तरमाह बाह्येति। ग्राहकान्तराभावादिति। अनेनेन्द्रियविशेषग्राह्यत्वमनुमेयमिति दर्शितम् । तथाच सुखादिकमिन्द्रियग्राह्यं बाह्येन्द्रियाग्राह्यत्वे सति ग्राह्यत्वादितीन्द्रियाविशेषो मनः सिद्ध्यतीत्यर्थः ।

तस्य गुणनाह तस्य गुणा इति। परत्वापरत्वे दैशिके। संस्कारो वेगाख्यः । तत्र संख्यां साधयति प्रयत्नज्ञानेति । प्रयत्नानां ज्ञानानाञ्च युगपदुत्पत्त्यभावात्प्रतिशरीरमेकत्वमेकैकत्वमित्यर्थः । प्रतिशरीरमनेकत्वे अनेकैर्मनोभिर्युगपदनेकप्रयत्ना अनेकानि ज्ञानानि चोत्पद्येरन् इत्यर्थः । प्रयत्नोऽत्र ज्ञानजनकसंयोगहेतुमनःक्रियाजनकः, ज्ञानायौगपद्यादेव तदयौगपद्यमुन्नेयम् ।

पृथक्त्वमत एवेति । अनेकत्वादेवेत्यर्थः । तस्याणुपरिमाणे सूत्रकारसम्मतिमाह तदभावेति । तदभावादणु मन इति सूत्रे तत्पदेन वैभवं परामृष्टं, वैभवाभावादणु इत्यर्थः । वैभवाभाव एव मनसः कुत इति चेद्, युगपज्ज्ञानाभावात् । वैभवे सति एकदा सकलेन्द्रियसंनिकर्षे युगपदनेकानि ज्ञानादीनि स्युः। न चैवं वैभवाभावादपरमहत्त्वमेवास्तु, अणुत्वं कुतः? अपरमहत्त्वेऽपि वैभवाभावोपपत्तेरिति वाच्यम् । अपरमहत्त्वेऽपि ज्ञानयौगपद्यापत्तेर्दुर्वारत्वात् ।

संयोगविभागसिद्धौ सूत्रकारसम्मतिमाह अपसर्पणेति । अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चादृष्टकारितानीति सूत्रवचने चापसर्पणं पूर्वशरीरसंयोगनाशकविभागहेतुमनःकर्म, उपसर्पणमुत्तरशरीरसंयोगहेतुमनःक्रिया ततः संयोगविभागौ सिद्धावित्यर्थः ।

मूर्तत्वादिति । मनः परत्वापरत्ववत् वेगाख्यसंस्कारवच्च मूर्तत्वाद्घटवत् इत्यनुमानेन मनसि परत्वापरत्वसंस्काराः सिद्धा इत्यर्थः ।

तस्य मूर्तत्वं साधयति अस्पर्शत्वादिति। द्रव्यारम्भिका क्रिया स्पर्शवतामेव मनसस्त्वस्पर्शत्वाद्द्रव्यानारम्भिकैव क्रिया तद्वत्त्वान्मूर्तत्वमित्यर्थः। यद्यपि क्रियावत्त्वादेव मूर्तत्वं सिध्यति, तथापि द्रव्यारम्भिका क्रिया मनसि नास्तीत्येतत्प्रदर्शनार्थमेव द्रव्यानारम्भिकेति क्रिया विशेषणम्। अस्पर्शत्वाद्द्रव्यानारम्भिका क्रियाऽतो मूर्तत्वमित्यर्थः।

ननु मनसो ज्ञानकरणत्ववत् ज्ञातृत्वमपि स्यादविरोधादित्यत आह साधारणेति। मनोऽज्ञम्—अज्ञातृ। तत्र हेतुमाह साधारणेति। विग्रहः शरीरं तद्वत्त्वं तदधिष्ठितत्वं शरीरस्य आत्मसाधारण्येन मनोऽधिष्ठितत्वप्रसङ्गादित्यर्थः। शरीरमात्मना मनसा च ज्ञात्रा अधिष्ठितं स्यादिति क्रियावत्। न च तथात्वे किमनिष्टमिति वाच्यम्। चैत्रात्मनः पराधिष्ठिते शरीरे स्वेच्छया प्रवृत्तिनिवृत्त्यधीनक्रियाजननियमो न स्यात्। न हि मैत्रात्माधिष्ठिते शरीरे चैत्रात्मना प्रवृत्तिनिवृत्तिजन्या क्रिया जन्यते। यदि च पराधिष्ठितत्वेऽपि स्वाधिष्ठिते प्रवृत्तिनिवृत्त्यधीनक्रिया जन्यत इत्युच्यते, तदा तयोरेकेन प्रवृत्तौ अन्येन निवृत्तौ इच्छया विरोधेन द्वयमपि न स्यात्। इत्थं मनसो न ज्ञातृत्वम्, किन्तु ज्ञानकरणत्वमेव। तथा च परनिष्ठज्ञानजनकत्वेन परार्थमेवेत्याह करणभावादिति। करणत्वमात्रादित्यर्थः।

संख्याद्यष्टगुणास्तत्र साधिता अत एव तस्य द्रव्यत्वमित्याह गुणवत्त्वादिति। तस्याशुसञ्चारित्वे हेतुमाह प्रयत्नेति। क्वचिदात्मनः प्रयत्नेन क्वचिददृष्टेन परिगृहीतत्वाच्च आलिङ्गितत्वाच्च आशुसञ्चारितेत्यर्थः।

इति महामहोपाध्याय श्रीजगदीशभट्टाचार्यतर्कालङ्कारकृता द्रव्यभाष्यसूक्तिः समाप्ता।

(से०) आत्मनिरूपणानन्तरं क्रमागतं मनो निरूपयति मन- स्त्वेति। मनस्त्वञ्च जातिः संख्यादीनामतिप्रसक्तत्वात्। न चान्तरि- न्द्रियत्वं तदिन्द्रियत्वे मनोनिवेशात्। न चात्मभिन्नत्वे सति ज्ञानास- मवायिकारणसंयोगाश्रयत्वम, मनःसंयोगत्वेनासमवायिकारणतायां मनस्त्वेऽसमवायिकारणत्वस्य प्रवेशेनाऽऽत्माश्रयापत्तेः। निस्पर्शा- णुत्वं विशेषगुणशून्याणुत्वं वा मनस्त्वमिति च जातौ बाधकाभा- वादात्ममनःसंयोगत्वेन कारणतायां गौरवात्। मनस्त्वेन मानससा- क्षात्कारत्वतायामपि तथा तत्। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमित्यत्र स्मृत्यजनककारणतायां मनःसंयोगाश्रयत्वमित्यत्र च मनस्त्वस्यैतावत्वे वैयर्थ्याच्च मनष्प- दपदे उष्पदाभिषेकेनैव(?) साम्राज्यात। न हि गुरूपदिष्टवर्त्मना निखि- लयोः कणभक्षाक्षचरणपक्षग्रामयोः मनश्चारयन्तोऽपि क्वचिदेवाऽ- तिव्याप्तिमालोचयाम इति संक्षेपः। ननु मनस्येव न प्रमाणमत आह सत्यपीति। ज्ञानादयः कादाचित्काः कादाचित्कत्वञ्चाभूत्वा भावित्वम्। अभवनं च कारणविलंबप्रयुक्तम्। नचाऽऽत्मादीनां विलंबो, नापि आत्मेन्द्रिययोरिन्द्रियविषययोः सान्निध्यस्य आत्मे- न्द्रियसन्निधेर्ज्ञानाद्यहेतुत्वात् इन्द्रियविषयसन्निधेः सुखाद्यहे- तुत्वात् अनयोः सत्त्वेऽपि ज्ञानादिविलम्बाच्च। नाप्यदृष्टवि- लम्बो दृष्टसाकल्ये कार्यविलंबावलम्बनमुत्पन्नेऽपि अन्त्यतन्तुसं- योगे पटानुदयप्रसङ्गात्। तस्मान्मनोविलम्बादेव ज्ञानादिविलम्ब इति मनः प्रामाणिकमित्यर्थः। ननु परमाणुक्रियायामपि द्रव्यारम्भकः संयोगः प्रलयेन जायते, तत्र सृष्ट्यनुकूलादृष्टविलम्बादेव विलम्ब इति चेत्। संहारानुकूलादृष्टप्रतिबन्धेनैव तत्र तदनुत्पत्तेः। प्रमा- णान्तरमाह श्रोत्राद्यव्यापारे चेति। स्मृतिरिन्द्रियजन्या जन्यज्ञान- त्वाच्चाक्षुषज्ञानवत्। न च चक्षुरादिना सिद्धसाधनं, चक्षु- राद्यव्यापारे जायमानत्वात्। न च तद्व्यापारोपरमः संभावितो, रूपादिविषयासान्निध्ये तदुपरमस्यानुपरमात्। न हि रूपा- द्यग्राहि चाक्षुषादिज्ञानं सम्भवति। न चानुमित्यादौ व्यभि- चारः, पक्षसमत्वात्। न चानुमित्याद्यैकमिति न पक्षीकृतमिति वाच्यम्। लिङ्गज्ञानादित एव तत्संभवेनाप्रयोजकत्वशङ्काग्रासात्। ननु स्मृतिरपि संस्कारग्राहकात् पूर्वानुभवादेव भविष्यतीत्यत

आह बाह्येति । सुखादिज्ञानं नानुमित्यादि लिङ्गादिज्ञानं विना जायमानत्वात्, न स्मृतिः संस्कारनिरपेक्षत्वादिति साक्षात्त्वसिद्धौ चक्षुरादीनां तद्ग्राहकत्वेऽन्धादिभिः अग्रहापत्त्या बाह्येन्द्रियग्राह्यत्व आत्मगुणत्वाभावापत्त्या चेन्द्रियान्तरं मनः सिध्यतीत्यर्थः । ज्ञानाद्यस-मवायिकारणसंयोगाधारतया च मनःसिद्धिः । न च शरीरात्मसं-योगः त्वगात्मसंयोगो वा तथा, सर्वशरीरव्यापकसुखाद्यनुपपत्तेः । न च यावद्दूरं चन्दनादिसम्बन्धः तावद्दूरं सुखादि जायते इति वाच्यम्। विभुविशेषगुणस्यासमवायिकारणव्यापकत्वनियमादिति भावः ।

गुणानाह तस्येति । परत्वापरत्वे दिक्कृते संस्कारस्तु वेगाख्य इ-त्यर्थः । अजन्यतया कालकृतस्याभावात् । भावनास्थितिस्थापक-योश्च तत्राभावाद् भावनाया ज्ञानसमानाधिकरणत्वात् । धनुरादि-वत् संकोचविकाशयोरभावेन स्थितिस्थापकाभावादिति भावः । तत्र मनसः पृथिव्यादिवत् नानात्वमित्याह प्रयत्नेति । प्रतिशरीरं मनसो भिन्नभिन्नतया नानात्वं सिद्ध्यति । तच्च प्रयत्नज्ञानयोरयौ-गपद्यात् नानाशरीरेषु युगपज्ज्ञानादीनि जायन्ते । तच्चाणु मनः सकल-शरीरेष्वेकत्वे न संभवति क्रमाधिष्ठानादित्यर्थः । आङा च यौगपद्य-स्य प्रामाणिकत्वं द्योत्यते प्रकृते तस्यैवार्थस्योपयोगात् । अर्थान्तरा-स्या(?)प्युपसर्गद्योत्यत्वादिति भावः । यद्वा प्रयत्नज्ञानयोरयौगप-द्यात् प्रतिशरीरमेकत्वं न त्वनेकत्वमेवेति भाष्याशयः । सूत्रे प्रयत्न-ज्ञानयोरयौगपद्यमुक्तं तेन प्रतिशरीरं परमेकत्वं सिद्ध्यति न त्वनेक-त्वमेवेत्यभिप्रायः । किरणावल्यां तु प्रतिशरीरं नाना मनांसि न स-न्तीति परतया भाष्यं व्याख्यातम्, तदेकदेशिदर्शनेन प्रतिशरीरमेक-मनेकं वेति विचारस्य सांप्रतमप्रस्तुतत्वात् आत्मादिन्यायेन प्रस्तु-तत्वादिति दिक् ।

संख्याव्यापकत्वात्तदनुरूपपृथक्त्वमपि सिद्ध्यतीत्याह पृथक्त्व-मिति । तदिति सूत्रे मनसो वैभवाभावो भावितः तेनाणुत्वं सिद्ध्य-तीत्यर्थः। यद्यपि वैभवाभावेऽणुता स्तंभकुम्भप्रभृतौ व्यभिचरति, त-थापि मध्यमपरिमाणवत्तायां शून्यतायामापतन्त्यां निस्पर्शत्वव्यापको-पेऽणुतदभावा(?) वैभवाभावयोरणुपरिमाण एव विश्राम इति भावः ।

ननु भवतु मनसो नाभसो न्यायः तथा चैकत्वं विभुत्वं च नभसः कर्णशष्कुल्यवच्छिन्नस्य शरीरावच्छिन्नस्येन्द्रियत्वम् । किञ्च

मनो विभु स्पर्शशून्यद्रव्यत्वादात्मवत्, नित्येन्द्रियत्वात् श्रोत्रवत्, सति चैकत्वे लाघवमपि, अन्यथा मनसोऽपि नानात्वं दुर्निवारम् । एकेनैव तेनोपपत्तौ न नानात्वमिति । न च मनसः शरीरव्यापकस्येन्द्रियत्वे युगपत्सर्वेन्द्रियसन्निकर्षे दीर्घशष्कुलीं भक्षयतो युगपत्पञ्च ज्ञानानि स्युरिति वाच्यम् । एकं करणमेकदैकमेव ज्ञानं जनयतीति कारणस्वभावात् । न च पञ्चज्ञानानि मा भवन्तु पञ्चानां ज्ञानं तु समूहालम्बनवत् किं न स्यात् इति वाच्यम् । जातिसाङ्कर्यभयेन तादृशो ज्ञानस्याभावादसतश्च शिल्पिसहस्रेणापि निष्पादयितुमशक्यत्वात् । न च पञ्चज्ञानसामग्रीप्रथमोत्पत्तौ तेषां कलहं कस्मादध्यादिति वाच्यम् । रसनाग्रवर्तिनि रसालरसे रसनत्वचोर्मनःसम्बन्धस्य रसस्पर्शसम्बन्धस्य च सत्त्वेन द्वयोः कलहे मध्यस्थस्य पंचानां कलहेऽपि तत्त्वात् । न च व्यासङ्गान्यथानुपपत्त्या कल्प्यमानामन्तःकरणे व्यापकतां परिहृत्याणुतायामेव स्थेमानमासादयति यौगपद्यप्रत्ययस्तु भ्रमः तथा च धर्मिग्राहकमानबाध इति वाच्यम् । सुखसाक्षात्कारणत्वेन मनःसिद्धौ विभुताणुतौदासिन्यात् । अपि च यथा विरुद्धतरसामग्रीसत्त्वे न चित्रो रसो नापि रसद्वयमुत्पद्यते गुणविरोधात् तथा प्रकृतेऽपि न पञ्च ज्ञानानि न वा पञ्चानां ज्ञानमुत्पद्यते इति वाच्यम् । न च शरीरावच्छेदेन मनःसंयोगस्य सुखाद्यसमवायिकारणत्वे सर्वेषां सुखादीनां शरीरव्यापकता स्यादिति वाच्यम् । निमित्तचन्दनादिसंयोगेन तस्य नियमनात् अत एव नियामकाभावे मनोरथिकादिसुखे ज्ञानेच्छाद्वेषेषु च प्रादेशिकत्वमिति निमित्तसंयोगस्यानियामकत्वे भवतोऽणुमात्रदेशतापत्तेः । ननु विभुविशेषगुणेषु निमित्तसंयोगो विकाशको भवतु न संकोचकः, विभुविशेषगुणानामसमवायिकारणत्वनियमादिति चेन्न । तथानियमेऽनुकूलतर्काभावात् । न च नानावच्छेदेन निमित्तसम्बन्धे युगपत्सुखादि जायेतेति वाच्यम् । इष्टापत्तेः । अत एव शिरश्चरणावच्छिन्नयोरातपजलसम्बन्धयोः सतां युगपत्सुखदुःखे उत्पद्येते यौगपद्यानुभवस्य बाधकं विना प्रमात्वात् । न च विभुकार्यासमवायिकरणानि स्वावच्छिन्ने तज्जनकानीति कथं न शरीरावच्छिन्ने सुखाद्युत्पत्तिरिति वाच्यम् । स्वावच्छिन्न एव जनयन्तीऽति नियमे स्वानवच्छिन्ने न जनयन्तीत्यायाति स्वावच्छिन्ने सर्वत्र जनयन्तीत्यत्र तु न किञ्चित् प्रसञ्जकं पश्यामः । मनोऽणुत्वपक्षेऽणुमा-

प्रदेशतापत्तिश्च। स्वावच्छिन्ने जनयन्त्येवेति पक्षे मनोऽणुत्वपक्षे स्वानवच्छिन्ने जनकत्वे किं बाधकम्? स्वावच्छिन्ने जनयन्त्येतावन्मात्रविवक्षायामप्येतदेव दूषणम्। ननु विभुमनःसंयोगस्यासमवायिकारणत्वे व्यापकसुखविलम्बो न तावत् समवायिकारणविलम्बात् समवायिकारणस्यात्मनो व्यापकत्वादसमवायिकारणस्यापि व्यापकत्वे किं विलम्बात् विलम्बः स्यादिति चेन्न। निमित्तचन्दनादिसंयोगविलम्बात् कारणत्वाविशेषेण निमित्तकारणविलम्बेनापि विलम्बात्। ननु विभुविशेषगुणं प्रति यद्यपि मूर्तसंयोग एव समवायिकारणमिति न नियमः शब्दजविभागजयोः शब्दयोर्व्यभिचारात्तथापि संयोगासमवायिकारणके द्रव्यादिसाधारणे तथा नियमः संयोगजशब्दनोदनाजन्यकर्मादिषु तथा दर्शनादिति मनो मूर्तमेवेति चेत्। सहचारदर्शनमात्रेण व्याप्तौ अतिव्याप्तेः। अपि च मनसोऽणुत्वेऽणुमनःसंयोगविलम्बात् तदनवच्छेदेन विलम्बापत्तिः चन्दनसम्बन्धविलम्बेन तदनवच्छेदेन सुखानुत्पत्तिदर्शनादुभयोः कारणत्वाविशेषात्। विभुतायां तु सर्वत्रानुत्पत्तौ निमित्तसंयोगविलम्ब एव प्रयोजकः। किञ्च मनसोऽणुत्वे द्व्यणुकसमवायिकारणतावच्छेदके स्पर्शवत्परमाणुत्वं स्यात्, अन्यथा तु परमाणुत्वमात्रमिति लाघवमिति चेत्।

अत्राहुः। मनसो विभुत्वे ज्ञानसुखाद्यसमवायिकारणमात्ममनःसंयोगो न स्यात् अन्यतरकर्मोभयकर्मकारणाकारणसंयोगानां कारणानामभावात्। न च नित्य एव संयोगः प्रमाणाभावात् विभागस्यापि तथात्वापत्तेश्च। न च शरीरात्मसंयोग एवासमवायिकारणं मनस्तु यदि सुखादिकारणं तदा कालदावात्मसंयुक्तमेव तथेति वाच्यम्। मनसः सुखादिग्राहकेन्द्रियत्वेन सन्निकर्षघटकतया संयोगकल्पनात्। सिद्धे च मूर्तत्वे निरुक्तनयेनाणुतायामेव पर्यवसानात्। एवं च द्व्यणुककारणतावच्छेदके स्पर्शवत्पदप्रक्षेपे गौरवमपि प्रामाणिकमेव पञ्चज्ञानानुत्पादकतायाम्। एवं सति मनोविलम्बस्यैव प्रयोजकत्वे कारणस्वभावकल्पनावैयर्थ्यं च। मनसोऽणुत्वे प्रामाणिके मनःसंयोगः स्वावच्छेदेनैव जनयेदिति तु वक्तुमशक्यमेव निमित्तावच्छेदेन सुखाद्युपलम्भात्। एवं च बुभुत्सावशादेव व्यासङ्गो विभुतैव चास्त्वित्यप्यपास्तम्। अबुभुत्सितेऽपि व्यासङ्गदर्शनात् क्वचित् बुभुत्सायाः एकेन्द्रियादाकृष्येन्द्रियान्तरे मनो·

निवेशकत्वं तदपि मूर्तत्वे एव भवति । न च बुभुत्सा ज्ञानकारणमेव भवत्विति वाच्यम् । मनःसन्निकर्षघटकत्वेनैवोपपत्तौ कारणान्तर- कल्पने मानाभावात् । मनस एकत्वे जात्यभावे मनस्त्वनिर्वचना- नुपपत्तिः । न च संख्यादिषु तद्गुणेष्वेकं तत्रैषां साधारणत्वात् । नाप्यष्टद्रव्यातिरिक्तत्वस्यैवं धर्मिनिर्णयापेक्षत्वात् । नापि दिक्का- लभिन्नत्वे सति विशेषगुणशून्यत्वमिह सिद्धं पूर्वोक्तदोषात् । न च परत्वापरत्वान्यतरेण दिक्कालभेदेऽवधारिते विशेषगुणशून्यत्वे च प्रमाणान्तरादाकालिके ते निराबाध्य प्रकृतक्षणावगतिरिति वाच्यम् । वैभवानुमन्तुर्मनसि तदभावात् । नापि तत्कार्ये संस्कारः क्षमते तस्यापि वेगाख्यस्य विभुनि निराकरणात् । नाप्यात्मभिन्नत्वे सति ज्ञानासमवायिकारणसंयोगाधारत्वमात्मनः संयोगत्वेनास- मवायिकारणतायामात्माश्रयात् । अत एव सुखाद्यनाश्रयत्वगर्भमपि तद्गर्भकभावितमिव । नापि सुखसाक्षात्कारासाधारणकारणत्वं सन्निकर्षवारणाय व्यापारत्वे सति वा तत्त्वं मनस्त्वमिति निर्वा- च्यम् । मनइन्द्रियत्वेन सुखसाक्षात्कारकारणत्वे आत्माश्रयतादुर्वा- रतापत्तेः । तस्मान्मनस्त्वं जातिरिति तदनुरोधेनानेकमनःसिद्धौ निरुक्तलाघवावलम्बनभङ्गे मनसोऽणुतायामेव निष्ठेत्याहुः । तद- सुन्दरम् । मनसो विभुत्वपक्षे परत्वासमवायिकारणसंयोगानाधारत्वे सति विशेषगुणशून्यत्वादेर्मनस्त्वस्य वक्तुं शक्यत्वात् ।

परे तु मनसोऽणुत्वपक्षे मनस्त्वेनैवेन्द्रियत्वमायाति विभुतायां तु नभस इव सोपाधेरिति गौरवमिति निवेदयन्ति । तदप्यचारु । मनस्त्वेनैवेन्द्रियत्वात् तस्य च शरीरावच्छेदेन वृत्तिलाभात्, अत एव व्यापकस्य मनसः यत्र यत्र शरीरावच्छेद उत्पद्यते तत्र तत्र ज्ञानादिजनकत्वं नभस इव कर्णशष्कुल्यवच्छेदोत्पत्तौ यदव- च्छेदेनाधिवांधवन्नभः कर्णशकुल्यावच्छिद्यते तदवच्छेदेन कस्यचि- त्पुण्यपरिपाकेन प्रवातस्याधिकारीति सम्भाव्यते (?) ।

इतरे तु मनसोऽणुत्वे यददृष्टाकृष्टं यन्मनः तस्य स्वरूपादि गृह्णा- तीति घटते एकतायां तु तदसम्भवात् सर्वस्य ग्राहकं मनः स्यात् एकस्यैव सर्वमनस्त्वादिति परिशीलयन्ति ।

तदपि चतुराचतुरस्रम । तददृष्टसहकृतं तत्स्वरूपादि गृह्णातीति कथनसम्भवात्(?) तस्मादत्राहुरित्याद्युक्त्यैव मनसो मूर्तत्वसिद्धिरि-

ति। ननु मनसो मूर्तत्वे द्रव्यारम्भकत्वापत्तिः मूर्तत्वेनैव सामान्यतो द्रव्यारम्भकत्वात् स्पर्शवत्त्वस्य विशेषत्वादिति चेत्। न। मूर्तत्वस्यावच्छिन्नपरिमाणवत्त्वरूपतया तदपेक्षया स्पर्शवत्त्वस्य लघुत्वात्। अत एव परमाणुत्वमपि नारम्भकतावच्छेदकं गौरवात्। ननु स्पर्शवत्त्वेन नारम्भकताऽल्पावयविनि तदापत्तेः, किन्तु स्पर्शवत्परमाणुत्वेन तथा च परमाणुत्वमेव लघ्विति चेन्न। मनसः पूर्वोक्तेन नयेन परमाणुत्वसिद्ध्या तदारम्भकार्यानुपलब्ध्या गुरोरपि स्पर्शवत्परमाणुत्वस्यावच्छेदकत्वात् द्रव्यारम्भो हि शरीरेन्द्रियविषयभावेन तन्न मनसारब्धशरीरं लोकवेदयोर्मानसशरीराप्रसिद्धेः। अत एव नेन्द्रियविषयावपि तस्मात् प्रतिशरीरमेकमखण्डं च मन इति सिद्धमिति मनीषिणः।

परे तु प्रतिशरीरमणुमनसः पञ्चकं सर्वेषामेकेन्द्रियसम्बन्धे व्यासङ्गः सर्वेन्द्रियसम्बन्धे तु युगपज्ज्ञानानीति वदन्ति। तन्न। दीर्घशष्कुलीभक्षणादौ यौगपद्यप्रत्ययस्य मनस आशुसञ्चरितत्वेन क्रमस्यालक्ष्यतया भ्रान्तत्वेनैवोपपत्तौ मनःपञ्चककल्पनायां गौरवात्। ईदृशि स्थले युक्त्यैव बाधात् यौक्तिकबाधस्यापि बाधात्। अन्यथा नीलं तमः इति बाधस्य भ्रान्तत्वापत्तेः।

शरीरसमानपरिमाणं मन इत्येके। सङ्कोचविकाशशालि अवयविमनःसङ्कोचदशायां व्यासङ्गो विकाशदशायां यौगपद्यम्। तौ चादृष्टवशात् उद्भूतसाधनावित्यपरे। तदपि न गौरवग्रासादेवेति। बुभुत्सायां च सङ्कोचकत्वे जागराद्यज्ञानमेकविषयकं न स्यात् तदानीं बुभुत्सायाः सङ्कोचिकाया अभावात्। पूर्वमेकबुभुत्सायां सङ्कुचितान्मनस एकविषयकाज्जागराद्यज्ञानमिति चेत्। सुषुप्तिपूर्वकालमेकबुभुत्साया आवश्यकत्वाभावात्।

अन्ये तु मनसो वैभवे जागरस्वप्नसुषुप्तयो न स्युः जागरस्वप्नयोर्नाडीविशेषसम्बन्धस्य प्रयोजकत्वात् सुषुप्तौ सकलशरीरासम्बन्धस्य प्रयोजकत्वात्, अत एव यदा मनस्त्वचमपि परिहृत्य पुरीतति वर्तते तदा सुषुप्तिरिति प्रामाणिकानां प्रवादः। तन्न मनसो वैभवे सुषुप्तिर्न स्यादेव त्रैलोक्यसम्बन्धस्य शरीरासम्बन्धस्यासम्भावितत्वात् जागरस्वप्नौ तु सर्वदोभयनाडीसम्बन्धे सर्वदा स्याताम्। ननु अदृष्टविशेषादेव जागरस्वप्नसुषुप्तयः सृष्टिसंहा-

राविव तस्य जगत्कारणस्य तेष्वावश्यकत्वात् कार्यवैचित्र्येण तद्वैचित्र्यस्यापि प्रामाणिकत्वादिति चेन्न। अदृष्टयौगपद्येन तृतीयायौगपद्यप्रसङ्गात् । यदा यत्सहकारि समवहितं भवति तदा तदा तत्सूते इति चेत् । सहकारिणो मनःसम्बन्धासम्बन्धरूपस्यैव विवक्षितविवेकबललभ्यत्वात् । तस्मात् जागरादिनिर्वाहकतया मनोऽणुत्वमित्याहुः।

ननु मनसोऽणुत्वे बहुभिः युगपदुच्चार्यमाणेषु नानावर्णेषु कथं बुभुत्सितस्यैव ग्रहणम् ? बुभुत्सैवेतरग्रहप्रतिबन्धिकेति चेत् । घटबुभुत्सायां लोचनोन्मीलने घटाग्रहप्रसङ्गात् ।श्रोत्रमनःसंयोगे कश्चिद् विशेषो बुभुत्साप्रयोज्यो बुभुत्सितग्रहप्रतिबन्धकास्तित्युतीति चेत् । न । संयोगेऽपि तथात्वापत्तेः। भिन्नभिन्नावच्छेदेन श्रवसि नानावर्णा उत्पद्यन्ते तथाच बुभुत्साया बुभुत्सितशब्दावच्छेदेन मनो योज्यते इति स एव गृह्यते इति चेत्। भिन्नावच्छेदेन शब्दोत्पत्तौ मानाभावात् , तथानियम एकावच्छेदेन नानाशब्दानुत्पत्तौ कोलाहलप्रत्ययो न स्यात् नानावच्छेदनाऽणुमनसा युगपत् सम्बन्धाभावात् । यत्तु बुभुत्सितस्यानुपेक्षाज्ञानमन्येषामुपेक्षाज्ञानमिति । तन्न। इतो न शब्दान्तरमश्रौषमिति प्रत्ययादिति चेत्। ईदृशि स्थले यदि शब्दान्तरग्रहो न भवति तदा बुभुत्सैव इतरग्रहप्रतिबन्धिका तद्ग्रहहेतुश्च । यदि च कोलाहलत्वेनेतरे परिच्छिद्यन्ते तदा तद्गतकत्वादिग्रहे सापि प्रतिबन्धकेति । नानाशब्दग्रहे श्रोत्रस्य कोलाहलत्वेनैव सामर्थ्यं तत्स्थले एकस्य विशिष्य ग्रहे तु बुभुत्सा शरणमिति तुच्छम्। एकगीयमानापेक्षया नानागीयमाने विष्णुयशसि सुखोत्कर्षोदयात् तत्र दृष्टहेतोर्नानागीयमानग्रहस्यैव तन्त्रत्वात् , तस्मात् सामर्थ्येऽपि विशिष्य वा स्वरूपेण वा बुभुत्साप्रतिबन्धादेव न ग्रहः। एकदा नानाबुभुत्सा तु न विशेषपरिचायिका तथानुपलब्धेः। नन्वेवं दीर्घशष्कुलीभक्षणादौ कथं रूपरसगन्धस्पर्शशब्दान् प्रत्येमीति अनुव्यवसायः ज्ञानानां युगपदनवस्थितया मनःसन्निकर्षासम्भवेन समूहालम्बनासम्भवादिति चेन्न । क्रमिकानुव्यवसायेष्वेव एकत्वारोपात् क्रमिकानुव्यवसायाहितसंस्कारप्रभवसमूहालम्बनस्मृतावनुभवत्वारोपाद्वा तथा प्रत्ययोपपत्तेः। ननु सुखादौ मा-

स्त्वसमवायिकारणानुरोधो निमित्तचन्दनाद्यनुरोधनिरीक्षणात् प्रयत्ने तु अनुरोध्यान्तरवन्ध्ये स स्यादेव, तथा चाऽणुमनःप्रदेशात् प्रयत्नात् कथं कदाचिच्छरीरावच्छेदेन क्रिया कदाचिदेकावयवावच्छेदेन कदाचिन्नृत्यादिस्थले नानावयवावच्छेदेन क्रिया, अन्यथा यावत् क्रिया तावदेकत्र नृत्यविशेषदर्शनाभावे सुखविशेषानुदयप्रसङ्गो युगपत् क्रमिकक्रियाणामनवस्थितया सन्निकर्षाभावेन प्रत्यक्षासम्भवादिति चेन्न। तत्र चन्दनादिसम्बन्धस्यैवात्र चिकीर्षाया नियामकत्वात् तथा च यत्क्रियायामिच्छाऽणुमात्रदेशादपि प्रयत्नात् तत्र क्रियोत्पत्तिः प्रयत्नोत्पत्तावेव वा चिकीर्षा, तथा च यत्क्रियायाश्चिकीर्षा तदवच्छेदेनैव प्रयत्नो जायते नैकावयवावच्छेदेन क्रियेच्छा(?) त्वनेके प्रयत्ना युगपदुत्पाद्यन्ते अनन्यगतया तथैव कल्पनादिति। ननु मनसोऽणुत्वेऽपि युगपद्रसनत्वचोः सम्बन्धविषययोः सम्बन्धे केन प्राथमिकं ज्ञानमिति चेन्न। यस्मिन् विषयसम्बन्धावच्छेदेन मनःसम्बन्धः तेन ज्ञानजननात् उभयोस्तथा सम्बन्धे तु नैकमपि ज्ञानं परस्परप्रतिबन्धात् अनन्यगत्याऽस्यार्थस्य कल्पनात्। समूहालम्बनस्थले तु एकेन्द्रियजन्यतया न परस्परप्रतिबन्धः। न च पञ्चावधानानां ज्ञाने का गतिः तत्रापि कल्पनात् बुभुत्सावशात् युगपद्विषयसम्बन्धेन्द्रिययोर्मनःसम्बन्धे शब्दस्थल एव व्यवस्थेति केचित्। अदृष्टवशादित्यपरे। तस्मान्मनोऽण्वेव, बुभुत्सा तु तीव्रविषयसम्बन्ध इव मनःसंयोगजनिका न तु साक्षाद्यासङ्गोपपादिका तस्या एकज्ञानजनकत्वापरप्रतिबन्धत्वकल्पने गौरवादिति। ननु मनसोऽणुत्वे द्वित्रिच्छिन्नासु गृहगोधासु कथं प्रतिशकलश्चेष्टा मनस एकत्र क्वापि सत्त्वादिति चेत्। खड्गाभिघातजकर्मवेगादेव तदुपपत्तेरित्येके। तन्न चेष्टात्वव्याकोपात् प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाया एव चेष्टात्वादवच्छेदकदशायाम् सर्वावच्छेदेनोत्पन्नात्प्रयत्नादेव चेष्टा मनोऽन्तराद्वा तदुत्पत्तिरित्याचार्याः इति सङ्क्षेपः।

अपसर्पणेति। अपसर्पणमुपसर्पणं पूर्वशरीरविभागोत्तरशरीरप्राप्तिहेतुर्मनःकर्म तत्प्रतिपादकात् सूत्रात शब्दत एव संयोगविभागौ सिद्धौ कर्मबलात् अपि च सिध्यतः कर्मणस्तदजनकत्वे स्वरूपव्याघातादित्यर्थः। परत्वापरत्वसंस्कारेषु प्रमाणमाह मूर्तत्वादिति। संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वयोरवच्छिन्नपरिमाणतया सम्भवेन भगव-

त्प्रभृतेरशेषविशेषशेमुषीशालिमस्तज्ज्ञानशालिनोऽपि तज्ज्ञानसद्भावेन मूर्ततया तद्वैभवो यथा दशादिक्संयोगसत्वेनासमवायिकारणविलम्बाभावेन मूर्तत्वेनैव तद्योग्यतावच्छेदेन समवायिकारणस्याविच्छुतत्वेन परत्वापरत्वमूर्तत्वाकृष्टकर्मवत्त्वेन च कारणसत्त्वात् संस्कारवत्त्वेत्यर्थः । ननु मनसारब्धं द्रव्यं शरीरादिषु किमित्यत आह अस्पर्शवत्त्वादिति । स्पर्शवत एव द्रव्यारम्भकतया तदारब्धद्रव्यमेव नास्तीत्यर्थः । व्यासङ्गोपपादकतया क्रियावत्त्वं ततश्च मूर्तत्वमित्याह क्रियात्वादिति । मनसो ज्ञानवत्त्व आत्मत्वापत्त्या एकत्र शरीर आत्मद्वयाधिष्ठितत्वापत्तिरित्याह साधारणेति । नन्वचेतनत्वे परार्थत्वं तत्कथं मनस इत्यत आह कारणेति । पूर्वन्यायेन गुणवत्त्वसिद्धेः प्रयोजनमाह गुणवत्त्वादिति । ननु मनसोऽणुत्वे रूपादिप्रत्ययायौगपद्याद्यभिमानो न स्यात् संभ्रम इति चेत् । गतिक्रमेण मनसेन्द्रियान्तराधिष्ठान एकप्रत्ययानन्तरं विलम्बेन प्रत्ययोत्पत्तौ विशेषदर्शनेन भ्रमासम्भवात् । न चाशुगतेः क्रमो न लक्ष्यते इति वाच्यम् । गुरुद्रव्यादीनां तत्कारणानामभावात् अत आह प्रयत्नेति । इच्छानुविधायिनि मनःकर्मणि प्रयत्नवदात्मसंयोगः कारणं क्वचिददृष्टवदात्मसंयोगो यथा सुषुप्त्यनन्तरभाविज्ञानप्रयोजक इत्यर्थः । इतिशब्दः शास्त्रार्थपूर्णतायामियतैव गुणादिनिरूपणस्याप्यर्थतः प्राप्तेः । अग्रे प्रपञ्चमात्रार्थत्वादिति दिक् ।

भाष्याम्भोनिधिसेतौ वीरवरीये यशो हेतौ ।
चरमो लक्षणभागो रचितः श्रीपद्मनाभेन ॥ १ ॥
अमुना तृणीकृता वयमन्यवदान्याद्विशिष्टेन ।
प्रत्युपकारधियाऽयं रचितो ग्रन्थस्ततोऽस्माभिः ॥ २ ॥
यथा निष्ठाधीतं मुनिमतमिदं तातचरणै-
स्तथा भ्रातुर्नात्र प्रभवति विशेषं गुरुरपि ।
अनुच्छिष्टं यच्चेदिह हि परविद्वद्वरधिया
तदास्वाद्यास्वाद्य भवत कृतिनस्तर्ककृतिनः ॥

इति श्रीमदखिलभूचक्रशकार्कबलसुत्राणप्रतापतपनवर्धमानशोभातिशययशोराजिजीवमहाराजाधिराजश्रीविरिवरीये मिश्रश्रीजगद्गुरुबलभद्रात्मजविजयश्रीगर्भसम्भवविश्वनाथानुजसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यमिश्रश्रीपद्मनाभकृतौ वैशेषिकसेतौ तृतीयः परीवादः सम्पूर्णः ॥

(व्यो०) इदानीं मनसो लक्षणपरीक्षार्थं मनस्त्वयोगान्मन इत्यादि प्रकरणम् ।

मनस्त्वेन योगो मनस्त्वोपलक्षितः समवायो लक्षणमिति । तथाहि-मन इतरस्माद्भिद्यते मनस्त्वयोगाद्यस्त्वितरस्माद् मनसो न भिद्यते, न चासौ मनस्त्वेन युक्तो यथा क्षित्यादिरिति । व्यवहारो वा साध्यः । शेषं लक्षणस्य दूषणप्रतिसमाधानं पूर्ववत् ज्ञेयम् । तथा शब्दार्थनिरूपणपरं चेति । अथ प्रत्यक्षेणानुपलब्धेर्मनसः सद्भावे किं प्रमाणमनुमानमित्याह सत्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखदुःखानामभूत्वोत्पत्तिदर्शनादिति । तथा ह्यात्मा सर्वगतत्वादेव सर्वैरिन्द्रियैः सम्बद्धः । इन्द्रियाणि तु स्वविषयैरिति । तथापि न युगपद्रूपादिज्ञानान्युत्पद्यन्त इति कारणान्तरमनुमीयते। अथेन्द्रियाणां स्वविषयैः संबन्धः कथं ज्ञायते ? अनुमानात्, तथाहि-घ्राणं स्वव्याप्तसंयोगितासंयुक्तं तत्संयुक्तव्यापकत्वाद्यो यः संयुक्तव्यापकः स स्वव्याप्तसंयोगिसंयुज्यमानो दृष्टः । यथा वीरणसंयुक्ततन्तुव्यापकः पटो वीरणेन संयुक्त इति । स्थानसंयुक्तं वा कर्पूरादिद्रव्यं स्वसंयुक्तव्यापिना संयुज्यते तद्व्याप्तसंयोगित्वात्, यो यद्व्याप्तसंयोगी स स्वसंयुक्तव्यापिना संयुज्यमानो दृष्टो यथा पटव्याप्ततन्तुसंयोगि वीरणं पटेन संयुज्यमानमिति । एवं रसनेन्द्रियं स्वव्याप्तसंयोगिना संयुक्तं तत्संयुक्तव्यापकत्वात् वीरणसंयुक्ततन्तुव्यापकपटवत् । स्थानसंयुक्तं वा द्रव्यं स्वसंयुक्तव्यापिना संयुज्यते तन्तुव्याप्तसंयोगित्वाद्वीरणादिवत् इति । एवं शेषेष्वपीति । गीतध्वनिस्तु संनिहितस्य तच्छ्रवणसाकल्येन श्रोत्रसम्बन्ध एव यद्येतावत् कारणं ज्ञानसुखदुःखानां तत्सद्भावेऽनुत्पत्तिर्न स्यात् । नहि साकल्येपि कार्यस्यानुत्पत्तिर्दृष्टेति । तस्मादेषां सद्भावेपि कार्यस्य पूर्वमभूत्वा पश्चादुत्पत्तिदर्शनात् कारणान्तरमनुमीयते यस्य सद्भावाभावाभ्यां कार्यस्योत्पत्त्यनुत्पत्ती । अथादृष्टोऽस्यामेव कारणं भविष्यतीति न, श्रोत्रादीनामप्यभावप्रसङ्गात् । तस्यापि चेदानीं तत्साधनस्याननुष्ठानाद्विरोत्पादे स एव दोषः । तदेवमात्मेन्द्रियार्थाः कारणान्तरापेक्षाः सद्भावेऽप्यनुत्पाद्योत्पादकत्वात् । ये हि सद्भावेपि कार्यमनुत्पाद्य पश्चादुत्पादयन्ति ते सापेक्षाः यथा तन्त्वादयः अन्त्यतन्तुसंयोगापेक्षा इति ।

अन्ये त्वात्मा क्रमवत्कारणापेक्ष इतरसाकल्येपि क्रमेण कार्य-

जनकत्वात् । यो हीतरकारणसाकल्येपि क्रमेण कार्यं करोति स क्रमवत्कारणापेक्षो यथाऽनेकशिल्पाभिज्ञः पुरुष इति । चक्षुरादयो वा क्रमवत्कारणापेक्षाः सद्भावेपि क्रमेण कार्यजनकत्वात्। यो हि विद्यमानः क्रमेण कार्यङ्करोति सोऽवश्यं क्रमवत्कारणमपेक्षते । यथा वासीकर्त्तर्यादि हस्तमित्यनुमानं भवते । तथात्मेन्द्रियार्थसांनिध्येपि क्रमेणैव कार्यङ्करोतीति दृष्टम् । एवं चक्षुरादयोऽप्यात्मनाधिष्ठिता विषयसम्बन्धक्रमेणैव कार्यं कुर्वन्तीति क्रमवत्कारणमपेक्षन्ते । तथा श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् अस्ति कारणान्तरम् । तथाहि—स्मृतिः करणजन्या क्रियात्वात् छिदिक्रियावत् । न च श्रोत्राद्येव करणम् , तदव्यापारेऽपि स्मृत्युत्पत्तिदर्शनात्,यद्यदव्यापारेप्युत्पद्यते तत्तस्य कार्यं न भवत्येव, यथा विनष्टेषु तन्तुषु उत्पद्यमानो घट इति । स्मृतिस्तु बधिरादीनां श्रोत्राद्यव्यापारे ऽप्युत्पद्यत इति न तत्कार्या । अतः करणान्तरेण भवितव्यम् । तथा बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तरसद्भावाच्च करणान्तरमस्ति । तथा सुखादयः करणपरिच्छेद्याः ग्राह्यत्वाद्रूपादिवत् । न च चक्षुराद्येव करणम् । बाह्येन्द्रियैरगृहीतस्य सुखादेर्ग्राह्यान्तरस्य सद्भावादित्यभिधानात् । यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणमनुमीयते । ताभ्यां च रसस्यापरिच्छेदाद्रसनानुमानम् । तैश्च स्पर्शस्य तथा शब्दस्य चेति करणान्तरानुमानमिति । तद्वत् बाह्येन्द्रियैः सुखादयो न गृह्यन्त इति तत्परिच्छेदकं मनोऽनुमीयते ।

सिद्धे च मनःसद्भावे द्रव्यत्वसमवायिकारणत्वप्रतिपादनार्थं तस्य गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा इति वाक्यम् । द्रव्यत्वादेव संख्यासद्भावसिद्धौ किमेकमनेकञ्चेति संशये तन्निरासार्थमाह प्रयत्नज्ञानायौगपद्यवचनात्प्रतिशरीरमेकत्वं सिद्धम् इति। प्रयत्नायौगपद्यात् ज्ञानायौगपद्यवचनाच्च प्रतिशरीरमेकं मन इति सूत्रं दर्शयति । असमासकरणं चात्र सुखदुःखाद्यायौगपद्यावरोधार्थम् । सूत्रार्थस्तु नैकमनेकस्मिञ्छरीरे नाप्येकस्मिन्ननेकं वा मनः। किन्तर्हि ? प्रतिशरीरमेकम् । कुतः ? प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्च । यदि पुनरेकं स्यात् व्यापकं मनः सर्वेन्द्रियाणां तदधिष्ठितत्वाद्युगपद्रूपादिज्ञानान्युत्पद्येरन् प्रयत्नाश्चेति। न चैवं दृष्टम् । अथ दीर्घशष्कुलीं भक्षयतः कपिलब्राह्मणो युगपत् पञ्च ज्ञानान्युत्पद्यन्ते,

तथाऽध्यापकस्य युगपद्वाक्योच्चारणगमनमार्गान्वेषणकमण्डलुधारणेषु प्रयत्ना उत्पद्यन्ते इत्यपि सिद्धम्। तन्न। यौगपद्ये प्रसिद्धोदाहरणाभावात्। उत्पलपत्रशतव्यतिभेदाभिमानवदाशुभावित्वेन यौगपद्याभिमानो द्रष्टव्यः। क्रमे त्वनेकं प्रसिद्धमुदाहरणमस्ति। तस्मादणुपरिमाणस्य मनसः क्रमेणेन्द्रियसम्बन्धात् क्रमेणैव ज्ञानानि भवन्तीति युक्तम्। अणुपरिमाणस्याप्येकस्मिन् छरीरे ऽनेकत्वाभ्युपगमे किञ्चिदिन्द्रियं केनचिन्मनसाधिष्ठितमिति ज्ञानयौगपद्यमेव स्यात्। क्रमेण तु ज्ञानान्युत्पद्यमानानि संवेद्यन्त इति प्रतिशरीरमणुपरिमाणमेकं मनः। न चैवमपि मनसा चक्षुरधिष्ठितमनेकार्थसम्बद्धं युगपद्ज्ञानान्युत्पादयेत्। नैतदेवम्। एकस्य करणस्यैकक्रियानिर्वृत्तौ सामर्थ्योपलब्धेः। न ह्येकं करणमेकस्मिन् काले ऽनेकां क्रियां कुर्वद्दृष्टम् इति। अथ कुठाराभिघातादनेकतृणेषु युगपदनेकक्रियोपलब्धेरयुक्तमेतत्। न, बोधात्मकत्वेन विशेषितत्वात्। यद्वा कुठारावयवानां करणत्वं यथा तीक्ष्णोऽवयवी तृणैः सम्बद्धः तथा तदवयवास्तैः सम्बद्धा एवेति। करणबहुत्वाद्युक्तं क्रियायौगपद्यमभिघातास्तु करणानीत्यन्ये। तथाहि कुठारस्य तृणैः सम्बन्धा वेगापेक्षाः परस्परं विभिन्ना एव। नैतद्युक्तम्। कर्मणा सम्बद्धस्यैव कुठारस्य करणत्वात्। अन्यथा हि चक्षुषोपि सम्बन्धिभेदात्सम्बन्धभेदोपपत्तेस्तेषामपि करणत्वेन चक्षुर्द्वारेण मनसाधिष्ठितत्वात् युगपत् घटादिज्ञानोत्पत्तिप्रसङ्गः। न चैतदस्त्यसंवेदनादिति। तस्मात् युगपत्प्रकाशनमेव घटादीनां न ग्रहणानीति। चक्षुरनेकपदार्थसंबद्धं करणमिति न्याय्यम्। अतः करणस्यैकक्रियानिर्वृत्तौ सामर्थ्यम्। सिद्धे च नानात्वे तदनुविधानात् साहचर्याज्ज्ञानापृथक्त्वं सिध्यत्येव।

तथा तदभाववचनादणुपरिमाणमिति विभवान्महानाकाशस्तथा चात्मा तदभावादणु मन इति (अ०७आ०१सू०२२–२३) सूत्रे दर्शयति। तस्य विभुत्वस्याभावादणु मन इति। नन्वेवं घटादावपि विभुत्वस्याभावादणुत्वं स्यात्। न नित्यद्रव्यस्येति विशेषणात्। तथाहि मनोऽणुपरिमाणसम्बन्धि नित्यद्रव्यत्वे सति विभुत्वरहितत्वात्, यद्यन्नित्यद्रव्यत्वे सति विभुत्वरहितं तत्तथा दृष्टम् यथा परमाण्वादिः, तथा चेदं विभुत्वरहितम् तस्मादणुपरिमाणमिति। घटादौ विभुत्वरहित-

त्वेपि नाणुपरिमाणमिति नित्यत्वग्रहणम् । नित्यत्वञ्च गुणादावप्य- स्तीति द्रव्यपदम् ।

तथापसर्पणोपसर्पणवचनात् संयोगविभागाविति । अपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानीति ५अ०२आ०१७ सूत्रम् दर्शयति । अपसर्पणं तु मृतशरीराद्विभागार्थं कर्म । प्रत्यग्रेण शरीरेण संयोगार्थं चोपसर्पणमिति । अशितपीतम्भुक्तमुदकादि तयोर्नाड्यन्तरेण संचरणं कार्यान्तरं शरीरान्तरं तेन संयोगो मनसस्तदर्थं मनःकर्म योगिनामित्येतत् सर्वमदृष्टकारितमित्यपरेणापि सूत्रेण संयोगविभागावुक्तौ । तथा मूर्तत्वात् परत्वापरत्वे तयोर्मूर्त्यनुविधानात् । यत्र हि मूर्तत्वं तत्र तद्दर्शिनः परापरव्यवहारः सम्भवतीति । दिक्कृते तु परत्वापरत्वे मनसि कालकृतयोर्नित्यत्वेनासम्भवात् । कार्यद्रव्यापेक्षया तु तद्दर्शिनः कालकृतं परत्वं मनसि सम्भाव्यत एव । परं मनोऽपरं च कार्यद्रव्यमिति । न चायं नियमः, समानजातीययोरेव परापरव्यवहारस्य दृष्टत्वात् । तथा न परं परत्वापरत्वे संस्कारश्च मूर्तत्वादेव वेगाख्यः । अथ मनः परस्परेण सम्बद्धं किमिति द्रव्यं नारभते समानजातीयमूर्तद्रव्यसम्बन्धस्यान्त्यावयविव्यतिरेकेण द्रव्यारम्भकत्वदर्शनादित्याह अस्पर्शवत्त्वाद्द्रव्यानारम्भकत्वमिति । स्पर्शवतो हि द्रव्यस्य द्रव्यारम्भकत्वदर्शनात् । यथा परमाणूनाम् । न च मनसः स्पर्शवत्त्वे प्रमाणमस्ति, मनस्त्वजातीयस्य स्पर्शवत्कार्यस्यानुपलब्धेः । यथाहि पृथिवीत्वजातीयं स्पर्शवत्कार्यमुपलभ्यमानं तदारम्भकाणामणूनां स्पर्शवत्त्वं ज्ञापयति । नैवं मनस्त्वजातीयं कार्यमस्तीति कथं मनसः स्पर्शवत्त्वम् । तथा स्पर्शवत्त्वे सति शरीरे सञ्चरतो वायोरिव प्रतिस्खलनात् क्वचिदिन्द्रियान्तरेणासम्बन्धादनेककालं रूपादेर्विषयस्याग्रहणमपि स्यात् । न चैतत् सुषुप्त्यवस्थामन्तरेण दृष्टमिति । तस्मादस्पर्शवत्त्वेन द्रव्यानारम्भकत्वमिति अणुपरिमाणव्यवस्थापनात् । सिद्धेपि मूर्तत्वे पुनः साधनमाह क्रियावत्त्वान्मूर्तत्वम, तदनुविधानात् क्रियायाः । सा चेन्द्रियसम्बन्धाद्विज्ञायते । अन्यथा ह्यणुपरिमाणं मनः कथमिन्द्रियान्तरेण सम्बध्यते । पूर्वं मनश्चैतन्यप्रतिषेधेपि पुनर्बाधकमाह साधारणविग्रहवत्त्वप्रसङ्गादज्ञत्वमिति । यदि हि चेतनं मनः स्यादुभयोः साधारणं शरीरमुपभोग्यमिति विरुद्धाभिप्रायत्वात् भोगानुपपत्तिः स्यात् । अथ किं

स्वार्थं परार्थं वेत्याह करणभावात्परार्थमिति। करणं हि वास्यादि परपुरुषार्थसम्पादकं दृष्टम्। तथाच करणं मनः तस्मात् कर्तुरात्मनः पुरुषार्थसंपादकमिति। अथ किं द्रव्यं गुणः कर्म वा मन इत्याह गुणवत्त्वाद्द्रव्यम्, क्षित्यादिवत् गुणास्तूक्ता एव। अथाणुपरिमाणत्वान्मनसः कथं रूपादिज्ञानान्याशूपद्यन्त इत्याह आशुसंचारि। तच्च प्रयत्नादृष्टपरिग्रहवशात् प्रयत्नेन जीवनपूर्वकेणादृष्टविशेषेण च परिग्रहवशादाशुसंचारित्वमिति॥

इति मनः॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसंग्रहटीकायां द्रव्यपदार्थः।

# अथ गुणपदार्थनिरूपणम्।

## (१) साधर्म्यप्रकरणम्।

(व्यो०) (१)इदानीमुद्देशक्रमेणावसरप्राप्तानां गुणानामितरपदार्थ-वैधर्म्येण व्यापकं साधर्म्यं पुनः प्रतिनियतानां च स्वभेदान्तराद् व्यावृत्तिमपि दर्शयन्नाह—

(भा०) **रूपादीनां गुणानां सर्वेषां गुणत्वाभिसम्बन्धो द्रव्याश्रितत्वं निष्क्रियत्वमगुणवत्त्वं च।**

**रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तगुणाः।**

**बुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मभावनाशब्दा अमूर्तगुणाः।**

**संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः।**

रूपादीनां सर्वेषां गुणानां गुणत्वाभिसम्बन्ध इत्यादिप्रकरणम्। गुणत्वेनाभिसम्बन्धस्तदुपलक्षितः समवायः। स च केषाम्? रूपादीनाम्। तथाप्यादिशब्दस्यानियतार्थग्राहकत्वान्न ज्ञायते कियतामतः सर्वेषाम्। उत्क्षेपणाद्यवरोधपरिहारार्थं च गुणानामिति। नन्वेवं सर्वेषां गुणानामित्युक्ते व्यभिचाराभावादवर्थं रूपादीनामिति पदम्। न, आश्रितत्वाविशेषणात् सर्वो गुण इति दर्शनस्य व्यवच्छेदार्थत्वात्। तथाहि—रूपादीनामेव गुणत्वाभिसम्बन्धः साधर्म्यम् नान्येषामिति। न च साङ्ख्याभ्युपगतस्य गुणत्रयस्य व्यवच्छेदार्थं रूपादिग्रहणमिति न्याय्यम्। तस्य प्रमाणानुपलब्धेः। प्रसिद्धं च विशेषणेन व्यवच्छिद्यमानं दृष्टम्, यथा नीलेनानीलमिति। तदेवं रूपादयो इतरस्माद् भिद्यन्ते गुणा इति व्यवहर्तव्या वा गुणत्वाभिसम्बन्धात्, ये तु न भिद्य-

---

(१) अतः परं सूक्तिसेत्वोरवसितत्वाद् व्योमवतीव्याख्यामात्रं मुद्र्यते भाष्यसमाप्तिपर्यन्तम्। सं०।

न्ते न च गुणा इति व्यवह्रियन्ते न ते गुणत्वाभिसम्बद्धा यथा क्षित्यादय इति । शेषं पूर्ववत् । तथा द्रव्याश्रितत्वं च साधर्म्यं रूपादीनाम् । तच्च सावधारणं विवक्षितम् अन्यथा हि द्रव्यादीनामपि द्रव्याश्रितत्वादातिव्यापि साधर्म्यं स्यात् न व्यावृत्तमिति । अवधारणं तु द्रव्येष्वेवाश्रितत्वमेवेति । द्रव्यकर्मविशेषा द्रव्येष्वेवाश्रिताः न चाश्रिता एवेति, सामान्यसमवायौ तु द्रव्येष्वाश्रितौ न तु द्रव्येष्वेव गुणादावपि सद्भावात्, गुणास्तु द्रव्येष्वेवाश्रिताः न गुणादौ, तथाऽऽश्रिता एव द्रव्येषु नानाश्रिताः, निर्गुणस्य द्रव्यस्यानुपलब्धेः । तदेवमयोगान्ययोगव्यवच्छेदेन द्रव्याश्रितत्वादितरेभ्यो भिद्यन्त इति साध्यम् । तथा निर्गता चलनलक्षणाक्रिया येभ्यस्ते निष्क्रियास्तेषां भावो निष्क्रियत्वम् । गुणा विद्यन्ते येषां ते गुणवन्तः तेषां भावो गुणवत्त्वं तत्प्रतिषेधेन चागुणवत्त्वमिति ।

ननु निष्क्रियत्वमगुणवत्त्वं च गुणादीनां पंचानामपीत्युक्तमतो नेदं पदार्थान्तराद्व्यावृत्तं साधर्म्यम् । न च साधर्म्यमात्रेणेह प्रयोजनमस्ति, पूर्वमेव विधानात् । अथ गुणत्वसहचरितं व्यावृत्तं साधर्म्यमेतदिति चेत् । न । असमर्थविशेषणताप्रसङ्गात् । तस्मात्साधर्म्यमात्रमेतदिति । यदि वा द्रव्यपदार्थादेव भेदप्रतिपादनार्थमेतत् । तथाहि–क्रियावत् गुणवच्च द्रव्यं तद्रहिताश्च गुणा इति धर्मभेदात् भिद्यन्ते एव । अथ निष्क्रियत्वमगुणवत्त्वञ्च कथं रूपादीनां द्रव्यस्यैव समवायिकारणत्वेन तदाधाराणामुत्पत्त्यभावात् । अथ रूपादिसमवेतानां रूपादीनामुत्पत्तेर्युक्तं समवायिकारणत्वम् । तन्न । अनुपलब्धेः, यथा हि रूपवद्द्रव्यमिति ज्ञानं नैवं रूपवद्रूपमिति प्रतिभासोऽस्ति । अभ्युपगम्याप्युच्यते । यदि च रूपं रूपोत्पत्तौ समवायिकारणमन्येनासमवायिकारणेन भवितव्यम् । न च कारणरूपमेवासमवायिकारणम्, तस्यापि स्वगतरूपोत्पत्तौ समवायिकारणत्वात्, न च तदेव समवायिकारणमसमवायिकारणं चेति दृष्टम् । नापि संयोगः तस्य द्रव्योत्पत्तावसमवायित्वात् । यदि च तन्तुसंयोगस्तद्रूपोत्पत्तावसमवायिकारणम्, तदुत्पत्तेः पूर्वं न भावस्यादेव न स्यादिति रूपरूपेष्विति(?) संयोगस्य कारणत्वे तदुत्पत्तेः पूर्वमभावो वाच्यः । न चैकस्मादेव रूपाद्रूपान्तरमिति वाच्यम् । एकस्य क्रमयौगपद्याभ्यामारम्भप्रतिषेधात् । अत एव निष्क्रियत्वं मूर्त्यनु-

विधानात् क्रियायाः । सा च गुणेषु न सम्भवति निर्गुणत्वात् । असर्वगतद्रव्यपरिमाणं च मूर्तिरिति । अथाश्रयगतगुणेषु गमनप्रतिभासस्तर्हि कथं मुख्ये बाधकोपपत्तेरुपचारेण, द्रव्ये हि वर्तमानं गमनमेकार्थसमवायितया गुणेष्वारोप्य प्रतिपद्यते गुणा गच्छन्तीति । तदेव निष्क्रियत्वादगुणवत्त्वाच्च द्रव्यादर्थान्तरं रूपमिति। अथार्थान्तरत्वे कथं नियतेन धर्मिणा व्यपदेशः सम्बन्धनियमात् । न च सम्बन्धस्य सम्बन्धान्तरपरिकल्पना सम्बन्धरूपत्वादेवेति वक्ष्यामः समवायपदार्थे ।

अथेदानीं प्रतिनियतानां स्वभेदान्तराद्व्यावृत्तं साधर्म्यं दर्शयति रूपादयो वेगान्ता मूर्तगुणा इति । मूर्तानामेव न त्वेत एव मूर्तानामन्येषामपि तद्गुणत्वात् तथाहि–पृथिव्यादिषु त्रिषु रूपद्रवत्वादयः गुरुत्वरसौ तु द्वयोः स्पर्शश्चतुर्णां गन्धः क्षिताविव रसोऽम्भस्येव परत्वापरत्ववेगास्तु पंचस्वपि मूर्तेष्विति ।

बुद्ध्यादयः शब्दान्तास्त्वमूर्तगुणा इति । अमूर्तानामेव गुणा न त्वेत एव संख्यादीनामपि तद्गुणत्वात् । बुद्ध्यादयो भावनान्ताः पुरुषे शब्दश्चाकाश इति ।

संख्यादयो विभागान्ताः उभयगुणाः उभयेषां मूर्तामूर्तानामेव गुणाः तथैत एवोभयगुणाः ॥

(व्यो०) अथेदानीमेकानेकाश्रितत्वं दर्शयन्नाह—

**(भा० ) संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिताः ।**

**शेषास्त्वेकैकद्रव्यवृत्तयः ।**

**रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिकगुणाः ।**

**संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगा सामान्यगुणाः ।**

संयोगविभागद्विपृथक्त्वादयोऽनेकाश्रिता इत्यादिपदेन त्रित्वादिका परार्धान्ता संख्या तद्विशिष्टं च पृथक्त्वं गृह्यते । अनेकाश्रितत्वं चात्र व्यक्त्यपेक्षया विवक्षितं न जात्यपेक्षया रूपादेरपि तद्-

भावप्रसङ्गात् । यद्यपि रूपत्वादिजातीयमनेकस्मिन्न वर्तते । त-थाप्येकतद्व्यक्तिरेकस्मिन्नेव । न चैवं संयोगादि तद्व्यक्तेरनेकाश्रितत्वो-पलब्धेः ।

शेषास्त्वेकैकद्रव्यवृत्तय इति । उक्तेभ्योऽन्ये शेषास्ते ह्येकैकस्मिन्नेव द्रव्ये वर्तन्ते एका व्यक्तिरेकस्मिन्नेव समवेता तथा रसादिव्यक्तयोऽपि । अवधारणं त्वेषामेकैकद्रव्यवृत्तित्वमेव । नत्वेषामेव उभयवृत्तिनामपि तद्भावात् ।

इदानीं के विशेषगुणाः के च सामान्यगुणा इत्युपदर्शनार्थ-माह—रूपादयः शब्दान्ता वैशेषिकगुणाः । कीदृशमेषां विशेष-गुणत्वम्? यद्येकाश्रितत्वं गुरुत्वादावपि स्यात् । अथैकेन्द्रियग्राह्यत्वं स्नेहद्रवत्वधर्माधर्मादौ न स्यात् । अथासाधारणत्वं तन्नास्ति । रूप-त्वादिजातीयस्यानेकत्रोपलब्धेः । व्यक्तिविवक्षया गुरुत्वादावप्यस्त्ये-व नान्यथा तदुपपत्तेः । तथाहि स्वसमवेतविशेषविशिष्टत्वे सति स्वा-श्रयैकजातीयव्यवच्छेदकत्वाद्विशेषगुणाः । आश्रयमात्रव्यवच्छेदकत्वं न सम्भवतीति स्वाश्रयपदम् । तथापि निर्विशेषणस्य रूपादेर्नाश्रयव्यव-च्छेदकत्वमिति विशेषविशिष्टपदम् । संख्यादयोपि गन्धैकार्थसमवेताः क्षितेर्व्यवच्छेदकाः स्नेहैकार्थसमवेताश्चोदकस्य, तन्निरासाय स्वस-मवेतपदम् । यथाहि रूपे शुक्लत्वादिविशेषणं समवेतं रसे च मधुरत्वा-दि नैवं स्नेहः गन्धो वा संख्यादौ समवेत इति व्यवच्छेदः । तथाप्य-णुपरिमाणं परमाणूनां व्यवच्छेदकमिति स्वाश्रयैकजातीयपदम् । तथाहि—परमाणुपरिमाणं स्वसमवेतविशेषणोपेतम स्वाश्रयस्य परमाणुव्रातस्य चतुर्विधस्य व्यवच्छेदकं नैकजातीयस्येति । एवं परममहत्त्वमपीति । रूपञ्च स्वसमवेतशुक्लत्वाद्यनेकविशेषणोपे-तमेकजातीयायाः क्षितेर्व्यवच्छेदकं नियमेन शुक्लत्वविशिष्टमुदकस्य शुक्लभास्वरं च तेजस इत्यादिविशेषः पूर्वोक्त एव द्रष्टव्यः । त-देवं स्वसमवेतविशेषविशिष्टत्वे सति स्वाश्रयैकजातीयव्यवच्छेद-कत्वाद्विशेषगुणा एव विशेषगुणलक्षणरहितत्वादेत एव सामा-न्यगुणाः ॥

(व्यो०) इदानीमेकानेकेन्द्रियग्राह्यत्वं दर्शयन्नाह—

**(भा०) शब्दस्पर्शरूपरसगन्धा बाह्यैकैकेन्द्रियग्राह्याः ।**

**संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व- द्रवत्वस्नेहवेगा द्वीन्द्रियग्राह्याः ।**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः ।**

**अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्व- गुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः ॥**

शब्दस्पर्शरूपरसगन्धा बाह्येनैकेनेन्द्रियेण गृह्यन्त इति तद्ग्राह्याः। बाह्यग्रहणमन्तःकरणव्यवच्छेदार्थम् । तद्विवक्षया हि द्वीन्द्रियग्राह्यत्वात् । अवधारणं चैत एव नियमेन बाह्यैकैकेन्द्रियग्राह्याः, तथाऽनेकेन्द्रियग्राह्या न भवन्तीति ।

संख्यादयो वेगान्ता द्वीन्द्रियग्राह्या एव । नियमेनैत एव द्वीन्द्रियग्राह्याः । बाह्यग्रहणमन्तःकरणव्यवच्छेदार्थमनुवर्तनीयम् । अथ स्नेहस्य कथं द्वीन्द्रियग्राह्यत्वं त्वग्व्यापारे सति स्निग्धप्रत्ययदर्शनात् । यथाहि चक्षुर्व्यापारेण स्निग्धाः केशाः इति प्रतिभासः तथा स्नानोत्तरकालमपि त्वग्व्यापारेण स्निग्धप्रत्ययो दृष्ट इत्यन्वयव्यतिरेकाभ्यामिन्द्रियग्राह्यत्वं निश्चीयते । अथ किमयमाप्यः पार्थिवो वेति विचारयिष्यामः स्नेहपरीक्षायाम् ।

बुद्ध्यादयः प्रयत्नान्तास्त्वन्तःकरणेनैव गृह्यन्त इति तद्ग्राह्याः। गुरुत्वधर्माधर्मभावना ह्यतीन्द्रिया एव इन्द्रियाण्यतीत्य वर्तन्ते तद्ग्राह्या न भवन्तीति । यथा च गुरुत्वमप्रत्यक्षं तथा वक्ष्यामस्तत्परीक्षायाम् ।

अपाकजरूपादिवेगान्ताः कारणगुणपूर्वका इति । अपाकजग्रहणं पार्थिवपरमाणुरूपादिव्यवच्छेदार्थम् । ननु तेऽपि कारणगुणपूर्वा भवन्त्येव, तथाहि—कारणं परमाणुस्तद्गुणः पार्थिवपरमाण्वग्निसंयोगः तत्पूर्वा रूपादय इति कथं न कारणगुणपूर्वकाः । तन्न, अभिप्रायापरिज्ञानात् । तथाचायमभिप्रायः । समवायिकारणेष्वेव गुणाः कारणगुणास्ते पूर्वं कारणं येषां कार्यगुणानां तेऽत्र कारणगुणपूर्वकाः विवक्षिताः । न चैवं पाकजा इति व्यवच्छिद्यन्ते । अथ सलिलादिपरमाणुरूपादयः पाकजत्वाभावेपि न कारणगुणपूर्वका इति । तन्न । पर्युदासप्रतिषेधस्य विवक्षितत्वात् । तथाहि-पाकाज्जाताः

पाकजास्तत्प्रतिषेधेनान्यगुणपूर्वकत्वं लभ्यत इति नित्यानां व्य-वच्छेदः। नन्वेवमपि व्यर्थमपाकजग्रहणम्, एते कारणगुणपूर्वा एवेत्यवधारणासम्भवात्। तथाहि—द्रवत्ववेगावकारणगुणपूर्वका-वपीति। न, स्पष्टार्थत्वादेत एव कारणगुणपूर्वा न त्वेते कारणगुणपूर्वा-एवेत्यवधारणमबुध्यमानस्य पाकजदोषाशङ्का स्यादिति स्पष्टार्थमपा-कजग्रहणम्। अत्र चैकत्वैकपृथक्त्वग्रहणं द्वित्वद्विपृथक्त्वादिव्यवच्छे-दार्थम्। ते ह्यकारणगुणपूर्वका इति॥

(भा०) बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभाव-नाशब्दा अकारणगुणपूर्वकाः॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्द-तूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्व-पाकजाः संयोगजाः॥

संयोगविभागवेगाः कर्मजाः॥

शब्दोत्तरविभागौ विभागजौ॥

(व्यो०) बुद्ध्यादयः शब्दान्तास्त्वकारणगुणपूर्वका एव समवायि-गुणपूर्वकाः कार्यगुणा न भवन्तीति। न त्वेत एव संयोगविभागपर-त्वापरत्वद्वित्वद्विपृथक्त्वादीनामप्यकारणगुणपूर्वकत्वात्। अथाका-रणगुणपूर्वकत्वाविशेषेऽप्यस्मिन् वाक्ये संयोगादीनामवचने किं प्रयोजनमिति चिन्त्यम्। अथापाकजरूपादिवेगान्तानामेव कार-णगुणपूर्वकत्वाभिधानाच्छेषाणामकारणपूर्वकत्वं विज्ञायते। एवं तर्हि बुद्ध्यादयोऽपि नाभिधेयाः। शेषाणामकारणगुणपूर्वकत्वमिति वा-ऽभिधेयम्। सकलभेदसङ्ग्राहकं वाक्यमलं बुद्ध्यादिविशेषाभिधाने-नेति। नैतदेवम्। विशेषवचनं स्पष्टार्थमनेकधा शास्त्राभिहितमि-त्यन्तेवासिनामृज्वर्थपरिज्ञानमेव स्यादित्यूहशक्तेः सम्वर्धनार्थम्—संयोगादीनां स्वशब्देनावचनम्। अन्ये त्वेकवृत्तीनामेव विशेषणगु-णानामत्राभिधानं विवक्षितमिति मन्यन्ते। तत्तु न बुद्ध्यामहे। दूष-णस्याप्रतिसमाधानात्।

तथा बुद्ध्यादयः पाकजान्ताः संयोगजाः इत्यत्र बुद्ध्या-दयो भावनान्ताः पुरुषान्तःकरणसंयोगादुत्पद्यन्ते। शब्दश्च

भेर्याकाशसंयोगात्तूलपरिमाणं च प्रचयादुत्तरसंयोगः सूत्रपाठापेक्षया संयोगजसंयोगो नैमित्तिकद्रवत्वमग्निसंयोगात् परत्वापरत्वे तु दिक्कालपिण्डसंयोगात् पाकजा इति । पार्थिवपरमाणुरूपादयः तेऽप्यग्निसंयोगजा इत्येते एव संयोगजा न त्वेते संयोगजा एव । तथाहि—शब्दो विभागजः शब्दजोऽप्यस्तीति ।

संयोगविभागवेगाः कर्मभ्यो जाताः कर्मजा इत्येते एव । न त्वेते कर्मजा एव । तथाहि--संयोगः संयोगादुत्पद्यते विभागश्च विभागात् वेगो वेगादपीति ।

शब्दोत्तरविभागौ विभागाज्जातौ विभागजाविति । एतावेव विभागजौ न त्वेतौ विभागजावेव । तथाच शब्दः संयोगजः शब्दजोऽप्यस्तीति उत्तरविभागश्च सूत्रपाठापेक्षया विभागज एव परिगृह्यते ॥

( व्यो० ) इदानीं के बुद्ध्यपेक्षाः के च समानजात्यारम्भका इत्युपदर्शयति—

**( भा० ) परत्वापरत्वद्वित्वद्विपृथक्त्वादयो बुद्ध्यपेक्षाः ।**

**रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाः समानजात्यारम्भकाः ।**

**सुखदुःखेच्छाद्वेषप्रयत्नाश्चासमानजात्यारम्भकाः ॥**

**संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः समानासमानजात्यारम्भकाः ॥**

परत्वापरत्वद्वित्वपृथक्त्वादयो बुद्धिमपेक्षन्ते स्वोत्पत्ताविति बुद्ध्यपेक्षा इति । आदिपदेन त्रित्वादिका परार्द्धान्ता संख्या तदवच्छिन्नं च पृथक्त्वं गृह्यते अवधारणन्त्वेत एव बुद्ध्यपेक्षास्तथैते बुद्ध्यपेक्षा एव बुद्धिं विना भवन्तीति ।

रूपादयः स्नेहान्ताः समानजात्यारम्भका इति । समाना तुल्या जातिर्येषां ते समानजातयः तानारभन्त इति तदारम्भका एव न त्वेत एव समानजात्यारम्भका उभयारम्भकाणामपि तद्भावात् । अत्र चानुष्णग्रहणमुष्णस्पर्शव्यवच्छेदार्थम्, तस्याप्युभयारम्भकत्वात् । एकत्वैकपृथक्त्वग्रहणं द्वित्वद्विपृथक्त्वादिव्यवच्छेदार्थम् । द्वित्वादेरसमानजात्यारम्भकत्वात् , द्विपृथक्त्वादेश्चाकारणत्वादिति ।

तथा ह्युदकावयवेषु वर्तमानरूपादयः स्नेहपर्यन्ताः कार्ये नारभन्ते। गन्धस्तु क्षित्यवयवेषु वर्तमानस्तदवयविनि गन्धमारभते। शब्द- श्चाकाशे वर्तमानस्तत्रैव शब्दमिति।

सुखादयः प्रयत्नान्तास्त्वसमानजात्यारम्भका इत्यसमानजा- तीयमेवारभन्त इति तदारम्भका न त्वेत एवान्येषामपि तदभा- वात्। तथाच सुखादिच्छा दुःखाद्द्वेषस्ताभ्यां प्रयत्नः तस्मात् क्रियेति।

संयोगादयः संस्कारान्ताः समानासमानजात्यारम्भका इति। समाना जातिर्येषां ते समानजातयः तत्प्रतिषेधेन चासमानजातयः तानारभन्त इति तदारम्भकाः एत एव समानासमानजात्यारम्भकाः, नान्ये। तथैते समानासमानजात्यारम्भका एव नियमेन। तथाहि-सं- योगात् संयोगो विजातीयश्च बुद्ध्यादि, विभागाद्विभागो विजातीयश्च शब्दः, संख्यातः संख्या विजातीयं च परिमाणं, गुरुत्वात् गुरुत्वं वि- जातीयं च पतनं, द्रवत्वाद्द्रवत्वं विजातीयश्च स्पन्दनम्, उष्णस्पर्शा- दुष्णस्पर्शो विजातीयाश्च पाकजाः, ज्ञानाच्च ज्ञानं विजाती- याश्च संस्काराः, धर्माधर्माऽभ्यां धर्माधर्मौ विजातीये च सुखदुःखे, संस्कारात् संस्कारो विजातीयश्च स्मरणम् ॥

(व्यो०) इदानीं स्वपराश्रयसमवेतारम्भकान् दर्शयति—

**(भा०) बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयस- मवेतारम्भकाः ॥**

**रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः ॥**

**संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगधर्मा- धर्मास्तूभयत्रारम्भकाः।**

बुद्ध्यादयः शब्दान्ताः स्वाश्रयसमवेतमेवारभन्त इति स्वाश्रयसमवेतारम्भकाः न त्वेत एवोभयारम्भकाणामपि तदभा- वात्। तथाहि-बुद्धिरात्मनि वर्तते तत्रैव ज्ञानं संस्कारहेतुर्भवति। सुखादिच्छा आत्मन्येव दुःखाद्द्वेषस्तत्रैव इच्छा तत्स्मरणप्रयत्ना- वात्मन्येव। तथा द्वेषादपि। भावनातो भावना स्मरणञ्च आत्म- न्येव शब्दश्चाकाशे वर्तमानतस्तत्रैव शब्दमारभत इति।

रूपादयः प्रयत्नान्ताः परत्रेति परस्मिन्नेवारभन्त इति परत्रार- म्भका न त्वेत एव, तथाहि—रूपरसगन्धस्पर्शपरिणामस्नेहाः कार-

णेषु वर्तमानाः परत्र कार्ये तानारभन्ते। तथा प्रयत्नः पुरुषेषु वर्तमानः परत्र हस्तादौ क्रियामारभते ।

संयोगादयो धर्मान्तास्तूभयत्रारम्भका एत एवोभयत्रारम्भकाः । तथैते उभयत्रारम्भका एव नियमेन । भेर्याकाशसंयोगो ह्याकाशे वर्तमानस्तत्रैव शब्दमारभते। भेरीदण्डसंयोगस्तु परत्र । तथा वंशदलाकाशविभागः स्वाश्रये वंशदलविभागस्तु परत्राकाशे शब्दारम्भकः । संख्या कारणे वर्तमाना द्वित्वत्रित्वादिका कार्ये परिणाममेकत्वसंख्या चैकत्वं स्वाश्रये तु द्वित्वादिकमारभत इति । पृथक्त्वाग्रहणं द्विपृथक्त्वादिव्यवच्छेदार्थम्, तेषामकारणत्वात् । कारणेषु वर्तमानमेकपृथक्त्वम् कार्येप्येकपृथक्त्वमारभते स्वाश्रयेषु द्विपृथक्त्वादिकमिति । गुरुत्वद्रवत्ववेगास्तु कारणगताः कार्येपि गुरुत्वादीनारभन्ते स्वाश्रयेषु पतनस्पन्दनगमनक्रिया इति । धर्माधर्मौ च स्वाश्रयसमवेते सुखदुःखे पराश्रये तु क्रियामारभेते ।

( व्यो० ) इदानीं क्रियाहेतूनाह—

**( भा० ) गुरुत्वद्रवत्ववेगधर्माधर्मसंयोगविशेषाः क्रियाहेतवः ।**

**रूपरसगन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायित्वम् ।**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वम् । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम् । परत्वापरत्वद्वित्वद्विपृथक्त्वादीनामकरणत्वम् ।**

गुरुत्वादिसंयोगविशेषाः क्रियाहेतव इति । तथाहि—गुरुत्वात् पतनं द्रवत्वात् स्पन्दनं वेगात् गमनं प्रयत्नात् हस्तादौ क्रिया धर्माधर्माभ्यामग्न्यादौ क्रिया। संयोगविशेषास्तु नोदनाभिघातसंयुक्तसंयोगास्तेपि क्रियाहेतव इति वक्ष्यामः कर्मपरीक्षायाम् । एत एव क्रियाहेतवः न त्वेते क्रियाहेतव एव गुरुत्वादीनां गुरुत्वजनकत्वस्याप्युपलब्धेः ।

इदानीमसमवायिनिमित्तोभयथाकारणान्याह--रूपादिशब्दान्तानामसमवायिकारणत्वमिति ।

अथ किमिदमसमवायिकारणत्वं नाम ? प्रत्यासन्नस्य कार्यजनकत्वम् । यद्यस्य प्रत्यासन्नं सज्जनकत्वेनोपलब्धसामर्थ्यं व्याप्त्या तत्तस्योत्पत्तावसमवायिकारणम् । का पुनरियं प्रत्यासत्तिः ? एकार्थसमवायः । सा तु भिद्यते कार्यैकार्थसमवायलक्षणा कार्यकारणैकार्थसमवायलक्षणा चेति । कार्येण सहैकस्मिन्नर्थे समवायो लक्षणं चिन्हमस्या इति तल्लक्षणा । यथा शब्दस्य शब्दोत्पत्ताविति कार्यशब्दो ह्याकाशे वर्तते तत्रैव कारणशब्दोपीति कार्यैकार्थसमवायोऽस्य प्रत्यासत्तिरिति । तथा बुद्ध्याद्युत्पत्तावात्मान्तःकरणसंयोगस्य । स ह्यात्मनि वर्तते बुद्ध्यादयोपि तत्रैवेति । नन्वेवं बुद्ध्यादीनामपि स्वकार्योत्पत्तावेकार्थसमवायित्वादसमवायिकारणत्वमेव, न निमित्तत्वम् । नैष दोषः । संयोगस्याशेषकार्योत्पत्तौ व्याप्त्या सामर्थ्योपलब्धेः । न चैवं बुद्ध्यादेरन्यतरस्येति तस्य प्रतिनियतकार्योत्पत्तावेव सामर्थ्यावधारणात् आत्मान्तःकरणसंयोगस्त्वशेषबुध्याद्युत्पत्तावुपलब्धसामर्थ्य इति स एवासमवायिकारणम् । न जातुचिन्मनःसंयोगादृते बुध्यादयो भवन्तीति । तथाच सुषुप्तावस्थावसाने विज्ञानादिकमुत्पद्यते इति मनःसंयोगस्तत्र कारणम् । नन्वेवमपि धर्माधर्मयोरशेषबुध्याद्युत्पत्तौ व्याप्त्या कारणत्वादसमवायित्वं स्यात् । न । विभुविशेषगुणानां विशिष्टप्रत्यासत्तेरुपलम्भात् । यथाहि शब्दः शब्दान्तरमारभमाणः स्वावरुद्धनभोदेशसमनन्तरमेवारभते नैकार्थसमवायित्वाद्देशान्तरे ब्रह्मभाषितस्याप्युपलम्भप्रसङ्गात् । तद्वद्धर्माधर्मावपि स्वावरुद्धात्मप्रदेशानन्तरं सुखदुःखादिकमारभेयाताम् इति स्वर्गादिस्थानेषु तदभावः स्यात् । आरभेते तु स्थानान्तरेऽपि सुखदुःखादिकमिति निमित्तकारणत्वमेव । तस्मादात्मान्तःकरणसंयोग एव बुध्याद्युत्पत्तावेकार्थसमवायितयाऽसमवायिकारणमिति स्थितम् । तथा कार्यं रूपादि पटे वर्तते पटश्च तन्तुषु तद्गताश्च रूपादयस्तत्रैवेति कार्यकारणैकार्थसमवायस्तेषां प्रत्यासत्तिरिति । नन्वेवमपि तन्तुरूपं रसाद्युत्पत्तौ प्रत्यासन्नम् रसश्च रूपोत्पत्तावित्यसमवायित्वं स्यात् । न जनकत्वमिति विशेषणात् । यद्यस्योत्पत्तौ प्रत्यासन्नं सज्जनकं तदसमवायिकारणम् , न चैवं रूपं र

साद्युत्पत्तौ कारणं तदनुविधानस्यादर्शनात् । यथाहि शुक्लाद्रूपाच्छु-क्लं पीताच्च पीतमिति कारणरूपानुविधानमस्ति । नैवं रसादिनेति, न हि मधुरादम्लाद्वा तच्छुक्लं पीतं वा रूपमित्यन्वयो गृह्यते।तस्मात्प्र-त्यासत्तावपि नासमवायित्वं कारणस्य सतस्तद्विशेषनिरूपणात् । न चैवं समवायिकारणे प्रसङ्गस्तस्योक्तप्रत्यासत्त्यभावात् । न हि कार्येण तत्कारणेन च सहैकार्थसमवायस्तस्यास्ति, तत्रैव तत्कार्यस्य समवायात् । तथाहि—रूपरसगन्धानुष्णस्पर्शपरिमाणस्नेहा का-र्यकारणैकार्थसमवायादेवासमवायिकारणम् । संख्या तु द्वित्वादिका परिमाणोत्पत्तौ कार्यकारणैकार्थसमवायेनासमवायिकारणम् । तथा कारणैकत्वमेकपृथक्त्वं च कार्यैकत्वैकपृथक्त्वोत्पत्ताविति द्वित्वद्विपृ-थक्त्वाद्युत्पत्तावेकत्वैकपृथक्त्वादीनां कार्यैकार्थसमवायेनैवासमवा-यिकारणत्वमेव । एवं शब्दस्यापीत्युक्तम् । एतेषामसमवायिका-रणत्वमेव न त्वेतेषामेवान्येषामपि तदभावात् । अत्र चानुष्णग्रहणमु-ष्णस्पर्शव्यवच्छेदार्थम्, तस्योभयथा कारणत्वात् ।

बुद्ध्यादिभावनान्तानां निमित्तकारणत्वमिति । समवाय्यसमवा-यिलक्षणरहितस्य जनकत्वम् । न चासिद्धं विशेषणम् प्रत्यास-न्नस्य बुद्ध्यादेर्जनकत्वादिति वाच्यम् । पूर्वोक्तन्यायात् । अवधारणं त्वेतेषां निमित्तकारणत्वमेव नन्वेतेष्वेव । तथाहि-बुद्धिर्ज्ञानसं-स्कारोत्पत्तौ कारणं सुखमिच्छायां दुःखं द्वेषस्येच्छाद्वेषौ प्रयत्नस्य स च क्रियायाः धर्माधर्मौ सुखदुःखयोर्भावानुस्मरणस्येति ।

संयोगादिवेगान्तानामुभयथा कारणत्वमित्यसमवायिनिमित्तका-रणत्वमिति । एतेषामेवोभयथा कारणत्वम्, तथैतेषामुभयथा कार-णत्वमेवेति नियमेन,तथाहि-भेर्याकाशसंयोगस्यासमवायिकारणत्व-म् भेरीदण्डसंयोगस्य निमित्तत्वम्,एवं वंशदलाकाशविभागस्यासम-वायिकारणत्वम् वंशदलविभागस्य निमित्तत्वम्,उष्णस्पर्शस्योत्पत्ता-वसमवायिकारणत्वं भेरीदण्डसंयोगस्य निमित्तत्वम्, एवं वंशदलाका-शविभागस्यासमवायिकरणत्वं वंशदलविभागस्य निमित्तत्वम्, उष्ण स्पर्शस्योत्पत्तावसमकारणत्वं पाकजेषु निमित्तत्वम् । एवं गुरुत्व-द्रवत्ववेगानां स्वाश्रयक्रियोत्पत्तावसमवायिकारणत्वमाश्रयान्तरे निमित्तत्वमिति ।

परत्वापरत्वद्विपृथक्त्वादीनामकारणत्वमित्यादिपदेन त्रिपृथक्-

त्वादीनां ग्रहणम । नन्वेतेषां ज्ञानाद्युत्पत्तावस्त्येव कारणत्वम् । सत्यम् । तद्व्यतिरेकेणान्यत्राकारणत्वं विवक्षितमिति । समानजातीयारम्भकादिवाक्येऽपीदं विशेषणमूह्यम् । एतेषामकारणत्वमेव, न त्वेतेषामेव पारिमाण्डल्यादेरप्यकरणत्वात् ।

( व्यो० ) इदानीं तेषां वृत्तित्वमाश्रयव्यापित्वं चेत्याह—

**( भा० ) संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम् ।**

**शेषाणामाश्रयव्यापित्वम् ।**

**अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वासांसिद्धिकद्रवत्वगुरुत्वस्नेहानां यावद्द्रव्यभावित्वम् । शेषाणामयावद्द्रव्यभावित्वञ्चेति ।**

संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वमाश्रयाव्यापकत्वं विवक्षितम । न तु प्रदेशेऽवयवे वृत्तिर्निष्प्रदेशानां तदभावप्रसङ्गात् एतेषामेवाश्रयाव्यापित्वमेतेषां प्रदेशवृत्तित्वमेव ।

शेषाणामाश्रयव्यापित्वमित्युक्तेभ्योऽन्ये शेषास्तेषामाश्रयव्यापित्वम् । कथमेतदाश्रयोपलम्भे सति तज्जिघृक्षायामवश्यं ग्रहणम् । यथा पटोपलम्भे रूपजिघृक्षायामवश्यं तद्ग्रहणमिति । येषां त्वाश्रयाव्यापित्वं न तेषामाश्रयोपलम्भे सत्यामपि जिघृक्षायामिन्द्रियार्थसन्निकर्षे चावश्यं ग्रहणमस्ति । यथा पर्वतस्य परभागवर्तिनां संयोगो नावश्यं तदुपलम्भेप्युपलभ्यत इति ।

अपाकजादिस्नेहान्तानां यावद्द्रव्यभावित्वमिति । यावद्द्रव्यं भवन्ति तच्छीलाश्चेति तद्भाविनस्तेषां भावो यावद्द्रव्यभावित्वं आश्रये सत्यविनाशित्वमिति यावत् ।

शेषाणामयावद्द्रव्यभावित्वमिति । उक्तेभ्यो अन्ये शेषास्तेषां सत्यप्याश्रये विनाश इति ।

( व्यो० ) अथेदानीं वैधर्म्यं प्रातिनियतमाह—

**( भा० ) रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसम्बन्धाद्रूपादिसंज्ञा भवन्ति ।**

रूपादीनां सर्वगुणानां प्रत्येकमपरसामान्यसम्बन्धाद्रूपादिसंज्ञा·

भवन्तीत्यादि । रूपमादिर्येषां ते रूपादयः तेषाम् । न ज्ञायते कियतामतः सर्वगुणानामिति । सर्वे च ते गुणाश्चेति सर्वगुणास्ते च रूपादय एवाभिप्रेता नान्य इति । तेषामेकमेकं प्रति प्रत्येकमपरसामान्यसम्बन्धादिति । गुणत्वापेक्षया परसामान्यं रूपत्वादि तत्सम्बन्धाद्रूपादिसंज्ञा भवन्ति रूपत्वसम्बन्धाद्रूपमिति संज्ञा रसत्वसम्बन्धाच्च रस इति। एवमन्येष्वपीति । न चैवं पृथिव्यादावप्येकस्मिन्नेवाधिकारे तत्संज्ञानिरूपणं कार्यमिति वाच्यम् । अपरसामान्यसम्बन्धस्य सर्वत्रासम्भवात् । अत्र च सर्वेष्वपरं सामान्यमस्तीति युक्तमेकत्र संज्ञानिरूपणम् ॥

( व्यो० ) तत्रादावुद्दिष्टत्वाद्रूपस्य सद्भावे प्रमाणं लक्षणमाश्रयमर्थक्रियाभेदं नित्यत्वमुत्पत्तिविनाशकारणञ्च दर्शयन्नाह--

**( भा० ) तत्र रूपं चक्षुर्ग्राह्यम् । पृथिव्युदकज्वलनवृत्ति द्रव्याद्युपलम्भकं नयनसहकारि शुक्लाद्यनेकप्रकारं सलिलादिपरमाणुषु नित्यं पार्थिवपरमाणुष्वग्निसंयोगविरोधि सर्वकार्यद्रव्येषु कारणगुणपूर्वकमाश्रयविनाशादेव विनश्यतीति ॥**

रूपं चक्षुर्ग्राह्यमित्यादिना । तत्र रूपमेव चक्षुर्ग्राह्यम् न रसादि रूपं चक्षुषैव गृह्यतेऽन्येन्द्रियपरिच्छेद्यं न भवतीत्यवधारणस्य प्रक्रमापेक्षितया न द्रव्यादौ चक्षुर्ग्राह्यत्वप्रतिषेधः । तथाहि-द्रव्यादेश्चक्षुर्ग्राह्यत्वसिद्धावनेकद्रव्येण (द्रव्येण) समवायात् स्वगतविशेषाच्च रूपं प्रत्यक्षम् । एतेन रसादिषु ज्ञानं व्याख्यातमित्यतिदेशे चक्षुर्ग्राह्यत्वाशङ्कायां तद्व्यवच्छेदार्थमेवावधारणम् । न द्रव्यादौ तद्वृत्तिप्रतिषेधपरम् । अभिप्रेतञ्च समुद्गीयमानावधारणं शाक्यैरिति वक्ष्यामो लैङ्गिकज्ञाने । सूत्रार्थस्त्वनेकं द्रव्यं जनकमस्येतीत्यनेकद्रव्यं तेन सह समवायात् स्वगतविशेषनियतसद्भावे कश्चिद्रूपोपलब्धिर्यदभावाच्चानुपलब्धिः । स एव सहकारिविशेषोऽपदिश्यते। तस्माच्च रूपं प्रत्यक्षम्।एतच्च रसनादिप्रत्यक्षत्वे समानमिति। पृथिव्युदकज्वलनवृत्तीत्याश्रयनिरूपणम् । पूर्वपदापेक्षं वा लक्षणमिति । तथाहि—चक्षुर्ग्राह्यत्वं द्रवत्वस्याप्यस्तीति चक्षुषैव गृह्यत इति विशेषणम् । न

थापि चक्षुषैव गृह्यते रूपत्वसामान्यमिति पृथिव्युदकज्वलनवृत्ति- पदम्। पृथिव्यादिवृत्तित्वं चान्येषामप्यस्तीति नियमग्रहणम्। अतो रूपमितरस्माद् भिद्यते नियमेन पृथिव्युदकज्वलनवृत्तित्वे सति चक्षुषैव गृह्यमाणत्वात्, यस्तु न भिद्यते न चासावेवम्, यथा रसादिरिति। द्रव्याद्युपलम्भकमित्यर्थक्रियाकथनम्। द्रव्यादीनुपलम्भयतीति द्रव्याद्युपलम्भकम् द्रव्योपलब्धेः कारणमिति। तथाहि—महत्त्वादनेकद्रव्यवत्त्वाद्रूपविशेषाच्च द्रव्यप्रत्यक्षं तत्समवायाच्च गुणादयोऽपि प्रत्यक्षा इत्युपलब्धौ रूपविशेषस्य कारणत्वमुक्तम्। पूर्वपदापेक्षमेतल्लक्षणमभ्यूह्यम्। नयनसहकारीति स्वगतरूपोत्कर्षात् बाह्यरूपप्रकाशकमित्युपदर्शयति। न च पूर्वेणाविशेषः। करणस्थस्य रूपोत्कर्षस्याभिधानात्। प्राक्तनेन तु कर्मगतस्येति। शुक्लाद्यनेकप्रकारमिति भेदनिरूपणम्। तदप्यसाधारणमेव सलिलादिपरमाणुषु नित्यमुत्पत्तिविनाशकारणाभावात्। पार्थिवपरमाणुष्वग्निसंयोगविरोधीत्यग्निसंयोगेन विरोधो विनाशोऽस्येति। न चानुत्पन्निमतो विनाशः सम्भवतीत्यन्यस्योत्पत्तिविनाशकारणस्याभावादग्निसंयोगादेवोत्पद्यते सर्वकार्येषु कारणगुणपूर्वकप्रक्रमेणोत्पत्तिराश्रयविनाशादेव विनाश इति वक्ष्यामो रूपपरीक्षायाम्॥

**( भा० ) रसो रसनग्राह्यः पृथिव्युदकवृत्तिः जीवनपुष्टिबलारोग्यनिमित्तम्। रसनसहकारी मधुराम्ललवणकटुकषायभेदाभिन्नः। अस्यापि नित्यानित्यत्वनिष्पत्तयो रूपवत्॥**

( व्यो० ) रसो रसनग्राह्य इति सद्भावे प्रमाणम्। पृथिव्युदकवृत्तीत्याश्रयनिरूपणम्। पूर्वपदापेक्षं वा लक्षणमिति। तथाहि—पृथिव्युदकवृत्तित्वमन्येषामप्यस्तीति रसनग्राह्यपदम्। रसनग्राह्यश्च रसत्वादिसामान्यं भविष्यतीति पृथिव्युदकवृत्तिपदम्। अतो रस इतरस्माद्भिद्यते पृथिव्युदकवृत्तित्वे सति रसनग्राह्यत्वात्। यस्त्वितरस्मादरसादेर्न भिद्यते न चासावेवम्, यथा गन्धादिरिति। जीवनपुष्टिबलारोग्यनिमित्तमित्यर्थक्रियानिरूपणम्। जीवनं तूपभोगदायककर्मसचिवस्यात्मनः स्वशरीरावरुद्धेन मनसा संयोगः। तस्य तु निमित्तम् शरीराप्यायननिमित्तत्वात्पुष्टिरवयवोपचयः। सा

च विशिष्टरसोपयोगात् भवतीति । तथाहि—रसोपयोगादन्तरेण तेजसा पूर्वद्रव्यनिवृत्तौ स्वतन्त्रेषु परमाणुषु श्यामादिनिवृत्तिद्वारेणोत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण शरीरारम्भः प्रतिक्षणमाहारोपयोगे सति द्रष्टव्यः । न चाऽस्यारम्भकवादः सम्भवतीत्युक्तम् पृथिव्यधिकारे । बलमुत्साहस्तस्य प्राणसम्वर्धनद्वारेण निमित्तमारोग्यं रोगाभावस्तस्यापि निमित्तं विशिष्टरसोपयोगे सति तच्छ्रवणात् । रसनसहकारीति । स्वगतरसोत्कर्षात् बाह्यरसस्याभिव्यञ्जक इत्युक्तं पूर्वम् । मधुराम्ललवणतिक्तकटुकषायभेदभिन्न इति विभागः । सोऽप्यसाधारणत्वात् लक्षणम् । तस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववदिति । सलिलपरमाणुषु नित्यं पार्थिवेष्वग्निसंयोगादुत्पद्यते विनश्यति च । कार्येषु कारणगुणपूर्वः आधारविनाशादेव विनश्यतीत्यतिदेशार्थः ।

**( भा० ) गन्धो घ्राणग्राह्यः । पृथिवीवृत्तिः घ्राणसहकारी सुरभिरसुरभिश्च । अस्यापि पूर्ववदुत्पत्त्यादयो व्याख्याताः ॥**

( व्यो० ) गन्धो घ्राणग्राह्य इति सद्भावे प्रमाणम् । पृथिवीवृत्तिरित्याश्रयनिरूपणम् । पूर्वपदापेक्षं वा लक्षणम् । तथाहि—घ्राणग्राह्यत्वं गन्धत्वादेरप्यस्तीति पृथिवीवृत्तिरिति विशेषणम् । पृथिवीवृत्तित्वमन्यस्याप्यस्तीति घ्राणग्राह्यपदम् । घ्राणग्राह्यत्वे सति पृथिवीवृत्तित्वं लक्षणमिति । घ्राणसहकारीति स्वगतगन्धोत्कर्षात् बाह्यगन्धप्रकाशकमित्यर्थक्रियानिरूपणम् । पुनरपि सुरभिरसुरभिश्चेति विभागः । अस्याप्युत्पत्त्यादयः पूर्ववदिति । परमाणुष्वग्निसंयोगादुत्पद्यते विनश्यति च । कार्ये तु कारणगुणपूर्वकः आधारविनाशादेव विनश्यतीत्यतिदेशार्थः ॥

**( भा० ) स्पर्शस्त्वगिन्द्रियग्राह्यः । क्षित्युदकज्वलनपवनवृत्तिः त्वक्सहकारी रूपानुविधायी । शीतोष्णानुष्णाशीतभेदात् त्रिविधः । अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत् ॥**

( व्यो० ) स्पर्शस्त्वगिन्द्रियग्राह्य इति प्रत्यक्षपरिच्छेद्यत्वं

दर्शयति । पृथिव्युदकज्वलनपवनवृत्तिरित्याश्रयनिरूपणञ्च चतुर्णां स्पर्शवत्त्वमित्यनेन न पुनरुक्तम् । तत्र द्रव्यधर्मस्याभिधानात् इह तु स्पर्शधर्मस्येति । पूर्वपदापेक्षं वा लक्षणम् । तथा च पृथिव्यादिवृत्तित्वमन्येषामप्यस्तीति त्वगिन्द्रियग्राह्यपदम् । तद्ग्राह्यश्च स्पर्शत्वादिसामान्यमिति पृथिव्यादिवृत्तिपदम् । यदि संख्यादीनामपि त्वगिन्द्रियग्राह्यत्वे सति नियमेन पृथिव्यादिवृत्तित्वं सम्भाव्येत अवधारणं कार्यम् । स्पर्श इतरस्मात् भिद्यते त्वगिन्द्रियग्राह्यत्वे सति नियमेन पृथिव्यादिचतुर्द्रव्यवृत्तित्वात्, यस्त्वितरस्मान्न भिद्यते न चासावेवम्, यथा रूपादिरिति । त्वक्सहकारीति । स्वगतस्पर्शोत्कर्षात् त्वगिन्द्रियग्राह्यस्पर्शप्रकाशकमित्यर्थक्रियानिरूपणम् । अथ त्वगिन्द्रियं स्पर्शस्य प्रकाशकम् कस्मात् ? संयुक्तसमवायात् । त्वगिन्द्रियेण संयुक्तं द्रव्यं तत्समवायात् स्पर्शो गृह्यत इति । नन्वेवं संयुक्तसमवायस्याविशेषाद्रूपादिप्रकाशकमपि स्यात्, विशेषो वा वाच्यः । तन्न स्पर्शोत्कर्षवत् रूपाद्युत्कर्षस्याभावात् । तथाहि—रूपादिषु मध्ये स्पर्शस्यैवोपलम्भादन्यथानुपपत्त्या ज्ञायते नियामकं कारणम्, नियमहेतुं विना नियतस्य कार्यस्यानुपपत्तेः । तत्र स्पर्शोत्कर्षो नियामकः स्पर्शत्वं वा विषयगतम् । न चैतद्रूपादिषु सम्भवतीति स्पर्शत्वस्य तत्रासम्भवात् । रूपाद्युत्कर्षस्यापि त्वगिन्द्रियेण कार्याभावेनैवाभावप्रसिद्धेः । तथाच सूत्रकारेणाप्युक्तम् । रूपादिषु स्पर्शनं ज्ञानमिति कस्मान्न भवतीति, तदभावात् स्पर्शत्वसामान्यस्याभावात्, यत्रैव स्पर्शत्वसामान्यं तत्रैव स्पार्शनं ज्ञानमिति । व्यतिरेको लभ्यत एव स्पर्शत्वाभावस्तु त्वग्ग्राह्यत्वाभावस्य ज्ञापको न कारक इति । न च विशिष्टसन्निकर्षव्यतिरेकेणान्या योग्यता सम्भाव्यते । अन्वयव्यतिरेकाभ्यां तस्यैव व्यापारोपलब्धेरित्यलम् ।

रूपानुविधायीति साहचर्यं दर्शयति । रूपमनुविदधाति तच्छीलश्चेति तदनुविधायी यत्र रूपं तत्रावश्यं स्पर्श इति । एवं रसगन्धानुविधायित्वमपीति । शीतोष्णानुष्णाशीतभेदात्त्रिविध इति विभागकथनम् । असाधारणस्यापि नित्यानित्यत्वनिष्पत्तयो रूपवदिति । सलिलादिषु परमाणुषु नित्यः पार्थिवेष्वग्निसंयोगाविरोधी कार्येषु कारणगुणपूर्वस्तद्विनाशीति विनश्यतात्यतिदेशार्थः ॥

( भा० ) पार्थिवपरमाणुरूपादीनां पाकजोत्पत्ति-विधानम् । घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्य-भिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते तेभ्यो विभागाः विभागेभ्यः संयोगविनाशाः संयोग-विनाशेभ्यश्च कार्यद्रव्यं विनश्यति । तस्मिन् विनष्टे स्वतन्त्रेषु परमाणुष्वग्निसंयोगादौष्ण्यापेक्षाच्छ्यामादीनां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा जायन्ते ।

तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगा-द्द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र च कारणगुण-प्रक्रमेण रूपाद्युत्पत्तिः । न च कार्यद्रव्य एव रूपाद्युत्पत्तिर्विनाशो वा सम्भवति सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावाद्, अणुप्रवेशादपि च व्याप्तिर्न सम्भवति कार्यद्रव्यविनाशादिति ॥

(व्यो०) अथेदानीं 'पार्थिवपरमाणुरूपादीनाम्' इति परीक्षाशेषानिवर्तनाप्रकरणम् । तथाहि—रूपादीनां पूर्वमुद्देशलक्षणपरीक्षाभिधानेऽपि स्पर्शो न परीक्षितः प्रतिज्ञातं च तदंशपरीक्षार्थमिदमारभ्यते । पृथिव्या इमे पार्थिवाः । ननु चात्र भेदानुपपत्तेः कथं षष्ठी, तद्धितप्रत्ययश्चेति । तयोर्भेदे सत्युपलम्भात् । न, कार्यरूपायाः पृथिव्याः विवक्षितत्वात् तज्जनकाश्च परमाणवः ततो भिन्ना एवेति पार्थिवा इत्युच्यन्ते । जातिर्वा पृथिवीशब्देन विवक्षिता । तस्या इमे तत्सम्बन्धिनः पार्थिवाः । ते च ते परमाणवश्च तेषां रूपादय इति । आदिपदेन रसगन्धस्पर्शा एव गृह्यन्ते, न संख्यादयस्तत्परीक्षाशेषपरत्वेनैव सम्बन्धात् । अतस्तेषां पाकजोत्पत्तिविधानं प्रकार इति । अथ पाकाज्जाताः पाकजा इत्युत्पत्त्यर्थस्य जनिना प्रतिपादितत्वाद्यर्थमुत्पत्तिग्रहणम् । नोत्तरपदेन सम्बन्धात् । तथाहि-पाकजानामुत्पत्तिरेव विधी-

यते अनेनेति विधानं प्रमाणमुपेयम् । पूर्वगुणविलक्षणानां रूपादीनामुत्पत्तिः कार्यं सैव प्रमाणमिति वक्ष्यामः । यदि वा पच्यतेऽनेनेति पाकः तेजोद्रव्यं पच्यत इति वा पाकः पार्थिवपरमाणवश्चेति पाकौ ताभ्यां जातः पाकजः पार्थिवपरमाण्वग्निसंयोगः तस्मादुत्पत्तिः पार्थिवपरमाणुरूपादीनां श्यामादिविनाशश्चेत्युत्तरवाक्यसामर्थ्यात् ।

अन्ये तु श्यामादिविनाशोऽध्याहारेण लभ्यत इति मन्यमानाः पच्यतेऽनेनेति पाकोऽग्निसंयोगः तस्माज्जातः पाकजः श्यामादिविनाशः तत एव पाकादुत्पत्तिर्विशिष्टरूपादीनामिति कष्टव्याख्यानं कुर्वते । तच्चासद् । अध्याहारादेर्दूषणस्यापरिहारात् । न चाभिव्यक्तिनिवृत्त्यर्थं उत्पत्तिग्रहणमिति वाच्यम् । परमतस्याप्रसिद्धत्वात् । अथ केन प्रकारेण पाकजाः जायन्त इत्युपदर्शयति—घटादेरामद्रव्यस्येत्यादिना । घटादेरित्यादिपदेन शरीरादेरवरोधः । तत्र हि पाकजोत्पत्तिपरिज्ञानात्तदासक्तिनिवृत्तौ विरक्तस्य श्रेयः संपद्यत इति । आमद्रव्यस्येति पक्वव्यवच्छेदार्थम् । यद्यपि पार्थिवपरमाणुष्वहेतुकस्य रूपादेरसम्भवात्तेऽपि पाकादुत्पन्नाः, तथापि विशिष्टरूपापेक्षया श्यामादय उच्यन्ते । तदाश्रयश्यामद्रव्यस्य य आरम्भकाः पारम्पर्येण परमाणवस्तेषु कर्माण्युत्पद्यन्ते । कुतः ? अग्न्यभिघातान्नोदनाद्वा । अभिघातस्तु वेगापेक्षः परस्परविभागहेतोरेकस्य कर्मणः कारणम् । नोदनं त्वविभागहेतोरनेकस्येति वक्ष्यामः कर्माधिकारे ।

अन्ये तु घटस्यादिर्द्व्यणुकं तदारम्भकाः परमाणवः साक्षादिति मन्यन्ते । तत्र कर्मोत्पत्तावणवः समवायिकारणं तत्संयोगोऽसमवायिकारणं वेगादि निमित्तकारणमिति । तेभ्यो विभागास्ते तु द्रव्यारम्भकसंयोगप्रतिबन्दिनः । तत्राप्यसमवायिकारणं कर्म परमाण्वोः समवायित्वं शेषं निमित्तकारणमिति । विभागेभ्यः संयोगविनाशाः । तत्र समवाय्यादिकारणमुपलब्धेर्निमित्तादेवोत्पत्तिः । न ह्यभावः समवेतः क्वचिदुत्पद्यमानो दृष्टः । अत एवासमवायिकारणं नास्त्येकार्थसमवायाभावात् । निमित्तकारणं त्वन्वयव्यतिरेकाभ्यां व्याप्रियमाणं तदुत्पत्तावुपलब्धम् । संयोगविनाशेभ्यः कार्यद्रव्यं द्व्यणुकलक्षणं विनश्यतीति जात्यपेक्षयैकवचनम् । तस्मिन् विनष्टे परमाणुष्वन्यस्मा-

दग्निसंयोगाच्छ्यामादीनां निवृत्तिः। पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा जायन्ते। तत्र परमाणुः समवायिकारणमग्निसंयोगोऽसमवायिकारणमुष्णस्पर्शो निमित्तकारणमिति । तदनन्तरं-रक्ताद्युत्पत्तिक्षणानन्तरम्, उत्पन्नपाकजेष्वणुषु समवेतानि कार्याण्युत्पद्यन्ते। असमवायिकारणमाह आत्माणुसंयोगाददृष्टापेक्षात्। अदृष्टञ्च केषामित्याह-भोगिनामिति। कर्मोत्पत्तौ सत्यामनन्तरं विभागाः तेभ्यः संयोगविनाशाः ततः परमाणूनां परस्परेण संयोगाद्द्व्यणुकान्युत्पद्यन्ते। तत्र परमाण्वोः समवायित्वं तत्संयोगस्यासमवायिकारणत्वं शेषं निमित्तमिति तदादिक्रमेण कार्यमुत्पद्यत इति । त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते त्र्यणुकैश्चानियमेन स्वकार्यं। तावत् यावद्घटः । सर्वत्र कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति ।

ननुसर्वमेतदसम्बद्धम् । एतस्मिन् क्रमे प्रमाणाभावात् । तथाहि-परमाणौ क्रियायाः सद्भावे प्रमाणाभावात् । तत्कार्यस्यासिद्धौ तत्द्व्यणुकस्य विनाशे प्रमाणमस्ति । अग्निसंयोगस्य नानात्वं द्रव्यविनाशे श्यामादिनिवृत्तौ रक्ताद्युत्पत्तावुत्पन्नपाकजेषु क्रियाक्रमेण तद्द्व्यणुकस्यैवोत्पत्तिरिति सर्वं प्रमाणशून्यमेव। बाधकोपपत्तेश्च। तथा ह्यापाकनिक्षिप्तेषु घटादिषु कुलालस्य छिद्रप्रदेशेन निरीक्षमाणस्याक्षजं विज्ञानम्—घटः पच्यत इति। न चेदं संशयविपर्ययस्वरूपम् , तल्लक्षणालक्षितत्वात् , बाधकानुपपत्तेश्च । तथा पाकोत्तरकाले स एवायं घट इत्यबाध्यमानस्य प्रत्यभिज्ञानस्योपलब्धेरवस्थानम्, उपरिस्थापितानां च तृणकर्परादीनामपाताच्चावस्थायित्वम्। यदि हि परमाणवः पच्येरन्नूर्ध्वावस्थापितानां कर्परादीनां पातः स्यात् । परमाणूनां च धारणसामर्थ्याभावात्, तद्देशत्वतत्परिमाणत्वतत्संख्यात्वोपलब्धेश्च । यदि चोत्पन्नपाकजाः परमाणवो द्व्यणुकादिप्रक्रमेण घटादिकमारभेरन् तद्देशं तावत्परिमाणं तत्संख्या च न स्यान्नियमहेतोरभावात्। दृष्टश्चायं नियमः—तस्मिन्नेव देशे तावत्परिमाणं तत्संख्या च। एवं घटादीनामवस्थायित्वम्। न च घटादेर्विनाशे कर्मादिभिर्विना पुनरुत्पत्तिर्युक्ता । अथेश्वरादेः सद्भावाद्युक्तमिति चेत् तथाहीश्वरः कर्ता कारणमदृष्टादिपरिमाणुकर्मेति। नैतद्युक्तम् । क्षित्यादिकार्येष्विवास्मदादिसम्बन्धादितः कार्यानपेक्षस्य घटादिसम्पादनेऽपि सामर्थ्यानिवृत्तेः कुलालव्यापार-

वैयर्थ्यमेव स्यात् । आवरणाभावश्च । तथाहि—वेगादग्निस म्बन्धादवयवक्रियाक्रमेण घटादेर्विनाशस्तथा वेगवच्चक्षुःसम्बद्धात् काचाभ्रस्फटिकादेः क्रियाक्रमेण विनाशे तद्व्यवहितेन सम्बद्धस्य चक्षुषः प्रकाशकत्वमित्यावरणाभावः स्यात् । अथ स्वच्छतया स्फटिकादिद्रव्यमिन्द्रियव्यवधायकं न भवतीत्युपपन्नमेवावृतस्यापि ग्रहणम् । तर्हि घटादिद्रव्यमपि तथा स्वभावतया तेजोद्रव्यव्यवधायकं न भवतीत्यणुप्रवेशादन्तर्देशेऽप्युपपद्यत एव पाकः । अन्यथा ह्यावृतानावृतयोस्तुल्योपलब्धिः स्यात् । आवरणाभावस्योभयत्राविशेषात् । यदि चाणुप्रवेशाद्द्रव्यस्य विनाशः, तर्हि बहिर्देशे शीतस्पर्शोपलम्भाऽन्यथानुपपत्त्योदकस्य निःसरणादाधारस्य विनाशे तत्पातः स्यात् । अथ सिद्धं द्रव्यमित्युदकस्य निःसरणम्, तर्हि तन्मार्गेणैव तेजोऽणुप्रवेशादन्तर्देशे पाकः सम्पद्यत इति किं तद्विनाशेनेत्यलम् ।

सर्वमेतदबोधकमनैकान्तिकत्वात् । तथा ह्युदकपरिपूर्णे घटे वेगवत्सूचीद्रव्यसम्बन्धादवश्यं कण्ठप्रदेशे क्रिया । सा चोत्पन्ना द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागमारभत इति प्रत्यक्षसिद्धम् । तस्मात् संयोगविनाशे तदारब्धस्य द्रव्यस्य निवृत्तिस्तस्यापि द्रव्यान्तरारम्भकत्वात्तन्निवृत्तौ तदारब्धनिवृत्तिरिति विनाशकारणसान्निध्यात् घटस्य विनाशः । अन्यथा हि विनाशकारणसान्निध्येऽप्यविनाशे कार्यस्य नित्यत्वमेव स्यात् । उपलभ्यते तु घट इत्यवस्थितसंयोगैर्द्रव्यान्तरारम्भो निश्चीयते । तत्र च प्रत्यक्षं स एवायमिति प्रत्यभिज्ञानम् न व्यावृत्तमुपरिस्थापितस्य द्रव्यस्य पातः तद्देशत्वं तत्संख्यात्वं तत्परिमाणत्वं प्रत्यक्षेण च कर्त्रादेरनुपलब्धिस्तत्रास्तीत्यनेकान्तादसाधनम् । न च घटस्य विनाशेऽप्युदकस्यानाशितत्वं पातो वा दृश्यत इति । अथ परमाणुषु पाकजा जायन्त इति किमत्रास्मदादीनां प्रमाणम् । घटादिषु पूर्वगुणविलक्षणस्य गुणान्तरस्योत्पाद इति । स च घटादिषु वर्तमानः कथं परमाणुषु पाकजा जायन्त इति गमयेत् । तत्राग्निसंयोगेन तस्यानुपपत्तेः । तदेवाह—न च कार्यद्रव्ये रूपादिविनाशो उत्पत्तिर्वाऽन्यथा सम्भवति, कस्मात् ? सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावात् । तथा ह्यवयवी सर्वावयवेष्वन्तर्बहिश्च वर्तते । न चान्तर्देशेऽग्नेरनुप्रवेशोऽस्ती-

ति व्याप्त्या सम्बन्धाभावादपाकप्रसङ्गः । अथ सूक्ष्मस्य तेजसोनुप्रवेशादन्तर्देशे पाकः सम्पद्यत इत्याह—अणुप्रवेशादपि व्याप्तिर्न सम्भवति । कस्मात् ? कार्यद्रव्यविनाशादिति । तथाहि—वेगवद्द्रव्यसम्बन्धस्यान्यत्र क्रियाहेतुत्वेनोपलम्भादिहाप्यवयवे क्रिया, सा चावयवान्तरेण विभागं द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनमारभते । तस्मात् संयोगनिवृत्तौ तदारब्धस्य कार्यद्रव्यस्य विनाशे तदारब्धस्यापि निवृत्तिरिति क्रमेण घटस्याप्यवश्यं विनाशः । अथ घटावयवाः पच्यन्ते । तत्राप्यन्तर्देशे पाको न स्यादिति तेजोणुप्रवेशेन विनाशः । तदेवमुत्तरोत्तरावयवेष्वग्न्यणुप्रवेशात्तद्विनाशे स्वतन्त्राः परमाणवः पच्यन्ते । न च कार्यद्रव्ये पूर्वरूपादीनामवस्थाने रक्ताद्युत्पत्तिः स्यात् गुणवति गुणान्तरप्रतिषेधादतो रक्ताद्युत्पत्त्यन्यथानुपपत्त्या ज्ञायते पूर्वरूपादिनिवृत्तिः । सा चाश्रयविनाशादेव कार्यद्रव्ये । तथाच सूत्रम्—"रूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्या" इत्याश्रयविनाशेन विनाशोऽभिहितः। कार्यद्रव्ये अग्निसंयोगाच्च । एतेन नित्येष्वनित्यत्वं व्याख्यातमित्यग्निसंयोगस्य नित्येष्वेव रूपादिनिवर्तकत्वमुक्तम् । अतः कार्यद्रव्ये गुणान्तरप्रादुर्भावात् पूर्वरूपादिनिवृत्तिर्ज्ञायते । सा चाश्रयविनाशादेवाग्निसंयोगस्य नित्यविषयत्वेन नियमात्। एवं कपालानामप्यवस्थाने पूर्वरूपाद्यनिवृत्तौ रक्ताद्युत्पत्तिर्न स्यात् । अतः कार्येऽपि कारणरूपानुविधायितया श्यामादिकमुत्पद्यते। तदेवं तत्कारणकारणेष्वपि पूर्वगुणविलक्षणस्य गुणान्तरस्योत्पत्तिर्वाच्या । अन्यथा हि तत्कार्यकार्येष्वपि न स्यात् । सा चोत्पत्तिः पूर्वरूपादीनामवस्थाने न घटते । गुणवति रूपारम्भप्रतिषेधादिति पूर्वरूपादिनिवृत्तिर्वाच्या । सा चाश्रयविनाशादेवेति सकलस्यापि कार्यद्रव्यस्यापि विनाशः । न च परमाणुष्वपि पूर्वरूपादीनामवस्थाने रक्ताद्युत्पत्तिः स्यात् । तदभावाद्‌व्यणुकस्यापि कारणगुणपूर्वक्रमेण श्यामादिकमेवोत्पद्यत इति विलक्षणरूपाद्यसम्भव एव । दृष्टश्च कार्ये गुणान्तरप्रादुर्भावः तेन परमाणुषु रूपादिवृत्तौ रक्ताद्युत्पत्तिरिति । न च तत्राश्रयस्य विनाशः सम्भवति इत्यग्निसंयोगस्यैव निवर्तकत्वम्, कारणान्तरस्यासम्भवात् तस्यैवोत्पादकत्वमिति । यदपि 'इदं सच्छिद्रद्रव्य'मित्युक्तम् । तत्र यदि कपालरन्ध्रोपक्षयान्तर्देशे पाको न स्यात् । अथ तदवयवरन्ध्रापेक्षया तस्यान्तर्देशे पाका-

भावस्तदेवमुत्तरोत्तरावयवेष्वपि वाच्यम् तावद्यावद्द्व्यणुकम् । अथ तस्यान्तर्देशाभावात्पाको भविष्यतीति । न, तस्यापि वेगवदग्निसम्बन्धेनावश्यं विनाशोपपत्तेः । श्यामादिविनाशं च विना रक्ताद्युत्पत्तिर्न स्यात् । तद्विनाशश्चाश्रयविनाशादेवेत्युक्तं पूर्वम् । स च संयोगविनाशात्सोऽपि विभागाद्विभागश्च क्रियात इति, गुणान्तरप्रादुर्भाव एव क्रियादिक्रमास्तित्वे प्रमाणमिति । अत्र तु प्रयोगः—पार्थिवपरमाणुरूपादयः संयोगजाः विभागजशब्दजशब्दान्यत्वानित्यत्वे सति नित्यविशेषगुणत्वात्, सुखादिवत् । विभागजशब्दशब्देन व्यभिचारपरिहारार्थं तदन्यत्वे सतीति । सत्त्वादिपरमाणुरूपादिव्यवच्छेदार्थं चानित्यपदम् । सामान्यगुणव्यवच्छेदार्थं विशेषगुणग्रहणम् । अनित्यव्यवच्छेदश्च नित्यपदेनेति ।

अन्ये तु घटादिगता रूपादयः पारम्पर्येणाग्निसंयोगजाः साक्षाद्घटमानत्वे सति अग्निसंयोगतद्भावभावित्वेनोत्पद्यमानत्वात् श्रूयमाणअग्निशब्दवदित्यनुमानं ब्रुवते । न चासिद्धं विशेषणमुक्तन्यायात् । यच्चेदं-'अग्निसंयोगस्य नानात्वे प्रमाणाभाव' इति-एतदसत् । तस्यैव कार्यभेदेन नानात्वोपचारात् । यदि श्यामादिनिवर्तिका वह्नौ क्रियोत्पन्ना यदा प्राक्तनाऽऽकाशादिदेशेन विभागमारभते तदैव तदवयवे रक्ताद्युत्पादके च वह्नौ कर्मेत्येकः कालः । ततो विभागात्संयोगविनाशोऽवयवकर्मणा चावयवान्तराद्विभागः क्रियते रक्ताद्युत्पादकाग्निकर्मणा चाकाशादिदेशेनेत्येकः कालः। ततः श्यामादिनिवर्तकस्याग्नेः परमाणुना संयोगः श्यामादीनां विनश्यत्ता अवयवविभागाच्च द्रव्यारम्भकसंयोगविनाशः श्यामाद्युच्छेदकस्याग्नेः विनश्यत्ता रक्ताद्युत्पादस्याग्नेः प्राक्तनसंयोगविनाशः परमाणुना च संयोगस्योत्पद्यमानतेत्येकः कालः । ततः श्यामादीनां विनाशः तदुच्छेदकस्याग्नेर्विनाशः कर्मसंयोगस्य विनश्यत्ता रक्तादिजनकस्याग्निसंयोगस्योत्पादो रक्तादीनामुत्पद्यमानतेत्येकः कालः । ततो रक्तादीनामुत्पादः । श्यामादिनिवर्तकाग्निसंयोगस्य विनाश इत्यग्निसंयोगस्य नानात्वम् । न च श्यामाद्युच्छेदकाग्निसंयोगस्य विनश्यदवस्थत्वाद्रूपाद्युत्पत्तावसमवायिकारणत्वमिति ।

अन्ये तु श्यामादिनिवर्तकस्याग्नेः कर्मसमकालं तदवयवेऽपि कर्मसङ्क्रान्तनाच्छ्यामादिनिवृत्तिसमकालमेव तत्संयोगस्य विनाश

इति ब्रुवते ।

अथोत्पन्नपाकजेषु क्रियाक्रमस्य सद्भावे किं प्रमाणम् । कार्यद्रव्यस्योत्पत्तिरेव । अन्यथा हि क्रियामन्तरेण परस्परमप्राप्तानां द्रव्यारम्भकत्वं न स्यात् । अथ परमाणूनां द्व्यणुकारम्भकत्वमेवेति प्रमाणाभावस्तन्नैकत्वमितरवत् बहुत्वपक्षे बाधकसद्भावाद्वित्वसंख्योपेतानामेवारम्भकत्वप्रसिद्धेः । तथाहि बहूनामारम्भकत्वे शतादिसंख्योपेतानामप्यारम्भकत्वमेव स्यात् । एवं च सति घटादिकार्यं परमाणुभिरारब्धमिति चेत् । भङ्गेऽवान्तरकार्यस्यानुत्पन्नत्वात् उपलंभो न स्यात्, उपलभ्यते तु घटस्य विनाशे तदवयवा इति । तदवयवेऽपि तदवयवा इति द्व्यणुकादिक्रमणारम्भो निश्चीयते । अथ द्रव्याणि द्रव्यान्तरमारभन्ते, संयोगानां द्रव्यमिति च सूत्रव्याघातः । न, द्विवचनबहुवचनाभ्यां विग्रहाश्रयत्वात् । तथाहि–द्रव्ये च द्रव्याणीत्येकशेषः । कार्यद्रव्यापेक्षया तु बहुवचनम् । बहूनि कार्यद्रव्याण्येव द्रव्यमारभन्ते । द्वित्वसंख्योपेतान्येव च नित्यानि न तु नित्यान्येव कार्यद्रव्येऽपि सद्भावात् । न चैकस्य क्रमयौगपद्याभ्यामारम्भकत्वमेकस्वभावात् । तथा ह्येकः परमाणुर्न क्रमेण कार्यं करोति, समर्थस्याक्षेपायोगात् । युगपत् कृत्वा पुनरकरणे हेत्वभावः । न च समानपरिमाणतायां कार्यकारणभावो दृष्टः, क्षणभङ्गप्रतिषेधात् कारणविभागाभावादविनाशित्वं कार्यद्रव्यस्य च प्रसज्यते । तथा संयोगश्च संयोगौ च संयोगाश्चेति संयोगास्तेषां द्रव्यं कार्यमिति । नित्यापेक्षया संयोगस्यैव कार्यद्रव्ये चानियम इत्यविरोधः । तदेवं द्वित्वसंख्योपेताः परमाणवः कार्यद्रव्यमारभन्ते । एकत्वबहुत्वपक्षे बाधकप्रमाणसद्भावे सत्यारम्भकत्वात् । द्वित्वं तु द्व्यणुकारम्भकतन्तुद्वितयवत् । न हि बहुभिस्तन्तुभिर्द्वितन्तुकमारभ्यते नाप्येकेनेति विशेषणस्य हेतोरसद्भावः । अथ द्व्यणुकानि द्वित्वादिसंख्योपेतान्यनियमेन किमिति कार्यं नारभन्ते बाधकोपपत्तेः, तथाहि द्व्यणुकयोरारम्भकत्वेऽणुपरिमाणोत्पत्तावेव कारणत्वमस्तीति व्यर्थारंभप्रसङ्गः। न च द्व्यणुकद्वयस्य कारणपरमाण्वपेक्षया बहुत्वं संभवतीति वाच्यम् । कारणं न कारणवृत्ति बहुत्वस्य परिमाणोत्पत्तावकारणत्वात्कारणवृत्ति च बहुत्वम् महत्त्वोत्पत्तौ कारणमिति दृष्टम् । अन्यथा हि द्व्यणुकेऽपि महत्त्वं स्यात् । तथा द्व्यणुकद्व्यणुकस्यापि बहुत्वसंख्योपेत-

स्यैव महदारंभकत्वमिति। परं द्व्यणुकस्यैतत् कल्पनीयमिति। एकस्य चारम्भकत्वं प्रतिषिद्धम्। अथ चतुरादिसंख्योपेतानामनियमेनारम्भकत्वम् इति नेष्यते। साक्षात् घटाद्यारंभकत्वप्रसंगात्। तत्भंगे चावान्तरकार्यस्यानुपलब्धिरेवानुत्पन्नत्वात्। न च बहुत्वं विना महत्त्वं संभाव्यत इति त्रित्वसंख्योपेतानामेवारम्भकत्वम्। तथाहि-द्व्यणुकानि त्रित्वसंख्योपेतान्येव द्रव्यमारभन्ते। द्वित्वचतुष्ट्वादिपक्षे बाधकप्रमाणसद्भावे सत्यारंभकत्वात्, त्रितन्तुकारंभे तन्तुत्रितयवत्। अत्र तु कियता कालेन द्व्यणुके रूपाद्युत्पत्तिरिति क्रिया निरूप्यते। तत्र स्वकारणाद्द्व्यणुकस्य विनाशस्तत्कार्यस्य विनश्यत्ता श्यामाद्युच्छेदकाग्निसंयोगस्योत्पादः श्यामादीनां विनश्यत्ता। रक्ताद्युत्पादकाग्निसंयोगस्योत्पद्यमानता विभागजविभागस्योत्पादः परमाण्वोराकाशादिदेशेन संयोगस्य विनश्यत्तत्येषामेकः कालः। ततस्त्र्यणुकस्य विनाशः तत्कार्यस्य विनश्यत्ता श्यामादीनां विनाशः। श्यामाद्युच्छेदकाग्निसंयोगस्य विनश्यत्ता रक्ताद्युत्पादकाग्निसंयोगस्योत्पादो रक्तादीनामुत्पद्यमानता। आकाशाद्द्व्यणुकसंयोगस्य विनाशः उत्तरसंयोगस्योत्पद्यमानतेत्येषामेकः कालः। ततस्तत्कार्यस्य विनाशात् तत्कार्यस्य विनश्यत्ता श्यामाद्युच्छेदकाग्निसंयोगस्य विनाशे रक्तादीनामुत्पादो रक्ताद्युत्पादकाग्निसंयोगस्य विनश्यत्ता तथोत्तरसंयोगस्योत्पादो विभागविभागजविभागजकर्मणां विनश्यत्ता क्रियाया उत्पद्यमानतेत्येषामेकः कालः। ततस्तत्कार्यविनाशो तत्कार्यस्य विनश्यत्ता विभागविभागजविभागकर्मणां विनाशः रक्ताद्युत्पादकाग्निसंयोगस्य विनाशः क्रियाया उत्पादो विभागस्योत्पद्यमानतेत्येषामेकः कालः। ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता विभागस्योत्पादः संयोगस्य विनश्यत्तेत्येषामेकः कालः। ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता। संयोगस्य विनाशः उत्तरसंयोगस्योत्पद्यमानतेत्येषः कालः। ततस्तत्कार्यविनाशात्तत्कार्यस्य विनश्यत्ता उत्तरसंयोगस्योत्पादः द्व्यणुकस्योत्पद्यमानता विभागकर्मणोर्विनश्यत्येतेषामेकः कालः। ततस्तत्कार्यविनाशात्कार्यस्य विनश्यत्ता द्व्यणुकस्योत्पादो रूपादीनामुत्पद्यमानता विभागकर्मणोर्विनाश इत्येषामेकः कालः। तत उत्पन्ने द्व्यणुके कारणगुणपूर्वप्रक्रमेण नवमे क्षणे रूपाद्युत्पत्तिरिति। यदा तु

कार्यविनाशविशिष्टमपेक्ष्येत्यस्य द्रव्यनाशविशिष्टमपेक्ष्य कारणयोर्वर्तमानो विभागः कार्यसंयुक्ताकाशदेशेन विभागमारभत इति व्याख्यातम्। तदा श्यामादिनिवृत्तिसमकालं विभागजविभागसंचिन्तनाद्दशमे क्षणे रूपाद्युत्पत्तिरिति चिन्तनीयम् । तथाच द्व्यणुकविनाशे श्यामादिनिवृत्तिस्ततो रक्ताद्युत्पत्तिरुत्तरसंयोगः क्रियाविभागसंयोगविनाशः परमाणूनां च संयोगाद् द्व्यणुकोत्पत्तौ कारणगुणपूर्वकक्रमेण रूपाद्युत्पत्तिरिति। शेषं पूर्ववदिति। इदमेकस्मिन् परमाणौ द्रव्योत्पादनं क्रियाद्वयमधिकृत्योक्तम् । यदा त्वेकस्मिन्परमाणौ द्रव्यविनाशिकाऽन्यस्मिंश्च द्रव्योत्पादिकेष्यते तदा कथम् ? तत्र द्रव्यारंभकसंयोगविनाशसमकालं द्वितीयपरमाणौ द्रव्यारंभकं कर्म ततो द्रव्यारंभकसंयोगविनाशाद् द्व्यणुकस्य विनाशः तत्कार्यस्य विनश्यत्ता, श्यामाद्युच्छेदकाग्निसंयोगस्योत्पादः श्यामादीनामुच्छिद्यमानता रक्ताद्युत्पादकाग्निसंयोगस्योत्पद्यमानता विभागजाविभागस्योत्पादः परमाणोराकाशादिदेशेन संयोगस्य विनश्यत्ता द्वितीयपरमाणौ विभागस्योत्पादः संयोगस्य विनश्यत्तेत्येषामेकः कालः। ततस्त्र्यणुकस्य विनाशः तत्कार्यस्य विनश्यत्ता श्यामादीनां विनाशः तदुच्छेदकाग्निसंयोगस्य विनश्यत्ता रक्ताद्युत्पादकाग्निसंयोगस्योत्पादः रक्तादीनामुत्पद्यमानता, आकाशाद्द्व्यणुकसंयोगस्य विनाशः तस्य परमाणोराकाशादिदेशेन संयोगस्योत्पद्यमानता। द्वितीयपरमाणौ प्राक्तनसंयोगविनाशः परमाणुना च संयोगस्योत्पद्यमानतेत्येषामेकः कालः। ततस्तत्कार्यविनाशात्तत्कार्यस्य विनश्यत्ता श्यामाद्युच्छेदकाग्निसंयोगस्य विनाशः रक्तादीनामुत्पादः परमाणोराकाशादिदेशेन संयोगस्योत्पादः विभागाविभागजकर्मणोर्विनश्यत्ता द्वितीयस्य परमाणोः परमाण्वन्तरेण संयोगस्योत्पादः तद्विभागकर्मणोर्विनश्यत्ता द्व्यणुकस्योत्पद्यमानतेत्येषामेकः कालः। ततः तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता विभागजविभागकर्मणां विनाशो द्वितीयपरमाणावपि विभागकर्मणोर्विनाशः द्व्यणुकस्योत्पादो रक्तादीनामुत्पद्यमानतेत्येषामेकः कालः। ततो द्व्यणुकोत्पत्त्यनन्तरं पञ्चमे क्षणे कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति। तथा द्व्यणुकविनाशसमकालं द्वितीयपरमाणौ कर्मसंचिन्तनात् षट्क्षणा पाकजोत्पत्तिः। तथा श्यामादिनिवृत्तिसमकालमष्टक्षणा । तदनन्तरं च नवमे क्षणे

इत्यादि चिन्त्यम् । तत्रादौ द्व्यणुकानि पक्वापक्वैरपि परमाणुभिरारभ्यन्त इति पक्वापक्वान्युत्पद्यन्ते । ततस्तैस्त्र्यणुकमित्यादिप्रक्रमेण घटस्य पक्वापक्वस्योत्पादः । ततः पुनरनुत्पन्नपाकजेषु क्रियादिक्रमेण द्रव्यविनाशे स्वतन्त्रेषु परमाणुषु रक्ताद्युत्पत्तिस्ततः पुनः क्रियाक्रमेणोत्तरसंयोगोत्पत्तौ द्व्यणुकान्युत्पद्यन्ते । तत्र च कारणगुणपूर्वप्रक्रमेण पक्वमेव रूपाद्युत्पद्यते । तैस्त्र्यणुकं पक्वमेवारभ्यते । पुनर्द्व्यणुकान्तरेष्वप्येवमेव क्रमेण रूपाद्युत्पत्तिस्ततस्त्र्यणुकादिरिति वाच्यम् यावद्विशिष्टरूपाद्युत्पत्तिरिति । नन्वग्निसंबन्धस्यापि शेषादनुत्पन्नपाकजेष्विव परमाणुषूत्पन्नपाकजेष्वपि क्रिया किमिति नेष्यते ? घटादेरनुत्पत्तिप्रसंगात् । यदि च परमाणुषूत्पन्नपाकजेष्वारब्धकार्येषु क्रिया स्यात् प्रतिक्षणमुत्पत्त्यनन्तरं द्व्यणुकादिविनाशे घटादेरुत्पत्तिर्न स्यात् । अथ सर्वेषां परमाणूनां पाके सति द्व्यणुकादिप्रक्रमेण घटाद्युत्पद्यते इति मनुषे । तदसत् । उपरि स्थापितानां कर्परादीनां पातप्रसङ्गात् , परमाणूनां धारणसामर्थ्याभावात् , न चैतदस्ति । तस्मात् कार्यैरपत्यन्यथानुपपत्त्या ज्ञायते—अनुत्पन्नपाकजेष्वेव क्रियोत्पद्यते नोत्पन्नपाकजेषूपभोगप्रापकादृष्टस्य नियामकत्वादित्यलमतिविस्तरेण ॥

अथ द्व्यणुकत्र्यणुकादीनां पक्वापक्वानामुत्पादपूर्वं पुनः पक्वानामेवेति कल्पनायां किं प्रमाणम् । कार्यस्य तथा दर्शनमेव । तथाहि घटादिकार्यमादौ पक्वापक्वमुपलभ्यते पुनः पक्वमेवेति कारणकारणेष्वप्यनुमेयः । अत्र च प्रयोगः । द्व्यणुकानादौ पक्वापक्वमुत्पद्यते महतः पार्थिवद्रव्यस्यारंभकत्वात्कपालवत् । तथा त्र्यणुकानादौ पक्वापक्वमुत्पद्यते महतः पार्थिवद्रव्यकार्यत्वात् घटवदिति । न च युगपदशेषपरमाणुषु कर्मोत्पत्तिद्वारेण पाकजोत्पत्तिर्व्याख्येया । शीघ्रपाकानुपलब्धेरुपरि स्थापितानां च पातप्रसङ्गाच्चेति ॥

( व्यो० ) अथेदानीमुद्देशक्रमेणावसरप्राप्तायाः संख्याया लक्षणपरीक्षार्थमेकत्वादिव्यवहारहेतुः संख्येत्यादि प्रकरणम् ।

**( भा० ) एकत्वादिव्यवहारहेतुः संख्या । सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । अनेकद्रव्या तु द्वित्वादिका परार्द्धान्ता । तस्याः खल्वे-**

कत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः अपेक्षाबुद्धिविनाशाद्विनाश इति । कथम् । यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सति संयुक्तसमवेतैकत्वसामान्यज्ञानोत्पत्तावेकत्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्य एकत्वगुणयोरनेकविषयिण्येका बुद्धिरुत्पद्यते । तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रये द्वित्वमारभ्यते ततः पुनस्तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते ततः पुनर्द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता द्वित्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । तत इदानीमपेक्षाबुद्धिविनाशाद् द्वित्वगुणस्य विनश्यत्ता द्वित्वगुणबुद्धितः सामान्यबुद्धेर्विनश्यत्ता द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो द्वे द्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । तदनन्तरं द्वे द्रव्ये इति ज्ञानोत्पादः द्वित्वस्य विनाशः द्वित्वगुणबुद्धेर्विनश्यत्ता द्रव्यज्ञानात् संस्कारस्योत्पद्यमानतेत्येकः कालः । तदनन्तरं द्रव्यसामान्यात् द्वित्वगुणबुद्धेर्विनाशो द्रव्यबुद्धेरपि संस्कारादिति । एतेन त्रित्वाद्युत्पत्तिरपि व्याख्याता ॥

व्यवहृतिर्व्यवहारो ज्ञानम् व्यवह्रियतेऽनेनेति व्यवहारोऽभिधानं तयोर्हेतुः संख्येत्युच्यमाने सर्वेपि पदार्थास्तथा भवन्तीत्येकादिग्रहणम् । तथाप्येकादिरूपस्य व्यवहारहेतुत्वमाकाशात्मनोर्विद्यते इति विशेषणत्वे सतीति विशेषणमूह्यम् । तथाप्येकत्वादिसामान्यमेवं भवतीति द्रव्यविशेषणत्वे सतीति पदम् । तथाहि–संख्या इतरेभ्यो भिद्यते द्रव्यविशेषणत्वे सत्येकादिव्यवहारहेतुत्वाद्यस्तु न भिद्यते न चासावेवम् । यथा रूपादिरिति । व्यवहारो वा साध्यः । तत्र संख्यायास्तवाश्रयद्वारेण भेदनिरूपणार्थम् । लक्षणेन लक्ष्यमाणस्यै-

कानेकत्वोपलब्धौ संशये सति तन्निरासार्थञ्च—सा पुनरेकद्रव्या चानेकद्रव्या चेति वाक्यम्। एकमेव द्रव्यमाश्रयोऽस्या इत्येकद्रव्या। अनेकमेवात्रापि नश्यद्रूपाया आश्रयोऽस्या इत्यनेकद्रव्या। तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तय इत्यतिदेशं करोति। ननु चात्र नित्यत्वे साध्ये हेतुर्नास्ति अनित्यत्वे तु दृष्टान्ताभाव इति न्यूनं वाक्यम्। न, व्यतिरेकमुखेन हेतोर्लाभात् विग्रहभेदेन दृष्टान्तरयेति। तथाहि—निष्पद्यमानत्वाद नित्यत्वमित्युक्ते सामर्थ्यात् गम्यते एवानिष्पद्यमानत्वेन नित्यत्वमिति दृष्टान्तोपि। सलिलमादौ यस्यासौ सलिलादिस्तस्य परमाणवः तद्रूपादीनामिव नित्यत्वम्। यथाहि सलिलादिपरमाणुष्वनिष्पद्यमानत्वाद्रूपादयो नित्यास्तद्वदेकत्वं नित्येष्वनिष्पद्यमानत्वेनैव नित्यमिति। अनित्यायान्तु सलिलस्यादिपाठापेक्षया पृथिवी तस्याः परमाणवस्तद्रूपाणामिवेति। दृष्टान्तस्तु यथाहि पार्थिवपरमाणुरूपादयो निष्पद्यमानत्वादनित्यास्तद्वदेकत्वं कार्येषु निष्पद्यमानत्वादनित्यमिति। न च पार्थिवपरमाणुरूपादीनामिवैकत्वादीनामग्निसंयोगादुत्पत्तिर्वैलक्षण्याप्रतिपत्तेः। स्पर्शे तु वैलक्षण्याप्रतिपत्तावप्यग्निसंयोगजत्वेऽनुमानमुक्तम्। पृथिव्यधिकारेण च तत्सामान्यगुणेष्वदृष्टं संभवतीति।

अन्ये तु सलिलं च तदादिपरमाणवश्चेति तच्छब्दलोपेन समासं कुर्वते। अनित्यत्वे सलिलरूपादिदृष्टान्तो नित्यतायां च तदादिपरमाणुरूपमित्यलम्।

अनेकद्रव्या तु द्वित्वमेव आदिर्यस्याः सा द्वित्वादिका। परार्धमेवान्तेऽवसाने यस्याः सा परार्धान्ता। नहि परार्धादूर्ध्वामियत्ताव्यवहारः संभवतीत्यागमे पठ्यते। तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाद्विनाश इति संक्षेपेणोत्पत्तिविनाशकारणं दर्शयति। ननु चात्र बहुत्वनिर्देशात् द्वित्वोत्पत्तिर्न लभ्यते। नहि द्वित्वमेकत्वेभ्यो भवतीति। न द्विवचनबहुवचनाभ्यां विग्रहाश्रयणात्। तथा ह्येकत्वेऽनेकत्वानि चेत्येकशेषः, प्रकृतिसारूप्यस्य विवक्षितत्वात्। वचनसारूप्येण त्वेकशेषाभ्युपगमे धवखदिरादिष्वेकशेषप्रसंगः स्यात्। अत एकत्वेभ्योऽनेकत्वसंख्योत्पत्तिरित्यनेन द्वित्वोत्पत्तिर्व्याख्या-

तैव । किं विशिष्टेभ्य इत्याह अनेको विषयो यस्याः साऽनेकविषया सा चासौ बुद्धिश्च तया सहितान्येकत्वानि । नित्येभ्य इत्यपेक्षाकारणानिर्देशः ।

अन्ये त्रित्वाद्युत्पत्तिरेवात्र संग्रहवाक्ये विवक्षिता । द्वित्वोत्पत्तिश्चोपरिष्टात् भविष्यतीति मन्यन्ते । तच्चासत् । त्रित्वाद्युत्पत्तेरप्युपरिसद्भावेनानर्थक्यप्रसंगात् । एवञ्च संक्षेपेणोत्पातिविनाशकारणे प्रज्ञापिते विशेषाकांक्षितया अज्ञस्य प्रश्नः । अथ किमिति केन रूपेणोत्पत्तिश्च विनाशश्च भवतीत्याह यदा बोद्धुरित्यादि । तथाहि–बुध्यत इति बोद्धा, तस्य बोद्धुरात्मनश्चक्षुषा सह समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सतीत्यनियमं दर्शयति । समानजातीययोरसमानजातीययोश्च द्रव्ययोः सन्निकर्षे सतीति । ततसंयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानमुत्पद्यत इति । तेन चक्षुषा संयुक्तं द्रव्यं तत्संयुक्तसमवेत एकत्वगुणम्, तत्समवेतं च तदेकत्वं सामान्यं तस्मिन् ज्ञानमुत्पद्यते पूर्वविशेषणत्वात् । तथाहि विशेषणज्ञानमादौ कारणत्वात् विशेष्यज्ञानं तु पश्चात् कार्यत्वात् । अत एवैकत्वसामान्यज्ञानोत्पत्तौ सत्यामेकत्वसामान्यं च तत्सम्बन्धश्च तत्ज्ञानं चेत्येकत्वसामान्यतत्सम्बन्धतज्ज्ञानानि, तेभ्योऽनेकविषयिण्येका बुद्धिरुत्पद्यते । अनेकश्चासौ विषयश्चेत्यनेकविषयः सोऽस्या विद्यते इत्यनेकविषयिणी । एका च न विषयभेदेऽपि भिद्यते । कश्चासावनेको विषय इत्याहैकगुणयोरिति । एकगुणश्चैकगुणश्चेत्येकगुणयोर्विषयभूतयोर्यथोक्ता बुद्धिरुत्पद्यते एकत्वसामान्यबुद्धेश्च विनश्यत्ता । ततस्तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते । अत्र च स्वाश्रययोरिति समवायिकारणानिर्देशः तथैकत्वाभ्यामित्यसमवायिकारणस्य । तामपेक्ष्येत्यपेक्षाबुद्धेर्निमित्तकारणत्वमेकत्वसामान्यज्ञानस्य च विनाशः । ततः समुत्पन्ने द्वित्वे तत्संयुक्तसमवेतसमवायाद् द्वित्वसामान्यज्ञानमुत्पद्यते । पूर्वं विशेषणत्वात्तस्मात् सामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता विनाशकारणसांनिध्यं ज्ञानस्य ज्ञानान्तरविरोधित्वात् । द्वित्वसामान्यतज्ज्ञानतत्सम्बन्धेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेति । द्वित्वसामान्याद्वित्वसामान्यज्ञानाद्वित्वसामान्यगुणसम्बन्धाद्वित्वगुणबुद्धेरुत्पद्यमानतोत्पत्तिकारणसांनिध्यमित्येषामेकः कालः । तत इदानीमपेक्षाबुद्धेर्विनाशः तद्विनाशाद्वित्वगुणस्य विनश्यत्ता । द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्य इति ।

द्वित्वगुणश्च तज्ज्ञानं च तत्सम्बन्धश्चेति तथोक्तास्तेभ्यो निमित्तेभ्यः द्वे द्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः। तदनन्तरं द्रव्यज्ञानस्योत्पादः तस्माद्द्वित्वगुणबुद्धेर्विनश्यत्ता सामान्यबुद्धेर्विनाशोऽपेक्षाबुद्धिविनाशात् गुणस्य विनाशः संस्कारस्योत्पद्यमानतेत्येषामेकः कालः। ततः संस्कारोत्पादे सति द्रव्यबुद्धेर्विनश्यत्ता। गुणबुद्धेर्विनाशः ततो द्रव्यबुद्धेरपि संस्काराद्विनाश इति।

ननु सर्वमेतदसम्बद्धम् संख्यासद्भावे प्रमाणाभावात्। अथैकं द्वे त्रीणीत्यादिव्यवहारः प्रमाणम्। तन्न, अस्य कल्पनाज्ञानत्वात्, न च कल्पनाज्ञानमर्थव्यवस्थापनायालम्। तदभावेपि भावात्। तथाहि—निमित्तनिर्विकल्पकज्ञानक्रमेण स्मरणानन्तरं सविकल्पकं ज्ञानमुत्पद्यते। न चार्थस्यावस्थानं क्षणिकत्वादिति निर्विषयत्वम्। बाधकोपपत्तेश्च। तथा ह्युत्पद्यमानं द्वित्वादि न द्रव्योत्पत्तेः पूर्वमुत्पद्यते। तदभावान्न समकालं कार्यकारणभावानुपपत्तिप्रसंगात्। अथोत्तरकालं तत्रापि किन्ततूस्वभावाद् विपरीताद्वेति। तत्स्वाभाव्ये किं द्वित्वादिना? द्रव्यस्यैव तत्स्वरूपत्वात्। विपर्यये तु कथं तत्स्वभावात्तस्योत्पत्तिरेकस्मात् बहुभ्यश्च द्वित्वोत्पत्तिप्रसंगात्। अतत्स्वभावतायाः सर्वत्राविशेषात्। तथावृत्त्यनुपपत्तेश्च। द्वित्वमनेकस्मिन् वर्तमानमेकदेशेन सर्वात्मना वा वर्तते? नैकदेशेन तदभावात्। न सर्वात्मनोभयवृत्तित्वाभावप्रसंगात्। न च येनैव स्वरूपेणैकवृत्तिस्तेनैव द्रव्यान्तरेपि तयोरेकताप्रसङ्गादिति वृत्त्यनुपपत्तेरसत्त्वम्। तथोपलब्धिलक्षणप्राप्तस्य सर्वैरग्रहणात्। यदि हि द्वित्वादेः सत्त्वमुपलब्धिलक्षणप्राप्तत्वाद्रूपादिवत्सर्वपुरुषैर्गृह्येत। न तूपलभ्यते, तस्मान्नास्तीति। समानेन्द्रियग्राह्यत्वाच्च। येनेन्द्रियेण द्रव्यमुपलभ्यते तेनैव संख्यापीति। न ततोऽर्थान्तरम्। भेदे तु रूपादीनामिवासमानेन्द्रियग्राह्यत्वमपि स्यात्। इतोप्यसत्त्वम्। देशभेदेनानुपलब्धेस्तद्ग्रहे तत्बुध्यभावाच्चेति। तथा ग्रहणानुपपत्तेश्च। तथाहि द्वित्वमनेकत्र वर्तमानं कथमिन्द्रियेण परिच्छिद्येत। युगपत् सन्निकर्षद्वयस्य मनसाऽनधिष्ठितत्वात्। अथ चक्षुरधिष्ठीयते, तथाप्यनेकपदार्थग्रहणप्रसङ्गः। तस्य मनोधिष्ठितस्यानेकपदार्थैः सम्बन्धात्। यथा च संख्यासम्बन्धात् द्रव्येष्वेकादिव्यवहारः तथैकत्वादिगुणेष्वप्येकादिव्यवहारे निमित्तान्तरकल्पनायां तत्राप्येका-

दिव्यवहारस्य सम्भवादनवस्थाप्रसङ्गः । अथैकत्वादावेकादिव्यवहारः तत्स्वरूपतया द्रव्येपि तथाभावप्रसङ्गः । अथैकत्वादिसामान्ये तत्सामान्यानुपपत्तेरेकादिव्यवहारः कल्पनाज्ञानमिति ।

तदेतत्सर्वमसाम्प्रतम् । एकादिव्यवहारस्य बाधकासम्भवेन प्रामाण्यात् । तथा ह्येकादिज्ञानमर्थान्वयव्यतिरेकानुविधानान्नीलादिज्ञानवदर्थजम् । न चार्थाधीनतया निर्विकल्पकज्ञानोत्पत्तिसमकालमेव तस्योत्पत्तिः । संकेतस्मरणस्य सहकारिणोऽभावात् । नापि स्मृतिजमेव, अर्थस्यापि तत्र व्यापारोपलब्धेः । न च स्मृतेरतिशयाधायकत्वमनतिशयनिवर्तकत्वं वा । किन्त्वर्थसद्भावे सति ज्ञानजनकत्वमेव । न चार्थस्येन्द्रियाणां वा विचारकत्वात् ( ? ) प्रागिव पश्चादप्यजनकत्वमिति दूषणम् । तथा वृत्त्यनुपपत्तेर्देशभेदेनाग्रहणात् । तदग्रहे तद्बुध्यभावाच्चेति । पूर्वमेवावयविसमर्थनावसरे प्रतिषेधात् । न चाबाध्यमानमप्येकादिज्ञानमप्रमाणमिति वाच्यम् । नीलादिज्ञानस्याप्यप्रमाणताप्रसङ्गात् । अथ नीलं विना तज्ज्ञाने न स्यान्नीलाकारता तदेकत्वादिज्ञानेपि समानम् । अथैकत्वादिज्ञानं शब्दाकारम्, न चार्थे तद्रूपतास्तीति निर्विषयत्वम् । न, नीलज्ञानस्यापि शब्दाकारतया निर्विषयताप्रसंगात् । अथान्यं नीलज्ञानं निर्विकल्पकमर्थजमुत्तरं तु सविकल्पकमनेकक्षणव्यवधानादर्थापायेप्युत्पद्यते, अर्थस्य क्षणिकत्वाच्छब्दाकारतायाश्च तत्रासम्भवादिति निर्विषयत्वमिष्यत एव । तदसत् । क्षणिकत्वस्य पूर्वमेव प्रतिषेधात् । निर्विकल्पकज्ञानोत्पत्ताविवार्थस्य सविकल्पकज्ञानोत्पत्तावन्वयव्यतिरेकाभ्यामिन्द्रियेण सङ्केतस्मरणेन च सहकृतस्य व्यापारोपलब्धेः, तथापि इदन्तया ज्ञानोत्पत्तेस्तत्रेन्द्रियस्य व्यापारो निश्चीयते, अङ्गुल्या व्यपदिश्यमानत्वादर्थस्य चेति । अन्यथा हीन्द्रियार्थयोरेकादिज्ञानोत्पत्तौ व्यापारमन्तरेणेदन्तयोत्पत्तिरङ्गुल्यादिना च व्यपदेशो न स्यात् । अथेन्द्रियज्ञानं मनोविज्ञानक्रमेण सविकल्पकज्ञानोत्पत्तौ कारणमितीदन्तयोत्पत्तिरङ्गुल्यादिना व्यपदेशेनार्थकत्वादिति चेन्न । एतस्मिन् क्रमे प्रमाणाभावात् । अथ सङ्कल्पात् सद्भावासिद्धेरन्यथा एकादिव्यवहारो न स्यादित्येषा कल्पना क्रियते । तदसत् । वृत्तिविकल्पादेर्बाधकस्य पूर्वमेव प्रतिषेधात् । संख्यासद्भावसिद्धावेकादिव्यव-

हारस्य साक्षादर्थजत्वोपपत्तेः । शब्दाकारता तु सविकल्पकज्ञाने न सम्भवत्येव, साकारवादप्रतिषेधस्य वक्ष्यमाणत्वात् । केवलं तु स्मृतिजनितत्वात् सविकल्पकं ज्ञानं शब्दोल्लेखेनोत्पद्यते निर्विकल्पकं तूल्लेखशून्यं संकेतस्मृतेरव्यापारात् । न च वासनाप्रभवत्वं वासनायाः पूर्वमेव प्रतिषेधात् । तथाहि—बोधव्यतिरेकेणान्या वासना न सम्भवतीत्युक्तमेवावयविसमर्थनावसरे । या तु वैशेषिकोपगता स्मृत्यनुमेया वासना सा न कारणमेकादिव्यवहारे तस्याः परोक्षकारणतया स्मृतिविलक्षणत्वात् । तथा ह्येकादिज्ञानमपरोक्षमिन्द्रियव्यापारेणेदंतयोत्पद्यते । न च स्मृतेरेतद्रूपमस्तीति न वासनाप्रभवः । तथेत्थंभूतवासनाप्रभवत्वेपि परम्परयाऽर्थव्यवस्थापकत्वम् । अर्थानुभवपूर्वकत्वाद्वासनायाः । या त्वेकत्वादिशब्देभ्यो विकल्पाद्वासना साप्यर्थं व्यवस्थापयत्येव । शब्दस्यानुभवपूर्वकत्वेनाभ्युपगमात् । 'दृष्टेदृष्टवादित्वमि'त्यनेन । यत्तूत्पत्तिविकल्पनादेकत्वादेरसत्त्वमित्युक्तम् । तदसत् । उत्तरकालं तदुत्पत्त्यभ्युपगमात् अथ किं तत्स्वभावाद्विपरीताद्वेत्युक्तम् तत्र यदि तत्स्वाभाव्यं तदुत्पादनसामर्थ्यं विवक्षितम् तादिष्यत एव । अथैकत्वाद्याश्रयत्वं तन्नास्त्युत्पत्तेः पूर्वं तदभावात् । सिद्धे च संख्यासद्भावे प्रमाणतस्तस्याः कार्यद्रव्ये कृतकत्वादवश्यमुत्पत्तिकारणं वाच्यम् । तत्र चैकत्वाद्वित्वाद्याश्रयस्य तज्जनकत्वे तदभावस्यादृष्टया चोत्पत्तिस्तस्मात् द्रव्यमितरकारकोपचितम् तेषां कारणमित्युत्पत्तिविकल्पानुपपत्तिः । यच्चेदमुपलब्धिलक्षणप्राप्तस्यानुपलब्धेर्द्वित्वादेरसत्त्वमिति । तन्न, असिद्धत्वात्तथा च यदीयया ऽपेक्षाबुद्ध्या संपादितं द्वित्वादि तस्यैवोपलब्धिलक्षणप्राप्तम्, न पुरुषान्तरस्य तस्यैव तदुपलंभात् । यत्रोपलंभस्तत्रैव रूपिद्रव्ये समवायिकारणत्वमिष्टं न तदभावेपीति । तस्मान्न सकलपुरुषापेक्षया तदुपलब्धिलक्षणप्राप्तमित्यसिद्धो हेतुः । यच्चेदमेकत्वादेर्न द्रव्यव्यतिरेकेणास्तित्वं समानेन्द्रियग्राह्यत्वादिति । तत्र प्रतिज्ञावाक्ये पदयोर्व्याघातः । यथेदं च नास्ति चेति । न चैकत्वादेः पक्षीकरणं युक्तमप्रसिद्धत्वात् । प्रसिद्धं च पक्षीक्रियमाणं दृष्टम् शब्दादि । न च परस्यैकत्वादि प्रसिद्धमिति । अथ परव्याप्त्या परस्यानिष्टापादनं प्रसंगसाधनमिति चेत् । तत्र यदि प्रमाणपूर्विका परप्रसिद्धिस्तयैव बाध्यमानत्वादनुत्थानं विपरीता-

नुमानस्य। अथाप्रमाणपूर्विका तर्हि प्रमाणं विना प्रमेयस्याप्रसिद्धेरेकादीनां पक्षीकरणमयुक्तम्। तथा समानेन्द्रियग्राह्यत्वादिति येनेन्द्रियेण द्रव्यमुपलभ्यते तेनैव संख्यापीति साधनस्य रूपादिभेदैरनैकान्तिकत्वम्। तथाहि येनैवेन्द्रियेण शुक्लरूपस्य ग्रहणं तेनैव पीतादेर्न च तस्य तस्मादभेदोऽसत्त्वं वेति। न च परस्य द्रव्यं प्रसिद्धमिति कथं तस्मादभेदः साध्यते। अथ रूपमेव द्रव्यं न तर्हि समानेन्द्रियग्राह्यत्वं रूपस्यैकेन्द्रियग्राह्यत्वात्। संख्यायास्तु द्वीन्द्रियपरिच्छेद्यत्वादिति। अथ रूपादिसमुदायो द्रव्यम्। तथापि समानेन्द्रियग्राह्यत्वमसिद्धं रूपादेः प्रतिनियतेन्द्रियग्राह्यत्वात्। नच रूपादीनां प्रतिनियतेन्द्रियग्राह्यत्वाद्भेदः, शुक्लादिभेदानामेकताप्रसङ्गात्। किन्तर्हि? प्रतिभासभेदात्। स चेहाप्यस्त्येव। तथाह्येकत्र द्रव्यप्रतिभासोऽन्यत्र चैकत्वादिप्रतिभास इति। अथ संख्याद्रव्ययोः प्रत्यक्षेण भेदप्रसिद्धेरेकतासाधने प्रत्यक्षेण बाध्यमानत्वात् कालात्ययापादिष्टं भवतीति। यच्चेदमुत्पन्नस्य द्वित्वादेर्ग्रहणानुपपत्तेरसत्त्वम्। तदसत्। इन्द्रियव्यापारेणास्य द्वित्वादेरपरोक्षस्य दृष्टत्वात्। न च मनसाऽनधिष्ठितस्येन्द्रियस्य परिच्छेदकत्वं युगपत् ज्ञानोत्पत्तिप्रसङ्गात्। अतश्चक्षुर्मनसाऽधिष्ठीयते। न सम्बन्धस्तेषामणुपरिमाणसम्बन्धितया न युगपदधिष्ठायकं मन इति द्वित्वादेरग्रहणमेव स्यादस्ति च ग्रहणमतश्चक्षुरेव मनसाऽधिष्ठीयते। नन्वेवमप्यनेकपदार्थसम्बन्धाद्युगपदनेकज्ञानोत्पादकं स्यात्। न, करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यात्तथा ह्येककरणमेकस्मिन् कालेऽनेकां क्रियां न करोतीति। तस्माद्युगपत्प्रकाशनमेव घटादीनां न ग्रहणानीत्युक्तपूर्वम्। यच्चेदमेकादिव्यवहारो गुणान्तरात् स्वाभाव्याद्वेत्युक्तम्। तत्रैकत्वसामान्यवशादिति ब्रूमः। तथाहि द्रव्ये गुणसम्बन्धादेकादिव्यवहारो गुणे च सामान्यसम्बन्धात् सामान्येपि गुणसम्बन्धात्, न च ग्रहणपरंपरा विशेषणज्ञानस्य नियमेन ज्ञानपूर्वकत्वानभ्युपगमात्। अथ संयुक्तसमवेतसमवायादेकत्वसामान्ये ज्ञानमुत्पद्यते, विशेषणत्वादित्युक्तम्। अनेकगुणविषयस्य विशेष्यज्ञानस्यैवासंवेदनात। न द्वित्वस्योत्पत्त्यन्यथानुपपत्त्या तत्सद्भावसिद्धेस्तथाहि—यदि कारणगुणपूर्वप्रक्रमेण रूपादिवदुत्पद्यते द्वित्वं प्रथमाक्षसंनिपातवेलायामेव ग्रहणं स्यात् चिरोत्प-

ज्ञत्वात् । गणनावैयर्थ्यञ्च । न चैतत्तस्मादनेकगुणविषयस्य ज्ञानस्या-त्मवर्तिनोपि द्वित्वोत्पत्तिकारणत्वं निश्चीयते, तद्विनाशाच्च विनाशः । अन्यथा हि समवाय्यसमवायिकारणयोर्विनाशात् विनाशाभ्युपगमे तयोरनेककालमवस्थानात् स्थायित्वमेव स्यात्, क्वचिन्नित्यत्वञ्च । तयोरविनाशादन्यस्य च विरोधिगुणस्यासम्भवात् । तस्मान्निमित्तकारणादेव विनाशः कल्प्यते । न चैवं घटादेर्निमित्तकारणविनाशाद्विनाशप्रसङ्गोऽदर्शनात । अत्र तु समवाय्यसमवायिकारणयोर्व्यवस्थानेपि द्वित्वादेर्विनाशस्य दृष्टत्वादपेक्षाबुद्धिविनाशाद्विनाशः कल्प्यते । अन्यथा हि रूपादिवदवस्थाने प्रथमाक्षसन्निपातकाल एव ग्रहणं स्यादित्युक्तम् । अथावस्थितस्यापि द्वित्वादेर्व्यञ्जकाभावात् उपलम्भस्त्विदानीमुत्पन्नस्यापि घटत इत्यपेक्षाबुद्ध्यादेर्जनकत्वमेव न्याय्यम् । तस्माद्द्वित्वादिव्यवहारोत्तरकालं तदभावस्य संवेदनात् तदुत्पत्तौ कारणान्तरस्यासम्भवे सत्यपेक्षाबुद्धिविनाशस्य कारणत्वं युक्तम् । अथ पूर्वं द्वित्वसामान्यज्ञानमनन्तरं गुणज्ञानं द्रव्यज्ञानं चेति कल्पनायां किं प्रमाणं च विशेषणत्वमिति चेत् । न । विशेषणेपि विशेषान्तरकल्पनायामनवस्थाप्रसङ्गात् । तथाहि—द्वे द्रव्ये इति द्रव्यज्ञानोत्पत्तौ गुणस्य विशेषणत्वाद्युक्तमादौ तज्ज्ञानं गुणस्य च विशेषणत्वान्न तत्सामान्यज्ञानं युक्तम् । अभ्युपगमे वा तस्याप्यन्यद्विशेषणमित्यनवस्था स्यात् । न । नियमानभ्युपगमात् । तथाहि विशेषणेऽवश्यं विशेषणान्तरकल्पनेति नियमः प्रतिषिध्यते । अनवस्थाभयान्न पुनर्विशेषणे विशेषणमेव नास्तीति । विवक्षितं चैतत् भाष्यकर्तुर्द्रव्यविशेषणस्यापि गुणस्य सामान्यविशेषणाभिधानादिति । अथ संस्काराद्द्रव्यबुद्धेर्विनाश इति किं प्रमाणम्? कार्यस्याकस्मिकस्यानुपलब्धेर्द्रव्यज्ञानविनाशस्य कारणत्वं निश्चीयते । तस्य च स्मृत्या सद्भावसिद्धिरिति वक्ष्यामः॥

(व्यो०) तदेवं द्वित्वस्योत्पत्तिविनाशकारणे प्रज्ञापिते सत्यनेन त्रित्वाद्युत्पत्तिर्व्याख्यातेत्यतिदेशं करोति—

**(भा०) एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो द्वित्वादिनिष्पत्तिरपेक्षाबुद्धिविनाशाद्विनाश इति । क्वचिच्चाश्रयविनाशादिति । कथम्? यदैकत्वाधारावयवे**

कर्मोत्पद्यते तदैवैकत्वसामान्यज्ञानमुत्पद्यते कर्मणा चावयवान्तराद्विभागः क्रियते अपेक्षाबुद्धेश्चोत्पत्तिः । अतो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते संयोगविनाशात् द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले सामान्यज्ञानादपेक्षाबुद्धेर्विनाशः तस्मिन्नेव काले आश्रयविनाशात् द्वित्वविनाश इति शोभनमेतद्विधानम्—वध्यघातकपक्षे, सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथम् ? गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद्द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्यानुत्पत्तिप्रसंग इति । लैङ्गिकवज्ज्ञानमात्रादिति चेत्, स्यान्मतम्—यथा ऽभूतं भूतस्येत्यत्र लिङ्गाभावेपि ज्ञानमात्रादनुमानम् तथा गुणविनाशेपि गुणबुद्धिमात्राद् द्वे द्रव्ये इति प्रत्ययः स्यादिति । न विशेष्यज्ञानत्वात् । न हि विशेष्यज्ञानं सारूप्याद्विशेषणसंबन्धमन्तरेण भवितुमर्हति । तथाह सूत्रकारः "समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते इति" । न तु लैङ्गिकं ज्ञानमभेदेनोत्पद्यत इति तस्माद्विषमोयमुपन्यासः । न । आशूत्पत्तेः, यथा शब्दवदाकाशमिति अत्र त्रीणि ज्ञानान्याशूत्पद्यन्ते तथा द्वित्वादिज्ञानोत्पत्तावित्यदोषः । वध्यघातकपक्षेपि समानो दोष इति चेत्, स्यान्मतम्-ननु वध्यघातकपक्षेपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथम् ? द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति । न । सम-

**हज्ञानस्य संस्कारहेतुत्वात्–समूहज्ञानमेव संस्कारकारणं नालोचनज्ञानमित्यदोषः । ज्ञानयौगपद्यप्रसङ्ग इति चेत्, स्यान्मतम्–ननु ज्ञानानां वध्यघातकाविरोधे ज्ञानयौगपद्यप्रसंग इति । न । अविनश्यतोरवस्थानप्रतिषेधात् । ज्ञानायौगपद्यवचनेन ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानं प्रतिषिध्यते, न हि वध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानमस्तीति ॥**

( व्यो० ) यथा हि द्वित्वमेकत्वाभ्यामेकबुद्धिविषयबुद्धिसहिताभ्यामारभ्यते तथा द्वित्वादेरप्येकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरिति । उत्पन्ने च त्रित्वादौ तत्सामान्यज्ञानं ततोऽपेक्षाबुद्धेर्विनश्यत्ता सामान्यतज्ज्ञानतत्सम्बन्धेभ्यो गुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततस्त्रित्वादिगुणबुद्धेरुत्पादः । गुणतज्ज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानताऽपेक्षाबुद्धेर्विनाशो सामान्यज्ञानस्य विनश्यत्ता गुणस्य विनश्यत्तेत्येषामेकः कालः । ततो द्रव्यज्ञानस्योत्पादो संस्कारस्योत्पद्यमानता गुणज्ञानस्य विनश्यत्ता सामान्यज्ञानस्य विनाशोऽपेक्षाबुद्धिविनाशाच्च गुणस्यापि नाशः इत्येकः कालः । ततः संस्काराद्द्रव्यज्ञानस्यापीत्यतिदेशार्थः । आदिपदेन तु शतसंख्यादेरवरोधस्तत्र च द्वित्वोत्पत्त्यतिदेशो न सम्भवत्येव । तथाहि–द्रव्यशतस्य युगपदिन्द्रियेण सम्बन्धाभावात्तद्गतैकगुणानामग्रहणेऽपेक्षाकारणाभावात् कथं शतसंख्योत्पत्तिरिति । न चेन्द्रियेणैकत्वसामान्यस्यैकस्मिन्द्रव्ये संयुक्तसमवेतसमवायलक्षणस्य सम्बन्धस्योत्पत्तेस्तस्यैकताया द्रव्यान्तरगुणेष्वपि सद्भावात्तदाकृष्टानामेकैकगुणानां युगपत् ग्रहणाच्छतसंख्योत्पत्तिरिति वाच्यम् । सर्वत्र तथाभावेन शतसंख्याद्युत्पत्तिप्रसङ्गात् । तथाहीन्द्रियस्यैकत्वसामान्येन संयुक्तसमवेतसमवायलक्षणस्य सम्बन्धस्याविशेषात्तदुपग्रहादेकैकगुणानां ग्रहणाभ्युपगमे सर्वस्मिन्द्रव्ये शतसंख्याद्युत्पत्तिः स्यात् । न चैतत्तस्मादपेक्षाकारणाभावादनुत्पत्तिरिति । न चापेक्षाबुद्धिं विनैवोत्पत्तिः । गणनावैयर्थ्यप्रस-

ज्ञावित्युक्तन्यायात् । तदेतत् सर्वमसत् । संख्याव्यवहारस्य वास्तवत्वात् । शतसंख्यादिसद्भावसिद्धौ तस्याः कृतकत्वात् अवश्यमुत्पत्तिकारणं वाच्यम् इत्यन्यस्यासम्भवाद्विलक्षणैवापेक्षाबुद्धिः कल्प्यत इति । तथा चैकस्मिन्नेकगुणे ज्ञानोत्पत्तौ सत्यां संस्कारस्योत्पादे द्वितीयैकगुणे ज्ञानस्योत्पद्यमानता पूर्वज्ञानस्य विनश्यत्तेत्येकः कालः । ततो द्वितीयैकगुणे ज्ञानस्योत्पादः पूर्वगुणस्मरणस्योत्पद्यमानता प्राक्तनसंस्कारसहकारिणा च ज्ञानेन संस्कारस्योत्पद्यमानता प्राक्तनज्ञानस्य विनाश इत्येकः कालः । ततः स्मरणस्योत्पादः संस्कारस्योत्पादो द्वितीयगुणज्ञानस्य विनश्यत्ता स्मरणानुभवौ चापेक्षाबुद्धिस्ततो द्वित्वस्योत्पद्यमानतेत्येकः कालः । ततो द्वित्वस्योत्पादात्तज्ज्ञानस्योत्पद्यमानता द्वितीयैकगुणज्ञानस्यापि विनाश इत्येकः कालः । ततो द्वित्वगुणज्ञानस्योत्पादो द्रव्यज्ञानस्योत्पद्यमानता स्मरणस्य विनश्यत्तेत्येकः कालः । ततो द्रव्यज्ञानस्योत्पादो गुणज्ञानस्य विनश्यत्ता स्मरणस्य विनाशस्तद्विनाशाद्द्वित्वस्य विनश्यत्ता तृतीयैकगुणज्ञानस्योत्पद्यमानतेत्येकः कालः । ततस्तृतीयैकगुणज्ञानस्योत्पादो द्रव्यज्ञानस्य विनश्यत्ता द्वित्वगुणज्ञानस्य विनाशः पूर्वैकगुणद्वितये स्मरणस्योत्पद्यमानता पूर्वसंस्कारसाचिव्येनैकगुणज्ञानेन संस्कारान्तरस्योत्पद्यमानता द्वित्वगुणस्य विनाश इत्येकः कालः । ततः स्मरणस्योत्पादः संस्कारस्योत्पादः एकगुणज्ञानस्य विनश्यत्ता स्मरणानुभवौ चापेक्षाबुद्धी ततस्त्रित्वगुणस्योत्पद्यमानता द्रव्यज्ञानस्य विनाश इत्येकः कालः । ततस्त्रित्वगुणस्योत्पादस्तज्ज्ञानस्योत्पद्यमानता एकगुणज्ञानस्य विनाश इत्येकः कालः । ततस्त्रित्वगुणज्ञानस्योत्पादो द्रव्यज्ञानस्योत्पद्यमानता स्मरणस्य विनश्यत्तेत्येकः कालः । ततो द्रव्यज्ञानस्योत्पादो गुणज्ञानस्य विनश्यत्ता स्मरणस्य विनाशः तद्विनाशात्त्रित्वगुणस्य विनश्यत्ता चतुर्थैकगुणज्ञानस्योत्पद्यमानतेत्येकः कालः । ततश्चतुर्थैकगुणज्ञानस्योत्पादो द्रव्यज्ञानस्य विनश्यत्ता गुणज्ञानस्य विनाशः । त्रित्वगुणविनाशः संस्कारस्योत्पद्यमानतेत्ययं क्रमः चतुष्ट्वादिष्वप्यूह्यः । तावद्यावदन्त्यद्रव्यैकगुणे ज्ञानं कल्पनायातसंस्कारेण च स्मरणस्योत्पद्यमानेति । ततः प्राक्तनाशेषैकगुणविषयस्मरणस्योत्पादोऽन्त्यद्रव्यैकगुणज्ञानस्य विनश्यत्ता स्मरणानुभवौ चापेक्षाबुद्धिस्ततः शतसं-

ख्याया उत्पद्यमानतेत्येकः कालः। ततः शतसंख्याया उत्पत्तिस्तज्ज्ञानस्योत्पद्यमानता अन्त्यद्रव्यैकगुणज्ञानस्य विनाशः इत्येकः कालः। ततो गुणज्ञानस्योत्पादो द्रव्यज्ञानस्योत्पद्यमानता स्मरणस्य विनश्यत्तेत्येकः कालः। तदनन्तरमेतानि शतमिति द्रव्यज्ञानस्योत्पादो गुणज्ञानस्य विनश्यत्ता संस्कारस्योत्पद्यमानता स्मरणस्य विनाशः। तदनन्तरं संस्काराद्द्रव्यज्ञानस्यापीति।

अन्ये त्वेकस्मिन्नेकगुणे ज्ञानं तेन क्रियते संस्कारः पुनर्द्वितीयैकगुणे ज्ञानं तेन प्राक्तनेन चान्यः संस्कार इत्येषा कल्पना तावद्यावदन्त्यगुणे ज्ञानं ततः कल्पनायातसंस्कारस्याभिव्यक्तत्वादशेषैकगुणविषयस्य स्मरणस्योत्पत्तिरनुभवस्य विनश्यत्तेत्यपेक्षाबुद्धिः शतसंख्याजनिकेति मन्यन्ते। न चान्तराले द्वित्वाद्यनुभवस्यापि संवेदनादनुभवेन बाधेति वाच्यम्। कारणांशस्यैव कीर्तनात्, तथा ह्येकगुणानुभवजनितः संस्कारः स्मृतिद्वारेण शतसंख्योत्पत्तौ कारणम्। न चैवं द्वित्वाद्यनुभव इति तस्यानुपन्यासो नासत्वादिति। अथास्त्वेवमुत्पत्तिः शतसंख्याया ग्रहणं तु कथमिति चिन्त्यते। तथाहि—द्रव्यशतस्य युगपदिन्द्रियेण सम्बन्धाभावात्तद्वर्तिनी शतसंख्याप्यप्रत्यक्षेति कथमेतानि शतमिति प्रत्ययः स्यात्। अथान्त्यद्रव्येणेन्द्रियस्य संयोगात्तत्समवेता च शतसंख्योत्पन्नेति संयुक्तसमवायादुपलभ्यत एव तदाकृष्टानि च पूर्वोपलब्धद्रव्याणीन्द्रियसंयोगाभावेपि विशेषणविशेष्यलक्षणेनैव सम्बन्धेनैतानि शतमित्यपरोक्षज्ञानविषयाणि भवन्तीति। तर्हि सत्ताविशेषणेनाकृष्टानामाकाशादीनामपि प्रत्यक्षता स्यात्। न। अभिप्रायापरिज्ञानात्। तथा ह्येतानि शतमित्यपरोक्षज्ञानस्य दृष्टत्वादत्र कारणचिन्ता क्रियते। तत्र चान्यसम्बन्धस्यानुपलब्धेः शतसंख्याकृष्टानि विशेषणविशेष्यभावेनैव प्रत्यक्षाणि। न चैवमाकाशादीन्युपलब्धपूर्वाणि। न च तेष्वपरोक्षं विज्ञानमस्तीति नैवं कल्प्यते। न चाद्यद्रव्यस्येन्द्रियेण संयोगाच्छतसंख्योपलभ्यते, अन्त्यद्रव्ये समुत्पादात्। तथाहि—गणनाद्वारेणान्त्यद्रव्यैकगुणोपलम्भादुपलब्धैकगुणेषु द्रव्येषु समवेता शतसंख्योत्पद्यते तेन पूर्वेष्ववेति तत्संयोगेप्यसम्भवादग्रहणम्। न चात्रानुभवसहकारिणः संस्कारस्य संस्कारान्तरारम्भकत्वे घटान्यानुभवजनितसंस्कारस्याप्यनुभवान्तरसहकारिणः संस्कारारम्भकत्व-

प्रसङ्गः, अदृष्टकारितत्वाद्वस्तुव्यवस्थायाः । तथाहि—शतसंख्याद्युपभोगप्रापकादृष्टनियमादत्रैव विशिष्टसंस्कारोत्पत्तिर्न घटादौ, तत्र हि कार्याभावादिति । कार्यसद्भावेन च कारणपरिकल्पना क्रियते इति । अत्रान्यत्रासम्भवस्तत्रैव नियामकत्वमदृष्टस्य न पुनर्दृष्टकारणप्रत्याख्यानमिति । तस्माददृष्टसद्भावेपि गणनोपलम्भादपेक्षाबुद्धेः कारणत्वं कल्प्यते । अन्यथा हीश्वरबुद्धेरदृष्टस्य एकगुणसहकारित्वेन शतसंख्याद्यारम्भकत्वे सर्वद्रव्येषु शतसंख्याद्युत्पत्तौ रूपादिवच्चिरोत्पन्नत्वात् गणनामन्तरेणैवोपलम्भः स्यात् । न चास्ति । अथाभिव्यञ्जकाभावादनुपलम्भ इति चेन्न । सद्भावे प्रमाणाभावादित्युक्तोत्तरत्वात् । न चान्यदीयबुद्धिसंपादितान्यस्य प्रत्यक्षोपलब्धेति । ईश्वरसंपादितास्वादादीनां प्रत्यक्षता न स्यात् । तस्मादुक्तन्यायेनोत्पत्तिग्रहणं चेत्यलमिति विस्तरेण ।

विनाशमाह—न परमपेक्षाबुद्धिविनाशात् क्वचिदाश्रयविनाशादिति । कथमित्यव्युत्पन्नप्रश्नः । तत्र द्वित्वस्याश्रयविनाशेन विनाशाभिधानात् तत्समानतयाऽन्यत्रापि परिज्ञानं भविष्यतीति मन्यमानो द्वित्वस्यैव विनाशमाह—यदैकत्वाधारावयवे कर्मोत्पद्यते विभागस्योत्पद्यमानता । तदैवैकत्वसामान्ये ज्ञानमुत्पद्यते । अपेक्षाबुद्धेरुत्पद्यमानता । ततो विभागस्योत्पादो द्रव्यारम्भकसंयोगस्य विनश्यत्ता अपेक्षाबुद्धेरुत्पादो द्वित्वस्योत्पद्यमानता एकत्वसामान्यज्ञानस्य विनश्यत्ता । तदनन्तरं संयोगस्य विनाशः एकत्वसामान्यज्ञानस्य विनश्यत्ता । द्रव्यस्य विनश्यत्ता । द्रव्यस्योत्पादः । तत्सामान्यज्ञानस्योत्पद्यमानतेत्येषामेकः कालः । ततः सामान्यज्ञानस्योत्पादः अपेक्षाबुद्धेर्विनश्यत्ता द्रव्यस्य विनाशो गुणस्य विनश्यत्ता । ततो द्रव्यविनाशात् गुणस्य विनाशः । सामान्यज्ञानाच्चापेक्षाबुद्धेरिति । न चापेक्षाबुद्धिविनाशकार्यो गुणविनाशसमकालत्वादिति द्रव्यविनाशस्यैव कारणत्वं पूर्वकालत्वात् । यदा त्वपेक्षाबुद्धिसमकालमेकत्वाधारावयवे कर्म चिन्त्यते । तदोभयविनाशादपि गुणस्य विनाशः सम्भवतीति ज्ञेयम् । शोभनमेतद्विधानमित्यादिना परपक्षप्रतिषेधद्वारेण स्वपक्षमुपसंहरति—शोभनं युक्तमेतत् द्वित्वाद्युत्पत्तिविधानम् । तत् कस्मिन्पक्ष इत्याह—वध्यघातकपक्षे यदा ह्येकस्य ज्ञानस्योत्पादोऽन्यस्य विनश्यत्ता । सहानवस्थानलक्षणे तु विरोधे द्रव्य-

ज्ञानानुत्पत्तिप्रसङ्ग इत्यशोभनम् । तथाहि-सहानवस्थानलक्षणे विरोधे द्वित्वसामान्यज्ञानसमकालमपेक्षाबुद्धिविनाशात् गुणबुद्धिसमकाले द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति ज्ञानस्यानुत्पत्तिप्रसङ्गः। तथा निर्हेतुकता च विनाशस्य । यदैव द्वित्वसामान्यज्ञानस्योत्पादः तदैवापेक्षाबुद्धेर्विनाश इत्येककालत्वान्न सामान्यज्ञानकार्योऽपेक्षाबुद्धिविनाशः । न चान्यत् कारणमस्तीति निर्हेतुकत्वं प्रसज्येत । न चैतत्सम्भवतीत्युक्तमेव । अथ यद्यपि गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद् गुणस्य विनाशः । तथापि लैङ्गिकज्ञानवत् ज्ञानमात्राद्दे द्रव्ये इति ज्ञानं भविष्यतीति परमतमाशङ्कते-लैङ्गिकवत् ज्ञानमात्रादिति चेत्। मतमभिप्रेतं स्यात्, यथा अभूतमविद्यमानं लिङ्गं भूतस्य विद्यमानस्य लिङ्गिनो गमकमित्यत्र सूत्रे लिङ्गाभावेपि ज्ञानमात्रादनुमानमिष्टम । तथाहि ज्ञानेन ज्ञानमनुमीयते इति ज्ञानस्य लिङ्गत्वादवश्यं ग्रहणम् । ततस्तस्य विनश्यत्ता अविनाभावसम्बन्धस्मरणस्योत्पद्यमानता तदनन्तरमविनाभावसम्बन्धस्मरणस्योत्पद्यमानता तदनन्तरमविनाभावसम्बन्धस्मरणस्योत्पादो लिङ्गभूतज्ञानस्य विनाशः । तज्ज्ञानस्य विनश्यत्ता परामर्शज्ञानस्योत्पद्यमानता ततः परामर्शज्ञानस्योत्पादोऽविनाभावसम्बन्धस्मरणस्य विनश्यत्ता लिङ्गज्ञानस्यापि विनाश इति निर्विषयात्परामर्शज्ञानमात्रादेव ज्ञातरि प्रतिपत्तिर्भवतीति दृष्टम् । तथा गुणविनाशे गुणज्ञानमात्रात् द्रव्यप्रत्ययः स्यादिति ।

अन्ये तु यथाऽभूतमविद्यमानं वर्षकर्म भूतस्य विद्यमानस्य वाय्वभ्रसंयोगस्य लिङ्गम् तथा गुणविनाशेपि तज्ज्ञानमात्रात् द्रव्यज्ञानमिति मन्यन्ते । न चैतद्युक्तम् । तथाहि-नाविद्यमानं कर्म विद्यमानस्य वाय्वभ्रसंयोगस्य सद्भावे लिङ्गम् । किं तर्हि? वर्षकर्मानुत्पादो व्यभिचारी । स च स्वरूपेणास्त्येवेति कथमविद्यमानम् । अथ भावरूपतया तस्यासत्त्वम्, तर्हि भावस्याप्यभावरूपेणासत्त्वमिति सर्वस्यासत्त्वमेव स्यात । तस्माद्वर्षकर्मानुत्पादो विद्यमान एव लिङ्गमित्युदाहरणान्तरमेव न्याय्यम् । प्रतिसमाधानमाह-यदुक्तं लैङ्गिकज्ञानवत् द्वे द्रव्ये इति ज्ञानं भविष्यतीति । एतन्न-विशेष्यज्ञानत्वात्, तथाहि-द्वित्वानुरागेणोत्पद्यमानत्वात् द्वे द्रव्ये इति विशेष्यज्ञानमतो विद्यमानस्यैव गुणस्यात्र व्यापारः कल्पनीयः । तथाहि-यस्मान्न वि·

शेष्यज्ञानं विशेषणसम्बन्धमन्तरेण विशेषणसम्बन्धं विना भवितुमर्ह-तीति । तदुत्पत्तौ विशेषणतज्ज्ञानतत्सम्बन्धानां कारणत्वात्, अन्यथा हि सकलकारणानां विशेष्यज्ञानोत्पत्तौ विशेषव्यापाराविशेषेण नियतस्यैव विशेषणत्वं न स्यात् । अतो विशेषणतज्ज्ञानतत्-सम्बन्धानां कारणत्वम् । तथाचाह सूत्रकारः "समवायिनः श्वैत्या-च्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते" इत्यनेन सूत्रकारस्या-प्ययमर्थोऽभिप्रेत इति दर्शयति । तथाहि—श्वेतं द्रव्यं तस्य भावश्श्वै-त्यं श्वेतगुणः तस्मात्, किंविशिष्टात्? समवायिनः समवायेन स-म्बन्धाच्छ्वैत्यबुद्धेरिति श्वेतगुणबुद्धेः । एतस्मात् कारणत्रयात् श्वेत-बुद्धिविशेष्यज्ञानं श्वेतं द्रव्यमुत्पद्यते । ते पुनर्विशेषणविशेष्यबुद्धी का-र्यकारणभूते कार्यकारणस्वभाव इति । न च लैङ्गिकज्ञानं लिङ्गानुरक्तमि-ति लिङ्गाभावेऽप्युत्पद्यत इत्याह—न तु लैङ्गिकं ज्ञानमभेदेन लिङ्गानुरा-गेणोत्पद्यते तस्माद्विषमोऽयमुपन्यास इति । योऽयं लैङ्गिकज्ञानवद्वै द्रव्ये इति भविष्यतीत्युपन्यासः स विषमः—समो न भवतीति । तथाहि-विशेष्यज्ञाने विशेषणानुराग इति लैङ्गिके त्वनुरागाभाव इति वैष-म्यम् । यदि वा विषमोऽयमुपन्यासः । उपन्यस्यते साध्यसाधनयो-रास्मिन् व्याप्तिरित्युपन्यासो लैङ्गिकवदिति दृष्टान्तः । स च विषमो लिङ्गानुरागशून्यतया तस्याविशेष्यज्ञानत्वादिति ।

अन्ये तु ते विशेषणतज्ज्ञाने कार्यस्य विशेष्यज्ञानस्य कारणभूते तस्मात् गुणं विना न द्रव्यज्ञानमिति मन्यन्ते । ते च विशेषणविशेष्य-बुद्धी कार्यकारणभूते न पुनः सर्वं विज्ञानम् तथाभूतं प्रमाणाभावात् । एतेन संकलनाज्ञानं निरस्तम् । विशेषणविशेष्यज्ञानव्यतिरेकेण ज्ञा-नान्तरे प्रमाणाभावादित्यलम् ।

ननु द्वित्वोत्पत्तेः प्राक् ज्ञानद्वयमेकत्वसामान्यज्ञानमपेक्षा-ज्ञानं च, उत्पन्ने तु द्वित्वे तत्सामान्यज्ञानं गुणज्ञानं द्रव्यज्ञानं चेति ज्ञानपञ्चकं यदि क्रमेणोत्पद्यते स कस्मान्नोपलभ्यते । अनु-पलम्भान्नास्तीति । परस्तन्निषेधार्थमाह—नाशूत्पत्तेरिति । य-दुक्तं क्रमस्यासत्त्वमित्येतन्न । आशुभावित्वेन विद्यमानस्यापि क्रम-स्यासंवेदनात् । अथाशूत्पत्तेः क्रमस्याग्रहणं कस्मिन्नुपलब्धमि-त्याह—यथा शब्दवदाकाशमित्यत्र शब्दज्ञानमाकाशज्ञानं शब्दाका-शसम्बन्धज्ञानं चेति त्रीणि ज्ञानान्याशूत्पद्यन्ते इति क्रमस्याग्रह-

णम् , तथा द्वित्वादिज्ञानोत्पत्तौ आशुभावित्वेनैव क्रमाग्रहणमित्य-दोषः । न च ज्ञानानां सहानवस्थानलक्षण एव विरोधे ज्ञानानामाशु-भावित्वेनोत्पत्तेः, अविनष्टे हि गुणे द्रव्यज्ञानं भविष्यतीति प्रतिस-माधानमेतदिति वाच्यम् । शीघ्रं कारणसद्भावेन कार्यस्यापि तथा-भावात् । अवश्यं गुणबुद्धिसमकालं गुणविनाशे तदायत्तस्य द्रव्य-ज्ञानस्यानुत्पत्तिरिति दूषणस्याव्यावृत्तेः। यदि ज्ञानयोः सहाविरोधेना-वस्थानं नास्तीति सहानवस्थानं विवक्षितमविवाद एव । अथेदानीं सहानवस्थानलक्षणविरोधाद्वध्यघातकपक्षेपि समानं दूषणमिति पर-मतमाशङ्कमान इदमाह-वध्यघातकपक्षेपि समानो दोष इति चेत् । स्यान्मतमभिप्रेतमिति संग्रहवाक्यम् । अस्य तु विवरणं वध्यघात-कपक्षेऽपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्ग इति। तथाहि-यदि गुणबुद्धिस-मकालं गुणविनाशे द्रव्यज्ञानानुत्पत्तिस्तर्हि वध्यघातकपक्षेपि तस्या-नुत्पत्तिरेव । कथं सामान्यबुद्धिसमकालं संस्कारापेक्षाबुद्धि-विनाशादिति । यथा ह्यपेक्षाबुद्धिर्द्वित्वं जनयति एवं संस्कारम-पीति । ततस्तस्या विनश्यत्ता । द्वित्वसामान्यज्ञानस्योत्पद्यमानता ततो द्वित्वसामान्यस्योत्पादो गुणज्ञानस्योत्पद्यमानता । अपेक्षाबुद्धे-र्विनाशो गुणस्य विनश्यत्ता ततो गुणज्ञानस्योत्पादोऽपेक्षाबुद्धिवि-नाशात् गुणस्य विनाश इति तदपेक्षत्वाद्द्रव्यज्ञानस्यानुत्पत्तिरेव । न । समूहज्ञानस्य संस्कारहेतुत्वादिति प्रतिसमाधानम् । तथा-हि-यदुक्तमपेक्षाबुद्धेः संस्काराद्विनाश इति । तन्न । समूहज्ञानस्य पटुवभ्यासादरप्रत्ययस्य संस्कारहेतुत्वादिति। संग्रहोक्तेर्विवरणमाह-समूहज्ञानमेव संस्कारकारणम् , नालोचनाज्ञानमपेक्षाज्ञानमिति त-स्माददोषः । किमत्र प्रमाणमिति चेत् । स्मरणानुत्पत्तिर्द्रव्यज्ञानोत्प-त्तिश्च । तथाहि-यत्र स्मरणं तत्रैव संस्कारकल्पना क्रियते । न चा-त्र तदस्तीति अभ्युपगमे द्रव्यज्ञानमेव न स्यात् । तद्दृष्टमतस्तदन्य-थानुपपत्त्याऽपेक्षाबुद्धेः संस्कारजनकत्वं निश्चीयते । प्रकारान्तराभा-वात् । अथेदानीं वध्यघातकपक्षेपि पराशयमाशङ्कते-ज्ञानयौगपद्यप्रसङ्ग इति चेत्स्यान्मतमिति सङ्ग्रहोक्तेर्विवरणम् । ननु ज्ञानानां वध्यघा-तकविरोधे ज्ञानयौगपद्यप्रसङ्ग इति । तथाच यदि ज्ञानानां वध्यघा-तकलक्षणो विरोधः-तदैकस्यावस्थाने द्वितीयस्योत्पादात् ज्ञानयौ-गपद्यं प्रसज्यत इत्यनिष्टापादनम् । तन्नानिष्टम्, अविनश्यतोरवस्थानप्र-

तिषेधात् । तथाहि ज्ञानायौगपद्यवचनेन प्रयत्नायौगपद्याच्च प्रतिशरीरमेकं मन इति सूत्रेण युगपदुत्पत्तिः अविनश्यतोश्च ज्ञानयोः परस्परविरोधेनावस्थानं प्रतिषिध्यते । वध्यघातकाविरोधे तूभयमपि नास्तीत्याह न हि वध्यघातकाविरोधे ज्ञानयोर्युगपदुत्पत्तिः अविनश्यतोश्च युगपदवस्थानमस्तीत्यदूषणमेतत् ॥

इहेदानीमुद्देशवतः लक्षणपरीक्षार्थं परिमाणं मानव्यवहारकारणमित्यादिप्रकरणम्—

**( भा० ) परिमाणं मानव्यवहारकारणम् । तच्चतुर्विधम्—अणु महद्दीर्घं ह्रस्वं चेति ।**

तत्र महद् द्विविधं–नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम्, अनित्यं त्र्यणुकादावेव । तथा चाणवपि द्विविधं–नित्यमनित्यं च । नित्यं परमाणुमनस्सु तत्तु पारिमाण्डल्यम् । अनित्यं द्व्यणुक एव । कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः । दीर्घत्वह्रस्वत्वे चोत्पाद्यमहदणुत्वैकार्थसमवेते । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहारः ।

अनित्यं चतुर्विधमपि संख्या-परिमाण-प्रचययोनि ।

तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसङ्ख्या तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति ।

द्विबहुभिर्महद्भिश्चारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम् । समानसङ्ख्यैश्चारब्धेऽतिशयदर्शनात् ।

प्रचयश्च तूलपिण्डयोर्वर्तमानः पिण्डारम्भकावयव-

हारो मुख्यापेक्षस्तद्वदयमणुव्यवहारोऽप्युपचरितत्वान्मुख्यपूर्व इत्य-
णुत्वसिद्धिः। तथाच कुवलयादिष्वणुव्यवहारो मुख्यपूर्वको भाक्त-
व्यवहारत्वान्माणवके सिंहव्यवहारवत्। यथाच महत्त्वाणुत्वयोर्नि-
त्यानित्यभेदो नैवं दीर्घत्वह्रस्वत्वयोराश्रयान्तरानुपपत्तेः। क वा त-
योर्वृत्तिरित्याशङ्क्याह दीर्घत्वं च ह्रस्वत्वं चेति दीर्घत्वह्रस्वत्वे ते चो-
त्पाद्यमहदणुत्वैकार्थसमवेते–उत्पाद्ये च ते महदणुत्वे चोत्पाद्यमहद-
णुत्वे ताभ्यां सहैकस्मिन्नर्थे समवेते। तथाहि—त्र्यणुकादावुत्पाद्यं
महत्त्वं तत्रैव दीर्घत्वं द्व्यणुके चाणुत्वं तत्रैव ह्रस्वत्वमिति परमा-
णूनां परिमण्डलत्वान्न ह्रस्वत्वमाकाशादेर्व्यापकत्वाच्च न दीर्घत्वं
तद्विपरीतेषु तद्व्यवहारदर्शनात्। अथ द्व्यणुक एव ह्रस्वत्वमित्युक्त-
मन्यत्रापि तद्व्यवहारोपलब्धेः। तन्न। बाधकसद्भावेनान्यत्रोपचा-
राभ्युपगमादित्याह—समिदिक्षुवंशादिष्वंजसा दीर्घेष्वपि तत्प्रकर्ष-
भावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहार इति। तथाहि—समिदा-
दिषु दीर्घत्वोत्पत्तौ कारणसद्भावादंजसा मुख्यया वृत्त्या दीर्घत्वं
दीर्घेष्वपि ह्रस्वत्वव्यवहारो दृष्ट इति मुख्यासम्भवात् उपचारः
कल्प्यते। समिदाद्यपेक्षया दीर्घत्वातिशयस्तस्य भावो विद्यमानता
वंशादौ तदभावमपेक्ष्येक्षौ ह्रस्वत्वव्यवहारः। समिधमपेक्ष्येक्षौ दी-
र्घत्वातिशयः। तत्र तदभावमपेक्ष्य समिधि ह्रस्वव्यवहारः। यदि
वा मुख्यह्रस्वत्वस्य सद्भावे किं प्रमाणम्? उपचरितो ह्रस्वव्यव-
हारः। तथाहि समिदादिषु ह्रस्वव्यवहारो मुख्यपूर्वकः भाक्तव्यव-
हारत्वात् माणवके सिंहव्यवहारवदिति।

एवं चातुर्विध्यमुक्त्वोत्पत्तिकारणमाह—अनित्यं चतुर्वि-
धमपि संख्यापरिमाणप्रचययोनीति। संख्या च परिमाणं
च प्रचयश्चेति संख्यापरिमाणप्रचयाः ते योनिः कारणम-
स्येति, संख्यापरिमाणप्रचयैः समस्तव्यस्तैर्जन्यत इति वा-
क्यार्थः। तथा च सूत्रं—कारणबहुत्वात् कारणमहत्त्वात्प्रचय-
विशेषाच्च महदिति। अनित्यग्रहणम् नित्यव्युदासार्थम्। चतुर्विधमि-
ति—न्यूनताव्यवच्छेदः। सूत्रार्थप्रक्रमस्य विवक्षितत्वादुद्देशातिक्र-
मेण महत्त्वोत्पत्तौ कारणमाह–तत्र ईश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्य-
णुकेषु बहुत्वसंख्या तैरारब्धे त्र्यणुकादिलक्षणे कार्यद्रव्ये रूपाद्यु-
त्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति। तथाचेश्वरबुद्धिर्नित्या

सकलार्थविषया चेत्येकैकगुणालम्बनास्त्येव। तामपेक्ष्यैकैकगुणैः परमाणुद्व्यणुकेषु त्रित्वमारभ्यते। परमाणुद्व्यणुकेष्विति—द्व्यणुकव्यवच्छेदार्थम्, परमाणुभ्यामेव द्व्यणुकमारभ्यते न द्व्यणुकाभ्यां व्यर्थारंभप्रसङ्गादित्युक्तम्। अतः परमाणुद्व्यणुकारब्धे कार्यद्रव्य इति। तैरारब्धम रूपाद्यपि भवतीति तन्निषेधार्थं द्रव्यग्रहणम्। द्रव्यपदं च द्रव्यत्वेपि वर्त्तत इत्यभिव्यक्तिविवक्षया तदप्यारब्धमिति कार्यग्रहणम्। त्र्यणुकादिलक्षण इति। त्र्यणुकं च तदादिलक्षणं कारणकार्यस्वरूपश्चेति। यदि वा सर्वमहद्द्रव्याणामादौ लक्ष्यत इत्यादिलक्षणं तस्मिन्नुत्पन्ने रूपाद्युत्पत्तिसमकालं द्व्यणुकेषु वर्त्तमानं त्रित्वं महत्त्वं दीर्घत्वं च करोतीति। तथाहि—कार्यवस्तुनो समवायिकारणपूर्वकत्वं दृष्टमिति त्र्यणुकस्य समवायिकारणत्वादन्येनासमवायिकारणेन भवितव्यं द्व्यणुकेषु च महत्त्वस्याभावान्न कारणगुणपूर्वकत्वम्। अथाणुपरिमाणादेव त्र्यणुके महत्त्वं कारणपरिमाणात् कार्यपरिमाणस्यातिशयोपलब्धेस्तथा च पटापेक्षया सूक्ष्मास्तन्तवः तदपेक्षया तदंशव इति दृष्टमेवं द्व्यणुकापेक्षयाऽतिशयपरिमाणसम्बन्धि त्र्यणुकं भविष्यतीति। तदसत्। यच्छब्दवाच्यं कारणपरिमाणं तच्छब्दवाच्यं कार्येपीति त्र्यणुके द्व्यणुकपरिमाणमेव स्यात्। यथा महच्छब्दवाच्यात्तन्तुगणात् उत्पद्यमानः पटः तच्छब्दवाच्य इति। एवमणुपरिमाणादणुपरिमाणमेव स्यात्। परमाणुपरिमाणाच्च द्व्यणुकेपि परिमाणमिति कल्पनायामणुत्वस्यासम्भवे कथं तस्मान्महत्त्वमिति। न चाणुत्वस्यासम्भवे परमाणुरिति युक्तम्। तथा चाणोरतिशयेनाणुः परमाणुरिति व्यपदिश्यते। अन्यथा हि विशेषणमनर्थकमेव स्यात्, व्यवच्छेद्याभावात्। महत्त्वं चापेक्ष्याणुव्यवहारः। न च परमाणुरिति। न च महत्त्वमणुपरिमाणस्य कारणत्वाभ्युपगमे, तस्मादणुभावे परमाणुव्यवहारोच्छेदप्रसङ्गात् न परमाणुपरिमाणं कारणम्। इतश्च परमाणुपरिमाणस्याणुत्वोत्पत्तावणुत्वस्य महत्त्वोत्पत्तावसमवायिकारणत्वमयुक्तम्—अत्यन्तसमानाजातीयस्यासमवायिकारणस्योपलब्धेः। तथाचात्यन्तं समानजातीयमसमवायिकारणम्, यथा शुक्लतमाद्रूपाच्छुक्लतममेव रूपम्। अत्यन्तविजातीयं च यथा संयोगाच्छब्द इति। न चैवमणुपरिमाणं महत्त्वोत्पत्तौ परमाणु-

परिमाणं चाणुत्वोत्पत्ताविति तस्यापि परिमाणत्वान्नात्यन्तं विजातीयत्वम् । परमाणुत्वं चाणुत्वस्यैव विशेषोऽणुत्वं च महत्त्वाज्जात्यन्तरमेवेति नात्यन्तसमानजातीयम् । न चात्र प्रचयः सम्भवति, रूपादीनां स्वकार्ये सामर्थ्यावधारणात् । अतः संख्यैवासमवायिकारणमिति कल्प्यते । प्रत्यासत्तिर्महती । तथाच महत्त्वं दीर्घत्वं च त्र्यणुके वर्त्तते त्र्यणुकं च द्व्यणुकेषु त्रित्वमपि तेष्वेवेति कार्यकारणैकार्थसमवायलक्षणा प्रत्यासत्तिरिति ।

नन्वेवमीश्वरबुद्धेर्नित्यत्वाद्द्व्यणुकानां च कालान्तरमवस्थानादवस्थायित्वमेव संख्याया नित्यद्रव्यसमवेतायाश्च नित्यत्वमिति । नैष दोषः । संख्यायाः कार्यत्वादवश्यं विनाशित्वमिति । निर्हेतुकविनाशप्रतिषेधेनास्या विनाशहेतोरभावात्स्थितिहेत्वदृष्टाभावाद्विनाशः कल्प्यते । यदि वेश्वरशब्दो योगीश्वरे वर्त्तते इति तद्बुद्धेरनित्यत्वात्तद्विनाशो घटत एव संख्यायाः, तथाहि—द्व्यणुके क्रियोत्पन्ना यदैव विभागमारभते संयोगस्य विनश्यत्ता तदैवैकत्वसामान्ये ज्ञानमुत्पद्यते । अपेक्षाबुद्धेरुत्पद्यमानता ततः संयोगस्य विनाशः उत्तरसंयोगस्योत्पद्यमानता अपेक्षाबुद्धेरुत्पादस्त्रित्वस्योत्पद्यमानता ततो द्व्यणुकाभ्यां संयोगस्योत्पादस्त्र्यणुकस्योत्पद्यमानता विभागकर्मणोर्विनश्यत्ता त्रित्वस्योत्पादः तत्सामान्यज्ञानस्योत्पद्यमानता ततस्त्र्यणुकस्योत्पादो विभागकर्मणोर्विनाशस्त्रित्वसामान्यज्ञानस्योत्पादो महत्त्वदीर्घत्वयोरुत्पद्यमानता अपेक्षाबुद्धेर्विनश्यत्ता त्रित्वगुणबुद्धेरुत्पद्यमानता ततो महत्त्वदीर्घत्वयोरुत्पादोऽपेक्षाबुद्धेर्विनाशः त्रित्वगुणस्य विनश्यत्ता गुणबुद्धेरुत्पादो द्रव्यज्ञानस्योत्पद्यमानता, ततो द्रव्यज्ञानसमकालं त्रित्वस्यापि विनाश इति । महत्त्वान्महत्त्वमुत्पद्यत इत्याह—द्विबहुभिर्महद्भिश्चारब्धे कारणमहत्त्वान्येव महत्त्वमारभन्त इति । द्वे च बहवश्च तैर्द्विबहुभिः । किंविशिष्टैर्महद्भिरारब्धे कार्यद्रव्ये कारणगतानि महत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम् । कथम् ? समानसंख्यैः कारणैरारब्धे कार्येऽतिशयदर्शनात् । तथाहि—स्थूलैश्चतुर्भिरारब्धं कार्यमेकमन्यैश्च सूक्ष्मैश्चतुर्भिरेव, यत्तु स्थूलैरारब्धं तदतिशयेन महत् सम्पद्यत इति महत्त्वस्यैव कारणत्वं संख्यायाश्चोभयत्र साधारणत्वात्

कारणत्वे परिमाणस्याविशेषः स्यात् । यत्र च द्वयोरारम्भकत्वम् तत्र बहुत्वासम्भवेन महत्त्वस्यैव कारणत्वमिति ।

अन्ये तु संख्यायाः परिमाणवदन्वयव्यतिरेकाभ्यामन्यत्र सामर्थ्यावधारणादिहापि कारणत्वमिति मन्यन्ते । यच्चेदं समानसंख्यैरारब्धेऽप्येकत्रातिशयदर्शनं तत्संख्यायाः कारणत्वप्रतिषेधपरम् । परिमाणत्वस्याप्यकारणत्वप्रसङ्गात् । तथाहि—यथा समानसंख्यैरारब्धमपेक्ष्य तत्र परिमाणातिशयः यथा स्थूलतमैः समानसंख्यैरारब्धमपेक्ष्य तत्परिमाणस्यानतिशयोपलब्धेः परिमाणस्याप्यकारणत्वं स्यात । तथाऽधिकपरिमाणापेक्षयानतिशयसद्भावेऽप्येतत् कारणम अन्वयव्यतिरेकाभ्यां सामर्थ्यावगतेरिष्यते । तत्सद्भावे तस्य भावस्तदभावे चाभाव इत्येतत् संख्यायामपि समानम । यदि चात्र महत्त्वोत्पत्तावकारणं संख्या तर्हि स्थूलैस्त्रिभिरारब्धमेकमन्यच्चतुर्भिरित्युभयत्रापि कारणपरिमाणस्याविशेयात् कार्यपरिमाणस्याविशेषः स्यात् । न चैतत्, चतुर्भिरारब्धे परिमाणातिशयदर्शनात् । अतः संख्यापि कारणमिति । तथा समानसंख्यैः समानपरिमाणैश्चारब्धे महत्त्वमुभाभ्यां सम्पद्यत इति युक्तमन्यत्रोभयोः सामर्थ्यावधारणादिह प्रत्यासन्नत्वाच्चेति । तथाच त्रितन्तुकादिपरिमाणं त्रितन्तुकादौ वर्त्तते । त्रितन्तुकादि च तन्तुषु तत्परिमाणं च तत्संख्या च तेष्वेवेति कार्यकारणैकार्थसमवायलक्षणा प्रत्यासत्तिरिति । कथं तर्हीदं वाक्यम्—कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वमिति । अवधारणप्रतिषेधार्थम् । तथाहि—यदुक्तं समानसंख्यैरारब्धेऽतिशयदर्शनात् कारणमहत्त्वान्येव महत्त्वमारभन्ते इति । एतन्न । बहुत्वस्याप्युक्तन्यायेन कारणत्वात । यदि वा समानसंख्यैरारब्धेऽतिशयदर्शनादिति महत्त्वस्य कारणत्वोपदर्शनमेतत् नावधारणम् इति । प्रचयस्य कारणत्वमाह—प्रचयश्च स्थूलपिण्डयोर्वर्त्तमानः पिण्डारम्भकावयवशिथिलसंयोगापेक्ष इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभत इति । तूलपिण्डश्च तूलपिण्डश्च तूलपिण्डौ, तयोर्वर्त्तमानः संयोगः प्रचयः, किंविशिष्टः पिण्डारम्भकप्रशिथिलसंयोगापेक्ष इति । पिण्डारम्भकाश्च प्रशिथिलसंयोगाश्च तानपेक्षत इति तदपेक्षः इतरेतरपिण्डावयवसंयोगापेक्षश्चेति वा समुच्चयेन तु विकल्पः । अपेक्षाकारणत्वेनाभ्युपगतयोरुभयोरप्यत्र

सद्भावात् । इतरस्य पिण्डस्येतरपिण्डावयवैः संयोगस्तथेतरस्येतरावयवैरिति । इतरेतरपिण्डयोर्वा येऽवयवास्तेषां संयोगास्तानपेक्षत इति तदपेक्षः । स च द्वाभ्यां तूलकाभ्यामारब्धेपि द्वितूलके महत्त्वमारभत इति । त्रितूलकादावप्येतत्समानम् । प्रत्यासत्तिस्तु महती द्वितूलकपरिमाणाद्वितूलके वर्त्तते । द्वितूलकं तु तूलपिण्डयोस्तत्संयोगोपि । तत्रैव बहुत्वमहत्त्वयोः सद्भावेपि कारणत्वप्रतिषेध इत्याह–न बहुत्वमहत्वानि द्वितूलकादौ महत्त्वमारभन्ते । कुतः? समानसंख्यापलपरिमाणैरारब्धेऽतिशयदर्शनात् । तथाहि––त्रिभिस्तूलपिण्डैः पञ्चपलैः प्रशिथिलावयवसंयोगैरारब्धमेकमन्यच्च तद्विपरीतैस्तत्र यत्प्रशिथिलसंयोगावयवैरारब्धं तत्र परिमाणातिशयो दृष्टः इति प्रचयस्यैव कारणत्वं न संख्यापलपरिमाणानाम्, तत्कारणत्वे चोभयत्राविशेषः स्यात् । अथ पलस्य सर्वत्र परिमाणाकारणत्वात् प्रसक्त्यभावे न युक्तः प्रतिषेधः । तथाहि—पाषाणादौ पलातिशयसद्भावेपि परिमाणस्यातिशयाभावः तूलपिण्डादौ च तदभावेप्यतिशयोपलब्धेः न पलस्य गुरुत्वविशेषत्वात् कारणत्वम् । किमर्थस्तत्र प्रतिषेधः । व्यामोहप्रतिषेधार्थः, तथा च परे व्यामोहाद्यद्येवंविधस्यापि पलस्य कारणत्वं प्रतिपद्येरन् । तदपि नास्ति । समानपलैरारब्धेऽतिशयदर्शनात् । अन्ये त्वस्यैव दोषस्य परिहारार्थं पलशब्दस्य समानशब्दपर्यायतां ब्रुवते–समानसंख्यापलपरिमाणैरिति । समानसंख्यैः समानपरिमाणैरित्यर्थः ।

ननु चायुक्तमवधारणं 'प्रचयस्यैव कारणत्व मिति' बहुत्वमहत्त्वयोरप्यन्यत्र सामर्थ्यावधारणे सतीह प्रत्यासन्नत्वात् । न च समानसंख्यापलपरिमाणैरारब्धेप्येकत्रातिशयदर्शनं बहुत्वमहत्त्वयोः कारणत्वप्रतिषेधे हेतुः,अन्यापेक्षयानतिशयसद्भावे प्रचयस्याप्यकारणत्वप्रसङ्गात् । तथाहि–समानसंख्यापलपरिमाणैः प्रशिथिलावयवसंयोगैश्चतुर्भिरारब्धमेकमन्यच्च तथाविधैस्त्रिभिरिति चतुर्भिरारब्धेतिशयदर्शनात् संख्यापि कारणम् । तथा स्थूलैश्चतुर्भिः प्रशिथिलावयवसंयोगैरारब्धमेकमन्यच्च स्थूलतमैस्तथाविधैरेवेत्यत्र कारणं–परिमाणातिशयेन कार्यपरिमाणस्यातिशयोपलब्धेः परिमाणस्यापि कारणत्वम् । यत्र तु समानसंख्यापरिमाणैः प्रशिथिलावयवसंयोगारब्धैर्महत्त्वमारभ्यते, तत्राविशेषेण त्रितयस्यापि कारण-

त्वमन्यत्र सामर्थ्यावधारणे सतीह प्रत्यासन्नत्वात् । वाक्यस्य तु व्याख्यानं पूर्ववत् ।

अणुत्वोत्पत्तौ कारणमाह द्वित्वसंख्या चाण्वोर्वर्त्तमाना द्व्यणुकेऽणुत्वमारभत इति । द्व्यणुकाणुपरिमाणं कार्य्यं तस्य हि समवायिकारणं द्व्यणुकमित्यन्येनासमवायिकारणेन भवितव्यम् । परमाणुपरिमाणस्य चारम्भकत्वप्रतिषेधेऽन्यस्य चासम्भवाद्वित्वसंख्यैवाण्वोर्वर्त्तमाना कार्यकारणैकार्थसमवायेन द्व्यणुकाणुपरिमाणोत्पत्तावसमवायिकारणमिति । अणुशब्दश्च सामान्यशब्दत्वात्परमाणावपि वर्त्तत एव, अणुत्वे सति परम इति विशेषणात् । विनाशस्तु द्वित्वसंख्यायाः पूर्ववद्व्याख्येयः ॥

दीर्घत्वोत्पत्तौ कारणमाह—महत्त्ववत् त्र्यणुकादौ कारणबहुत्वमहत्त्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिरिति । यथा हि महत्त्वं कारणबहुत्वसमानजातीयप्रचयेभ्यो भवत्येवं दीर्घत्वमपीति ॥ त्र्यणुके कारणबहुत्वादेव दीर्घत्वं द्वितन्तुके कारणदीर्घत्वादेवेति त्रितन्तुकादौ बहुत्वदीर्घत्वाभ्यां त्रितूलकादौ प्रशिथिलावयवसंयोगारब्धैः समस्तैः कारणबहुत्वदीर्घत्वप्रचयैर्दीर्घत्वमारभ्यत इत्यतिदेशार्थः । तथाणुत्ववद्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिरिति । यथा कारणान्तरासंभवाद्वित्वसंख्याणुत्वस्योत्पत्तावसमवायिकारणमेवं ह्रस्वत्वस्यापीति । अथ समानजातीयकारणाजन्यत्वात् त्र्यणुकादिषु वर्त्तमानयोर्महत्त्वदीर्घत्वयोः परस्परतः को विशेषः द्व्यणुके चाणुत्वह्रस्वत्वयोरिति । यतः कारणभेदात् भिद्यन्ते पदार्था महत्त्वदीर्घत्वादौ तदभाव इति । तन्न भवति । मासभेदेन महत्त्वदीर्घत्वयोर्भेदसद्भावे सति तज्जनकयोः कारणसामग्र्योर्भेदोपपत्तेः । तथाहि—कार्यभेदेन सामग्रीभेदो ज्ञायते स चेहास्त्येव, प्रतिभासभेदादित्याह—तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः । कुतो ? महत्सु दीर्घमानीयतां दीर्घेषु महदिति व्यवहारदर्शनात् । अन्यथा हि महत्त्वाविशेषात् ततो दीर्घत्वेनातिशय्यानयनं दीर्घेषु च महत्त्वेनेति न स्यात् । दृष्टश्चैतत् । तस्माद्दीर्घत्वं महत्त्वात् भेदेन प्रतिपन्नं महत्त्वं च दीर्घत्वादिति प्रतिभासभेदाद्रूपादीनामिव भेदः । समानकारणजन्यत्वं च समवाय्यसमवायिनिमित्तापेक्षया विपाकजैर्व्यभिचरति इति नाभेदे हेतुः । सामग्र्यपेक्षा-

यां तु समानकारणत्वमसिद्धम् कार्यभेदेन तद्भेदोपपत्तेः । अणुत्व-ह्रस्वत्वयोस्तु व्यवहारविशेषस्तद्दर्शिनामिति । योगिनां प्रत्यक्षस्तेषामतीन्द्रियार्थदर्शित्वात् । ह्रस्वत्वसद्भावो अस्तु भाक्तव्यवहारेण पूर्वं व्यवस्थापित इति विद्यमानत्वाद्योगिनामवश्यामितरपदार्थ-व्यावृत्ततया ग्रहणमित्यलम् । एतच्चतुर्विधमुत्पाद्यमाधारविनाशादेव विनश्यतीति कारणान्तरप्रतिषेधार्थमवधारणम् । उत्पाद्यग्रहणं तु नित्यपरिमाणव्यवच्छेदार्थमिति ॥

इदानीमुद्देशक्रमेणावसरप्राप्तस्य पृथक्त्वस्य लक्षणपरीक्षार्थं पृथक्त्वमपोद्धारव्यवहारकारणमित्यादिप्रकरणम् ।

**( भा० ) पृथक्त्वमपोद्धारव्यवहारकारणम् । तत्पुनरेकद्रव्यमनेकद्रव्यं च । तस्य तु नित्यानित्यत्वनिष्पत्तयः सङ्ख्यया व्याख्याताः ।**

**एतावांस्तु विशेषः—एकत्वादिवदेकपृथक्त्वादिष्वपरसामान्याभावः सङ्ख्यया तु विशिष्यते तद्विशिष्टव्यवहारदर्शनादिति ॥**

(व्यो०) व्यवहृतिर्व्यवहारो ज्ञानं व्यवह्रियतेऽनेनेति व्यवहारोऽभिधानं तयोर्हेतुः । हेतुः पृथक्त्वमित्युक्तेऽतिप्रसङ्गस्तदर्थमपोद्धारग्रहणम् । अपोद्धरणमपोद्धारः पृथक्करणम् । तथाप्यपोद्धारव्यवहारहेतुत्वमाकाशात्मनोर्न व्यावृत्तमिति विशेषत्वे सतीति पदमूह्यम् । पृथक्त्वसामान्यव्यवच्छेदार्थं त्व द्रव्यग्रहणमिति । पृथक्त्वमितरेभ्यो भिद्यते द्रव्यविशेषगुणत्वे सत्यपोद्धारव्यवहारकारणत्वात् । यास्त्वितरेभ्यो न भिद्यते, न चासावेवम्, यथा रूपादिरिति । व्यवहारो वा साध्यः। तथा परीक्षापरं च वाक्यम् । अपोद्धारव्यवहारो हि विशेष्यव्यवहारः । स च नर्ते विशेषणात् भवतीति रूपादिव्यवहारविलक्षणत्वाद्विलक्षणेनैव निमित्तेन भवितव्यम्, तथा रूपाद्यनुपलब्धौ पृथगितिव्यवहारदर्शनाच्च । न चेदमस्मात्पृथगितिव्यवहारो विशेषसम्बन्धात् भविष्यतीति वाच्यम् । अनित्येषु नित्यविशेषाणामभावात् । अथानित्येष्वसाधारणधर्मसम्बन्धः पृथगितिव्यवहारे निमित्तम् । तन्न । तद्विशिष्टताऽनुपलब्धेः । न हि पृथगितिव्यवहारे द्रव्यरूपादिकर्मसा-

मान्यात्मकासाधारणधर्मविशिष्टता प्रतिभाति। यच्चाभिहितं तेभ्योऽर्थान्तरं विशेषणं न पृथक्त्वम् । अथेतरेतराभावस्तर्हि निमित्तं, तथाहि—इदमिदं न भवतीदमस्माद्व्यावृत्तं पृथगर्थान्तरं विलक्षणमिति प्रत्ययाः सर्वत्र तन्निमित्ता एवेति । न । पदार्थान्तरावधिं विनैकत्वादिसंख्याविशिष्टस्य पृथगितिव्यवहारस्य ततोऽर्थान्तरत्वात्, तथाहीतरेतराभावविशिष्टो व्यवहारः पदार्थान्तरावधित्वेन प्रवर्त्तते, न चैकत्वादिसंख्यानुरक्तस्तद्विलक्षणश्चायमित्यर्थान्तरनिमित्तः।

अन्ये त्वितरेतराभावस्य प्रतिषेधामाशा( ? )(१)ज्ञानाप्रत्ययजनकमिति। न । अनित्यद्रव्येषु नित्यस्य गुणस्यानुपलब्धेराश्रयविनाशेन तद्विनाशे सर्वत्रानुपलब्धिरेव स्यात्। अनित्यतायां स्वशेषद्रव्याश्रितस्योत्पत्तिकारणाभावस्तेषां क्रमेणोत्पादात्। न चान्यत्र समवेतमुपजातमन्यत्र समवैति इत्यदर्शनात्, एकस्य च नित्यस्यानेकवृत्तौ द्रव्यत्वसामान्यरूपता स्यात्। न च द्रव्यं द्रव्यमिति प्रत्ययवत्पृथक्पृथगितिपदार्थान्तरावधिं विना प्रत्ययो दृष्टः सावधिकस्तु प्रत्ययो गुणादिष्वपीतरेतराभावनिमित्तो न सामान्यानबन्धनः, तद्विलक्षणश्चायमित्युक्तम् । अथ पृथक्त्वप्रत्यया विभिन्नस्वभावाः संख्यया विशिष्यन्त इति। अथ पूर्वं द्वित्वादरुत्पादोऽपेक्षाबुद्धिविनाशेन विनाशोपपत्तेर्न द्विपृथक्त्वादिकालेऽवस्थानम्। द्विपृथक्त्वादेश्च पूर्वमुत्पादे द्रव्यज्ञानसमकालं विनाशात् द्वित्वोत्पत्तिसमकाले नावस्थानमतो विशेष्यज्ञानोत्पत्तौ व्यापारानुपपत्तेर्द्वित्वादेर्न विशेषणत्वमिति । अथैकस्मिन्नेव काले विभिन्नपुरुषयोरपेक्षाबुद्धिद्वारेणोभयोरुत्पत्तिसम्भवाद्युक्तं द्वित्वादेर्विशेषणत्वमिति चेत्। न। पुरुषान्तरबुद्धिसम्पादितस्य द्वित्वादेः पुरुषान्तरेणाग्रहणात्। गृहीतं च विशेषणमिति। नैष दोषः। स्मर्यमाणस्यापि लक्षणत्वाभ्युपगमात् । तथाहि—द्विपृथक्त्वोत्पादिकायाः स्वकारणात् अपेक्षाबुद्धेरुत्पत्तिः द्वित्वस्मरणोत्पद्यमानता द्विपृथक्त्वस्यापेक्ष्यमाणता। ततो द्वित्वस्मरणस्योत्पादः द्विपृथक्त्वस्योत्पादोऽपेक्षाबुद्धेर्विनश्यत्ता द्विपृथक्त्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः। ततो द्वित्वस्मरणाद्विपृथक्त्वज्ञानजनकत्वमेवेति मन्यमाना गुणादिष्वप्येतस्मादयं व्यावृत्तो

---

(१) अत्र व्योमवती पाठः परिभ्रष्ट इति प्रतिभाति।

विलक्षण इत्यादिव्यवहारः पृथक्त्वनिमित्तः, स च निर्गुणत्वात् गुणादीनामुपचार इति मन्यन्ते। न च पृथगिति ज्ञानं निर्विषयं वासनाप्रभवम्,तस्याः पूर्वमेव प्रतिषेधात्। लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासार्थं विभागमाह तत्पुनरेकद्रव्यमनेकद्रव्यञ्चेति । एकमेव द्रव्यमाश्रयोऽस्येत्येकद्रव्यम्, अनेकमेव च द्रव्यमाश्रयोऽस्याविनश्यद्द्रव्यस्येत्यनेकद्रव्यं तस्य द्विविधस्यापि नित्यानित्यत्वनिष्पत्तयः संख्यया व्याख्याता इत्यतिदेशः । तथा ह्येकपृथक्त्वं नित्येष्वनिष्पद्यमानत्वान्नित्यम् । कार्येषु च कारणगुणपूर्वकमाश्रयविनाशादाशु विनश्यतीत्यतिदेशार्थः । द्विपृथक्त्वादेर्द्वित्वादिवदपेक्षाबुद्धित उत्पत्तिर्विनाशस्तु तद्विनाशात्। क्वचिदाश्रयविनाशाच्च। शतपृथक्त्वाद्युत्पत्तिस्तु शतसंख्योत्पत्तिन्यायेनेत्यतिदेशः। नन्वेवं तर्हि शतसंख्यातो न विशेषः स्यादित्याशङ्क्याह—एतावांस्तु विशेषः । एकत्वादिवदेकपृथक्त्वाद्यपरसामान्याभाव इति। यथा हि संख्यात्वव्यतिरेकेणापरमेकत्वादिसामान्यमस्ति नैवमेकपृथक्त्वादीति। अथानुगतज्ञानादयुक्तमेतत्। नान्यथा तदुपपत्तेः। तथाहि—द्रव्यगुणकर्मानिमित्तमबाध्यमानमनुगतं ज्ञानं सामान्यसत्तां दर्शयति । पृथक्त्वे चैकत्वादिसंख्यावशादनुगतज्ञानं घटत इत्याह संख्यया तु विशिष्यते । कुतस्तद्विशिष्टव्यवहारदर्शनात्–इदमेकं पृथक् द्वे पृथक् त्रीणि पृथगित्यादि। अथाशेषद्रव्येष्वेकमेवास्तु पृथक्त्वं संख्यावत् विशेषणज्ञानत्वाद्विशेषणमपेक्षते, न च रूपादीनामन्यतमं निमित्तं तद्व्यवहारविलक्षत्वादिति निमित्तान्तरेण भवितव्यमिति।

(१)तत्र क्रियया गुणबुद्धेरुत्पादो द्रव्यबुद्धेरुत्पद्यमानता द्वित्वस्मरणस्य विनश्यत्ता अपेक्षाबुद्धेर्विनाशः द्विपृथक्त्वगुणस्य विनश्यत्ता ततो द्वे पृथगिति द्रव्यबुद्धेरुत्पादः गुणबुद्धेर्विनश्यत्ता द्वित्वस्मरणस्य विनाशोऽपेक्षाबुद्धिविनाशात् गुणस्य विनाशः सं-

---

(१) इतःप्रभृति पृथक्त्वप्रकरणान्तः पाठो संयोगप्रकरणे आदर्शपुस्तके आसीत किन्तु द्विपृथक्त्वोत्पादकप्रक्रियानिरूपकत्वादयमत्र निवेशितोऽपि स्थानभ्रष्टत्वात्पाठभ्रष्टत्वाच्चासंगत इव दृश्यते स च विद्वद्भिः स्वयं योजनीयः।

स्कारस्योत्पद्यमानता ततः संस्काराद्द्रव्यबुद्धेर्विनाश इति । यदि वा द्वित्वोत्पादिकाया अपेक्षाबुद्धेरुत्पादो द्वित्वस्योत्पद्यमानता द्विपृथक्त्वोत्पादिकायाश्चापेक्षाबुद्धेरुत्पद्यमानता ततो द्वित्वस्मरणस्योत्पादः तद्बुद्धेरुत्पद्यमानता द्विपृथक्त्वोत्पादिकायाश्चापेक्षाबुद्धेरुत्पादो द्विपृथक्त्वस्योत्पद्यमानता द्वित्वोत्पादिकाया अपेक्षाबुद्धेर्विनश्यत्ता ततो द्विपृथक्त्वस्योत्पादः द्वित्वगुणबुद्धेरुत्पादः द्वित्वगुणात्तज्ज्ञानात्तदेकार्थसमवायाच्च द्विपृथक्त्वेगुणबुद्धेरुत्पद्यमानता अपेक्षाबुद्धेर्विनाशः द्वित्वस्य विनश्यत्ता द्विपृथक्त्वोत्पादिकायाश्चापेक्षाबुद्धेर्विनश्यत्तेत्येकः कालः। ततो द्विपृथक्त्वगुणबुद्धेरुत्पादो द्रव्यबुद्धेरुत्पद्यमानता द्वित्वगुणस्य विनाशः तद्बुद्धेर्विनश्यत्ता द्विपृथक्त्वोत्पादिकाया अपेक्षाबुद्धेर्विनाशो द्विपृथक्त्वगुणस्य विनश्यत्तेत्येकः कालः। ततो द्वे पृथगिति द्रव्यबुद्धेरुत्पादो गुणबुद्धेर्विनश्यत्ता द्विपृथक्त्वगुणस्य विनाशो द्वित्वगुणबुद्धेश्च विनाशः संस्कारस्योत्पद्यमानता। ततः संस्काराद्द्रव्यबुद्धेर्विनाशः इति। अत्र तु विद्यमानस्य द्वित्वगुणस्य स्वानुभवसहकारिणो द्विपृथक्त्वगुणज्ञानोत्पत्तौ व्यापार इति विशेषः।

अन्ये त्वेकैकगुणालम्बनैका बुद्धिरुत्पद्यते। द्वित्वद्विपृथक्त्वयोरुत्पद्यमानतेति मन्यन्ते। ततो द्वित्वद्विपृथक्त्वयोरुत्पादो द्वित्वगुणज्ञानस्योत्पद्यमानता ततो द्वित्वगुणज्ञानस्योत्पादो द्विपृथक्त्वज्ञानस्योत्पद्यमानता अपेक्षाबुद्धेर्विनश्यत्ता ततो द्विपृथक्त्वगुणज्ञानस्योत्पादो द्रव्यज्ञानस्योत्पद्यमानता द्वित्वगुणज्ञानस्य विनश्यत्ता अपेक्षाबुद्धेर्विनाशो द्वित्वद्विपृथक्त्वयोर्विनश्यत्ता ततो द्रव्यज्ञानस्योत्पादो द्विपृथक्त्वगुणज्ञानस्य विनाशो द्वित्वद्विपृथक्त्वयोर्विनाशो संस्कारस्योत्पद्यमानता ततः संस्काराद्द्रव्यबुद्धेर्विनाश इत्यत्र तु विद्यमानस्य द्वित्वगुणस्य द्वे पृथगिति द्रव्यज्ञानस्योत्पत्तावपि व्यापार इति विशेषः। अथ समवेतानामेव गुणकर्मसामान्यानां विशेषणतोपलब्धेः कथं द्विपृथक्त्वाद्यावर्त्तमानं द्वित्वादि विशेषणमिति चेत्। बाधकोपपत्तेरुपचारेणेत्युक्तम् पदार्थसङ्करे। तथाच सूत्रम्–'गुणकर्मसु गुणकर्माभावात् गुणकर्मापेक्षं न विद्यत' इति। गुणकर्मसु समवेतानां गुणकर्मणामभावात्तदपेक्षणम् मुख्यज्ञानं नास्तीति॥

(भा०) संयोगः संयुक्तप्रत्ययनिमित्तम्। स च

द्रव्यगुणकर्महेतुः। द्रव्यारम्भे निरपेक्षः—तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्चेति वचनात्। गुणकर्मारम्भे तु सापेक्षः-संयुक्तसमवायाद् अग्नेर्वैशेषिकमिति वचनात्।

अथ कथंलक्षणः कतिविधश्चेति ?

अप्राप्तयोः प्राप्तिः संयोगः। स च त्रिविधः—अन्यतरकर्मजः उभयकर्मजः संयोगजश्च। तत्रान्यतरकर्मजः:—क्रियावता निष्क्रियस्य यथा स्थाणोः श्येनेन विभूनां च मूर्तैः। उभयकर्मजो—विरुद्धदिक्क्रिययोः सन्निपातः यथा मल्लयोर्मेषयोर्वा। संयोगजस्तूत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः।

स चैकस्माद् द्वाभ्यां बहुभ्यश्च भवति। एकस्मात् तावत् तन्तुवीरणसंयोगात् द्वितन्तुकवीरणसंयोगः। द्वाभ्यां तन्त्वाकाशसंयोगाभ्यामेको द्वितन्तुकाकाशसंयोगः। बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः।

एकस्माच्च द्वयोरुत्पत्तिः। कथम् ? यदा पार्थिवाप्ययोरण्वोः संयोगे सत्यन्येन पार्थिवेन पार्थिवस्यान्येनाप्येन चाप्यस्य युगपत्संयोगौ भवतस्तदा ताभ्यां संयोगाभ्यां पार्थिवाप्ये द्व्यणुके युगपदारभ्येते। ततो यस्मिन् काले द्व्यणुकयोः कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिः तस्मिन्नेव काले इतरेतरकारणाकारणगतात् संयोगादितरेतरकार्याकार्यगतौ संयोगौ युगपदुत्प-

युते। किं कारणम्? कारणसंयोगिना ह्यकारणेन कार्यमवश्यं संयुज्यते इति न्यायः। अतः पार्थिवं द्व्यणुकं कारणसंयोगिनाप्येनाणुना सम्बध्यते आप्यमपि द्व्यणुकं कारणसंयोगिना पार्थिवेनेति। अथ द्व्यणुकयोरितरेतरकारणाकारणसम्बद्धयोः कथं परस्परतः सम्बन्ध इति? तयोरपि संयोगजाभ्यां संयोगाभ्यां सम्बन्ध इति।

नास्त्यजः संयोगो नित्यपरिमण्डलवत् पृथगनभिधानात्। यथा चतुर्विधं परिमाणमुत्पाद्यमुक्त्वाऽऽह नित्यं परिमण्डलमित्येवमन्यतरकर्मजादिसंयोगमुत्पाद्यमुक्त्वा पृथङ्नित्यं ब्रूयान्न त्वेवमब्रवीत् तस्मान्नास्त्यजः संयोगः। परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मजः संयोगः। विभूनां तु परस्परतः संयोगो नास्ति युतसिद्ध्यभावात्। सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं पृथगाश्रयाश्रयित्वं चेति।

विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्विभागात्, क्वचिदाश्रयविनाशादपि। कथम्? यदा तन्त्वोः संयोगे सत्यन्यतरतन्त्वारम्भके अंशौ कर्मोत्पद्यते तेन कर्मणा अंश्वन्तराद्विभागः क्रियते विभागाच्च तन्त्वारम्भकसंयोगविनाशः संयोगविनाशात् तन्तुविनाशस्तद्विनाशे तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाश इति॥

(व्यो०) इदानीमुद्देशवतः संयोगस्य लक्षणपरीक्षार्थं संयोगः संयुक्तप्रत्ययनिमित्तमित्यादिप्रकरणम्। प्रतीतिः प्रत्ययो ज्ञानं प्रतीयतेऽनेनेति प्रत्ययोऽभिधानं तयोर्निमित्तं सर्वेऽपि पदार्था इति संयुक्तप्र-

हणम् । तथापि संयुक्तप्रत्ययनिमित्तत्वमाकाशात्मनोर्विद्यत इति विशेषणत्वे सतीति कार्यमतः संयोग इतरेभ्यो भिद्यते विशेषणत्वे सति संयुक्तप्रत्ययनिमित्तत्वात्, यस्त्वितरस्मादसंयोगान्न भिद्यते न चासावेवं यथा रूपादिरिति । परीक्षापरत्वेनापि सम्बध्यते संयोगः संयुक्तप्रत्ययनिमित्तमिति वाक्यम् ।

अथ विशिष्टोत्पादाद् द्रव्यमेव संयुक्तव्यवहारनिमित्तम् । तथाहि—विश्लिष्टक्षणात्संश्लिष्टक्षणोत्पादे संयुक्तव्यवहारो दृष्टो नान्यथेति । तदसत् । विशिष्टतायाः व्यतिरेकानभ्युपगमे तस्या द्रव्यरूपतया सर्वत्राविशेषात् द्रव्यमात्रे संयुक्तप्रत्ययः स्यात् । व्यतिरेके तु येन सता रूपादिविलक्षणेन संयुक्त इति व्यवहारः स एव संयोग इति न किंचित् बाध्यते । संश्लेषस्यात्र संयोगरूपत्वादिति । न चायं व्यवहारो वासनानिमित्तः । तस्याः पूर्वमेव प्रतिषेधात् । अर्थक्रियामाह स च द्रव्यगुणकर्महेतुरिति । तत्सद्भावे प्रमाणं चेदमित्यवेहि । न हि तन्तुसंयोगादृते पटस्योत्पत्तिर्भेरीदण्डसंयोगं विना च शब्दस्य हस्ततोमरादिसंयोगाभावे च तोमरकर्मण इति संयोगोऽभ्युपगन्तव्यः । कथं पुनर्द्रव्यारम्भकत्वमस्येत्याह—द्रव्यारम्भे निरपेक्ष इति । यद्यपि समवाय्यादिकरणमपेक्षते । तथाप्यनपेक्षः पश्चाद्भाविकारणानपेक्षणात् । यथा च व्याख्यातमेतत्तथा भवति—नान्यथेति । कुतो ज्ञातमिति चेत् । 'सापेक्षेभ्यो निरपेक्षेभ्यश्चेति' वचनात् । अस्य च सूत्रस्यायमर्थः । पूर्वमन्त्यतन्तुसंयोगोत्पत्तेः सापेक्षास्तन्तवः पटं नारभन्ते । तज्जातीयानां तु पटान्तरे सामर्थ्यावधारणात् अन्त्यतन्तुसंयोगसम्पादनायोपादीयन्ते । तदुत्पत्तौ चानपेक्षास्तदनन्तरमेवारम्भन्त इति द्रव्यारम्भे निरपेक्षः संयोगः । अत एवान्त्यसंयोगव्यतिरेकेण नान्या शक्तिस्तस्याश्चरमसहकारिरूपत्वादित्युक्तं पृथिव्यधिकारे । न च पूर्वस्य विरलदेशक्षणस्य विनिवृत्तौ अविरलदेशक्षणस्य विशिष्टस्योत्पादे पटव्यवहारादलं संयोगकल्पनयेति वाच्यम् । क्षणभङ्गस्य प्रतिषेधात् । अवयवव्यतिरिक्तस्य चावयविनो व्यवस्थापनादिति । गुणकर्मारम्भे तु सापेक्षः पश्चाद्भाविनिमित्तापेक्षत्वादिति । कथं ज्ञायत इत्याह—'संयुक्तसमवायादग्नेर्वैशेषिक'मिति वचनात् । अस्यार्थः । संयुक्तः पार्थिवेन परमाणुनाऽग्निः तत्र समवायादग्नेः सम्बन्धिनं वै-

शेषिकगुणमुष्णस्पर्शमपेक्षमाणः पार्थिवपरमाण्वाग्निसंयोगः पाकजानारभते । अग्नेः सम्बन्धिनमुष्णस्पर्शमपेक्षमाणो वैशेषिकं रूपादिकमारभते । ननूष्णस्पर्शस्य चिरोत्पादान्न पश्चाद्भावित्वमस्ति, पूर्वोत्पन्नकारकापेक्षित्वं द्रव्यारम्भे संयोगस्येष्यत एवेत्यविशेषः स्यात् । न श्यामादिनिवृत्तिविशिष्टस्य पश्चाद्भावात् । तथा हस्तात्मसंयोगः पश्चाद्भाविनं प्रयत्नमपेक्षमाणो हस्ते कर्मारभते । नन्वेवमप्यात्ममनःसंयोगस्य बुद्ध्याद्युत्पत्तौ न पश्चाद्भाविनिमित्तत्वमस्ति शरीरसम्बन्ध इति चेत् । न । तस्य पश्चाद्भावानुपपत्तेः । यद्यपि संहारावस्थायामात्ममनःसम्बन्धसद्भावेपि न ज्ञानं शरीरसम्बन्धे तु भवति । तथापि शुक्रशोणितसम्बन्धसमकालं मनःसम्बन्धाभ्युपगमादवश्यं प्राक्तनसंयोगस्य निवृत्तिरिति न तदपेक्षया शरीरसम्बन्धश्चरमभावी परिनिष्पन्नेपि च शरीरे मनसः क्रियाद्वारेण सम्बन्धात्तथा शरीरस्यापि भवतीति न तत्र पूर्वापरभावे प्रमाणमस्ति । न चैवमात्ममनःसम्बन्धस्यानपेक्षित्वमेव सुखदुःखादीनां निमित्तकारणानां तदुत्तरकाले भावात् । तथाहि–इच्छोत्पत्तावात्ममनःसम्बन्धस्य सुखं स्मरणं वा पश्चाद्भावित्वादपेक्षाकारणमेवं द्वेषाद्युत्पत्तावपि दुःखादेः कारणत्वमभ्यूह्यम् । शरीरसम्बन्धस्य तु नियमेन पश्चाद्भावित्वं निषिध्यते न कारणत्वमिति । एवं कर्मोत्पत्तावपि संयोगस्य न सर्वत्र चरमभाविनिमित्तं सम्भवतीति । तथा शाखादावुपरि पाषाणादिसंयोगात् गुरुत्वापेक्षादधोगमनम् । नदीस्रोतसि च द्रवत्वापेक्षात्तृणोदकसंयोगात्तृणादौ गमनं च गुरुत्वद्रवत्वयोः पश्चाद्भावित्वमस्तीति । नन्वेवं तर्हि गुणकर्मारम्भे सापेक्ष इत्ययुक्तम् वाक्यम् । न अयोगव्यवच्छेदानभ्युपगमात् । तथाच गुणकर्मारम्भ एव सापेक्षो न तु सापेक्ष एवानपेक्षितत्वस्याप्युपलब्धेः ।

अथ कथं लक्षणः कतिविधिश्चेति वाक्यं लक्षणस्य निर्णीतत्वाद्यर्थम् । न । लक्षणान्तराभिधित्सयास्योपपत्तेः । यद्यप्युपसर्जनस्य प्राग्लक्षणमुक्तम् । तथापि स्वातन्त्र्येण कथमस्य लक्षणमित्याशङ्का भवत्येव । परीक्षापरमेव तद्वाक्यं इत्यन्ये । यदि वा विपर्यस्तोयं कथं लक्षणमस्येति न सम्भवत्येव संयोगस्य लक्षणमिति मन्यन्ते । कतिविधश्चेति भेदार्थं प्रश्नः । तत्र लक्षणमाह अप्राप्तयोः प्राप्तिः संयोग इति । प्राप्तिः समवायोऽपि भवतीत्यप्राप्तयोरिति पदम् । पर्यायशब्दस्य

च लक्षणत्वमिष्टमेव। स च प्रत्यक्षेण गृह्यत इति न संयोगस्यासम्भवेन लक्षणस्याश्रयासिद्धत्वमिति।

स च त्रिविध इति भेदप्रतिपादनं सामान्यलक्षणस्यासम्भवित्वपरिहारार्थम्। केन रूपेण त्रैविध्यमित्याह--अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोग इति। तत्रान्यतरस्मिन् कर्म तस्माज्जातोऽन्यतरकर्मजः यथा स्थाणोः श्येनेनेति विभूनां च मूर्तैरित्युदाहरणद्वयमवान्तरविशेषविवक्षया। तथाहि—श्येनस्थाणुसंयोगः कर्मणा संयोगेन च जन्यते। विभूनां तु परमाणुभिः संयोगः कर्मणैवेति संयोगकर्मणोश्च व्यापाराविशेषेऽपि कर्मणैव व्यपदेशसङ्ग्रहार्थमन्यतरकर्मजत्वमुभयत्राप्यस्तीत्यवबोधः। नन्वेवं संयोगजः कर्मजश्चेति वाच्यम्, तद्विशेषत्वादन्येषामिति। सत्यम्। तथापि कर्मजस्यैतावानेव भेद इति परिसंख्यार्थमन्यतरादिग्रहणम्, न संयोगस्य कारणत्वप्रतिषेधार्थपरम्। तथाच प्रयत्नापेक्षाच्छ्येनचरणसंयोगाच्चरणक्रियाया उत्पादो विभागस्योत्पद्यमानता श्येनावयविन्यस्वकारणात् क्रियाया उत्पद्यमानता ततः श्येनचरणविभागस्योत्पादः संयोगस्य विनश्यत्ता श्येनावयविकर्मणोऽप्युत्पादो विभागस्योत्पद्यमानता ततः श्येनचरणसंयोगस्य विनाश उत्तरसंयोगस्योत्पद्यमानता श्येनावयविविभागस्योत्पादः श्येनावयविकर्मणा च श्येनस्थाणुसंयोगो जन्यते। प्रत्यासन्नत्वे सत्युभयोः सामर्थ्यावधारणात्। अतः श्येनस्थाण्वोः समवायिकारणत्वं श्येनक्रियायास्तच्चरणस्थाणुसंयोगस्य चासमवायिकारणत्वम्। प्रत्यासत्तिस्तु श्येनचरणसंयोगस्य महत्यपि सम्भवतीत्यन्यतरावरोधे न विशेषहेतुरस्तीति वक्ष्यामः। उभयकर्मजोऽप्युभयोः कर्मणी ताभ्यां जातो यथा मल्लयोर्मेषयोर्वा। अत्राप्यवयवकर्मभ्यां विभागसमकालमवयविनः कर्माभ्युपगमे संयोगैरवयविकर्मभ्यां च संयोगो जन्यत इति चिन्त्यम्। यथा ह्यवयवकर्मावयवान्तरेण संयोगं करोत्येवं तदवयविनापीतरावयवकर्मापीतरावयवकर्मसंयोगवत्तदवयविनापीति संयोगत्रितयम्। तच्च प्रत्यासन्नत्वे सति सामर्थ्यावधारणात् कारणमिति मेषयोः समवायिकारणत्वम्।(१) संयुक्तप्रत्यये हि विशेष्यावयवावयविसंयोगस्य

---

(१) अत्रैव द्विपृथक्त्वोत्पादकप्रक्रियापाठ आसीत्।

त्वासमवायिकारणत्वं शेषं निमित्तकारणमिति । केवलोभयकर्मजत्वं च परमाणुद्वयसंयोगस्य द्रष्टव्यम् । अन्ये तूभयपदस्य लुप्तविभक्तिकस्य पूर्वोत्तरेण सम्बन्धात् संयोगकर्मजभेदस्यापि ग्रहणं भविष्यत्येवेति मन्यन्ते । तथाहि—संयोगकारणत्वेनोभयोरुपलम्भात् कर्मणः स्वशब्देनोपादाने अन्यतरः संयोगो लभ्यत एव । अन्यतरश्च कर्म चान्यतरकर्मणी ताभ्यां जातोन्यतरकर्मजः स चोभयः एकेन कर्मणा सङ्गत्य द्वितीयेन जन्यते । द्वाभ्यां च संयोगसद्वितीयाभ्यामिति । तथोभयः केवलकर्मजोप्येकेन कर्मणा जन्यते द्वाभ्यां चेति।संयोगजस्तूत्पन्नमात्रस्य चिरोत्पन्नस्य चेत्युभयस्तस्य लक्षणमाह अक्रियस्येत्यादि । अक्रियस्येत्ययं नियमः कैः सहेत्याह-अकारणैः, किंविशिष्टैः? कारणसंयोगिभिरिति । कारणेन संयोगास्ते येषां तानि तथोक्तानि तैः कारणसंयोगिभिरकारणैः सहाक्रियस्य यः संयोगः स संयोगजोन्यस्य कारणाभावात् । संग्रहोक्तेर्विवरणमाह—कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोग इति । कारणमत्र समवायिकारणं स्वकार्यस्य तदपेक्षयान्यदकारणं तयोर्यः संयोगस्तत्पूर्वकः कार्याकार्यगतः संयोगः प्रकृतस्य कारणस्य यत् कार्यं तत् संयुक्तं चान्यदकार्यं तयोः संयोगज इति । तत्र चिरोत्पन्नस्योदाहरणं विभागजविभागावसरे वक्ष्यमाणमित्युत्पन्नमात्रस्य विभागद्वारेणोदाहरणमाह स चैकस्मादित्यादि । स च संयोगजसंयोग एकस्माद्वाभ्यां बहुभ्यश्च । च शब्दादेकस्माद्वाविति विभागः । एकस्मात्तावत्तन्तुवीरणसंयोगाद् द्वितन्तुवीरणसंयोग इति । तथाहि—तन्तोर्वीरणेन संसृष्टस्य तन्त्वन्तरेणाभिसम्बन्धे सति द्वितन्तुकमुत्पद्यते तस्य च रूपाद्युत्पत्तिसमकालं वीरणेन संयोगो जन्यत इति तदुत्पत्तावसमवायिकारणमन्वेषणीयम् । न चात्र क्रिया सम्भवत्युभयोर्निष्क्रियत्वाद्रूपादीनां च स्वकार्योत्पत्तावेव सामर्थ्यावधारणात् । असमवायिकारणं च विना वस्तुभूतस्य कार्यस्योत्पत्तिर्नोपलब्धेति तन्तुवीरणसंयोग एव समानजातीयत्वे सति प्रत्यासन्नत्वादसमवायिकारणमिति । प्रत्यासत्तिस्तु कार्यैकार्थसमवायः कार्यकारणैकार्थसमवायश्चेत्युभयरूपा च सम्भवत्येवेति । कार्यैकार्थसमवायस्यैव ग्रहणं कारणेनाव्यवधानादिति केचित् । महती तु यत्र कारणवृत्तीनामेव कार्ये गुणारम्भकत्वं तत्रैव प्राप्नोति । न चैकत्वारम्भकत्वे गुणाश्च गुणान्तरमारभन्त इति

सूत्रविरोधः। कारणवृत्तीनां समानजात्यारम्भकाणामेव नियमात्। तथाहि ये कारणवृत्तयः समानजातीयमेवारभन्ते तेषामनेकत्वसंख्यायुक्तानामेवारम्भकत्वमिति नियमः। तदेवं द्वितन्तुकवीरणयोः समवायिकारणत्वं तन्तुवीरणसंयोगस्यासमवायिकारणत्वम् शेषं निमित्तकारणमिति। द्वितन्तुकवीरणसंयोगस्योत्पत्तिर्द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोग इति तन्तोराकाशसम्बद्धस्य तन्त्वन्तरेणाभिसम्बन्धे सति द्वितन्तुकमुत्पद्यते तन्तुक्रिया च तन्त्वन्तरेणेव चाकाशदेशेनापि संयोगं करोति प्रतिबन्धकाभावात्, उत्पन्ने तु द्वितन्तुके रूपाद्युत्पत्तिसमकालमाकाशेनापि संयोगो भवत्येव। किमत्र प्रमाणमिति चेत्। अनुमानम्। तथाहि द्वितन्तुकं स्वकारणसंयोगिना संयुज्यते तत्संयुक्तकारणकार्यत्वाद्वीरणसंयुक्तद्वितन्तुकवत्। आकाशं वा स्वसंयुक्तकारणकार्येण संयुज्यते तत्कारणसंयोगित्वात् द्वितन्तुकसंयुक्तवीरणवत्। सिद्धे च संयोगे तस्य कार्यत्वात् उत्पत्तिकारणं चिन्त्यम्। तत्र द्वितन्तुकाकाशयोः समवायिकारणत्वमित्यन्येनासमवायिकारणेन भवितव्यम्। न च रूपाद्युत्पत्तिसमकालं द्वितन्तुके क्रिया सम्भवतीति तन्त्वाकाशसंयोगयोः समानजातीयत्वे सति प्रत्यासन्नत्वादसमवायिकारणत्वमिति। प्रत्यासत्तिस्तूभयरूपापि सम्भवतीति पूर्ववत् ग्राह्यम्। बहुभ्यश्च तन्तुतुरीसंयोगेभ्यः एकः पटतुरीसंयोगो तन्तूनां तुर्या सह संयोगे सत्यन्त्यतन्तुसंयोगानन्तरं पट उत्पद्यते। तस्य तत्पटाद्युत्पत्तिसमकालं तुर्या सह संयोगो गृह्यते इत्युत्पत्तिकारणं वाच्यम्। तत्र पटतुर्योः समवायिकारणत्वमन्यस्यासमवायिकारणस्यानुपलब्धेस्तन्तुतुरीसंयोगानामसमवायिकारणत्वम्। प्रत्यासत्तिस्तु पूर्ववद्वाच्येति।

ननु चायुक्तमेतत्–तन्तूनां पटोत्पत्तावकारणत्वात्। कारणाकारणसंयोगपूर्वकश्च कार्याकार्यगतः संयोगः संयोगज इति। तन्तोस्तन्त्वन्तरेणाभिसम्बन्धे सति द्वितन्तुकमुत्पद्यते। पुनस्तन्त्वन्तरेणाभिसम्बन्धेऽन्यत् कार्यमित्यनेककार्यव्यवधानेन पटोत्पत्तेः कथं तन्तूनां पटोत्पत्तौ कारणत्वम्। नारब्धकार्यस्यैव सहकार्यन्तरप्राप्तावारंभकत्वे सत्यारब्धारम्भकवादः स्यात्। तत्र च मूर्त्तानां समानासमानदेशत्वम। तथाहि तन्तुभ्यामारब्धं तन्त्वोर्वर्त्तते। पुनर-

न्यसहिताभ्यामारब्धं तयोस्तत्र चेत्येवमुत्तरोत्तरेष्वप्यूह्यम् । अथा-न्यसहिताभ्यामारब्धमेकस्मिन्नेव वर्त्तत इत्येकद्रव्यवृत्तित्वं स्यात् । इह तन्तुषु पट इति प्रत्ययाभावश्च । तद्विनाशे चावान्तरकार्यानुप-लम्भः शेषं चारभ्यारम्भकवादे दूषणं पृथिव्यधिकारे ज्ञेयम् । 'तस्मा-द्व्योमादिसम्बन्धादवयवाक्रियाद्वारेणावान्तरकार्यविनाशे तन्त्वन्तरा-भिसम्बन्धकालमवस्थितसंयोगास्तन्तवः पुनः कार्यान्तरमार-भन्ते इत्येष न्यायस्तावद्यावदन्त्यतन्तुसंयोगात्पटोत्पत्तिरिति । न चा-वान्तरकार्योत्पत्तेर्वैयर्थ्यम् । तदन्तरेणाभिप्रेतकार्यानुत्पत्तेः । य-थाहि विशिष्टस्थानप्राप्तिर्नावान्तरप्राप्तिं विना सम्पद्यत इत्यकार-णत्वेपि तत्सद्भावः, तद्वदवान्तरकार्यं विनाभिप्रेतकार्यं न सम्पद्यत इति । तस्मात् सद्भावोऽभ्युपगन्तव्यः । कारणत्वं तु निषिध्यते तद-पायेप्युत्पत्तेरित्यलम् ॥

अथैकस्मात्संयोगाद्द्वयोः संयोगयोरुत्पत्तिः कथमित्याह यदा पा-र्थिवाप्ययोरण्वोः संयोगे सत्यन्येन पार्थिवेन परमाणुना सह पार्थि-वस्याप्येन चाप्यस्य युगपत्संयोगौ भवतः तदा ताभ्यां समानजाती-यद्रव्यसम्बन्धात् पार्थिवाप्ये द्व्यणुके युगपदारभ्येते । ततो द्व्यणुको-त्पादानन्तरं यस्मिन्नेव काले कारणगुणपूर्वप्रक्रमेण द्व्यणुकयो रूपा-द्युत्पत्तिस्तस्मिन्नेव काले इतरेतरकारणाकारणगतसंयोगादितरे-तरकार्याकार्यगतौ संयोगौ युगपदुत्पद्येते । इतरः परमाणुः कारणं स्व-कार्यस्येतरः अकारणं तदपेक्षया एवमन्योपीति, तद्गताच्चत्समवे-तात् संयोगादितरेतरकार्याकार्यगतौ इतरत् पार्थिवं द्व्यणुकं कार्यं स्वकारणस्येतरश्चाप्यपरमाणुरकार्यः तथेतरदाप्यद्व्यणुकं कार्यमि-तरश्च पार्थिवपरमाणुरकार्यस्तद्गतौ संयोगौ युगपदुत्पद्येते । तत्र च द्व्यणुकपरमाण्वोः समवायिकारणत्वमिति अन्यदसमवायिकरणं चिन्त्यम् । न चात्र क्रिया सम्भवत्युभयोर्निष्क्रियत्वादिति परमा-ण्वोः संयोगः प्रत्यासन्नत्वे सति सामर्थ्यावधारणात् कारणमिति । अथ पार्थिवद्व्यणुकस्याप्येनाणुना संयोगस्तथाऽऽप्यस्य पार्थिवेने-ति किं कारणं किं प्रमाणमित्याह कारणसंयोगिना हि कार्यम-वश्यं संयुज्यत इति न्यायः प्रमाणम् । तथाहि-पार्थिवद्व्यणुकं स्व-कारणसंयोगिना संयुज्यते तत्संयुक्तकारणकार्यत्वाद्वीरणसंयुक्तद्वि-

तन्तुकवत् । आप्यो वा परमाणुः स्वसंयुक्तकारणकार्येण (१)संयोगित्वा-द्वितन्तुकसंयुक्तवीरणवत् । एवमितरत्रापि वाच्यम् । यत एवमतः पार्थिवद्व्यणुकं स्वकारणसंयोगिनाप्येनाणुना सम्बध्यते, आप्यमपि द्व्यणुकं पार्थिवेनेति । अथ द्व्यणुकयोरितरेतरकारणाकारणसम्बद्ध-योरिति । इतरस्य पार्थिवद्व्यणुकस्य यत् कारणं तदितरस्याकार-णमेवं आप्यद्व्यणुकस्य कारणमितरस्य पार्थिवद्व्यणुकस्याकारणं त-त्सम्बद्धयोर्द्व्यणुकयोः परस्परतः कथं सम्बन्ध इत्याह तयोरपि सं-योगजाभ्यां संयोगाभ्यां सम्बन्ध इति । यौ तौ कार्याकार्यगतौ सं-योगावेकस्मात् संयोगात् उत्पन्नौ ताभ्याम्, द्व्यणुकयोः समवायिकार-णत्वं, कार्याकार्यसंयोगयोश्चासमवायिकारणत्वम् , प्रत्यासत्तिस्तू-भयरूपापि सम्भवतीति पूर्ववत् ग्राह्या । अदृष्टादिश्च निमित्तका-रणमिति । न च द्व्यणुकस्य स्वकारणसंयोगिना परमाण्वन्तरेण द्व्यणु-कान्तरेणापि रूपाद्युत्पत्तिसमकालम् एकस्मादेव कारणाकारण-संयोगात् संयोगो भविष्यतीति वाच्यम । तस्मिन् काले द्व्यणुकस्य कारणसंयोगित्वाभावात् । कारणसंयोगिना चाप्यकार्येण संयोगः संयोगज इति । तस्मादाप्यद्व्यणुकस्य पार्थिवेन परमाणुना संयोगः पार्थिवस्य चाप्येनेति पूर्वमेवाभिधेयम् । येन कारणसंयोगित्वात् द्व्यणुकयोरपि संयोगः संयोगजो भवतीति ।

इदानीं विभागसूत्रेऽजसंयोगानभिधानान्न्यूनत्वमित्याशङ्का-परिहारार्थमाह—नाजः संयोगोऽस्ति नित्यपरिमण्डलवत् पृथगन-भिधानात्, यथा भगवानृषिः सकलाद्यदर्शी चतुर्विधं परिमाण-मुत्पाद्यमुक्त्वाऽऽह—नित्यं पारिमाण्डल्यं परमाणुपरिमाणमस्तीति, एवमन्यतरकर्मजादिसंयोगं त्रिविधमुत्पाद्यमुक्त्वा पृथङ्नित्यसंयो-गं ब्रूयात् , न त्वेवमब्रवीत् । तस्मान्नास्त्यजः संयोगः । प्रतिज्ञातं च महर्षिणा 'यद्भावरूपं तत्सर्वमभिधास्यामीति' । ननु चात्राजः संयो-गो नास्तीति प्रतिज्ञावाक्यपदयोर्व्याघातः—यथेदं च नास्ति चेति । नान्यथा प्रतिज्ञानात् । तथाहि—परमाणुभिराकाशादीनां संयोगो नित्यत्वेनाभ्युगतः परेण तस्याजत्वमेव निषिध्यते, न सद्भावः पर माणुभिराकाशादीनां संयोगोऽजो न भवति । सर्वज्ञेन महर्षिणाऽजत्वे-

(१) संयुज्यत इत्यत्रापि योजनीयम् ।

न पृथगप्रतिपाद्यमानत्वात् । यच्चाजं तदजत्वेन पृथगुपदिष्टं यथा नित्यं पारिमण्डल्यमिति ॥

अथ संयोगस्याप्राप्तिविरोधित्वं । सा तु न सम्भवत्येव । आकाशादेर्विभुत्वेन तत्परित्यागानुपपत्तेः । न चाश्रयविनाशाद्विनाशोऽत्र आश्रयस्यापि नित्यत्वात् । न चान्यद्विनाशकारणमस्तीत्यजत्वमेव । अवचनं तु व्यामोहादपि सम्भवतीत्यन्यथासिद्धम् । अस्य प्रतिषेधार्थमाह—परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मजः संयोग इति । कथमाकाशापरित्यागेन परमाणोः संयोगा विभागाश्च भवन्तीति चेत् । यथा वृक्षापरित्यागेन देवदत्तस्य । तथाहि मूलप्रदेशादूर्ध्वप्रदेशमारोहतः पुरुषस्य वृक्षापरित्यागेनैव संयोगा विभागाश्चोपलभ्यन्ते । मूलप्रदेशे वृक्षेण संयुक्तो मध्यप्रदेशे अग्रप्रदेशे चेति । न च प्रदेशस्यैव ते संयोगाः वृक्षेण संयुक्त इति प्रत्ययोपलम्भात् । प्रदेशेनैव संयोगे प्रदेशेन संयुक्तो न वृक्षेणेति ज्ञानं स्यात् । न चैतदस्ति । वृक्षेण संयुक्त इति ज्ञानस्य सर्वस्यामवस्थायामुपलब्धेः । यदि च संयोगस्य प्रदेशवृत्तित्वात्प्रदेशेनैव संयोगो न वृक्षेणेति तर्हि तेपि प्रदेशाः स्वावयवापेक्षयावयविन इति तत्प्रदेशानां संयोगस्तेषामप्यवयवित्वात्प्रदेशानामिति तावद्यावन्निर्देशाः परमाणवः, तेषां च निष्प्रदेशत्वात् संयोगाभावेन द्व्यणुकादिप्रक्रमेण कार्यमिति क्षित्यादेरसम्भव एव । अथ निष्प्रदेशत्वेपि सति परमाणूनां प्रदेशत्वादिष्यत एव संयोगः, तर्हि द्व्यणुकानां संयोगाभावे न त्र्यणुकमिति दूषणं तदवस्थमत्र । न च परमाणुषु वर्तमानः संयोगो द्व्यणुकादिसमवेतं द्रव्यमारभते व्यधिकरणस्यारंभकत्वेऽतिप्रसङ्गात् । तस्मात् संयोगस्य प्रदेशवृत्तित्वमाश्रयाव्यापकत्वमित्यवयवेनावयविना च संयोगो घटत एव । न च प्राक्तनस्य मूलप्रदेशे वृक्षेण संयोगस्यावस्थाने सत्युत्तरसंयोगेन शक्यं भवितुमिति तद्विनाशको विभागोपि सिद्धः । यथा चात्र वृक्षापरित्यागेनैव पुरुषस्यान्यतरकर्मजाः संयोगा विभागाश्च भवन्ति तद्वदाकाशापरित्यागेनैव परमाणोः संयोगा विभागाश्च भविष्यन्तीति व्यापकत्वमतन्त्रम् । तदेवं परमाण्वाकाशादिसंयोगस्योत्पत्तिविनाशकारणोपपत्तेर्नाजत्वमिति । यच्च सूत्रकारस्यावचनं व्यामोहादपि संभवतीति इत्युक्तम् । तदसत् । तदभिहितानां पदार्थानां

प्रमाणान्तरेणापि तथाभावोपलब्धेः सम्यक्ज्ञानसिद्धौ तद्विरुद्धस्य मिथ्याज्ञानस्य निवृत्तेः।

अथ विभूनां परस्परतः संयोगो भविष्यतीति। तथा ह्याकाशमात्मादिना संयुज्यते मूर्त्तसंयोगित्वात् घटवत्। अस्य प्रतिषेधार्थमाह विभूनान्तु परस्परतः संयोगो नास्ति। युतसिद्ध्यभावात्। यत्र यत्र संयोगस्तत्रतत्र युतसिद्धिरुपलब्धा। सा च संयोगस्य व्यापिका व्यवर्त्तमाना स्वव्याप्तं संयोगं गृहीत्वा व्यावर्तत इत्यन्यथासिद्धं साधनम्। सा पुनर्युतसिद्धिर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं पृथगाश्रयसमवायित्वञ्चेति। द्वयोः पृथग्गतिमत्त्वमन्यतरस्य वेतीयं नित्यानां युतसिद्धिः। द्वयोर्युताश्रयसमवायित्वमन्यतरस्य वेत्यनित्यानाम्। अस्यास्तु विस्तरेण विचारो विभागावसरे द्रष्टव्यः। न च विभूनां पृथग्गतिमत्त्वममूर्त्तत्वात्। युताश्रयसमवायित्वमपि न सम्भवत्येवाकार्यत्वादिति।

विनाशस्य च सहेतुकत्वात् कुतः संयोगो विनश्यतीत्याह—विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेतात् विभागादिति। ययोरेव संयोगस्तयोरेव विभागात्संयोगस्य विनाशस्तेन सता तस्यानुपलब्धेः। संयोगविनाशतस्तन्तुविनाशे तदाश्रितस्य तन्तुसंयोगस्य विनाश इति। यदा तन्तुसंयोगविनाशसमकालं तन्त्वन्तरेपि कर्म सम्भाव्यते तदाश्रयविनाशविभागाभ्यामपि संयोगस्य विनाश इति ज्ञेयम्॥

इदानीं विभागस्य लक्षणपरीक्षणार्थं विभागो विभक्तप्रत्ययनिमित्तमित्यादि प्रकरणम्।

**( भा० ) विभागो विभक्तप्रत्ययनिमित्तम्। शब्दविभागहेतुश्च।**

**प्राप्तिपूर्विकाऽप्राप्तिर्विभागः। स च त्रिविधः—अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति। तत्रान्यतरकर्मजोभयकर्मजौ संयोगवत्। विभागजस्तु द्विविधः—कारणविभागात् कारणाकारणविभागाच्च।**

**तत्र कारणविभागात् तावत्—कार्याविष्टे कारणे**

कर्मोत्पन्नं यदा तस्यावयवान्तराद्विभागं करोति न तदाऽऽकाशादिदेशात् यदा त्वाकाशादिदेशाद्विभागं करोति न तदाऽवयवान्तरादिति स्थितिः । अतोऽवयवकर्मावयवान्तरादेव विभागमारभते ततो विभागाच्च द्रव्यारम्भकसंयोगविनाशः तस्मिन् विनष्टे कारणाभावात् कार्याभाव इत्यवयविविनाशः । तदा कारणयोर्वर्तमानो विभागः कार्यविनाशविशिष्टं कालं स्वतन्त्रं वावयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्यसंयुक्तादाकाशादिदेशाद्विभागमारभते न निष्क्रियस्य कारणाभावादुत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्गः । न तु तदवयवकर्माकाशादिदेशाद्विभागं करोति तदारम्भकालातीतत्वात् । प्रदेशान्तरसंयोगं तु करोत्येव अकृतसंयोगस्य कर्मणः कालात्ययाभावादिति ।

कारणाकारणविभागादपि कथम् ? यदा हस्ते कर्मोत्पन्नमवयवान्तराद् विभागमकुर्वदाकाशादिदेशेभ्यो विभागानारभ्य प्रदेशान्तरे संयोगानारभते तदा ते कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते, तदनन्तरं कारणाकारणसंयोगाच्च कार्याकार्यसंयोगानिति । यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः, नन्वेवमवयवावयविनोर्युतसिद्धिदोषप्रसङ्गः इति । न । युतसिद्ध्यपरिज्ञानात् । सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमियन्तु नित्यानाम् अनित्यानां तु युतेष्वाश्रयेषु समवायो युतसिद्धिरिति । त्व-

गिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति युतेष्वाश्र-
येषु समवायोऽस्तीति परस्परेण संयोगः सिद्धः। अ-
ण्वाकाशयोस्त्वाश्रयान्तराभावेऽप्यन्यतरस्य पृथग्ग-
तिमत्त्वात् संयोगविभागौ सिद्धौ । तन्तुपटयोरनि-
त्ययोराश्रयान्तराभावात् परस्परतः संयोगविभागा-
भाव इति। दिगादीनान्तु पृथग्गतिमत्त्वाभावादिति
परस्परेण संयोगविभागाभाव इति।

विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वादुत्तर-
संयोगावधिसद्भावात् क्षणिक इति। न तु संयोगव-
द्‍यो्ोरेव विभागस्तयोरेव संयोगाद्विनाशो भवति।
कस्मात् ? संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्त्यभा-
वात्। तस्मादुत्तरसंयोगावधिसद्भावात् क्षणिक इति।

क्वचिच्चाश्रयविनाशादेव विनश्यतीति। कथम् ?
यदा द्वितन्तुककारणावयवे अंशौ कर्मोत्पन्नमंश्वन्त-
राद्विभागमारभते तदैव तन्त्वन्तरेऽपि कर्मोत्पद्यते
विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा
तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः। ततो
यस्मिन्नेव काले विभागात् तन्तुसंयोगविनाशः त-
स्मिन्नेव काले संयोगविनाशात् तन्तुविनाशस्तस्मिन्
विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाश
इति। एवं तद्द्व्युत्तरविभागानुत्पत्तिप्रसङ्गः कारण-
विभागाभावात्, ततः प्रदेशान्तरसंयोगवति संयो-
गाभाव इत्यतो विरोधिगुणासम्भवात् कर्मणश्चिर-
कालावस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्व-
मिति दोषः। कथम् ? यदाप्यद्व्यणुकारम्भकपरमाणौ

December 1929.

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORK

NO. 384.

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितं

**प्रशस्तपादभाष्यम् ।**

विद्वच्चूडामणिव्योमशिवाचार्यनिर्मितया व्योमवत्या समन्वितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यक्षेण पं० गोपीनाथकविराजेन न्यायोपाध्याय पं० दुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

# PRAS'ASTAPÂDABHÂSYAM

By Prasastadevâchârya

WITH A COMMENTARY, CALLED

VYOMAVATI,

BY Vyomas'ivâchârya.

*Edited by*

GOPINÂTH KAVIRÂJ, M. A.,

PRINCIPAL, GOVERNMENT SANSKRIT COLLEGE,

SARASVATI BHAVANA, BENÂRES,

and

DHUNDHIRÂJ SHÂSTRI Nyâyopâdhyâya.

FASCICULUS VI–६.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE,

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1929

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकः—३८४

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig:
GERMANY.

2 Arthur Probsthain,
Oriental & Foreign Bookseller,
LONDON.

3 The Oriental Book-supplying Agency,
POONA.

कर्मोत्पन्नमण्वन्तराद्विभागं करोति तदैवाण्वन्तरेऽपि कर्म ततो यस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः तदैवाण्वन्तरकर्मणा द्व्यणुकाण्वोर्विभागः क्रियते ततो यस्मिन्नेव काले विभागात् द्व्यणुकाणुसंयोगस्य विनाशः तस्मिन्नेव काले संयोगविनाशात् द्व्यणुकस्य विनाशः तस्मिन् विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य विनाशः । ततश्च विरोधिगुणासम्भवान्नित्यद्रव्यसमवेतकर्मणो नित्यत्वमिति । तन्त्वंश्वन्तरविभागाद्विभाग इत्यदोषः । आश्रयविनाशात्तन्त्वोरेव विभागो विनष्टो न तन्त्वंश्वन्तरविभाग इति एतस्मादुत्तरो विभागो जायते अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् तस्मिन्नेव काले कर्म संयोगं कृत्वा विनश्यतीत्यदोषः ।

अथवा अंश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ कर्मोत्पद्यते ततोंऽश्वन्तरविभागात् तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततः संयोगविनाशात् तन्तुविनाशः तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाशः ।

तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ पूर्वोक्तेन विधानेनाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाश इति ॥

(व्यो०) प्रतीतिः प्रत्ययो ज्ञानं प्रतीयतेऽनेनेति प्रत्ययोऽभिधानम्, तद्धेतुत्वमन्येषामपीति विभक्तग्रहणम् । तथाप्याकाशात्मभ्यां व्यभिचारपरिहारार्थं द्रव्यविशेषणत्वे सतीति द्रष्टव्यम् । तथाहि विभाग

इतरेभ्यो भिद्यते द्रव्यविशेषणत्वे सति विभक्तप्रत्ययनिमित्तत्वात् । यस्तु न भिद्यते न चासावेवम् यथा रूपादिरिति । तथा विभक्तप्रत्ययो विशेष्यज्ञानत्वान्नर्त्ते विशेषणाद्भवतीति परीक्षापरं वाक्यम् । न चास्य वासनाप्रभवत्वम् । तस्याः पूर्वमेव प्रतिषेधात् । विरलदेशोत्पादश्च क्षणभङ्गनिषेधादेव निषिद्धः । अथ संयोगस्यानुत्पादे विनाशे च विभक्तव्यवहारान्नान्यो विभाग इति चेत् । न । विभागं विना संयोगविनाशस्यैवाभावात् । तथाहि—गुणानामाश्रयविनाशाद्विरोधिगुणप्रादुर्भावाच्च विनाशोपलब्धेः, यत्राश्रयाविनाशस्तत्र संयोगस्याविनाशान्न विभक्तप्रत्ययः स्यात् , दृष्टश्च संयोगविनाशः तेन कर्मणो गुणविनाशे सामर्थ्यादर्शनात् अन्यस्य विनाशहेतोरभावाद्विभागोऽभ्युपगन्तव्यः । संयोगाभावे च भाक्तो विभक्तप्रत्यय इति । अर्थक्रियामाह–शब्दविभागहेतुश्च । वंशदलविभागाच्छब्दोत्पत्तिः विभागाच्च विभागोत्पत्तिरिति वक्ष्यामः । अथ कथंलक्षणः कतिविधश्चेति वाच्यमिहापि सम्बध्यत इति ज्ञानं पूर्ववत् प्रतिसमाधानात् ।

लक्षणमाह–प्राप्तिपूर्विकाऽप्राप्तिर्विभागः । प्राप्तिः संयोगः पूर्वं यस्याः सा तत्पूर्विका अप्राप्तिर्विभागः । संयोगानुत्पत्तिश्चाप्राप्तिः । न च प्राप्तिपूर्विकेति । अथ प्राप्तेः पूर्वकालत्वात् किंकारणत्वम्? सति भावो वा सति भावमात्रम् । न तु कारणत्वमिति केचित् । तत्तु न बुध्यामहे । क्रियावदन्वयव्यतिरेकाभ्यां विभागजन्मनि संयोगस्यापि व्यापारोपलब्धेः । नहि क्रियावत्संयोगाभावे विभागो भवति तद्भावे तु भवतीति । न चान्वयव्यतिरेकिणः संयोगस्य विभागकारणत्वे किञ्चित् बाधकमस्ति, यस्य भयादकारणत्वमिष्येत, स्वकार्यविरोधित्वं तु गुणानामिष्टं शब्दादौ, प्रत्यासन्नश्च संयोगो विभागोत्पत्तावित्यसमवायिकारणं यथोक्ता चाप्राप्तिर्विभाग इति । लक्षणे संयोगवदाक्षेपप्रतिसमाधानम् ।

स च त्रिविध एवान्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति । तत्रान्यतरकर्मजोभयकर्मजौ संयोगवदिति । एतेन कर्मणा विभागेन च विभागो जन्यते, यथा स्थाणोः श्येनेनेति । अत्र हि श्येनावयविनि स्थाणुना तच्चरणविभागसमकालं कर्मसाञ्चिन्तनादुभयोः प्रत्यासन्नत्वे सति व्यापारः सम्भवतीति चिन्तनीयम् ।

विभूनां च मूर्त्तैरिति केवलैककर्मजः। तथा द्वाभ्यां कर्मभ्यां विभागैश्च विभागो जन्यते। यथा मल्लयोर्मेषयोर्वेति। यथाहि मेषशिरसि कर्मोत्पन्नं शिरोन्तराद्विभागं करोत्येवं तदवयविनापीत्यवयवावयविविभागत्रयमवयविविभागोत्पत्तौ प्रत्यासन्नत्वे सति सामर्थ्यावधारणात् कारणमिति। तथाविभागरहिताभ्यां विभागो जन्यते, यथा परमाण्वोरित्यतिदेशार्थः। विभागजस्तु व्याख्यायते। एतद्द्वैविध्यं कारणभेदादित्याह कारणविभागात् कारणाकारणविभागाच्चेति। नन्वेकस्मादपि कारणादेकं कार्यमुत्पद्यमानं दृष्टमिति न कारणभेदात् भेदो युक्तः। तन्न। सामग्रीभेदस्य विवक्षितत्वात्। तथा ह्येका कारणविभागोपलक्षिता, अन्या तु कारणाकारणविभागोपलक्षिता सामग्रीति तद्भेदाच्च विभागस्य भेदो घटत एव। सामग्रीभेदेन कार्यस्य घटादेर्भेददर्शनात्। विरुद्धधर्माधिकरणत्वाच्च विभिन्नप्रतिभासविषयत्वात्। तथाहि—कारणविभागपूर्वको विभागः सक्रियस्यैव कारणाकारणविभागपूर्वकस्तु निष्क्रियस्यैवेति। तथा कारणविभागपूर्वको विभागः शब्दमारभते कारणाकारणविभागपूर्वको विभागो विभागमेवेति धर्मभेदः। तद्भेदाच्चान्यत्र भेदोपलब्धेरिहापि भेदोऽवश्यम्भावी।

कारणविभागात्तावद्विभागमाह कार्याविष्ट इत्यादिना। कार्येणाविष्टं व्याप्तमारब्धकार्यमिति यावत्। तस्मिन्कारणे कर्मोत्पन्नं न कारणमात्रे यदाऽवयवान्तराद्विभागं द्रव्यारम्भकसंयोगविरोधिनं करोति न तदाऽऽकाशादिदेशाद्यदा त्वाकाशादिदेशान्न तदावयवान्तराद्विशिष्टं विभागमिति स्थितिः विभागजविभागचिन्तायाः प्रतिज्ञाता। ननु सर्वमेतदसाम्प्रतम्, विपरीतार्थव्यवस्थायां प्रमाणोपपत्तेः। तथाहि—विशिष्टकारणकर्मावयवान्तरविभागोत्पत्तिसमकालमाकाशदेशेन विभागमारभते अवयवकर्मत्वात्। यद्यदवयवकर्म तत्तदवयवान्तरविभागोत्पत्तिसमकालमाकाशदेशेनापि विभागमारभते यथा पद्मावयवकर्म। तथा चेतत् कर्म। तस्माद्यथोक्तसाध्यम्। एवं विशिष्टावयवा अवयवान्तरविभागोत्पत्तिसमकालमाकाशदेशेन विभजन्तेऽवयवत्वात्पद्मपत्रवत्। अवयवविभागोत्थाकाशदेशो विभागेन सहोत्पद्यते अवयवविभागत्वात् पद्मावयवविभागवत्। एवमन्यदप्यूह्यम्। न चात्र पक्षधर्मत्वादीनामुपलब्धे·

बाधकमस्तीति । असदेतत् । बाधकोपपत्तेः । तथाहि—यत्र विभागद्वयजनकत्वं कर्मणो दृष्टं तत्र द्रव्याविनाशो द्रव्यारम्भकसंयोगाविनाशस्तद्विरोधिविभागानुत्पादोऽवयवस्यास्वातन्त्र्यं तद्वृत्तित्वं च कर्मण इति व्यापका धर्मा दृष्टास्ते च व्यावर्त्तमानाः स्वव्याप्तं विभागद्वयजनकत्वं गृहीत्वा व्यावर्त्तन्त इत्यन्यथासिद्धम् । न चैवं विशेषविरुद्धानुमानमेतद्धर्माणामव्यभिचारात् । यत्र हि व्यभिचारिणो धर्मास्तदेव विशेषविरुद्धानुमानमिति । यदि वान्यत्र कार्यविशेषेण कारणविशेषप्रसिद्धेः कार्यविशेषप्रतिपादनार्थं तत् । एकत्र द्रव्यारम्भकसंयोगविरोधिविभागोऽन्यत्र विभागमात्रं न तु दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमात्रमेवेति । न च कार्यविशेषः कारणविशेषं व्यभिचरतीति द्रव्यारम्भकसंयोगविरोधिविभागसम्पादने विभागमात्रजनने च कर्मणो विशेषोऽभ्युपगन्तव्यः । स तु क्षणिकैकद्रव्यवृत्तित्ववादिनामुभयत्रापि सम्भवात् एकत्राकाशदेशे विभागजनकत्वमन्यत्राजनकत्वमेव विशेष इति कल्प्यते । तेन यदि स्वतन्त्रावयवकर्माकाशदेशे न विभागं कुर्याद्द्रव्यारम्भकसंयोगविरोधिनो विभागस्यानुत्पत्तिरिति संयोगाविनाशे द्रव्याविनाशः स्यात् । न चात्रावयवविनाशात् कार्यद्रव्यस्य च विनाशः तदवयवकर्मणोऽप्याकाशदेशेन विभागजनकत्वाभ्युपगमेऽवयवान्तरेण विशिष्टविभागानुपपत्तौ संयोगाविनाशेन तस्याप्यविनाशः स्यात् । एवमुत्तरोत्तरावयवेष्वप्याश्रयविनाशेन विनाशाभ्युपगमे द्व्यणुकस्याविनाशः तदाश्रयस्य नित्यत्वात् । अथ संयोगविनाशात् द्व्यणुकविनाशः । तर्हि द्रव्यारम्भकसंयोगविरोधिविभागोऽभ्युपगन्तव्यः । तेन सताऽऽश्रयविनाशेनापि विनाशोपपत्तेः । तथाहि—द्रव्यारम्भकसंयोगविनाशात् विनष्टे समवायिकरणे तदाश्रितस्य कार्यद्रव्यस्य विनाशो घटत एव । तस्माद्यत्र द्रव्यविनाशस्तत्रावयवकर्माकाशदेशेन विभागं नारभत इति । प्रयोगस्तु स्वतन्त्रावयवकर्मावयवान्तरेण द्रव्यारम्भकसंयोगविरोधिविभागसमकालमाकाशदेशेन विभागं नारभते अवयवकर्मत्वात् पद्मपत्रकर्मवत् । तथा स्वतन्त्रावयवोऽवयवान्तरेण विशिष्टविभागसमकालं नाकाशदेशेन विभजते अवयवत्वात् पद्मपत्रवत् । एव विभागादेरपि पक्षीकरणानुमानमूह्यम् । विशिष्टविभागानामुत्पत्तिश्चात्र द्रव्याविनाशेनैव निश्चीयत इति स-

पक्षधर्मत्वम् पद्मावयवकर्मादेः। न च विशिष्टविभागसमकालमाकाशदेशेन विभागमारभमाणं किञ्चिदुपलब्धमिति विपक्षाभावादन्वयाव्यभिचारेणैव गमकत्वं ज्ञेयम्। सामान्येन त्ववयवविभागसमकालमाकाशदेशेन विभागजनकत्वप्रतिषेधे साध्ये व्यतिरेकाव्यभिचारेणापि गमकत्वमिति। तथाहि—स्वतन्त्रावयवकर्मावयवान्तरविभागसमकालमाकाशदेशेन विभागं नारभते स्वतन्त्रावयवकर्मत्वात्। यत्त्वारभते न तत्स्वतन्त्रावयवकर्म यथा पद्मपत्रकर्मेति। तथा स्वतन्त्रावयवोऽवयवान्तरविभागसमकाले नाकाशदेशेन विभजते स्वतन्त्रावयवत्वात्। यस्तु विभजते न चासौ स्वतन्त्रावयवः। यथा पद्मपत्रमिति। स्वातन्त्र्यन्तु क्रियाक्रमेण द्रव्यविनाशे भविष्यतीति पूर्वमेवोच्यते। न चैतत् पद्मावयवसङ्कोचादिक्रियायां सम्भवति, द्रव्यविनाशादर्शनात्। अथ पद्मावयवकर्माप्यवयवविभागसमकालमाकाशदेशेन विभागमारभत इत्यतीन्द्रियत्वादनुमानं प्रमाणं वाच्यम्, प्रमाणं विना प्रमेयाप्रसिद्धेः। तत्र यद्यस्वतन्त्रावयवकर्मत्वं व्यतिरेकाव्यभिचारेण गमकमितरेतराश्रयत्वं स्यात् एकाप्रसिद्धावितराप्रसिद्धेरिति। नैतदेवम्। आकाशदेशेनास्वतन्त्रावयवकर्मणो विभागजनकत्वे बाधकाभावात्। तथाहि-स्वतन्त्रावयवकर्मणो द्रव्यारम्भकसंयोगविरोध्युत्पादकत्वं आकाशदेशेन विभागजनकत्वे बाधकमस्ति, नैवमत्रेति। तथाहि-पद्मावयवकर्माकाशदेशेन विभागमारभते तदारम्भकबाधकानुत्पत्तौ कर्मत्वात्। यद्यदेवं तत्तदाकाशादिदेशेन विभागमारभते यथाऽनारब्धकार्यपरमाणुकर्मेति। अवश्यं च परमाणोराकाशादिदेशेन सम्बद्धस्योत्पन्नं कर्म तत्संयोगनिवर्त्तकं विभागमारभेत। तदन्तरेण पूर्वसंयोगावस्थानादुत्तरसंयोगानुत्पत्तौ द्व्यणुकादिप्रक्रमेण कार्यानुत्पत्तिप्रसङ्गात्।

अन्ये त्वस्वतन्त्रावयवकर्मणो यथाऽवयवान्तरविभागसमकालमकारणेन तृणादिना विभागजनकत्वमेवमाकाशादीनामपीति मन्यन्ते। तृणादिविभागश्च पद्मावयवस्य प्रत्यक्ष इत्युदाहरणम्। न चैवं स्वतन्त्रावयवकर्मणोऽप्यकारणेन विभागजनकत्वं प्रत्यक्षसिद्धमस्ति। विवादोपपत्तेरित्यलम्। नापीदमसदुत्तरम्। प्रसङ्गसमापेक्षायामुदाहरणेऽपि क्वचिदनुमानोपन्यासाभ्युपगमात्। अतः स्वतन्त्रावयवकर्मावयवान्तरादेव विभागमारभते। विभागाच्च द्रव्यारम्भकसंयोग-

विनाशस्तस्मिन्विनष्टे कारणाभावात् कार्याभाव इत्यवयविविनाशः। ततः स्वतन्त्रावयवस्याकाशदेशेन विभागो वाच्यः, तदन्तरेण पूर्वसं- योगस्यावस्थानादुत्तरसंयोगानुत्पत्तौ कर्मणः कालान्तरावस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्वं स्यात्। न चैतदस्ति, कर्मणः क्षणि- कत्वोपलब्धेः। न च विनाशहेतुं विनाऽस्य विनाशः। प्रतिषेधात्। अतोऽन्यस्य विनाशहेतोरभावात् उत्तरसंयोगस्यैवान्वयव्यतिरेका- काभ्यां कर्मविनाशे सामर्थ्यावधारणात् कारणत्वमिति। न चोत्तर- संयोगः पूर्वस्याकाशदेशेन संयोगस्य प्रतिबन्धकस्यावस्थाने भवतीति तद्विनाशहेतुर्विभागो निश्चीयते। न चासौ क्रियातः सम्भवत्युक्तन्या- यात्। असमवायिकारणं विना च विभागस्योत्पत्तिर्नोपलब्धेति, अ- न्यस्यासमवायिकारणस्याभावात् कारणयोर्वर्त्तमानो विभागः प्रत्या- सन्नत्वे सति समानजातीयत्वादसमवायिकारणमिति। यत्र हि समा- नजातीयं नास्ति तत्र विजातीयमेवासमवायिकारणमिति कल्प्यते। क्रिया तु विद्यमानाप्यत्र बाधकसद्भावादकारणमेव। तस्मात्कारणयो- र्वर्तमानो विभागः कार्यसंयुक्तात् कार्यसंयोगोपलक्षितादाकाशादिदे- शाद्विभागमारभत इत्यादिपदेनात्मादेरवबोधः। किमपेक्ष्येत्याह—का- र्यविनाशविशिष्टं कालमिति। कार्यविनाशो द्रव्यविनाशः तद्विशिष्टं कालं तद्विनाशात्स्वतन्त्रोऽवयवस्तं चापेक्ष्यारभत इति। अन्ये तु कार्यविनाशविशिष्टं कालमिति सामान्याभिधानात् संयोगविनाश- विशिष्टमपेक्ष्य द्रव्यविनाशसमकालमारभते इति ब्रुवते। स्वतन्त्रं वावयवमपेक्ष्येति। द्रव्यविनाशादूर्ध्वं स्वातन्त्र्यमस्येत्युपचारेण पूर्वमे- वोच्यते—स्वतन्त्रमीश्वरं वावयवं वापेक्ष्येति। कस्येत्याह—सक्रि- यस्यैवेति। अथ कारणविभागस्योभयवृत्तित्वाविशेषात् सक्रिय- स्याकाशादिदेशेन विभागो न निष्क्रियस्येति। किमत्र नियामकम्? उत्तरसंयोगोत्पत्तिरिति। तथाहि—विभागात् संयोगविनाशे सति कर्मो- त्तरसंयोगं करोति। तस्माद्विभागः कर्म च व्यावर्त्तते निष्क्रिये तू- त्पन्नो विभागः कथमुत्तरसंयोगानुत्पत्तौ व्यावर्त्तेत। न च विभा- गात् पूर्वसंयोगनिवृत्तावुत्तरसंयोगोत्पत्तिर्युक्ता। कारणस्य कर्मणो- ऽभावात् असंयुक्तस्य चाकाशादिभिरवस्थाने तेषामसर्वगतत्वं स्यात् न चान्यकर्मसम्पादितः संयोगोऽन्यक्रियाजन्यस्य विभागस्य निव- र्त्तको दृष्टः। तस्मात्स्वकारणकर्मकार्या उत्तरसंयोगाद्विभागस्य निवृ-

विनिष्टेत्युत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्ग इति—निष्प्रयोजनत्वस्य प्रसङ्गो विनाशित्वप्रसङ्गश्चेति । तस्य हि पूर्वसंयोगनिवर्त्तनात् उत्तर-संयोगोत्पत्तौ सप्रयोजनत्वं विनाशित्वं च घटते । यदि वा निष्क्रिय-स्याकाशादिदेशेन विभागाभ्युपगमे सक्रियस्योत्तरसंयोगानुत्पत्तिः कारणाभावाच्च तु निष्क्रियस्य विभागजविभागप्रतिषेधे कारणाभा-वो हेतुः, समवाय्यादिकारणानां सम्भवात् । तथाहि—निष्क्रियाव-यवाकाशादेः समवायिकारणत्वं विभागस्यासमवायिकारणत्वं शेषं निमित्तकारणमित्यस्ति कारणसद्भावः । तस्मादुत्तरसंयोगप्रति-षेधे कारणाभावो हेतुः । तथाहि—सक्रियस्याकाशादिदेशेन विभा-गानभ्युपगमे प्राक्तनसंयोगस्य प्रतिबन्धकस्यावस्थानात् उत्तरसं-योगानुत्पत्तिः, तदनुत्पत्तावनुपभोग्यत्वं निष्प्रयोजनत्वं विभाग-कर्मणोरिति ।

अन्ये तु—न निष्क्रियस्याकाशादिदेशेन विभाग इति—असदे-तत् । कुतः ? कारणाभावात् प्रमाणाभावादित्युक्ते परेण बाधकमाह उत्तरसंयोगानुत्पत्तौ अनुपभोग्यत्वमविनाशित्वं विभागस्येति । अथ यद्यप्यवयवकर्मावयवान्तरविभागसमकालमाकाशदेशेन विभागं ना-रभते, तथापि कार्यविनाशादूर्ध्वमारप्स्यत इति तन्निषेधार्थमाह न तु तदवयवकर्माकाशादिदेशाद्विभागमारभते विरम्य व्यापारप्र-तिषेधात्, तदेतदाह तदारम्भककालातीतत्वादिति । तस्य कर्मणो विभागारम्भककालः, तस्य वा विभागस्यारम्भककालः, त-स्यातीतत्वादिति । अथ कर्मणो विरम्य व्यापारप्रतिषेधे कथमुत्तरसंयोगाः । अविरम्य व्यापारप्रतिषेधस्यापरिज्ञानात् । तथाहि कर्म विभागं कृत्वा पुनर्वेगं न पुनः संयोगं नारभते । वेगं च कृत्वा पुनर्वेगं न पुनः संयोगं नारभत इत्याह उत्तरसंयोगन्तु करो-त्येव अकृतसंयोगस्य कर्मणः कालात्ययो विनाशस्तस्याभावादिति । दृष्टश्चात्र सद्भावेपि तस्य विनाशः । तेनोत्तरसंयोगजनकत्वं कर्मणो-भ्युपेयम् । तस्मात्तस्य निवृत्तिरिति ।

कारणाकारणविभागादपि विभागः कथं भवतीत्याह यदा हस्ते कर्मोत्पन्नमित्यादि । हस्ते स्वकारणात् कर्मोत्पन्नमवयवान्तराविभागं द्रव्यारम्भकसंयोगाविरोधिनमकुर्वदाकाशादिदेशेभ्यो विभागानार-भत इत्यादिपदेनात्मादेरवरोधः । तांस्त्वारभ्य यदा पूर्वसंयोगविना-

शे सति प्रदेशान्तरैराकाशादिदेशैः संयोगानारभते, तस्मिन् काले ते कारणाकारणविभागाः कार्याकार्यविभागानारभन्त इति। हस्तः शरीरस्य कारणं आकाशादि चाकारणं तद्विभागाः कार्यं शरीरं हस्तस्याकार्यमाकाशादि तद्विभागानारभन्त इति। तदुत्पत्तौ शरीराकाशादेः समवायिकारणत्वं हस्ताकाशादिविभागानां चासमवायिकारणत्वम्। प्रत्यासत्तिस्तूभयरूपापि सम्भवतीति बाधकानुपपत्तेर्ग्राह्या। कार्यैकार्थसमवायाच्च व्यधिकरणत्वम्। एवंविधायाः प्रत्यासत्तेरन्यत्र कर्मण्यनुपलम्भात्। अथ प्रत्यक्षेणैव हस्तपुस्तकविभागसमकालं शरीरस्यापि तेन विभागोपलब्धेः कर्मैवासमवायिकारणमिति कल्प्यते। न, आशुभावित्वेनोत्पलपत्रशतव्यतिभेदवत् प्रत्यक्षाभिमानस्य भ्रान्तत्वात्। यथाहि—युगपदुत्पलपत्रशतं व्यतिभिन्नमिति प्रत्यक्षज्ञानं ग्राहिणानुमानेन बाध्यमानत्वादप्रमाणमेवं तत्रापि हस्तविभागसमकालं शरीरस्यापि तेन विभाग इति यौगपद्यज्ञानमनुमानबाधितत्वादप्रमाणम्। किमनुमानमिति चेत्। अवयवकर्मणो विभिन्नाश्रयत्वम्। तथाहि-विवक्षितावयवकर्म स्वाश्रयव्यतिरिक्ताधारसमवेतमेव विभागं नारभते कर्मत्वादुभयाभिमतकर्मवत्। न चानुष्णोऽग्निः कृतकत्वादित्यनुमानवत् प्रत्यक्षेणास्य विरोधः पक्षरूपत्वात्। तथाहि—दुष्टमनुमानं प्रत्यक्षेण स्वविषयसहकारिणा बाध्यते दुष्टं च प्रत्यक्षमनुमानेनेति तस्मादनुमानस्याबाधितविषयत्वाद्विभागेष्वाशुभावित्वेन यौगपद्यग्रहणम नार्थतथाभावादिति। दृष्टं चानेकक्षणशतव्यवधानेऽप्याशुभावित्वं भ्रमनिमित्तमुत्पलपत्रादिव्यतिभेदे किं पुनरेकक्षणव्यवधाने क्षणद्वयव्यवधाने चेति। तथाहि-कारणाकारणविभागस्य संयोगविनाशे सति कार्याकार्यविभागपूर्वकस्य तु विभागस्य संयोगविनाशे द्रव्यविनाशे चानन्तरं भवनमिति क्षणद्वयव्यवधानम्। उत्पलपत्रावयवेषु तु वेगवत्सूच्यादिसम्बन्धात् कर्मोत्पत्तौ विभागात्संयोगविनाशे सति पत्रविनाशः पुनः पत्रान्तरे सम्बन्धात् अवयवकर्मोत्पत्तिरित्ययं क्रमः पत्रशतेऽप्यूह्यः। इत्यनेकक्षणशतव्यवधानेऽप्याशुभावित्वस्य भ्रमनिमित्तत्वाभ्युपगमात्। एकक्षणव्यवधाने तु भविष्यत्येव। तस्मादाशुभावित्वेन यौगपद्याभिमानस्य भ्रान्तत्वात् कारणाकारणविभागाः कार्याकार्यविभागानारम्भन्त इति। तदनन्तरं—कार्याकार्यविभा-

गानन्तरं, प्राक्तनसंयोगाविनाशे सति कारणाकारणसंयोगाच्च कार्याकार्यसंयोगानारभन्ते न पूर्वं प्राक्तनसंयोगस्य प्रतिबन्धकस्यावस्थानात् । इदं तु चिरोत्पन्नानां संयोगजसंयोगस्य पूर्वं प्रतिज्ञातस्य विभागजविभागानन्तरभावित्वात् । समानोपायतया चात्रैव निरूपणमिति । अथ शरीरस्याकाशादिना विभागः संयोगश्चेति किम्प्रमाणम् ? अनुमानम् । तथाहि । शरीरं स्वकारणविभागिना विभजते तद्विभागिकारणकार्यत्वात् वीरणविभागितन्तुकार्यपटवत् । आकाशादि वा स्वविभागिकारणकार्येण विभजते तत्कारणविभागित्वात् तन्तुविभागिवीरणवत् । एवं शरीरं स्वकारणसंयोगिना संयुज्यते तत्संयुक्तकारणकार्यत्वात् वीरणसंयुक्ततन्तुकार्यपटवत् । सिद्धे तु शरीराकाशादिसंयोगे शरीरस्य तस्मिन्काले निष्क्रियत्वात् अवयवक्रियायाश्च सत्त्वेनाश्रयान्तरेणैव समवेतकार्यजनकत्वप्रतिषेधात् असमवायिकारणं च विना भावस्योत्पत्तेरदर्शनात् अन्यस्य चासम्भवे सति कारणाकारणसंयोगात्तस्योत्पत्तिः कल्प्यत इति । शरीरकाशादि समवायिकरणम् । विशिष्टा च दिङ्निमित्तकारणमिति ।

एवं निर्णीते विभागजविभागे पूर्वपक्षवाद्यसद्दूषणमाह—यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः कारणसंयोगाच्चानन्तरं कार्यसंयोगोत्पत्तिर्न समकालम् । नन्वेवमवयवावयविनोर्युतसिद्धिदोषप्रसङ्ग इति । न युक्तमेतत् । कुतः ? युतसिद्ध्यपरिज्ञानात् । न परेण युतसिद्धिर्विज्ञाता यत एवमाहेति । तथाहि—परस्परसंयोगविभागयोग्यता युतसिद्धिः, अवयवानां हि पदार्थान्तरैः संयोगविभागयोग्यता । तथाऽवयविनः सम्भवत्येव न तु परस्परमित्यव्यभिचारः । सम्भवे वा युतसिद्धिरेवेति न समवायः स्यात् अस्ति चासाविति वक्ष्यामः । इदं तु सामान्यलक्षणं युतसिद्धेर्विशेषलक्षणाल्लभ्यत एव विशेषस्य सामान्यव्याप्तत्वादिति विशेषलक्षणमाह—सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमितीयं नित्यानाम् युतसिद्धिर्द्वयोः परमाण्वोः पृथग्गतिमत्त्वं युतसिद्धिः, आकाशपरमाण्वोश्चान्यतरस्य पृथग्गतिमत्त्वमिति । तच्च परस्परं संयोगविभागजननयोग्यत्वं विवक्षितम् । अन्यथा हि द्व्यणुकारम्भकयोः परमाण्वोर्द्व्यणुके व्रजति गमनोपलब्धेर्द्व्यणुकेन सह युतसिद्धिः स्यात् । अनित्यानां तु युतेषु पृथ-

भूतेष्वाश्रयेषु समवायो युतसिद्धिरिति । नन्वेवमप्यवयवावयवि-
नोर्युताश्रयसमवाया युतसिद्धिः स्यात् । तथाहि—अवयव्यवयवेषु
वर्त्तते अवयवाश्च स्वावयवेष्विति युताश्रयसमवायः । न । अभि-
प्रायापरिज्ञानात् । यदा घटतदाश्रयव्यतिरेकेणाश्रयान्तरे समवायः
पटस्य पटतदाश्रयव्यतिरेकेण घटस्य नैवमयविनोऽवयवव्यतिरेके-
णाश्रयान्तरे समवायः तस्मान्न युतसिद्धिः । अत्रापि द्वयोर्युताश्र
यसमवायित्वमन्यतरस्य वेत्यनुवर्तते । द्वयोर्यथा घटपटयोरन्यतरस्य
यथाकाशघटयोरन्यतरस्य घटस्य युतेष्वाश्रयेष्वसमवायो ना-
काशस्यानाश्रितत्वात् । नन्वेवं तर्हि नित्योष्विवानित्येष्वपि पृथग्गति-
मत्वस्य सम्भवात्सैवास्तु (कृतं) युताश्रयसमवायित्वेनाव्यापिना । नै-
तदेवम् । अनित्येषु पृथग्गतिमत्वस्यान्वयव्यतिरेकाभावात् युताश्रयस-
मवायित्वमेव, तत्सद्भावात्सैव युतसिद्धिरित्याह—त्वगिन्द्रियश-
रीरयोः पृथग्गतिमत्वं नास्ति युतेषु तु समवायोस्तीति परस्परेण
संयोगः सिद्धः । तथाहि—त्वगिन्द्रियशरीरयोरामरणं वियोगानुपप-
त्तेः पृथग्गतिमत्वाभावेपि परस्परेण संयोगप्रसिद्धेर्युताश्रयसमवायि-
त्वमेव युतसिद्धिस्तयोरितरेतराश्रयपरिहारेण स्वाश्रयेष्वेव सम-
वायात् । एवमुत्पन्नमात्रस्य घटादेर्गतिमत्वाभावेपि रूपाद्युत्पत्तिसम-
कालमाकाशादिना संयोगोपलब्धेरन्यतरस्य युताश्रयसमवायित्व-
मेव युतसिद्धिः । नित्यानां तु युताश्रयसमवायाभावेपि संयोग-
विभागोपलब्धेः पृथग्गतिमत्वमेव युतसिद्धिरित्याह—अण्वाकाशयो-
स्तु युताश्रयसमवायित्वाभावेप्यन्यतरस्य पृथग्गतिमत्वात्संयोगवि-
भागौ सिद्धाविति । एवमनित्यानां युताश्रयसमवायित्वस्य नित्या-
नान्तु पृथग्गतिमत्वस्यान्वयोपदर्शनानन्तरं व्यतिरेकमाह—तन्तुपट-
योरनित्ययोराश्रयान्तराभावात् परस्परतः संयोगविभागाभाव इति ।
यद्यपि तन्तवोऽशुषु वर्तन्ते तथापि पटद्रव्ये न तन्तुव्यतिरेके-
णाश्रयान्तरमस्तीति युताश्रयसमवायित्वाभावः । तदभावान्न पर-
स्परेण संयोगविभागाविति । विशिष्टं च पृथग्गतिमत्वस्य घटपर-
माण्वोस्तूभयसम्भवात् उभयावरोधोऽन्यतरावरोधे विशेषहेत्वभा-
वात् । तथाहि—नित्ये परमाणौ पृथग्गतिमत्वमनित्ये तु घटे युता-
श्रयसमवायित्वमुभयोरुभयत्रान्वयव्यतिरेकाभ्यां समर्थनादत्र सम्भ-
वेन ग्रहणं न्याय्यम् । यत्र चानित्यमेव तत्र पृथग्गतिमत्वसद्भावेपि

युताश्रयसमवायित्वस्यावरोधो यथा घटाकाशयोर्द्वयोर्वा घटयोरि-त्यलमतिविस्तरेण । तस्मात् कारणविभागानन्तरं कार्यविभागः कारणसंयोगानन्तरं कार्यसंयोगो युतसिद्धिरित्यपरिज्ञातयुतसि-द्धेर्वचनमिति ।

अथेदानीं विनाशमाह—विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वा-दित्यादिना । ननु क्षणिकत्वमाशुतरविनाशित्वम्, तत्र विभागस्य विनाशे साध्ये साध्यान्न विशिष्यते । न, व्यवहारस्य साध्यत्वात् । तथाहि—विभागो विनाशीति व्यवहर्त्तव्यः क्षणिकत्वात् । यदि वा क्ष-णिकत्वमाशुतरविनाशकारणसंयोगित्वं तस्माद्विभागस्य विनाशे सा-ध्ये न साध्याविशिष्टता । अथ किं तद्विनाशकारणम् ? उत्तरसं-योगः। कथम्? उत्तरसंयोगावधिसद्भावात् । उत्तरसंयोग एवावधिः सीमा सद्भावे यस्य इत्युत्तरसंयोगं यावत् सद्भावः तदनन्तरमभाव इत्यन्वयव्यतिरेकाभ्यामुपलब्धम् । न संयोगवदस्य विनाश इति । यथाहि ययोरेव संयोगस्तयोरेव विभागात्संयोगस्य विनाशो नैवं ययोरेव विभागस्तयोरेव संयोगाद्विभागस्य विनाशः । किं त-र्हि ? तयोरन्येन वा स्वकारणकर्मजः तत्संयोगजो वा संयोगोऽस्तु त-स्माद्विनश्यतीति । अथ संयोगस्य विभागमात्राद्विनाशवत् विभा-गस्यापि संयोगमात्रेणाविनाशः किमिति नेष्यत इत्याह—संयुक्तप्रत्य-यवद्विभक्तप्रत्ययानुवृत्त्यभावादस्य विनाशप्रसङ्गात् । यथाहि—संयो-गे विभागमात्रोत्पादे संयुक्तप्रत्ययानुवृत्तिः संयुक्तं संयुक्तमिति दृष्टा। नैवं विभागस्य संयोगमात्रोत्पादे विभक्तप्रत्ययानुवृत्तिरस्ति । तस्मा-दुत्तरसंयोगावधिसद्भावात् क्षणिक इत्युपसंहारः। अन्ये न तु संयोग-वदवस्थितो विभागः।कस्मात्? ययोरेव संयोगादस्य विनाशप्रसङ्गात्। यथाह्यवस्थितः संयोगः तयोरेव विभागान्निवर्तते विभागोऽप्येवं तयो-रेव संयोगान्निवर्तेत । इष्यत एवेति चेत्। तदसत् । संयुक्तप्रत्ययवद्वि-भक्तप्रत्ययानुवृत्त्यभावात् न ह्यर्थान्तरेण विभागे संयुक्तप्रत्ययानुवृत्ति-वदर्थान्तरेण संयोगे विभक्तप्रत्ययानुवृत्तिरस्तीति । यच्चाप्राप्तिज्ञानं तद्बाधकसद्भावात्संयोगाभावे द्रष्टव्यमिति । अन्यथा हि पिण्डस्य देशान्तरगमने मरणे वाऽवस्थितत्वादेकपिण्डग्रहणेऽपि ग्रहणं स्या-त् । न चैतदस्ति । तस्माद्द्रियमाणक्रिये द्रव्ये विभक्तप्रत्ययो मुख्यो-ऽन्यदा तु तत्सामान्यात् भाक्त इति ।

एवं संयोगात् विभागस्य विनाशं प्रतिपाद्याश्रयविनाशेन विनाशमाह क्वचिच्चाश्रयविनाशाद्विनश्यतीत्यादिना । कथमि- त्यव्युत्पन्नप्रश्नानन्तरमाह—यदा द्वितन्तुककारणावयवेऽंशावि- त्यादि । द्वितन्तुकस्य कारणं तन्तुस्तस्यावयवोंऽशुस्तस्मिन् स्वकारणात् कर्मोत्पन्नं यदांश्वन्तराद्विभागं द्रव्यारम्भक- संयोगस्य विनाशात्तन्तुविनाशः तस्मिन्विनष्टे तदाश्रितस्यावि- रोधिनमारभते, तस्मिन्नेव काले तन्त्वन्तरेऽपि कर्मोत्पद्यते । विभा- गाच्च तन्त्वारम्भकसंयोगस्य विनाशः तन्तुकर्मणा च तन्त्वन्तराद्वि- भागः क्रियते इत्यनयोरेकः कालः । ततो यस्मिन्नेव काले विभागात्त- न्तुसंयोगस्य द्वितन्तुकारम्भकस्य विनाशस्तस्मिन्नेव काले तन्त्वा- रम्भकस्यांशुसंयोगस्य विनाशात्तन्तुविनाशः । तस्मिन्विनष्टे तदा- श्रितस्य तत्वन्तरविभागस्य विनाशोऽन्यस्य विनाशकारणस्याभा- वात् । तदेव द्वितन्तुकस्याप्याश्रयविनाशात्संयोगविनाशाच्च वि- नाश इति । एवमाश्रयविनाशाद्विनाशेऽभिहितेऽनिष्टमुपपादयति—एवं तर्ह्युत्तरविभागानुत्पत्तिप्रसङ्ग इति । उत्तरविभागस्तन्तोराकाशादि- देशेन विभागस्तस्यानुत्पत्तिः कारणविभागाभावात् । कारणयोस्त- न्त्वोर्विभागो यदि यदि वा कारणं च तद्विभागश्च तस्य द्रव्यविना- शसमकालमभावादाकाशदेशेन विभागस्यानुत्पत्तिः । न च संयोग- विनाशमपेक्ष्य द्रव्यविनाशसमकालं कारणविभागस्य विभागारम्भ- कत्वम्, विनश्यदवस्थस्यासमवायिकारणत्वानभ्युपगमात् । यथाश्रुत- ग्रन्थे वा चोद्यमेतत् । ततश्च तन्तोराकाशादिदेशेन विभागानु- त्पादे तत्संयोगस्य प्रतिबन्धकस्यावस्थानान्न कर्मोत्तरसंयोगं कुर्या- दित्याह—प्रदेशान्तरसंयोगवति संयोगाभाव इत्यतः प्रदेशान्तर- संयोगस्य विरोधिगुणस्यासम्भवात् कर्मणः कालान्तरावस्थायित्वं तस्य च क्षणिकत्वं प्रमाणप्रसिद्धमिति व्याघातः । तथा नित्यद्रव्य- समवेतस्य च कर्मणो नित्यत्वमिति दोषः । कथमित्याह—यदाऽऽ- द्यद्व्यणुकारम्भके परमाणौ स्वकारणात् कर्मोत्पन्नमण्वन्तरा- द्विभागं द्रव्यारम्भकसंयोगविरोधिनमारभते तदैवाण्वन्तरेऽप्यना- रम्भके कर्मोत्पद्यते । ततोऽनन्तरं यस्मिन्नेव काले विभागाद्द्रव्यारम्भ- संयोगस्य विनाशस्तदैवानारम्भकाणुकर्मणा द्व्यणुकाण्वोर्विभागः क्रियते । ततो यस्मिन्नेव काले विभागात् द्व्यणुकस्याणुना संयोगस्य वि-

नाशस्तस्मिन्नेव काले संयोगस्य द्रव्यारम्भकस्य विनाशाद्‌द्व्यणुकस्य विनाशः तस्मिन् द्व्यणुके विनष्टे तदाश्रितस्य द्व्यणुकविभागस्य विनाशस्ततः कारणविभागाभावात् उत्तरविभागानुत्पत्तौ तत्संयोगस्याव्यावृत्तेर्न कर्मोत्तरसंयोगं करोतीति विरोधिगुणस्यासम्भवात् परमाणुसमवेतस्य कर्मणो नित्यत्वं स्यादिति । प्राक्तनचोद्यस्य प्रतिसमाधानमाह—तन्त्वंश्वन्तरविभागाद्विभाग इत्यदोषः । ननु तन्त्वंशुविभागः तन्तुक्रियाकार्यो न भवत्येवांशोर्द्वितन्तुकोत्पत्तावाकाशादिवदकारणत्वात्, नाप्यंशुक्रियाकार्यस्तन्तूत्पत्तौ तन्त्वन्तरस्याकाशवदेवाकारणत्वात् । कारणे चोत्पन्नं कर्म कारणान्तरविभागसमकालकारणेन विभागं नारभते विशिष्टविभागानुत्पत्तिप्रसङ्गादित्युक्तम् । न च कारणं विना कार्यं भवतीति तन्त्वंशुविभागासम्भव एव । नैतदेवम् । अंशुक्रियाजनिताद्विभागात्तस्योत्पत्त्यभ्युपगमात् । तथाह्यंशुक्रियाजनितो विभागः संयोगविनाशविशिष्टं कालमपेक्ष्य तन्तुविनाशसमकालमाकाशादिदेशेनेव तन्त्वन्तरेणापि विभागमारभते । तन्तुविनाशविशिष्टं चापेक्ष्य द्वितन्तुकविनाशात्तन्त्वोरेव परस्परं विभागो विनष्टो न तन्त्वन्तरविभागोंऽशुक्रियाजनिताद्विभागादुत्पन्नो विनष्ट इत्येकस्मात्तन्त्वन्तरविभागादुत्तरो विभागस्तन्त्वाकाशादिविभागो जायते । अङ्गुल्याकाशविभागाच्छरीराकाशविभागवदित्युदाहरणम् । यथाऽङ्गुल्याकाशादिविभागाद्धस्ताकाशविभागः तस्माच्च विभागजाच्छरीराकाशविभागस्तद्वदिहाप्यंशुक्रियाजनिताद्विभागात्तन्त्वंशुविभागः तस्माच्च विभागजात्तन्त्वाकाशविभागो जायत इति । तस्मिन्नुत्पन्ने प्राक्तनसंयोगस्य प्रतिबन्धकस्याभावात् कर्मोत्तरसंयोगं कृत्वा तस्माद्विनश्यतीति न कालान्तरावस्थायित्वं दोषः । नन्वेतस्मिन्पक्षे कथमुत्तरसंयोगात्तन्त्वाकाशादिविभागस्य निवृत्तिस्तन्तुकर्मणा पारम्पर्येणाप्यजनितत्वात् । न । विभागजनिते विभागे नियमानुपलब्धेः । अन्ये तु तन्तावुत्पन्ना क्रिया तन्त्वन्तरेणेव तदारम्भकेणांशुनापि विभागं करोत्येव । पारम्पर्येणांशोरपि कारणत्वात् । आकाशादिश्च पारम्पर्येणापि द्वितन्तुकोत्पत्तावकारणमिति । तन्तुक्रियाऽवयवान्तरविभागसमकालं न तेन विभागं करोतीति यदि वांशुक्रियांऽश्वन्तरादिव तन्त्वन्तरेणापि विभागमारभते अंशुकार्येण सहैव कार्यारम्भकत्वात् । अतश्चाश्रयवि-

नाशात्तन्त्वोरेव विभागाविनष्टः। न तु तन्त्वन्तरविभागः। तस्मात्तन्त्वाकाशादिविभागो जायते अङ्गुल्याकाशादिविभागाच्छरीराकाशादिविभागवत्। नन्वङ्गुल्याकाशविभागाद्धस्ताकाशविभागः कारणाकारणविभागस्य कार्याकार्यविभागारम्भकत्वात्, न त्वङ्गुलेः शरीरं कार्यमिति। अतो यद्यप्यङ्गुल्याकाशविभागस्य शरीराकाशविभागेन सहाकाशवृत्तित्वात् प्रत्यासत्तिरस्ति। तथाप्यकारणत्वमेव। तस्माच्छरीरारम्भकत्वादुपचारेण हस्त एव शरीरमिति युक्तम्, एतावता चोदाहरणम्। यथाङ्गुल्याकाशाविभागात् कारणाकारणविभागाद्धस्ताकाशविभागः तथा तन्त्वंशुविभागात्तन्त्वाकाशविभाग इति।

अथवेति। विभागस्याश्रयविनाशेन विनाशे प्रकारान्तरोपन्यासः। न तु प्रकृताक्षेपसमाधानम्। कालान्तरावस्थायिनि द्रव्ये कर्मणः कालान्तरावस्थायित्वोद्भावनात्, अतोऽश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ विभज्यमानांशैः कर्मोत्पद्यते। ततोऽनन्तरमंशुविभागात्तन्त्वारंभकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तरविभागः क्रियत इत्येकः कालः। ततः संयोगविनाशात्तन्तुविनाशः तन्त्वन्तरविभागाच्च तत्संयोगविनाशः। ततो द्वितन्तुकस्योभयविनाशाद्विनाशस्तन्तुविनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाश इति।

अथ नित्यद्रव्यसमवेतस्य नित्यत्वं स्यादित्याक्षेपप्रतिसमाधानद्वारकं वाच्यम्--तन्तुवीरणयोर्नेत्यादि। यथाहि तन्तुवीरणयोः संयोगे सति द्रव्यानुत्पत्तिर्विजातीयत्वादेवं द्व्यणुकाण्वोरपि संयोगाद्द्रव्यं नोत्पद्यते। तथा ह्येकद्व्यणुकमनित्यम् अन्यश्च परमाणुर्नित्य इति विजातीयत्वम्। विजातीयसंयोगश्च द्रव्यानारम्भक इति द्व्यणुकाण्वोः संयोगेऽपि द्रव्यानुत्पत्तौ परमाणावुत्पन्नं कार्यं द्रव्यारम्भकसंयोगविरोधिविभागानुत्पादकत्वादाकाशादिदेशेनापि विभागमारभते वीरणकर्मवत्। एवं प्राक्तनसंयोगनिवृत्तावुत्तरसंयोगं कृत्वा विनश्यतीति पूर्वोक्तेन विधानेन विनाशः। यदि वा पूर्वोक्तविधानेनेत्ययमर्थः--तन्त्वारम्भकेंऽशौ कर्मोत्पत्तिसमकालं वीरणेपि कर्म अंशुकर्मणा चांश्वन्तराद्विभागः क्रियते। वीरणकर्मणा च तन्त्वन्तरादित्येकः कालः। ततो विभागादंशुसंयोगविनाशे वीरणविभागाच्च वीरणतन्तुसंयोगविनाशः ततो द्रव्यारम्भकसंयोगविनाशात्तन्तुवि-

नाशः। तन्तुवीरणसंयोगविनाशे चोत्तरसंयोगस्ततश्चाश्रयविनाश इति।

अन्ये तु वाशब्दस्योपमार्थत्वात्तन्तुवीरणयोरिव द्व्यणुकाण्वोः संयोगे सति द्रव्यं नोत्पद्यते द्रव्यानुत्पत्तौ च द्व्यणुकाणुविभागस्य परमाणुकर्मणा द्व्यणुकारंभकसंयोगविनाशसमकालं जनितस्य कथं विनाशः । पूर्वोक्तेन विधानेनेत्याश्रयविनाशेनेत्यर्थः । यदा तु परमाणौ कर्मोत्पत्तौ परमाण्वन्तरविभागोत्पत्तिसमकालमस्मिन्नेव द्व्यणुके कर्मसञ्चिन्तनं तदा पूर्वोक्तेन विधानेनाश्रयविनाशाद्विभागकर्मणोर्युगपद्विनाश इति । द्व्यणुकारम्भके च परमाणौ कर्मोत्पत्तिसमकालमनारम्भकेऽपि कर्मसञ्चिन्तनात्तदाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाशवद्विनाश इत्यलम् ।

इदानीं परत्वापरत्वयोर्लक्षणपरीक्षार्थं परत्वं चेत्यादिप्रकरणम् ।

(भा०) परत्वमपरत्वं च पराऽपराभिधानप्रत्ययनिमित्तम् । तत्तु द्विविधं दिक्कृतं कालकृतं च । तत्र दिक्कृतं दिग्विशेषप्रत्यायकम् । कालकृतं च वयोभेदप्रत्यायकम् ।

तत्र दिक्कृतस्योत्पत्तिरभिधीयते । कथम् ? एकस्यां दिश्यवस्थितयोः पिण्डयोः संयुक्तसंयोगबह्वल्पभावे सत्येकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा एतस्माद्विप्रकृष्टोऽयमिति परत्वाधारेऽसन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वस्योत्पत्तिः । तथा विप्रकृष्टं चावधिं कृत्वा एतस्मात् सन्निकृष्टोऽयमित्यपरत्वाधारे इतरस्मिन् सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः ।

कालकृतयोरपि कथम् ? वर्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं

कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिरिति ।

विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यनाशात् । अपेक्षाबुद्धिविनाशात् तावदुत्पन्ने परत्वे यस्मिन् काले सामान्यबुद्धिरुत्पन्ना भवति ततोऽपेक्षाबुद्धेर्विनश्यत्ता सामान्यज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततोऽपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः ततोऽपेक्षाबुद्धिविनाशाद्गुणस्य विनश्यत्ता गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः। ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाश इति ।

संयोगविनाशादपि कथम् ? अपेक्षाबुद्धिसमकालमेव परत्वाधारे कर्मोत्पद्यते तेन कर्मणा दिक्पिण्डविभागः क्रियते अपेक्षाबुद्धितः परत्वस्योत्पत्तिरित्येकः कालः। ततः सामान्यबुद्धेरुत्पत्तिः दिक्पिण्डसंयोगस्य च विनाशः । ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद् गुणस्य विनाशः ।

द्रव्यविनाशादपि कथम् ? परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद्विभागं करोति तस्मिन्नेव कालेऽपेक्षाबुद्धिरुत्पद्यते ततो विभागाद्यस्मिन्नेव काले संयोगविनाशः तस्मिन्नेव काले परत्वमुत्प-

यते ततः संयोगविनाशाद् द्रव्यविनाशः तद्विनाशाच्च तदाश्रितस्य गुणस्य विनाशः।

द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्? यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते कर्मणा चाऽवयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः। ततो यस्मिन्नेव कालेऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशस्तस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चापेक्षाबुद्धिविनाश इत्येकः कालः। ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः।

द्रव्यसंयोगविनाशादपि कथम्? यदा परत्वाधारावयवे कर्मोत्पन्नमवयवान्तराद्विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा दिक्पिण्डस्य च विभागः क्रियते इत्येकः कालः। ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः पिण्डविनाशाच्च पिण्डसंयोगविनाशः ततो गुणबुद्धिसमकालं पिण्डदिक्पिण्डसंयोगविनाशात् परत्वस्य नाशः।

संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्? यदा परत्वमुत्पद्यते तदा परत्वाधारे कर्म ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते ततः सामान्य-

बुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसं-योगविनाश इत्येकः कालः । ततः संयोगापेक्षाबु-द्धिविनाशात् परत्वस्य विनाशः ।

त्रयाणां समवाय्यसमवायिनिमित्तकारणानां यु-गपद् विनाशादपि कथम् ? यदापेक्षाबुद्धिरुत्पद्यते तदा पिण्डावयवे कर्म ततो यस्मिन्नेव काले कर्मणाऽव-यवान्तराद्विभागः क्रियतेऽपेक्षाबुद्धेः परत्वस्य चोत्पत्ति-स्तस्मिन्नेव काले पिण्डेऽपि कर्म ततोऽवयवविभागात् पिण्डारम्भकसंयोगविनाशः पिण्डकर्मणा च दिक्पि-ण्डविभागः क्रियते सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः । ततः संयोगविनाशात् पिण्डविनाशः विभा-गाच्च दिक्पिण्डसंयोगविनाशः सामान्यज्ञानादपेक्षा-बुद्धेर्विनाश इत्येतत् सर्वं युगपत्त्रयाणां समवाय्य-समवायिनिमित्तकारणानां विनाशात् परत्वस्य विनाश इति ॥

(व्यो०) अभिधानं च प्रत्ययश्चेति तयोर्निमित्तं परत्वमपरत्वञ्चेत्युक्ते-ऽतिप्रसङ्गस्तदर्थं परापरग्रहणम् । तथापि परापराभिधानप्रत्ययनिमि-त्तत्वमाकाशात्मनोर्न व्यावृत्तमिति विशेषणत्वे सतीत्यूह्यम् । तथा सामान्यमपि विशेषणत्वे सति पराभिधानप्रत्ययनिमित्तमतो द्रव्यग्र-हणम् । तथाहि—परत्वापरत्वे अन्यस्माद्भिद्येते द्रव्यविशेषणत्वे सति प-रापराभिधानप्रत्ययनिमित्तत्वात्, यस्त्वितरान्न भिद्यते न चासावेवम्, यथा रूपादिरिति । व्यवहारो वा साध्यः । अत्र चाभिधानपदेन संख्या-दिलक्षणेष्वपि करणव्युत्पत्त्याभिधानं भावव्युत्पत्त्या च ज्ञानमित्युभय-रूपो व्यवहारः प्रत्ययश्च विवक्षित इति ज्ञापयति । एकस्मिंश्च प्रकरणे गुणद्वयनिरूपणमेकोत्पत्तेरितरोपायापेक्षिकत्वात् पृथगभिधाने तु ग्र-न्थबहुत्वं स्यादिति सङ्ग्रहत्वादेकदाभिधानम् । परत्वापरत्वयोः स-द्भावे किं प्रमाणमित्यपेक्षायां परत्वमपरत्वं च परापराभिधानप्र-

-त्ययनिमित्तमिति वाक्यं परीक्षापरत्वेन च योजनीयम्। तथाहि–परापराभिधानप्रत्ययो विशेषणपूर्वको विशेष्याभिधानप्रत्ययत्वाद्दण्डीति विशेष्याभिधानप्रत्ययवत्। न च रूपादीनामन्यतमं विशेषणम्, तद्व्यवहारविलक्षणत्वाद्। अबाध्यमानं च ज्ञानं निमित्तं विना न सम्भवत्येव। वासना तु निमित्तं तत्र न भवतीत्युक्तम्। अथ द्रव्यमेव विशिष्टोत्पादवशात् परापरव्यवहारजनकम्। तन्न। क्षणिकत्वप्रतिषेधात्। अभ्युपगमेन तूच्यते। विशिष्टताया व्यतिरेकाभ्युपगमे विशिष्टव्यवहारजनकत्वे च संज्ञाभेदमात्रम्, अव्यतिरेके तु समानदेशावस्थितपिण्डे समानवयसि च परापरव्यवहारः स्यात्। सद्भावस्याविशेषात्। अतः परापरव्यवहारे रूपादिविलक्षणं निमित्तमस्तीति ज्ञातम्। तद्विविधं कारणभेदादित्याह दिक्कृतं कालकृतं चेति। ननु दिक्कालयोः सर्वोत्पत्तिमतां निमित्तकारणत्वाभिधानाद्विशेषाभिधानासम्भव एव। न। दिक्कालपिण्डसंयोगयोस्तच्छब्दवाच्यत्वेन तत्कृतत्वोपपत्तेर्दिक्पिण्डसंयोगकृतं दिक्कृतं कालपिण्डसंयोगकृतं च कालकृतमिति। तथाऽनयोः परस्परं भेदमाह–तत्र दिक्कृतं देश-(१)विशेषप्रत्यायकमिति। देशविशेषः प्रत्यायकोऽस्येति–देशविशेषं वा प्रत्याययतीति कालकृताद्भिद्यते। कालकृतन्तु वयोभेदप्रत्यायकमिति। वयोभेदः प्रत्यायको यस्येति वयोभेदप्रत्यायकं वयोभेदं वा प्रत्याययतीति दिक्कृताद्भिद्यते।

तत्र दिक्कृतस्योत्पत्तिरभिधीयते। कथमित्यव्युत्पन्नप्रश्नानन्तरमाहैकस्यां दिश्यवस्थितयोः पिण्डयोरित्यादि। एकस्यां दिश्यवस्थितयोर्न विभिन्नदिश्यवस्थितयोरिति नियमप्रतिपादनम्। संयुक्तसंयोगबह्वल्पभावे सतीति। भूप्रदेशानधिकृत्यैतत्संयुक्तेन सह संयोगास्तेषां बह्वल्पभाव इत्येकस्मिन् पिण्डे संयुक्तसंयोगाल्पीयस्त्वमन्यस्मिंस्ततो बहुत्वम्, तस्मिन् सत्येकस्य द्रष्टुर्न विभिन्नस्य, सन्निकृष्टमवधिं कृत्वापि एतस्माद्विप्रकृष्टोयमिति परत्वाधारे उत्पत्स्यमानपरत्वे बुद्धिरुत्पद्यते, तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात्परत्वोत्पत्तिरिति दिक्प्रदेशयोः परापरव्यपदेशस्तत्सम्पादकत्वादुपचारेण।

---

(१) अत्र व्योमशिवाचार्यमतेन भाष्ये 'देशविशेषप्रत्यायक' मिति पाठो बोद्धव्यः।

विप्रकृष्टं च पिण्डमवधिं कृत्वा इतरस्मिन्पिण्डसंयुक्तसंयोगाल्पीयस्त्वान्निमित्तात्सन्निकृष्टा बुद्धिरुत्पद्यते। तां सन्निकृष्टां बुद्धिमपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वोत्पत्तिरिति। पिण्डः समवायिकारणम्, दिक्पिण्डसंयोगोऽसमवायिकारणम्, विशिष्टा च बुद्धिर्निमित्तकारणमिति।

ननु चात्र सन्निकृष्टमवधिं कृत्वा विप्रकृष्टे बुद्धिर्विप्रकृष्टं चावधिं कृत्वा सन्निकृष्टे बुद्धिरिति विप्रकृष्टसंनिकृष्टबुद्ध्योः परस्परापेक्षित्वादुभयाभावप्रसङ्गः। तन्न। निर्विकल्पकज्ञाने प्रतिभातस्यावधित्वेनाभ्युपगमात्। तथाहि—सन्निकृष्टविप्रकृष्टयोः प्रत्यक्षेणैव निर्विकल्पकावभासे सत्येतस्मादयं सन्निकृष्टो विप्रकृष्टश्चेति सविकल्पकं ज्ञानं भवत्येव।

अन्ये तु निर्विकल्पावभासजनितसंस्कारजस्मृत्युपस्थापितयोः सन्निकृष्टविप्रकृष्टयोः परस्परावधिभावो घटत इति ब्रुवते। तस्मान्न परस्परापेक्षितत्वादुभयाभाव इति स्थितम्।

कालकृतयोरपि परत्वापरत्वयोः कथमुत्पत्तिरित्याह—वर्त्तमानकालयोरित्यादि। वर्त्तमानः कालो ययोः पिण्डयोस्तौ च तथोक्तौ तयोरित्युभयत्रापि दिक्कालकृतपरत्वापरत्वयोरुत्पत्तौ नियमः। अनियतदिग्देशयोरिति। न नियतो दिग्देशो ययोस्तौ तथोक्तौ तयोरिति कालकृतयोरुत्पत्तावनियमोपदर्शनम्। युवस्थविरयोरिति वयोभेदोपदर्शनार्थं समानवयसि परापरव्यवहारादर्शनात्। रूढश्मश्रु च कार्कश्यं च वलयश्च पलितानि च तान्यादिर्येषां तानि तथोक्तानि तेषां सान्निध्ये सतीति। रूढश्मश्रुकार्कश्यादिसान्निध्यं च सन्निकृष्टबुद्धेः कारणं, वलीपलितादिसान्निध्यं विप्रकृष्टबुद्धेरिति। एकस्य द्रष्टुरिति। यो हि द्रष्टा परत्वापरत्वे द्रष्टुमभिभावयति तस्य युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते, तां विप्रकृष्टां बुद्धिमपेक्ष्यापरेण कालप्रदेशेन योगात् परत्वस्योत्पत्तिरिति। विप्रकृष्टं च स्थविरमवधिं कृत्वा यून्येतस्मात्स्थविरादयं सन्निकृष्ट इति सान्निकृष्टा बुद्धिरुत्पद्यते, तामपेक्ष्यापरेण कालप्रदेशेन योगादपरत्वस्योत्पत्तिरिति। सन्निकृष्टविप्रकृष्टपिण्डयोः समवायिकारणत्वम्, कालपिण्डसंयोगयोश्चासमवायिकारणत्वम्, सन्निकृष्टविप्रकृष्टबुद्ध्योश्च निमित्तकारणत्वमिति।

ननु चायुक्तमेतत्। आहारोपयोगे सति पाकजोत्पत्तिन्यायेनैकस्मिन्

अहन्युपजातत्वाविशेषेण सन्निकृष्टविप्रकृष्टबुद्ध्योरभावात्परत्वापरत्वयोरसम्भवः। नैतदेवम् । जन्मनःप्रभृत्येकस्यां शरीरसन्ततावादित्यपरिवर्त्तनापेक्षया तदुपपत्तेः, तथाहि-एकस्य जनुःप्रभृतिभूयांस्यादित्यपरिवर्त्तनानि अपरस्याल्पीयांसीति तदपेक्षया सन्निकृष्टविप्रकृष्टबुद्ध्योर्भावः स्थविरे भूयांस्यादित्यपरिवर्त्तनानीति विप्रकृष्टबुद्धिर्यूनि चाल्पीयांसीति सन्निकृष्टबुद्धिस्तदपेक्षया परत्वापरत्वयोरुत्पत्तिरिति । शरीरसन्तानस्यादित्यपरिवर्त्तनापेक्षया घटत एवैतत् । दिक्कृतपरत्वापरत्ववैलक्षण्याच्चानयोर्निमित्तान्तरासम्भवे सति कालकृतत्वमिष्टम । न हि तस्मादेव निमित्ताद्व्यतिकरः सम्भवतीति । तदेवं परत्वापरत्वयोरुत्पादे व्यवस्थिते सूत्रेणाभिसम्बन्धोपदर्शनं च । तथा च सूत्रम्-'एकदिक्काभ्यां एककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं चेति । एका दिक्कालश्च ययोस्तौ तथोक्तौ ताभ्यामिति समवायिकारणनिर्देशः । एकदिग्भ्यामिति दिक्कृतपरत्वापरत्वापेक्षयैव नियमः । एककालाभ्यां वर्त्तमानकालाभ्याम् उभयत्रापीति, न ह्यसद्भ्यां सदसद्भ्यां च परत्वापरत्वे जायेते । सन्निकृष्टविप्रकृष्टाभ्यामिति । समवायिकारणोपसर्जनतया सन्निकृष्टविप्रकृष्टबुद्ध्योर्निमित्तकारणत्वमुक्तमेव । तथाहि-परमपरं चेति बुद्ध्यपेक्षमित्यपेक्षाशब्दश्चात्र कारणे वर्त्तत इति । कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इत्यसमवायिकारणं दर्शयति । ननु च कारणपरत्वात् कारणापरत्वाच्च यदि कार्ये परत्वापरत्वे भवतः तर्हि रूपादिवच्चिरोत्‌ परं नत्व(?)सन्निकृष्टविप्रकृष्टबुद्धिं विनापि समादेशे समानवयसि च पिण्डे तयोर्ग्रहणं स्यात्, न चैतदस्ति । अथानभिव्यक्तितोऽनुपलब्धिः । तन्न । सद्भावे प्रमाणाभावात् । सन्निकृष्टविप्रकृष्टबुद्ध्यादिसद्भावे चेदानीमुत्पन्नमात्रस्यापि ग्रहणमुपपद्यत एव । तस्माद्दिक्पिण्डसंयोगः कालपिण्डसंयोगश्च परत्वापरत्वसम्पादकत्वादुपचारेण परत्वापरत्वे इत्यभिधीयेते । न च परत्वापरत्वयोः परस्परापेक्षितत्वादसम्बन्धमुत्पत्त्यादिनिरूपणमिति वाच्यम । सर्वत्र परस्परापेक्षितत्वानुपलब्धेः, तथाहि-न बीजाङ्कुरयोः परस्परापेक्षित्वं बीजविनाशे सति कालान्तरे द्व्यणुकादिप्रक्रमेणाङ्कुरस्योत्पत्तेः, एवमङ्कुरविनाशे सत्युत्तरोत्तरकार्याणां पूर्वपूर्वविनाशे सति भावान्नाङ्कुरात् बीजमिति परस्परापेक्षित्वाभावः । तथा पितापुत्र-

संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथं विनाश इत्याह—यदा परत्वमुत्पद्यते स्वकारणपरत्वसामान्यज्ञानस्योत्पद्यमानता तदैव परत्वाधारे स्वकारणात् कर्म विभागस्योत्पद्यमानता। ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते गुणबुद्धेरुत्पद्यमानता, अपेक्षाबुद्धेर्विनश्यत्ता। तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते। तत्संयोगस्य विनश्यत्ता ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाशो गुणस्य विनश्यत्तेत्येकः कालः। ततः संयोगापेक्षाबुद्धिविनाशात्परत्वस्य विनाश इति।

त्रयाणां समवाय्यसमवायिनिमित्तानां युगपद्विनाशादपि कथं विनाश इत्याह—यदाऽपेक्षाबुद्धिरुत्पद्यते परत्वस्यात्पद्यमानता तदैव पिण्डावयवेऽपि कर्म विभागस्योत्पद्यमानता ततो यस्मिन्नेव कालेऽवयवान्तराद्द्रव्यारम्भकसंयोगविरोधिविभागः क्रियते, अवयवकर्मणा संयोगस्य विनश्यत्ता परत्वस्योत्पत्तिस्तत्सामान्यज्ञानस्योत्पद्यमानता, तस्मिन्नेव काले स्वकारणात्पिण्डेऽपि कर्म विभागस्योत्पद्यमानता ततो विभागात् पिण्डारम्भकसंयोगविनाशः पिण्डस्य विनश्यत्ता पिण्डकर्मणा च विभागः क्रियते। दिक्पिण्डसंयोगस्य विनश्यत्ता सामान्यबुद्धेश्चोत्पत्तिरपेक्षाबुद्धेर्विनश्यत्ता गुणबुद्धेरुत्पद्यमानतेत्येकः कालः। तत संयोगविनाशात्पिण्डविनाशो विभागाच्च दिक्पिण्डसंयोगविनाशः सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत्सर्वं युगपद्भवतीति। तत्र त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशात्परत्वस्य विनाश इति। अन्यत्र हि व्यस्तानां कारणत्वोपलब्धेः समुदितानामत्र सम्भवात् गुणविनाशे कारणत्वमिति सम्भाव्यमानानेकारणत्वोपन्यासः॥

अथेदानीं बुद्धेरवसरप्राप्ताया लक्षणपरीक्षार्थं बुद्धिरुपलब्धिरित्यादि प्रकरणम्।

**(भा०) बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः। सा चानेकप्रकाराऽर्थानन्त्यात्प्रत्यर्थनियतत्वाच्च॥**

**तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे—विद्या चाविद्या चेति। तत्राविद्या चतुर्विधा—संशयविपर्ययानध्यवसायस्वप्नलक्षणा॥**

( व्यो० ) बुद्धिरिति पदमावर्त्यमानं लक्ष्यनिर्देशो लक्षणनिर्देशश्च भवति । तथाहि—बुद्धिरिति लक्ष्यनिर्देशो बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः लक्षणम् । अथाकाशे वर्त्तमानाः कथं व्याधिकरणत्वात् बुद्धेर्लक्षणम् ? वाच्यवाचकभावेन तद्धर्मत्वात् । लक्षणवैचित्र्यज्ञापनार्थञ्चात्र पर्यायलक्षणाभिधानम् । तथाहि–न परमसाधारणत्वात् कार्यकरणादिर्लक्षणं पर्यायात्मकं चेति । अथ शब्दानां पुरुषेच्छानुविधायितयार्थान्तरेऽपि वृत्तिः सम्भवतीति व्यभिचारः । न । अनादिकालप्रवाहायातत्वेन विशेषितत्वात् । तथाहि–बुद्धिरितरस्मात् भिद्यते अनादिकालप्रवाहायातत्थंभूतपर्यायाभिधेयत्वात्, यस्त्वितरस्मान्न भिद्यते न चासावेवम् यथा रूपादिरिति । व्यवहारो वा साध्यः । ननु बुद्धेरन्येपि पर्याया विद्यन्त इति तत्परिहारेणामीषमेव लक्षणत्वेनाभिधाने विशेषहेतुर्वक्तव्यः । स चायं विशेषोऽत्रैव विप्रतिपत्तेः । लक्षणार्थमपीदं वाक्यं सामर्थ्यात्तन्निरासपरं भवतीति।

तथाच सांख्याः–प्रधानस्याद्यो विकारो बुद्धिर्बीजस्योच्छूनतेव । प्रधानं च सत्त्वरजस्तमसां साम्यावस्था तद्विकारो वैषम्यम् । उपलब्धिस्तु सुखदुःखाकारपरिणतायां बुद्धावात्मनः प्रतिबिम्बोदयो भोगः, तदाह—

> विविक्तदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।
> प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ इति ॥

विविक्तदृग्विषयाकारपरिणतेन्द्रियाकारपरिणतिर्यस्याः सा तथोक्ता तस्यां बुद्धौ सत्यामात्मनो भोगः कथ्यते । किंरूपः? प्रतिबिम्बोदयो न वास्तवः । यथा चन्द्रमसः प्रतिबिम्बनं स्वच्छे न कलुषात्मकेऽम्भसीति उदाहरणम् । यथाहि चन्द्रमसः प्रतिबिम्बनमंभसि एवं विशिष्टपरिणामोपाचितायां बुद्धावात्मन इति । वास्तवे हि भोगे पुरुषस्य पूर्वस्वरूपनिवृत्तौ स्वरूपान्तरापत्तिर्विकारः स्यात् । तत्र चाचेतनत्वादनेकदूषणमिति ।

अन्ये त्वन्यथा भोगं मन्यन्ते । यथाहि पुरुषोऽविकृतात्मैव स्वनिर्भासेन चेतनं मनः करोति सान्निध्यादुपाधिः स्फटिकमतद्रूपं स्वनिर्भासं स्वाकारं करोति एवमयं पुरुषोऽविकृतस्वरूपोऽचेतनं मनः स्वनिर्भासं चेतनमिव करोति सा·

न्निध्यान्न पुनर्वस्तुतस्तस्य चैतन्यं विकारित्वात्। ज्ञानन्तु विषयाकारपरिणतेन्द्रियाकारतया बुद्धेः परिणामः। तथा भोगोत्सुकं पुरुषं मत्वा बुद्धेराकूतिः सम्पद्यते। तदाकूतसम्वेदनाच्चेन्द्रियाणां पूर्वस्वरूपनिवृत्तेर्विषयाकारः परिणामः। अन्यथा हि पूर्वरूपापरित्यागे प्रागिव पश्चादपि विषयावबोधो न स्यात्। विषयात्माकारश्च परिणामः प्रतिकर्मव्यवस्थातो नीलस्येदं पीतस्येदमिति ज्ञेयम्। अन्यथा हि विषयाकारं विना परिणामस्याविशेषादियं व्यवस्था न स्यात्। एवं विषयाकारपरिणतेन्द्रियेषु तदाकारतया बुद्धेः परिणामः। तथा सिध्यादिप्रत्ययाः पञ्चाशत् बुद्धेः परिणामविशेषा एव। अष्टधा सिद्धिर्नवधा तुष्टिः पञ्च विपर्ययभेदाः। तथाऽशक्तिरष्टाविंशतिधेत्यसिद्धितुष्ट्योर्भेदाः। सप्तदशैकादशेन्द्रियवधाश्चेति पञ्चाशत् भवन्तीति पर्यायत्वम्। बुध्यादिशब्दा न सिद्धाः विभिन्नार्थवाचकत्वादभिन्नप्रवृत्तिनिमित्ताश्चैकार्थवाचकाः शब्दाः पर्याया इति।

तदेतदसाम्प्रतम्। एषां प्रयोगतः पर्यायताप्रतीतेः। तथाहि— बुद्धः उपलब्धः ज्ञातः प्रतीतः इत्येकस्मिन्नर्थे प्रयुज्यमानाः प्रतीयन्ते विभिन्नार्थतायान्तूपलब्धो न बुद्धो ज्ञातो न प्रतीत इति सम्वेदनं स्यात्। न चैतदस्ति। न च प्रधानासत्त्वस्य वक्ष्यमाणस्यान्नत द्विकारस्य बुद्धेः सद्भावः, तदभावादात्मनिबुद्धेर्न बिम्बनमुपलब्धिः तत्परिणामो वा ज्ञानं प्रत्ययश्चेति। यदि वास्तवो भोगः स्यात् न संसार्यात्मनो मुक्ताद्विशेषः स्वनिष्ठायाश्चितेरुभयत्राविशेषात्। न च व्यापित्वाविशेषात् संसार्यात्मना एव बुद्धेर्विशेषेण सान्निध्यात् प्रतिबिम्बनं नेतरस्येति वाच्यम्। भोग्यभोक्तृत्वसम्बन्धस्तु भोगस्यावास्तवत्वाद्दुर्न्वार्यः। न च कर्मैव नियामकं तस्य बुद्ध्याऽसम्पादितत्वात्। तथाहि—बुद्ध्या सम्पादितं कर्म पुरुषेण विशिष्टसम्बन्धाभावादशेषपुरुषोपभोग्यं स्यात्। न च बुद्धेः कर्तृत्वमचेतनत्वात्। चैतन्यं हि प्रधानक्रिया (न) करणे वर्त्तत इति कर्तृत्वं हि स्वातन्त्र्यकरणत्वम्। पारतन्त्र्यं न स्यात्। स्वातन्त्र्यपारतन्त्र्ययोर्विधिप्रतिषेधरूपत्वादिति पुरुषस्यैव कर्तृत्वमभ्युपेयम्। न च तस्य पूर्वमकृत्वा कुर्वतः परिणामित्वं कारकसाकल्ये कार्यकरणात तद्वैकल्ये चाकरणात् साकल्यवैकल्ययोश्चाविर्भावतिरोभावाभ्यां नात्मनस्तथाभावः ततोऽन्यत्वात्। अतः पुरुषस्य कर्तृत्वे युक्तं वा-

स्तवं भोक्तृत्वम्, अन्यथा हि भोगक्रियामकुर्वतः कथमुदासीनस्य भोक्तृत्वं स्यात्, भोगस्य सुखदुःखवेदनारूपत्वात्। तदाधारता तु भोक्तृत्वमिति। यच्चेदं-पुरुषस्य भोगोत्सुकतां मन्यमानाया बुद्धेराकूतिः सम्पद्यते, तत्सम्वेदनाच्चेन्द्रियाणाम्-इति। असदेतत्। अचेतनत्वात्। अचेतना हि बुद्धिस्तथेन्द्रियाणि। तेषामाकूतसम्वेदनाभावे कथं नियतो विषयाकारतया परिणामः। पुरुषस्य तु चिद्रूपताव्यतिरेकेण नापरा भोगोत्सुकतास्ति। यश्चायमन्द्रियाणां विषयाकारपरिणामस्तस्य विषयाकारतायां न प्रति कर्मव्यवस्था प्रमाणं, 'तदन्तरेणापि तद्भावादि'ति वक्ष्यमाणन्यायात्। यदि च बुद्धेः पूर्वरूपानिवृत्ताविन्द्रियाकारतया परिणामः, तर्हि स्वरूपस्याव्यतिरेकात् बुद्धेरेवोत्पत्तिर्निवृत्तिश्चेति। अन्यत्वे प्रतिसन्धानाद्यभाव एव। न ह्यन्येनोपलब्धमर्थमन्यः प्रतिसन्धातुमर्हतीति। परिणामास्तु बुद्धेस्तादात्म्येन वर्त्तन्त इति तेषामनेकत्वे बुद्धेरप्यनेकत्वम्। विपर्यये तादात्म्यविरहात्। यदपीदं-बुद्धेः परिणामविशेषाः पञ्चाशत् प्रत्ययाः-तद्बुद्धिपूर्वकम् तत्परिणामविशेषाणामानन्त्यात्। न च तेषामेष्वेवान्तर्भावः प्रतिनियतलक्षणावरोधस्यानुपलब्धेरित्यलमतिप्रसङ्गेन।

तदेवं बुद्ध्यादिपर्यायाः परपक्षव्युदासे सति लक्षणमिष्यन्त इति स्थिते लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धेर्विप्रतिपत्तेश्च संशये सति तन्निरासार्थं सा चानेकप्रकारेति वाक्यम्। कुत एतत्? अर्थानन्त्यात्प्रत्यर्थनियतत्वाच्च। ननु चार्थानन्त्यमर्थधर्म इति व्यधिकरणत्वम्। न। अन्यथा तदुपपत्तेः। तथाहि-बुद्धेरर्थानन्त्यमित्यर्थोपदर्शनम्। एतत्साधनं चानन्तार्थत्वादिति। अर्थोऽनन्तो यस्याः सा तथोक्ता तस्या भावोऽनन्तार्थत्वमिति। अर्थस्त्वर्यतेऽनेनेति कारकसामर्थ्यं न कारकैकदेशस्तद्भेदेऽपि कार्यस्याभेदोपलब्धेः। तथाह्यनेककारकसम्पाद्यं घटाद्येकं दृष्टमिति। सामग्री तु प्रतिकार्यनियतत्वान्न तद्भेदं व्यभिचरतीति। अतोऽनेकप्रकारा बुद्धिरनन्तार्थत्वादनन्तकारकसामग्रीजन्यत्वात् घटादिवदिति। यश्चैको न चासावनन्तकारकसामग्रीजन्यो यथा घट इति। न तु कर्मव्युत्पत्त्यानन्तकर्मकारकजन्यत्वं साधनं विवक्षितमिति व्याख्येयम्। प्रत्यर्थनियतत्वादित्यनेन गतार्थत्वात्। तथाह्यर्थमर्थं प्रति नियतं यावत् भेदभिन्नं

कर्मकारकं तावत् भेदभिन्ना बुद्धय इति बुद्धिरनेकप्रकारा प्रत्यर्थ-नियतत्वात् घ्राणादिवत् ।

अन्ये तु पूर्वस्मिन्नेव वाक्ये कर्मव्युत्पत्त्याऽनन्तकर्मकारकजन्यत्वं साधनं लभ्यत एवेति प्रत्यर्थनियतत्वं प्रत्यात्मवृत्तित्वं विवक्षितमिति मन्यन्ते । तथाहि–अर्थतेऽस्मिन्नित्यात्मा ह्यर्थस्तं प्रति नियतत्वं प्रत्यात्म-वृत्तित्वमेव । सामान्यस्य त्वनन्तात्मवृत्तित्वान्न प्रत्यात्मनियतत्व-मस्तीति सम्भवेपि बुद्धेर्विशेषगुणत्वाद्विशेषगुणत्वे सतीति विशे-षणमभ्यूह्यम् ।

अन्ये तु रूपज्ञानं रसज्ञानमित्यादिबुद्धेर्नानात्वस्य प्रत्यक्षेणैव प्रसिद्धेरीश्वरबुद्धेरस्मद्बुद्धेश्च परस्परभेदज्ञापनार्थमर्थानन्त्यात् प्रत्यर्थनियतत्वाच्चेति पदद्वयमिति ब्रुवते । तथाहीश्वरबुद्धिरनन्ता-र्थत्वादस्मद्बुद्धेर्भिद्यते । अस्मद्बुद्धिश्च प्रत्यर्थनियतत्वादीश्वर-बुद्धेरिति । अत्र च बुद्धेरनेकत्वं सामान्येन प्रतिज्ञातमित्ययं विशेषः कुतो लभ्यत इति चिन्त्यम् ।

अथ बुद्धिव्यतिरेकेणार्थस्य सद्भावे प्रमाणाभावादयुक्तमर्थान-न्त्यं प्रत्यर्थनियतत्वं चेति । तथाहि—विज्ञानं स्वयंप्रकाशरूप-त्वादात्मानं प्रकाशयत्यर्थास्तु जडात्मानः तेषां कथं प्रकाशः । यदि ज्ञानं प्रगृहीतं प्रकाशकमिष्येत, तस्यापि ज्ञानान्तरेण ग्रहणाभ्युपगमे ज्ञानपरम्परायामुपक्षीणत्वादभिप्रेतस्यार्थस्याप्रकाशनमेव । न च पू-र्वज्ञानाग्रहणेपि अर्थस्यैव ग्रहणमिति वाच्यम् । तेषामासन्नत्वे सति ग्राह्यलक्षणप्राप्तत्वात् । तदाह—

तां ग्राह्यलक्षणप्राप्तामासन्नाजनिकामिदम् ।
अगृहीत्वोत्तरं ज्ञानं गृह्णीयात् अपरं कथम् ॥

अथागृहीतमेवार्थप्रकाशकम्, एवं तर्हि सन्तानान्तरोद्भूतम-पि सर्वेषामप्यप्रकाशकं स्यात् । यथाहि—स्वसन्तताबुपजातमज्ञात-मेवार्थप्रकाशकमेवं सन्तानान्तरेपि स्यात् अविशेषात् । अथ स्व-सम्वेद्यस्वसन्ततौ विज्ञानमऽर्थप्रकाशकम्, एवं तर्हि बोधशरी-रादर्थान्तरस्य वस्तुनोऽप्रकाश एव । तथाहि—यद्यमी पदार्थाः प्रकाशरूपाः कथं बोधाद्व्यतिरिच्यन्ते । बोधस्यैव तद्रूपत्वादप्रका-शरूपतया च सर्वदा न प्रकाशः स्यात् । अतो ज्ञानमेव प्रकाशस्वरूप-त्वादिति व्यवह्रियते । प्रकाशरूपतया हि सत्त्वं व्याप्तम् । सा च

व्यावर्त्तमाना बाह्यार्थेभ्यः स्वव्याप्तं सत्त्वं गृहीत्वा व्यावर्त्तेत इत्यसत्त्वं बोधव्यतिरेकिणाम् । न च बोधस्य बोधरूपतया सर्वत्राविशेषाद्विशिष्टार्थप्रकाशकत्वं स्यात् । अथ नीलस्येदं पीतस्येदमिति प्रतिकर्मव्यवस्थातः साकारं विज्ञानमिष्टम् । तर्हि विज्ञानमेवास्तु तदाकारम् अलं बाह्यार्थकल्पनयेति । तदुक्तम्—

धियो नीलादिरूपत्वे बाह्यार्थः किंनिबन्धनः । इति ।

तथा विज्ञानकालेऽर्थस्यासद्भावादर्थकाले तु ज्ञानस्येति कथम् तयोर्ग्राह्यग्राहकभावः? सदसद्रूपयोस्तदभावात् । एकस्मिंश्च काले द्वयोरुत्पत्त्यभ्युपगमे किं ग्राह्यम् किं च ग्राहकमित्यविशेषात् । न च विज्ञानार्थयोः स्वात्मन्येव पर्यवसाने अर्थाधीनतायाः प्रतिपत्तुमशक्यत्वात् ग्राह्यग्राहकभावः । तथावयविप्रतिषेधद्वारेण रूपादिसमुदायमात्रम् । तच्च समुदीयमानेभ्यो नार्थान्तरमिति व्यवस्थायामर्थाभाव एव । समुदायस्यापरमार्थसत्त्वेनाप्रतिभासनात् । ये तु परमार्थसन्तः परमाणवस्तेऽस्मद्दर्शनविषया न भवन्त्येव, अतीन्द्रियत्वात् । कार्यं चापरमार्थसत्त्वात् प्रतिभासमानमलिङ्गमेव । तस्मादनादिवासनावशाद्विज्ञानांश एव ग्राह्यग्राहकप्रविभागः । एतदाह—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

न तु परमार्थतः, तदाह—

नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नाऽनुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥

ननु तर्हि नीलमहं वेद्मि चक्षुषेति प्रतिभासः कथम्? तथाहि–नीलमिति कर्म अहमिति कर्ता वेद्मीति क्रिया चक्षुषेति करणमेतेषां परस्परव्यावृत्तवपुषां प्रतिभासनादभेदप्रतिपादनमुन्मत्तभाषितम् । नैतदेवम् । तैमिरिकस्य द्विचन्द्रदर्शनवदस्याप्युपपत्तेः । यथाहि तैमिरिकस्यार्थाभावेऽपि तदाकारं विज्ञानमुदेति एवं कर्मादिष्वविद्यमानेष्वप्यनादिवासनावशात्तदाकारं विज्ञानमिति । अथ तैमिरिकस्य केशादिज्ञानं बाध्यमानत्वान्निर्विषयम्, न चैवमेतत् । तदसत् । बाध्यबाधकभावस्यैवासम्भवात्, तथाहि–न विज्ञानमर्थेन बाध्यते । प्रतीयमानाप्रतीयमानाभ्यां बाध्यत्वेऽतिप्रसङ्गात् । प्रतीयमानेन हि बाधायां सर्वं विज्ञानं बाध्यं स्यादेवमप्रतीयमानेना-

पीति। अथ ज्ञानेनैव ज्ञानं बाध्यते। तत्रापि न विभिन्नविषयेण, रूपज्ञानेन रसादिज्ञानस्यापि बाधप्रसङ्गात्। समानविषयत्वे तु सम्पादकत्वमेव स्यात् न बाधकत्वम्। न च विज्ञानस्योत्पत्तिर्विनाशो वा बाधात्सर्वस्यापि तथाभावप्रसङ्गात्। अथ विषयान्तरोपसर्पणा मिथ्यापत्तिर्बाधः। तदसत्। विषयस्य कर्मकारकरूपत्वात्। यत्रोत्पद्यते ज्ञानं स एव तस्य विषय इति विषयान्तरोपसर्पणमसिद्धम्। विज्ञाने बाध्यबाधकसद्भावस्यैवाप्रसिद्धेः न मिथ्याज्ञानमस्तीति। नापि संविदि सम्यक्त्वम्। प्रमाणाभावात्। अथार्थक्रियासम्वादः प्रमाणम्। न, तत्रापि सम्वादकापेक्षायामनवस्थाप्रसङ्गात्। सम्वादकं च विना न सम्यक्त्वसिद्धिरिति। न चार्थक्रियापि बोधात् भिद्यते, सर्वस्यापि प्रतिभासमानस्य बोधादव्यतिरेकात्। यथोक्तम्—

प्रकाशमानस्तादात्म्यात्स्वरूपस्य प्रकाशकः।

यथा प्रकाशोऽभिमतस्तथा धीरात्मवेदिनी॥ इति॥

यदि च पदार्थानां निजं स्वरूपादि यथैकस्य प्रतिभासस्तथा सर्वेषामपीति विसम्वादो न स्यात्, न चैतदस्ति। तथाहि—

मन्त्राद्युपप्लुताक्षाणां ते वै म्लेच्छकलादयः।

अन्यथैवावभासन्ते तद्रूपरहिता अपि॥ इति।

अथ चोपप्लुतचक्षुषामन्यथा प्रतिभासस्तत इति किं प्रमाणम्। अनुपप्लुतचक्षुषां तथैव दर्शनमिति। तदाह—

तथैव दर्शनं तेषामनुपप्लुतचक्षुषाम्।

दूरे यथा वा मरुषु महानल्पोपि दृश्यते॥ इति।

अव्यवस्थामेवोत्तरार्द्धेन दर्शयति। एकशो बुद्ध्या विचार्यमाणेषु भावेषु रूपं न व्यवतिष्ठते। यथाहि तन्तुषु विचार्यमाणेषु पटस्याव्यवस्थानम् अंशुव्यतिरेकेण तन्तूनामित्यादूह्यम्। कथं तर्हि शाक्याः स्नानादिक्रियासु प्रवर्त्तन्ते बाह्यार्थस्यासत्त्वादिति। लोकव्यवहारानुसारितया, यथाहि अपरीक्षका बाह्यमर्थमविद्यावशात्प्रतिपद्यमानाः प्रवर्त्तन्ते तद्वत्परीक्षका अपीति 'लोकव्यवहारं प्रति सदृशौ बालपण्डितौ' इति न्यायात्॥

तदेतदसत्। अर्थविशेषादुत्पत्तिमन्तरेण बुद्धिविशेषस्याभावप्रसङ्गात्। रूपज्ञानं रसज्ञानमित्यादिपरस्परं व्यावृत्तस्वरूपाणि ज्ञानानि प्रथन्त इत्यर्थविशेषोऽभ्युपगन्तव्यः। अथ वासनाविशेषाद्विज्ञानविशे-

षः तस्या अपि विशिष्टज्ञानजनकत्वेपि ज्ञानाद्व्यतिरेके च संज्ञाभेदमात्रम् । अव्यतिरेके तु ज्ञानरूपोभयं सर्वत्राविशिष्टमिति रूपज्ञानं रसज्ञानमित्यादि वैचित्र्याभावः । न चाकारविशेषाद्विज्ञानविशेषः । तस्याप्यसम्भवात् । तथाहि ज्ञानमात्रस्य वास्तवाकारतायां नीलादिज्ञानं वास्तवाकारत्वात् प्रमाणं द्विचन्द्रादिज्ञानं चावास्तवाकारत्वादप्रमाणमिति विशेषव्याघातः । वास्तवाकारतायाः सर्वत्राविशेषात् । अथावास्तवाकारं तथापि विशेषाभ्युपगमहानिः। वादिप्रतिवादिनोश्च जयपराजयव्यवस्था न स्यात् उभयोरप्रमाणेन प्रवृत्तेरविशेषात् । न चावास्तवस्य विज्ञानतादात्म्यं, सदसद्रूपयोः खरविषाणयोरिवैकत्वादर्शनात् । अत एव—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।

इत्येकत्वसाधनमुन्मत्तभाषितम् । असतः सत्तादात्म्ये सत्त्वमसत्तादात्म्ये तु तद्रूपत्वमिति । तथा परप्रसिद्ध्या नियमेन सहोपलभ्यमानत्वं भेदेनैव व्याप्तमिति विरुद्धं स्यात्। अथ साहाय्यं यौगपद्यं वा विवक्षितं सहोपलभ्यमानत्वम् । तथापि तयोर्भेदेनैव व्याप्तत्वाद्विरुद्धत्वम् । तथा सर्वज्ञः स्वचित्तेन सहोपलभते परचित्तं, न च तस्य तस्मादभेद इति व्यभिचारः सर्वेषां सर्वज्ञताप्रसङ्गात्। न चैकस्यैवोपलम्भनियमः हेतुः । अशब्दार्थत्वात् साध्याविशिष्टत्वाच्च । तथाऽनेकरूपाद्यवयवस्य हि तस्यार्थस्योपलम्भे स्वरूपासिद्धोपीति । अथ बाह्यार्थाभावादेकोपलम्भनियमः । तन्न । इतरेतराश्रयत्वप्रसङ्गात् । तथा चैकोपलम्भनियमात् बाह्यार्थाभावसिद्धिस्ततिसद्धेश्चैकोपलम्भनियमसिद्धिरित्येकाभावादितराभावः । अथैकेनैवोपलभ्यमानत्वं साधनम् । न । अन्यवेदनाभावस्याप्रसिद्धेः । अर्थस्तु तत्समानक्षणैरन्यैरप्युपलभ्यत इत्येकेनैवोपलभ्यमानत्वमसिद्धम् । सच्चन्द्रासच्चन्द्रदृष्टान्तो सदसतोरेकत्वविरोधात्साध्यविकलः, साधनविकलश्चासतश्चन्द्रस्य सत्त्वेनोपलम्भाभावात् । तथा ज्ञानं ग्राहकस्वरूपं नीलादि ग्राह्यस्वरूपमित्यनयोः शुक्लपीतयोरिव स्वभावभेदात् भेदः । अभेदे हि बोधोपि नीलस्य ग्राह्यं नीलं च बोधस्य ग्राहकमिति स्यात् । न चैतदस्ति । कारणभेदाच्च नीलात् बोधोऽर्थान्तरम् । तथाहि—बोधात् बोधरूपतेन्द्रियाद्विषयप्रीतिनियमो विषयादाकारग्रहणम् इति भेदादेषां भेद एव । अथ न कारणभेदः । किं

तर्हि ? व्यावृत्तिभेदमात्रमबोधव्यावृत्तिबोधः, निराकारताव्यावृत्तिः साकारत्वम्, अतद्रूपत्वव्यावृत्तिर्विषयप्रतिनियम इति। एवं तर्हि नीलावबोधचक्षुषामाकारबोधविषयप्रतिनियमेषु व्यावृत्तिस्वरूपेषु व्यापारासम्भवात् अकारणत्वमेव, व्यावृत्तेरवस्तुरूपत्वात्। अथ व्यावृत्तात् बोधात् अबोधादिव्यावृत्तिर्नान्या। तर्हि बोधस्यैकरूपत्वात् कारणभेदप्रतिपादनमसम्बद्धं स्यात्। अतः कारणभेदादेव नीलतद्बोधयोर्भेदः। चित्रप्रतिभासे तु नीलपीताद्यनेकाकारं विज्ञानं बोधमात्रतायां कथं स्यादिति चिन्त्यम्। तथाहि–तेषामाकाराणामेकबोधतादात्म्यादेकत्वं तत्तादात्म्ये वा बोधस्यानेकत्वमिति दुर्निवारः प्रसङ्गः। अथ यावन्तस्तत्राकारास्तावन्त्येव ज्ञानानीति, तर्हि तेषां प्रतिनियताकारत्वाच्चित्रप्रतिभासाभावः। न चाकारसद्भावे प्रतिकर्मव्यवस्था प्रमाणम्। अन्यथापि भावात्। तथाहि-सकलकारकजन्यत्वविशेषेपि नीलस्य कर्मरूपतया व्यापारात्तेनैव व्यपदेशो नाकारार्पकत्वादिति। सर्वेषां जनकत्वाविशेषेप्यर्थस्यैवाकारार्पकत्वे विशेषहेतुर्वाच्यः। अथार्थस्य कर्मरूपतया व्यापारात्तस्यैवाकारार्पकत्वं तर्हि कर्मरूपतैवास्तु व्यपदेशनियमे हेतुः, किमाकारेणासम्भाविना कल्पितेनेति। तथाहि--नीलादेरसाधारणाकारार्पकत्वे बोधरूपता न स्यात्। साधारणार्पकत्वे तु प्रतिकर्मव्यवस्थाभाव इति। अथ समारोपिताकारं विज्ञानमिति नायं दोषः। तदसत्। आत्मनोवस्थितस्याभावे कथं ज्ञानात्मन्याकारः समारोप्यते। न तावदनुत्पन्नस्य विनष्टस्य वा समारोपकत्वम्। न चोत्पत्तिसमकालम्, आत्मलाभकाले समारोपणे व्यापारासम्भवात्। तस्मादाकारसद्भावे प्रमाणाभावात् अर्थविशेषादेवायं विशेष इति युक्तम्। अथाप्रकाशस्वरूपत्वादर्थानां कर्मप्रकाशः तद्विषयज्ञानोत्पाद एव, तथाहि—यस्मिन्विषये ज्ञानमुत्पन्नं स एवोपलब्धो नेतर इति विषयविषयिभावस्य नियामकत्वमतो ज्ञानमर्थप्रकाशो न तु प्रकाशकमिति। किं गृहीतमर्थप्रकाशकमुतागृहीतमित्यादि विकल्पः परमतास्पर्शी चक्षुरादेः कारकज्ञानस्यार्थप्रकाशकत्वाभ्युपगमात्। यत्र च ज्ञानं विशेषलिङ्गं वा तत्र गृहीतस्यार्थपरिच्छेदे व्यापारोऽभ्युपगम्यत एव। तस्य चात्मान्तःकरणसम्बन्धात् ग्रहणं नावश्यम्। तत्रापि ज्ञानान्तरमित्यनवस्थाभावः। न चोत्पन्ने ज्ञाने सम्वेदनाभावस्याविशे-

षात् सन्तानान्तरेऽप्यर्थप्रकाशः, नियतात्मसम्बन्धस्य नियामकत्वात् । तथाहि—यस्मिन्नात्मनि समवेतं तज्ज्ञानमुपजातं स एव द्रष्टा नान्यः, तत्र विवक्षितज्ञानासमवायात् । यस्य तु स्वसम्वेद्यं ज्ञानं निराधारं तस्य सन्तानान्तरेऽर्थप्रकाशस्तस्मान्न भवतीति चिन्त्यम् । कार्य्यकारणभावस्तु क्षणिकत्वे सति पूर्वं प्रतिषिद्ध एव । यच्चेदं—स्वसम्वेद्यं विज्ञानमित्यर्थान्तरस्यासम्वेदनमेव—तदसत् । विकल्पानुपपत्तेः । तथाहि—यदि स्वसम्वेद्यमात्मान्तःकरणसंयोगादुपलभ्यं तदिष्टमेव । अथ तदेव ज्ञानं प्रमाणं प्रमेयफलं चेति । तन्न । अन्यत्र त्रितयस्याभेदादर्शनात् । भेदे त्वनेकं दण्डाद्युदाहरणम् । अतो न ज्ञाने करणकर्मणोरभेदः स्वसम्वेद्यत्वम् नापि क्रियाकर्मणोरिति । तस्मात् ज्ञानान्तरसम्वेद्यं सम्वेदनं वेद्यत्वात् घटादिवत् । यच्चेदं—प्रकाशस्वरूपत्वादात्मनैव प्रकाशते प्रदीपवत्—इत्युक्तम् । तत्र यदि प्रकाशकत्वं बोधरूपत्वं विवक्षितं तदा साधनविकलमुदाहरणम् । प्रदीपे बोधरूपत्वस्यासम्भवात् । अथ प्रकाशकत्वं भास्वररूपसम्बन्धित्वं तद्विज्ञाने नास्त्यतो ज्ञानान्तरस्य तद्विषयस्योत्पाद एव ज्ञानस्य परिच्छेद इति । यच्चेदं—किंप्रकाशस्वरूपास्तद्विपरीता वा पदार्था ज्ञानेन प्रकाशन्त—इत्युक्तम् । तत्र यदि प्रकाशस्वरूपत्वं बोधरूपत्वं तन्नास्त्यर्थानामबोधरूपत्वात्, तेषां कथं प्रकाशः । तद्विषयज्ञानोत्पादात्—यद्विषयं ज्ञानमुत्पन्नं असावर्थः परिच्छिन्न इति व्यवहारः । तस्मान्निराकारत्वे विज्ञानस्य विषयविषयिभावो नियामक इति 'धियो नीलादिरूपत्वे बाह्यार्थः किं निबन्धनस्तव' इत्यपास्तमेव । यच्चेदं—ग्राह्यग्राहकयोरेककालानुभावाभावेन दूषणम्—तदप्यपास्तम् । क्षणिकत्वानभ्युपगमात् । यो हि क्षणिकत्वं मन्यते तस्यायं दोषो—ज्ञानकालेऽर्थस्यासद्भावोऽर्थकाले ज्ञानस्येति तयोर्ग्राह्यग्राहकभावानुपपत्तिः—इति । तथाऽवयविनः पूर्वमेव व्यवस्थापनात् न रूपादिसमुदायस्यापरमार्थत्वेन विज्ञानविषयत्वमिति । परमाणूनां सद्भावासिद्धेर्विज्ञानमात्रमेवेति अदूषणमनभ्युपगमात् । अतो यदाह विज्ञानावाद्येव—ग्राह्यग्राहकप्रविभागः कल्पनावशादिति—तदप्यपास्तमेव, बोधरूपव्यतिरेकेण बाह्यार्थस्य चक्षुरादिना प्रतिभासनात् । प्रवृत्तिनिवृत्त्योश्च तद्विषयत्वादिति । तथा ह्यर्थावरोधे सति अर्थक्रियार्थिनः तदभिमुखाः प्रवर्त्तन्ते चेति दृष्टम् । न च भ्रान्त्यैव प्रवृत्तिः, अविस-

म्वादोपलब्धेः । अथ प्रवृत्तिनिवृत्त्योरर्थक्रियायाश्च विज्ञानादव्यतिरेक एव । तन्न । वस्तुरूपतया प्रतिभासमानानां परस्परव्यावृत्तात्मनां ज्ञानाभेदे प्रमाणाभावात् । अर्थानभ्युपगमे च सम्वादानुत्पत्तिः । व्यापारव्याहाराभ्यां च सन्तानान्तरानुभवः । अर्थाकारे सम्वादः । तन्न । तस्यासत्त्वात् । न चोत्पादनाविशेषेण सम्वादः, रूपज्ञानानन्तरं रसज्ञानोत्पत्तौ विसम्वादप्रसङ्गात् । अथ स्वसन्ततौ व्यापारव्याहारयोः स्वचित्तेहापूर्वकत्वेनोपलम्भात् सन्तानान्तरेपि तत्पूर्वकत्वानुमानमिति सन्तानान्तरसिद्धिः । न । प्रतीयमानयोर्व्यापारव्याहारयोः स्वचित्तादभेदे परचित्तपूर्वकत्वाभावप्रसङ्गात्, भेदे च बहिर्मुखावभासित्वेन प्रतीयमानत्वे कथं न बाह्यार्थसद्भावः । न च स्वसंविद्वादिनोऽविनाभावग्रहणाभावेऽनुमानप्रवृत्तिर्युक्ता, तथाहि–व्यापारव्याहारः प्रतिभासिज्ञानात्मनश्चित्तान्तरपूर्वकतां गृह्णात्यात्मन्येव पर्यवसानात्, एतत्कारणमपि चित्तं न तत्कारणतां गृह्णाति, नाप्युभाभ्यां वासनाक्रमेण विकल्पज्ञानं कार्यकारणभावग्राहकमिति वाच्यम् । अनुभवानुरूपत्वाद्वासनायाः कथं कार्यकारणभावाग्रहे तदध्यवसायिविकल्प इति । न चातद्रूपसमारोपितो विकल्पः, तस्य पारम्पर्येणाप्यर्थाविषयत्वे कार्यकारणभावाग्रहेऽनुमानाप्रवृत्तिरेव । तस्मादुभयोर्लिङ्गलिङ्गिनोरिदमस्य व्याप्यमिदमस्य व्यापकमिति अविनाभावग्रहे सति अनुमानं प्रवर्त्तते इति बोधादन्योऽर्थोऽभ्युपगन्तव्यः । यच्चेदं–'नीलमहं वेद्मीति ज्ञानं तैमिरिकस्य द्विचन्द्रदर्शनवत् भ्रान्तमिति–असदेतत् । अबाध्यमानत्वात् । तथाहि–तैमिरिकस्य तिमिरविनाशादूर्ध्वमेकत्वज्ञाने सति द्विचन्द्रदर्शनं भ्रान्तमिति प्रतिभाति, अनुत्पन्नतिमिरस्यान्यस्य नैवम्, नीलमित्यादिज्ञाने विपरीतार्थग्रहकप्रमाणानुपपत्तेः मिथ्यात्वमिति । ननूक्तं किं केन बाध्यते ? ज्ञानं ज्ञानेनेति । तथाह्युदकज्ञानस्योदकं विषयः सर्वजनप्रतीतस्तत्परित्यागेण विषयान्तरे मरीच्यादावुत्पन्नं तद्ग्राहिणा ज्ञानेन बाध्यते, मिथ्यात्वविशिष्टतया ज्ञाप्यते–मिथ्येदं ममोदकज्ञानमुत्पन्नम्–इति । तज्जनितसंस्कारनिवृत्तिर्वा । तथाहि—मरीचिज्ञाने सति उदकज्ञानजनितसंस्कारनिवृत्तौ कालान्तरेऽप्युदकं मया दृष्टमिति स्मरणानुत्पत्तौ तद्देशाभिमुख्येन प्रवृत्त्यभाव इति । बाधकानभ्युपगमे च ज्ञानस्य सत्येतरविवेकानुपपत्तेर्वादिप्रतिवा-

दिनोर्जयपराजयव्यवस्था न स्यादित्युक्तम्। यत्तु 'मन्त्राद्युपप्लुताक्षाणामि'त्यादि वाक्यम्। तन्न परिहारार्हम्। स्वत एव प्रतिभासस्यान्यथात्वाभ्युपगमात्। तथाहि-त एव म्लेच्छकलादयोऽन्यथाप्रतिभासन्ते न स्वरूपेणोपप्लुतचक्षुषां न सर्वेषामितीष्यत एवेदं मिथ्याज्ञानं बाधकोपपत्तेः। इष्टं च बाधकं-तथैव दर्शनं तेषामनुपप्लुतचक्षुषामिति, दूरे च मरुस्थलपोऽपि महानुपलभ्यते, सन्निकृष्टे चाल्प एवेति। अनेन तस्य बाधा। न च तेनैवास्य बाधा। प्रमातृमात्रस्य सर्वदेशेष्वतद्रूपतया प्रतिभासनात्। महत्त्वं च देशविशेष एव प्रतिभासते नान्यत्रेत्यसदेव। तदेव हि पदार्थानां स्वरूपं यदविसंवादि स्वस्थात्मनामर्थक्रियासम्पादकं चेति। अतो म्लेछकलादयो येन रूपेणाविप्लुतचक्षुषां प्रतिभासन्ते अर्थक्रियां च सम्पादयन्ति तेनैव रूपेण सन्तो न रूपान्तरेणेति। कथम्? अर्थानामव्यवस्थानात्। अथ स्वप्नावस्थायामर्थानामसत्त्वेपि प्रतिभासो विशिष्टार्थक्रिया च रेतसो विसर्गः सम्भवतीति। नन्वेवं तर्हि स्वप्नावस्थायामर्थानामसत्त्वं कथं ज्ञातमिति वाच्यम्। यदि जाग्रदवस्थायामुपलम्भात्, तर्हि येषामुपलम्भः तेषामसत्त्वमायातम्। अन्यथा हि जाग्रदवस्थायामनुपलम्भेन स्वप्नावस्थायामसत्त्वं न स्यात्। अतः प्रतीयमानत्वात्स्वप्नावस्थायामिव जाग्रदवस्थायामप्यसत्त्वमिति न वाच्यम्। प्रतिभासमानत्वस्य साधनस्य सद्भावेऽप्यसत्त्वस्य साध्यस्यानिश्चयात्। प्रतीयमानत्वं च बोधेऽस्ति न चासत्त्वमिति व्यभिचारः। तथार्थानामसत्त्वे प्रतीयमानत्वस्य साधनस्यापक्षधर्मत्वं स्यात्। उदाहरणे प्रतीयमानत्वेन नासत्त्वमपि तु प्रमाणतोऽनुपलब्धेरित्यन्यथासिद्धं चेति। न च सर्वं विज्ञानमिति वादिनः स्वप्नावस्था जाग्रदवस्था चेति विशेषः संभवत्युभयत्रापि स्वसम्वेद्यस्य ज्ञानस्यावस्थानभ्युपगमात्। मिद्रतवश्च (?) पूर्वं निरस्ता एव। तस्मादक्षादिजनितज्ञानसमवायो जाग्रदवस्था तद्विपरीता तु स्वप्नावस्थेति युक्तम्। यच्चेदं बुध्या विवेचनाद्भावानामसत्त्वम्-इत्युक्तम्। तदसत्। स्वबुद्धिप्रतिभासमानवपुषामसत्त्वे बोधस्याप्यसत्त्वप्रसङ्गात्। तथाहि—रूपादयः परस्परस्वरूपपरिहारेण व्यवस्थिताः स्वबुद्धिविषयाः, पटादयोऽप्येवमतो यद्यपि पटस्तन्त्वादिबुद्धौ न प्रतिभासते तथापि स्वबुद्धिविषयत्वात्परमार्थसन्नेव। तदेवं पटादयः परस्परव्यावृत्तबुद्धि-

विषया विशिष्टार्थक्रियाकारिणश्चेति परमार्थसन्त एव । न च प्रमाणं विना प्रमेयसिद्धिरिति विज्ञानव्यतिरेकिणामसत्त्वे प्रमाणमभिधेयम् । प्रमाणं विना च पदार्थानामसत्त्वसिद्धौ सत्त्वमपि स्यात्, प्रमाणाभावस्योभयत्राविशेषात् । अथार्थानामसत्त्वसिद्धौ ग्राह्यलक्षणायोगः प्रमाणम् । न । तस्यापि भावधर्मत्वे विरुद्धत्वम् अभावधर्मत्वे चाश्रयासिद्धत्वमुभयधर्मत्वे तु व्यभिचारादसाधनत्वमिति । व्यधिकरणत्वाच्च । तथाहि–ग्राह्यलक्षणस्यायोगो न ग्राह्यधर्म इति कथं तस्यासत्त्वं साधयेत् । स्वरूपासिद्धश्च—ग्राह्यलक्षणस्य सद्भावात् । तथाच महत्त्वादि ग्राह्यलक्षणं वक्ष्यमाणमिति । साध्याविशिष्टश्च–ग्राह्यलक्षणायोगस्यापि साध्यत्वात् । न च प्रमाणान्तरमस्तीति।

एतेन शून्यवादोऽपि निरस्त एवेति न पृथगभिधीयते । तथाहि–सर्वार्थानामसत्त्वं विज्ञानस्यापि ग्राह्यग्राहकाकाररहितत्वात् असत्त्वे च सर्वं शून्यमिति स्यात् तच्च निरस्तमेव प्रमाणाभावेन प्रमेयस्यासिद्धेः । बोधस्यार्थानां च प्रमाणतो व्यवस्थापनादिति । तदेवं बोधव्यतिरेकेणार्थसद्भावसिद्धेरर्थानन्त्यात्प्रत्यर्थनियतत्वाच्च बुद्धेरनेकत्वं युक्तमिति ।

अन्ये तु–आत्मनः परिणामविशेषो बुद्धिस्तद्रूपतया चानित्या आत्मरूपतया तु नित्येति–मतम्, तस्य निरासार्थं—सा चानेकप्रकारेति वाक्यं मन्यन्ते । तथाहि–बुद्धेरनेकत्वादात्मनोऽप्यनेकत्वमभेदात्, आत्मैकत्वे वा बुद्धेरेकत्वम् । न च भेदाभेदपक्षः संभवत्यनेकान्तवादस्य पूर्वमेव प्रतिषेधात् । अतो बुद्धेर्गुणत्वादनेकत्वेऽप्यात्मनस्तथाभावो न भवतीति दिग्वाससां मतं निषिद्धम् । नन्वेवं तर्हि बुद्धेरानन्त्यात् कथं तत्त्वज्ञानविषयत्वमित्याह तस्याः सत्यप्यनेकविधत्वे समासतः संक्षेपतो द्विविधेति परिज्ञानं कार्यमिति । केन रूपेण द्वैविध्यमित्याह–विद्या चाविद्या चेति ।

अन्ये तु वेदान्तमते विद्याविद्ययोः श्रवणात् बुद्धेरानन्त्यप्रतिपादनमागमविरुद्धं स्यादित्याशङ्कानिषेधार्थमाह–तस्याः सत्यप्यनेकविधत्वे समासतः संक्षेपतो द्वैविध्यमिष्यत एव । विद्या चाविद्या चेति । विद्या हि देशकालावस्थादिभेदेनाबाध्यमानोऽध्यवसायः । तद्विपरीतार्था चाविद्येति । न तु प्रमाणाप्रमाणत्वे विद्याविद्यात्वे व्यभिचारात् । तथाहि–यदि प्रमीयतेऽनेनेति प्रमाणमिति

विवक्षितं संशयादेरप्यात्मान्तःकरणाधिगमे प्रमाणत्वमस्तीति व्यभिचारः । सर्वेषु च प्रत्यक्षादिज्ञानेषु कारणत्वानुपपत्तेरव्याप्तिश्च । फलविवक्षायान्तु न स्मृतेः प्रमाणफलत्वमिति विद्यात्वं न स्यात् ।

गुरवस्तु–विशिष्टव्यवहारकारणं विज्ञानं विद्या विपरीतं चाविद्येति ब्रुवते । तत्र यदि प्रवृत्तिनिवृत्तिलक्षणो विशिष्टव्यवहारो विवक्षितः तदा संशयादिज्ञानेष्वपि भावादतिव्याप्तिः । न च पक्षे सर्वत्रास्तीत्यव्याप्तिश्च । अथ देशादिभेदेनापि सम्यक्तया मयोपलब्धमिति ज्ञानं विशिष्टव्यवहारः, तज्जनकत्वमपि न सर्वेषु विद्याभेदेष्वस्तीत्यव्याप्तिः । तथाच सम्यङ्मयोपलब्धमिति व्यवहारो न सर्वेषु विद्याभेदेषु विद्यत इत्यव्यापकत्वमेव । तत्राप्यविद्या चतुर्विधेति क्रमातिक्रमेणाविद्यायाः स्वरूपनिरूपणमर्थप्रकाशस्य विवक्षितत्वात् । तदुच्छेद्यत्वज्ञापनार्थमिति चान्ये । अविद्या हि विद्यया समुच्छिद्यत इति । अथ केन रूपेण चतुर्विधा ? संशयविपर्ययानध्यवसायस्वप्नलक्षणस्वरूपेति । ननूहज्ञानमप्यस्ति । तस्यान्तर्भावो न विद्यायां नाप्यविद्यायामुभयत्रापि चातुर्विध्याभिधानात् । न युक्तमेतत । संशयनिश्चयव्यतिरेकेणोहज्ञानस्यासम्वेदनात् । अथास्ति संशयादूर्ध्वं बाह्यालिप्रदेशे सम्बन्धोपलब्धे स्थाणुपक्षप्रतिषेधे सति पुरुषेणानेन भवितव्यमिति सम्भावनाप्रत्ययः । स तु तस्मिंस्तदिति रूपत्वान्निश्चय एव । तथाहि–किमयं स्थाणुः स्यात् पुरुषो वेत्युभयप्रसङ्गे सत्येकस्य प्रतिषेधात्तदन्यस्याप्रतिषिद्धस्यावस्थानं भवत्येव । अथ व्यधिकरणविशेषोपलम्भान्न युक्तो निश्चयः । तदसत् । संयोगिविशेषस्याभ्युपगमात । यथाहि काकनिलयनादयो विशेषाः संयोगिनि स्थाणौ निश्चयमुत्पादयन्ति एवं बाह्यालीप्रदेशः पुरुषेपीति । तत्सम्बन्धस्तु समवेत एव विशेष इति न व्यधिकरणत्वम् । अथ नायं स्थाणुर्बाह्यालिप्रदेशसम्बन्धित्वादिति विषयात् साधनान्न निर्णयः । तन्न । व्यापारापेक्षया पुरुषविषयत्वस्यापि सम्भवात् । ज्ञानान्तरत्वे तूहज्ञानस्याव्यभिचार्यर्थज्ञानत्वात प्रमाणरूपतायां प्रमाणान्तरमभिधेयप्रमाणं विना तत्फलस्यानुपपत्तेः व्यभिचारि वा प्रमाणसामान्यलक्षणं स्यात् । अथेन्द्रियार्थसन्निकर्षाद्येव प्रमाणमूहोत्पत्तौ । कथं तर्हि ज्ञानातरं प्रत्यक्षादिफलत्वादित्यलम् ।

अन्ये तूहस्य सद्भावेऽपि समानतन्त्रप्रसिद्धतया लाभादिहाऽन-

भिधानमिति ब्रुवते। न च प्रत्यक्षादेरप्यनेनैव न्यायेन लाभः। स्वमताभावे समानतन्त्रासिद्धेरभावात् ॥

अथ संशयस्येतरस्मात् भेदविषयविभागनिरूपणार्थं संशयस्तावदित्यादिप्रकरणम्।

(भा०) संशयस्तावत् प्रसिद्धानेकविशेषयोः सादृश्यमात्रदर्शनादुभयविशेषानुस्मरणादधर्माच्च किंस्विदित्युभयावलम्बी विमर्षः संशयः। स च द्विविधः–अन्तर्बहिश्च।

अन्तस्तावत्–आदेशिकस्य सम्यङ्मिथ्या चोद्दिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति किन्नु सम्यङ्मिथ्या वेति।

बहिर्द्विविधः–प्रत्यक्षविषये चाप्रत्यक्षविषये च। तत्राप्रत्यक्षविषये तावत्–साधारणलिङ्गदर्शनादुभयविशेषाऽनुस्मरणादधर्माच्च संशयो भवति। यथाऽटव्यां विषाणमात्रदर्शनाद्गौर्गवयो वेति।

प्रत्यक्षविषयेऽपि स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यदर्शनात् वक्रादिविशेषानुपलब्धितः स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणादुभयत्राकृष्यमाणस्यात्मनः प्रत्ययो दोलायते किं नु खल्वयं स्थाणुः स्यात्पुरुषो वेति ॥

(व्यो०) संशयस्तावद्व्याख्यायते अवसरप्राप्तत्वादिति। प्रसिद्धा अनेके विशेषा ययोस्तौ तथोक्तौ तयोरिति विषयनिरूपणम्। न तु प्रसिद्धौ च तावनेकाविशेषौ चेति कर्मधारयपरिग्रहः संशयस्य च धर्मिविषयत्वात्। अथैकस्यैव धर्मिणस्तत्र सद्भावादुभयोः कथं विषयत्वसम्भवः। पक्षोपन्यासाददोषः। तथाहि—यत्रानेके विशेषाः प्रसिद्धास्तत्रैव संशय इति नियम्यते, न त्वेकस्मिन्नेव काले तयोर्विषयत्वमेकस्य तत्रासम्भवात्। कालभेदेन तूभयोर्विषयत्वम्।

यद्यत्र सम्भाव्यते संशयोत्पत्तौ स तस्य विषय इति कारणमिति। सादृश्यमात्रदर्शनादिति। सादृश्यमात्रं दृश्यतेऽस्मिन्निति सादृश्यविशेषिधर्मिदर्शनं लभ्यत इति व्याख्येयम्, न तु सादृश्यमात्रस्य दर्शनमित्यभ्युपगमेन धर्मोपलम्भाद्धर्मिणि संशयस्य व्यधिकरणत्वात्। अत्र सादृश्यमात्रदर्शनादिति मात्राभिधानेनात्यन्तविशेषानुपलब्धिं दर्शयति। सामान्यस्य विशेषसहितस्योपलम्भेऽपि संशयादर्शनादिति। न च सामान्योपलम्भं विना विशेषानुपलब्धिः संशयजनिकेत्युभयाभिधानम्। तथापि नावाद्यारूढस्य वृक्षादिषूभयसद्भावेऽपि न संशय इत्युभयविशेषानुस्मरणादिति पदम्। विशेषानुस्मरणं च न पूर्वोक्तं विना संशयजनकत्वं दृष्टमिति समुदितं कारणम्। तदेवं सामान्यदर्शनाद्विशेषादर्शनादुभयविशेषानुस्मरणादधर्मादिभ्यश्चोत्पद्यमानत्वात् संशय इतरेभ्यो भिद्यत इति कारणात्मकं लक्षणम्। तथा च सूत्रम्—सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशय-इति। सामान्यं प्रत्यक्षं यस्मिन् धर्मिण्यसौ तथोक्तस्तस्मादिति। प्रत्यक्षशब्दश्च दृढप्रमाणवचनोऽत्र आनुमानिकस्यापि संशयस्याभ्युपगमात्। विशेषाप्रत्यक्षादिति। विशेषानुपलब्धेस्तत्स्मृतेश्च संशय इति। ननु चायुक्तमेतत्। देवदत्तस्य स्वप्रियतमां परित्यज्य व्रजतो देशव्यवधानात्रितयासद्भावेपि तत्र संशयानुपलब्धेः। तथाहि—स्त्रीत्वसामान्योपलम्भेप्यनेकादिविशेषोपलम्भात्तत्स्मरणाच्च किं मदीयान्यदीया वेति संशयो न दृष्टः परपक्षप्रतिषेधकस्य देशकालविशेषस्य बाधकस्योपलब्धेः एकस्मिन् देशे काले चान्या न सम्भवतीति। अतोऽस्य व्यवच्छेदार्थं बाधकसाधकप्रमाणाव्यवस्थातश्चेति पदं कार्यम्। न। विशेषानुपलब्धिपदेनैव निरस्तत्वात्। तथाहि—विशेषानुपलब्धिपदेन समस्तविशेषानुपलब्धिर्विवक्षिता। सा चात्र नास्ति देशकालविशेषस्य निश्चितत्वात्। अतो विशेषानुपलब्धिपदेनैवास्य निरस्तत्वादिति व्यवच्छेद्याभावं मन्यमानो मुनिर्न विशेषणान्तरमाहेति।

तस्य स्वरूपमाह—किं स्यादित्युभयावलम्बी विमर्शः संशय इति। संशीतिः संशयः संशय्यतेऽनेनात्मा सुप्त इव भवतीति निरुक्तिर्लक्षणम्। विमर्शनं विमर्शः—किमिदमेवमाहोस्विदेवं न भवतीति प्रत्ययः। स चोभयमालम्बते तच्छीलश्चेत्युभयाव-

लम्बी विमर्शः संशय इति । न चोभयोर्विषयत्वं घटत इत्युभयोल्लेखीति व्याख्येयम् । अतो विमर्श इतरस्मात् भिद्यते संशय इति वा व्यवहर्त्तव्यो विमर्शरूपत्वात् किं स्यादित्युभयावलम्बित्वाद्धेति । स च द्विविध इति विभागः । केन रूपेण ? अन्तर्बहिश्च । ननु पञ्चविधत्वात्संशयस्य द्वैविध्यमनुपपन्नम् । न । अस्यैवावान्तरभेदेन तदुपपत्तेः । तथाहि-समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति बाह्यस्त्रिविधः संशयः । उपलब्ध्यनुपलब्ध्योश्च मनःपरिच्छेद्यत्वादान्तरो द्विविध इति । अभिप्रेतं चैतत् भाष्यकर्त्तुः, यत आह—समानोऽनेकश्च धर्मो ज्ञेयस्थः उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे-इत्यविरोधः। सङ्ग्रहानभ्युपगमे च प्रत्यक्षाप्रत्यक्षविषयभेदेनापि संशयस्य भेदात्पञ्चत्वमसम्बद्धं स्यात् । अथानेनैव सङ्ग्रहादनभिधानम, तर्हि द्वैविध्येनैव सङ्ग्रहान्न पञ्चत्वमभिधीयते तस्य हि तद्भेदत्वादिति । अनेकश्च धर्मो साधारणत्वात् संशयहेतुर्न भवत्येव, विरुद्धविशेषैः सहानुपलम्भेन तत्स्मरणाजनकत्वात् । नापि विरुद्धाव्यभिचारी संशयहेतुः, तस्यैवासम्भवादिति वक्ष्यामोऽनैकान्तिकावसरे ।

तत्रान्तःसंशयस्य स्वरूपनिरूपणार्थमन्तस्तावदादेशिकस्येत्यादि । यथा ह्यादेशिकेन विशिष्टं निमित्तमुपलभ्यादिष्टमेकदा वृष्टिर्भविष्यतीति सम्यक् जातमन्यदा तु विपरीतम्, पुनः तथैवादिशतस्त्रिषु कालेषु असत्सु तस्मिन् ज्ञाने संशयो भवति-किं नु सम्यक् मिथ्या वेति । अथ ज्ञानस्य सामान्यदर्शनविशेषानुस्मरणकालेऽवस्थानाभावात् कथं संशयविषयत्वम् । तथाहि—तस्मिन् ज्ञाने भविष्यद्वृष्टिविषयत्वं समानो धर्मस्तद्विशिष्टे ज्ञाने ज्ञानमुत्पद्यते । तस्य तु विनश्यत्ता । सम्यक्त्वासम्यक्त्वविशेषस्मरणस्योत्पद्यमानता । ततो विशेषस्मरणकाले ज्ञानमतीतं कथं विषयः तदुपलक्षितात्मनो विषयत्वाददोषः । तथा च किं नु सम्यक्ज्ञानवानहं मिथ्याज्ञानवान्वेति संशयः।

अन्येतु विद्यमानस्येवातीतस्यापि विषयत्वमस्तीति ब्रुवते ।

बहिर्द्विविधः । केन रूपेण ? प्रत्यक्षविषये चाप्रत्यक्षविषये चेति । तत्राप्रत्यक्षविषये तावदभिधीयते संशयः साधारणलिङ्गदर्शनादिति । यल्लिङ्गं विरुद्धविशेषैः सहोपलब्धं तद्दर्शनाद्विशेषानुपलब्धेरुभयविशेषानुस्मरणादधर्माद्दिक्कालादिभ्यश्च संशयो भवति । यथाऽटव्यां विषाणमात्रदर्शनात्तद्गतविशेषानुपलब्धेस्तत्स्मरणात्संश-

यो भवति गौर्गवयो वेति । अथ प्रत्यक्षादस्य विशेषः कथम् ? सामान्यविशेषितस्य धर्मिणः प्रत्यक्षत्वं विशेषलक्षणाभिधानात् । अथ किं गोगवयविषाणेषु सामान्यम्, तुल्यावयवरचनायोगः । यथाभूता ह्यवयवरचना गोविषाणे दृष्टा तथा गवयविषाणेऽपीति । ये तु गोविषाणविशेषा गवयविषाणविशेषाश्च पूर्वोपलब्धास्तेषामत्रानुपलम्भ इति । अतः सादृश्यमात्रविशेषितं विषाणमुपलभमानस्य विशेषानुपलब्धेः तत्स्मरणाच्च किं गौः स्यात् गवयो वेति संशयः ।

प्रत्यक्षविषयेऽपि स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यस्य दर्शनात् वक्रादिविशेषानुपलब्धित इति। आदिपदेन काकनिलयनादयः स्थाणौ शिरःपाण्यादयश्च पुरुषेषु विशेषास्तेषामनुपलम्भादिति । स्थाणुत्वमादिर्यस्येत्यादिपदेन पुरुषत्वग्रहणं तच्च सामान्यमेव विशेषः तस्यानभिव्यक्तिर्व्यञ्जकस्य शिरःपाण्यादेरनुपलम्भात् । अतस्तदनभिव्यक्तावनुभवविशेषानुस्मरणादुभयत्र स्थाणौ पुरुषे चाकृष्यमाणस्यात्मनः प्रत्ययो दोलायते नैककोटौ व्यवतिष्ठते । स च किंस्वरूप इत्याह किन्नु खल्वयं स्थाणुः स्यात्पुरुषो वेति । अथ किमिदमेकं ज्ञानमाहोस्विदनेकमिति । यद्यनेकं क्रमेणोत्पद्यते स्थाणुरित्येकं पुरुष इति चान्यत्, तर्हि यत्तस्मिंस्तदिति रूपं तत्सम्यक् ज्ञानम् । विपरीतं तु मिथ्याज्ञानमिति संशयोच्छेदः । न । अनेकत्वानभ्युपगमात् । तथा ह्येकमेव किमयं स्थाणुः स्यात् पुरुषो वेति विरुद्धोल्लेखि ज्ञानं विरुद्धविशेषानुस्मरणोपलक्षितसामग्रीजन्यत्वात् । एकस्तु संस्कारो विशेषानुभवात् पूर्वपूर्वसंस्कारसचिवादुत्पद्यत इत्येकं स्मरणं विरुद्धविशेषविषयं जनयत्येव । यदि वा प्रतिनियतविशेषानुभवजनिताः संस्काराः संशयोपभोगप्रापकादृष्टनियमिताः संस्कारमारभन्ते, तस्मादनेकविशेषविषयं स्मरणमिति । विषयसंशयोत्पत्तावविशेषात्, प्रत्यक्षत्वं चोभयत्रापि समानमिति । सत्यम् । तथापि सामान्यविशेषितस्य लिङ्गोपलम्भात् साध्यधर्मविशेषिते धर्मिणि संशयाभ्युपगमोऽन्यत्र चालिङ्गभूते साध्यधर्मरहिते सामान्यवति प्रत्यक्षे धर्मिणीति विशेषः । किञ्चित्साधर्म्यन्तु न निषिध्यते सामान्यलक्षणाक्रान्तिश्चान्वयव्यतिरेकाभ्यामुपलभ्यते प्रत्यभिज्ञानाच्च । तथाहि—ममात्र संशयज्ञानमुत्पन्नमिति पश्चाद्विजानातीति सविषयत्वमस्य ॥

अथ विपर्ययस्य कारणस्वरूपविषयविभागनिरूपणार्थं न परं संशयो विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवतीत्येवमादि प्रकरणम् ॥

(भा०)विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवति

प्रत्यक्षविषये तावत्–प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्यायथार्थालोचनात् असन्निहितविषयज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगाद्धर्माच्चातस्मिंस्तदिति प्रत्ययो विपर्ययः। यथा गव्येवाश्व इति। असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति यथा व्यपगतघनपटलमचलजलनिधिसदृशमम्बरमञ्जनचूर्णपुञ्जश्यामं शार्वरं तम इति।

अनुमानविषयेऽपि–बाष्पादिभिर्धूमाभिमतैर्वन्ह्यनुमानं गवयविषाणदर्शनाच्च गौरिति।

त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेष्विदं श्रेय इति मिथ्याप्रत्ययः विपर्ययः, शरीरेन्द्रियमनस्स्वात्माभिमानः, कृतकेषु नित्यत्वदर्शनं, कारणवैकल्ये कार्योत्पत्तिज्ञानं, हितमुपदिशत्स्वहितामिति ज्ञानम्, अहितमुपदिशत्सु हितामिति ज्ञानम् ॥

(व्यो०) यदि वा संशयस्य प्रत्यक्षानुमानविषयत्वाभ्युपगमाद्विपर्ययस्य विषयाभावादसम्भवो माभूदित्याह—विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवतीति। न च विषयाभेदादेकत्वं स्वरूपभेदस्य कारणभेदस्य च सम्भवात्। आगमिकेऽपि विषये विसंवादोपलब्धेर्विपर्ययदर्शनाद्व्याहतमवधारणं–प्रत्यक्षानुमानविषय एव विपर्ययइति। न, निर्विषयत्वप्रतिषेधपरत्वात्। यच्चेदम्–असत्यपि प्रत्यक्षे प्रत्यक्षभिमान–इति वाक्यं तदन्यथा व्याख्येयामिति केचित् ॥

अन्ये तु पराभ्युपगतस्य कल्पनाज्ञानस्य निरासार्थं विपर्ययोपि प्रत्यक्षानुमानविषय एव न तु सर्वः सविषयः क्वचिदविषयस्यापि

सम्भवात् । यत्र हि विषयोऽन्वयव्यतिरेकाभ्यामुपलभ्यते असौ सविषयोऽन्यस्तु निर्विषयो न तु सर्व इति ।

अन्ये तु प्रत्यक्षानुमानविषयो भवत्येव विपर्यय इत्यभवनप्रतिषेधो विवक्षितो नित्यविपर्ययव्यवच्छेदार्थमिति ब्रुवते । तदयुक्तं व्याख्यानम् । तस्यैवाप्रसिद्धेः । न च नित्यस्यप्रत्यक्षानुमानविषयत्वं व्यापाराहते सम्भाव्यत इति कथमस्यात्र भवनप्रतिषेध इत्यलम् ॥

प्रत्यक्षविषये तावद्विपर्ययमाह—प्रसिद्धा अनेका विशेषा ययोः तौ तथोक्तौ तयोरिति विषयनिरूपणम् । पित्तं च कफश्चानिलश्चेति पित्तकफानिलास्तैरुपहतानीन्द्रियाणि यस्यासौ स तथोक्तः तस्य विपर्ययो भवति । केभ्य इत्याह-अयथार्थालोचनादित्यादि । अयथार्थं आलोच्यतेऽनेनेत्ययथार्थालोचनं सादृश्यज्ञानम् । यदि वाऽऽलोचितिरालोचनमयथार्थं च तदालोचनं चेत्युपचारेण सादृश्यज्ञानमयथार्थालोचनहेतुत्वाद्विवक्षितं तस्मात् । असन्निहितश्चासौ विषयश्चेति तथोक्तस्तस्मिन् ज्ञानं तस्माज्जातोऽसन्निहितविषयज्ञानजः स चासौ संस्कारश्चेति , संस्कारकार्यत्वात् स्मृतिः संस्कारपदेन विवक्षिता तत्संस्कारमपेक्षत इत्यात्ममनःसंयोगः तदपेक्षस्तस्मादसमवायिकारणादधर्माच्च विपर्ययः । स च किं स्वरूपः? अतस्मिंस्तदिति प्रत्यय इति । तथाह्यतस्मिंस्तदिति प्रत्यय इतरस्मात् भिद्यते विपर्यय इति वा व्यवहर्तव्योऽयथार्थालोचनादिभ्य उत्पद्यमानत्वादिति । यस्त्वेवं न भवति न चासावुक्तकारणेभ्यो निष्पद्यते तस्मिंस्तदितिप्रत्ययश्च यथा संशयादिरिति । तस्योदाहरणं यथा गव्येवाश्व इति । यथाहि दूराद्विषाणादिविशेषमनुपलम्भमानस्याश्वसादृश्यविशेषितपिण्डोपलम्भादश्वानुस्मरणाच्च गव्येवाश्वोऽयमिति ज्ञानमुत्पद्यते तथा मरीचिषूदकज्ञानम्, शुक्तिकायां रजतज्ञानमिति । ननु अयुक्तमेतत्-विपर्ययज्ञानसम्पादकस्य कारकस्यैवासम्भवात् । तथाहीन्द्रियाणि सम्यक्ज्ञानसम्पादनायोत्पन्नानि तस्मिंस्तदितिरूपत्वात्कथं मिथ्याज्ञानं कुर्युरिति । न च काचकामलादिदोषवशाद्विपरीतज्ञानजनकत्वम्, दुष्टस्य कारकस्य कार्याजनकत्वात्, यथा हि शालिबीजस्य तैलादिनाभ्यक्तस्य शाल्यङ्कुराजनकत्वं न पुनर्यवाङ्कुरसम्पादकत्वमेवमिन्द्रियाणां सम्यक्ज्ञानाजनकत्वमेव स्यान्न विपरीतज्ञानोत्पादकत्वमिति । न च रजतादिज्ञानस्य शुक्तिकाद्यालम्बनत्वे प्रमाणमस्ति । तस्मा-

त्सादृश्यज्ञानानन्तरं स्वाकारपरिभ्रष्टं स्मरणमुत्पद्यते-इदं रजतम्-इति । तथाहीदमिति सादृश्यज्ञानं रजतमिति स्मरणं तदित्याकारशून्यम् । नैतद्युक्तम् । उदकार्थिनः प्रवृत्तिनिवृत्त्योरभावप्रसङ्गात् । अथ ज्ञानयोर्भेदपीदमेवोदकमिति सामानाधिकारण्यं मन्यमानः प्रवर्त्तते, तर्हीदमेव व्यधिकरणयोः सामानाधिकरण्यज्ञानं मिथ्याज्ञानमिति । अथेदमिति सादृश्यं तच्च रजतमितिभेदाप्रतिभासे सति प्रवृत्तिर्वेष्यते । तन्न । प्रतिपत्त्यभावस्याप्रवर्त्तकत्वात्, तथाहि—एतदर्थीदमेव रजतमिति मन्यमानः प्रवर्त्तते नेतरथा । इदमिति ज्ञानस्यापरोक्षतानिर्देशो न ज्ञानान्तरम्, अन्यथाहीदं रूपमयं रस इत्यादावपि स्मृतिप्रमोषः स्यात् । यच्चेदं-रजतमिति ज्ञानस्य शुक्तिकाद्यालम्बनत्वे प्रमाणाभाव-इत्युक्तम् । तदसत् । प्रत्यभिज्ञानादेः सम्भवात् । तथाहीयं शुक्तिका मम रजतमिति प्रतिभाता । तथा नेदं रजतमिति ज्ञानस्य शुक्तिकाविषयत्वाद्रजतमिति ज्ञानस्य तद्विषयत्वम् । अन्यथा हि रजतमिति ज्ञानस्य शुक्तिकाविषयतामन्तरेण नेदं रजतमिति प्रतिषेधो न स्यात्, प्रसक्त्यभावात् । अप्रसक्तस्य च निषेधे नायं घटादिरित्यपि स्यात् । तथा च सति सर्वत्र प्रतिषेधपरम्पराप्रसङ्गः । न चैतदस्ति । तस्मात् ज्ञानद्वारेण रजतं तत्र प्रसक्तमिति निषिध्यते । यच्चेदमुत्पत्तिकारणाभावादित्युक्तम् । तदसत् । दोषानुगृहीतस्येन्द्रियादेर्ज्ञानजनकत्वात् यथाहि दोषाभावे सतीन्द्रियं भावव्यतिरेकाभ्यां सम्यक्ज्ञानस्य जनकमुपलब्धं तथा दोषसद्भावे सति मिथ्याज्ञानस्यापीत्युभयरूपस्य कार्यस्येन्द्रियव्यापारेणोपलब्धेरुभयार्थमिन्द्रियाणां सर्गो निश्चीयते । मिथ्यात्वं चास्य स्वविषयपरित्यागेन विषयान्तरोपसर्पणात् । अथालौकिकं रजतमेवास्य विषयमिति विषयान्तरोपसर्पणमसिद्धम् । तन्न । अलौकिकरजताध्यवसाये सति प्रवृत्तिनिवृत्त्योरभावप्रसङ्गात् । अथालौकिकस्यापि लौकिकतां मन्यमानः प्रवर्त्तते । कथं तर्हि मिथ्याज्ञानस्यासम्भव इति । न चैतस्मिन् पक्षे मिथ्येदं ममोत्पन्नं ज्ञानमिति बाधकं ज्ञानं स्यात् । प्रत्यभिज्ञानाद्यसम्भवश्च, अस्ति प्रत्यभिज्ञानं शुक्तिकादौ ममात्र रजतज्ञानमुत्पन्नं मिथ्यात्वप्रतिपत्तिश्चेति कथं मिथ्याज्ञानस्यासम्भवः । यदि चेदं रजतमिति ज्ञानं रजतालम्बनमेव स्यात् । तस्योपलब्धिलक्षणप्राप्तत्वात् समीपवर्त्तिनः कथमग्रहणम् । यद्वाऽस्तूपलब्धिलक्षण-

प्राप्तं दूरस्थेनाप्युपलभ्यते । तदवश्यं समीपवर्त्तिना गृह्यत एव इ-न्द्रियादस्तादवस्थ्यात् । न चैतदस्ति । तस्माद्रजतादिज्ञानं शुक्तिकादावुत्पन्नमिति ।

अन्ये तु यदेव रजतमन्यदेशकालविशेषितमुपलब्धं तदेवान्यदेशादिविशेषितमुपलभ्यते इति मिथ्यात्वं ब्रुवते । तदसत् । तस्यात्राविद्यमानतया विषयत्वासम्भवात् , तस्मादिन्द्रियव्यापारविषयोऽङ्गुल्यादिना व्यपदिश्यमानश्च शुक्तिकादिरेव विषयः । अन्यथा विषयान्तरोत्पन्नं रजतज्ञानं कथं शुक्तिकाज्ञानेन बाध्येत । विभिन्नविषयत्वे बाध्यबाधकभावस्यैवासम्भवात् । अतो रजतज्ञानं शुक्तिकायामुपजातं शुक्तिकाज्ञानेन स्वविषयसहकारिणा बाध्यते—मिथ्यात्वाविशिष्टतया ज्ञाप्यते–विषयान्तरोपसर्पणाद्रजतज्ञानस्य तु रजतं विषयः सर्वजनप्रतीतस्तत्त्यागेन शुक्तिकायामुत्पद्यमानत्वाद्व्यभिचारित्वम् । एतेन निर्विषयं कल्पनाज्ञानमेतदित्यपास्तम् । विषयस्य शुक्तिकादेः प्रमाणतो व्यवस्थापनात् ।

असत्यपि प्रत्यक्षे प्रत्यक्षाभिमान इत्यादिना निर्विषयं विपर्ययमाहेति केचित् ।

उदाहरणन्तु यथा व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरमञ्जनचूर्णपुञ्जश्यामं शार्वरं तम इति । व्यपगतानि घनानां पटलानि यस्मिन्नम्बरे तत्तथोक्तम्, तथा न चलोऽचलः स चासौ जलनिधिश्च तेन सदृशं तुल्यं वपुः स्वरूपमस्येति । तच्च जलनिधिसदृशवपुरम्बरमिति ज्ञानमम्बरस्यातीन्द्रियत्वात् उक्तरूपस्यापि न जलनिधिना साद्दश्यग्रहणं सम्भवतीति निर्विषयः प्रत्यक्षाभिमानः । तथा शर्वर्यां भवं शार्वरं तमः । किंविशिष्टम् ? अञ्जनचूर्णपुञ्जश्याममिति । न चाभावरूपस्य तमसः श्यामरूपसम्बन्धित्वमस्तीति निर्विषयत्वम् । सविषयत्वाभ्युपगमेऽपि देशकालविशेषितस्य तेजसोऽभावस्यालम्बनत्वाददोषः।तथा-स्वाश्रयाद्विनिवृत्ताश्चक्षुरश्मयः स्वात्मीयं गोलकरूपं यथोक्तेन जलनिधिना सदृशवपुरम्बरमित्युपलम्भं जनयन्ति । आदर्शात् प्रतिस्खलितानां स्वमुखग्रहणवदिति । यथा ह्यादर्शात्प्रतिस्खलिताश्चक्षुरश्मयः स्वमुखे विपर्ययमुत्पादयन्ति आदर्शमुखमिति तद्वदिहापि दूराद्विनिवृत्ताः स्वगोलकमेवाम्बरमित्युपदर्शयन्ति ।

अनुमानविषयेपि विपर्ययमाह—बाष्पादिभिरित्यादिना। अत्रा-दिपदेन नीहारमशकावर्त्तादिग्रहणम्। तैः किंभूतैः? धूमाभिमतैः धूम-रूपतया ज्ञातैरग्न्यनुमानमिति। तथा गवयविषाणदर्शनाच्च गौरिति ज्ञानं विपर्ययः। अत्र तु लिङ्गे विपर्ययज्ञानमिन्द्रियजं तद्व्यापारजं चा-नुमानिकमिति।

इदानीमसद्दर्शनाभ्यासाद्विपर्ययमाह—त्रयीदर्शनविपरीतेषु शा-क्यादिदर्शनेष्विदं श्रेय इति मिथ्याप्रत्यय इत्यादिना। त्रयाणां समा-हारस्त्रयी रूढिवशादृग्यजुःसामलक्षणा गृह्यते। त्रय्येव दर्शनं तद्विपरीतानि शाक्यादिदर्शनानीत्यादिपदेन नैशना(?)(जैना)दिदर्श-नस्यावरोधः। तेष्विदं श्रेय इति। सर्वं क्षणिकं ज्ञानं शून्यं निरा-त्मकमिति ज्ञानं श्रेयःसाधनत्वाच्छ्रेय इति शाक्यदर्शनाभ्यासाद्वि-पर्ययः। क्षणिकादिपक्षे बाधकस्योक्तत्वात् एष्वर्थेष्वनेकान्तज्ञाने-न दर्शने विपर्ययः। तथेतरेष्वप्यूह्यः। न च शाक्यादिदर्शनविपरी-तत्वात् त्रय्यामपि विपर्यय इति वाच्यम्। प्रधानार्थेष्वात्मादिष्वर्थेषु बाधकानुपपत्तेः। शाक्यादिदर्शनेषु क्षणिकत्वादिपदार्थेषूक्तं बाध-कमबाध्यमानमिति।

अन्ये तु त्रयाणां प्रत्यक्षानुमानागमानां समाहारस्त्रयी तदेव दृश्यतेऽनेनेति दर्शनं, तद्विपरीतानि शाक्यादिदर्शनानि, तैर्बाधो-पपत्तेः। तदुपलक्षितं वा वैशेषिकदर्शनं, तद्विपरीतानि शाक्यादिद-र्शनानि, बाध्यमानत्वादित्युक्तम्।

तथा शरीरेन्द्रियमनःस्वात्माभिमानो विपर्ययः। शरी-रमेवात्मेति विपर्ययो लोकायतिकानाम्। इन्द्रियाण्येवा-त्मेतीन्द्रियचैतन्यवादिनाम्। मनश्चैतन्यवादिनां मन एवेति। कृतकेषु नित्यत्वदर्शनविपर्ययो मीमांसकानाम। तथाहि—क्षित्यादेः कृतकत्वं पूर्वमेव व्यवस्थापितम्। तत्र च नित्यत्वदर्शनं तेषामिति। यदि वा सांख्यानामयं विपर्ययः। कृतकेषु घटादिषु नित्यत्वदर्शनमिति। न समुत्पद्यते भावो न स्वात्मानं जहातीति। उक्त-कारणवैकल्ये कार्योत्पत्तिज्ञानं विपर्ययः स्वभाववादिनाम्। तथा च निरुक्तं क्षित्यादिवैचित्र्यं कर्त्तारमन्तरेण स्वभावत एव भवतीति। एतच्चासत्। कार्यत्वस्य कर्तृपूर्वकत्वेन व्याप्तस्योपलम्भात्। क्षि-त्यादावपि कर्तृपूर्वकत्वस्य व्यवस्थापितत्वात्। स्वभाववादिनां वि-

पर्ययज्ञानमेतत् । तथा चेतनमधिष्ठातारं विना कार्यस्यानुपलब्धेः जैमिनीयानां शौद्धोदनेः शिष्याणां च कर्त्तारं विना क्षित्यादिकार्यविज्ञानं विपर्ययः । प्रधाने प्रलीनयोश्च धर्माधर्मयोरभिव्यक्तत्वाच्च कार्योत्पत्तौ व्यापारः सम्भवतीति तद्वैकल्ये कार्योत्पत्तिज्ञानं विपर्ययः । सांख्यानां सौगतानां च कारणवैकल्ये कार्योत्पत्तिज्ञानं विपर्ययः । कथम् ? उत्पत्तिविनाशयोः तादात्म्यात् । क्षणिकत्वे सति यदैव कार्योत्पादस्तदैव कारणस्य विनाशः । स चोत्पत्तेः नार्थान्तरमिति सहोत्पन्नयोर्न कार्यकारणभाव इति कारणवैकल्ये कार्योत्पत्तिज्ञानं विपर्ययः । तथा सर्वमिदं कार्यं परमेशपूर्वकं तदाराधनं च परमस्य श्रेयसः साधनम् । वेदानां च स्वरूपेऽप्यर्थे प्रामाण्यमित्येवं हितमुपदिशत्सु वैशेषिकेषु नैवं भवतीति ज्ञानं विपर्ययो मीमांसकसौगतजैनानाम् । यदा तु न परमशिवादेः सद्भाव इति वैयात्याद्वदन्ति वैशेषिकास्तदा नेदं परमार्थतो हितं इत्यहितमुपदिशत्सु वैशेषिकेषु हितमेवेदमिति ज्ञानं विपर्ययस्तेषाम् । यदि वा संसार्यात्मनां नानात्वं परमशिवश्चैतेभ्यो भिन्नस्तदाराधनाच्चास्मदादेः श्रेयो भवतीत्येवं हितमुपदिशत्सु वैशेषिकेषु अहितमिति ज्ञानं विपर्ययः । द्वैतवादिनां तदर्थाभ्युपगमेन च वचनेन हितमिति ज्ञानं विपर्ययः । तेषां क्षित्यादि कार्यं परमाणुभिर्द्व्यणुकादिप्रक्रमेणारब्धमीश्वरकर्त्तृकं चेति । एवं हितमुपदिशत्सु वैशेषिकेषु नैवमेतत्प्रधानपूर्वकत्वाज्जगत इति ज्ञानं विपर्ययः सांख्यानाम्, प्रधानास्तित्वे प्रमाणाभावात् ।

अथास्त्यन्वयपरिमाणशक्तिप्रवृत्त्युपकार्योपकारकभाववैश्वरूपेभ्यः प्रधानम् । तथाहि—सर्वमिदं शरीरादिकार्यं सुखदुःखमोहान्वितमुपलभ्यते । यच्चान्वितं तदेकस्मात् कारणादुत्पद्यमानं दृष्टम्, यथैकस्मान्मृत्पिण्डात् मृदन्वितमनेकघटादि । तथाचानुमानम्—भुवनादिकार्यमेकस्मात् कारणादुत्पद्यते अन्वितत्वात् घटादिवत् । तथा चास्य पक्षधर्मत्वं सुखदुःखादिसमन्वयस्य सर्वेषु शरीरादिषु भावात् । न चातत्स्वभावात् कारणात्सुखादेरुत्पत्तिरिति शरीरादेः सुखदुःखमोहात्मकत्वं तज्जनकत्वात्, तथा प्रसादादिजनकत्वोपलब्धेश्च तत्स्वभावत्वम् । सुखादयस्तु सत्त्वरजस्तमसां परिणामविशेषास्ततोऽर्थान्तरं न भवन्ति, कार्यस्य कारणाद्भेदानुपपत्तेः । अतः सत्त्वरजस्तमांस्येव शब्दाद्यात्मना व्यवतिष्ठमानानि सुखदुःखमोहात्मकं

कार्यमुपजनयन्तीति शब्दादयोपि न सत्त्वादिभ्यो व्यतिरिच्यन्ते। सत्त्वरजस्तमसां च साम्यावस्था प्रधानम्। तथा परिमितत्वाच्च। यत्परिमितं तदेकस्मात् कारणात् उत्पद्यते यथा ऽङ्कुरादि बीजात्। परिमितत्वं चेयत्तावधारणविषयत्वम्। तथा शरीरादिकार्यमेक- स्मात् उत्पद्यते परिमितत्वादङ्कुरादिवत्। शक्तिप्रवृत्तेश्च। शक्त्या हि कारणं कार्यार्थिनोपादीयत इति सर्वं कार्यं स्वकारणे शक्तिरूप- तया व्यवस्थितं तावद्यावत् प्रधानमिति। नन्वेवं सर्वस्यापि का- र्यस्य प्रधानादभेदे विद्यमानत्वात् कथमुत्पत्तिविनाशाविति, अस- तः खरविषाणादेरिव कार्यत्वानुपपत्तेः। सत एवाविर्भावति- रोभावाविति ब्रूमः। शक्तिरूपतया हि व्यवस्थितं कार्यं परं व्यक्ति- रूपतामापद्यते। पुनस्तु तिरोभावे शक्तिरूपतया व्यवतिष्ठते, न संनिरुध्यत इति। तथा परस्परमुपकार्योपकारणभावेनावस्थितानाः- मासन्दिकाङ्गानामेकस्मात् कारकादुत्पत्तेरुपलम्भाच्छरीरादेरपि तथाभावोपलब्धेरेककारणपूर्वकत्वं साध्यते। तथा दध्यादिवै- श्वरूप्यस्यैकस्मात् क्षीरादुत्पत्तेरुपलम्भाच्छरीरादिवैचित्र्यस्याप्ये- ककारणपूर्वकत्वं साध्यते। यच्चैकं कारणं तत्प्रधानमिति। तस्मा- च्च महान्महतोऽहङ्कारः तस्मात्पञ्चतन्मात्राणि एकादशेन्द्रियाणि तेभ्यो भूतानीति।

सर्वमेतदसत्। अन्वयादेर्गमकत्वानुपपत्तेः। तथाहि—शरीरादेरे- ककारणपूर्वकत्वे साध्येऽन्वितत्वमहेतुः सन्दिग्धत्वात्। अथ सुख- दुःखादिसमन्वितत्वं हेतुः। तन्न। स्वरूपासिद्धत्वात्। तथाहि—सुख- दुःखादीनां पूर्वमेवात्मगुणत्वेन प्रतिपादितत्वात् शरीरादिगुणत्वम- सिद्धम्। घटादिदृष्टान्तोऽपि साध्यसाधनविकलः। तत्रान्वितस्यैक- कारणपूर्वकत्वेन व्याप्तस्यानुपलम्भात्। अथ मृदन्वितत्वं घटादाव- स्ति, तच्चासिद्धम्। पक्षे प्रत्यक्षेण च शरीरादेरुपादानं प्रतिनियत- जातीयमनेकमुपलभ्यत इति। कालात्ययापदिष्टं च साधनम्। एवं परिमितत्वमियत्तावधारणविषयत्वमसिद्धम्, अवान्तरभेदेन शरी- रादेरानन्त्यात्। अथ वर्गापेक्षया परिमितत्वं तथाप्यनैकान्तिक- त्वम्। परदृष्ट्या नित्येष्वपि भावात्। सत्त्वरजस्तमांसि च परिमिता- नि न चैककारणपूर्वकाणीति, प्रधानस्यैव तद्रूपत्वात्। तथैककारण- पूर्वकत्वाभावेपि परमाण्वादीनि वर्गापेक्षया परिमितानीत्यङ्कुरादेरपि

भौमानलसम्बन्धात् बीजावयवक्रियाक्रमेण पूर्वद्रव्यविनाशे सति द्व्यणुकादिप्रक्रमेणोत्पादादेककारणपूर्वकत्वमसिद्धम् । यच्चेदं—शक्तानां कारणानां कार्योत्पत्तौ व्यापाराच्छक्तिरूपतया कार्यस्यावस्थानम्—इत्युक्तम् । तदसत् । शक्तेश्चरमसहकारिरूपतया कार्यादर्थान्तरत्वात् । न च कार्यकारणयोरेकत्वम, विभिन्नप्रतिभासविषयत्वात् । प्रतिभासभेदश्च पदार्थानां भेदव्यवहारे हेतुः, तत्सद्भावेऽप्येकत्वाभ्युपगमे सर्वेषामेकताप्रसङ्गात् न चतुर्विंशतिस्तत्त्वानीति स्यात् । तथा स्वरूपभेदोऽर्थक्रियाभेदश्च कार्यकारणयोः सूक्ष्ममनेकं च समवायिकारणमधिकमेकं च कार्यमिति तस्य पूर्वं कारणेष्वसत्त्वमनुपलम्भात् । अथानभिव्यक्तेरनुपलम्भः । सद्भावे किं प्रमाणम ? उत्पत्तिरिति चेत् । न । विद्यमानस्योत्पत्तेरयोगात् । अथाविद्यमानस्योत्पत्तौ खरविषाणादीनामुत्पत्तिः स्यात् , कारणाभावात् । येषां हि कारणमस्ति जनकं तेषा मेवोत्पत्तिर्न खरविषाणादिष्वेतदस्ति । कार्याभावेनैव कारणाभावप्रतीतेः । एवं तन्तुषु घटादेर्मृत्पिण्डे च पटादेरनुत्पत्तिर्वाच्या । प्रतिनियतसामग्र्याः प्रतिनियतकार्यजनकत्वात् । तन्तूपलक्षिता हि सामग्री पटस्यैव जनिकोपलब्धा, अन्या त्वन्यस्येत्युपादानेषु कार्यनियमो नः सत्त्वादिति । यश्चोत्पद्यते तदुत्पत्तेः पूर्वमसन्न पुनर्यद्यदसत्तदुत्पद्यत इति व्याप्तिः । यश्चोत्पद्यमानत्वेन हेतुना सत्त्वम् । तदसत् । तस्यासाधारणत्वेनागमकत्वात् , तथाहि—सत्याकाशादावसति च खरविषाणादावुत्पद्यमानत्वं नास्तीति । यच्चायं व्यपदेशोऽङ्कुरो जायते घटं कुर्वित्ययमपि मुख्ये बाधकप्रमाणसद्भावात् भाक्तो द्रष्टव्यः । तथाहि—यदि विद्यमानस्यैव घटस्य कर्मत्वमङ्कुरस्य च कर्तृत्वमिष्येतोत्पत्तिर्व्याहता स्यात् । विद्यमानत्वादेव कारकव्यापारवैयर्थ्यं च । अथाभिव्यक्त्यर्थं व्यापारः । तदसत् । अभिव्यक्तेरपि विद्यमानत्वात् । अथाभिव्यक्तिरविद्यमानैव क्रियते, तर्हि सदुत्पद्यत इति व्याहतम् । अभिव्यक्तेस्तु स्वरूपोपलम्भस्याविद्यमानस्यैवोत्पत्तेः । न चावरणव्यपगमोऽभिव्यक्तिः, आवरणस्यैवानुपलब्धेः । तस्माद्विद्यमानस्योत्पत्त्यर्थासम्भवात् उपचरितमङ्कुरादेः स्वजनिकर्तृत्वं कर्मत्वञ्चेति व्यपदेशस्यान्यथासिद्धत्वम । यच्चेदम्—उपकार्योपकारकभावापन्नत्वादेककारणपूर्वकत्वम्—इत्युक्तं यदि परस्परापेक्षाणामेककार्यजनकत्वमुपकार्यो-

पकारकभावो विवक्षितः स च नित्येष्वस्तीति व्यभिचारी, साध्यवि-
कलश्च दृष्टान्तो विभिन्नकारकजन्यत्वादासन्दिकाज्ञानाम् । तथा द-
ध्यादिवैश्वरूप्यमप्युक्तकारणपूर्वकं न भवति, स्वावयवकार्यत्वात् ।
तथाहि—स्वावयवेभ्यो दध्युत्पद्यते न क्षीरात् । भौमानलसम्ब-
न्धादवयवक्रियान्यायेन विनष्टे हि क्षीरे पुनरुत्पन्नपाकजैर्द्व्यणुकादि
क्रमेण दध्यादिरुत्पत्तिरित्यतो वैश्वरूप्यस्यैककारणपूर्वकत्वाभावः ।
प्रत्यक्षेण च पक्षे प्रतिनियतजातीयमनेकं कारणमुपलब्धमिति का-
लात्ययापदिष्टं च वैश्वरूप्यमिति । न च किंचित् कार्यमेकस्मादेव
कारणादुत्पद्यमानमुपलब्धमिति अविद्यमानसपक्षस्यान्वयादेर्विप-
क्षे सद्भावः । तदेवमन्वयादीनामगमकत्वात् प्रधानासिद्धौ बुध्यादेर-
सम्भव एव । प्रतिहतश्च प्रधानवादोऽस्मद्गुरुभिर्विस्तरेणेति नेह
प्रतन्यते । अतः साङ्ख्यानामयं विपर्ययः प्रधानपूर्वकं जगदिति ।

तथा शरीरस्य परिमाणभेदेन भेदोपपत्तेः शरीरमेवात्मेत्य-
भ्युपगमे प्रतिसन्धानं न स्यात् , इत्यात्मनः शरीरादिव्यतिरेकेण नि-
त्यत्वं प्रतिपत्तव्यमिति हितमुपदिशत्सु वैशेषिकेष्वहितज्ञानं विपर्य-
यो लौकायतिकानाम् । समानं चैतत् सौगतजैनानाम् । तथाहि—
संकोचविकासधर्मकत्वादात्मनः सपरिणामत्वेऽन्यत्वेन भेदोपपत्तेः
स्मरणं न स्यात् । बोधाच्च बोधरूपतेति प्रतिबन्धप्रतिषेधात् बोध
मात्रेऽप्यात्मनि स्मरणानुत्पत्तौ श्रेयोबुद्धेरभाव इत्यलं विस्तरेणेति ॥

इदानीमनध्यवसायस्य कारणस्वरूपविषयविभागनिरूपणार्थं
न परं विपर्ययोऽनध्यवसायोपि प्रत्यक्षानुमानविषये संजायत इत्या-
दि प्रकरणम् ।

**( भा० ) अनध्यवसायोऽपि प्रत्यक्षानुमानविषय एव सञ्जायते ।**

**तत्र प्रत्यक्षविषये तावत्–प्रसिद्धार्थेष्वप्रसिद्धा-र्थेषु वा व्यासङ्गादर्थित्वाद्वा किमित्यालोचनमात्रमन-ध्यवसायः । यथा वाहीकस्य पनसादिष्वनध्यवसायो भवति । तत्र सत्ताद्रव्यत्वपृथिवीत्ववृक्षत्वादिशाखा-द्यपेक्षो ऽध्यवसायो भवति । पनसत्वमपि पनसेष्वनु-**

**वृत्तमाम्रादिभ्यो व्यावृत्तं प्रत्यक्षमेव, केवलं तूपदेशा-भावाद्विशेषसंज्ञाप्रतिपत्तिर्न भवति।**

**अनुमानविषयेऽपि-नारिकेलद्वीपवासिनः सा-स्नामात्रदर्शनात् को नु खल्वयं प्राणी स्यादित्यन-ध्यवसायो भवति।**

(व्यो०) अनध्यवसितिरनध्यवसायो ज्ञानमनिश्चयात्मकम्। तच्च संशयादिभ्योऽर्थान्तरम् कारणभेदाद्विषयभेदाच्चेति।

प्रत्यक्षविषये तावद्व्याख्यायते प्रसिद्धार्थेष्वप्रसिद्धेषु च विषयेषु भ-वति इत्यतः संशयात् भिद्यते,संशयो हि प्रसिद्धार्थेष्वेव भवतीति। अथ प्रसिद्धार्थेषु कुतः कारणादनध्यवसाय इत्याह–व्यासङ्गादर्थित्वाद्वेति। यथेषुकारस्येषावासक्तमनसो महति गतेऽपि राजनि किंनामायं गत इत्यनध्यवसायः। अर्थित्वात्स्वानुष्ठाननिरतस्य तपस्विनो महत्यपि राजन्यनध्यवसायः–किंनामायम् गत–इति। न चायं संशयः तस्याभयो-ल्लेखित्वात्, सामान्योपलम्भादिभ्यश्च उत्पद्यमानत्वाच्च,इत्यतोऽनध्य-वसाय इतरस्माद्भिद्यते यथोक्तकारणजन्यत्वात्। यथोक्तं वा ज्ञान-मनध्यवसाय इति व्यवहर्त्तव्यम् उक्तकारणेभ्यो निष्पद्यमानत्वात्, यस्तु न भिद्यते न चैवं व्यवह्रियते, न चासावुक्तकारणेभ्यो निष्प-द्यते, यथा संशयादिरिति। तस्य स्वरूपमाह किमित्यलोचनमात्रं किंनामेति ज्ञानं विशेषसंज्ञोल्लेखशून्यं अनध्यवसाय इति। अप्रसि-द्धार्थेषु यथा वाहिकस्य पनसादिष्वनध्यवसायो भवति। वाहिको हिठकः(?) तस्य पनसादिषु सङ्केताभावात् विशेषसंज्ञोल्लेखशून्यं कि नामायमिति ज्ञानमुत्पद्यते। तत्र हि सत्ताद्रव्यत्वपृथिवीत्ववृक्षत्वरूपा-दिशाखाद्यपेक्षोऽध्यवसाय एव। तथाहि–सन्नयमिति निश्चयज्ञानं तथा द्रव्यं पृथिवी वृक्षो रूपादिमांश्छाखादिमांश्चेति अध्यवसाय एव। तथा पनसत्वमपि निर्विकल्पकबोधे पनसेष्वनुवृत्तमाम्रादिभ्यो व्यावृ-त्तं प्रत्यक्षमेव। नन्वेवं तर्हि क्व विषयेऽनध्यवसाय इत्याह–केवलन्तूप-देशाभावात् सङ्केताभावात् विशेषसंज्ञोल्लेखिनी पनसोयमिति प्रति-पत्तिर्न भवतीति। नन्वेवं तर्हि प्रतिपत्त्यभावोऽनध्यवसायः स्यात्, तस्य चाभावरूपत्वादाविद्यायामन्तर्भावोऽनुपपन्नः। नैतदेवम्। किं-नामायमित्यनिश्चयात्मकज्ञानस्य संशयादिविलक्षणस्यानुभूयमान-

तयाऽपलापायोगात् तस्य चाविद्यालक्षणयुक्तत्वादविद्यायामन्तर्भाव इति ।

अनुमानविषयेपि नालिकेरद्वीपवासिनोऽकृतसमयस्य पिण्डानुपलम्भे सास्नामात्रदर्शनात्को नु खल्वत्र प्राणी स्यादित्यनध्यवसायो भवति । पूर्वं हि संकेताप्रतिपत्तावपि सास्ना प्रामाण्याविनाभूतोपलब्धा तदुपलम्भात्पिण्डानुपलम्भेप्यविनाभावसम्बन्धस्मरणानन्तरं परामर्शज्ञाने सति को नु खल्वत्र प्रदेशे प्राणीति किं नामात्र प्राणी स्यादित्यनध्यवसायः ॥

तदेवमनध्यवसायस्य कारणादिभेदेन भेदमभिधाय स्वप्ननिरूपणमाह ।

**( भा० ) उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम् । कथम् ? यदा बुद्धिपूर्वादात्मनः शरीरव्यापारादहनि खिन्नानां प्राणिनां निशि विश्रामार्थमाहारपरिणामार्थं वाऽदृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे निश्चलं मनास्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते, प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति, तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणैवासत्सु विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते ।**

**तत्तु त्रिविधम् । संस्कारपाटवाद्धातुदोषाददृष्टाच्च ।**

**तत्र संस्कारपाटवात् तावत्–कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते ।**

**धातुदोषाद्वातप्रकृतिः तद्दूषितो वा आकाशगमनादीन् पश्यति । पित्तप्रकृतिः पित्तदूषितो वाऽ-**

ग्निप्रवेशकनकपर्वतादीन् पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति ।

यत्स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा यच्छुभावेदकं गजारोहणच्छत्रलाभादि तत्सर्वं संस्कारधर्माभ्यां भवति विपरीतं च तैलाभ्यञ्जनखरोष्ट्रारोहणादि तत्सर्वमधर्मसंस्काराभ्यां भवति । अत्यन्ताप्रसिद्धार्थेष्वदृष्टादेवेति । स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतस्य ज्ञानप्रबन्धस्य प्रत्यवेक्षणात् स्मृतिरेवेति भवत्येषा चतुर्विधाऽविद्येति ।

(व्यो०) उपरतेन्द्रियग्रामस्येत्यादि । उपरतः स्वविषयग्रहणं प्रति निवृत्त इन्द्रियाणां ग्रामो यस्यासौ तथोक्तस्तस्य । प्रलीनमनस्कस्येति । प्रलीनं नेन्द्रियदेशेन संयुक्तं मनो यस्यासौ तस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसमुत्पद्यते तत्स्वप्नज्ञानमिति । मनसि भवं मानसं तच्च स्मरणसुखाद्यपि भवतीति तन्निवृत्त्यर्थमनुभवनपदम् । अनुभवनं च बाह्येन्द्रियजमपीति मानसग्रहणम् । तथापि सुखदुःखाद्यनुभवैर्व्यभिचारस्तदर्थमुपरतेन्द्रियग्रामस्येति । सुखाद्यनुभवश्चेन्द्रियज एव मनसस्तत्र व्यापारात् । अथोपरतेन्द्रियग्रामस्य मानसं स्वप्नान्तिकमपि भवतीति व्यभिचारः । तन्न । तस्य स्मृतिरूपतयानुभवनपदेनैव व्यवच्छिन्नत्वात् ।

अन्ये त्वस्य व्यवच्छेदार्थमविद्यासामान्यलक्षणमनुवर्त्तयन्तीति । न च निमीलिताक्षस्य नीलपीतादिज्ञानमुपरतेन्द्रियग्रामस्य भवतीत्याशङ्कनीयम् । विषयसान्निध्ये सतीन्द्रियान्तरेण तस्य ज्ञानोत्पादात् । यदा हि विषयसान्निध्येऽपि नेन्द्रियेण ज्ञानं तदेवोपरतेन्द्रियग्रामः पुरुषोऽभिधीयत इति । न च चक्षुर्व्यापारं विना नीलपीतादिष्वनुभवनं सम्भवतीति स्मरणमेतन्न्याय्यम्, तच्चानुभवपदेनैव व्यवच्छिन्नम् । नन्वेवमप्युपरतेन्द्रियग्रामस्य मानसानुभवत्वा-

त्स्वप्नज्ञानमितरस्मात् भिद्यते इत्युक्ते व्यभिचाराभावः, किमर्थं प्रलीनमनस्कस्येन्द्रियद्वारेणैवेति पदद्वयम् । लक्षणान्तरार्थम् । तथाहि-प्रलीनमनस्कस्य यदनुभवनं मानसं तत् स्वप्नज्ञानमिति द्वितीयं लक्षणम् । प्रलीनमनस्कस्य स्वप्नान्तिकमपि भवतीत्यनुभवनपदम् । अनुभवनं च सुखादिषु भवतीति प्रलीनमनस्कपदम् । अतः प्रलीनमनस्कानुभवत्वादितरस्मात् भिद्यते । तथेन्द्रियद्वारेणैवोत्पद्यमानत्वे सति मानसानुभवनत्वादिति इन्द्रियद्वारेणोत्पद्यते स्वप्नान्तिकमतोऽनुभवनमिति । अनुभवनं च सुखादावपि भवतीति इन्द्रियद्वारेणैवेति पदम् । अथ कथं स्वप्नज्ञानमुत्पद्यते पुरुषश्चोपरतेन्द्रियग्रामः प्रलीनमनस्कश्च भवतीत्याह-यदेत्यादि । यदान्तर्हृदये न बाह्ये, निर्गतानीन्द्रियाणि यस्यासौ तथोक्तः तस्मिन्नात्मप्रदेशे निश्चलं क्रियाशून्यं मनस्तिष्ठति तदा पुरुषः प्रलीनमनस्क इत्याख्यायते । अन्ये त्वागमाभिमत अधोमुखं कमलं निरिन्द्रियात्मप्रदेशः तत्र निश्चलं मनस्तिष्ठतीति ब्रुवते । स च विशिष्टात्मसम्बन्धः क्रियाप्रबन्धात् क्रियासन्तानात् भवति । क्रियाप्रबन्धश्चात्मान्तःकरणसंयोगाददृष्टकारितात् प्रयत्नापेक्षादुत्पद्यते । तथाहि-मनः समवायिकारणमात्ममनःसंयोगोऽसमवायिकारणम् अदृष्टकारितप्रयत्नो निमित्तकारणमित्येवं मनसि क्रियाप्रबन्धाद्विशिष्टात्मप्रदेशेन संयोगः स्वापाख्यः सम्पद्यते । स च कदा ? निशीति बाहुल्यापेक्षया तस्य । किमर्थं च भवतीति ? विश्रामार्थमाहारपरिणामार्थं चेति । पुरुषभेदापेक्षया समस्तं व्यस्तं चैतद्विवक्षितम् । कस्यचिदेकं प्रयोजनं कस्यचिदुभयमपि भवतीति । किं विशिष्टस्य प्राणिनः ? अह्नि खिन्नस्य । कुतः? शरीरव्यापारात् । स च नावाद्यारूढस्यापि सम्भवति, न च तस्मात् खेदः, तदर्थं बुद्धिपूर्वात् । बुद्धिश्च स्मरणेच्छाद्वारेण व्यापारोत्पत्तौ कारणं न साक्षात् । तथापि शरीरान्तरेषु बुद्धिपूर्वको व्यापारो नियोगद्वारेण सम्भवति, न च तस्मात् खेदस्तदर्थमात्मनः स्वशरीरस्येति । एवमुक्तक्रमेण निरिन्द्रियप्रदेशसम्बद्धं प्रलीनं मनोऽपदिश्यते प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामः पुरुषो भवति, मनसाऽनधिष्ठितानामिन्द्रियाणां स्वविषये व्यापारासम्भवात् । जीवनं तु तस्यामवस्थायामनुमीयते-प्रबन्धेन सातत्येन प्राणापानसन्तानस्य प्रवृत्तौ सत्याम्, तथाहि-प्राणापानसन्तानप्रवृत्तिः प्रयत्नकार्या, नचे-

इच्छाद्वेषपूर्वकः प्रयत्नोऽत्र सम्भवत्यतो जीवनपूर्वकः प्रयत्नोऽनुमीयत इति वक्ष्यामः प्रयत्नाधिकारे ।

अथैवं प्रलीनमनस्कस्योपरतेन्द्रियग्रामस्यात्मनः कुतः स्वप्नज्ञानमुत्पद्यत इत्याह—आत्ममनःसंयोगविशेषादसमवायिकारणात्स्वाप इत्याख्या संज्ञा यस्यात्ममनःसंयोगविशेषस्यासौ तथोक्तः तस्मात् । संस्काराच्चेति । संस्कारः स्मृत्युत्पत्तिद्वारेण स्वप्नज्ञानोत्पत्तौ कारणमिति । यदि वा स्वापाख्यादिति संस्कारविशेषणम् । यो हि संस्कारः स्वापावस्थायां स्मृतिद्वारेण स्वसंज्ञानहेतुर्भवत्यसौ स्वापाख्य इति । तस्माद्दिक्कालादिभ्यश्चेन्द्रियद्वारेणैवासत्स्वविद्यमानेषु विषयेषु हस्तादिषु प्रत्यक्षाकारं प्रत्यक्षमिव स्वप्नज्ञानमुत्पद्यते ।

अन्ये तु कुड्यादय एव हस्त्यात्मना व्यवस्थिताः स्वप्नज्ञानस्यालम्बनमिति मन्यन्ते । यच्चेदम्—असत्सु विषयेषूत्पद्यते स्वप्नज्ञानमित्युक्तम् । तदपि हस्त्यादिस्वरूपापेक्षया । तेन हि रूपेण तेषामसत्त्वादिति । तदेतदसत् । कुड्यादेरालम्बनत्वे प्रमाणाभावात् । न च स्वप्नोत्थितस्य ममैते कुड्यादयो हस्त्यादिरूपतया प्रतिभाता इति प्रत्यभिज्ञानमस्ति । नापीन्द्रियाणां कुड्यादिषु हस्त्यादिज्ञानजन्मनि व्यापारः सम्भवति, तद्व्यापारोपरमे सति तत्र ज्ञानस्य भवनान्मनसोपि बहिर्विषये स्वातन्त्र्येण व्यापारः प्रतिषिद्ध एव । तस्मान्निर्विषय एव स्वप्नज्ञानमिति । अथ स्वप्नज्ञानं न विपर्ययादिभ्योऽर्थान्तरम् । तथाहि-स्वप्नज्ञानमतस्मिन् तदित्युत्पद्यमानं विपर्ययज्ञानमेव, किमयं स्थाणुः पुरुषो वेत्युभयोल्लिखित्वे सति संशयज्ञानम्, किं नामायमिति चोत्पादेऽनध्यवसाय इति न स्वप्नज्ञानमेतेभ्योऽर्थान्तरम्, पृथगभिधानन्तु शुभाशुभसंसूचकत्वादिति । नैतद्युक्तम् । कारणादिभेदेनास्य विपर्ययादिभ्योऽर्थान्तरत्वादिति केचित् । तथाहि-विपर्ययज्ञानं प्रत्यक्षानुमानविषये पित्तकफानिलोपहतेन्द्रियस्य पुरुषस्योत्पद्यते । संशयस्तु सामान्योपलम्भादिभ्यः प्रत्यक्षानुमानविषये प्रसिद्धोभयविशेषस्य भवतीत्येवमनध्यवसायस्यापि विलक्षणमेव कारणमुक्तम् । तद्विपरीतानि तु स्वप्नज्ञानोत्पत्तौ कारणानीति कारणभेदात् भेदः । लक्षणभेदेऽप्यभेदाभ्युपगमे सर्वत्र तथाभावप्रसङ्गः । तथात्यन्ताप्रसिद्धेऽप्यर्थे स्वप्नज्ञानमुत्पद्यते न चैवं विपर्ययादिरिति । तस्मादुभयोल्लिखित्वादिसद्भावेपि स्वप्नलक्षणोपपत्तेः

संशयादिविलक्षणं स्वप्नज्ञानमेवैतदित्यभ्युपगन्तव्यम् ।

तस्य कारणभेदात् भेदमाह—तत्तु स्वप्नज्ञानं त्रिविधं संस्कारपाटवाद्धातुदोषाददृष्टाच्चेति । संस्कारपटवात्तावत् स्वप्नज्ञानमाह—कामी यस्यामङ्गनायामनुरक्तस्तामादृतोऽतिशयेन प्रयत्नयुक्तश्चिन्तयन् क्रुद्धो वायं शत्रुं प्रयत्नाश्चिन्तयन् स्वपिति । सैव सुप्तस्य चिन्तासन्ततिः प्रत्यक्षाकारात्संजायते नादृष्टात् । धातुदोषात् स्वप्नमाह—वातप्रकृतिर्वातमधिकं निमित्तमपेक्षमाणैः परमाणुभिरारब्धः वातदूषितश्च तथाविधाहारोपगमादाकाशादिगमनानि पश्यति । एवं पित्तप्रकृतिरित्यादावपि द्रष्टव्यम् ।

अदृष्टकारितं स्वप्नमाह—यत्स्वयमनुभूतेष्वननुभूतेष्वर्थेषु प्रसिद्धेष्वप्रसिद्धेषु च शुभाशुभावेदकमुत्पद्यते स्वप्नज्ञानं तददृष्टात् । तत्र यत् गजारोहणच्छत्रलाभादिशुभावेदकं तत् सर्वं संस्कारधर्माभ्यामुत्पद्यते । संस्कारो हि पूर्वानुभवजनितः । स च स्मृत्युत्पत्तिद्वारेण स्वप्नज्ञानोत्पत्तौ कारणम् । विपरीतमशुभावेदकं तैलाभ्यंजनोष्ट्रारोहणादि । तच्चाधर्मसंस्काराभ्यां भवति । अत्यन्ताप्रसिद्धेषु अननुभूतेष्वदृष्टादेव स्वप्नज्ञानमुत्पद्यते । तथाहि—ब्रह्मादिपदारूढमात्मनं पश्यतीति । अथ स्वप्नान्तं स्वप्नज्ञानमेवाहोस्विदर्थान्तरमित्याह—स्वप्नान्ते स्वप्नावसाने भवं स्वप्नान्तिकम्, यद्यप्युपरतेन्द्रियग्रामस्य भवति तथापि स्मृतिरेव । अतीतज्ञानप्रबन्धप्रत्यवेक्षणादिति । अतीतश्चासौ ज्ञानप्रबन्धश्च तस्मिन् प्रत्यवेक्षणरूपत्वात् स्मृतिरेवेति । एवं यथोक्तरूपा चतुर्विधा भवत्यविद्येत्युपसंहारः । अन्ये त्वेषा यथा मया व्याख्याता तथा चतुर्विधा भवत्यविद्या । अन्यथा हि विविधैवेति ॥

अथेदानीं विद्यास्वरूपनिरूपणार्थं न केवलमविद्या विद्यापि चतुर्विधेत्यादिप्रकरणम् ।

**( भा० )विद्यापि चतुर्विधा । प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा ।**

**तत्राक्षमक्षं प्रतीत्योत्पद्यते इति प्रत्यक्षम् । अक्षाणीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्छ्रोत्रमनांसि षट् । तद्धि द्रव्यादिषु पदार्थेषूत्पद्यते । द्रव्ये तावद् त्रिविधे**

महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाशचतुष्टयसान्निकर्षाद् धर्मादिसामग्र्ये च स्वरूपालोचनमात्रम् । सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनःसान्निकर्षात् प्रत्यक्षमुत्पद्यते–सद्द्रव्यं पृथिवी विषाणी शुक्लो गौर्गच्छति–इति । रूपरसगन्धस्पर्शेष्वनेकद्रव्यसमवायात् स्वगतविशेषात् स्वाश्रयसान्निकर्षान्नियतेन्द्रियनिमित्तमुत्पद्यते । शब्दस्य त्रयसान्निकर्षाच्छ्रोत्रसमवेतस्य तेनैवोपलब्धिः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगकर्मणां प्रत्यक्षद्रव्यसमवायाच्चक्षुःस्पर्शनाभ्यां ग्रहणम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां द्वयोरात्ममनसोः संयोगादुपलब्धिः । भावद्रव्यत्वगुणत्वकर्मत्वादीनामुपलभ्याधारसमवेतानामाश्रयग्राहकैरिन्द्रियैर्ग्रहणमित्येतदस्मदादीनां प्रत्यक्षम् ।

अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा स्वात्मान्तराकाशदिक्कालपरमाणुवायुमनस्सु तत्समवेतगुणकर्मसामान्यविशेषेषु समवाये चावितथं स्वरूपदर्शनमुत्पद्यते । वियुक्तानां पुनश्चतुष्टयसान्निकर्षाद्योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यक्षमुत्पद्यते ।

तत्र सामान्यविशेषेषु स्वरूपालोचनमात्रं प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाताऽऽत्मा प्रमितिर्द्रव्यादिविषयं ज्ञानम् । सामान्यविशेषज्ञानोत्पत्तावविभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम् अस्मिन्नान्यत्प्रमाणान्तरमस्ति अफलरूपत्वात् । अथवा सर्वेषु

पदार्थेषु चतुष्टयसन्निकर्षादवितथमव्यपदेश्यं यज्ज्ञान- मुत्पद्यते तत्प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाताऽऽत्मा प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनमिति ॥

( व्यो० ) केन रूपेणेत्याह—प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा त- त्स्वरूपेति । प्रत्यष्टिः प्रत्यक्षम्, लिङ्गदर्शनात् सञ्जायमानं लैङ्गि- कम्, स्मरणं स्मृतिः, ऋषीणामिदं ज्ञानमार्षमिति । ननु शाब्दज्ञा- नस्यापि विद्यारूपत्वादिहानुपन्यासे किं प्रयोजनम् ? । विप्रतिपत्ति ज्ञापनमिति । तथाहि शाब्दमनुमानेन्तर्भवतीति केचित् ।

अन्ये तु प्रमाणान्तरमिति वैशेषिकाणां विप्रतिपत्तिस्तेनेहानभि- धानम् । अत्र तु विद्याविभागपरेणापि वाक्येनोपसर्जनतया तज्जन- कमपि सामग्र्यां प्रतिज्ञातमेव । प्राधान्येन तु कारणव्युत्पत्तिद्वारेण प्रत्यक्षादिविभागाभ्युपगमे विद्याविभागनिरूपणमुपसर्जनतया स्यात् । तत्तु न युक्तम् । बुद्धिभेदस्य पूर्वं प्रतिज्ञातस्येह निरूपणात् । तत्र प्रत्यक्षस्य निरूपणार्थमाह अक्षमक्षं प्रतीत्योत्पद्यत इति प्रत्यक्षम्, प्रति- गतमक्षं प्रत्यक्षमिति प्रादिसमासोऽन्यथाऽव्ययीभावसमासाभ्युपगमे प्रत्यक्षं रूपं प्रत्यक्षाः पुमांसः प्रत्यक्षा स्त्रीति लिङ्गभेदो वचनभेदश्च न स्यात् । अक्षमक्षमिति वीप्साविधानं सकलेन्द्रियावरोधार्थम् । अथाक्षमिति सामान्यशब्दात्सकलेन्द्रियावरोधो भवत्येव । न । सा- मान्यशब्दस्योभयथापि प्रवृत्तेः । तथाहि-'ब्राह्मणो न हन्तव्य' इति सकलब्राह्मणापेक्षया प्रतिषेधः 'ब्राह्मणान् भोजयेति' ब्राह्मणविशे- षापेक्षया नियोगः । तस्माद्व्याप्त्यर्थं वीप्साकरणमिति । अथ वीप्सा सद्भावेपि व्याप्तिर्नोपलब्धा । यथान्तर्वेद्यां ग्रामो ग्रामो रमणीयः पुरुषे पुरुषे गुणविशेष इति । वीप्साकरणमत्र सत्यम्, तथाप्यल्पसंख्यायो- गिनि पदार्थे व्याप्तावेव वीप्सोपलब्धेति ।

अन्ये तु द्वितीयाक्षपदमवधारणार्थमिति मन्यन्ते । अक्षमेव प्र- तीत्य प्राप्य यदुत्पद्यते ज्ञानं तत्प्रत्यक्षम् । अथ ज्ञानस्यानुत्पन्नत्वाद- क्षेण प्राप्तिर्नास्तीति कथमक्षं प्राप्योत्पद्यते । उपचारस्य विवक्षित- त्वाददोषः । यथाहि शिशुरयं मातरं भक्षयित्वोपजात इति । अत एवाक्षाश्रितं कार्यमितित्वेन तज्ज्ञानमिति । इन्द्रियरूपादिश्चेन्द्रिया- श्रितो न च ज्ञानमिति । नन्वेवमपि संशयज्ञानं चाक्षं प्रतीत्योत्पद्य-

त इत्यतिप्रसङ्गः । तन्न । विद्यासामान्यलक्षणानुवृत्तिस्तु विशेषलक्षणेऽनुक्तेपि लभ्यत इति । वक्ष्यति च 'यदवितथमव्यपदेश्यं ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणमिति' । न वितथमवितथमित्यनेन विपर्ययसंशयज्ञानयोर्व्युदासः । वितथं हि संशयज्ञानं विपर्ययज्ञानं चेति ।

अन्ये तु प्रतितन्त्रन्यायेन व्यवसायात्मकपदमनुवर्त्तनीयमिति मन्यन्ते । अव्यपदेश्यमिति । व्यपदेशः शब्दस्तस्येदं व्यपदेश्यं न व्यपदेश्यमव्यपदेश्यमशाब्दजन्यं ज्ञानमिति । नन्वक्षं प्राप्य नोत्पद्यते शाब्दज्ञानमित्यनेनैव व्यवच्छिन्नम् । न । इन्द्रियसहकारिणा शब्देन यज्जन्यते तस्य व्यवच्छेदार्थत्वात् । तथा ह्यकृतसमयो रूपं पश्यन्नपि चक्षुषा रूपमिति न जानीते रूपमिति शब्दोच्चारणानन्तरं प्रतिपद्यत इत्युभयजं ज्ञानम् । ननु च शब्देन्द्रिययोरेकस्मिन्नेव काले व्यापारासम्भवादयुक्तमेतत् । तथाहि–मनसाऽधिष्ठितं न श्रोत्रं शब्दं गृह्णाति, पुनः क्रियाक्रमेण चक्षुषा सम्बन्धे सति रूपग्रहणम् । न च शब्दज्ञानस्यैतावत्कालमवस्थानं न सम्भवतीति कथमुभयजं ज्ञानम् । अत्रैका श्रोत्रसम्बद्धे मनसि क्रियोत्पन्ना विभागमारभते, विभागाच्च यदैव संयोगस्य विनश्यत्ता तदैव शब्दज्ञानस्योत्पद्यमानता, अतः शब्दज्ञानस्योत्पादः संयोगस्य विनाशः उत्तरसंयोगस्योत्पद्यमानता ततो विषयसम्बद्धेन चक्षुषा सह संयोगस्योत्पादो रूपज्ञानस्योत्पद्यमानता ततः स्वज्ञानसहायशब्दसहकारिणा चक्षुषा रूपज्ञानमुत्पद्यते इत्युभयजं ज्ञानम् । यदि वा गृहीतस्य शब्दस्यार्थपरिच्छेदे व्यापार इत्ययं नियमो नावश्यं ग्रहणसहकारिणा इति कालान्तरेणापि मनसश्चक्षुषा सम्बन्धे रूपशब्दस्य गृहीतत्वात् भवत्येवोभयजं ज्ञानम् । कार्यसद्भावेन च कारणकल्पना क्रियते । तच्चेहोपलब्धमित्यनेन क्रमेणोत्पत्तिश्चिन्त्यते । तथा शब्देन व्यपदेशाच्चक्षुषा पश्यतापि रूपमिति मया न ज्ञातं रूपशब्दाच्च प्रतिपन्नमित्युभयजं ज्ञानम् । यदि शब्दस्य व्यापारादप्रत्यक्षं तर्हीन्द्रियव्यापारान्न शाब्दमिति प्रमाणान्तरफलं स्यात् । नैतदेवम् । प्रत्यक्षलक्षणे अव्यपदेश्यमिति विशेषणवच्छब्दलक्षणे अनिन्द्रियजमिति विशेषणाश्रवणात् शब्दे सहकारिनियमाभावः । शाब्दं हि ज्ञानं शब्दादिन्द्रियसहकारिणः तद्रहिताद्वा भवतु सर्वथा तज्जनकं शाब्दं प्रमाणं भवति । अत्र चाक्षं प्रतीत्योत्पद्यते यत् ज्ञानं तत्प्रत्यक्षमिति वा-

क्ये विवरणवाक्येषु चतुष्टयादिसन्निकर्षाभिधानात् षोढा सम्बन्धो लभ्यत एव । स च संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति । नन्वेवमपीन्द्रियार्थसन्निकर्षपदेनैव व्यवच्छिन्नम् । अर्थेन्द्रियं मनोऽर्थश्चात्मा तत्सन्निकर्षादनुमानादिज्ञानमपि भवतीति प्रत्यक्षफलं स्यात् । न । ज्ञानमात्रोत्पत्तावन्तःकरणस्येन्द्रियत्वानुपपत्तेः । करणत्वादिविशेषणस्यापरोक्षज्ञानजनकत्वमिन्द्रियलक्षणमित्युक्तम् । न चानुमानज्ञानमिन्द्रियग्राह्येऽर्थे भवतीति । तदेवमिन्द्रियं प्रतीत्यार्थे यदवितथमव्यपदेश्यं व्यवसायात्मकं ज्ञानमुत्पद्यते, तद्यतो भवति तत्प्रत्यक्षमिति फलविशेषणपक्षः । एतानि त्वव्यभिचारित्वादीनि व्यवच्छेदकान्यतीतेऽपि विशेष्यज्ञाने बुद्धिसमारोपणाद्भवन्तीति । सामग्रीविशेषणपक्षे तु न साक्षादव्यभिचारित्वादिविशेषणयोगः । अथाक्षमक्षं प्रतीत्योत्पद्यते सामग्री तस्याः कारकसाकल्यरूपत्वात् । साकल्यं तु चरमसहकारिप्राप्तावेव न पूर्वमित्युत्पद्यत एव, तथा ज्ञायते अनयेति ज्ञानमक्षाद्युपलक्षिता सामग्र्येव अव्यभिचारिव्यवसायात्मिका, अव्यपदेश्यपदेन ज्ञानजनकत्वेन सामग्र्यास्तद्व्यपदेश इति सामग्रीविशेषणपक्षेपि विशेषणयोगः । सत्यम् । तथापि अव्यभिचारित्वादिविशेषणानि फलस्य तद्द्वारेण तु सामग्र्या भवन्तीति परं फलविशेषणपक्षः । स्वरूपविशेषणपक्षस्तु निरस्त एव, प्रमाणशब्दस्य करणार्थत्वात्, तथाहि—प्रतीयतेऽनेनेति प्रमाणम्, येन कर्त्तृकर्मविलक्षणेन प्रमा क्रियते । स्वरूपविशेषणपक्षे तु न जन्यजनकरूपतया प्रमाणस्य प्रामाण्यम्, किन्त्वव्यभिचारित्वादिधर्मोपेतत्वेनैव । तच्चातिव्यापकमव्यापकञ्च । तथाच परामर्शादिज्ञानस्याप्येवंरूपमस्ति । न च तस्य प्रत्यक्षत्वमनुमानजनकत्वेनानुमानत्वात् । सामग्र्यास्तु प्रत्यक्षत्वेनाभिमतायाः प्रत्यक्षत्वं न लभ्यत इत्यव्याप्तिः । सौगतानान्तु प्रमाणफलयोरव्यतिरेक इति तत्पक्षे स्वरूपविशेषणतैव घटते । तथा सौत्रान्तिकानामाकारः प्रमाणं प्रमेयोर्थः स्वसम्वित् फलमिष्यत इति ज्ञानं स एव प्रमाणफलव्यवहारः कल्पनं वा । न चैतद्युक्तम् । क्रियाकरणयोरभेदानुपलब्धेः । न च बोधे विषयाकारः सम्भवतीत्युक्तं कथं तस्य प्रामाण्यम् । न च मेयरूपतया विषयपरिच्छेद्ये प्रामाण्यं युक्तम्, विष-

यस्यात्यन्तपरोक्षतया तेन सह प्रतिबन्धानुपलब्धेः । यदि चागृहीत प्रतिबन्धो व्यापारो विषयविशेषं गमयेत् अतिप्रसङ्गः स्यात् । तथा च रूपाकारस्य रूपवद्रसादिव्यवस्थापकत्वमपि स्यात्, उभयत्रापि प्रतिबन्धानुपलम्भस्याविशेषात् । न चाकारमात्रसम्वेदनवादिनो विषयविशेषान्तरग्रहणमाकारे सम्भवाति, विषयस्यात्यन्तपरोक्षत्वे अवस्थितस्य प्रतिसन्धातुरभावे चान्वयव्यतिरेकयोरत्यन्तपरोक्षत्वात् । परकीयं च प्रत्यक्षलक्षणं गुरुभिर्विस्तरेण निरस्तमिति नोक्तम् ।

अक्षशब्दस्यानेकार्थतामाह—अक्षाणीन्द्रियाणि, तानि तु घ्राणरसनचक्षुस्त्वक्छ्रोत्रमनांसि । न कर्मेन्द्रियाणि पराभ्युपगतानि । निर्विषयज्ञानस्य प्रतिषेधेन स्मृतिव्यवच्छेदार्थमाह—तद्धि प्रत्यक्षं यस्माद्द्रव्यादिषु पदार्थेषूत्पद्यते तस्मान्न निर्विषयमिति । अत्र चादिशब्देन गुणकर्मसामान्यानि गृह्यन्ते । समवायोपीत्यन्ये । अन्ये त्विन्द्रियस्यार्थेन सन्निकर्षप्रतिपादनार्थं तद्धि द्रव्यादिषु पदार्थेषूत्पद्यते प्रत्यक्षम् । तस्मादस्तीन्द्रियेण संयुक्तसमवायादिसम्बन्धः । यतो वा द्रव्यादिषु पदार्थेषूत्पद्यते प्रत्यक्षमतो द्रव्ये तावद्व्याख्यायत इति । किंविशिष्टे ? त्रिविधे तिस्रो विधा यस्य तत्तथोक्तं तस्मिन्, महति महत्त्वाधिकरणे स्वरूपालोचनं निर्विकल्पकं ज्ञानमुत्पद्यते । कुतः ? अनेकद्रव्यत्वं च रूपत्वं च प्रकाशश्च चतुष्टयसन्निकर्षश्चेति तथोक्तस्तस्माद्धर्मादिसामग्र्ये चेति । अनेकं च द्रव्यं चेत्यनेकद्रव्यं तद्यस्यास्ति तत्तद्वत्तस्य भावोऽनेकद्रव्यत्वम् । रूपं चात्र रूपविशेषो विवक्षितः । तथाच सूत्रम्–'महत्त्वादनेकद्रव्यवत्त्वाद्रूपविशेषाच्च द्रव्यं प्रत्यक्षम्' इति । अपरोक्षज्ञानसद्भावे सति समस्तं व्यस्तं चेदं प्रत्यक्षज्ञानस्य कारणं विवक्षितमित्युक्तम् वाय्वधिकारे । चतुष्टयसन्निकर्षश्च आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति चतुष्टयसन्निकर्षः तस्मात् । धर्मादिसामग्र्ये चेत्यादिपदाद्दिक्कालादेर्ग्रहणमिति । अथास्त्वेवं निर्विकल्पकज्ञानस्योत्पत्तिः । सद्भावे किं प्रमाणम् ? सविकल्पकज्ञानोत्पत्तिरेव । अन्यथा हि विशिष्टार्थानुपलब्धौ विशिष्टस्य सङ्केतस्मरणस्यानुपपत्तेः सविकल्पकं ज्ञानं न स्यात्, तस्य तत्कार्यत्वात् । न च सङ्केतस्मरणमेव तस्य निमित्तम्, अक्षणिकत्वे सति अर्थस्य निर्विकल्पकज्ञानोत्पत्ताविव सविकल्पकज्ञानोत्पत्तावन्वयव्यतिरेकाभ्यां व्यापारोपलब्धेरित्युक्तन्यायात् ।

तदेवं निर्विकल्पकं प्रतिपाद्य सविकल्पकं विशेष्यज्ञानमाह—सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादित्यादिना । सामान्यं च सामान्यविशेषश्च द्रव्यं च गुणश्च कर्म चेति तथोक्तानि । तान्येव विशेषणानि तान्यपेक्षत इति तदपेक्षः समुच्चये । न केवलस्वरूपालोचनमुक्तकारणेभ्यो निष्पद्यते सामान्यादिविशेषापेक्षं च तत एवोत्पद्यत इति । ननु चतुष्टयसन्निकर्षस्यापवादं विनोर्ध्वं सर्वत्रानुवृत्तेरभ्युपगमाद्यर्थम् आत्ममनःसन्निकर्षस्याभिधानम् । न अनन्तरज्ञानेष्वस्यासमवायिकारणत्वज्ञापनार्थत्वात् । तत्र सदिति सत्ताविशेषणम्,द्रव्यमिति सामान्यम्,विशेषापेक्षं पृथिवीति,तथा विषाणीतिद्रव्यविशेषणम् , शुक्ल इति गुणविशेषापेक्षम् , गौरिति सामान्यविशेषविशेषणापेक्षम् , गच्छतीति क्रियाविशिष्टं ज्ञानमित्युदाहरणानि ।

गुणादिषु प्रत्यक्षमाह—रूपरसगन्धस्पर्शेषु विषयेषु अनेकद्रव्येण सह समवायात्, स्वगतविशेषाच्च–यत्कृता क्वचिद्विषये तेषामुपलब्धिर्यदभावाच्चानुपलब्धिः स उद्भवसमाख्यातो रूपादिधर्मः सहकारिविशेषः तस्मात् , स्वाश्रयसन्निकर्षाच्च स्वाश्रयेण द्रव्येण संयुक्तमिन्द्रियं तत्समवायाद्धर्मादिसामग्र्ये च सति प्रतिनियतेन्द्रियनिमित्तमुत्पद्यते ज्ञानम् । शब्दस्य त्रयसन्निकर्षादिति । आत्मा मनसा संयुज्यते मन इन्द्रियेणेति त्रयस्य सन्निकर्षः । श्रोत्रसमवेतस्येति इन्द्रियार्थसन्निकर्षोऽप्युपदर्शित एव । तेनैव श्रोत्रेणोपलब्धिर्नेन्द्रियान्तरेणेति ।

अन्ये तु त्रयश्चासौ सन्निकर्षश्चेतीन्द्रियार्थसन्निकर्षोऽप्युपलभ्यते, तस्माच्छ्रोत्रसमवेतस्य तेनैवोपलब्धिरिति । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगद्रवत्ववेगकर्मणां चक्षुःस्पर्शनाभ्यां ग्रहणम् । कुतः? प्रत्यक्षद्रव्यसमवायात् । चक्षुःस्पर्शनाभ्यां तत्समवायात् संख्यादीनां ग्रहणमिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां द्वयोरात्ममनसोः सन्निकर्षादुपलब्धिः । बुद्ध्यादयो ह्यात्मनि समवेताः तत्सम्बद्धेन मनसा गृह्यन्ते ।

सामान्ये प्रत्यक्षमाह भावश्च द्रव्यत्वं च गुणत्वं च कर्मत्वं च तथोक्तानि, तान्यादिर्येषामित्यादिपदेन पृथिवीत्वोत्क्षेपणत्वादीनां ग्रहणम् । उपलभ्यश्चासावाधारश्च तत्समवेतानामाश्रयग्राहकैरिन्द्रि·

यैर्ग्रहणम् । येनैवेन्द्रियणाश्रेयग्रहणं तेनैव तत्समवेतानां सत्तादीनां ग्रहणमिति । तथाहि—सत्ता द्रव्ये वर्त्तमाना संयुक्तसमवायेन चक्षुःस्पर्शनाभ्यामुपलभ्यते । गन्धरसरूपस्पर्शेषु समवेता घ्राणरसनचक्षुस्त्वगिन्द्रियैरुपलभ्यते संयुक्तसमवेतसमवायेन । शब्दे तु समवेतसमवायात् श्रोत्रेण । सुखादिषु संयुक्तसमवेतसमवायान्मनसा गृह्यते । गुणत्वमप्येवम् । अतः सत्तायां गुणत्वे च सार्वेन्द्रियज्ञानमिति । द्रव्यत्वं संयुक्तसमवायेन चक्षुःस्पर्शनाभ्यामुपलभ्यते । कर्मत्वं च संयुक्तसमवेतसमवायात् । रूपत्वादावप्येवं ग्रहणमित्येतदस्मदादीनां प्रत्यक्षमित्युपसंहारः ।

तथाऽस्मद्विशिष्टानां योगिनां केष्वर्थेषु कथं च प्रत्यक्षमुत्पद्यत इति व्याख्यायते । तत्र युक्तानां समाध्यवस्थानां योगजधर्मानुग्रहीतेन तत्सहकारिणा मनसा अपरोक्षस्वरूपदर्शनं जन्यते । केष्वर्थेषु ? स्वात्मा चात्मान्तरं चाकाशं च दिक्च कालश्च वायुश्च परमाणवश्च मनश्चेति तथोक्तानि अतस्तेषु । तथा न परं स्वात्मादिषु संयुक्तेन मनसा योगिनामपरोक्षग्रहणं तत्समवेतेषु गुणकर्मसामान्यादिविशेषेषु संयुक्तसमवायेन समवाये च संयुक्तविशेषणविशेष्यभावेन ग्रहणम् । अत एव समवायस्य पृथगभिधानं विभिन्नसन्निकर्षपरिच्छेद्यत्वात् । गुणकर्मसु परमाण्वादिगतेषु यत्सामान्यं तत्र संयुक्तसमवेतसमवायेन । अथ योगी यदा स्वमन्तःकरणं गृह्णाति तदा किं कारणम् ? आत्ममनःसंयोगः तस्मिन् मनःपरिच्छेद्ये मन एव करणमिति । परकीयेन च मनसा सूक्ष्मशरीरस्थं मनः प्रेयाभिसम्बन्धयति(?) तत्सम्बद्धं च तत् गृह्णातीति । वियुक्तानां पुनश्चतुष्टयसन्निकर्षादस्मदादीनामिव प्रत्यक्षमुत्पद्यते ज्ञानम् । केष्वर्थेषु ? सूक्ष्मव्यवहितविप्रकृष्टेष्विति । सूक्ष्माः परमाणवो व्यवहिताः नागभुवनादयो विप्रकृष्टा मेर्वादयस्तेष्वपरोक्षं ज्ञानम । असमाध्यवस्थानां योगजधर्मानुग्रहसामर्थ्यात्तदुत्पद्यते । योगीन्द्रियाणां हि धर्मविशेषानुग्रहेण सर्वत्राप्रतिबन्धात् । चतुष्टयसन्निकर्षग्रहणमुदाहरणार्थम, त्रयसन्निकर्षेणापि ग्रहणात् । तथा हि योगी ब्रह्मादिभाषितं योगजधर्मानुग्रहात् अप्रतिबध्यमानसन्तानन्यायेन श्रोत्रदेशमागतं गृह्णाति त्रयसन्निकर्षेण ।

ननु सर्वमेतदसत्—योगिनां सद्भावे प्रमाणाभावात् । बाधकोपप-

त्तेश्च। तथा च न योग्यतीन्द्रियार्थद्रष्टा प्राणित्वादस्मदादिवत्। योगीन्द्रियाणि वा न सर्वविषयाणि इन्द्रियत्वादस्मदादीन्द्रियवत्।

नैतद्युक्तम्। स्वतन्त्रे योगिनामप्रसिद्धतया प्राणित्वादिहेतोराश्रयासिद्धत्वात्। अथ परव्याप्त्या परस्यानिष्टापादनमेतत्। तत्र यदि सम्यक्प्रमाणेन परप्रसिद्धिस्तेनैव बाध्यमानत्वादनुत्थानं तत्प्रतिषेधहेतूनाम्। न च कार्येणैव कारणस्य व्याघातः। तदन्तरेणापक्षधर्मतया तन्मूलस्य हेतोरप्रामाण्यप्रसङ्गात्। अथ प्रमाणं विनैव परेणाभ्युपगता योगिन इति प्रतिषिध्यन्ते। तर्हि प्रमाणाभावेनैव प्रमेयस्याप्रसिद्धेर्व्यर्थं तत्प्रतिषेधानुमानम्। अस्ति च योगिनां सद्भावेऽनुमानम्–तथाहि अस्मदादीनां प्रत्यक्षेणानुपलभ्यमानाः परमाण्वादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वात् घटादिवदिति। पक्षीकृतेषु परमाण्वादिषु प्रमेयत्वस्य हेतोः सद्भावात् पक्षधर्मत्वम्। तथा कस्यचित्प्रत्यक्षेण साध्येन प्रमेयत्वस्य हेतोर्घटादौ व्याप्तिरुपलम्भः। न चास्य प्रत्यक्षागमाभ्यामस्ति बाधा। नास्त्ययं सत्प्रतिपक्ष इत्यव्यभिचारित्वात् गमक एव। सर्वं चानुमानं सामान्येन व्याप्तिग्रहणापेक्षं प्रवर्त्तमानं पक्षे विशेषं प्रसाधयतीत्यतः कस्यचित्प्रत्यक्षमेव परमाण्वादेः सामान्येन साध्यते। यस्य च प्रत्यक्षाः परमाण्वादयः सोऽस्मदादिविलक्षणो योगी। तथाभ्यासवशात् बुद्धेस्तारतम्यमुपलभ्यमानं क्वचिद्विश्रान्तं तारतम्यशब्दवाच्यत्वात् अणुपरिमाणतारतम्यवत्। यत्र विश्रामस्तेऽस्मदादिविलक्षणा योगिन इत्यनुमानस्य तु निर्दिष्टतयां योगिसद्भावसिद्धेः। शेषं वचनमात्रं न बाधकमित्युपेक्ष्यते।

तदेवं योगिनामयोगिनां च प्रत्यक्षं व्याख्याय शिष्यव्युत्पादनाय विप्रतिपत्तिनिरासार्थं च प्रमाणफलविभागं निरूपयति तत्र सामान्यविशेषेषु स्वरूपालोचनमात्रमित्यादिना। सामान्यविशेषेषु द्रव्यत्वगुणत्वकर्मत्वादिषु स्वरूपालोचनमात्रमालोचितिरालोचनं निर्विकल्पकं ज्ञानं प्रत्यक्षं प्रमाणं तदुपलक्षिता सामग्री प्रत्यक्षं प्रमाणमिति। मात्राभिधानात् ज्ञानान्तराभावं दर्शयति। प्रमीयन्त इति प्रमेयाः प्रमाणपरिच्छेद्या द्रव्यादयः पदार्थाः, प्रमिणोतीति प्रमाधारत्वात् प्रमाताऽऽत्मा, प्रमितिः प्रमाणादिसाध्या प्रतीतिर्द्रव्यादिविषयं ज्ञानं फलमित्येवमितरेतरव्यावृत्तलक्षणयोगित्वात्प्रमाणादयः परस्परं विभिन्ना इति तदभेदवादिनो निरस्ता भवन्ति।

अथ प्रमाणफलयोर्व्यतिरेकाभ्युपगमात्सामान्यविशेषेषु स्वरूपालोचनस्य प्रमारूपत्वादुत्पत्तौ किं प्रमाणमित्याह–सामान्यविशेषज्ञानोत्पत्तावविभक्तं विशेषणज्ञानशून्यमालोच्यतेऽनेनेत्यालोचनमात्रमिन्द्रियार्थसन्निकर्षाद्युपलक्षितं कारकसामग्र्यं प्रत्यक्षं प्रमाणं प्रमेयं सामान्यविशेषा इति । अथ तस्मिन्नपि स्वरूपालोचने कस्मान्न ज्ञानान्तरमिष्यत इत्याह—न तस्मिन् स्वरूपालोचनेऽन्यत् प्रमाणान्तरं ज्ञानान्तरमस्तीति, अफलरूपत्वान्निष्प्रयोजनत्वादिति। तथाहि विशेष्यज्ञानं विशेषणानुरक्तम् अन्यथानुपपद्यमानं विशेषणज्ञानसत्तां दर्शयति । न चैवं विशेषणज्ञाने विशेषणानुरागोऽस्ति । ज्ञानान्तराभ्युपगमे चानवस्था स्यादिति विशेष्यज्ञानानुत्पत्तिरेव । दृष्टं च विशेष्यज्ञानमतो न विशेषणज्ञाने ज्ञानान्तरमस्तीति ।

अन्ये तु सामान्यविशेषेषु स्वरूपालोचनमात्रमिति मात्राभिधानेन निराकारं प्रत्यक्षं प्रमाणफलमिति ब्रुवते । सामान्यविशेषाश्च द्रव्यादय एवानुगतव्यावृत्तज्ञानविषयत्वादुपचारेण विवक्षिताः । अत्र हि ज्ञानविशेषस्याकारप्रतिषेधेऽन्यत्राकाराभ्युपगमः स्यात् । शेषं पूर्ववत् । यथा ज्ञाने नाकारः सम्भवति तथोक्तं ज्ञानवादप्रतिषेधावसरे । अथवेति प्रमाणफलविभागे प्रकारान्तरोपदर्शनम्, न तु विकल्पनार्थम् । हेयादिज्ञानोत्पत्तावपि द्रव्यादिज्ञानं प्रमाणमिति वाक्यार्थः । तदाह–सर्वेषु पदार्थेषु द्रव्यादिषु यदवितथमव्यपदेश्यं ज्ञानमुत्पद्यते तत् प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाताऽऽत्मा प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनमिति । गुणदर्शनमुपादेयज्ञानं दोषदर्शनं हेयज्ञानमुपेक्षणीयज्ञानं च माध्यस्थ्यदर्शनमिति । ननु द्रव्यादिज्ञानोत्पत्तावनेककालव्यवधानेनोपादेयादिज्ञानस्योत्पत्तेः कथं द्रव्यादिज्ञानफलत्वम् ? पारम्पर्येणेति । तथाहि–द्रव्यत्वादिजातीयस्य पूर्वं सुखदुःखसाधनत्वोपलब्धेस्तज्ज्ञानानन्तरं यद्यत् द्रव्यत्वादिजातीयं तत्तत्सुखसाधनमित्यविनाभावस्मरणम्, तथा चेदं द्रव्यत्वादिजातीयमिति परामर्शज्ञानम्, तस्मात्सुखसाधनमिति विनिश्चयः तत उपादेयज्ञानम् अतः पारम्पर्येण द्रव्यादिज्ञानफलत्वम् । समानं चैतद्धेयोपेक्षणीयज्ञानोत्पत्तावपीति । अथोपादेयादिज्ञानस्य सुखसाधनत्वादिविनिश्चयाद्विषयभेदो वक्तव्यः । अन्यथा ह्यनुमानफलत्वमेव स्यात् प्रत्यक्षफलत्वं च सुखदुःखादिसाधनत्वादिविनिश्चयानन्तरमिन्द्रियार्थ-

सन्निकर्षेणोपादेयादिज्ञानस्योत्पत्तेः। सत्यम् ।तथापि विषयभेदो विशेषणभेदात् । सुखादिसाधनत्वविशेषणं सुखसाधनादिज्ञानात्, तस्माच्चोपादेयादिज्ञानमिति ।

प्रत्यक्षानन्तरमुद्देशवतो लैङ्गिकस्य लक्षणपरीक्षार्थमाह ।

(भा०)लिङ्गदर्शनात् सञ्जायमानं लैङ्गिकम् । लिङ्गं पुनः–

यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥
विपरीतमतो यत् स्यादेकेन द्वितयेन वा ।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्॥

यदनुमेयेनार्थेन देशविशेषे कालविशेषे वा सहचरितमनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धमनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव तदप्रसिद्धार्थस्यानुमापकं लिङ्गं भवतीति ॥

यत्तु यथोक्तात् त्रिरूपाल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतं तदनुमेयस्याधिगमे लिङ्गं न भवतीत्येतदेवाह सूत्रकारः–"अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चेति"॥

विधिस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमोऽपि न भवतीति । एवं प्रसिद्धसमयस्यासन्दिग्धधूमदर्शनात साहचर्यानुस्मरणात् तदनन्तरमग्न्यध्यवसायो भवतीति ।

एवं सर्वत्र देशकालाविनाभूतमितरस्य लिङ्गम् । शास्त्रे कार्यादिग्रहणं निदर्शनार्थं कृतं नावधारणार्थम् । कस्मात् ? व्यतिरेकदर्शनात् । तद्यथा अध्वर्युरोंश्रावयन् व्यवहितस्य हेतुर्लिङ्गम्, चन्द्रोदयः समुद्रवृद्धेः कुमुदविकाशस्य च, शरदि जलप्रसादोऽगस्त्योदय-

स्येति । एवमादि तत्सर्वमस्येदमिति सम्बन्धमात्रवचनात् सिद्धम् ।

तत्तु द्विविधम्—दृष्टं सामान्यतो दृष्टञ्च ।

तत्र दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम् । यथा गव्येव सास्नामात्रमुपलभ्य देशान्तरेऽपि सास्नामात्रदर्शनाद्गवि प्रतिपत्तिः ।

प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानं सामान्यतो दृष्टम् । यथा कर्षकवणिग्राजपुरुषाणां च प्रवृत्तेः फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानमिति ।

तत्र लिङ्गदर्शनं प्रमाणं प्रमितिरग्निज्ञानम् ।

अथवाऽग्निज्ञानमेव प्रमाणं प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनमित्येतत् स्वनिश्चितार्थमनुमानम् ॥

(व्यो०) लिङ्गदर्शनात्सञ्जायमानं लैङ्गिकमिति । यद्यपि लिङ्गदर्शनात्संस्कारो विपर्ययज्ञानं संशयज्ञानं च भवति तथापि विद्यासामान्यलक्षणानुवृत्तौ विशेषलक्षणस्याभिधानान्नातिप्रसङ्गः । यदि वा ऽवितथं व्यवसायात्मकमव्यपदेश्यमिति विशेषणमिहाप्यनुवर्त्तनीयम् । अविनाभावसम्बन्धस्मरणं तु विद्यारूपलिङ्गदर्शनात्सञ्जायते तद्व्यवच्छेदार्थं द्रव्यादिषूत्पद्यत इत्यनुवर्त्तनीयम् । तदेवं लिङ्गदर्शनाद्यदव्यभिचारित्वादिविशेषणं ज्ञानमनुमेये तद्यतः परामर्शज्ञानोपलक्षितात् कारकसमूहात् भवति तल्लैङ्गिकमिति । परामर्शज्ञानं वा लिङ्गदर्शनाद्यथोक्तविशेषणज्ञानमुत्पद्यते साधकतमत्वापेक्षयानुमानम् । किं पुनर्लिङ्गमित्याह—लिङ्गं पुनर्यदनुमेयेन सम्बद्धमित्यादि । अनुमेयः पक्षः प्रत्ययाद्यधर्मविशिष्टो धर्मी तेन व्याप्त्या सम्बद्धम् । व्याप्तिस्तु विवरणवाक्यसहचारितपदाल्लभ्यते । अन्यथा हि पक्षैकदेशे वर्त्तमानस्यानुमेयेन साहचर्यं स्यात् । यथा नित्याः परमाणवो गन्धवत्त्वादतोऽस्य व्यवच्छेदः सहचरितपदेन । अन्ये तु पुनरिति वीप्सा-

भिधानस्य विवक्षितत्वाल्लिङ्गं पुनः पुनर्यदनुमेयेन संबद्धमिति, पक्षे व्याप्तिर्लभ्यत इति ब्रुवते । अनुमेयेन सम्बद्धमेवेत्यवधारणात् भागासिद्धव्युदास इति चान्ये। तदसत् । यत एवकारकरणं ततोऽन्यत्रावधारणमिति न्यायाभ्युपगमेनानुमेयसमधृतं स्यात् न लिङ्गम् । अनुमेयो हि लिङ्गं न जहातीति व्याप्त्या पक्षे सम्बन्धो ज्ञायते लिङ्गस्य त्वनवधारणादन्यत्रापि वृत्तिर्ज्ञायत इति व्यर्थम् तदन्विते प्रसिद्धमिति पदमवधारणार्थं क्रियते । तत्रापि तदन्विते प्रसिद्धमेवेत्यवधारणाभ्युपगमे सपक्षैकदेशवृत्तेरगमकत्वप्रसङ्गात् । अथ विपक्षवृत्तिप्रतिषेधार्थं तदन्वित एव प्रसिद्धमित्यवधार्यते । नन्वेवमनवधारणेनैव विपक्षाद्व्यावृत्तिसिद्धेः व्यर्थं तदभावे च नास्त्येवेति पदम् । तथानुमेयेनैव सम्बद्धमित्यवधारणं बाधितम् । अथ समुच्चीयमानावधारणमेतत् । तथाहि—पक्षे वृत्तौ सिद्धायां विपक्षादेव व्यवच्छेदार्थमवधारणम् तथाऽप्यवधारणस्य विद्यमानज्ञापकत्वाद्विपक्षादत्यन्तं व्यावृत्तिस्ततोऽपि लभ्यत इति व्यर्थं तदभावे च नास्त्येवेतिपदम्, तस्यापि विद्यमानज्ञापकत्वादिति । न चान्वयोपदर्शने सति व्यतिरेकाभिधानम् व्यतिरेकाभिधाने त्वन्वयस्याप्रतिपादनमेकाभिधानेन परस्यार्थादापन्नत्वात्स्वशब्देन पुनर्वचनं पुनरुक्तमेव स्यादित्येवंविधार्थकथनार्थम् तदभावे च नास्त्येवेति वचनमशब्दार्थत्वात्परार्थानुमानस्य चाप्रस्तुतत्वात्तत्रैष न्याय इति । तस्मादवधारणं विनैव प्रकारान्तरेण पक्षैकदेशवृत्तिव्युदासो वाच्यः । येषां तु सर्वं वाक्यं सावधारणमिति मतं तल्लक्षणे ह्येतद्दूषणमनिवार्यमूह्यम् । यथा 'अनुमेयेऽथ तत्तुल्ये सद्भावोऽसति नास्तिते'ति। अनुमेयः पक्षः तत्र सद्भावस्तत्तुल्यः सपक्षः तत्र चेति । अथशब्दश्चशब्दस्थाने, असति विपक्षे नास्तिता व्यावृत्तिर्यस्य तल्लिङ्गमिति । विपक्षस्तु ततोऽन्यस्तद्विरुद्धस्तदभावो वा त्रिविधोऽप्यसतीत्यनेनावरुद्धः, साध्याभावरूपतायाः सर्वत्र समानत्वात् । तत्रानुमेय एव सद्भाव इत्यवधारणे असाधारणस्य गमकत्वप्रसङ्गः, न चास्मात् भागासिद्धिव्युदासः, पदान्तरवैयर्थ्यं च । अथानुमेये सद्भाव एवेत्ययोगव्यवच्छेदः । तथापि सद्भावस्यानवधारणाल्लिङ्गस्यान्यत्रापि वृत्तिर्लभ्यत इति व्यर्थं तत्तुल्ये सद्भाव इति पदम् । अथावधारणार्थं क्रियते तत्रापि तत्तुल्य एव सद्भाव इत्यवधारणे पूर्वोत्तरव्याघातः । अथ पक्षे वृत्तौ सिद्धायां

विपक्षादेर्व्यवच्छेदार्थमुच्चीयमानावधारणमेतत् । तथाप्यसति ना-स्तितेति न कार्यम्, अवधारणेन गतार्थत्वात् । न च तुल्ये सद्भाव एवेत्यवधारणं युक्तम्, सपक्षैकदेशवृत्तेरपि गमकत्वाभ्युपगमात् । अ-थासत्येव नास्तीत्यवधारणार्थं पदम्, तथापि विपक्षैकदेशवृत्तेर्गमक-त्वप्रसङ्गः । तस्य हि विपक्ष एव नास्तितेति । असति नास्त्येवेत्यवधा-रणम् । तथापि नास्तितताया विपक्षव्यतिरेकेणान्यत्रापि सद्भावो ल-भ्यत इत्यसाधारणादेर्गमकत्वप्रसङ्गः । तस्मात्सर्वं वाक्यं सावधा-रणमिति पक्षे दूषणमेतदनिवार्यम् । विस्तरेण चावधारणपक्षोऽस्म-द्गुरुभिर्निरस्त इति नेह प्रतन्यते ।

अथास्त्ववधारणं विनैव सहचरितपदात् भागासिद्धिव्युदा-सः । तथाप्येतद्रूपं विरुद्धासाधारणयोरस्तीति तद्व्यवच्छेदार्थं प्र-सिद्धं च तदन्वित इति । तेनानुमेयसमानधर्मेणान्वितो युक्तः त-स्मिन् तदन्विते प्रसिद्धं तदन्विते प्रसिद्धम् । न चैवं विरुद्धासा-धारणाविति । तथाप्यनैकान्तिकस्य पक्षधर्मत्वं सपक्षे सत्त्वं चास्ती-ति तदभावे च नास्त्येवेति पदम् । तस्य साध्यसमानधर्मस्याभावो यस्मिन् धर्मिणि तत्रात्यन्तं नास्त्येवेति । न चैवमनैकान्तिकम् । नन्वेवमपि प्रकरणसमकालात्ययापदिष्टयोस्त्रैलक्षण्योपपत्तेर्गमकत्वप्र-सङ्गः । तथा चानुष्णस्तेजोवयवी कृतकत्वात् घटवदिति । स-त्यपि त्रैलक्षण्ये प्रत्यक्षेणोष्णताग्राहिणा बाध्यमानत्वात् काला-त्ययापदिष्टः । प्रकरणसमस्तावन्नित्यः शब्दोऽनुपलभ्यमानानित्य-धर्मकत्वादाकाशादिवत्, अनित्यः शब्दोऽनुपलभ्यमाननित्यधर्म-कत्वात् घटवत् । अत्रापि त्रैलक्षण्यसद्भावेप्यगमकत्वं सत्प्रतिप-क्षत्वात् । अतश्चानयोर्व्यवच्छेदार्थमबाधितविषयत्वमसत्प्रतिपक्षत्वं च समानतन्त्रगतमभ्यूह्यम् । चशब्दस्यानुक्तसमुच्चयार्थत्वात् ।

अन्ये तु प्रतिज्ञादोषेण गतार्थत्वान्न कालात्ययापदिष्टो हेत्वाभा-सान्तरम् । तथा च नित्यानित्यविशेषानुपलब्धेः इतरेतरवाद्यभिप्राये-णासिद्धेन्तर्भाव इति ब्रुवते ।

तच्चासत् । प्रतिज्ञादोषसद्भावेऽपि हेतोर्दुष्टपक्षोपन्यासानन्तर-मुपन्यासात् कालात्ययापदिष्टत्वमुच्यते । अथ बाधाविनाभावयो-र्विरोधान्न प्रत्यक्षेण त्रिलक्षणस्य बाधा अभ्युपगमे वा न त्रैलक्षण्यमि-ति । तन्न तेजोऽवयविनोऽनुष्णत्वे साध्ये कृतकत्वस्य हेतोस्त्रैलक्षण्य-

सद्भावेऽपि पक्षेण विपरीतार्थोपस्थापनात् बाधितविषयत्वेनाविना-भावस्यैवाप्रसिद्धेः । प्रत्यक्षव्यवस्थापितेन च वपुषा सर्वप्राणभृ-तामर्थक्रियाजनकोऽग्निर्न रूपान्तरेणेति स्वविषयसहकारि प्रत्य-क्षम् । न चैवमनुमानमिति बाध्यते । अथ दुष्टस्यैवानुमानस्य प्रत्य-क्षेणैव बाधनाद्येन दोषेण दुष्टं तदेवास्तु दूषणमलं प्रत्यक्षबाधया । न । प्रत्यक्षेण दूषणस्यैव ज्ञापनात्, तथाहि–विपरीतार्थमुपस्थापयता प्रत्यक्षेणोपदर्शितं बाधितविषयमेतदनुमानमिति । अथ कार्यस्यानु-ष्णत्वे साध्ये तैजसपरमाणूनामुष्णानुष्णत्वे प्रमाणाभावात्सन्दिग्ध-व्यतिरेकित्वेन कृतकत्वस्यागमकत्वं न कालात्ययापदिष्टत्वादि-ति चेत् । नैतदेवम् । यो हि परमाणुषूष्णत्वमभ्युपगम्य तत्-कार्येनुष्णत्वं प्रसाधयेत् तं प्रति व्यतिरेकनिश्चयोपपत्तेः । न च सन्दिग्धव्यतिरेकस्यापि उष्णपक्षोपन्यासानन्तरमभिधानात् का-लात्ययापदिष्टत्वं विरुध्यते । न चायं नियमो यत्रैकं दूषणं तत्रान्य-न्नास्तीति । यथानेकविशेषणासिद्धत्वादिहेतोरिति । यच्चेदं–तत्त्वानु-पलब्धेरितरेतरवाद्यभिप्रायेणासिद्धत्वम्–इत्युक्तम् । तदसत् । उभयोः सन्दिग्धत्वात् । तथाहि–सामान्योपलम्भादिसद्भावे सति विशेषानु-पलम्भाद्वादिप्रतिवादिनोः पूर्वमुपजातः संशयस्तत्रैकः सन्दिग्धः परप्रतारणाभिप्रायेण संशयहेतुमेव धर्मिनिर्णयार्थमुपादत्ते, तथेत-रोऽपि सन्दिग्धः । तदेवमुभयोः संशयान्नान्यतरस्याप्यसिद्धतोद्भाव-ने सामर्थ्यमिति । यदि चान्यतरोपि नित्यानित्यविशेषोपलम्भं प्रमा-णेन ब्रूयात् । तदाऽसिद्धत्वमेव न प्रकरणसमत्वमिति । न च स-न्दिग्धावस्थायां विरुद्धाव्यभिचारिणः प्रयोग इति तस्माद्व्यतिरेकः । नापि विरुद्धाव्यभिचारी सम्भवतीति वक्ष्यामः । तदेवमनयोर्व्यव-च्छेदार्थमबाधितविषयत्वमसत्प्रतिपक्षितत्वं च रूपान्तरमभ्युपग-न्तव्यम्, अन्यथा हि प्रत्यवयवं वाक्यं स्यात् न पञ्चावयवम-वयवद्वयस्यैतद्व्यवच्छेदार्थपरत्वादिति । नन्वेवमपि न्यूनं लक्षण-वाक्यं, केवलान्वयिनः केवलव्यतिरेकिणश्चाव्याप्पनादिति । अ-स्ति च तयोः साध्यसाधनत्वम् । तथाच यत्र सामान्यमेव साध्यं तत्र सामान्यमेव हेतुः । यथाभिधेयो विशेषः प्रमेयत्वात् सामान्यव-दिति । विशेषाणामभिधेयत्वे साध्येऽनभिधेयस्य वस्तुनोऽसम्भवात् विपक्षाभावः । प्रमाणेन हि विपक्षमुपलभ्य तस्माद्व्यतिरेकं वचने-

नोपपाद्यतस्तत्राभिधेयत्वप्रमेयत्वयोः प्राप्तिस्तस्य सपक्षत्वमेव स्या-दिति न विपक्षाद्व्यतिरेकोऽस्त्यतोऽन्वयाव्यभिचारेणैव गमकत्वम् । तथा जीवच्छरीरं निरात्मकं न भवत्यप्राणादिमत्त्वप्रसङ्गाद्यद्यन्निरा-त्मकं तत्तदप्राणादिमद्यथा घटादि, न च तथा जीवच्छरीरम्, त-स्मान्निरात्मकं न भवतीति, सर्वस्य निरात्मकत्वाभ्युपगमाज्जीवच्छ-रीरस्य नैरात्म्यप्रतिषेधे साध्ये न सपक्षोऽस्ति । प्राणादिमत्त्वं च वि-पक्षादेवात्यन्तव्यावृत्तम् । अतो व्यतिरेकाव्यभिचारेणैव गमकत्वम् । न चैवमसाधारणम्, तस्य विपक्षादिवत्सपक्षादपि व्यावृत्तेर्व्यभिचारेणा-गमकत्वात् । अथ नैरात्म्यप्रतिषेधेनात्र सात्मकत्वं विवक्षितम्, न चा-त्मा प्रसिद्ध इत्यप्रसिद्धविशेषणः पक्षः । तन्नैरात्म्येपि समानमप्रसिद्ध-त्वादात्मनः कथं तत्प्रतिषेधः । न च कल्पनासमारोपितस्य प्रतिषेधः, वास्तवत्वेन प्रतिपादनात् । प्रत्यक्षादिप्रमाणैश्चात्मा प्रतिपादकस्य प्र-सिद्धस्तदपेक्षया नाप्रसिद्धविशेषणता पक्षदोषः । प्रतिपाद्यापेक्षया तु नैतद्दूषणम्, अप्रतिपन्नतत्त्वस्य प्रतिपाद्यत्वात् । सपक्षे त्वप्रसिद्ध-त्वं न व्यतिरेकिणो दूषणम् । तस्य व्यतिरेकाव्यभिचारेणैव गमक-त्वात् । अयं सपक्षाभाव एव सपक्षस्तस्मिन्ननुवृत्तावन्वयोपपत्तिर्व्या-वृत्ते त्वसाधारणत्वमेव । तदुक्तम्—

> निवृत्तिर्यदि तस्मिन्नहेतोः वृत्तिः किमिष्यते ।
> सापि नः प्रतिषेधोयं निवृत्तिः किं निषिध्यते ॥ इति ॥

अस्यार्थः । तस्मिन् सपक्षाभावे हेतोर्यदि निवृत्तिर्नास्ति वृत्तिः स्या-त्, तद्व्यावृत्तिरूपत्वात् । वृत्तिप्रतिषेधे तु निवृत्तिरेव स्यादिति । न च विधिप्रतिषेधव्यतिरेकेणापरः शाब्दो व्यवहारः सम्भवतीति मूकताप्रसङ्गः । तदेतदसत् । पक्षाभावस्यापि साध्यानधिकरणत्वेन विपक्षत्वात् । तस्माच्च निवृत्तिरेवाप्राणादिमत्त्वादिति हेतोः । न च कल्पनासमारोपितत्वात् पक्षादिव्यवस्थायाः कल्पिते सपक्षे हे-तोर्वृत्तावन्वयव्यतिरेकित्वं व्यावृत्तौ त्वसाधारणत्वमिति दूषणम् । वास्तवत्वात् पक्षादिव्यवस्थायाः, कल्पितत्वे तु कथं हेतुतदाभास-व्यवस्था, कल्पनायाः सर्वत्राविशेषात् । अथ घटादौ किं सात्मक-त्वव्यावृत्त्या प्राणादिमत्त्वव्यावृत्तिः उत वस्तुस्वाभाव्यादिति सन्दिग्धो व्यतिरेकः । न च घटादौ सात्मकत्वस्य सदसत्त्वे प्रमाण-मस्ति । नैतदेवम् । प्राणादिमत्त्वस्य कार्यविशेषस्याभावेन तत्का-

रणविशेषस्य सात्मकत्वस्य तत्र व्यावृत्तिप्रसिद्धेः। तथाहि—प्राणादिमति शरीरे प्राणाद्युत्पादनसमर्थात्मसम्बन्धविशेषः सात्मकत्वं साधयति । तदभावस्तु प्राणादिकार्याभावेनैव ज्ञायते घटादाविति । नन्वेवं कार्यस्य कारणपूर्वकत्वेनोपलम्भत्वादन्वयोपपत्तेः कथं केवलव्यतिरेकित्वम् । न । कार्यविशेषेण कारणविशेषे साध्येऽन्वयाभावात् । जीवच्छरीरे हि प्राणाद्युत्पादनसमर्थात्मसम्बन्धविशेषः साध्यस्तेन चान्वयाभाव एव । यस्य तु सर्वं निरात्मकमिति पक्षः स कथं घटादौ किं सात्मकत्वं व्यावृत्तं न वेति सन्देहं ब्रूयात् । नापि बुध्यादिनिवृत्तावेव प्राणादिनिवृत्तिर्घटादाविति वाच्यम् । आदिशब्देन सर्वेषामवरोधात् । तदुत्पादनसमर्थश्चात्मसम्बन्धविशेषः साध्यः तदभावे तु कथं बुद्ध्यादीनामुत्पत्तिः जीवच्छरीरे कारणाभावेन कार्यस्याभावप्रसङ्गात् । क्षणिकत्वे च सति कार्यकारणभावः पूर्वं प्रतिषिद्ध इति न बोधात् बुद्ध्यादीनामुत्पत्तिः । तदेवं प्राणादिकार्यविशेषः कारणविशेषे साध्ये व्यतिरेकाव्यभिचारेणैव गमक इति । ननु शशविषाणादिवच्छरीरं प्राणादिमत्त्वेन साध्यं स्यादिति दूषणम् । तदभावायत्तव्यावृत्तेः प्रतिपत्तुमशक्यत्वादिति । प्राणाद्युत्पत्तौ च कारणत्वाभ्युपगमेन कार्यविशेषव्यावृत्त्या यदि कारणविशेषव्यावृत्तिरिष्येत संज्ञाभेदमात्रं स्यात विपर्यये तु स न स्यात् तदभावायत्तप्रतिपत्त्यभाव इत्यलम् ।

नन्वेवं कथमनयोर्लक्षणवाक्येनावरोधः वाक्यभेदेन, तथाहि—यदनुमेयेन सम्बद्धं विपक्षाभावे च तदन्वित एव प्रसिद्धमिति केवलान्वयी । पक्षधर्मत्वे सति सपक्षाभावात्तदभाव एव नास्त्येवेति केवलव्यतिरेकी । सामान्यलक्षणं तु सति साधने साध्यस्यावश्यंभावनियमः साध्यसाधनत्वमनुमापकत्वपदेनोक्तमिति ।

लिङ्गाभासनिरूपणार्थमाह—

विपरीतमतो यत्स्यादेकेन द्वितयेन वा ।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥ इति ॥

अत इत्युक्तरूपाल्लिङ्गाद्यद्विपरीतमेकेन धर्मेण धर्मद्वितयेन, वाशब्दात्त्रिभिश्चेति तदलिङ्गं लिङ्गप्रतिरूपकमिति काश्यपोऽब्रवीत् । विरुद्धासिद्धसन्दिग्धमिति विशेषसंज्ञानिर्देशः । तत्र धर्मद्वयसद्भावेपि सन्दिग्धो न विपक्षाद्व्यावृत्त इत्येकेन धर्मेण विपरीतः । विरुद्धस्तु प·

क्षधर्मत्वसद्भावेऽपि न सपक्षे वर्तते नापि विपक्षाद्व्यावृत्त इति धर्मद्वयेन विपरीतः ।असिद्धस्त्वेकेन द्वाभ्यां त्रिभिश्च विपरीतो भवतीति। तत्र नित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वादित्येकेन विपरीतः, तथा चास्य सपक्षे घटादौ सद्भावेऽपि विपक्षाच्च सामान्यादेर्व्यावृत्तावपि न पक्षधर्मत्वमस्तीति । तथा नित्यः शब्दो अप्रमेयत्वादिति द्वितयेन विपरीतोऽ प्रमेयत्वस्य हि विपक्षादेव व्यावृत्तिर्न सपक्षे सद्भावो नापि पक्ष इति । त्रिभिश्च विपरीतो यथाऽनित्यः शब्दोऽकार्यत्वादित्यस्य हि न शब्दे पक्षे सद्भावो न सपक्षे घटादौ नापि विपक्षाद्व्यावृत्तिरिति ।

पूर्वस्य संग्रहवाक्यस्य स्पष्टार्थं विवरणमाह--यदनुमेयेनार्थेनेत्यादि । अनुमेयेन सम्बद्धमित्यस्य विवरणमनुमेयेनार्थेन परिच्छेद्यमानेन सहचरितमजहद्वृत्तीति । देशविशेषे कालविशेषे वा सर्वस्मिन्देशे सर्वस्मिंश्च काल इति । तदन्विते प्रसिद्ध इत्यस्य विवरणम्-अनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धमिति । अनुमेयः सपक्षस्तस्मिन् सर्वत्रैकदेशे वा प्रसिद्ध इत्यादि नियमः । तदभावे च नास्त्येवेत्यस्य विवरणम्-अनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेवेति । अनुमेयविपरीतोऽनुमेयधर्मरहितो विपक्षः, तस्मिन् सर्वत्रासदेव । प्रमाणत इति प्रमाणेन साध्यव्यावृत्त्या साधनव्यावृत्तिर्वाच्येत्युपदर्शयति । अनुमापक इत्यस्य विवरणम्—यदेतदुक्तरूपं लिङ्गं तदप्रसिद्धस्यानुमापकं भवतीति ।

द्वितीयस्य संग्रहवाक्यस्य विवरणम्--यत्तु यथोक्तात्त्रिरूपाल्लिङ्गादिति, अबाधितविषयत्वात्सत्प्रतिपक्षत्वसहितादेकेन धर्मेण द्वाभ्यां वा धर्माभ्यां त्रिभिश्च विपरीतं तदनुमेयस्याधिगमे कर्तव्ये लिङ्गं न भवतीति । एतदेवाह-सूत्रकारः-'अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्च' इति सूत्रितत्वोपदर्शनम् । अप्रसिद्धोऽनपदेश इति विरुद्धावरोधः, तस्य सपक्षेऽप्रसिद्धत्वात् । असन्नित्यसिद्धः, तस्य हि पक्षधर्मत्वेनासत्त्वात् । सन्दिग्धश्चानपदेश इत्यनैकान्तिकसङ्ग्रहः । कालात्ययापदिष्टप्रकरणसमयोश्चाप्रसिद्धपदेनैवावरोधः, तयोरबाधितविषयत्वासत्प्रतिपक्षत्वेनाप्रसिद्धत्वात् । समानतन्त्रन्यायेन वा सङ्ग्रहः ।

यथोक्तरूपं लिङ्गं नागृहीताविनाभावस्य गमकमित्यविनाभावस्वरूपोपदर्शनार्थम्-विधिस्तु यत्र यत्र धूम-इत्यादि वाक्यम् । विधि-

व्याप्तिरविनाभाव इति । अथ यदि सामान्ययोरविनाभावः सिद्धसाधनम्, अपास्तविशेषस्य सामान्यस्य सिद्धत्वान्नियतदेशावच्छेदेन विशेषार्थिनां प्रवृत्तिनिवृत्त्योरभावप्रसङ्गः। न च विशेषयोरविनाभावः, तेषामानन्त्येनाप्रसिद्धेस्तदाश्रयस्याविनाभावस्याप्रसिद्धेः, मनुष्यधर्माणां च सर्व एव विशेषाः प्रतिपत्तुं न शक्यन्त इति। यावतामुपलम्भस्तावत्स्वेवाविनाभावग्रहणे च नागृहीताविनाभावस्य विशेषान्तरस्योपलम्भादनुमानं स्यात्। नैतद्दूषणम्। सामान्यवतोरविनाभावग्रहणाभ्युपगमात्। यद्यप्यग्निविशेषा धूमविशेषाश्चानन्त्येनावस्थिताः, तथापि तेष्वेवावस्थितमग्नित्वं धूमत्वं च सामान्यमुपग्राहकमस्तीति तदुपग्राहकवशात् भूयोदर्शनबलादग्निधूमयोर्देशादिव्यभिचारेऽप्यव्यभिचारग्रहणम्। तथाहि—प्रातर्मध्याह्नादिभेदेन कालस्य भेदे समविषमादिभेदेन च देशभेदे धूमस्याग्निना साहचर्योपलब्धेः देशान्तरे कालान्तरे च धूमोऽग्निं विनापि भविष्यतीत्याशङ्का न स्यात्। अत एव न कुलालस्य रासभेन व्याप्तिग्रहणप्रसङ्गः, कालान्तरे च तेन विनाप्युपलम्भात्।

अन्ये तु व्याप्तिग्रहणकाले प्रतिपत्तुर्योगिन इवाशेषविषयं परिज्ञानमस्तीति ब्रुवते। अन्यथा हि सर्वो धूमोऽग्निं विना न भवतीति व्याप्तिस्मरणं न स्यात्, विवेकेन चाप्रतिभासः समानाभिव्याहारात्। यथा धान्यराशिनिक्षिप्तायां धान्यव्यक्तेरिति। तदेवं यत्र यत्रेति वीप्सार्थस्य विवक्षितत्वात् यत्र यत्र धूमस्तत्र तत्राग्निरग्न्यभावे च धूमो न भवतीत्येवं प्रसिद्धसमयस्य गृहीताविनाभावस्य प्रतिपत्तुरसन्दिग्धधूमदर्शनानन्तरं साहचर्यानुस्मरणम्—यत्र यत्राहं धूममद्राक्षं तत्र तत्राग्निरस्तीति, साहचर्यानुस्मरणाच्चानन्तरमग्निरध्यवसीयतेऽनेनेत्यग्न्यध्यवसायः परामर्शज्ञानम्। तस्माच्चाग्निप्रतिपत्तिरिति।

अन्ये तु परामर्शज्ञानस्याभावमेव ब्रुवते। तच्चासत्। अविनाभावसम्बन्धस्मरणस्यानियतत्वान्नियतप्रदेशेऽग्निप्रतिपत्तिर्न स्यात्। उपनयवैयर्थ्यं चोपनयार्थस्यानभ्युपगमात्। तस्माद्व्युत्पत्त्योपचारेण वाऽग्न्यध्यवसायः परामर्शज्ञानं व्याख्येयमिति।

अन्ये तु कार्यकारणभावात् स्वभावाच्च नियामकादविनाभावग्रहणमिति मन्यन्ते। तच्चासत्। कार्यकारणभावेऽप्यवश्यं भूयोदर्शन-

बलादेवाविनाभावग्रहणमिति वाच्यम् । अन्यथा हि देशान्तरे काला-न्तरेवाऽग्निं विनापि धूमो भविष्यतीत्याशङ्का स्यात् । अथाग्निधूमयोः कार्यकारणभावावगतौ कथमग्निं विना धूमस्य सम्भव इत्याशङ्का, तस्य निर्हेतुकत्वप्रतिषेधेनावश्यं स्वकारणादेवोत्पत्तेरिति । सत्यमे-तत् । यदि नाम सर्वो धूमोऽग्निकार्य इति ज्ञानमपि भूयोदर्शनं विना न भवतीति तदभ्युपगन्तव्यम् । न चाग्नेरसाधारणं कार्यं धूमस्तस्य धूमान्तरादप्युत्पत्त्यभ्युपगमात् । तथाहि—गोपालघुटिकादिषु चिरनि-वृत्ते वह्नौ धूमक्षणादेव धूमोत्पत्तिरिति कथमतत्कार्यस्य धूमस्योपल-ब्धेरग्न्यनुमानम् । अथाग्निकार्यस्योपलम्भादनुमानमिति चेत् । न । अग्निप्रतिपत्तिं विना धूमे तज्जन्यत्वाविनिश्चयस्यासम्भवात्, प्रतिपत्तौ वा किमनुमानेन । धूमस्वरूपप्रतिपत्तिवच्चागृहीतानलस्य नारिकेरद्वी-पवासिनो धूमेऽग्निजन्यत्वप्रतिपत्तिर्दृष्टा । तथाप्रयोगानुपपत्तेश्च । त-थाहि—पर्वतस्याग्निमत्त्वे साध्ये कार्यत्वमनैकान्तिकमेव । अथ धूम-स्याग्निमत्त्वं साध्येत, तत्रापि कार्यत्वमनैकान्तिकमेव । धूमत्वे सति कार्यत्वं हेतुः, तर्हि धूमत्वमेव समर्थमिति व्यर्थविशेष्यता हेतोर्दोषः । न चाग्निकार्यत्वं धूमस्य अग्निसम्बन्धात्, पूर्वद्रव्यनिवृत्तावुत्पन्नपाक-जैर्द्व्यणुकादिप्रक्रमेणोत्पत्तेरित्यलम् ।

तथा वृक्षत्वशिंशपात्वयोर्न तादात्म्यप्रतिबन्धः, साध्यसाधनभा-वानुपपत्तिप्रसङ्गात् । तथाहि—धर्मिण्युपलब्धे तत्तादात्म्यादुभयोर-प्युपलम्भे कथं साध्यसाधनभावः । तदुपलम्भेऽप्यनुपलब्धौ तु ता-दात्म्यं न स्यादिति । अथ सामान्यविशेषवत्त्वादनुमानस्य समारोप-व्यावृत्त्योर्गम्यगमकभावः । तत्र च तादात्म्यतदुत्पत्त्योरसम्भव एव । तादात्म्याभ्युपगमेऽपि न साध्यसाधनत्वमेकताप्रसङ्गादिति । तथो-भयोस्तादात्म्याविशेषेऽपि शिंशपात्वेन वृक्षस्य प्रतिपत्तिवत् वृक्षत्वेन शिंशपात्वप्रतिपत्तिरपि स्यात् । न च तादात्म्यतदुत्पत्तिलक्षणप्रति-बन्धाभ्युपगमे रूपदर्शनात् स्पर्शानुमानम्, उदयादस्तमयप्रतिपत्तिः कृतिकोदयाच्च रोहिण्यनुमानं न स्यात्, तादात्म्यतदुत्पत्त्यभावात् । अथैकसामग्र्यधीनतया रूपात्स्पर्शानुमानम् । तदसत् । समानक्षणयो-र्गम्यगमकभावोपलब्धेः । तथाहि—रूपक्षणात् समानकालः स्पर्शोऽ-नुमीयते, न पूर्वः । तत्र चैकसामग्र्यधीनत्वासम्भव एव । न च रूपस्पर्शयोः परस्परोत्पत्तौ कारणत्वे प्रमाणमस्ति, इतरान्वयस्येत-

रत्रानुपलब्धेरित्यलमतिप्रसङ्गेन ।

एवं सर्वत्र देशकालाविनाभूतमितरस्य साध्यस्य लिङ्गमित्युपसंहारः । देशाविनाभूतं यथा केदारागिरिमारोहतां कलकलाशब्दश्रवणादशनिपातानुमानमिति । अथास्य सूत्रेणासङ्ग्रहः । तथाच सूत्रम्–'अस्येदं कार्यं करणं संयोगि समवायि विरोधि चेति' लैङ्गिकम् । न च कलकलाशब्दोऽशनिपातकार्यः, तदन्तरेणापि स्वकारणादेवोत्पत्तेः । नापि कारणमशनिपातस्य, प्रतिबन्धकाभावविशिष्टगुरुत्वकार्यत्वात् । उभयोश्चाद्रव्यत्वान्न संयोगित्वम् । परस्परमेकस्मिंश्चार्थे समवायाभावात् स्वात्मन्यनारम्भकत्वान्न समवायित्वम् । परस्परविरोधाभावाच्चाविरोधित्वमित्यर्थान्तरत्वम् । अथ कार्यादेः कथं लिङ्गत्वम्? अविनाभूतत्वात्, तथाहि—कार्यं कारणपूर्वकत्वेनोपलम्भादुपलभ्यमानं सत् गमकम् । यथाहि विशिष्टनदीपूरोपलम्भादुपरिष्टाद्दृष्टो देव इति । तथाच बहुलस्वरूपफेनफेनिलपर्णकाष्ठादिवहनविशिष्टस्य नदीपूरस्य वृष्टिकार्यत्वेन पूर्वमुपलम्भात् पुनस्तदुपलम्भे सति युक्तमनुमानम्–अयं नदीपूरो वृष्टिकार्यो विशिष्टनदीपूरत्वात् पूर्वोपलब्धनदीपूरवदिति । पूरस्तूभयतटव्यापकोदकसंयोगः । स पारम्पर्येण वृष्टिकार्य इति कारणमपि कार्यजनकत्वेन पूर्वमुपलब्धेरुपलभ्यमानं तल्लिङ्गम् । यथा च विशिष्टमेघोन्नतिर्वर्षकर्मण इति । अथ कारणस्यावश्यं कार्यजनकत्वेनानुपलम्भात् कार्याणां चानियतात् कारणादुत्पत्तेर्व्यभिचारः । तथाहि–मेघोन्नतिसद्भावेऽप्येकदा वृष्टिर्न दृष्टा । कार्यं चानियतात् कारणादुत्पद्यमानं दृष्टम् । यथा वृश्चिकाद्वृश्चिको जायते गोमयात्सर्पाच्चेति । एवमन्यत्राप्यनियतं कारणमभ्यूह्यम् इति कथं कार्यात् कारणविशेषप्रतिपत्तिः कारणाच्च कार्यविशेषस्येति । नैतदेवम् । कारणविशेषस्य कार्यविशेषगमकत्वमित्यभ्युपगमात् । यस्तु विद्यमानमपि विशेषं नावबुध्यते तस्यापराधो नानुमानस्येत्यदोषः । तथा धूमोऽग्नेः संयोगी । अथ संयोगस्योभयनिष्ठत्वाविशेषे कथमेकं नियमेन साधनमितरच्च साध्यमिति व्यवस्था । तदविनाभावेपि समानम्, तस्याप्युभयनिष्ठत्वात् कथमेषा व्यवस्था स्यात् । अथ यस्योपलम्भादनुमेये प्रतिपत्तिस्तदेव साधनं नान्यदिति चेत् । संयोगित्वेपि समानमेतत् । अविनाभूतस्यावान्तरविशेषनिरूपणात् । समवायी चोष्णस्प-

र्शो वारिस्थं तेजो गमयतीति । विरोधी च यथाहिर्विस्फूर्जनविशिष्टो नकुलादेर्लिङ्गमिति ।

अथ सूत्रे कार्यादिग्रहणमुदाहरणार्थमवधारणार्थं वेत्याह--शास्त्रे कार्यादिग्रहणं निदर्शनार्थं कृतं नावधारणार्थम् । कथमेतत् ज्ञायते ? व्यतिरेकदर्शनात् । तद्यथा अध्वर्युरो श्रावयन् व्यवहितस्य होतुर्लिङ्गमिति । न च होतुरोश्रावयेति शब्दः कारणं कार्यं वा, अन्वयव्यतिरेकाभावात् । तथा च होतारं विनैवोपपत्तिर्होतुश्चानेन विनापीति संयोगादिष्वप्यन्तर्भावानुपपत्तिः । स च यागभूमावेवास्याविनाभावः, न च देशान्तर इति । तथा चायमध्वर्युरपि दूरदेशेन होत्रा तद्वानोश्रावयेतिशब्दकर्तृत्वात् पूर्वोपलब्धाध्वर्युवत् । चन्द्रोदयः समुद्रवृद्धेः कुमुदविकासस्य च लिङ्गम् । समुद्रस्य च वृद्धिरवयवोपचयः, स च स्वावयवेभ्यो निष्पद्यते न चन्द्रोदयात् । कुमुदविकासोऽप्यवयवानामारब्धकार्याणां परस्परं विभागो द्रव्यारम्भकसंयोगाविरोधिक्रियाकार्य इति । कारणं चात्राभिव्यंग्यस्य जनकं विवक्षितं न प्रतिपत्तेः, सर्वेषां कारणभाव एवान्तर्भावप्रसङ्गात् । शरदि जलप्रसादश्चागस्त्योदयस्य लिङ्गमस्यापि तत्कार्यादिष्वन्तर्भावः। शरदि जलप्रसादोऽगस्त्योदयवान् जलप्रसादत्वात् पूर्वोपलब्धैवंविधजलप्रसादवत् । इत्येवमादीत्यादिपदेनोदयादिरस्तादेर्लिङ्गमित्यूह्यम् । अथ कथमेषां सूत्रेण सङ्ग्रहः । तदाह – तत्सर्वमस्येदमिति सम्बन्धमात्रवचनात्सिद्धम् । तथाहि–इदमस्य गमकमिदमस्य गम्यमिति सामान्येन सर्वलिङ्गपरिग्रहः । विशेषापेक्षया त्विदमस्य कार्यं कारणमित्यादि योज्यम् ।

अन्ये त्ववधारणार्थमेतत्सूत्रमिति मन्यन्ते । शास्त्रे कार्यादिग्रहणं निदर्शनार्थमिति च वाक्यमन्यथा व्याख्यायते । तथाहि–तदुक्तं परैर्व्यतिरेकदर्शनाच्छास्त्रे कार्यादिग्रहणं निदर्शनार्थं कृतमिति ज्ञायत इत्येतन्न, किन्त्ववधारणार्थं सर्वेषामत्रैवान्तर्भावेन व्यतिरेकदर्शनस्यासिद्धत्वात् । तथा च होतरि सन्निहितेऽध्वर्युरो श्रावयेति शब्दमुच्चारयति यागभूमौ न तेन विनापीति कथं न तस्य कारणत्वम् । एवं चन्द्रोदयोऽपि समुद्रवृद्धेः कारणमन्वयव्यतिरेकवत्त्वात् । तथा च तेन सता जलनिधेर्वृद्धिर्न तदभाव इति कार्येण मेघपटलान्तरितश्चन्द्रोऽनुमीयते । गृहीतव्याप्तिकस्य देशान्तरे

पि चन्द्रोदयोपलम्भादम्भोनिधेर्वृद्ध्यनुमानम्। एवं कुमुदविकासेपीति। यदि वा रश्मिद्वारेण संयोगित्वमेव। तथाऽगस्त्योदयोपि जलप्रसादस्य कारणम्। संयोगि वा रश्मिद्वारेणेति। पक्षद्वये च गुणदोषनिरूपणं स्वत एव कार्यं परीक्षकैरिति।

भेदमाह—तदनुमानं द्विविधम्। केन रूपेण? दृष्टं सामान्यतो दृष्टं चेति।

तत्र दृष्टं प्रसिद्धसाध्ययोर्जात्यभेदेऽनुमानमिति। प्रसिद्धश्च साध्यश्चेति प्रसिद्धसाध्यौ तयोः प्रसिद्धसाध्ययोर्दृष्टान्तदार्ष्टान्तिकयोर्जात्यभेदे सति यदनुमानं तद्दृष्टम्। यथाहि–साध्यधर्मो दृष्टान्तधर्मिणि प्रत्यक्षाहः तथा दार्ष्टान्तिकेऽपीति साध्यधर्माभेदः, नतु जातेः सामान्यस्य. तथाहि–ब्राह्मणकर्तृकं चित्रादिकार्यं प्रतिपाद्य पुनः क्षत्रियादिकर्तृकस्याप्युपलम्भात् केनचित् कर्त्रा सम्पादितमेतत् चित्रादिकार्यत्वात् पूर्वोपलब्धैवंविधचित्रादिकार्यवदित्यनुमानम् जातेः सामान्यस्य भेदेपि दृष्टमेव, साध्यधर्मस्यानुमानात्पूर्वं ऊर्ध्वं च प्रत्यक्षग्रहणार्थत्वात्।

अन्येतु प्रसिद्धौ च तौ साध्यौ चेति प्रसिद्धसाध्याविति समासं कुर्वते। तत्र दृष्टान्तधर्मी प्रसिद्धत्वात्साध्यो न भवति दार्ष्टान्तिकश्च न प्रसिद्ध इति कथमेतत्। उपचारस्य विवक्षतत्वाददोषः। तथाहि–दृष्टान्तधर्मा साध्यसमानाधर्माधिकरणत्वादुपचारेण साध्यो दार्ष्टान्तिकस्त्वनुमानादूर्ध्वं प्रसिद्धिं यास्यतीति पूर्वमपि प्रसिद्धः। शेषं पूर्ववदिति। अस्योदाहरणम्—यथा गव्येव सास्नामुपलभ्य पुनर्देशान्तरे गोपिण्डव्यवधानेऽपि सास्नादर्शनात् गवि प्रतिपत्तिः–गौरियं सास्नावत्त्वात् पूर्वोपलब्धसास्नादिवत्–इति।

सामान्यतोदृष्टं च प्रसिद्धसाध्ययोर्दृष्टान्तदार्ष्टान्तिकयोरत्यन्तं सर्वथा जातिभेदे साध्यधर्मभेदेऽनुमानम्। तथाच साध्यधर्मोनुमानात्पूर्वमूर्ध्वं च सर्वदा अप्रसिद्ध एवेति। अथ साध्यधर्मस्य भेदेऽविनाभावस्यैवाप्रसिद्धेः कथमनुमानमित्याह—लिङ्गानुमेयधर्मसामान्यानुवृत्तित इति। लिङ्गं चानुमेयधर्मश्च तयोः सामान्येनानुवृत्तिः, यत्र यत्रेदं साधनसामान्यं तत्र तत्रेदं साध्यसामान्यमिति, तद्ग्रहणेऽनुमानं प्रवर्त्तत एव। यथा कर्षकवणिग्राजपुरुषाणां प्रवृत्तेरभिप्रेतफलत्वेन फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि, किंविशिष्टानाम्?

दृष्टं भिक्षालाभादिकं प्रयोजनमनुद्दिश्य प्रवर्त्तमानानामभिप्रेतफलानुमानम् । तथाहि--वर्णाश्रमिणां च प्रवृत्तिरभिप्रेतफलेन फलवती प्रेक्षापूर्वकारिप्रवृत्तित्वात् कर्षकादिप्रवृत्तिवत् । न च दृष्टप्रयोजनापेक्षया सिद्धसाधनमिति दूषणम् । दृष्टं प्रयोजनमनुद्दिश्येति पक्षविशेषणेन निरस्तत्वात् । ये तु दृष्टमेवोद्दिश्य प्रवर्त्तन्ते न ते पक्षीक्रियन्त इति । नाप्यदृष्टफलेन फलवत्त्वं साध्यते, येन दृष्टान्तः साध्यविकलो हेतुश्च विरुद्धः स्यात् । किं तर्हि ? सामान्येनाभिप्रेतफलेन फलवत्त्वं साध्यते, तच्च कर्षकादिप्रवृत्तावस्त्येवेति न दृष्टान्तस्य साध्यविकलत्वं विरुद्धत्वं वा हेतोर्दोषः । सर्वानुमानेषु समानं च विशेषविरुद्धानुमानमित्यनुमानमात्रस्योच्छेदप्रसङ्गः । अथेष्यत एवानुमानस्याप्रामाण्यम् । तथा च सामान्ये सिद्धसाधनं विशेषेऽनुगमाभावः । धर्मिणोश्च समुदाये साध्ये न हेतोः पक्षधर्मत्वम् न चान्वयः समुदायस्यान्यत्रावृत्तेः । अथ समुदायैकदेशेऽपि वर्त्तमानः समुदाये वर्त्तते इत्युपचर्यते । तर्हि प्रमाणस्य गौणत्वादनुमानार्थनिश्चयो दुर्लभः । तथाहि–प्रमाणं प्रत्यक्षं गौणमनुमानं वोपचरितपक्षधर्मापेक्षित्वात् । गौणमित्यप्रमाणम् । धर्मस्यापि साध्यत्वेऽन्वयसद्भावेपि न पक्षधर्मत्वं समुदायस्यान्यत्र । अथ प्रतिपाद्यमानधर्मविशिष्टो धर्मी साध्यस्तेन चान्वयाभाव एवेति सर्वमनुमानमप्रमाणम् । तदेतदसत् । प्रतिपाद्यधर्मविशिष्टस्य धर्मिणः साध्यत्वे पक्षधर्मत्वोपपत्तेः । अन्वयस्तु साध्यसमानधर्मेण नह्येकत्र देशे हेतोर्वृत्तिः,व्यतिरेकस्तु तदभावे व्यावृत्तिरिति । लिङ्गोपलम्भाच्च साध्यधर्मिणि प्रतिपत्तेर्दृष्टत्वादित्थम्भूतान्वयपरिकल्पना क्रियते । अनभ्युपगमे वा व्यभिचारिज्ञानमेव न स्यात् तत्तु दृष्टमिति विशेषः । विरुद्धेन तु विशेषप्रतिषेधे विशेषान्तरोपगमः स्यात् । समस्तविशेषप्रतिषेधे तु तन्नियतस्य सामान्यस्याप्यसिद्धिः । साधनसामान्यव्यापकं वाऽवश्यं सामान्यं सिध्यतीति । अतः सामान्यस्यैवाक्षिप्तविशेषस्यैवानुमानात्प्रसिद्धेर्वर्णाश्रमिणां फलवत्त्वमदृष्टं विशेषातीतमेव सिध्यतीति ।

शिष्यव्युत्पादनाय प्रमाणफलविभागं दर्शयति–तत्र लिङ्गदर्शनं प्रमाणज्ञानं अनुमेयं फलं प्रमेयोऽग्निः प्रमातात्मेति । ननु लिङ्गदर्शनं व्यधिकरणत्वात् कथमग्निज्ञानोत्पत्तौ प्रमाणम्, व्यापारापेक्षया तद्विषयत्वात् । यथाहि धूमज्ञानं धूमविषयमात्मलाभा-

पेक्षया। तथाग्निप्रतिपत्तौ व्यापारापेक्षयाऽग्निविषयमपीति । स्वावयवसमवेतस्य चक्षुषः समुत्पादे व्यापारापेक्षया रूपविषयत्वमिवेति । नचैवमेकस्मिन्विषये व्यापारापेक्षया करणादिव्यवस्थाऽनुपपत्तिर्विभिन्नलक्षणयोगित्वेन तदभावात्, तथाहि-प्रमाधारत्वं प्रमातुर्लक्षणमुक्तम्, एवं प्रमितेर्विषयः प्रमेयं, तद्व्यतिरिक्तं च प्रमाजनकं प्रमाणं, तत्साध्यं च फलमित्येवं लक्षणभेदादेषां भेद इति ।

अथवेति प्रमाणफलविभागे प्रकारान्तरमाह । अग्निज्ञानमेव प्रमाणं प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनमिति । अग्निज्ञाने सत्यविनाभावसम्बन्धस्मरणात परामर्शज्ञानात् सुखसाधनत्वावबोधे सत्युपादेयज्ञानं दुःखसाधनत्वाबोधे च हेयज्ञानं यस्य नेदं सुखसाधनं नापि दुःखसाधनमित्येवम्बोधः तस्योपेक्षणीयज्ञानमिति । अग्निज्ञानफलत्वं चोपादेयादिज्ञानस्य पारम्पर्येणेति पूर्ववद्वाच्यम। इत्येतत्स्वनिश्चयार्थमनुमानमित्युपसंहारः परार्थानुमानसंसूचकः ॥

अथेदानीं प्रमाणविभागस्य न्यूनतापरिहाराय तत्सामान्य लक्षणस्य व्यभिचारपरिहारार्थं शब्दादीनामप्यनुमानेऽन्तर्भाव इत्यादिप्रकरणम् ।

(भा०)शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात् ।यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति । श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्षः, तद्वचनादाम्नायप्रामाण्यम्। लिङ्गाच्चानित्यो-बुद्धिपूर्वा वाक्यकृतिर्वेदे 'बुद्धिपूर्वो ददातिः'-इत्युक्तत्वात् ॥

प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव ॥

आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव ॥

दर्शनार्थादर्थापत्तिर्विरोध्येव श्रवणादनुमितानुमानम् ।

**सम्भवोऽप्यविनाभावित्वादनुमानमेव ॥**

**अभावोऽप्यनुमानमेव । यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम्, एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम ॥**

**तथैवैतिह्यमप्यवितथमाप्तोपदेश एवेति ॥**

**पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम् । पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्वनिश्चितार्थप्रतिपादनं परार्थानुमानं विज्ञेयम् ॥**

( व्यो० ) ननु पूर्वमप्येषामनुमानेऽन्तर्भावस्यानुक्तत्वादपिशब्दवैयर्थ्यम् । न । अनुमानपदेनाभिसम्बन्धात् । न परं प्रत्यक्ष एवानुमानेऽप्यन्तर्भाव इति । प्रमाणविभागश्च विद्याविभागपरेणापि वाक्येन पूर्वमुपदर्शित एव । तत्र च शब्दादीनामपि प्रमाणानां सद्भावादनुपपन्नोऽयमित्याशङ्का तद्व्युदासार्थमन्तर्भावप्रकरणम् । तथा शब्दादेः कारकजातस्यानुमानसामग्र्यामन्तर्भावे तत्फलस्यापि फलेऽन्तर्भावो ज्ञात एव । तत्र शब्द आदौ येषां तानि तथोक्तानि अतस्तेषामनुमानेऽन्तर्भावो लक्षणैक्यमिति तद्गुणसंविज्ञानबहुव्रीह्यभ्युपगमे शब्दस्याप्यनुमानेऽन्तर्भावः । अतद्गुणसंविज्ञाने शब्दं विना अपरेषामिति । अन्तर्भावव्यवहारे च समानविधित्वात्समानलक्षणयोगित्वादिति हेतूपन्यासः ? कथं साध्यान्न विशिष्यते । लक्षणैकत्वस्य तद्व्यवहारादन्यत्वात् । समानो विधिरुपायो लक्षणं येषां तानि तथोक्तानि तेषा भावस्तत्त्वं तस्मादिति । तदेवाह–यथा लिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति । यथाहि गृहीतसम्बन्धस्य लिङ्गदर्शनानन्तरमविनाभावसम्बन्धस्मरणन्ताभ्यामतीन्द्रियेऽर्थे परिच्छेद्ये भवत्यनुमानमनुमीयतेऽनेनेति परामर्शज्ञानमेवोपचारेण व्युत्पत्त्या वा तद्विवक्षितम् । एवं शब्दादिभ्योपीति दार्ष्टान्तिकव्याख्यानम् ।

अन्ये तु परामर्शज्ञानस्यासत्त्वमेवेति मन्यन्ते । तच्चासत् । अविनाभावसम्बन्धस्मरणस्यानियतत्वान्नियतदेशे प्रतिप्रत्तिर्न स्यात्,

उपनयवैयर्थ्यं चेत्युक्तमतः पूर्वमेव व्याख्यम्। अत्र तद्गुणसंविज्ञानपक्षे शब्दस्याप्यनुमानेऽन्तर्भावः। तथाच शब्दश्रवणात् समयानुस्मरणे सति परामर्शज्ञानं तस्मात्परोक्षार्थप्रतिपत्तिरिति। अयं गोशब्दः ककुदादिमदर्थवान् गोशब्दत्वात् पूर्वोपलब्धैवंविधगोशब्दवदिति, सम्बन्धावगमेनार्थप्रतिपादकत्वाच्च धूमवत्। तदेतदसत्। गोशब्दस्य ककुदादिमदर्थवत्तायाः प्रतिपादयितुमशक्यत्वात्, तथाहि—शब्दस्यार्थेनान्यसम्बन्धाभावात् वाच्यवाचकत्वेनार्थप्रतिपादकत्वे साध्ये गोशब्दत्वमहेतुः, प्रतिपादकत्वस्य प्रतिपत्त्यवसेयत्वात्स्वाभाविकसम्बन्धानुपपत्तेश्च। धूमो हि स्वाभाविकसम्बन्धेन सर्वप्राणभृतामनुमेयार्थप्रतिपादकः। नचैवं शब्दः, पुरुषेच्छासम्पादितसमयापेक्षस्यार्थप्रतिपादकत्वात्। स्वाभाविकसम्बन्धे हि विनापि सङ्केतं म्लेच्छादिशब्दश्रवणादर्थप्रतिपत्तिः स्यात्। सङ्केतापेक्षस्य त्वर्थप्रतिपादकत्वे स एवास्त्वलं नित्यसम्बन्धेनेति। न च नित्यसम्बन्धाभावेऽतिप्रसङ्गः, नैमित्तिकशब्दानां द्रव्यत्वादिनिमित्तसद्भावे सत्येव सङ्केतात्, यादृच्छिकशब्दानां तु पुरुषेच्छाविधानादिति। यत्र च विशिष्टानुपूर्वीवत्त्वसद्भावस्तदेव नियमेन वाचकम् इतरच्च वाच्यमिति व्यवस्था सङ्केतज्ञानस्योभयनिष्ठत्वाविशेषादपीति। सङ्केतस्तु शब्दाद्वृद्धव्यवहारतश्च प्रतीयते। तथाहि—इदमस्य वाचकमिदमस्य वाच्यमिति वाक्यात्सङ्केतप्रतिपत्तिः वृद्धव्यवहारात्। यथा देवदत्त गामभ्याज शुक्लां दण्डेनेति प्रयोगाद्व्युत्पन्नोऽन्वयव्यतिरेकाभ्यां देवदत्तादिशब्देषु सङ्केतं प्रतिपद्यते। वृद्धव्यवहर्तॄणामपि सङ्केतप्रतिपत्तिरन्यतो व्यवहारादित्यनादित्वं परिहारः। यदि वादिपुरुषः साक्षाद्द्रष्टा केषांचित्सङ्केतकर्ताऽस्तीति। वाक्यरूपस्तु शब्दोऽर्थप्रतिपत्तौ समयमपि नापेक्षत इति सम्बन्धबलेनार्थप्रतिपादकत्वमसिद्धम। न च शब्दस्यानुमानत्वमेव निषिध्यते। विवक्षाकाशाधिगमे लिङ्गत्वात्। यथा ह्याकाशाधिगमे सर्वः शब्दोऽनुमानं विवक्षाकार्यस्तु विवक्षाधिगमेपीति। न च शब्दज्ञानवल्लैङ्गिकज्ञानमाप्तोक्तत्वमपेक्षते। तथाहि—शाब्दज्ञाने किमिदं सम्यक् मिथ्या वेति संशयोत्पत्तावाप्तोक्तत्वमनाप्तोक्तत्वं चान्वीक्षते लैङ्गिकन्तु पक्षधर्मत्वादिकमिति व्यतिरेकः। तदाह—श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्ष इति। न च परं लौकिकः शब्दो वक्तृप्रामाण्यम-

पेक्षते । श्रुतिस्मृतिलक्षणेऽपीति ।

ननु वक्तृप्रामाण्येनाम्नायप्रामाण्याभ्युपगमे बहूनामन्योन्याश्रयत्वं स्यात् । तथाहि—अर्थप्राप्त्याऽऽप्तोक्तत्वं शब्दे निश्चीयते निश्चयाच्चार्थावबोधे सति प्रवर्त्तमानस्यार्थप्राप्तिरिति । तथा पौरुषेये वचसि सत्यासत्यत्वोपलब्धेर्वेदेऽपि पुरुषानुप्रवेशे तदाशङ्कायामप्रामाण्यमेव स्यात् । न च साक्षादतीन्द्रियार्थद्रष्टा पुरुषः सम्भवतीति कथं तद्वाचकानि वचांसि तत्पूर्वकानि इति । यदि वान्यस्मात् वेदवाक्यादर्थं प्रतिपद्य वचनरचनां कुर्यात्तस्यापि नित्यत्वे न किञ्चित् बाधितं स्यात् । अनित्यत्वे तु तत्कर्तुरप्यन्यस्माद्वाक्यादर्थावबोध इत्यनवस्था स्यात् । न चानित्यत्वं वेदवाक्यानां प्रमाणप्रसिद्धमिति कथं वक्तृविशेषापेक्षं प्रामाण्यम् । अर्थप्रतिपत्तौ च शब्दस्य स्वाभिधाशक्तिबलेनैव व्यापारो नाप्तोक्तत्वमपेक्षमाणस्येति । सा च तस्य स्वात्मभूतैव न पश्चात् परेण सम्पाद्यत इति स्वत एव प्रामाण्यम् । न चाप्तोक्तत्वं शक्यते प्रतिपत्तुम्, प्रतिपक्षादेरविषयत्वात् अप्रामाण्यं तु दुष्टपुरुषप्रणीतत्वापेक्षमिति परतः । तथा सर्वप्रमाणानामपि प्रामाण्ये न परापेक्षिता सम्भवति, स्वकारणेभ्योऽर्थावबोधस्वरूपाणामुत्पत्तेः । यदि चाविद्यमानमर्थपरिच्छेदकत्वं परिनिष्पन्ने विज्ञाने कारकान्तरादुत्पद्येत, प्रतिपद्येमहि परतः प्रामाण्यम, न चैतदस्तीत्याह—

> स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम् ।
> नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥

न च ज्ञानस्यार्थपरिच्छेदकत्वं कारणगुणपूर्वकम् इन्द्रियेषु तदभावात्, तदाह—

> व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ।
> प्रमाणेऽपि तथा माभूदिति जन्म विवक्ष्यते ॥

यथाहीन्द्रियाणां जन्मव्यतिरेकेणापरो व्यापारो, नैवं ज्ञानस्य अनन्तरमेव फलसम्पादकत्वात् । दृष्टं च परेणापि विशेषणादिज्ञानस्य विशेष्यादिज्ञानजन्मनि प्रामाण्यमिति । अथोपजातमपि ज्ञानं न कारकपरिशुद्धेर्बोधं विनार्थपरिच्छेदकत्वभाक्, तर्हि तत्रापि कारकपरिशुद्धिग्रहणं वाच्यमित्यनवस्था । तदाह—

> जातेपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।

यावत् कारणशुद्धत्वं न प्रमाणान्तरात् गतम् ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥
तस्यापि कारणे शुद्धे तज्ज्ञानस्य प्रमाणता ।
तस्याप्येवमितीत्थं च न क्वचिद्व्यवतिष्ठते ॥

अथ विद्यमानमपि प्रमाणस्य प्रामाण्यं न प्रमाणान्तरसम्वादं विना प्रमाणव्यवहारकारणम्, तर्हि प्रमाणपरम्परायामुपक्षीणशक्तेः विवक्षितज्ञाने प्रमाणव्यवहारो न स्यात् । तदाह—

सम्मत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।
प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥

यदि च कस्यचित् स्वत एव प्रामाण्यमिष्येत परमाद्यस्यैवाऽस्त्वित्याह—

कस्यचित्तु यदिष्येत स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥

प्रथमोत्तरयोः परस्परापेक्षं प्रामाण्यमित्यभ्युपगमे चेतरेतराश्रयत्वं स्यात् । अतः स्वत एव प्रामाण्यमप्रामाण्यं तु परतः । तथाहि—लौकिकानामेव शब्दानामप्रामाण्यम्, पुरुषदोषानुप्रवेशात् ।वैदिकानां तु तदभावादप्रामाण्यशङ्कैव नास्तीति । अथेन्द्रियाणां काचकामलादिदोषवशादप्रामाण्यं न स्वरूपतः, तथाहि—काचकामलादिदोषसद्भावे सति मिथ्याज्ञानजनकत्वं न तदभाव इति । ज्ञप्तौ चावबोधकत्वेन मिथ्यामतेरौत्सर्गिकमानत्वं न निवृत्तमिति बाधकप्रत्ययान्मिथ्यात्वावगतौ व्यावर्त्तते । न चास्मत्पक्षे शुक्तिकाज्ञानेनापि शुक्तिकाज्ञानस्य बाधायामनवस्था कारकशुद्धिग्रहणपरम्परा वेति वाच्यम् । अवबोधकत्वेनौत्सर्गिकस्य प्रमाणत्वस्य दोषादर्शनमात्रेणैवावस्थानात् । तदाह—

यदा स्वतः प्रमाणत्वं तदाऽन्यन्नैव मृग्यते ।
निवर्त्तते च मिथ्यात्वं दोषाज्ञानादयत्नतः ॥
दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका ।
एवं त्रिचतुरज्ञानं जन्मनो नाधिका मतिः ॥

इत्यनवस्थापरिहारः ॥

तदेतत्सर्वमविदितार्थम् । सर्वप्रमाणानामुत्पत्तौ ज्ञप्तौ च परापेक्षितोपलब्धेः । तथा ह्याप्तोक्तत्वमपेक्षमाणः शब्दोऽर्थे सम्यक ज्ञान-

मुपजनयति न तदन्तरेणेति दृष्टम् । यच्च बहूनामन्योन्याश्रयत्वमुक्तम् । तन्न युक्तम् । आप्तोक्तत्वस्यागृह्यमाणस्यैव शब्दसहकारित्वाभ्युपगमात् । अर्थप्राप्तौ च प्रमाणान्तरेण पश्चात्तद्ग्रहणमिष्यत एव । तथाहि—लौकिकशब्दानामर्थप्राप्त्याऽऽप्तोक्तत्वं निश्चीयते । प्रत्यक्षेणापि गृह्यत इत्यन्ये । तथाच श्रोत्रव्यापाराद्वाक्यश्रवणे सति चाणक्योक्तं कालिदासोक्तं चैतदित्यबाध्यमानः प्रत्ययो दृष्टः । वैदिकवाक्यानां तु प्रधानार्थेषु अविसम्वादादाप्तोक्तत्वनिश्चयः ।यदि पौरुषेये वचसि द्वैविध्योपलब्धेर्वेदेऽपि पुरुषानुप्रवेशे अप्रामाण्याशङ्का स्यादिति दूषणम् । तन्न । तत्कर्तुर्दोषाभावात् । तथाहि—यस्य रागादिदोषोऽस्ति तद्वचनमेवाप्रमाणमित्युपलब्धम् । वेदकर्तुश्च तत्सद्भावे प्रमाणाभावः । साक्षादतीन्द्रियार्थद्रष्टा पुरुषः सम्भवतीत्युक्तमधस्तात् । अतस्तद्वचनादाम्नायस्य वेदराशेः प्रामाण्यमिति सूत्रकारेणोक्तम् ।

अथ शब्दस्यानित्यत्वे सत्याप्तोक्तत्वेन प्रामाण्यं स्यात्, तत्तु नास्तीत्याशङ्क्याह—लिङ्गाच्चानित्य इति । परं प्रत्यक्षेणोच्चारणात् प्रागूर्ध्वं चानुपलम्भादनित्यः शब्द इति प्रतीयते, लिङ्गाच्चेति । तत्तु वक्ष्यामः शब्दपरीक्षायाम् । वेदानां चानित्यत्वेऽनुमानम्—अनित्यानि वेदवाक्यानि वाक्यत्वादुभयाभिमतवाक्यवत् । तथा बुद्धिपूर्वा वाक्यकृतिर्वाक्यरचना वेदे तद्रचनात्वात् उभयाभिमतवाक्यरचनावत् । यच्चेदं वेदरचनायाः सर्वदा तथात्वोपलम्भादिति वैधर्म्येण प्रत्यवस्थानम् । तत्सर्वानुमानेषु समानमिति । एवं वेदे बुद्धिपूर्वो ददातिशब्दो ददातीत्युक्तत्वादुभयाभिमतददातीतिशब्दवत् । या चेयं पुरुषानुप्रवेशे सत्यप्रामाण्याशङ्का सा नित्यत्वेपि न निवर्त्तते । श्रोतुः पुरुषस्य तत्राप्यनुप्रवेशात् तद्वैगुण्येन चाप्रामाण्योपलब्धेः, तथाहि—श्रोतुरप्रतिभादेर्मिथ्याज्ञानोत्पत्तौ कारणं तदभावश्च सम्यक्ज्ञानोत्पत्तावित्युपलब्धमेव । न च नित्यत्वं वेदानामेकान्तेन प्रामाण्यहेतुस्तद्भावेपि श्रोत्रान्तःकरणयोः प्रतिपत्तृदोषानुप्रवेशेन क्वचिदप्रामाण्यात् । स्वाभिधाशक्तिबलेनैव शब्दस्य प्रामाण्यमित्यभ्युपगमे चाङ्गुल्यग्रे करिणस्तिष्ठन्तीत्येवमादेरप्रामाण्यं न स्यात् । अथानाप्तप्रणीतत्वेन विसम्वादादप्रामाण्यमेषाम्, तर्हि यदाप्तप्रणीतं तदेव प्रमाणमिति प्राप्तम् । यथाहि पुरुषगतस्य रागादेरप्रामाण्येऽन्वयव्यतिरेकाभ्यां व्यापारः तथा तद्गुणादेः

प्रामाण्येपीत्युभयं परतः। अभिधानस्य च वर्णत्वानुपूर्वीसङ्केतव्य-तिरेकेणातीन्द्रिया शक्तिर्न विद्यते, तस्याः पूर्वमेव प्रतिषेधात्। व-र्णत्वादिसद्भावे च कार्यकरणात्। स च परत एव, प्रतिनियतजा-तिसम्बन्धस्यादृष्टकार्यत्वात्। सङ्केतस्याप्यन्यत् कारणमुक्तमिति। यत्तु-साक्षाद्दर्शनादिः पुरुषस्य रागादिविनाशे व्याप्रियते न ज्ञानो-त्पत्तौ-इत्युक्तम्। तदसत्। सम्यक्ज्ञानोत्पत्तावन्वयव्यतिरेकोपप-त्तेः। यथार्थद्रष्टा तच्छिष्याणामुपदेष्टा चेति समुदितमाप्तलक्षणं यथार्थोपदेशे हेतुस्तदन्तरेणानुपदेशात्। यदि चान्वयव्यतिरेकव-तोऽपि यथार्थदर्शित्वादे रागादिविनाश एव व्यापारः, तर्हि रागादे-रप्येतद्विनाशकत्वमेवेत्युभयं परतः स्यात्। तस्माद्रागादेरप्रामा-ण्योत्पत्ताविव यथार्थोपलम्भादेरपि सम्यक्ज्ञानोत्पत्तौ व्यापारो-ऽभ्युपगन्तव्यः। तथेन्द्रियाणामपि काचकामलादिदोषसद्भावेऽपि मिथ्याज्ञानमिव तदभावे सम्यक्ज्ञानजननात् उभयं परतः। परे-णाप्यभावस्य कारणत्वमनेकधेष्टम्। यथा सदुपलम्भकप्रमाण-पञ्चकव्यावृत्तेर्मानसज्ञानोत्पत्तौ पक्षधर्मत्वाद्यन्यतमापाये च लिङ्ग-स्य मिथ्याज्ञानोत्पत्तावित्यादि। अथ काचकामलादेर्दोषस्य मि-थ्याज्ञानोत्पत्तौ कारणतोपलब्धेस्तदभावे तस्यैवानुपलब्धिर्न सम्यक्-ज्ञानमिति चेत्। न। अन्वयव्यतिरेकवतोऽकारणत्वेऽतिप्रसङ्गात्। यदि च दोषाभावोऽन्वयव्यतिरेकवानपि न सम्यग्ज्ञानोत्पत्तौ कारणं, तत्सद्भावेपि न मिथ्याज्ञानोत्पत्तावित्युभयं स्वतः स्यात्। सर्गश्चे-न्द्रियाणामुभयरूपस्य कार्यस्योपलब्धेरुभयार्थमिति ज्ञायते। ननु दोषसद्भावे सतीन्द्रियं मिथ्याज्ञानं जनयति तदभावे च सम्यग्ज्ञा-नमित्यभ्युपगमादुभयाभावे चोभयविकलं विज्ञानं कुर्यादिति। एत-दचोद्यम्। उभयविकलस्येन्द्रियस्यासम्भवात्। यथा हि पूर्वमसतां दोषाणामुत्पत्तिरूर्ध्वं च प्रध्वंस इति नास्त्युभयविकलमिन्द्रियम्। न चोभयविशेषविकलं ज्ञानत्वसामान्यं सम्भवति सामान्यवतो वि-शेषयोगात् यथा गोत्वसामान्याधारस्य शाबलेयादिर्विशेष इति। यच्चे-दं-न कारणगुणपूर्वकं परिच्छेदकत्वम्-तदिष्यत एव। अनुभव-ज्ञानस्येन्द्रियादुत्पन्नस्यार्थपरिच्छित्तिरूपत्वात्। तज्जनकं चेन्द्रिया-दिकारकं कारकान्तरापेक्षं चेति परतः प्रामाण्यम्। कारकसाम-ग्र्यं तु न पश्चाद्भाविनिमित्तमपेक्षत इति। तदपेक्षया तूभयं स्वत

इति न मिथ्याज्ञानं परतः स्यात्। अथ ज्ञातृव्यापारो ज्ञानं तच्चार्थपरिच्छेदेऽनपेक्षमिति स्वतः, तन्मिथ्याज्ञानेऽपि समानम्। अथ मिथ्याज्ञानं दोषमपेक्षते, तर्हि सम्यक्ज्ञानमपि तदभावाद्यपेक्षत इति। न च ज्ञातृव्यापारः सम्भाव्यते, अर्थप्रतिपत्तेरन्यथाभावात्। तथाहि-सर्वं कारकं चरमसहकारिसद्भावे सति कार्यं करोतीति न तस्मादन्यो व्यापारः। सद्भावेऽपि नित्यतायां सर्वकार्योत्पत्तिप्रसङ्गः, तस्यानपेक्षकारणत्वाभ्युपगमात्। अनित्यत्वे तु तदुत्पत्तावपि निर्व्यापारस्य कारणत्वायोगात् अन्यो व्यापारस्तदुत्पत्तावप्यन्य इत्यनवस्था स्यात्। चरमसहकारिरूपे तु व्यापारे नायं दोषः। तत्सद्भावे कार्यकारणं न तदभाव इति। यच्चेदं-कारकशुद्धिग्रहणापेक्षितायां दूषणम्-तदपास्तमनभ्युपगमेनेति। अथ प्रमाणस्य प्रामाण्यं विनैव प्रमाणं विज्ञायत इति। तदसत्। सर्वस्य प्रमेयस्य प्रमाणपरिच्छेद्यत्वोपलब्धेः। तथा च प्रामाण्यं प्रमाणपरिच्छेद्यं प्रमेयत्वात् घटादिवत्। न चानवस्था। सर्वत्रावश्यं प्रामाण्यग्रहणानभ्युपगमात्। यत्र हि ज्ञानोदये सति किमिदं सम्यक् मिथ्या वेति संशयोत्पत्तिस्तत्रैव प्रमाणान्तरापेक्षया अर्थप्राप्तिपर्यन्तव्यवहारसम्भवे वाऽपेक्षाविनिवृत्तेर्नानवस्थादिदोषः। यदि च ज्ञानधर्मत्वात् प्रामाण्यस्य स्वसंवेद्यत्वमिष्येत अप्रामाण्यमप्येवं स्यादिति कथं परतः। तथा मिथ्याज्ञानोत्पादे न प्रवर्तते मिथ्यात्वस्य प्रतिपन्नत्वात् सम्यग्ज्ञानोत्पत्तौ च सम्यक्ताध्यवसाये किमिदं सम्यक् मिथ्या वेति संशयाद्यभावः। यच्चेदमवबोधकत्वेन प्रमाणस्य प्रामाण्यं दोषादर्शनमात्रेणैवावतिष्ठते इत्युक्तम्। तत्र यदि दोषादर्शनं दोषज्ञानानुत्पत्तिर्न तया प्रामाण्यं ज्ञाप्यते नापि क्रियते इति कथमनिश्चितस्थितेरवस्थानवचनम्। अथ दोषदर्शनस्य बाधकप्रत्ययस्य मिथ्यात्वज्ञापकत्वमिव तदभावज्ञानस्य प्रामाण्यज्ञापकत्वमिष्येत, तर्हि तस्यापि प्रामाण्यमन्यस्माद्विज्ञायते इत्यनवस्था स्यात्। अथ ज्ञानोत्पत्तौ संशयं विना न सर्वत्र प्रामाण्यग्रहणापेक्षेति परिहारः। तर्हि न स्वतः प्रामाण्यमुत्पत्तौ ज्ञप्तौ च परापेक्षित्वाभ्युपगमात्। अथेन्द्रियादिकारकेषु विद्यमानं सम्यक्त्वं न कारणगुणप्रक्रमेण ज्ञानेषूत्पद्यत इति स्वतः, तदप्रामाण्येऽपि समानम्। तत्रापि हि विपर्ययादिरूपता नेन्द्रियाविद्यमाना जायत इति। बोधात्मकप्रमाणापेक्षया तु

स्वतः प्रामाण्यं विवक्षितमित्यभ्युपगमस्य चोदनाया वक्तृविशेषापेक्षं प्रामाण्यमित्यभ्युपगमेनाविरोधादविवाद एव स्यात् । अस्य हि समर्थनार्थमन्यप्रमाणानां परतः प्रामाण्योपदर्शनात् । न च चोदनायाः स्वतः प्रामाण्याभ्युपगमे चोदनाजनितं ज्ञानं प्रमाणम्, दोषवर्जितैः कारकैर्जन्यमानत्वाल्लिङ्गात्प्रत्यक्षबुद्धिवदिति परीक्षार्थं प्रयासो घटते । अथापरेषां व्यामोहव्यावर्त्तनद्वारेण सम्यक्ज्ञानसम्पादनार्थं परीक्षावाक्यम् । तज्जनितज्ञानेऽपि व्यामोहे सत्यन्या परीक्षा स्यादित्यनवस्था । सा चोक्तन्यायेनैव परिह्रियत इति कथं न परतः प्रामाण्यस्य प्रामाण्यमुत्पद्यते ज्ञायते वेति । शेषं चात्र दूषणप्रतिसमाधानमस्मद्गुरुभिर्विस्तरेणाभिहितमिति नेहोक्तम् । अतः शब्दस्याप्तोक्तत्वेन प्रामाण्यान्नानुमानेऽन्तर्भावः ।

अथ शब्दानामर्थेन प्रतिबन्धाभावादप्रामाण्यमेव, तथा च दृश्यविकल्प्यावर्थावेकीकृत्य तत्समारोपेण श्रोतुः प्रवृत्तिनिवृत्ती इत्युक्तम् । योयं विकल्पगत आकारः स एव बाह्योर्थ इति मन्यमानः प्रतिपत्ता प्रवर्त्तते, न बाह्यार्थप्रतिपत्तौ अर्थदर्शने सति विवक्षाक्रमेण शब्दोत्पत्तिकालेऽर्थस्य क्षणिकत्वेनातिक्रान्तत्वात् । प्रत्यक्षानुमानविषयस्यातिरिक्ताविषयाभावाच्च न शब्दः प्रमाणान्तरम् । तथाहि—स्वलक्षणविषयं प्रत्यक्षं सामान्यविषयमनुमानम् । प्रमेयद्वैविध्यात् प्रामाणद्वैविध्यमिति कथं शब्दोर्थान्तरत्वे सति प्रमाणम् । यदि चेन्द्रियेण समानविषयः शब्दो भवेदन्धानन्धयोरविशेषः स्यात्, तदाह—

> अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः ।
> शब्दात् प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥

अन्यदेव रूपादि स्वलक्षणमिन्द्रियग्राह्यम्, तस्मादन्यः शब्दस्य गोचरो वोह (?)(विषय) इति गृह्यताम् यतः शब्दात् प्रत्येति भिन्नाक्षः प्रध्वस्तनयनः, न तु प्रत्यक्षं यथा भवति तथेक्षते । समानविषयत्वे वाऽनन्धस्येवान्धस्यापि शब्दादपरोक्षैव प्रतिपत्तिः स्यात् । तथात्वे इन्द्रियाग्निसम्बन्धादिवद्दाहशब्दादपि दाहार्थप्रतिपत्तिः स्यादित्याह—

> अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोभिमन्यते ।
> अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते ॥

तस्मान्नेन्द्रियेण समानविषयत्वं शब्दस्य । तथा पटादिशब्दस्य

स्वलक्षणविषयत्वे तस्य निर्भागतया शुक्लादिशब्दानामपि पर्यायता भवेत् । अपोहविषयत्वे तु नायं दोषः, विभिन्नानां समारोपव्यवच्छेदपरत्वादिति । वास्तवार्थविषयत्वे च शब्दानां पुरुषेच्छावशेनानियतार्थत्वं न स्यात् । व्यवहारस्तु शब्दान्मया प्रतिपन्नं शब्देन च प्रतिपादयामीति प्रतिपाद्यप्रतिपादकयोस्तैमिरिकद्वयद्विचन्द्रदर्शनवत् भविष्यतीति । यथैकस्तैमिरिकश्चन्द्रद्वयं प्रतिपद्य प्रतिपादयति, अपरश्च प्रतिपद्यते । तथा सर्वत्र व्यवहर्तॄणामयं शाब्दो व्यवहार इति । अथ परीक्षकास्तर्हि शब्दार्थाध्यवसाये सति मिथ्यात्वं मन्यमानाः प्रवर्त्तन्ते लोकव्यवहारानुसारितया लोकव्यवहारं प्रति 'सदृशौ बालपण्डितौ' इति न्यायात् । मिथ्याज्ञानस्य चार्थप्रतिपादकत्वं क्वचिदुपलब्धम् । यथा मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोर्मिथ्याज्ञानाविशेषऽपि विशेषोऽर्थक्रियां प्रति । तदेतदसत् । शब्दादर्थाध्यवसाये सति प्रवर्त्तमानस्यार्थाविसम्वादेनाक्षजज्ञानवदभ्रान्तत्वेन प्रामाण्योपपत्तेः । तथाहि—इन्द्रियज्ञानस्यापि सम्यक्त्वे नार्थाविसंवादं विना प्रमाणान्तरमस्ति । स च शाब्दज्ञानेऽप्यस्तीति कथमप्रमाणम् । प्रतिबन्धोपि कार्यविशेषोपलब्धेरिन्द्रियाणामिव शाब्दस्याप्यर्थेन वाच्यः । स च वाच्यवाचकालम्बनं सङ्केतज्ञानमेव, अन्यस्यासम्भवात् । तस्य च विशेषाणामानन्त्येप्येकसामान्यस्योपग्रहादुपपत्तिरित्युक्तमेव । यदि च शब्दानामप्रामाण्यम्, प्रमाणादिस्वरूपावबोधार्थं शास्त्रमनर्थकं स्यात्, प्रमाणादिस्वरूपस्य पारम्पर्येणापि तस्मादप्रतीतेः । यदि च विवक्षासूचकत्वेनैव प्रामाण्यमिष्येत । तर्हि सर्ववाक्यानां तत्राव्यभिचारादविशेषेण प्रामाण्ये वादिप्रतिवादिनोर्विवादे जयपराजयव्यवस्था न स्यात् । अथ यद्वाक्यमर्थप्रतिबन्धां विवक्षां सूचयति तदेव प्रमाणं न सर्वमिति चेत् । न । शब्दवद्विवक्षाणामप्येकान्तेनार्थप्रतिबन्धाभावात् । तथा चार्थदर्शनानुस्मरणक्रमेण विवक्षाकाले नार्थस्यावस्थानमस्तीति । अतो बाह्यार्थाध्यवसाये सत्येव प्रवर्त्तन्ते न दृश्यविकल्पार्थावेकीकृत्य तत्समारोपेणेति । न च दृश्यस्यानुपलब्धेर्विकल्पेनैकीकरणं युक्तम् । उपलभ्यमानपदार्थे हि चन्द्रादौ द्वित्वादिसमारोपस्यान्यत्रोपलब्धेः शब्दार्थप्रतिपत्तौ बाधकानुपपत्तेश्च मृषैषा कल्पना । यच्चेदं विवक्षाक्रमेण शब्दोत्पत्तिकाले नार्थस्यावस्थानमस्तीति । तदपास्तम्—क्षणिकत्वानभ्युपग-

मेन। अथ सामान्यविशेषव्यतिरिक्ताविषयाभावादप्रमाणत्वं शब्दानाम्। तदसत्। एकान्तेन प्रमाणेषु व्यवस्थानभ्युपगमात्। तथा ह्यागमादात्मा प्रतीयते, पुनरुत्पादालिङ्गैर्योगबलाच्च प्रत्यक्षतोऽपीति संप्लवः। क्वचिद्व्यवस्था च। यथाऽऽगमस्य मेध्यामेध्यप्रतिपत्ताविन्द्रियाणां स्वविषयेष्विति। अतः प्रत्यक्षादिविषयेऽपि शब्दस्य प्रवृत्तेर्न विषयान्तराभावः तदप्रामाण्ये हेतुरिति। विषयद्वैविध्येन च प्रमाणद्वित्वावधारणे दूषणं गुरुभिर्विस्तरेणाभिहितमिति नेहोच्यते। यत्तु शब्दानां स्वलक्षणविषयत्वेऽन्धानन्धयोरविशेषप्रसङ्ग इत्युक्तम्। तदसत्। विषयैकत्वेऽपि करणभेदेन प्रतिपत्त्योर्भेदात्। अन्धस्य हि शब्दाद्रूपविषयं विज्ञानमुत्पद्यते, न तु चाक्षुषमिति। यस्य चापरोक्षं चाक्षुषं विज्ञानमस्ति असावनन्धः। शब्दो हि व्यवहितमप्यर्थं प्रकाशयति सन्निकृष्टं चेन्द्रियमित्यनयोर्विभिन्नप्रतिपत्तिजनकत्वम्। यत्तु त्वगिन्द्रियाग्निसम्बन्धादिवद्दाहशब्दादपि दाहार्थः सम्प्रतीयेतेत्युक्तम्। तत्र यदि दाहो दुःखं तत्प्रतीयत एव दाहशब्दात्। न चैवं श्रोतुर्दुःखित्वप्रसङ्गो दुःखासमवायात्। यस्य हि दुःखं समवेतमुपजातं स एव दुःखी न तु दाहशब्दादात्मनि समवेतं दुःखमुत्पद्यते। किं तर्हि? परात्मसमवेतमपि ततो विजानातीति। स्फोटादिलक्षणस्तु दाहस्त्वचोऽग्निसम्बन्धादुपजायते न दाहशब्दादिति। तस्मादेवाग्निसम्बन्धादुत्पन्नस्फोटादिकार्यः तज्जनितदुःखमात्मान्तःकरणसम्बन्धादनुभवतीति दुःखीत्यातिदिश्यते। दाहशब्दान्नान्यथैवानुत्पन्नस्फोटादिकार्यो दुःखं परात्मगतं प्रतिपद्यते इत्यदूषणमेतत्। न च स्वलक्षणस्य निर्भागतया शुक्लादिशब्दानां पर्यायत्वप्रसङ्गः, धर्मधर्मिणोर्व्यतिरेकात् प्रत्ययभेदस्य भेदलक्षणत्वादित्युक्तम्। तस्मात् भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थत्वेऽपि न पर्यायत्वमिति। न चापोहः शब्दार्थस्तस्यैवासम्भवादिति वक्ष्यामः। यत्तु वास्तवार्थविषयत्वे पुरुषेच्छावशेनानियतार्थत्वं न स्यादिति। तदसत्। नैमित्तिकशब्दानां निमित्तवशेन प्रवृत्तेर्नानियतार्थत्वम्। यादृच्छिकानान्तु पुरुषेच्छावशेनानियतार्थत्वमिष्यत एव। बाधकानुपपत्तेश्च न तैमिरिकस्य द्विचन्द्रदर्शनवच्छाब्दो व्यवहारः। तथा हि—तैमिरिकस्य द्विचन्द्रदर्शने तिमिरोत्पत्तेः प्रागूर्ध्वं च बाधकमस्ति। अनुपजाततिमिरस्य तु सर्वदा। न चैवं शब्दव्यवहारे। यत्तु—मिथ्याज्ञानावि·

शेषेप्यर्थक्रियासिद्धिर्यथा मणिप्रदीपप्रभयोः–इत्युक्तम् । तदपरिज्ञा-नात् । तथाहि–समीपवर्त्तिनो यन्मणावेव विज्ञानं तदेवार्थक्रियाजन-कं न प्रभायामिति । शाब्दज्ञानं त्वर्थप्राप्तिपर्यन्तव्यवहारोपलब्धेरिन्द्रि-यजज्ञानवत् भ्रान्तं न भवतीति । न च वास्तवसम्बन्धाभावे शब्दा-नामश्वशब्दादश्वाध्यवसायो गोशब्दाच्च गवयध्यवसाय इति विकल्प-नियमो घटते, दृष्टश्चासाविति । तथाश्वशब्दा इति(?)सम्बन्धाग्रहे सम्बन्धिप्रत्ययो न स्यादित्यलमतिविस्तरेण ।

तदेवं तादात्म्यतदुत्पत्तिप्रतिबन्धस्य पूर्वमेव प्रतिषेधाच्छब्दा-नान्तु समयवशेनार्थप्रतिपादकत्वादुपपन्नमनुमानादर्थान्तरत्वे सति प्रामाण्यमिति ॥

अथ चेष्टा प्रमाणान्तरमिति केचित्तन्निषेधार्थमाह—प्रसिद्धाभि-नयस्य चेष्टया प्रतिपत्तिदर्शनात्तदप्यनुमानमेव । प्रसिद्धोऽभिनय-श्चेष्टा कायिको व्यापारोऽर्थविशेषाविनाभूतो यस्यासौ तथोक्तस्तस्य चेष्टयाऽर्थविशेषे प्रतिपत्तिः। यथा मुखाञ्जलिसंयोगाद्विशिष्टात्पिपासा-प्रतिपत्तिः, तस्य तया पूर्वमविनाभावोपलब्धेः । तथा चायं पिपासा-न्वितो विशिष्टमुखाञ्जलिसंयोगवत्त्वात् तदन्यैवंविधदेवदत्तवत् । अतः पक्षधर्मत्वादिबलेन गमकत्वादेतदप्यनुमानमेवेति । एवमन्या-पि चेष्टा नाट्यशास्त्रप्रसिद्धाऽनुमानेऽन्तर्भावनीयेति ॥

अथोपमानं प्रमाणान्तरमिति केचित् । तन्निषेधार्थमाह—आप्ते-नाप्रसिद्धगवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेवेति । आप्तेन प्रसिद्धगोगवयसारूप्येण प्रसिद्धगवयस्य गवा गवयप्रतिपा-दनादिति । यथा गौरेवं गवय इत्युपमानमिष्टम् । तदाप्तवचनमेव न प्रमाणान्तरमिति । न चास्योपमारूपत्वात् प्रमाणान्तरत्वम् । विध्य-र्थवादादिभेदेनापि प्रमाणानन्त्यप्रसङ्गात् । अथ सत्यप्यवान्तरभेदे नामीषामाप्तोपदेशाद्भेदः । तदुपमानेऽपि समानम् । अथ वाक्यादुप-लब्धसादृश्यस्याटव्यामटतो गवयार्थिनो मदीया गौरनेन सदृशीति ज्ञानमुपमानम् । असदेतत् । फलाभावात् अज्ञाननिवृत्तिः फलमित्यु-क्तम् निवृत्तेः प्रध्वंसत्वात् । तथाहि—ज्ञानानुत्पत्तिर्विपरीतं वा ज्ञान-मज्ञानमुभयथापि तन्निवृतिः प्रध्वंस एव । प्रमाजनकं च प्रमा-णम् । न च हेयादिबुद्धयः फलम् । तदपाये सति कालान्तरेण सुख-दुःखादिविनिश्चयानन्तरमुत्पत्तेः । न च सादृश्यस्य प्रमेयत्वम् । त-

ज्ञानस्याफलत्वात् अभ्युपगमे वाऽन्यत्प्रमाणं वाच्यमिति । अथ गवयज्ञानमुपमानं मदीया गौरनेन सदृशीति ज्ञानफलं सादृश्यावाच्छिन्नः पिण्डस्तदवच्छिन्नं वा सादृश्यं प्रमेयमिति । न चेदं ज्ञानमिन्द्रियजम्, अटव्यां व्यवस्थितस्य गृहावस्थितपिण्डविषयत्वेनोत्पत्तेः। न चानुमानजम्, लिङ्गव्यापारानुपलब्धेः । गोसादृश्यन्तु गवये गृह्यमाणमप्यलिङ्गम्, व्यधिकरणत्वात् । तथाच मदीया गौरनेन सदृशी अस्य तत्सदृशत्वादिति व्यधिकरणतैव । अनुपपद्यमानस्यार्थस्याभावात् नार्थापत्तिजम् । शब्दं विनाप्युत्पत्तेः न शाब्दम् । अभावस्य च नियतविषयत्वम् । न चेदं स्मरणम्, गवयसादृश्यस्य गोपिण्डे पूर्वमननुभूतत्वादतः प्रमाणान्तरफलमेतदित्याशयः परस्य । यदि च गोसादृश्यावच्छिन्नं गवयपिण्डमिन्द्रियार्थसन्निकर्षादेवोपलभते तदा प्रत्यक्षफलमेव न प्रमाणान्तरफलम् । तत्र किं स्मरणापेक्षमिन्द्रियमेवं ज्ञानं जनयति अनपेक्षं वेति । अनपेक्षस्य ज्ञानजनकत्वे अप्रसिद्धगोपिण्डस्य स्मरणेऽप्येतत्स्यात् । अथ पिण्डमात्रस्मरणेऽश्वादिपिण्डस्मरणे स्यात् । अथ गवयसादृश्यावच्छिन्नस्मरणापेक्षं जनकम्, तत्रापि यदि स्मरणमात्रमपेक्षेत । गजादिस्मरणेपि स्यात् । अथ गोपिण्डस्मरणापेक्षम् । तत्रापि किं गोपिण्डमात्रस्मरणमपेक्षते गवयसादृश्यावच्छिन्नं गोपिण्डस्मरणं वेति । गोपिण्डमात्रस्मरणेऽश्वादिपिण्डस्मरणेपि स्यात् । गवयादिसादृश्यावच्छिन्नगोपिण्डस्मरणापेक्षित्वे पूर्वमेवानुभवो वाच्यः । तदन्तरेण संस्कारानुत्पत्तेः स्मरणस्यैवाभावात्। अतः सविकल्पकज्ञानाभावेऽपि गवयसादृश्यावच्छिन्ने गोपिण्डे पूर्वमनुभवोऽभ्युपगन्तव्यः । येन हि संस्कारोत्पत्तौ स्मरणान्मदीयया गवा सदृशोऽयं गवय इति ज्ञानं स्यात् । पूर्वं च गवयसादृश्यावच्छिन्नगोपिण्डेऽनुभवप्रसिद्धौ गवयोपलम्भान्मदीया गौरनेन सदृशीति कथमेतत् स्मरणं न स्यात् । तथा पृष्टो ब्रवीति एतत्सदृशी मयोपलब्धा, न तु प्रमाणान्तरं निर्दिशतीति मन्यमानः प्रशस्तो भगवानन्तर्भावमाहेति ।

अन्ये तु यथा गौर्गवयस्तथेति वनेचरवाक्यात्सादृश्योपलम्भे सत्युपजातसंस्कारस्याटव्यां परिभ्रमतो गोसादृश्यावच्छिन्नगवयदर्शने सति अविनाभावसम्बन्धस्मरणानन्तरं तथा चायं गोसदृश इति ज्ञानमुपमानं मन्यन्ते, तस्मादनन्तरं गवयनामेति संज्ञासंज्ञिसम्ब-

न्धप्रतिपत्तिः फलं संज्ञासंज्ञिरूपम्, संज्ञावच्छिन्नो वा पिण्डः प्रमेय-मिति । नच वाक्यादेव संकेतप्रतिपत्तिः,गवयपिण्डस्य परोक्षत्वात्, 'प्रत्यक्षं संज्ञाकर्मेति, सूत्रव्याघाताच्च । न युक्तमेतत् । वाक्यादेव स-ङ्केतस्य प्रतीतत्वात् । तथाहि—सादृश्यवाक्यस्यायमर्थो यो गोसदृशः स गवय इत्येवं व्यवहर्त्तव्यः । स च वाक्यादुपलब्धसङ्केतः साद-श्यावच्छिन्नं पिण्डमुपलभमानः परं व्यवहरति-अयं गवय-इति, न तु सङ्केतं प्रतिपद्यते प्रतिपिण्डमन्यत्रापि सङ्केतप्रसङ्गात् । तथाहि-यत्र यत्र गोत्वं पश्यसि तत्र तत्र गोशब्दः प्रयोक्तव्यः, तस्माच्चासावर्थः प्रतिपत्तव्य इति सङ्केतग्रहे सति गोपिण्डोपलम्भादयं गौरिति प्रति-पद्यते, न तु गोनामेति, व्यवहाराभावप्रसङ्गात् । न तु सूत्रव्याघा-तः, प्रत्यक्षशब्दस्य दृढप्रमाणोपलक्षणत्वात् । दृढप्रमाणपरिच्छिन्ने-र्थे संज्ञा प्रवर्त्तते । यथा देशान्तरव्यवस्थितोऽपि पिता स्वपुत्रस्य ना-म करोति-यज्ञदत्तनामासौ-इति । अथ जातिशब्दस्य प्रत्यक्ष ए-वार्थे सङ्केतः, न अतीन्द्रियेष्वसङ्केतप्रसङ्गात् । दृष्टं च मनःशब्द-स्यातीन्द्रियेपि मनसि दृढप्रमाणपरिच्छिन्ने सङ्केतः । तथा अयं गवय इति कथं पुनर्भवान् जानातीति परेण पृष्टो वनेचरेण ममाख्यातमिति वचनमेव निर्दिशति, न तु सादृश्यात्प्रतिपन्नमिति । कारकेण च व्यपदेशो यथा चक्षुषा प्रतिपन्नमनुमानाच्च प्रतिपन्नमिति । तथा नि-र्विषयवाच्यप्रमाणम्। अथास्ति संज्ञासंज्ञिरूपं प्रमेयम् । न । सम्बन्धप्र-तिपत्तेः फलत्वे सम्बन्धिनः प्रमेयत्वानुपपत्तेः । अथ सम्बन्ध इव स-म्बन्धिनः प्रतिपत्तिरेवोभयनिष्ठतयोपचारेणाभिधीयते । तथापि न संज्ञासंज्ञिरूपं प्रमेयम्, संज्ञायास्तदाभावात् । अथ स्वयमुच्चार्य शब्दं प्रतिपद्यते । न । विवक्षाक्रमेण शब्दोत्पत्तिकाले सादृश्यज्ञानस्य प्रमा णस्यासम्भवात् । अथ जगतो विस्तीर्णतया क्वचिदुत्पन्नो गवयश-ब्दः प्रमेयः । न । तस्याश्रूयमाणस्य प्रमेयत्वानुपपत्तेः । अथाप्रतिबन्ध-सन्तानन्यायेन दूरं तस्यागमने ब्रह्मभाषितस्यागमनं स्यात् । अथ स्मृतिसमारोपितस्य गवयशब्दस्य प्रमेयत्वम् । न । तत्कल्पनायां कारणाभावात् । सादृश्यज्ञानानन्तरमयं गवयनामेति प्रतिपद्यते । न चान्तराले तत्स्मृतेरनुप्रवेशे प्रमाणमस्तीति । संज्ञावच्छिन्नस्य तु पिण्डस्य प्रमेयत्वेन सम्बन्धज्ञानं स्यात्, तस्योभयालम्बनत्वादि-ति । तथा परेणाप्यनुमानादुपमानस्य भेदमुपदर्शयता यथा तथेत्यु-

पसंहारादुपमानसिद्धेर्नाविशेष इति वाक्यरूपमुपमानमिष्टमेव । तस्य चागमेऽन्तर्भावो न दोषायेति ।

अथार्थापत्तेरनुमानेऽन्तर्भावार्थं दर्शनार्थापत्तिस्तदप्यनुमानमेवेति वाक्यम् । दृश्यत इति दर्शनं तस्मादुपलभ्यमानादर्थादन्यथानुपपद्यमानादर्थस्याप्तिः प्राप्तिः प्रसङ्ग इति । तदुक्तम्—

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्या सार्थापत्तिरुदाहृता ॥

इति षट्भेदाऽर्थापत्तिः। तत्र प्रत्यक्षपूर्विका तु यथा स्फोटादिलक्षणं कार्यमुपलभ्य तदन्यथानुपपत्त्या वन्हेर्दाहिका शक्तिः प्रतीयते । न चात्र प्रमाणान्तरेणाविनाभावग्रहणम्, शक्तेः प्रमाणान्तरागोचरत्वात् । अनुपलब्धाविनाभावं च लिङ्गं न भवत्येवातः प्रमाणान्तरमेतत् । अनुमानपूर्विका तु यथा धूमादग्निं प्रतिपद्य तदन्यथानुपपत्त्या तद्विशेषप्रतीतिरिति । उपमानपूर्विका च यथाऽटव्यां गवयदर्शनानन्तरं मदीया गौरनेन सदृशीति गां प्रतिपद्य तदन्यथानुपपत्त्या वाहदाहादिसामर्थ्यप्रतिपत्तिः । अर्थापत्तिपूर्विका तु रूपोपलम्भान्यथानुपपत्त्याऽवगतस्य चक्षुषः परिच्छेदका शक्तिः प्रतीयत इति । आगमपूर्विका तु जीवति देवदत्ते गृहे नास्तीति वाक्यात् गृहे असत्त्वं प्रतिपद्य तदन्यथानुपपत्त्या बहिर्भावप्रतिपत्तिः । न च बहिर्भावाविनाभूतं किञ्चिल्लिङ्गमस्तीति प्रमाणान्तरफलमेतत् । अभावपूर्विका तु यथा सदुपलम्भकप्रमाणपञ्चकव्यावृत्त्या देवदत्तस्य गृहे असत्त्वं प्रतिपद्य तदन्यथानुपपत्त्या बहिर्देशसम्बन्धः प्रतीयते । अन्तर्भावमाह–तदप्यनुमानमेव न प्रमाणान्तरम् । तथा च स्फोटादिकार्येणाग्नेरतीन्द्रिया शक्तिः प्रतीयत इत्यसदेतत् । तस्याश्चरमसहकारिव्यतिरेकेण पूर्वमेव प्रतिषेधात् । प्रतिबन्धकाभावविशिष्टोऽग्निसंयोग एवाग्नेः शक्तिस्तत्सद्भावे कार्यकरणात् । अग्नित्वं तु निजा शक्तिः। सापि प्रत्यक्षैव । यच्चानुमानात् सामान्यावबोधे सत्यर्थापत्तितो विशेषावबोध इति । तदपास्तमेव । सामान्यविशेषस्य साध्यत्वादिति वदता । उपमानस्य तु स्मरणादभेदेऽपि तत्पूर्विकार्थापत्तिरनुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । तथाच सादृश्यावच्छिन्नो गोपिण्डो वाहादिसमर्थः तत्पिण्डत्वापूर्वोपलब्धैवंविधगोपिण्डवत् । अर्थापत्तिपूर्विकाप्यर्थापत्तिरनुमितानुमानमेव । तथा च रूपोपलब्धिः करणकार्या

क्रियात्वात् छिदादिक्रियावदिति । चक्षुः प्रसिद्धं, तच्चानुमितं शक्तिमत् करणत्वाद्वास्यादिवदिति । या चेयं जीवति देवदत्ते गृहे नास्तीत्यन्यथानुपपत्त्या बहिर्भावप्रतिपत्तिः । साप्यनुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । तथाहि–देवदत्तो बहिर्देशसम्बन्धी जीवनसम्बन्धित्वे सति गृहेऽनुपलभ्यमानत्वाद्विष्णुमित्रवत् । जीवनसम्बन्धित्वं च देवदत्तस्यार्थापत्तिवादिनाप्यागमादेव प्रतिपत्तव्यम्, अन्यथाऽर्थापत्तिर्न प्रवर्त्तेत । समानं चैतदभावपूर्विकायामप्यर्थापत्ताविति । प्रमाणपञ्चकाभावेनापि जीवतो देवदत्तस्य गृहे असत्त्वप्रतिपत्तौ बहिर्देशसम्बन्धोऽनुमीयते । एवमन्यदप्युदाहरणमर्थापत्तेरविनाभावोपदर्शनेनानुमान एवान्तर्भावनीयम् । तयोत्पत्तिं विनाऽन्यथानुपपत्तेरुपदर्शयितुमशक्यत्वादिति । अथ विरोधिनः सर्पादेर्विस्फूर्जनादिशब्दश्रवणात्तदनुमितौ विरोधिन्येव नकुलादौ प्रतिपत्तिः प्रमाणान्तरमिष्टं कैश्चित् । तदनुमितानुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । प्रयोगस्तु विस्फूर्जनशब्दो भुजङ्गकार्यो विस्फूर्जनशब्दत्वात् पूर्वोपलब्धैवंविधस्फूर्जनशब्दवत् । एवमनुमितः सर्पः सन्निहितेन विरोधिना तद्वान्विस्फूर्जनशब्दकर्तृत्वात्पूर्वोपलब्धैवंविधाहिवदिति ।

सम्भवः प्रमाणान्तरमिष्टं परैः । तन्निषेधार्थं सम्भवोऽप्यविनाभावित्वादनुमानमेवेति वाक्यम् । यत्र हि सहस्रं तत्रावश्यं शतं सम्भवतीत्यविनाभावस्य ग्रहणात् । तथा च सहस्रं स्वसमुदायिशतवत् सहस्रत्वात् पूर्वोपलब्धसहस्रवत् ।

कार्यानुत्पादेन कारणाभावः प्रतीयत इत्यभावरूपतयैव प्रमाणान्तरमिति केचित् । तन्निषेधार्थं न परं सम्भवोऽभावोऽप्यनुमानमेवेति । यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गमविनाभावस्य पूर्वमेव ग्रहणात् । तथा अनुत्पन्नं कारणासद्भावे, कार्यानुत्पादस्य कारणाभावेनाव्यभिचारात् । तथाच कार्यानुत्पत्तिः कारणाभाववती कार्यानुत्पत्तित्वात् उभयाभिमतकार्यानुत्पत्तिवत् । एवं प्रतिबन्धकाभावः प्रत्यक्षादिसामग्रीषु सम्भवतीति प्रत्यक्षादिष्वप्यन्तर्भावोऽभावस्येति द्रष्टव्यम् । अथ सदुपलम्भकप्रमाणपञ्चकव्यावृत्त्या वस्तुनोऽभावस्य ग्रहणमिति प्रमाणान्तरमभावः । यथाहि भावांशपरिच्छेदे भावस्य व्यापारस्तथा तदभावपरिच्छेदे अभावस्याप्यभ्युपगन्तव्यः । तदुक्तम्—

प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदभावस्याप्यभावांशे जिघृक्षिते ॥

तथाहि—न प्रत्यक्षेणाभावस्य ग्रहणं तेन सम्बन्धाभावात्।

सम्बद्धं वर्त्तमानं च गृह्यते चक्षुरादिना ॥

प्रत्यक्षाभावादनुमानस्याप्यवृत्तिः, तस्य सम्बन्धिग्रहणापेक्षित्वात्। एवं शब्दस्यापि। उपमानार्थापत्त्योश्चाव्यापारात् प्रमाणपञ्चकाभावेनैव प्रमेयाभावस्य ग्रहणमिति। तदुक्तम्—

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥

नन्वेवं तर्हि व्यवहितेऽप्यर्थे प्रमाणपञ्चकव्यावृत्तेः सद्भावादभावग्रहणप्रसङ्गः। न वस्तुग्रहणप्रतियोगिस्मरणादेरपि व्यापारात्। तदुक्तम्—

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया।

वस्तुनो भूतलादेः सद्भावं गृहीत्वा प्रतियोगिनं घटं च स्मृत्वा इन्द्रियव्यापारं विनैव मनसा प्रतिपद्यते—नेह भूतले घटोऽस्ति—इति। तथा देवकुलं दृष्ट्वा बहिर्निर्गतो देशान्तरव्यवधानादिन्द्रियसम्बन्धं विनापि परेण नास्तितां पृष्टः तदैव प्रतिपद्यते। तदुक्तम्—

वस्तुमात्रं गृहीत्वापि पश्चात् किञ्चित् स्मरन्नपि।
तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ तथा—
प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते।
सात्मनः परिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥ इति।

सर्वमेतदसत्। प्रत्यक्षादिनैवाभावस्य प्रतीतेः। तथा चाक्षव्यापारादिह भूतले घटो नास्तीति ज्ञानमपरोक्षमुत्पद्यमानं दृष्टम्। अथेन्द्रियाणां भूतलग्रहणे व्यापारो नाभाव इति चेत्। न। भूतलग्रहणे प्रमाणाभावात्। विशेषणस्य हि पूर्वं ग्रहणं पश्चाद्विशेष्यस्य भूतलं च विशेष्यमिति न तस्य पूर्वं ग्रहणे प्रमाणमस्ति। उपेत्यवादेन तूच्यते। यदि वस्तुमात्रग्रहणे सति प्रतियोगिस्मरणम्। घटावरुद्धभूतलोपलम्भेऽपि तत्स्मरणे नास्तिताज्ञानप्रसङ्गः। अथ विशिष्टवस्तुग्रहणे सति प्रतियोगिस्मरणम्, तर्हि येन विशेषणेन विशिष्टं वस्तु तद्वस्तु पूर्वं प्रतिपत्तव्यमिति किमिन्द्रियादेव प्रतीयते प्रमाणान्तराद्वेति। इन्द्रियादेव प्रतिपत्त्यभ्युपगमे कथं नाभावः प्रत्यक्षविषयो विशिष्टतायास्तद्रूपत्वात्। न चानुमानादेर्व्यापारे प्रमाणमस्ति।

यदि चान्यया प्रमाणपञ्चकव्यावृत्त्यैव विशिष्टता प्रतीयते, तत्राप्य-न्यवस्तुग्रहणाभ्युपगमे विशिष्टताग्रहणमेवाभ्युपेयमित्यनवस्था स्यात् । तस्मादिन्द्रियेणैवेतरपदार्थविविक्तं भूतलमुपलभ्य प्रतियो-गिनं स्मरतीत्यभ्युपगमे घटाभावस्य प्रतीतत्वादलं प्रमाणपञ्चक-व्यावृत्त्येति । सदंशप्रकाशकस्यैवासदंशेऽप्यन्वयव्यतिरेकाभ्यां व्या-पारोपलब्धेर्न प्रमाणपञ्चकापरिच्छेद्ये वस्तुन्यभावस्य प्रमाणतेति वाच्यम् । न चेन्द्रियेण सम्बन्धाभावादग्रहणम् । तस्य कार्येणैव स-द्भावसिद्धेः । तथा च परेणाप्यपरोक्षज्ञानसद्भावेनेन्द्रियार्थयोर्योग्य-तालक्षणः सम्बन्धोऽभ्युपगतः । स च रूपादाविवाभावेऽप्युपगन्तव्यः, कार्यस्योभयत्राविशेषात् । तथा वैशेषिकैरप्यपरोक्षज्ञानसद्भावेने-न्द्रियार्थयोः षोढा सम्बन्धोऽभ्युपगत इत्यभावेन विशेषणविशेष्य-भावोऽस्त्येव । तेन हि सता अपरोक्षज्ञानोत्पत्तेः । न हि सदुपल-म्भकप्रमाणपञ्चकव्यावृत्त्या त्वभावग्रहणं कथं षडेव प्रमाणानीत्यवधार-णम् । प्रमाणाग्रहे तस्यानुपपत्तेः । नहि सदुपलम्भकप्रमाणाभावस्य परिच्छेद्यत्वेऽन्यत्तस्य परिच्छेदकं प्रमाणमस्ति । अथ प्रमाणपञ्चका-भावस्यानेकत्वात् कश्चित् कस्यचित् ग्राहको भवति, एवं तर्हि तस्या-प्यन्येन ग्रहणं तस्याप्यन्येनेत्यनवस्था स्यात् । न च प्रमाणव्यक्तेरने-कत्वात्तदग्रहणे तन्निष्ठस्य षडेवेत्यवधारणस्य सम्भवः स्यात् । वै-शेषिकाणान्तु प्रमाणव्यक्तीनामानन्त्येऽप्येकं लक्षणमुपग्राहकमस्तीति युक्तं प्रमाणग्रहणे सत्यवधारणमिति । यच्चेदं—देवकुलमात्रं दृष्ट्वा नि-ष्क्रान्तोऽन्येन पृष्टस्तदैव हस्त्यादेर्नास्तितां प्रतिपद्यत—इत्युक्तम् । तन्न अस्य स्मरणत्वात् । यद्यपि पूर्वं हस्ती नास्तीत्यादि सविकल्पकं ज्ञानं नोत्पन्नम्, तथापि हस्त्याद्यभावविशिष्टे देवकुले निर्विकल्पकं ज्ञानमुत्पन्नम् । अन्यथा हि यदाहं देवकुलमद्राक्षं न तदा तं समीप-वर्त्तिनं हस्तिनमिति प्रश्नानन्तरं स्मरणं न स्यात् । तत्तु दृष्टम् । यस्य वस्तुनः पूर्वं नाभावः परिच्छिन्नः तत्र परप्रश्नानन्तरं संशेते । न नि-रीक्षितं मया किं तत्र देवदत्तोऽस्त्युत हस्तीति । न चेदानीमभावं निश्चिनोति आगमस्यापि प्रमाणान्तरेणार्थतथाभावप्रतिपत्तिः । ना-प्तोपदेशेन कदाचित् सम्भवात् । अतः पूर्वमेव हस्त्याद्यभावस्य प्रती-तेर्युक्तमेतत् स्मरणं—न मया तत्र हस्ती दृष्ट—इत्यादि । अभावस्य च प्रमेयत्वं क्षणभङ्गावसरे व्यवस्थापितमेवेति ॥

अथानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यं यथेह वटे यक्षः प्रतिवसतीति। अस्यापि यदि प्रमाणान्तरेणार्थतथाभावप्रतिपत्तिः नाप्तोपदेशादर्थान्तरत्वमित्याह तथैतिह्यमवितथमाप्तोपदेश एव। तथाहि पूर्वप्रमाणानि नार्थान्तरं तथैतिह्यमप्यवितथं यथार्थमाप्तोपदेश एव न प्रमाणान्तरम्। विपर्यये त्वप्रामाण्यमिति।

अथ प्राक् सूचितस्य परार्थानुमानस्य व्याकरणार्थं पञ्चावयवेनेत्यादिप्रकरणम्। परार्थानुमिति लक्ष्यनिर्देशः। पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनमिति लक्षणम्। स्वनिश्चितार्थः साध्यः प्रतिपाद्यतेऽनेनेति स्वनिश्चितार्थप्रतिपादनं लिङ्गं तत्पञ्चावयवेन वाक्येन सहितं परार्थमनुमानम्। प्रतिपत्तिर्वा प्रतिपादनं स्वनिश्चितार्थविषयं ज्ञानं पञ्चावयवेन वाक्येन जनितं यतः कारकसमूहात् भवति तत्परार्थमनुमानमिति साध्यार्थवाक्यार्थवादिनां व्याख्यानम्। लिङ्गवाक्यार्थपक्षे त्वर्यतेऽनेनेत्यर्थो लिङ्गं प्रतिपाद्यत इति प्रतिपादनं पञ्चावयवेन प्रतिपाद्यमानं लिङ्गं परार्थानुमानमिति। यदि वा स्वनिश्चितार्थप्रतिपत्तिः प्रतिपादनं, तच्च पञ्चावयवेन वाक्येन जनितं परार्थमनुमानमिति। नन्वेतस्मिन्पक्षे कथं स्वार्थाद्विशिष्यते परार्थानुमानम। चक्षुरादिना शब्देन वा लिङ्गं प्रतिपद्य तस्मात्साध्यं प्रतिपद्यते इति कुतः स्वार्थपरार्थं इति भेद इति। न च परसम्पादिताच्छब्दाल्लिङ्गं प्रतिपद्यत इति विशेषः, चक्षुरादेरपि परसम्पादितत्वात्। शब्दरूपतावैलक्षण्यं तु वैधर्म्यमात्रमेव। अतः साध्यवाक्यार्थपक्षो दोषानुपपत्तेरग्राह्य इति। तथा च केवलं लिङ्गं चक्षुरादिना प्रतिपन्नं साध्यप्रतिपत्तौ स्वार्थानुमानमशब्दसहितम्। शब्दसहितं तु परार्थानुमानमिति विशेषः। तस्मादित्यनेन समर्थलिङ्गपरामर्शानन्तरमनित्य एवायमिति साध्यप्रतिपत्तेः संवेदनाच्च साध्यमेव वाक्यार्थः। तस्मादित्येवमन्तमेव वाक्यम्। शेषं चाभिप्रायनिवेदनमिति। न त्वार्थे साध्यवाक्यार्थपक्षे बाधकानुपपत्तेरित्यलमतिविस्तरेण।

पूर्वस्य सङ्ग्रहवाक्यस्य विवरणम्–पञ्चावयवेनैव वाक्येन, न द्व्यवयवेन दशावयवेन चेति। केषाम्? संशयितविपरीताव्युत्पन्नानां स्वनिश्चितार्थप्रतिपादनं परार्थमनुमानं विज्ञेयम्।

अथ निरवयवत्वाद्वाक्यस्यानुपपन्नमेतत् पञ्चावयवेनेति। तथा च वर्णानां न समुदितानामर्थप्रतिपादकत्वम्, क्रमभाविनामाशुविना-

शित्वेन समुदायासम्भवात् । न व्यस्तानाम्, एकस्मादेवार्थप्रतीतावन्येषामुच्चारणवैयर्थ्यात् । उपलभ्यते च शब्दादुच्चरितार्थप्रतिपत्तिः । अतस्तदन्यथानुपपत्त्या वर्णकलापादतिरिच्यमानः स्फोटात्मा प्रतीयत इति । तथा गौरिति शब्दोच्चारणादभिन्नाकारं विज्ञानं श्रोत्रव्यापारादुत्पद्यमानं दृष्टम् । न चेदं संशयविपर्ययव्यतिरेकादवयविज्ञानवदभिन्नमर्थं विना भवतीति । वर्णोच्चारणं तु स्फोटस्वरूपाभिव्यक्तये क्रियत इति न व्यर्थम् ।

असदेतत् । पूर्ववर्णानुगृहीतस्यान्त्यवर्णस्य स्वानुभवसहकारिणोऽर्थप्रतिपादकत्वात् । तथा चैकस्मिन् वर्णे ज्ञाते तेन क्रियते संस्कारः, पुनर्द्वितीयवर्णे ज्ञानं तेनापि पूर्ववर्णसंस्कारसहकारिणा संस्कार इति क्रमेणान्त्यवर्णज्ञानम् तस्मात् पूर्वसंस्काराभिव्यक्तावशेषवर्णानुस्मरणे सत्यन्त्यवर्णादर्थप्रतिपत्तिः । न चैवं घटाद्यनुभवजनितसंस्कारस्यानुभवान्तरसहकारिणः संस्कारारम्भकत्वेनातिप्रसङ्गः । तत्र विशिष्टादृष्टाभावात् तदभावस्तु कार्याभावेनैव ज्ञायत इति । अत्र च कार्यस्य सद्भावाद्विशिष्टोऽदृष्टः कारणत्वेन कल्प्यत इति ।

अन्ये तु शब्दार्थोपभोगप्रापकादृष्टनियमिताः पूर्ववर्णानुभवजनितसंस्काराः पूर्ववर्णेष्वेकं स्मरणमारभन्ते, तत्सहकारी चान्त्यो वर्णः पदम् । यदि वा संस्कारमेकं विचित्रमारभन्ते, तस्माच्च पूर्ववर्णेष्वेकं स्मरणमिति ।

अन्ये तु पूर्ववर्णानां तज्ज्ञानानां चातीतानामप्यन्त्यवर्णसहकारित्वमन्वयव्यतिरेकोपपत्तेः, यथाहि वर्त्तमानस्य कारणत्वमन्वयव्यतिरेकाभ्यां विज्ञातमेवमतीतस्यापीति । यदि वा पूर्ववर्णविनाशास्तज्ज्ञानप्रध्वंसाश्च समीपवर्त्तिनोऽन्त्यवर्णसहकारिण इति क्षीणार्थापत्तिः । एवंविधकल्पनानभ्युपगमे च वर्णोच्चारणवैयर्थ्यमेव स्यात् । न च स्फोटाभिव्यक्तमुच्चारणम्, समस्तव्यस्तविकल्पानुपपत्तेः । न समस्तैरभिव्यज्यते, समुदायानभ्युपगमात् । न व्यस्तैः, एकेनैवाभिव्यक्तौ शेषोच्चारणवैयर्थ्यप्रसङ्गात् । अथ कल्पनाऽऽश्रीयते सार्थप्रतिपत्तावपि समर्थेत्यलं स्फोटपरिकल्पनया । अभिन्नाकारं च ज्ञानमन्त्यवर्णविषयं वर्णत्वविषयं वा । यदि वा घनावस्थितिप्रत्यक्षेष्विव वर्णेषु भ्रान्तमभिन्नाकारं विज्ञानमिति न स्फोटसिद्धिः । शब्दाभिव्यक्ताविव स्फोटाभिव्यक्तावपि दोषा इति समान-

तया शब्दपरीक्षायामेवाभिधास्यन्त इत्यलम् । वाक्यकल्पना त्वेकस्मिन् पदे ज्ञानस्योत्पादः संस्कारस्य सङ्केतस्मरणस्य चोत्पद्यमानता ततः संस्कारस्य सङ्केतस्मरणस्य चोत्पादः पदार्थप्रतिपत्तेरुत्पद्यमानता पदज्ञानस्य विनश्यत्ता ततः पदार्थप्रतिपत्तेरुत्पत्तिः स्मरणस्य विनश्यत्ता पदज्ञानस्य विनाशः संस्कारस्य द्वितीयपदज्ञानस्य चोत्पद्यमानता ततो द्वितीयपदज्ञानस्योत्पादः पूर्वसंस्कारसचिवेन पदार्थज्ञानेन संस्कारस्योत्पादः संस्कारान्तरस्योत्पद्यमानता सङ्केतस्मरणस्याप्युत्पद्यमानता पदार्थप्रतिपत्तेर्विनश्यत्ता पूर्वसङ्केतस्मरणस्य विनाशः ततो द्वितीयपदज्ञानसंस्कारस्योत्पादः सङ्केतस्मरणस्याप्युत्पादः पदज्ञानस्य विनश्यत्ता पदार्थप्रतिपत्तेरुत्पद्यमानता पूर्वपदार्थप्रतिपत्तेर्विनाश इत्ययं न्यायः तावद्यावदन्त्यपदे ज्ञानम् । तेन च कल्पनया तत्संस्काराभिव्यक्तेरशेषपदार्थविषयं स्मरणं जन्यते । तेन च स्वानुभवेन च विशिष्टमन्त्यपदमेव वाक्यम्, तस्माच्च वाक्यार्थप्रतिपत्तिरिति । ननु पदज्ञानोत्पत्तेः पूर्वमदृष्टवशात्पदार्थविषयस्मरणोत्पादाभ्युपगमे तस्य पदज्ञानात्सङ्केतस्मरणकाले नावस्थानमिति पदार्थप्रतिपत्तेरूर्ध्वं कथं वाक्यार्थप्रतिपत्तिः । न च पदार्थप्रतिपत्तिं विनैव वाक्यार्थप्रतिपत्तिः, अदर्शनात् । अथ पदज्ञानादूर्ध्वं कल्पनया तत्संस्कारेण स्मरणं जन्यते, ततः पदज्ञानस्य विनश्यत्तेति सङ्केतस्मरणकाले तस्यानवस्थानात् पदार्थप्रतिपत्त्यभावे न वाक्यार्थप्रतिपत्तिरिति दूषणं तदवस्थमेव । असदेतत् । वाक्ये सङ्केतानुपपत्तेः । अन्त्यपदं वाक्यमेव । तदन्तार्थस्तु वाक्यार्थ इति । यदा च पूर्ववर्णतज्ज्ञानादूर्ध्वं कल्पनया तत्संस्कारेण स्मरणं जन्यते ततः पदज्ञानस्य विनश्यत्तेति सङ्केतस्मरणभावविशिष्टोन्त्यो वर्णः पदम् । तदेषा वाक्यकल्पना । अन्यथा पूर्ववर्णेषु ज्ञानद्वारेण संस्काराद्विचित्रस्मरणानुग्रहीतोन्त्यो वर्णः पदमित्यभ्युपगमेन पदार्थज्ञानानन्तरं पदज्ञानं स्यात्, वर्णज्ञानव्यवधानात् ।

अन्ये तु पूर्वार्थस्य प्रतिप्रतिसमाधानार्थमन्त्यपदज्ञानानन्तरं कल्पनया तत्संस्कारः सङ्केतानुभवजनितसंस्कारश्चैकं स्मरणमारभते । ततः पदार्थज्ञानस्योत्पादः पदज्ञानस्य विनश्यत्ता स्मरणानुभवयोश्चाविरोधः इति । ततः स्मरणानुभवविशिष्टादन्त्यपदाद्वाक्यार्थप्रतिपत्तिरिति ।

अन्ये तु यद्यप्यन्त्यपदज्ञानानन्तरं सङ्केतस्मरणात्पदार्थावबोधे सति पदज्ञानं विनष्टं, तथापि पुनस्तस्मिन्नेव ज्ञानमुत्पद्यते ततः कल्पनाया तत्संस्कारात् स्मरणोत्पादे सत्यन्त्यपदाद्वाक्यार्थप्रतिपत्तिरिति ।

असदेतत् । शब्दस्य विरम्य व्यापारप्रतिषेधात् । एकदा पदं स्वविषयज्ञानं कृत्वा पुनर्न करोतीति ।

अन्ये तु प्रतिज्ञादिपदस्य पदान्तरोच्चारणकालेऽप्याकाशे पदान्तरारम्भकत्वेनावस्थानं तावद्यावदन्त्यपदम्, ततः पञ्चभिः पदैः श्रोत्रदेशे वाक्यमवयविभूतमारभ्यते, ततो वाक्यार्थप्रतिपत्तिरिति । निरस्तं चैतदनुभवेन । न हि पूर्वपूर्वपदस्योत्तरोत्तरपदकाले सर्वेषां च वाक्यकालेऽनुभवोऽस्तीति ।

अन्ये त्वेकस्मिन् पदे ज्ञानं तेन क्रियते । संस्कारः पुनर्द्वितीयपदज्ञानं तेन प्राक्तनेन संस्कारेणान्यः संस्कार इति तावद्यावदन्त्यपदे ज्ञानमिति । ततः प्राक्तनसंस्काराभिव्यक्तौ पदचतुष्टयविषयं स्मरणमुत्पद्यते । तद्विशिष्टं चान्त्यपदं वाक्यमिति । न चात्रानुभवेन विरोधः, कारणांशस्यैव कीर्त्तनात् ।

अन्ये स्मरणेनानुभावस्याविरोधं मन्यमानाः कल्पनामाश्रयन्ते । पदज्ञानात् सङ्केतस्मरणस्योत्पादः पदार्थप्रतिपत्तेरुत्पद्यमानता ततः पदार्थज्ञानस्योत्पादः पूर्वपदज्ञानस्य विनश्यत्ता द्वितीयपदज्ञानस्योत्पद्यमानता ततो द्वितीयपदज्ञानस्योत्पादः पदार्थज्ञानस्य विनश्यत्ता पदज्ञानस्य विनाशः सङ्केतस्मरणस्योत्पद्यमानतेत्यनेन क्रमेणान्त्यपदज्ञाने सति वाक्यार्थप्रतिपत्तिः । न चात्र पूर्वपदपदार्थानुस्मरणेन प्रयोजनमस्ति । तत्कार्यस्य विनश्यदवस्थपदज्ञानेनैव कृतत्वात् । पूर्वपदानुरक्ते हि द्वितीयपदे ज्ञानमुत्पन्नं तदनुरक्तं तृतीयपदमित्यशेषपदानुरक्तमन्त्यपदमिति वाक्यम् ।

एतच्चासत् । यथाहि दण्डीति ज्ञानं दण्डानुरक्तमेव नैवं द्वितीयादिपदज्ञानं पूर्वपदानुरक्तमिति । न चायं नियमः सम्भवति—पूर्वपदानन्तरमेव द्वितीयादिपदोच्चारणं कतिपयकालव्यवधानेऽप्युच्चारणेऽर्थप्रतिपत्तिदर्शनादिति पूर्वैव कल्पना न्याय्या । अथास्त्वेवं वाक्यपरिकल्पना वाचकत्वं तु निषिध्यते अन्वयव्यतिरेकाभावात्, पदार्थेभ्यस्तु वाक्यार्थप्रतिपत्तिः । यत्र हि प्रमाणान्तरेणापि पदार्थ-

प्रसिद्धिस्तत्रान्तरेणापि वाक्यं वाक्यार्थप्रतिपत्तिर्दृष्टा। यथा—

पश्यतश्चक्षुषा रूपं हेषाशब्दं च शृण्वतः।
खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥

तथाच दूराच्चक्षुषा श्वेतं रूपमुपलभ्य हेषाशब्देन वाऽश्वत्वजातिमनुमिनोति खुरनिक्षेपशब्देन च धावनक्रियामवगत्य वाक्यं विनापि वाक्यार्थं प्रतिपद्यते। सत्यपि च वाक्ये पदार्थानामप्रतिपत्तेर्न वाक्यार्थप्रतिपत्तिः, यथा प्रसिद्धपदार्थैः कविभिर्विरचिते वाक्य इति। तस्मादभिहितपदार्थानां आकांक्षायोग्यतासन्निधिद्वारेण वाक्यार्थगमकत्वमिति। न युक्तमेतत्। शब्दस्याप्रामाण्यप्रसङ्गात्। तथा च पदरूपस्य तावदप्रामाण्यमनुवादकत्वात्। तदुक्तम्—

पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।
यच्चाधिक्यं भवेदेतत् स पदस्य न गोचरः॥

वाक्यन्तु पारम्पर्येणाप्यवाचकमिति कथं शब्दः प्रमाणं स्यात्। अथ पदैरभिहितानां च पदार्थानां गमकत्वादिति पारम्पर्येण शब्दः प्रमाणम्। तर्हि श्रोत्रपरिच्छिन्नस्य शब्दस्यार्थपरिच्छेदे व्यापारादिति पारम्पर्येण प्रत्यक्षस्यापि चोदनाविषये सन्निधिप्रामाण्योपपत्तेः कथं चोदनैव धर्मे प्रमाणम् प्रमाणमेव चोदनेति नास्यावधारणस्य व्याघातः। वाक्यस्यार्थपरिच्छेदकत्वानभ्युपगमे च प्रमाणान्तरासम्भवात् पदार्थानां प्रत्यक्षादिष्वन्तर्भावश्चिन्तनीयः। तत्रेन्द्रियार्थसन्निकर्षेण सह व्यापारानुपलब्धेर्न प्रत्यक्षेऽन्तर्भावः। अविनाभावस्यानुपपत्तेर्नानुमाने। अनुपपद्यमानार्थासम्भवान्नार्थापत्तौ। उपमानाभावयोश्च नियतविषयत्वमेव। प्रमाणान्तरस्य चानभ्युपगमादयुक्तमेतत्। न च पदानां स्वार्थप्रतिपत्तावेव चरितार्थत्वम्। उक्तन्यायेन वाक्यार्थप्रतिपत्तावपि व्यापारात्। विरम्य व्यापारस्त्वेकमर्थं प्रतिपाद्य पुनस्तमेव प्रतिपादयन्तीति प्रतिषिद्धः। यच्चेदं विनापि वाक्येन वाक्यार्थप्रतिपत्तिरित्युक्तम्। तदपरिज्ञानात्। वाक्येन हि जनिता वाक्यार्थप्रतिपत्तिः, प्रत्यक्षानुमानसम्पादिताः श्वेतोऽश्वो धावतीति बुद्धयः। यदपीदं पदार्थाप्रतिपत्तौ सत्यपि वाक्येन वाक्यार्थप्रतिपत्तिरिति। तदसत्। पूर्वपदपदार्थस्मरणानुगृहीतस्यान्त्यपदस्य वाक्यत्वाच्चावश्यमर्थप्रतिपादकत्वमिति व्यभिचाराभावः। अन्विताभिधानन्तु न सर्वपदानाम्, एकेनैव क्रियाकारकसंसर्गान्वित-

स्य पदार्थस्याभिधाने शेषपदोच्चारणवैयर्थ्यप्रसङ्गात् । अथान्त्यं पदमन्विताभिधायकम्, तस्यापि पूर्वपदानपेक्षित्वे तदुच्चारणवैयर्थ्यम् । सापेक्षित्वे तु नास्मत्सिद्धान्ताद्भेदः ॥

के पुनरवयवाः तदाह—

(भा०) अवयवाः पुनः-प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा । प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितुमुद्देशमात्रं प्रतिज्ञा । यथा द्रव्यं वायुरिति ।

अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति । यथाऽनुष्णोऽग्निरिति प्रत्यक्षविरोधी, घनमम्बरमित्यनुमानविरोधी, ब्राह्मणेन सुरा पेयेत्यागमविरोधी, वैशेषिकस्य सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी, न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी ।

(व्यो०) प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः, वाक्यैकदेशत्वात्, न पुनः परोपगता जिज्ञासादयः, तेषामशब्दरूपत्वात् ।

ततोऽपदेशक्रमेणावसरप्राप्तायाः प्रतिज्ञायास्तावल्लक्षणमुच्यते—अनुमेयोद्देशोऽविरोधी प्रतिज्ञेति । अनुमेयः प्रतिपिपादयिषितधर्मविशिष्टो धर्मी । धर्मविशिष्टता ह्यस्तित्वाद्यपेक्षया सर्वपदार्थेष्विति प्रतिपिपादयिषितपदम् । यो हि धर्मः प्रतिपादयितुमिष्टः तद्विशिष्टो धर्मी पक्षः । तस्योद्देशमात्रं प्रत्यक्षाद्यविरुद्धम् परेषामनिश्चितार्थाभिधायकं वचनं प्रतिज्ञेति । अपदेशस्य हेतोर्विषयापादनमर्थः प्रयोजनमस्येति प्रयोजनोपन्यासः । प्रयोगस्तु—प्रतिज्ञा इतरस्मात् भिद्यते प्रत्यक्षाद्यविरुद्धानुमेयोद्देशत्वात् । यस्तु न भिद्यते न चासावेवं यथोदाहरणादिरिति । अनुमेयोद्देशो वा प्रतिज्ञेति व्यवहर्त्तव्यम् यथोक्तानुमेयोद्देशत्वात्, यश्चैवं न व्यवह्रियते न चासावेवम्,

यथापदेश इति। उदाहरणन्तु यथा द्रव्यं वायुरिति। ननु चासा-
धनाङ्गं प्रतिज्ञावचनं तदन्तरेणापि सम्बन्धवचनमात्रादर्थप्रतीतेः।
तथाहि–यद्यत् कृतकन्तत्तदनित्यं दृष्टं यथा घटः तथाच कृतकः
शब्द इत्यत्र सामर्थ्यादेव प्रतिज्ञार्थसिद्धेर्व्यर्थं तदभिधानम्। अत्र
च प्रमेयस्य प्रमाणेनैव सिद्धेः सामर्थ्यं किंरूपमिति चिन्त्यम्। न
प्रत्यक्षस्वरूपम्, इन्द्रियार्थसन्निकर्षेण विप्रतिपत्तिविषयस्यापरि-
च्छेदात्। एवमागमेनापीति। अथानुमानमेव सामर्थ्यं तदवश्यमर्थ-
प्रतिपत्तौ पक्षधर्मत्वादिकम् अपेक्षत इति। प्रतिज्ञावचनमन्तरेण सप-
क्षासपक्षाप्रविभागे सति तदर्थाप्रतीतेर्न गमकमिति। अथाभिधीय-
मानानुमानव्यतिरेकेणान्यदनुमानं प्रस्तुतानुमानसामर्थ्यम्। न। त-
स्याप्यविनाभावानपेक्षित्वे न गमकत्वम्, प्रतिज्ञावचनं च विना तदर्था-
प्रतीतेरिति पूर्वदोषानुषङ्गात्। न चाभिप्रेतार्थप्रतिपादनायानुमानोप-
न्यासकाले तदर्थसिद्धयेऽनुमानान्तरं पश्यामः। न च कृतकत्वानि-
त्यत्वयोः सामान्येन व्याप्त्यभिधाने। समर्थसाधनस्य शब्द एवोपसं-
हाराद्विज्ञायते–अत्रैवानित्यत्वमस्याभिप्रेतमिति, सम्बन्धाभिधानस्य
विरुद्धाविरुद्धाभिप्रायेणापि समानतया विवेकप्रतिपत्तेरभावप्रसङ्गात्।
अथ यद्यत् कृतकन्तत्तन्नित्यं दृष्टमिति व्याप्तिवचने विरुद्धवादी अ-
नित्यत्वेन च कृतकत्वस्य व्याप्तिवचने तत्त्ववादीति विनिश्चयः। तन्न।
कृतकत्वनित्यत्वयोः व्याप्तेः प्रतिपादयितुमशक्यात्। तथा च न
कृतकेषु घटादिषु नित्यत्वं नित्येषु चाकाशादिषु कृतकत्वमिति दृ-
ष्टान्तदोषेण गतार्थत्वात् कथं विरुद्धत्वम्। यदा च नित्यः शब्द
इति प्रतिज्ञाय कृतकत्वानित्यत्वयोर्व्याप्तिं ब्रूते। तदाभिप्रेतार्थविप-
रीतेन व्याप्तिकथनाद्विरुद्धवाद्ययमिति विशेषाध्यवसायो भवत्येव।
ननु नित्यानित्याभिप्रायेणैवापि नित्यः शब्द इति वचनसम्भवात्
प्रतिज्ञावचने सत्यपि तत्त्वातत्त्ववादिनोरनिश्चय एव। न। वचनेनै-
वाभिप्रायविशेषप्रसिद्धेः। न हि वक्तॄणां वचनादृतेऽभिप्रायावबोधे
प्रमाणान्तरमस्तीति नित्यवचनान्नित्याभिप्राय एव निश्चीयते। अभि-
प्रायान्तरकल्पनायां प्रमाणाभावात्। अत एव वादिप्रतिवादिनोर्ज-
यपराजयव्यवस्था प्राश्निकैः क्रियते। यत्राप्यन्यथा प्रतिपद्यमानाः
विचित्राभिप्रायतया प्रकरणार्थमन्यथा ब्रुवते। तत्रापि वचनविशेषे-
णैवाभिप्रायविशेषोऽनुमेयः। विवक्षान्तराद्वचनान्तरानुत्पत्तेः। अभ्यु-

पगमे वा सम्बन्धवचनादप्यनिश्चय एव स्यात्--किं नित्यविवक्षातः कृतकत्वानित्यत्वयोः सम्बन्धवचनमुतानित्यत्वविवक्षात इति । अथ हेतुतदभावव्यवस्थाया वास्तवसम्बन्धापेक्षित्वाद्विपरीतविवक्षयापि कृतकत्वानित्यत्वयोरस्त्येव सम्बन्ध इति गमकत्वम् । तर्हि नित्यत्वाभिप्रायेणापि एवंसम्बन्धमुपदर्शयतस्तत्त्ववादित्वं स्यात्, प्रकारान्तरेण सम्बन्धोपदर्शनस्यैवाभावात् । तथा प्रतिज्ञावचनं विना सन्दिग्धविपर्यस्ताव्युत्पन्नपुरुषविशेषाणां प्रमेयविशेषष्वाकांक्षाप्रतिपत्तौ वादिनो विशेषेण पुरुषमात्रस्य प्रमेयमात्रप्रतिपादनाय प्रवर्त्तमानस्योन्मत्तवादित्वं स्यात् । अथ विवादात् पुरुषविशेषस्य प्रमेयविशेषापेक्षित्वप्रतिपत्तिः, तर्हि प्रतिज्ञाभ्युपगतैव, विवादस्य तद्रूपत्वात् । प्रतिज्ञा हि प्रतियोगिप्रतिज्ञान्तरमपेक्षमाणो विवादः । साधनसहिता तु प्रतिज्ञेति । न च शास्त्रादेव यथोक्तविशेषप्रतिपत्तिः, अनुमानोपन्यासकाले तस्याप्रमाणत्वात् । प्रामाण्ये वा किमनुमानेनेति । तस्मात् परार्थानुमानमिच्छतावश्यं कार्यं प्रतिज्ञावचनमिति । यच्चेदम्--

अर्थादर्थगतेः शक्तिः पक्षहेतुविधानयोः ।
नार्थे तेन तयोर्नास्ति स्वतः साधनसंस्थितिः ॥--

इत्युक्तम् । तत्रार्थस्यार्थगतौ सामर्थ्यं न निषिध्यते । केवलयोश्च पक्षहेत्वभिधानयोर्नार्थपरिच्छेदे सामर्थ्यम् अवयवान्तरसद्भावे च स्वार्थोपस्थापनद्वारेण सामर्थ्यमिष्यत एव । अन्यथा हेत्वभिधानस्याप्यसामर्थ्ये परार्थानुमानस्याप्रवृत्तिरेव । अथ हेतुवचनं स्वयमसमर्थमपि समर्थहेतुसंसूचकत्वात परप्रतिपत्तावुपहीयते, न चैवं प्रतिज्ञेत्याह—

साध्याभिधानात्पक्षोक्तिः पारम्पर्येण नाप्यलम् ।
शक्तस्य सूचकं हेतुवचो शक्तमपि स्वयम् ॥

तत्र पक्षोक्तिः प्रतिज्ञावचनं पारम्पर्येणाप्यलं समर्थं न भवतीति असाधनाङ्गमिति । साध्ये साध्याभिधानमसाधारणमेव, सपक्षासपक्षयोरप्रसिद्धेः । तथा साध्याभिधानस्य पक्षोक्तेः पर्यायत्वात्साध्याविशिष्टता चेति । अथ साध्यानुपयोगित्वात्साध्यानभिधानम्, तदप्यवयवान्तरसहितस्य साध्यप्रतिपादकत्वादसिद्धम् । विपर्यये त्वनैकान्तिकम् । केवलस्य हेतुवचनस्याप्यसाधकत्वात् । तथा

प्रतिज्ञावचनमप्यसाधनाङ्गमिति वदताऽभ्युपगतैव प्रतिज्ञेति व्याघातः। अथ स्वप्रतिपत्तौ प्रतिज्ञावचनस्यानुपलम्भात्परप्रतिपत्तावनुपादानम्। एवं तर्हि हेतुवचनस्याप्यदर्शनादनुपादानं स्यात्। अथ हेत्वर्थस्योपलम्भाद्युक्तं हेतुवचनम्, तर्हि प्रतिज्ञार्थस्योपलब्धेः कार्यं प्रतिज्ञावचनम्। यथा हेत्वर्थः कारणं साध्यप्रतिपत्तावेवं प्रतिज्ञार्थः कर्मेत्युभयोः कारणत्वाविशेषात् पक्षस्यावचने प्रमाणं नास्तीति। उपस्थापिते च कर्मणि करणानां प्रवृत्तेरुपलम्भात्तदुपस्थापनार्थमवश्यं कार्यं प्रतिज्ञावचनमित्यलं विस्तरेणेति।

अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतशास्त्रस्ववचनाविरोधिनोऽनुमेयोद्देशा निरस्ता भवन्तीति व्यवच्छेद्यं दर्शयति। यो ह्यनुमेयोद्देशो न प्रत्यक्षादिना विरुध्यते सा प्रतिज्ञेति।

अन्ये तु प्रत्यक्षाद्यविरुद्धोऽनुमेयस्तस्योद्देशः प्रतिज्ञेति व्याख्यां कुर्वते। यद्यप्यनुमेयस्य साध्यस्य साधनार्हतया प्रत्यक्षादिविरोधाभावान्न व्यवच्छेद्यमस्ति। तथापि किंभूतं साध्यमित्यपेक्षायां स्वरूपोपवर्णनार्थं प्रत्यक्षाद्यविरुद्धपदं प्रत्यक्षशब्देनैव विशिष्टार्थप्रतीताविन्द्रियार्थसन्निकर्षादिपदवदिति।

तच्चासत्। अविरोधिपदस्योद्देशपदेन सामानाधिकरण्यात्, कर्मणः करणेन विरोधाभावाच्चेति। यथाभूतमुपलभ्यमानं कर्म तथाभूतमनुपलभ्यमानमपीत्युद्योतकरपादैरुक्तम्। प्रतिज्ञा तु करणमिति युक्तस्तत्र विरोधः। तत्र प्रत्यक्षविरोधी यथाऽनुष्णोऽग्निरिति। अनुष्णतायास्त्वगिन्द्रियेण प्रतिभासनात्। घनमम्बरमित्यनुमानविरोधी आकाशस्यानुमानादेवामूर्त्तत्वविभुत्वप्रसिद्धेः। घनं निबिडावयवमित्युद्देशः तेन विरुध्यते एव। घनत्वे सत्यस्मदादीनामसञ्चारप्रसङ्गाच्चेति। अभ्युपगतशास्त्रविरोधी यथा वैशेषिकस्य सर्वं कार्यमुत्पत्तेः पूर्वं सदुत्पद्यत इति ब्रुवतो, वैशेषिकशास्त्रे ह्यसदुत्पद्यत इति प्रसिद्धम्। न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी। यदि हि शब्दोऽर्थप्रत्यायको न भवति कथमस्यार्थस्य ज्ञापनार्थं शब्दोच्चारणं न विरुध्येत इति। अथ प्रमाणत्रित्वे सति कथं विरोधबहुत्वम्? लोकप्रसिद्ध्यपेक्षया। यद्यप्यागमविरुद्धस्य प्रत्यक्षविरुद्धस्य चामी भेदास्तथापि स्ववचनाविरुद्धः स्वशास्त्रविरुद्धश्चेत्यादिव्यपदेशो जनानाम् अतस्तथैवाभिधानम्। अनुमानस्य त्वनुमानान्तरेण विरो-

धासम्भवेपि स्वकीयानुमानस्य बलवत्त्वादयं व्यपदेशः अनुमानेन प्रतिज्ञा बाध्यत इति ॥

प्रतिज्ञानन्तरं हेतोर्लक्षणमाह—

**(भा०)लिङ्गवचनमपदेशः । यदनुमेयेन सहचरितं तत्समानजातीये सर्वत्र सामान्येन प्रसिद्धं तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गमुक्तं, तस्य वचनमपदेशः । यथा क्रियावत्त्वाद्गुणवत्त्वाच्च, तथा च तदनुमेयेऽस्ति तत्समानजातीये च सर्वस्मिन् गुणवत्त्वमसर्वस्मिन् क्रियावत्त्वम् । उभयमप्येतदद्रव्ये नास्त्येव तस्मात् तस्य वचनमपदेश इति सिद्धम् ॥**

(व्यो०) लिङ्गवचनमपदेश इति । अर्थलक्षणत्वाद्वचसामिति लिङ्गलक्षणानुवादेनापदेशस्य लक्षणाभिधानमिति। यदनुमेयेन सहचरितं तत्समानजातीये च सपक्षे सामान्येन प्रसिद्धम् । यथाभूतो धर्मः पक्षे तत्समानः सपक्षे प्रसिद्धो न पुनर्विशेषोऽन्यधर्माणामन्यत्रावृत्तेः। सर्वत्रेति व्यापकाव्यापकभेदं दर्शयति । तद्विपरीते च विपक्षे सर्वत्र नास्त्येवेति विपक्षादत्यन्तं व्यावृत्तिं दर्शयति । प्रकरणसमकालात्ययापदिष्टयोश्च व्युदासः पूर्ववदित्येतावल्लिङ्गमुक्तमिति लक्षणानुवादः । तस्य वाचकं वचनं तृतीयान्तं पञ्चम्यन्तं वाऽपदेशः । तथाचायमितरस्मात् भिद्यते यथोक्तलिङ्गवचनत्वात्, यस्तु न भिद्यते न चासावेवम्, यथा प्रतिज्ञादिरिति । तस्य व्यापकाव्यापकस्वरूपोपदर्शनार्थमुदाहरणद्वयम्—यथा क्रियावत्त्वात् गुणवत्त्वाच्चेति । चशब्देन प्रकारान्तरं क्रियावत्त्वेन गुणवत्त्वेन चेति दर्शयति । अनयोर्लक्षणेनाभिसम्बन्धोपदर्शनार्थमनुवादः । तथा च तत् क्रियावत्त्वं गुणवत्त्वं चाऽनुमेये पक्षेऽस्ति । तत्समानजातीये च सपक्षे सर्वस्मिन्गुणवत्त्वमसर्वस्मिन् क्रियावत्त्वमस्तीति । उभयमप्येतदद्रव्ये सत्तादौ नास्त्येवेति । तस्य गुणवत्त्वस्य क्रियावत्त्वस्य च यथोक्तं वचनमपदेश इति सिद्धम् ॥

एतेन सामर्थ्यादपदेशाभासा निरस्ता भवन्तीति स्ववाक्ये परिवर्जनार्थं परवाक्ये चोद्भावनार्थं संलक्ष्यते । तत्रेदं सा-

मान्यलक्षणम्—अपदेशवदाभासमानाः सम्यङ्मतावपदेशाभासाः। हेतुरविपर्यस्तबुद्धेर्हेतुवदाभासत इति सम्यङ्मताविति पदम्। एतस्मिंश्च पक्षेऽन्यतरासिद्धस्य सम्यङ्मतौ हेतुवदाभासमानत्वं चिन्त्यम्। तस्य हि पक्षधर्मादिमत्त्वमिति। अतो हेतुवदाभासमानत्वाद्धेत्वाभासा इति सिद्धं लक्षणम्। यस्य तु हेतुरपि तस्य पक्षधर्मत्वाद्युपदर्शनेन हेतुत्वप्रतिपत्तौ यत्नः कार्यः। तत्प्रतिपत्तौ कारणत्वादिति। अत एवान्यतरासिद्धः यद्यपि वस्तुवृत्त्या हेतुस्तथापि पक्षधर्मतया परेणाप्रतिपन्नत्वादसिद्धबुद्धिं जनयतीति। प्रतिपन्ने च प्रमाणतः पक्षधर्मत्वेन साध्यसिद्धेर्भावाद्धेतुरेवेति।

अन्ये त्वहेतवः पक्षधर्मत्वाद्यन्यतमरूपानुविधानात्समानधर्माणो हेत्वाभासा इति।

अथ कियतां पुनरेवमनपदेशत्वमित्याह—

(भा०) एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तम्भवति।

तत्रासिद्धश्चतुर्विधः—उभयासिद्धोऽन्यतरासिद्धः तद्भावासिद्धोऽनुमेयासिद्धश्चेति। तत्रोभयासिद्धः-उभयोर्वादिप्रतिवादिनोरसिद्धः, यथाऽनित्यः शब्दः सावयवत्वादिति। अन्यतरासिद्धः-यथाऽनित्यः शब्दः कार्यत्वादिति। तद्भावासिद्धो-यथा धूमभावेनाग्न्यधिगतौ कर्तव्यायामुपन्यस्यमानो बाष्पो धूमभावेनासिद्ध इति। अनुमेयासिद्धो-यथा पार्थिवं द्रव्यं तमः कृष्णरूपवत्त्वादिति।

यो ह्यनुमेयेऽविद्यमानोऽपि तत्समानजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद्विरुद्धः· यथा यस्माद्विषाणी तस्मादश्व इति।

यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः सन्नेव स सन्देहजनकत्वात् सन्दिग्धः,

यथा यस्माद्विषाणी तस्माद्गौरिति । एकस्मिंश्च द्वयो-र्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः सन्निपाते सति संश-यदर्शनादयमन्यः सन्दिग्ध इति केचित् । यथा मूर्त-त्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरि-ति । नन्वयमसाधारण एवाचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासम्भवात् ततश्चानध्यवसित इति वक्ष्यामः । ननु शास्त्रे तत्रतत्रोभयथा दर्शनं संश-यकारणमपदिश्य इति । न, संशयो विषयद्वैतदर्शनात् । संशयोत्पत्तौ विषयद्वैतदर्शनं कारणम् तुल्यबलत्वे च तयोः परस्परविरोधान्निर्णयानुत्पादकत्वं स्यान्न तु संश-यहेतुत्वम् । न च तयोस्तुल्यबलवत्त्वमस्ति अन्यतर-स्यानुमेयोद्देशस्यागमबाधितत्वादयं तु विरुद्धभेद एव।

यश्चानुमेये विद्यमानस्तत्समानासमानजातीययो-रसन्नेव सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यव-सितः, यथा सत्कार्यमुत्पत्तेरिति । अयमप्रसिद्धोऽनप-देश इति वचनादवरुद्धः । ननु चायं विशेषः संशय-हेतुरभिहितः शास्त्रे तुल्यजातीयेष्वर्थान्तरभूतेषु विशे-षस्योभयथा दृष्टत्वादिति । नान्यर्थत्वात् । शब्दे विशेष-दर्शनात् संशयानुत्पत्तिरित्युक्ते, नायं द्रव्यादीनाम-न्यतमस्य विशेषः स्याच्छ्रावणत्वं किन्तु सामान्यमेव सम्पद्यते । कस्मात् ? तुल्यजातीयेष्वर्थान्तरभूतेषु द्र-व्यादिभेदानामेकैकशो विशेषस्योभयथा दृष्टत्वादि-त्युक्तं न संशयकारणम्, अन्यथा षट्स्वपि पदार्थेषु संशयप्रसङ्गात् तस्मात् सामान्यप्रत्ययादेव संशय इति॥

(व्यो०) असिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेश-

त्वमुक्तं भवतीति। तत्रासिद्धश्चतुर्विध इति विभागः । सामान्यलक्षणं चाशङ्क्यमानपक्षवृत्तित्वमर्थाल्लभ्यते । आशङ्क्यमाने हि पक्षे वृत्तिः सर्वस्य विशेषणासिद्धादिप्रपञ्चस्यास्तीति पक्षव्यापीदं सामान्यलक्षणम्। न चैवं पक्षावृत्तित्वं, तस्यासमर्थविशेषणादिभेदेष्वसम्भवात्।

केन रूपेण चतुर्विध इत्याह—उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धोऽनुमेयासिद्धश्चेति । तत्रोभयोर्वादिप्रतिवादिनोरसिद्धो यथा नित्य शब्दः सावयवत्वादिति । शब्दे हि सावयवत्वं नित्यानित्यवादिनोर्न प्रसिद्धमिति । अन्यतरासिद्धो यथा अनित्यः शब्दः कार्यत्वादिति। मीमांसकस्य हि प्रत्यभिज्ञानादिकमुपलभमानस्य शब्दे कार्यत्वं तावदसिद्धं यावदन्यतरपक्षव्युदासद्वारेण प्रमाणतो न व्यवस्थाप्यत इति निश्चीयते। निश्चिते तु पक्षधर्मत्वे ततः साध्यं प्रतिपद्यत एव। तद्भावासिद्धो यथा धूमाभावेनाग्न्यधिगताविति। धूमत्वेनानिश्चितं वाष्पादिकमुपलभ्यमानस्याग्न्यधिगतौ कर्त्तव्यायां तद्भावासिद्धो धूमवाभावस्यानिश्चितत्वादिति। अनुमेयासिद्धो यथा पार्थिवं तमः कृष्णरूपत्वादिति। सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वादयमाश्रयासिद्धो न त्वभावरूपतमोपेक्षया तस्य तु प्रमाणेन प्रसिद्धेः। पक्षीकरणे कृष्णरूपत्वं स्वरूपासिद्धं न त्वाश्रयासिद्धमिति। नन्वेवं विशेषणासिद्धादिप्रपञ्चस्यासङ्ग्रहणादयुक्तोऽयं विभागः। न। उभयासिद्धेऽन्यतरासिद्धे वान्तर्भावात्। तथाचोभयोर्विशेषणासिद्धो नित्यः शब्द अनभिधेयत्वे सति बाह्येन्द्रियप्रत्यक्षत्वात्। बाह्येन्द्रियप्रत्यक्षत्वे च सत्यनभिधेयत्वादित्युभयोर्विशेष्यासिद्धः। अन्यतरविशेषणासिद्धो नित्यः शब्दो कृतकत्वे सत्यमूर्त्तत्वात्। एवमन्येष्वपि पुरुषविशेषाभिप्रायेणासिद्धत्वादूह्यमिति । असमर्थविशेषणासिद्धो नित्यः शब्दः प्रमेयत्वे सति कृतकत्वात्। विपर्ययेणासमर्थविशेष्य इति। व्यधिकरणविशेषणासिद्धो नित्यः शब्दश्चाक्षुषत्वे सति कृतकत्वात्। विपर्ययेण व्यधिकरणविशेष्यासिद्ध इति। विरुद्धविशेषणासिद्धः—अनित्यः शब्दो कार्यत्वे सत्यमूर्त्तत्वादिति। अन्यथासिद्धविशेषणासिद्धो—नित्यः शब्दः अभ्यस्यमानत्वे सत्यमूर्त्तत्वादिति । नन्वेवमप्येषामुभयासिद्धेऽन्यतरासिद्धेऽन्तर्भाववत्तद्भावानुमेयासिद्धयोरप्यन्तर्भा-

वः स्यादिति कथं चातुर्विध्यम् । तयोरवान्तरभेदापेक्षया तद्भावासिद्धः परार्थानुमानस्य प्रस्तुतत्वादुभयासिद्धोऽन्यतरासिद्धश्चेति भिद्यते । एवमनुमेयासिद्धोऽपीति चातुर्विध्यम् ।

अन्ये तूभयासिद्धं यत्र विशेषणं विशेष्यं चासिद्धमिति । अन्यतरासिद्धन्तु विशेषणासिद्धं विशेष्यासिद्धं चेति मन्यन्ते । न चैतत् भाष्यकर्त्तुरभिप्रेतम् । वाद्यभिप्रायेणोदाहरणोपन्यासात् ।

अन्ये तु स्वार्थानुमानस्य तद्भावासिद्धोऽनुमेयासिद्धश्चेति भेदः सकलभेदसङ्ग्राहकः । परार्थानुमानस्य तूभयासिद्धोऽन्यतरासिद्धश्चेति । अत्र तु स्वार्थानुमानेन परार्थस्य भेदनिरूपणमिष्टमेव स्वातन्त्र्यन्तु निषिध्यते ।

विरुद्धलक्षणमाह—यो ह्यनुमेये पक्षे व्याप्त्याऽविद्यमानोऽपि तत्समानजातीये च सपक्षे सर्वस्मिन्नास्ति तद्विपरीते च विपक्षेऽस्ति स विपरीतसाधनाद्विरुद्धः । यथा यस्माद्विषाणी तस्मादश्व इति । विषाणिनं पिण्डं पक्षीकृत्याऽश्वोऽयमिति साधयतो विषाणित्वादिति हेतुर्विरुद्धः, अस्य ह्यनश्वेनैव व्याप्तत्वादयन्तु विपक्षैकदेशवृत्तिः । विद्यमानसपक्षस्तथा विपक्षव्यापकः—नित्यः शब्दः कार्यत्वादिति । अविद्यमानसपक्षो विपक्षव्यापकः—सर्वं कार्यं सर्वज्ञकर्तृकं प्रमेयत्वादिति । विद्यमानसपक्षो विपक्षैकदेशवृत्तिः—जीवच्छरीरं सात्मकं कार्यत्वादिति । अतश्चतुर्विधः ।

यस्तु सन्ननुमेये व्याप्त्या तत्समानासमानजातीययोः सपक्षविपक्षयोः सन्नेव स सन्दिग्धोऽनैकान्तिकः । सन्देहजनकत्वादिति कार्योपन्यासः, न तु लक्षणम , इन्द्रियादिष्वपि सद्भावेनातिव्यापकत्वात् । उदाहरणन्तु यथा तस्माद्विषाणी यस्मात् गौरिति । विषाणिनं पिण्डं पक्षीकृत्य गौरिति साधयतो विषाणित्वादिति हेतुरनैकान्तिकः, पक्षत्रयवृत्तित्वात् । अयं तु सपक्षव्यापकत्वे सति विपक्षैकदेशवृत्तिः । अगौरयं विषाणित्वादिति सपक्षैकदेशवृत्तित्वे सति विपक्षव्यापकः । सपक्षविपक्षैकदेशवृत्तिश्च नित्यः शब्दः अस्पर्शवत्त्वादिति । चतुर्विधो नैकान्तिकः ।

अथ चातुर्विध्यमनुपपन्नम् , अनैकान्तिकस्य लक्षण चाव्यापकं विरुद्धाव्यभिचार्यसाधारणयोरव्यापनादित्याशङ्काप्रतिषेधार्थमेकस्मिन्द्वयोरित्यादिप्रकरणम् । द्वयोर्हेत्वोर्विभिन्नधर्मिस्थयोः सन्निपाते

संशयादर्शनात् यथा नित्यः शब्दः कार्यत्वात् नित्यमाकाशम-कार्यत्वादित्येकस्मिन्धर्मिणीति पदम्। तथाप्येकस्मिन्धर्मिणि द्वयोः सन्निपातेति न संशयः यथाऽनित्यः शब्दः कार्यत्वान्नित्यस्त्व-मूर्त्तकार्यत्वादिति तदर्थं यथोक्तलक्षणयोः। तथाप्यविरुद्धार्थसा-धकयोरेवंविधयोरपि न संशयहेतुत्वं यथा नित्यः शब्दः कार्यत्वात् आश्रितो गुणत्वादतो विरुद्धयोर्विरुद्धार्थसाधकयोः सन्निपाते संश-यस्य दर्शनात् अयमन्यः सन्दिग्धोऽनैकान्तिक इति केचित्। उदा-हरणन्तु–यथा मूर्त्तामूर्त्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयो-रिति। मूर्त्तं मनः क्रियावत्त्वाच्छरवदित्येकः। अमूर्त्तं मनः अस्पर्श-वत्त्वादाकाशवदित्यपरः। उभयोश्च पक्षधर्मान्वयव्यतिरेकवत्त्वोप-लब्धेः किं मूर्त्तं मनः स्यादुतामूर्त्तमिति संशयः।

तदसत्। उभयोः प्रयोगासम्भवात्। तथा ह्येकस्मिन् साधने प्रयुक्ते तस्य निर्दुष्टतायां साध्यसिद्धेरन्यस्योपन्यासानुपपत्तिः। दुष्टतायां वा सैवास्याभिधेयेति। न च परस्परविरुद्धार्थसाधकत्व-मेवानुमानयोर्दोषः, प्रमाणेनोभयोरेकत्र सद्भावसिद्धौ विरोधस्या-भावप्रसङ्गात्। अव्यभिचार्यनुमानयोश्चावश्यमर्थव्यवस्थापकत्वम्। अव्यभिचारस्य तल्लक्षणत्वाद्विपर्यये तु व्यभिचारित्वमेव। यथा मूर्त्तं मनोऽस्पर्शवत्त्वे सति क्रियावत्त्वादमूर्त्तं च क्रियावत्त्वे सत्यस्प-र्शवत्त्वादिति समस्तयोः प्रयोगः। तत्राप्यसाधारणमित्याह–नन्वय-मसाधारण एवाचाक्षुषप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासम्भवा-दिति। यथाहि रूपातीन्द्रियगुणव्यतिरेकेणान्यगुणानां गुणव्यव-हारे साध्यसामान्यवत्त्वाद्द्रव्यत्वे सति नियमेनाचाक्षुषत्वं हेतुर्न स-पक्षे रूपादावस्ति। नापि विपक्षे घटादावित्यसाधारणः। तद्वत्सह-चरयोः क्रियावत्त्वास्पर्शवत्त्वयोरन्यतरपक्षासम्भवादित्यन्यतरस्मिन् सपक्षे विपक्षे वाऽसम्भवादसाधारणत्वम्। न चास्यासङ्ग्रह इत्या-ह–ततश्चानध्यवसित इति वक्ष्यामः। यदि वा चाक्षुषत्वप्रत्यक्षत्वव-दिति वैधर्म्योदाहरणम्। यथा हि गुणः शब्दः सामान्यवत्त्वाद्द्रव्यत्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वात् अन्धादिवदिति। अस्य सपक्षै-कदेशे वर्त्तमानस्य विपक्षादत्यन्तं व्यावृत्तिः। नचैवं क्रियावत्त्वा-स्पर्शवत्त्वयोरित्याह—संहतयोरन्यतरपक्षासम्भवादिति। एवं विरु-द्धाव्यभिचारिणोऽसाधारणस्य च संशयहेतुत्वे निराकृते सूत्रविरो-

घमुद्भावयन्नाह--ननु च शास्त्रे तत्रतत्रोभयथा दर्शनं संशयकारणमपदिश्यत इति । तत्र तत्र शास्त्रे तस्मिंस्तस्मिन्सूत्रे दृष्टं च दृष्टवदृष्ट्वा संशयो भवति । दृष्टं च मनसि क्रियावत्त्वं पुनर्दृष्टेन तुल्यं वर्त्तत इति दृष्टवदस्पर्शवत्त्वम् । अतो विरुद्धसाधनाभिसम्बद्धं मनो दृष्ट्वा संशेते-किं मूर्त्तमुतामूर्त्तं मन इति । यथादृष्टमयथादृष्टमुभयथा दृष्टत्वात् संशय इत्यसाधारणस्य च संशयहेतुत्वमुक्तम् । यथादृष्टं पक्षे पुनरयथादृष्टं सपक्षे विपक्षे च न दृष्टमत उभयथा दृष्टत्वात्संशयः । यदि वा यथादृष्टं क्रियावत्त्वेन पुनरयथादृष्टमस्पर्शवत्त्वेन, अत उभयथा उभाभ्यां सह दृष्टत्वात्संशय इत्युक्ते परेणाह--न युक्तमेतत् । संशयस्य विषयद्वैतदर्शनादुत्पत्तेः । अस्यैव विवरणम्-संशयोत्पत्तौ विषयद्वैतदर्शनमेव कारणमिति । विषयद्वैते दृश्यत इति विषयद्वैतदर्शनं सामान्यमेव, विषयस्य वा द्वैतं द्वैविध्यं यस्यैतत्तथोक्तं सामान्यं तद्दर्शनमेव विरुद्धविशेषानुवृत्तिहेतुत्वात् संशयकारणं न विरुद्धहेतुसन्निपातः असाधारणधर्मो वा, विरुद्धविशेषैः सहानुपलम्भेन तस्य तत्स्मारकत्वानुपपत्तेः । विरुद्धविशेषानुस्मृतिहेतुश्च धर्मः संशयकारणं न परस्परविरोधी समानबल इति । समानबलत्वे च तयोर्विरोधादितरस्येतरेण प्रतिबन्धान्निर्णयानुत्पादकत्वं स्यान्न संशयहेतुत्वम्, तैलादिनाभ्यक्तस्य शालिबीजस्य स्वाङ्कुरानुत्पादकत्ववदिति । अभ्युपगम्यैतदुक्तम्, परमार्थतो न च तयोस्तुल्यबलत्वमस्ति, अन्यतरस्यामूर्त्तं मन इत्यनुमेयोद्देशस्यागमविरोधित्वादिति । तथा चागमः 'तदभावादणु मन' इति । मूर्त्तत्वं चाव्यापिपरिमाणसम्बन्धित्वमेव । अथेदं वचनमप्रमाणम् । तर्हि मनःसद्भावासिद्धेराश्रयासिद्धमनुमानमिति यथोक्तलक्षणानुपपत्तिः । न च मूर्त्तत्वानभ्युपगमे युगपज्ज्ञानानुत्पत्त्यापि मनःसद्भावसिद्धिः, अमूर्त्तस्य सकलेन्द्रियाधिष्ठायकत्वेन युगपज्ज्ञानोत्पत्तिप्रसङ्गात् । अतः प्रतिज्ञावचनस्यागमेन विरोधादमूर्त्तानुमानं न यथोक्तलक्षणमिति । अयन्तु विरुद्धभेदः प्रतिज्ञावसरेऽभिहित एव । विरुद्धात् भिद्यत इति विरुद्धभेदः कालात्ययापदिष्टः, दुष्टपक्षोपन्यासानन्तरमुपन्यासात् ।

सूत्रद्वितयं चैकधर्मिविषयत्वेन संशयप्रतिपादनार्थमिति व्याख्येयम् । तथा च नियतसामान्यवस्तु प्रतिनियतविशेषैः सह-

चरितमेकदा दृष्टं पुनश्च तत्तुल्यमन्यविशेषाविनाभूतमतः काला-न्तरे देशाव्यवधानवशात्तद्दृष्ट्वा संशेते--किमिदमेवमाहोस्विदेवं न भवतीति। तथैकधर्मिविषयत्वेपि। यथादृष्टमिति। कि-ञ्चित् सामान्यवद्वस्तु केनचिद्विशेषेण सह दृष्टमयथादृष्टं तदेवोप-लब्धिविशेषशून्यं विशेषान्तरसहितं दृष्टम्, अत उभयथा दृष्टत्वा-त् उभाभ्यां सह दृष्टत्वादुभयशून्यस्योपलब्धौ तत्स्मरणे त्वसति संशयो भवतीति। यथा देवदत्तं सकेशमुपलभ्य पुनर्निष्केशमतः कालान्तरे तमेव वेष्टितशिरसमुपलभमानस्य किमयं सकेशो निष्के-शो वेति संशयो भवतीति।

समस्तसपक्षे त्वसाधारणस्यानध्यवसितत्वमाह--यश्च सन्ननु-मेये तत्समानासमानजातीययोः सपक्षविपक्षयोरसन्नेव च सोऽन्य-तरत्रासिद्धोऽनध्यवसायहेतुत्वान्निश्चयानुत्पादकत्वात्, अतस्तद्धे-तुत्वादनध्यवसितः। यथा सत् कार्यमुत्पत्तेरित्युदाहरणम्। सक-लं कार्यमुत्पत्तेः प्राक् सदनुत्पद्यमानत्वादिति हेतुर्न प्रत्याकाशादौ नापि खरविषाणादावित्यनध्यवसितः। न चास्य सूत्रणासङ्ग इत्या-ह--अयमप्रसिद्धोऽनपदेश इति वचनादवरुद्धः, सपक्षविपक्षयोर-प्रसिद्धत्वादिति। एवमसाधारणस्य संशयहेतुत्वे निरस्ते सूत्रवि-रोधमुद्भावयन्नाह--ननु चायं विशेषो संशयहेतुरभिहितः शास्त्रे तु-ल्यजातीयेषु सपक्षेष्वर्थान्तरभूतेषु विशेषेषु च विशेषस्यासाधार-णधर्मस्योभयथा दृष्टत्वात्सपक्षे विपक्षे चादृष्टत्वात्। इत्यनेनासा-धारणस्य संशयहेतुत्वमुक्तमित्याशङ्क्याह--न। सूत्रस्यान्यार्थत्वात्। सत्तासम्बन्धित्वादर्थशब्दवाच्यत्वाच्च किं द्रव्यं गुणः कर्म वा शब्द इति संशयः। न परं सत्तासम्बद्धाच्छ्रावणत्वाच्चेत्युक्ते सूत्रकारेण परो ब्रूते। श्रावणत्वविशेषस्योपलब्धेः कथं शब्दे संशय इत्याशङ्क्या-ह--नायं द्रव्यादीनामन्यतमस्येति। न द्रव्यस्य गुणस्य कर्मणो वा विशेषः श्रावणत्वं, किन्तु सामान्यमेव सम्पद्यते। कस्मात्? य-स्मात् गुणत्वे शब्दस्य साध्ये तुल्यजातीयेषु रूपादिषु शुक्लत्वा-दिविशेषो गुणत्वेन सहचरितो दृष्टः, अर्थान्तरभूतेषु चोत्क्षेपणादिषु कर्मत्वेन सहचरित उत्क्षेपणत्वादिविशेषो दृष्टः। तथा पृथिव्यादिषु पृथिवीत्वादिर्द्रव्यत्वेनेति। द्रव्यादिभेदानां द्रव्यगुणकर्मणामेकैकशः प्रत्येकं विशेषस्योभयथा दृष्टत्वाद्द्रव्यत्वगुणत्वादिसहचरितस्य दृ-

ष्टत्वात् । उपलभ्यते च शब्दे श्रावणत्वं विशेषः । तद्द्रव्यत्वादिविषयं स्मरणं भवत्येव । अतः किं द्रव्यस्य सतोऽयं विशेषः श्रावणत्वं गुणस्य कर्मणो वेत्युक्तेन न्यायेन संशयकारणं श्रावणत्वम् । न त्वसाधारणत्वेन षट्स्वपि पदार्थेष्वसाधारणधर्मोपलब्धौ संशयप्रसङ्गात् । उत्क्षेपणत्वादिविशेषानुपलब्धेश्च संशयकारणत्वम् अन्वयव्यतिरेकाभ्यामुपलब्धं न तदुपलब्धेः । न च सर्वस्माद्व्यावृत्तं विशेषमुपलभमानस्य विरुद्धविशेषानुस्मृतेरभावात्संशयो युक्तः, सद्भावेऽप्यनुच्छेदः स्यात्, निर्णयोत्पत्तिकारणाभावात् । तस्मात्सामान्यप्रत्यक्षादेव संशयो न विशेषदर्शनादित्युपसंहारः ।

यदि वा विशेषवत्त्वस्योभयथा सपक्षविपक्षाविशेषितस्योपलब्धेः तदुपलम्भाच्च शब्दे संशयः । न संशयकारणमसाधारणो धर्मः, षट्स्वपि पदार्थेषु संशयप्रसङ्गादिति । शेषं पूर्ववत् ॥

अथापदेशानन्तरं निदर्शनस्वरूपनिरूपणार्थं द्विविधं निदर्शनमित्यादिप्रकरणम्—

**(भा०) द्विविधं निदर्शनं साधर्म्येण वैधर्म्येण च । तत्रानुमेयसामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम् । तद्यथा यत् क्रियावत् तद्द्रव्यं दृष्टं यथा शर इति । अनुमेयविपर्यये च लिङ्गस्याभावदर्शनं वैधर्म्यनिदर्शनम् । तद्यथा यदद्रव्यं तत् क्रियावन्न भवति यथा सत्तेति ।**

**अनेन निदर्शनाभासा निरस्ता भवन्ति । तद्यथा नित्यः शब्दोऽमूर्तत्वात् यदमूर्तं दृष्टं तन्नित्यम्, यथा परमाणुर्यथा कर्म यथा स्थाली यथा तमः अम्बरवदिति यद् द्रव्यं तत् क्रियावद्दृष्टमिति च लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरीतानुगताः साधर्म्यनिदर्शनाभासाः ।**

**यदनित्यं तन्मूर्तं दृष्टम् यथा कर्म यथा परमाणुर्यथाऽऽकाशं यथा तमः घटवत् यन्निष्क्रियं तदद्रव्य-**

**श्रेति लिङ्गानुमेयोभयाऽव्यावृत्ताश्रयासिद्धाऽव्यावृत्तवि-परीतव्यावृत्ता वैधर्म्यनिदर्शनाभासा इति ॥**

(व्यो०) द्विविधमिति विभागो निदर्शनमिति निरुक्तिर्लक्षणम् । निदर्श्यते साध्यसाधनयोर्बहिर्व्याप्तिरस्मिन्निति निदर्शनं दृष्टान्तः।तथा निदर्श्यते साध्यसाधनयोर्व्याप्तिरनेनेति निदर्शनं व्याप्तिप्रतिपादकं दृष्टान्तवचनम् । तथाहि निदर्शनमितरस्मात् भिद्यते यथोक्तदृष्टान्तवचनत्वात् , यस्तु न भिद्यते न चासावेवं, यथा प्रतिज्ञादिरिति । तत् केन रूपेण द्विविधम्? साधर्म्येण वैधर्म्येण चेति । तत्रानुमेयसामान्येन साध्यसामान्येन लिङ्गसामान्यस्य साधनसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम् । साधनसामान्यं व्याप्यं व्यापकं च साध्यसामान्यमिति । यद्यत् क्रियावत्तत्द्रव्यं दृष्टं यथा शर इत्युदाहरणम् । अत्र हि द्रव्यत्वव्याप्तौ क्रियावत्त्वं साधनमस्तीति । अनुमेयविपर्यये साध्यविपर्यये लिङ्गस्य साधनस्याभावदर्शनं वैधर्म्यनिदर्शनम् । यद्यदद्रव्यं तत् क्रियावन्न भवतीति । यथा सत्तेति । सत्तायां हि द्रव्यत्वव्यावृत्त्या क्रियावत्त्वव्यावृत्तिरस्तीति वैधर्म्योदाहरणम् ।

अनेन निदर्शनवदाभासन्त इति निदर्शनाभासास्तत्समानधर्माणो निरस्ता भवन्तीति स्ववाक्ये परिवर्जनार्थं परवाक्ये चोद्भावनार्थं निरूप्यन्ते । तद्यथा नित्यः शब्दः अमूर्त्तत्वाद्यदमूर्त्तं तन्नित्यं दृष्टं यथा परमाणुरिति । साधनस्यामूर्त्तत्वस्य परमाणावभावात् साधनविकलमुदाहरणम् । अस्मिन्नेव साध्ये यथा कर्मेति साध्यविकलं, नित्यत्वस्य कर्मण्यभावात् । यथा स्थालीत्युभयविकलं, नित्यत्वस्यामूर्त्तत्वस्य च स्थाल्याममभावात् । यथा तम इति धर्मासिद्धं, सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वात् । अम्बरवदिति साध्यसाधनाधिकरणत्वेऽप्यनुगतो वचनदोषः । यद्यदमूर्त्तं दृष्टं तन्नित्यं दृष्टं यथाम्बरमिति वचनं विनानुगतस्याप्रतीतेः । यदि वा सम्यग्दृष्टान्तोप्याकाशासत्त्ववादिनो न साध्यसिद्धिं करोति यावन्न प्रमाणतो व्यवस्थाप्यत इत्यभाव उच्यते । अन्ये त्वाभासावसरे सम्यग्दृष्टान्तोपदर्शनमाभासानामाभासताज्ञापनार्थमित्थंभूतं हि निदर्शनमेतत् । प्रतिरूपकाश्चानीततदाभासा इति । यद्य

द्रव्यं तत्तत् क्रियावद्दृष्टमिति च विपरीतानुगमः । तथा चैवं ब्रुवतो द्रव्यत्वं व्याप्यं क्रियावत्त्वं च व्यापकं स्यादिति विपरीता व्याप्यव्यापकभावप्रतिपत्तिः । न चैतदस्त्याकाशादौ, क्रियावत्त्वं विनापि द्रव्यत्वोपलब्धेः । समव्याप्तिकेऽपि साधनस्य व्यापकत्वाभिधाने साध्यस्य प्रतिपत्तिर्न स्यादिति दूषणम् । विषमव्याप्तिके विपरीतानुगमो दोषो न समव्याप्तिक इति चान्ये । अत्रोपसंहारवाक्यम्—लिङ्गं चानुमेयश्चोभयं चाश्रयश्चेति लिङ्गानुमेयोभयाश्रयास्ते असिद्धा येष्वाभासेषु ते तथोक्ताः । ते चाननुगतश्च विपरीतानुगतश्चेति लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरीतानुगताः साधर्म्यनिदर्शनाभासाः ।

वैधर्म्यनिदर्शनाभासान्दर्शयति—यदनित्यं तन्मूर्तं दृष्टं यथा कर्मेति साधनाव्यावृत्तं, तस्य ह्यमूर्तत्वादिति । तस्मिन्नेव साध्ये यथा परमाणुरिति साध्याव्यावृत्तं व्यतिरेकोदाहरणं, परमाणोर्नित्यत्वादिति । यथाऽऽकाशमित्युभयाव्यावृत्तममूर्तत्वस्य नित्यत्वस्य च तत्राव्यावृत्तिरिति । यथा तम इति धर्मासिद्धम् । सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वादिति । घटवदित्युभयाव्यावृत्ताव्यव्यतिरेकः । यद्यन्नित्यं न भवति तत्तदमूर्तं न भवतीति वचनं विना व्यतिरेकस्याप्रतिपत्तेः । घटासत्त्ववादिनो वा प्रमाणेनाप्रतिपादितः न साध्यसिद्धिं करोतीत्याभास उच्यते । यन्निष्क्रियन्तद्द्रव्यं दृष्टमिति व्यतिरेकः । साध्यव्यावृत्त्या हि साधनव्यावृत्तिर्वाच्या, न तु साधनव्यावृत्त्या साध्यव्यावृत्तिः, क्रियावत्त्वाभावेप्याकाशादौ द्रव्यत्वस्य साध्यस्याव्यावृत्तेः । साधनाभावो हि व्यापकः साध्याभावो व्याप्य इति । एतेषामुपसंहारः—लिङ्गं चानुमेयश्चोभयश्चेति लिङ्गानुमेयोभयानि तान्यव्यावृत्तानि येष्वाभासेषु ते लिङ्गानुमेयोभयाव्यावृत्तास्ते चाश्रयासिद्धं चाव्यावृत्तं च विपरीतव्यावृत्तश्चेति लिङ्गानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ता वैधर्म्यनिदर्शनाभासा इति ॥

एवं सहाभासैर्निदर्शनमुपदर्श्यानुसन्धाननिरूपणार्थमाह—

**(भा०) निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिङ्गसामान्यस्यानुमेयेऽन्वानयनमनुसन्धानम् । अनुमेय-**

धर्ममात्रत्वेनाभिहितं लिङ्गसामान्यमनुपलब्धशक्तिकं निदर्शने साध्यधर्मसामान्येन सह दृष्टमनुमेये येन वचनेनानुसन्धीयते तदनुसन्धानम् । तथा च वायुः क्रियावानिति । अनुमेयाभावे च तस्यासत्त्वमुपलभ्य न च तथा वायुर्निष्क्रिय इति ॥

(व्यो०) निदर्शनेऽनुमेयसामान्येन सहेत्यादि । निदर्शने दृष्टान्ते अनुमेयसामान्येन साध्यसामान्येन सह दृष्टस्य लिङ्गसामान्यस्यानुमेये पक्षेऽन्वानयनमनुसन्धानम् । आनयनं प्रतिपादनमन्यस्यापि सम्भवतीति लिङ्गस्येति पदम् । अनुमेये च गृहीताविनाभावस्य लिङ्गस्य प्रतिपादकं हेतुवचनमपीति निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिङ्गसामान्यस्येति पदम् । अतोऽनुसन्धानमितरस्मात् भिद्यते निदर्शने गृहीतव्याप्तिकस्य लिङ्गस्यानुमेयेऽन्वानयनरूपत्वात् , यस्तु न भिद्यते न चासावेवं, यथा प्रतिज्ञादिरिति । संग्रहोक्तेर्विवरणमाह–अनुमेयधर्ममात्रत्वेनाभिहितं लिङ्गसामान्यं, न तु समर्थमिति मात्राभिधानेन दर्शयति । अनुपलब्धशक्तिकमिति । अनुपलब्धा शक्तिरविनाभावो यस्य तत्तथोक्तम् । पुनर्निदर्शनेऽनुमेयधर्मसामान्येन सह दृष्टं येन वचनेनानु पश्चात्सन्धीयते पक्षधर्मतया ख्याप्यते तदनुसन्धानम् । तदपि द्विविधं साधर्म्येण वैधर्म्येण च । तत्रानुमेयसामान्येन सह लिङ्गसामान्यस्य निदर्शने सत्त्वमुपलभ्याभिसन्धत्ते-तथा च क्रियावान्वायुरिति । वैधर्म्यनिदर्शने त्वनुमेयस्य द्रव्यत्वस्याभावे च तस्य क्रियावत्त्वस्यासत्त्वमुपलभ्य–न च तथा वायुर्निष्क्रिय–इत्युपसंहारः । निष्क्रियत्वप्रतिषेधेन क्रियावत्त्वमुपसंहरतीति । पृथग्वचनं तु प्रतिषेधाभिप्रायेणैव । ननु व्यर्थमनुसन्धानवचनं तदन्तरेणापि हेतुवचनात् गृहीतव्याप्तिकात्साध्यसिद्धेः । न । अनेन विनाऽबाधितविषयत्वस्याप्रतिपत्तेः । हेतुवचनं तु कारणमात्रोपस्थापकं, न तु गृहीतबाहिर्व्याप्तिकस्यान्तर्व्याप्तिप्रतिपादकमिति । यथाभूतेन द्रव्यत्वाविनाभाविना प्रमाणान्तराविरुद्धेन क्रियावत्त्वेन क्रियावान् करस्तथा च वायुरित्यन्तर्व्याप्तिप्रतिपत्तिः । तदभावे तु बहिर्व्याप्तिसद्भावेपि न गमकत्वम् । यथा शब्दस्यानित्यत्वे साध्ये सामान्यवत्त्वे सति चाक्षुषप्रत्यक्षस्तस्य कालात्ययापदिष्टस्य चेति । अत

एवात्रोपनयवचनं न निर्विषयत्वादप्रमाणम । न चोपसंहारं विना धर्मिविशेषेण सम्बन्धाप्रसिद्धौ तत्रैव साध्यविशेषप्रतिपत्तिः स्यात् । स्वार्थानुमानकाले चोपनयार्थस्योपलब्धेः कार्यं तद्वचनम्, स्वप्रतिपत्त्यनुसारेण परार्थानुमानप्रवृत्तेः । न च स्वप्रतिपत्तावेतस्यासत्त्वम्, अविनाभावसम्बन्धस्मरणानन्तरं परामर्शज्ञानस्यानुभवात् । अनभ्युपगमे च सम्बन्धस्मरणस्यानियतत्वात् नियतप्रदेशे प्रतिपत्तिर्न स्यादित्युक्तम । तस्मादयमित्यपरोक्षतानिर्देशस्याविनाभावसम्बन्धस्मरणानन्तरमुपलब्धेरस्ति परामर्शज्ञानम, अतस्तदुपन्यासार्थं कार्यमनुसन्धानवचनमिति ॥

अथ प्रत्याम्नायस्वरूपोपदर्शनार्थमनुमेयत्वेनोद्दिष्ट इत्यादि प्रकरणम्—

(भा०)अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । प्रतिपाद्यत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन वाक्येन निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । तस्माद्द्रव्यमेवेति । न ह्येतस्मिन्नसति परेषामवयवानां समस्तानां व्यस्तानां वा तदर्थवाचकत्वमस्ति । गम्यमानार्थत्वादिति चेन्न । अतिप्रसङ्गात् । तथाहि प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम् विदुषामन्वयव्यतिरेकस्मरणात् तदर्थावगतिर्भविष्यतीति तस्मादत्रैवार्थपरिसमाप्तिः । कथम् ? अनित्यः शब्दः इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते प्रयत्नानन्तरीयकत्वादित्यनेनानित्यत्वसाधनधर्ममात्रमभिधीयते । इह यत् प्रयत्नानन्तरीयकं तदनित्यं दृष्टम् यथा घट इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते । नित्यमप्रयत्नानन्तरीयकं दृष्टम् यथाऽऽकाशमित्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते । तथा च प्रयत्नानन्तरीयकः

शब्दो दृष्टो न च तथाऽऽकाशवदप्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते। तस्मादनित्यः शब्द इत्यनेनानित्य एव शब्द इति प्रतिपिपादयिषिताऽर्थपरिसमाप्तिर्गम्यते। तस्मात् पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते इत्येतत्परार्थानुमानं सिद्धमिति॥

(व्यो०) अनुमेयत्वेन अनुमानयोग्यत्वेनोद्दिष्टे चानिश्चिते परेषां संशयितविपरीताव्युत्पन्नानां पुनर्निश्चयापादनार्थं प्रतिज्ञाया वचनं प्रत्याम्नायः। संग्रहोक्तेर्विवरणमाह—अनुमेये धर्ममात्रे प्रतिपाद्यत्वेन साध्यत्वेनोद्दिष्टे चानिश्चिते च परेषां, किंविशिष्टानाम्? इत्यादिभिराहितशक्तीनामिति। आहिता शक्तिरविनाभावो यस्य लिङ्गस्य यैस्ते तथोक्तास्तेषाम्, एतस्मात्साधनात् भविष्यति साध्यसिद्धिरित्येवं कृतास्थानामिति। निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नाय इति। पुनरुक्तमात्रव्यवच्छेदार्थं प्रतिज्ञायाः पुनर्वचनमिति पदम्। तथाऽप्यनित्यः शब्दो नित्यः शब्द इति पुनरुक्तव्युदासार्थं निश्चयोपादानार्थमिति पदम्। अविप्रतिपन्नस्यैतस्मादपि निश्चयो भवतीति तदर्थं परेषामिति। तथापि तेषां मध्ये कस्यचिदेकावयवोपदर्शनेनान्वयव्यतिरेकानुस्मरणद्वारेणार्थप्रतिपत्तिर्भवतीति परिसमाप्तेन वाक्येनेति ग्रहणम्। यस्मिन्नवयवे सति वाक्यं परिसमाप्यत इति। तदेवं प्रत्याम्नाय इतरस्मात् भिद्यते यथोक्तलक्षणत्वादिति। ननु प्रतिज्ञावचनस्य तु विनाशित्वेनावस्थानासम्भवात् कथं पुनर्वचनमिति। तत्समानशब्दोच्चारणात्। यथा क्षणिकत्वेपि कर्मणः पूर्वसमानाभिनयकरणात् पुनर्नृत्यतीति व्यपदेशः तद्वत् प्रतिज्ञासमानप्रयोगकरणात् पुनर्वचनमिति व्यपदेशो भवत्येव। अतिशये पुनःशब्दो विवक्षित इति प्रतिज्ञा पक्षः तस्य पुनर्वचनं घटत एव। लिङ्गवाक्यार्थवादिनस्तु प्रतिज्ञायते अनेनेति प्रतिज्ञा लिङ्गं तस्य पुनर्वचनं प्रत्याम्नाय इति। उदाहरणन्तु तस्माद्द्रव्यमेवेति। एतेनाद्रव्यत्वप्रतिपादकप्रमाणाभावोऽप्युपदर्शित एव। अथ व्यर्थं प्रत्याम्नायवचनं, सम्ब-

न्धाभिधानादेव विवक्षितार्थप्रसिद्धेः । तदुक्तम्—डिण्डिकरागं परित्यज्याक्षिणी निमील्य थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ चिन्तय तावत् किमियताऽर्थप्रतिपत्तिर्भवति नवेति । यदिह भवति किमनया शब्दमालया । न भवतीति न वाच्यम् । दृष्टत्वात् । नैतदेवम् । प्रतिज्ञावचनं विनान्वयव्यतिरेकाप्रसिद्धौ सम्बन्धाभिधानस्यागमकत्वेन पूर्वमेव व्यवस्थापितत्वात् । अथ प्रतिज्ञादेरेवार्थप्रतिपादकत्वमस्तु–किं प्रत्याम्नायेन, तथाहि—प्रतिज्ञावचनैर्विषयव्यवस्थापनाद्धेतूदाहरणाभ्यां बहिर्व्याप्तिप्रसिद्धावुपनयेनान्तर्व्याप्त्युपदर्शने सत्यवश्यमभिप्रेतार्थसिद्धिरिति । सत्यमेतत् । तथाप्यवश्यंभाविनोऽर्थस्य प्रतिज्ञादिना प्रतिपादितस्य प्रतिपादनार्थमवश्यं कार्यं निगमनमित्याह–न ह्येतस्मान्निति। पूर्वेषामवयवानां समस्तानां तदर्थवाचकत्वमस्ति । व्यस्तानामितरेतरव्यावृत्तस्वार्थव्यवस्थापने चरितार्थत्वमित्यन्यदतो वाच्यम् । यस्य सहकारिणां पूर्वपदानां समस्तानामपि स्मृत्युपस्थायिनां वाक्यार्थप्रतिपादकत्वमिति । अथ साधनस्यान्तर्व्याप्तिबाहिर्व्याप्त्यभिधाने सति साध्यविशेषो गम्यत एवेत्याह–गम्यमानार्थत्वादिति चेत् । न । अतिप्रसङ्गात् । तथाहि–प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम्, स्वत एव विदुषां हेतूपलम्भे सत्यन्वयव्यतिरेकानुस्मरणं तस्माच्चार्थाधिगतिर्भविष्यतीति विशेषाभिधानवैयर्थ्यं स्यात् । अथ परं प्रतिपादयता वचनेनैव प्रतिपादनं कार्यमिति शेषाणां प्रयोगः । तर्हि वाक्यार्थप्रतिपादनार्थं निगमनमपि कार्यम् । न च प्रतिपाद्याभिप्रायेण प्रयोगो युक्तः । तस्य मनुष्यधर्मणा साक्षादप्रतीतेरव्यवस्थापनाच्च । तथाहि–कश्चिदेकस्मादेवावयवादर्थं प्रतिपद्यते कश्चिद्द्वाभ्यामन्यस्त्रिभिरित्यनवस्थितत्वात्प्रतिपाद्यानां तदभिप्रायानिश्चये प्रयोगानुपपत्तिरेव स्यात् । अतः परं प्रतिपादयता स्वप्रतिपत्त्युपायोपदर्शनं कार्यमिति पञ्चानां प्रयोगो युक्तः । तथाहि—प्रदेशस्थं धूममुपलभ्याविनाभावसम्बन्धं स्मृत्वा तथा चायं धूमवानिति परामृशति, ततः साध्यं प्रतिपद्यते । तस्मादग्निमानिति निगमनार्थस्याप्युपलब्धेः परप्रतिपादनाय तदुपन्यासो युक्त एवेति, पञ्चानां प्रयोगः कार्य इत्याह भाष्यकारः–तस्मादत्रैवार्थप्रतिसमाप्तिरिति ।

अन्ये त्वन्तर्व्याप्तिप्रतिपादनार्थं निगमनमिति मन्यन्ते। अनुसन्धानात् पक्षव्यापकत्वप्रसिद्धौ विपरीतप्रसङ्गप्रतिषेधार्थं निगमनमिति। विपरीतार्थव्यवस्थापकप्रमाणस्याप्रामाण्योपदर्शने सति पक्षे व्याप्तिः प्रतीयत एव। यत्र च परपक्षाप्रतिषेधस्तत्र हेतोर्न गमकत्वम्। यथा मूर्खोऽसौ तत्पुत्रत्वादुपलभ्यमानतत्पुत्रवदिति। अत्र हि तत्पुत्रस्यामूर्खत्वे न किञ्चित् बाधकमस्तीति। तत्साधकप्रमाणाभावश्च निश्चित एवेत्यन्यथासिद्धं साधनमेतत्। अथाविनाभूतस्य प्रमाणविरोधाभावान्न युक्तं विपरीतप्रमाणस्याप्रामाण्योपदर्शनमिति चेत्। न। तदन्तरेणाविनाभावस्यैवाप्रसिद्धेः। तथाहि—नित्यत्वप्रतिपादकप्रमाणस्य प्रामाण्ये सति न शब्दे कृतकत्वस्यानित्यत्वेन व्याप्तिः स्यादिति। न च परपक्षप्रतिषेधकादेव स्वपक्षसिद्धिः, व्यधिकरणत्वाद्धेतोरपि वैयर्थ्यप्रसङ्गाच्चेति। परपक्षप्रतिषेधे तूपदर्शितबहिर्व्याप्तिकं पक्षे चोलभ्यमानं भवत्येव साधनमिति निगमनप्रयोगः कार्यः। अथ प्रतिज्ञावचनमेव परपक्षप्रतिषेधसहायं साधनमिति चेत्। न। तस्य साध्यमात्राभिधायकत्वात्, साध्यमित्यर्हत्यर्थे शक्यार्थे वा कृत्याभिधानात् कथं तद्वचनात्तस्य सिद्धिः। तस्माद् बहिर्व्याप्तिवदन्तर्व्याप्तिं समर्थयता अबाधितविषयत्वासत्प्रतिपक्षत्वप्रतिपादनार्थमेवावयवान्तरमभिधेयम्। अथ प्रकरणसमकालात्ययापदिष्टयोरपि बहिर्व्याप्तिसद्भावात् गमकत्वं स्यात्। अस्ति च तयोः पक्षव्यापकत्वे सत्यन्वयव्यतिरेकसद्भाव इति। अयुक्तम्। तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धायत्तस्त्वव्यभिचारो न भवतीत्युक्तं व्याप्तिसमर्थनावसरे। तस्मादुक्तन्यायेनात्रैवार्थपरिसमाप्तिरिति।

एवं विभिन्नप्रकरणेष्ववयवानां स्वरूपोपदर्शनेऽप्येकत्र तत्स्वरूपपरिज्ञानापेक्षया प्रश्नः कथमिति। अनित्यः शब्द इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यत इति प्रतिज्ञैषा। प्रयत्नानन्तरीयकत्वादित्यनेन अनित्यत्वसाधनधर्ममात्रमभिधीयते, न तु समर्थमिति हेतुवचनम्। इह यत्प्रयत्नानन्तरीयकन्तदनित्यं दृष्टं यथा घट इत्यनेन साध्यसामान्येन सह साधनसामान्यस्यानुगममात्रमुच्यत इति साधर्म्योदाहरणम्। नित्यमप्रयत्नानन्तरीयकं दृष्टं यथाऽऽकाशमित्यनेन साध्याभावेन साधनस्यासत्त्वं व्याख्यायत इति वैधर्म्योदाहरणम्। तथा च शब्दः प्रयत्नानन्तरीयकः, न च तथा—प्रयत्नानन्त-

रीयको न भवतीत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते । तस्मादनित्य एवेत्यनेनानित्य एव शब्द इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यत इत्यभिप्रेतार्थसिद्धिर्भवतीति । अतः पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियत इति सिद्धम् । अत्र च शब्दविशेषस्य पक्षीकरणे प्रयत्नानन्तरीयकत्वं साधनं विवक्षितमिति ज्ञेयम् । अन्यथा हि शब्दमात्रपरिग्रहे प्रयत्नानन्तरीयकत्वं भागासिद्धं स्यात्, न हि प्रयत्नानन्तरं सर्वशब्दानां जन्मास्तीति ॥

अथ निर्णयो विद्यान्तरमिति केचित् । तन्निषेधार्थं विशेषदर्शनजमित्यादि प्रकरणम्—

**(भा०)विशेषदर्शनजमवधारणज्ञानं संशयविरोधी निर्णयः । एतदेव प्रत्यक्षमनुमानं वा । यद् विशेषदर्शनात् संशयविरोध्युत्पद्यते स प्रत्यक्षनिर्णयः । यथा स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेष्वप्रत्यक्षेषूभयविशेषानुस्मरणात् किमयं स्थाणुः पुरुषो वेति संशयोत्पत्तौ शिरःपाण्यादिदर्शनात् पुरुष एवायमित्यवधारणज्ञानं प्रत्यक्षनिर्णयः । विषाणमात्रदर्शनाद् गौर्गवयो वेति संशयोत्पत्तौ सास्नामात्रदर्शनाद् गौरेवायमित्यवधारणज्ञानमनुमाननिर्णय इति ॥**

(व्यो०) परार्थानुमानानन्तरमस्यान्तर्भावनिरूपणमत्राप्यन्तर्भावज्ञापनार्थम् । निर्णय इति लक्ष्यनिर्देशोऽवशिष्टं लक्षणम् । अवधारणं च ज्ञानं हि विपर्ययज्ञानमपि भवति न तु विशेषदर्शनाज्जायते विशेषदर्शनजं चोभयज्ञानमपीत्यवधारणग्रहणम् । तथापि विशेषदर्शनजमवधारणज्ञानं निर्णय इत्युक्ते व्यभिचाराभावाद्यर्थं संशयविरोधीति पदम् । न । विशिष्टनिर्णयलक्षणार्थत्वात् । यद्यपि विशेषदर्शनजमवधारणज्ञानमिति सकलनिर्णयव्यापीदं सामान्यलक्षणं तथापि संशयविरोधीति पदं संशयपूर्वकस्य निर्णयस्य लक्षणार्थम् । तथाच नैयायिकैरुक्तम्-'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' इति (१अ०१आ०सू०४१) संशयपूर्वकस्य लक्षणम्। विमृश्येति विमर्शं कृत्वा

पक्षप्रतिपक्षाभ्यामिति तद्वचनाभ्यां स पुनः साधनदूषणाभ्यां निर्णय इति। अथ विशेषदर्शनात् संशयो व्यावर्त्तते न निर्णयादिति कथं तद्विरोधित्वम्। उपचारेण, निर्णयकारणस्य संशयविरोधित्वान्निर्णयस्तद्विरोधीत्युक्तम्। अस्यान्तर्भावमाह—एतदेव प्रत्यक्षमनुमानं वा न ज्ञानान्तरम्। प्रत्यक्षसामग्रीजन्यं हि प्रत्यक्षमनुमानसामग्रीजन्यं त्वनुमानमिति। यद्विशेषदर्शनात्संशयविरोध्युत्पद्यते स निर्णय इति प्राक्तनस्य विवरणम्। अत्र स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेष्वप्रत्यक्षेषूभयविशेषानुस्मरणात् स्थाणुः पुरुषो वेति संशयोत्पत्तौ सत्यां शिरःपाण्यादिविशेषदर्शनात् पुरुष एवायमित्यवधारणज्ञानमिन्द्रियार्थसन्निकर्षादुत्पत्तेः प्रत्यक्षनिर्णयः। विषाणमात्रदर्शनादिति। पिण्डव्यवधानेऽपि सादृश्यविशिष्टविषाणदर्शनात् गौर्गवयो वेति संशयोत्पत्तौ सत्यां सास्नामात्रदर्शनादविनाभावसम्बन्धस्मरणे सति परामर्शज्ञानानन्तरं गौरेवायमित्यवधारणं ज्ञानमनुमानं निर्णयः॥

अथ स्मृतेः कार्यकारणविषयस्वरूपनिरूपणार्थं लिङ्गदर्शनेच्छास्मरणाद्यपेक्षादित्यादि प्रकरणम्—

**(भा०) लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पटुत्वभ्यासादरप्रत्ययजनिताच्च संस्काराद् दृष्टश्रुतानुभूतेष्वर्थेषु शेषानुव्यवसायेच्छानुस्मरणद्वेषहेतुरतीतविषया स्मृतिरिति॥**

(व्यो०) लिङ्गदर्शनं चेच्छा चानुस्मरणं चेति तथोक्तानि तान्यादिर्येषामित्यादिपदेन प्रणिधानादेर्ग्रहणम्, तान्यपेक्षत इति तदपेक्षस्तस्मादात्ममनसोः संयोगविशेषादित्यसमवायिकारणनिर्देशः। लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षाद्पटुत्वभ्यासादरप्रत्ययजनिताच्च संस्कारादिति निमित्तकारणनिर्देशः। दृष्टश्रुतानुभूतेष्वर्थेष्विति। दृष्टः प्रत्यक्षेण श्रुतः शब्देनानुभूतोऽनुमानेन।

अन्ये तु दृष्टश्चक्षुषाऽनुभूतस्त्वगिन्द्रियेणेति। तत्र लिङ्गं दर्शयति—शेषानुव्यवसायस्मरणेच्छाद्वेषहेतुरिति। उपयुक्ताल्लिङ्गादनुमेयः शेषः, सोऽनुव्यवसीयते अनेनेति शेषानुव्यवसायः परामर्शज्ञानं तस्य हेतुरविनाभावसम्बन्धस्मरणं तथा पदस्मरणाद्वाक्यस्मरणं सुखस्मरणा-

दिच्छा दुःखस्मरणाद्द्वेष इति । अतीतविषयेति स्वरूपकथनम् । अतीतो विषयो यस्याः सा तथोक्तेति । नन्वयुक्तमेतत् । विद्यमानेऽपि वस्तुनि स्मरणस्य दर्शनादित्यव्याप्तिरतिव्याप्तिश्चानुमानादेरतीतविषयत्वादिति । अथ चोदनैव भूतं भविष्यन्तं विप्रकृष्टादिकमर्थं प्रकाशयति नान्यत् किंचनेन्द्रियादिकम् इति चेत् । न । अनुमानस्याप्यतीताद्यर्थप्रकाशकत्वेनोपलम्भात्तथाच मेघोन्नत्या भविष्यति वृष्टिरित्यनुमीयते, नदीपूराच्च विशिष्टादुपरिष्टाद्वृष्टिरित्युक्तम् । प्रत्यक्षं चात्राविनाभावग्राहकमभ्युपेयम् । अन्यथा व्याप्तिग्रहणाभावेऽनुमानमेव न प्रवर्त्तेत । न चानुमानेनैवाविनाभावग्रहणम् । अनवस्थाप्रसङ्गात् । वर्त्तमानेन चाविनाभावग्रहणे कथमतीताद्यर्थानुमानं स्यात् । अन्येनाविनाभावग्रहणेऽन्यस्यानुमितावतिप्रसङ्गात् । तस्मादतीतविषयत्वं व्याख्येयमुपचारेण । यत्र हि विषयेऽनुभवोऽतीतस्तत्र स्मृतिरुत्पद्यते इति ।

अन्ये त्वतीतो व्यवहितो विषयो यस्यानुभवस्यासावतीतविषयः स विषयो यस्याः सातीतविषयेति प्राप्ते सत्येकस्य विषयस्य लोपो द्रष्टव्यः, इत्यतीतानुभवविषयत्वं लभ्यत इति मन्यन्ते ।

अथार्थजत्वमेव स्मृतेः कस्मान्नेष्यते । अर्थविनाशेऽप्युत्पादात् । न च यद्देशकालालिङ्गितेऽनुभवज्ञानमुत्पन्नं तदालंबनमेव न्याय्यम् । स्मृतिकाले तस्याविद्यमानतया विषयत्वाभावात् । बाह्येन्द्रियाणां च स्मृतिजन्मनि प्रत्येकं व्यभिचारादन्तःकरणस्य व्यापारो निश्चीयते । न च तस्य स्वातन्त्र्येण बहिर्विषये व्यापारः सम्भवतीत्यनर्थजत्वमेव न्याय्यम् । अवश्यं चार्थजत्वे सत्यव्यभिचारित्वादिधर्मोपेतत्वात् प्रमारूपतायां स्मृतेः प्रमाणादुत्पत्तिर्वाच्या । अनुमानादेश्च व्यापारानुपलब्धेरन्तःकरणस्य स्वातंत्र्येण तदुत्पत्तौ प्रामाण्ये सति स्मृतेरपरोक्षत्वं स्यात् । न चैतदस्ति, तस्मान्निर्विषयत्वमेव ॥

अथार्षज्ञानस्य कारणविषयप्रमाणनिरूपणार्थमाम्नायविधातॄणामित्यादिप्रकरणम्—

**(भा०) आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत् प्रातिभं य-**

**र्थनिवेदनं(१) ज्ञानमुत्पद्यते तदार्षमित्याचक्षते। तत्तु प्रस्तारेण देवर्षीणाम्। कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति॥**

(व्यो०) आम्नायो वेदः श्रुतिस्मृतिलक्षणस्तस्य विधातारः कर्त्तारस्तेषामृषीणामुत्पद्यते यत्प्रातिभं ज्ञानमिति। प्रतिभया संस्कारविशेषेण निर्वर्त्तितं यथात्मनिवेदनं यथा तस्य पदार्थस्यात्मा स्वरूपं तन्निवेदनं तदालम्बनमुत्पद्यते तदार्षमित्याचक्षते। केष्वर्थेषूत्पद्यते? अतीतानागतवर्त्तमानेषु। किंविशिष्टेषु? अतीन्द्रियेषु धर्मादिष्वादिपदेन परमाण्वादेर्ग्रहणमिति। ग्रन्थोपनिबद्धेषु परमाण्वादिष्वनुपनिबद्धेषु च इयानात्मनि धर्म इति। कुतः कारणादेषु यथार्थविज्ञानम्? आत्ममनसोः संयोगादसमवायिनो धर्मविशेषाच्च निमित्तादिति। तत्तु प्रस्तारेण ऋषीणामतस्तदार्षम्। तत्तु कदाचिदेव लौकिकानामप्यर्षीणामेवंविधं विज्ञानमस्तीति। किमस्मदादीनां प्रमाणमित्याह—कदाचिदेव लौकिकानां तत्प्रातिभं ज्ञानमिति। यथा कन्यका ब्रवीति श्वो मे भ्राता आगन्तेति। नचेन्द्रियजं तत्, व्यापारं विनाप्युत्पत्तेः। अथ बाह्येन्द्रियाणां व्यापारासम्भवेऽप्यन्तःकरणस्य व्यापारात्प्रत्यक्षफलत्वम्। सम्बन्धोपीन्द्रियेण सह भ्रातुः संयुक्तविशेषणविशेष्यभावः। तथाहि—तद्विशिष्टमात्मानं देशं कालं वाऽऽलम्ब्योत्पाद्यते ज्ञानमेतदित्युक्तं परैः। तच्चासत्। अस्यापरोक्षत्वानुपपत्तेः। यत्र ह्यपरोक्षज्ञानं तत्रैवेन्द्रियव्यापारकल्पना क्रियते। न चात्र तदस्तीति। न च बहिर्विषये विशेषणेऽपि मनसः स्वातन्त्र्येण व्यापारः सम्भवतीत्युक्तम्। लिङ्गलिङ्गिसम्बन्धानुस्मरणाननुभवाच्च नानुमानजम्। शब्दं विनाप्युत्पत्तेः न शाब्दम्। अतः प्रमाणान्तरफलमेतत्। तथा प्रश्ने कृते सति न प्रत्यक्षादिकं निर्दिशत्यपि तु—हृदयं मे कथयतीति—ब्रूते। अथ कस्मात् प्रत्यक्षानुमानानन्तरमार्षज्ञानस्य न निरूपणम्। अस्मदादीनां तेन व्यवहाराभावात्, यतस्तत्तु प्रस्तारेण ऋषीणामेव कदाचिदेव लौकिकानामिति॥

---

(१) व्योमवतीकारमतेनात्र भाष्ये 'यथात्मनिवेदनं' इति पाठो बोध्यः। किन्तु सर्वत्रास्यैवोपलब्धेरयमेव मुद्रितः।

सिद्धदर्शनं विद्यान्तरमिष्टं परैस्तन्निषेधार्थमाह—

(भा०) सिद्धदर्शनं न ज्ञानान्तरम् । कस्मात् ? प्रयत्नपूर्वकमञ्जनपादलेपखड्गगुलिकादिसिद्धानां दृश्यद्रष्टॄणां सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु यद्दर्शनं तत्प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्राणिनां ग्रहनक्षत्रसञ्चारादिनिमित्तं धर्माधर्मविपाकदर्शनमिष्टम् तदप्यनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टं तदपि प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतमित्येवं बुद्धिरिति ॥

(व्यो०) सिद्धदर्शनं न ज्ञानान्तरमिति । आर्षज्ञानानन्तरमस्यान्तर्भावनिरूपणमार्षेऽप्यन्तर्भावार्थम । यत् सिद्धानां दर्शनमुत्पद्यते तत्प्रत्यक्षमेव । केष्वर्थेषु ? सूक्ष्मव्यवहितविप्रकृष्टेष्विति । सूक्ष्माः परमाणवः । व्यवहिता नागभुवनादयोऽस्मदादीन्द्रियापेक्षया न तु सिद्धेन्द्रियाणां व्यवधायकमस्ति । विप्रकृष्टा मेर्वादयः तेषु । सिद्धानां किंविशिष्टानामिति मुक्तात्मव्यवच्छेदार्थं दृश्यद्रष्टॄणामिति । किंच तेषां सद्भावे प्रमाणमित्याह दृश्यानाम्। कदाचिदञ्जनादिवियुक्ताः प्रत्यक्षेणाप्युपलभ्यन्ते । का पुनस्तेषां सिद्धिरित्याह—अञ्जनपादलेपखड्गगुलिकादिसिद्धानामिति । आदिपदेन चिन्तामणिप्रभृतीनां ग्रहणम । अञ्जनादिवशाच्च सिद्धेन्द्रियाणां सूक्ष्माद्यर्थप्रकाशनमतस्तत्प्रत्यक्षमेव ज्ञानान्तरमिति । अथ ज्योतिषामयनं दृष्ट्वा प्राणिनां शुभमशुभं वा भविष्यतीति ज्ञानं प्रमाणान्तरमिष्टं तन्निषेधार्थं दिव्यान्तरिक्षभौमानामित्यादि । दिवि भवं दिव्यमुल्कापातादि । अन्तरिक्षे भवं चान्तरिक्षं दिग्दाहादि । भूमौ भवं भौमं भूसंचलनादि । तेषां ग्रहनक्षत्रसंचारादिनिमित्तमुपलभ्य प्राणिनां धर्माधर्मयोर्विपाकः फलदानसामर्थ्यं तद्दर्शनं ज्ञानान्तरमिष्टम् । तदप्यनुमानमेव, लिङ्गदर्शनानुस्मरणादिजन्यत्वात् । यदि वा दिव्यान्तरिक्षभौमानां सुरसिद्धमनुष्याणां प्राणिनां ग्रहनक्षत्रसंचारादिनिमित्तमुपलभ्य धर्माधर्मयोर्विपाकदर्शनमिष्टं तदप्यनुमानमेवेति । अथ लिङ्गानपेक्षं धर्माधर्मादिषु दर्शनमिष्टम् । तदपि यदीन्द्रियार्थस-

न्निकर्षादपरोक्षमुत्पद्यते प्रत्यक्षमेव। अथेन्द्रियार्थसन्निकर्षं विनैव धर्मविशेषादुत्पद्यते तथाप्यार्षमित्याह—प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतमिति। एवंबुद्धिरित्युपसंहारः परोपगताया बुद्धेर्विनाशपर इति॥

अथ बुद्धेरनन्तरं सुखस्य कार्यकारणस्वरूपोपदर्शनार्थमनुग्रहलक्षणं सुखमित्यादि—

**(भा०) अनुग्रहलक्षणं सुखम्। स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्। अतीतेषु विषयेषु स्मृतिजम्। अनागतेषु सङ्कल्पजम्। यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासङ्कल्पेष्वाविर्भवति तद्विद्याशमसन्तोषधर्मविशेषनिमित्तमिति॥**

(व्यो०) अनुग्रहलक्षणमनुग्रहस्वरूपं यस्मिन्नुत्पन्ने सत्यात्माऽनुगृहीतमात्मानं मन्यत इति। स्रगाद्यभिप्रेतविषयसान्निध्ये सतीति। स्रगादयश्च ते अभिप्रेतविषयाश्चेति तेषां सान्निध्यम्। अनभिप्रेता रागादयः सुखहेतवो न भवन्तीत्यभिप्रेतग्रहणम्। इष्टोपलब्धिश्चेन्द्रियार्थसन्निकर्षश्चेति तथोक्तं तस्मात्। धर्माद्यपेक्षादित्यादिपदेन दिक्कालादेर्ग्रहणम्। तान्यपेक्षत इति तदपेक्षस्तस्मादिष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादसमवायिकारणादात्मनि सुखमुत्पद्यते। अनुग्रहाभिष्वंगनयनादिप्रसादजनकमिति कार्यनिरूपणम्। अनुगृहीतिरनुग्रहः सुखविषयं ज्ञानम्, आसक्तिरभिष्वङ्गः, नयनादिप्रसादः प्रसन्नता। आदिपदेन मुखादिप्रसन्नता गृह्यत इति। तदेतदसाधारणत्वादितरस्माद्भेदकमिति ज्ञेयम्। न च सर्वं विवेकिनः स्वरूपतो दुःखम्, अनुग्रहात्मकस्य सुखस्याप्यनुभवात्। अत एव न दुःखाभावे सुखव्यवहार इति वाच्यम्। विभिन्नकारणजन्यस्य तीव्रतरादिभेदभिन्नस्य प्रतिभासनात्। एवं दुःखस्यापि न सुखाभावरूपतेति। यदेतदुक्तं सुखं तत्संनिहिते वस्तुनीन्द्रियार्थसन्निकर्षादुत्पद्यते, अतीतानागतेषु स्मरणसंकल्पाभ्यामित्याह—अतीतेषु सुखसाधनेषु स्मृतिजमनागतेषु सङ्कल्पजमित्येतद्द्वयमुपदर्शितम्। यत्तु

विदुषामसत्सु विषयानुस्मरणं चेच्छा च सङ्कल्पश्चेति तथोक्तास्तेष्व-विद्यमानेष्वाविर्भवति तदुपादेयम्। विद्याशमसन्तोषधर्मविशेषनिमि-त्तमिति कारणोपन्यासः। विद्या तत्त्वज्ञानं तस्मात्तत्त्वज्ञानिनां सुखम्। तथा शमो रागादिविनाशस्तस्माच्च शान्तमनसां सुखम्। सन्तोषो विषयेष्वलम्प्रत्ययस्तस्माच्च सुखम्। केषांचिद्धर्मविशेषाच्चेति। अन्ये तु विद्यया जनितः सः शमस्तस्मात्सुखमिति। शेषं पूर्ववत्॥

दुःखनिरूपणार्थमाह—

**(भा०)उपघातलक्षणं दुःखम्। विषाद्यनभिप्रेतवि-षयसान्निध्ये सत्यनिष्टोपलब्धीन्द्रियार्थसन्निकर्षादध-र्माद्यपेक्षादात्ममनसोः संयोगाद्यदमर्षोपघातदैन्यनि-मित्तमुत्पद्यते तद्दुःखम्। अतीतेषु सर्पव्याघ्रचौरा-दिषु स्मृतिजम्। अनागतेषु सङ्कल्पजमिति॥**

(व्यो०) उपघातलक्षणमुपघातस्वरूपं दुःखमिति। उपहन्य-तेऽनेनेत्युपहतमात्मानं मन्यत इति। कारणमाह—विषादयश्च ते अन-भिप्रेतविषयाश्चेति तेषां सान्निध्ये सतीति। अभिप्रेताश्च विषयादयः सुखहेतव एवेत्यनभिप्रेतग्रहणम्। अनिष्टोपलब्धिश्चेन्द्रियार्थसन्नि-कर्षश्चेति तथोक्तस्तस्मादधर्मापेक्षादित्यादिपदेन दिक्कालादेर्ग्रह-णम। तस्मादनिष्टोपलब्धीन्द्रियार्थसन्निकर्षादधर्माद्यपेक्षादात्ममन-सोः संयोगादसमवायकारणादात्मनि समवेतं यदुत्पद्यते तद्दुःखम्। अमर्षोपघातदैन्यानां निमित्तं कारणं तदितरस्मात् भेदकमिति ज्ञे-यम्। अतीतेषु सर्पादिष्वित्ति कार्यनिरूपणम। अमर्षोऽसहिष्णुता। उपहतिरुपघातो दुःखालम्बनं ज्ञानमिति। दैन्यं दीनरूपता दुःखा-दुत्पद्यत इति। तदेतदसाधारणत्वादितरस्मात् भेदकमिति ज्ञेयम्। अतीतेषु सर्पव्याघ्रचौरादिषु दुःखसाधनेषु स्मृतिजमनागतेषु स-ङ्कल्पजमिति॥

इच्छायाः कार्यकारणस्वरूपनिरूपणार्थं स्वार्थं परार्थं चेत्यादि-

**(भा०) स्वार्थं परार्थं वाऽप्राप्तप्रार्थनेच्छा। सा चात्म-मनसोः संयोगात् सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते। प्रयत्नस्मृतिधर्माधर्महेतुः। कामोऽभिलाषः रागः**

सङ्कल्पः कारुण्यं वैराग्यम् उपधा भाव इत्येवमादय इच्छाभेदाः। मैथुनेच्छा कामः। अभ्यवहारेच्छाऽभिलाषः। पुनः पुनर्विषयानुरञ्जनेच्छा रागः। अनासन्नक्रियेच्छा सङ्कल्पः। स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम्। दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम्। परवञ्चनेच्छा उपधा। अन्तर्निगूढेच्छा भावः। चिकीर्षाजिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति।

(व्यो०) अप्राप्ते वस्तुनि प्रार्थनारूपत्वादिच्छेति। स्वार्थं परार्थं वेति विप्रतिपत्तिनिरासार्थं विभागकथनम। न केवलं स्वार्थमेव परार्थमपि। उत्पत्तिकारणमाह—सा चात्ममनसोः संयोगादसमवायिकारणादुत्पद्यते। किमपेक्षात्? सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वेति। प्रयत्नस्मृतिधर्माधर्महेतुरिति कार्यनिरूपणम्। शुद्धाभिसन्धिर्धर्महेतुर्दुष्टाभिसन्धिश्चाधर्महेतुरिति। अन्येऽपि गुणाः कामादयः सन्ति च शब्दे किं न सूचिता इति चोद्यस्य परिहारार्थमन्तर्भावं निरूपयति—कामोऽभिलाषो रागः सङ्कल्पः कारुण्यं वैराग्यमुपधा भाव इत्येवमादय इच्छाभेदास्तद्विशेषा इति। मैथुनेच्छा कामस्तत्सद्भावे कामीति व्यपदेशात्, नेच्छामात्रमिति। अभ्यवहरणेच्छाऽभिलाषः। लक्षणेच्छासामान्येन सर्वस्मिन्वस्तुन्यभ्यवहरणमादानं विवक्षितम्। तदिच्छाभिलाष इति चान्ये। पुनः पुनर्विषयानुरञ्जनेच्छा रागस्तेन हि सता रागीति व्यपदेशात्। अनासन्नक्रियायामनागतक्रियायामिच्छा सङ्कल्पः। स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा तद्विनाशेच्छा कारुण्यम्। दोषदर्शनाद्विषयेषु परित्यागेच्छा वैराग्यम्, तत्सद्भावे विरक्तव्यवहारात्। परवञ्चनेच्छोपधा अन्तर्निगूढेच्छा भाव इति। यद्यपीच्छा सर्वाऽन्तर्न बाह्येति, तथापीयमन्यापेक्षया कथंचिद्विज्ञायत इत्यन्तर्निगूढेत्युच्यते। चिकीर्षा जिहीर्षा चेति क्रियाभेदादिच्छाभेदा भवन्ति। कर्त्तुमिच्छा चिकीर्षा हर्त्तुमिच्छा जिहीर्षेति॥

द्वेषनिरूपणार्थमाह—

(भा०) प्रज्वजनात्मको द्वेषः। यस्मिन् सति प्रज्व-

लितमिवात्मानं मन्यते स द्वेषः। स चात्ममनसोः संयोगाद् दुःखापेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते। प्रयत्नस्मृतिधर्माधर्महेतुः। क्रोधो द्रोहः(१) मन्युरक्षमाऽमर्ष इति द्वेषभेदाः॥

(व्यो०) प्रज्वलनात्मकः प्रज्वलनस्वरूपो द्वेषः। यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्वेष इति पूर्वस्य विवरणम्। स चात्ममनसोः संयोगादसमवायिकारणाद्दुःखापेक्षात् स्मृत्यपेक्षाद्वात्मन्युत्पद्यत इति। प्रयत्नस्मृतिधर्माधर्महेतुरिति कार्यनिरूपणम्। यथाहि द्वेषाद्वधादौ प्रवर्त्तमानस्याधर्मो भवत्येवं यजनादौ प्रवर्त्तमानस्य धर्मोऽपीति। भेदनिरूपणार्थमाह—द्रोहः क्रोधो मन्युरक्षमाऽमर्ष इति द्वेषभेदाः तद्विशेषा इति। स्वामिनोऽपकारो द्रोहः। क्रोधस्तु यस्मिन्नुत्पन्ने शरीरेन्द्रियावयवानां विकारः सम्पद्यते। मन्युरपकृतस्यापकर्तुमसमर्थस्य कण्ठाक्षिविकारजनकः। अक्षमा असहिष्णुता। अमर्षोऽपकर्त्तुर्वधादिव्यवधानेनाप्यकरणम्।

नन्वेते सुखदुःखेच्छाद्वेषाः कथं विज्ञानाद्व्यतिरिच्यन्ते, समानकारणजन्यत्वादन्तर्मुखाकारतया प्रतीयमानत्वाच्चेति। कारणभेदेन हि पदार्था भिद्यन्त इत्युक्तम्।

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम्॥ इति॥

तथाहि—केचित् भावास्तद्रूपिणो धान्यादिरूपिणोऽन्येऽतद्रूपिणस्तद्विधर्माण इति। कस्मात्? तदतद्रूपहेतुजत्वात्। धान्यरूपात् कारणादुत्पन्नास्तद्रूपिणोऽन्ये तु विलक्षणाऽतद्रूपिणः, इत्युक्ते सत्याह यद्येवं तत्सुखादि विज्ञानेनाभिन्नहेतुजं किमज्ञानमिष्टम्।

नैतदेवम्। अभेदे साध्ये समवाय्यसमवायिनिमित्तापेक्षयापि समानकारणजन्यत्वस्य व्यभिचारात्। तथा ह्येकस्मात् समवायिकारणादुत्पद्यन्ते पाकजाः परस्परं विभिन्नाश्चेति। असमवायिकारणन्तु पार्थिवपरमाण्वग्निसंयोगः तेषामेक एव। तथैकोऽप्युष्णस्पर्शस्तेषां निमित्तकारणमिति। तदपेक्षयापि व्यभिचारः। साम-

(१) अत्र 'द्रोहः क्रोध' इति व्योमवतीव्याख्याने पाठो बोध्यः।

न्यपेक्षया त्वसिद्धं समानकारणजन्यत्वम्, तस्याः प्रतिकार्यनियतत्वात्। उक्तं चैकत्र स्रगाद्युपलक्षिता सामग्री कारणमन्यत्रान्यथाभूतेति। तथा प्रतिनियतजातेः प्रागभावस्य चानुप्रवेशे सर्वत्र सामग्रीभेदो भवत्येवेति। अन्तर्मुखाकारतया प्रतीयमानत्वं च ज्ञानधर्मैर्व्यभिचारीति। अस्ति च धर्मधर्मिणोर्भेद इत्युक्तम्। तथा ज्ञानस्यानुत्पत्तिविनाशाभ्यां व्यभिचारः, तयोरन्तर्मुखाकारतया प्रतीयमानत्वम्, न च बोधरूपतेत्यलमतिप्रसङ्गेन॥

अथ प्रयत्नस्य कारणस्वरूपविभागनिरूपणार्थमाह—

**(भा०) प्रयत्नः संरम्भ उत्साह इति पर्यायाः। स द्विविधो—जीवनपूर्वकः इच्छाद्वेषपूर्वकश्च। तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः। अस्य जीवनपूर्वकस्यात्ममनसोः संयोगाद्धर्माधर्मापेक्षादुत्पत्तिः। इतरस्तु हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः शरीरविधारकश्च। स चात्ममनसोः संयोगादिच्छापेक्षाद् द्वेषापेक्षाद्वोत्पद्यते॥**

(व्यो०) प्रयत्नः संरम्भ उत्साह इति पर्याया लक्षणमसाधारणत्वात्। तथाहि-प्रयत्न इतरस्मात् भिद्यते अनादिकालप्रवाहायातेत्थंभूतपर्यायाभिधेयत्वात्। यस्तु न भिद्यते न चासावेवम्, यथा रूपादिरिति। स द्विविधः कारणभेदादित्याह—जीवनपूर्वक इच्छाद्वेषपूर्वकश्च। जीवनं पूर्वं कारणमस्येति जीवनपूर्वकः। स कथं विज्ञायत इत्याह-सुप्तस्य प्राणापानसन्तानप्रेरक इति। येयं सुप्तस्य प्राणापानसन्तानक्रिया सा प्रयत्नकार्या क्रियात्वात् जाग्रदवस्थायां प्राणक्रियादिवदिति। न परं प्राणादिसन्तानप्रेरकः, प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरेण प्राप्तिहेतुरिति। यथाहि प्रबोधसमये येनैवेन्द्रियेणोपलम्भस्तेनैव सम्बन्धार्थमन्तःकरणस्य निरिन्द्रियत्वात्मप्रदेशे वर्त्तमानस्यावश्यं कर्माभ्युपेयम्। तच्च प्रयत्नकार्यं परिगृहीताऽन्तःकरणकर्मत्वात् जाग्रदवस्थायां तत्कर्मवत्। अत एव नादृष्टस्यैवात्र कारणत्वम्, अनुमानेन प्रयत्नकार्यत्वो-

पलब्धेः । कारणान्तरासम्भवे च अदृष्टस्यैव कारणत्वमिष्यत इति । स्थिते हि सद्भावे जीवनपूर्वकस्योत्पत्तिकारणमाह—आत्ममनसोः संयोगादसमवायिकारणाद्विशिष्टधर्माधर्मापेक्षादुत्पत्तिरिति । इतरस्त्विच्छाद्वेषपूर्वको हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य कायिकव्यापारस्य हेतुः । तथा शरीरविधारकश्च । तेन हि प्रतिबद्धं शरीरे गुरुत्वं न पतनमारभते । तस्योत्पत्तिकारणमाह—आत्ममनसोः संयोगादसमवायिकारणादिच्छापेक्षाद्द्वेषापेक्षाद्वोत्पद्यत इति ॥

गुरुत्वस्य लक्षणपरीक्षार्थं गुरुत्वं जलभूम्योरित्यादि प्रकरणम्—

**(भा०) गुरुत्वं जलभूम्योः पतनकर्मकारणम् । अप्रत्यक्षं पतनकर्मानुमेयं संयोगप्रयत्नसंस्कारविरोधि । अस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः ॥**

(व्यो०) अप्रत्यक्षत्वे सति पतनकर्मकारणत्वात् गुरुत्वमितरस्मात् भिद्यते । वेगोऽपि पतनकर्मकारणमित्यप्रत्यक्षग्रहणम् । जलभूम्योरित्याश्रयनिरूपणम् । इतरपदापेक्षं वा लक्षणं जलभूम्योरेव वर्त्तमानत्वे सति पतनकर्मकारणत्वात् गुरुत्वम् । रसोऽपि जलभूम्योरेव वर्त्ततेऽनतु पतनकर्मकारणम् । अभ्युपगमे वा कारणातिशयेन कार्यातिशयस्यान्यत्रोपलब्धेः पाषाणादे रसातिशयाभावेन पातातिशयाभावः पिप्पल्यादौ च तत्सद्भावेन सद्भावः स्यात् । स नास्तीति न रसः कारणं पतनोत्पत्तौ । रूपादेश्च कारणत्वे अनलादावपि सद्भावात् पातः स्यात् । न चास्तीत्यतो रूपादिव्यतिरिक्तं कारणमनुमीयत इत्यत आह—पतनकर्मानुमेयमिति । आद्यस्य हि पतनकर्मणोऽसमवायिकारणं गुरुत्वं द्वितीयादेस्तु संस्कारोपीति । न चासौ जलभूम्योरेव वर्त्तते । ननु त्वगिन्द्रियस्याव्यापारात् पञ्च पलं दश पलमिति प्रतिभासनात् गुरुत्वं प्रत्यक्षम् । न । त्वगिन्द्रियेण सम्बन्धोपपत्तेः पृथिव्यादिगुरुत्वस्यापि प्रत्यक्षताप्रसङ्गात् । अथाधेयगतमेव गुरुत्वं परिच्छिनत्ति त्वगिन्द्रियम् । न च तत्पृथिव्यादिगुरुत्वेऽस्तीति । नन्वेवमपि मक्षिकादिगुरुत्वं परिच्छिन्द्यात् तस्याप्याधेयगतत्वादिति । न च तस्याविशिष्टत्वादपरिच्छेदः, प्रत्यक्षद्रव्यस-

मवायस्याविशेषात्। अथाधोगतिहेतुत्वं वैशिष्ट्यम्, तर्हि त्वगिन्द्रियसम्बन्धेनाधोगतिविशेषमुपलभमानस्य पञ्चपलं दशपलमित्यानुमानिक एव प्रत्ययः। अथ दशपलैस्तन्तुभिरारब्धे पटे गुरुत्वातिशयस्यानुपलब्धेः कारण एव गुरुत्वम्, न तु कार्ये। तदसत्। उभयत्रापि पातोपलब्धेः। न च स्वगतगुरुत्वाभावेऽप्याश्रयान्तरगुरुत्वादेव पतनम्, वाय्वादेरपि पातप्रसङ्गात्। तस्मादुभयत्रापि कार्येण सद्भावसिद्धेर्गुरुत्वमस्तीति। अवनतिविशेषानुपलम्भश्च कार्ये मक्षिकादिगुरुत्वसम्पर्केणापि समान इति। तथाहि—तन्तुषु मीयमानेषु मक्षिकादिसम्पर्केऽप्यवनतिविशेषा नोपलभ्यन्ते। न च तद्गुरुत्वस्यासत्त्वमित्यलम्। अथ गुरुत्वस्य पातहेतुत्वे किमिति सर्वदा पातो न भवति। प्रतिबन्धादित्याह—संयोगप्रयत्नसंस्कारविरोधीति। वृन्तफलसंयोगेन प्रतिबद्धं न फले पतनमारभते प्रयत्नप्रतिबन्धात्। आकाशावस्थितेषु शकुनिषु गुरुत्वं न पतनं करोति संस्कारप्रतिबन्धात्। एषामपाये फलादिषु पातदर्शनात्। तस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तय इति। अबादयश्च ते परमाणवश्चेति तथोक्ताः तत्परमाणुरूपादीनामिवेति। यथाऽऽप्यपरमाणुरूपादीनामनिष्पद्यमानत्वान्नित्यत्वमेवमेव गुरुत्वं नित्येष्वनिष्पत्तेर्नित्यमनित्ये तु कारणगुणपूर्वप्रक्रमेण निष्पद्यमानत्वात्तद्रूपवदेवानित्यमित्यतिदेशार्थः॥

द्रवत्वस्य लक्षणपरीक्षार्थमाह—

**(भा०) द्रवत्वं स्यन्दनकर्मकारणम्। त्रिद्रव्यवृत्ति। तत्तु द्विविधम्—सांसिद्धिकं नैमित्तिकं च। सांसिद्धिकमपां विशेषगुणः। नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः। सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः। सङ्घातदर्शनात् सांसिद्धिकमयुक्तमिति चेन्न। दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः सङ्घाताख्यः, तेन परमाणुद्रवत्वप्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः। नैमित्तिकं च पृथिवीतेजसोरग्निसंयोगजम्। कथम्? सर्पि-**

जतुमधूच्छिष्टादीनां कारणेषु परमाणुष्वग्निसंयोगाद्वेगापेक्षात् कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात् कार्यद्रव्यनिवृत्तावग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते । ततस्तेषु भोगिनामदृष्टापेक्षादात्माणुसंयोगात् कर्मोत्पत्तौ तज्जेभ्यः संयोगेभ्यो द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते । तस्मिंश्च रूपाद्युत्पत्तिसमकालं कारणगुणप्रक्रमेण द्रवत्वमुत्पद्यत इति ॥

(व्यो०) द्रवत्वं स्यन्दनकर्मकारणमिति । स्यन्दनकर्म वक्ष्यमाणम् । तत्कारणं द्रवत्वमित्युक्ते वेगेन व्यभिचारः तदर्थं त्रिद्रव्यवृत्तीति । तथापि त्रिद्रव्यवृत्तित्वं वेगस्यापि सम्भवतीति नियमेनेति पदमूह्यम् । रूपं तु नियमेन त्रिद्रव्यवृत्ति न तु स्यन्दनकर्मकारणम् । अतो द्रवत्वमितरस्मात् भिद्यते नियमेन त्रिद्रव्यवृत्तित्वे सति स्यन्दनकर्मकारणत्वादिति । तत्तु द्विविधमिति विभागः । केन रूपेण ? सांसिद्धिकं नैमित्तिकं चेति । तयोः परस्परं वैलक्षण्यनिरूपणार्थमाह— सांसिद्धिकमपां विशेषगुणः, नैमित्तिकं पृथ्वीतेजसोः सामान्यगुण इति परस्परभेदः । सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तय इति । यथा गुरुत्वं नित्येष्वनिष्पद्यमानत्वान्नित्यमनित्येषु निष्पत्तेरनित्यं कारणगुणपूर्वकमाश्रयविनाशाच्च विनश्यति । एवं सांसिद्धिकद्रवत्वमपीत्यतिदेशार्थः । ननु चायुक्तमेतत्–अपां सांसिद्धिकद्रवत्वमिति हिमकरकादावनुपलम्भात्, तदाह–संघातदर्शनात्सांसिद्धिकत्वमयुक्तमिति चेत् । नैतदेवम् । अन्यत्र सलिले सांसिद्धिकद्रवत्वस्योपलब्धेः आप्यपरमाणुषु तत्सद्भावसिद्धौ हिमकरकादौ तस्यानुत्पादात् प्रतिबन्धकमस्तीति निश्चीयते । तच्चान्यस्यानुपलम्भाद्दिव्यतेजःसंयोग एवेत्याह–दिव्यतेजःसंयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः, स च सङ्घाताख्यस्तेन परमाणुद्रवत्वस्य प्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिरिति । तेजःसद्भावस्तु स्फोटादिकार्यानुमेयः । तथा च हिमकरकसम्बन्धादुपलभ्यते स्फोटादिलक्षणं कार्यं शरीरे वृक्षादौ च दाह इति । विलयन-

ञ्चास्य दिव्यतेजःसम्बन्धात् अवयवे क्रिया ततो विभागस्तस्मात्सं-योगनिवृत्तौ द्रव्यविनाशे सति परमाणवः कार्यमारभन्ते । तत्र च दि-व्यतेजःसंयोगस्य प्रतिबन्धकस्य निवृत्तेः परमाणुद्रवत्वं कार्ये द्रव-त्वमारभते । न चेदं नैमित्तिकम् । सर्पिरादाविव पुनः संग्रहानुपलब्धेः। यथाहि नैमित्तिकद्रवत्वं सर्पिरादाविति द्रुतस्य संग्रहः तथेहापि स्या-त् । न चैतदस्तीति । नैमित्तिकं च पृथ्वीतेजसोरग्निसंयोगजम् । क-थमित्यव्युत्पन्नप्रश्नः । तत्राह--सर्पिरादीनां कारणेष्वित्यादिपदेन सूत्रोक्तानां संग्रहः । तथाहि-'सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्नि-संयोगाद्द्रवत्वमद्भिः सामान्यम् । त्रपुसीसलोहरजतसुवर्णानां तैज-सानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति(अ०२आ१सू०५४-५५) अतः सर्पिरादिकारणेषु च परमाणुष्वग्निसंयोगापेक्षाद्गुणापेक्षात् कर्मोत्पत्तौ सत्यान्ततो विभागा जायन्ते । तेभ्यो विभागेभ्यो द्रव्या-रम्भकसंयोगविनाशः ततः कार्यद्रव्यनिवृत्तिस्तस्यां च सत्यामग्नि-संयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते । परमा-णवः समवायिकारणमग्निसंयोगोऽसमवायिकारणमुष्णस्पर्शो निमि-त्तकारणमिति । ततोऽनन्तरमुत्पन्नद्रवत्वेषु भोगिनामदृष्टापेक्षादा-त्माणुसंयोगात् कर्मोत्पद्यत इति । परमाणुः समवायिकारणमात्मा-णुसंयोगोऽसमवायिकारणं भोगिनामदृष्टो निमित्तकारणमिति । ततो विभागेभ्यः प्राक्तनसंयोगविनाशे सति तेभ्यः कर्मभ्यः परमाण्व-न्तरेण संयोगा जायन्ते । तेभ्यः संयोगेभ्यो द्व्यणुकाण्युत्पद्यन्ते । त-दादिक्रमेण त्र्यणुकादिकार्यमुत्पद्यते । तस्मिंश्च द्व्यणुकादौ रूपाद्यु-त्पत्तिसमकालं कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यत इति पाकजो-त्पत्तिन्यायोऽत्र द्रष्टव्यः । एतावांस्तु विशेषः--तत्रावश्यं रूपादि-निवृत्तिर्न चैवं द्रवत्वस्येति ।

स्नेहस्य लक्षणपरीक्षार्थं स्नेहोऽपां विशेषगुणः सङ्ग्रहमृजादि-हेतुरिति—

**(भा०) स्नेहोऽपां विशेषगुणः । संग्रहमृजादिहेतुः । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ॥**

(व्यो०) अपां विशेषगुणो रूपादिरपीति सङ्ग्रहमृजादिहेतुरिति पदम् । सङ्ग्रहः पिण्डीकरणम् । मृजा तु विशदत्वम् । तद्धेतुत्वादि-

तरस्मात् भिद्यते । ननु स्नेहस्याभिनवपल्लवादावुपलम्भादुदकविशेषगुणत्वमसिद्धम् । न । संयुक्तसमवायेनोपलम्भात् । संयुक्तं हि पल्लवादिनोदकं तत्समवेतस्नेहो गृह्यते, तदपाये तस्यानुपलब्धेः । तथा स्नानोत्तरकालं केशादौ स्निग्धप्रत्ययदर्शनात् । यथा च संयोग्याश्रयवैगुण्याभावे सर्वस्मिन्नुदके स्निग्धज्ञानं नैवं सर्वस्यां पृथिव्यामिति । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तय इति । नित्येषु नित्योऽनित्येषु कारणगुणपूर्वः, आश्रयविनाशाद्विनश्यतीति ॥

संस्कारनिरूपणार्थमाह—

**(भा०) संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च । तत्र वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात् कर्मणो जायते नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविशेषविरोधी क्वचित्कारणगुणपूर्वक्रमेणोत्पद्यते ।**

**भावनासञ्ज्ञकस्त्वात्मगुणो दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति ज्ञानमदुःखादिविरोधी । पट्वभ्यासादरप्रत्ययजः पटुप्रत्ययापेक्षादात्ममनसोः संयोगादाश्रयेऽर्थे पटुः संस्कारातिशयो जायते । यथा दाक्षिणात्यस्योष्ट्रदर्शनादिति । विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते । प्रयत्नेन मनश्चक्षुषि स्थापयित्वाऽपूर्वमर्थं दिदृक्षमाणस्य विद्युत्सम्पातदर्शनवदादरप्रत्ययः, तमपेक्षमाणादात्ममनसोः संयोगात् संस्कारातिशयो जायते, यथा देवह्रदे राजतसौवर्णपद्मदर्शनादिति ।**

**स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्तमानो घना-**

वयवसन्निवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रय-मन्यथाकृतं यथावस्थितं स्थापयति। स्थावरजङ्गम-विकारेषु धनुःशाखाशृङ्गदन्तास्थिसूत्रवस्त्रादिषु भु-ग्नसंवर्तितेषु स्थितिस्थापकस्य कार्यं संलक्ष्यते। नि-त्यानित्यत्वनिष्पत्तयोऽस्यापि गुरुत्ववत् ॥

(व्यो०) संस्कारस्त्रिविधः। केन रूपेण? वेगो भावना स्थितिस्थाप-कश्चेति विभाग एवासाधारणत्वाल्लक्षणमिति। तल्लक्षणवैचित्र्यज्ञा-पनार्थमेतत। तत्र वेगस्य समानजातीयात् भेदमाश्रयं च निरूपय-न्नाह-मूर्त्तिमत्स्वित्यादि। मूर्त्तिमत्सु द्रव्येषु, न ज्ञायते कियत्सु? तदर्थं पञ्चसु। तथापि न ज्ञायते केषु? तदर्थं मूर्त्तिमत्स्वित्याश्रय-निरूपणम्। यदि वा संस्कारत्वे सति पञ्चसु मूर्त्तिमत्स्वेव वर्त्तमा-त्वाद्वेग इति लक्षणम्। कारणमाह--निमित्तविशेषापेक्षात् कर्मणो जायत इति। संयोगविभागयोः कर्मजत्वमिति निमित्तविशेषा-पेक्षादिति विशेषणम्। निमित्तविशेषो-नोदनाभिघातसंयुक्तसं-योगास्तदपेक्षादिति। कर्मासमवायिकारणं स्वकारणविशेषो नो-दनादिर्निमित्तकारणं वेगाधारस्तु समवायिकारणमित्यसाधारण त्वाल्लक्षणं चेदम्। कार्यमाह--नियतायां दिशि क्रियाप्रबन्धस्य क्रि यासन्तानस्य हेतुरिति। ननु चायुक्तमेतत्, अनियतदिग्देशस्य भ्रम-णाख्यस्यापि कर्मणः कारणत्वात्। सत्यमेतत्। तथाप्यदोषो निय-तदिक्क्रियाप्रबन्धस्यैव हेतुरित्यवधारणानभ्युपगमात्। सोऽपि निय-तायामेव दिशि क्रियाप्रबन्ध इति चान्ये अनियतदिक्क्रियाप्रबन्धहे-तुरित्यवधारणस्यात्र पूर्वरूपतां मन्यमाना व्याख्यान्तरं कुर्वते। तस्य विनाशकारणमाह-स्पर्शवद्द्रव्यसंयोगविशेषविरोधीति। स्पर्शवद्द्र-व्यसंयोगमात्रविरोधित्वे वायुसंयोगेन विरोधादिषोर्गमनं न स्यात् तद्धेतोर्वेगस्य विनाशादिति विशेषग्रहणम्। कठिनावयव-संयोगेनाद्रावपि तद्विनाशोपलब्धेः। नन्वेवमप्याकाशे प्रक्षिप्तस्येषो-र्निबिडावयवसंयोगस्य वेगविनाशकस्याभावादपातः स्यात्। न। अनेककार्यकरणे स्पर्शवद्द्रव्यसंयोगमात्रेणापि विनाशस्यान्वयव्य-तिरेकाभ्यामुपलम्भात्। तथाच क्षिप्तस्येषोर्वेगविनाशोपलब्धेरवश्यं कारणमभिधेयम् निर्हेतुकविनाशप्रतिषेधात्। अतो वायुसंयोगेना-

ष्यनेककार्यकरणे सति विरुध्यते । अदृष्टप्रक्षयाद्वेति । क्वचित् कारणगुणपूर्वप्रक्रमेणोत्पद्यते, यथा पर्वतस्रोतसामधः पततां संयोगे सत्येकस्मिन्नुदके समुत्पन्ने रूपादिवत् कारणवेगाद्वेगोऽपीति ।

भावनासंज्ञकस्त्वात्मगुणत्वादितरस्मात् भिद्यते । न च बुद्ध्यादिभिर्व्यभिचारः, संस्कारस्य सतोऽवान्तरविशेषनिरूपणात् । स्मृत्यभिज्ञानहेतुरिति कार्यनिरूपणम्, सद्भावे प्रमाणं चेति । स्मृतिर्वासनाख्यात् भवति तथोक्तमात्माधिकारे । केषु स्मृत्यभिज्ञानहेतुरित्याह—दृष्टश्रुतानुभूतेष्विति निर्णीतार्थेष्विति । नाशकारणमाह—ज्ञानमददुःखादिविरोधीति । ज्ञानं प्रतिपक्षज्ञानं विवक्षितं तेन विरुध्यते, यथाऽऽत्मादिज्ञानजनितः संस्कारो नैरात्म्याद्यभ्यासेनेति, तस्मिन्सति तत्रास्मरणात् । स्वमदेन विरोधो बालावस्थानुभवजनितसंस्कारस्य पुनर्युवावस्थायां विषयाभिभूतस्य तत्रास्मरणात् । दुःखेन यथा शास्त्रानुभवजनितसंस्कारस्य तीव्रेण दारादिदुःखेनेति, तेन सता तत्रास्मरणात् । आदिपदेन तु क्रोधादेरपि संस्कारनिवर्त्तकत्वमुक्तम् । तस्योत्पत्तिकारणमाह—पट्वाभ्यासादरप्रत्ययेभ्यो जातस्तत्प्रत्ययज इति । पटुप्रत्ययापेक्षादात्ममनसोः संयोगादसमवायिकरणादात्मन्याश्चर्येऽर्थे पटुः संस्कारो जायते, यथा दाक्षिणात्यस्योष्ट्रदर्शनात् । स चातिशयेन स्मृतिहेतुर्भवतीति । अभ्यासाद्विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात्संस्कारातिशयो जायते । पूर्वपूर्वसंस्कारापेक्षो ह्युत्तरोत्तरप्रत्ययोऽभ्यासः । तमपेक्षमाणादात्ममनसोः संयोगादसमवायिकारणादात्मनि संस्कारातिशयो जायते । तत्र विद्यायामुपाध्यायोच्चारितपदश्रवणे सति संस्कारः । पुनर्विवक्षादिक्रमेण स्वयमुच्चारणे सति तु ज्ञानं पूर्वसंस्कारापेक्षं संस्कारान्तरमारभते पुनस्तदुच्चारणे सति तज्ज्ञानं पूर्वसंस्कारापेक्षं संस्कारान्तरमारभत इत्येवं त्रिचतुरादिपरिवर्त्तने सत्यन्त्यपदानुभवात् पूर्वसंस्कारापेक्षात् संस्कारातिशयो जायते । एतच्चावश्यमभ्युपेयम् । अन्यथाभ्यासवैयर्थ्यं स्यात् । न चातिप्रसङ्गः, अदृष्टस्य व्यवस्थाहेतुत्वात् । न च तस्यास्ति सर्वत्र सद्भावः, कार्यस्य स्मरणस्य सर्वत्रानुपलब्धेः । यत्र हि स्मरणमस्ति तत्रैव पूर्वसंस्कारापेक्षं ज्ञानं सं-

स्कारमारभत इति । आन्तरे चाभ्यासे पूर्वपूर्वसंस्कारापेक्षं नियतार्थ-स्मरणमेव संस्कारमारभत इति चिन्त्यम् । शिल्पेऽप्युपाध्यायालिखितानिमग्नदर्शनात् संस्कारः पुनः स्वयं सम्पाद्योपलभते, तदनुभवः पूर्वसंस्कारापेक्षः संस्कारान्तरमारभते, पुनः स्वयं लिखित्वोपलभते, तदनुभवः पूर्वसंस्कारापेक्षः संस्कारान्तरमारभते इत्येवं द्वादशादिपरिवर्त्तनेन संस्कारातिशयः । व्यायामेऽप्युपाध्यायेन धनुर्वेदपरिपठितन्यायेन प्रयुक्तेषूपलम्भादुपजाते संस्कारे पुनस्तदनुसारितया स्वयं प्रयुक्ते तदनुभवेन पूर्वसंस्कारापेक्षेण संस्कारान्तरमारभ्यते, पुनस्तथैव प्रयोगे सति तदनुभवेन पूर्वसंस्कारापेक्षेणान्यः संस्कार इत्येवमन्त्यानुभवात् संस्कारातिशय इति । आदरप्रत्ययजसंस्कारमाह—प्रयत्नेन चक्षुषि मनः स्थापयित्वा अपूर्वमर्थं दिदृक्षमाणस्येति—द्रष्टुमिच्छतो, विद्युत्सम्पातदर्शनेन तुल्यं वर्त्तते इति तद्दर्शनवदादरप्रत्ययस्तमपेक्षमाणादात्ममनसोः संयोगादसमवायिकारणादात्मनि संस्कारातिशयो जायते । यथा देवह्रदे सौवर्णराजतपद्मदर्शनादिति । तत्र हि सौवर्णराजतपद्मयोरुत्थानमागमाल्लोकप्रवादतो वा समुपलभ्य पुनर्विशिष्टयात्रासमये प्रयत्नेन संस्कारातिशयो भवतीति ।

स्थितिस्थापकस्तु संस्कारवत्त्वे सति स्पर्शवत्स्वेव द्रव्येषु वर्त्तमानत्वादितरस्मात् भिद्यते । किंभूतेषु ? घनावयवसन्निवेशविशिष्टेष्विति । घनाश्च ते अवयवाश्च तेषां सन्निवेशो रचनाविशेषः, घन इति सन्निवेशस्य वा विशेषणम्, तद्विशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावत् स्थापयतीत्यतः स्थितिस्थापकः । सद्भावे प्रमाणमाह—स्थावराश्च जङ्गमाश्चेति तथोक्तास्तेषां विकारेषु धनुःशाखाशृङ्गदन्तास्थिसूत्रवस्त्रादिषु च भुग्नेषु सम्वर्त्तितेषु पिण्डीकृतेषु तस्य कार्यं संलक्ष्यते । तथाहि—धनुषि शाखादौ चाकर्षणकर्मण्युपजाते नोदनादिभ्यस्तन्निवृत्तावपि कर्मोपलम्भादवश्यमसमवायिकारणं वाच्यं वस्तुनस्तदन्तरेणानुत्पत्तेः । न च नोदनादेरन्यतमः सम्भाव्यत इत्यन्येनासमवायिकारणेन भवितव्यम् । क्रियाविभागयोश्च क्रियोत्पत्तावकारणत्वोपलम्भात् । तथा तन्निवृत्तावपि प्रतिबन्धकाभावे सति शाखादौ पूर्वावस्थावस्थापककर्मोपलम्भान्निमित्तान्तरमेव न्याय्यम् । अदृष्टविशेषस्य तु साधारण-

त्वात् कारणत्वं न प्रतिषिद्ध्यत इति । नित्यानित्यत्वनिष्पत्तयोऽस्य गुरुत्ववद्द्रष्टव्या इति । यथा हि गुरुत्वं नित्येषु नित्यमुत्पत्तिविनाशकारणाभावादनित्येषु कारणपूर्वकमाश्रयविनाशाद्विनश्यत्येवं स्थितिस्थापकसंस्कारोपीति । कार्ये तु स्थितिस्थापकसंस्कारप्रसिद्धेस्तदारम्भकपरमाणुष्वपि तत्कल्पना क्रियते ॥

धर्मस्य लक्षणपरीक्षार्थमाह—

(भा०) धर्मः पुरुषगुणः । कर्तुः प्रियहितमोक्षहेतुः अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि । तत्र सामान्यानि-धर्मे श्रद्धा अहिंसा भूतहितत्वं सत्यवचनमस्तेयं ब्रह्मचर्यमनुपधा क्रोधवर्जनमभिषेचनं शुचिद्रव्यसेवनं विशिष्टदेवताभक्तिरुपवासोऽप्रमादश्च ।

ब्राह्मणक्षत्रियवैश्यानामिज्याध्ययनदानानि । ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि स्ववर्णविहिताश्च संस्काराः । क्षत्रियस्य सम्यक्प्रजापालनमसाधुनिग्रहो युद्धेष्वनिवर्तनं स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णपारतन्त्र्यममन्त्रिकाश्च क्रियाः । आश्रमिणां तु ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि मधुमांसदिवास्वप्नाञ्जनाभ्यञ्जनादिवर्जनं च । विद्याव्रतस्नातकस्य कृतदारस्य गृहस्थस्य शालीनयायावरवृत्त्युपार्जितैरर्थैर्भूतमनुष्यदेवपितृब्रह्माख्यानां प-

श्रानां महायज्ञानां सायम्प्रातरनुष्ठानम् एकाग्निविधानेन पाकयज्ञसंस्थानां च नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां च हविर्यज्ञसंस्थानामग्निष्टोमादीनां सोमयज्ञसंस्थानां च । ऋत्वन्तरेषु ब्रह्मचर्यमपत्योत्पादनं च । ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निर्गतस्य वनवासो वल्कलाजिनकेशश्मश्रुनखरोमधारणं च । वन्यहुतातिथिशेषभोजनानि वानप्रस्थस्य । त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्त्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थप्रसंख्यानाद्योगप्रसाधनं प्रव्रजितस्येति । दृष्टं च प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति ॥

(व्यो०) धर्मः पुरुषगुण इत्यादि । पुरुषगुणत्वं बुद्ध्यादावप्यस्तीत्यतः प्रियहितमोक्षहेतुरिति । प्रियं सुखं हितं तत्साधनम् । नवानामात्मगुणविशेषगुणानामत्यन्तोच्छित्तिर्मोक्ष इति । अथेश्वरज्ञानमप्येषां हेतुरतः कर्त्तुरिति । येन हि कृतो धर्मस्तत्रैव प्रियहितमोक्षहेतुः । न चैवमीश्वरज्ञानस्य, अकार्यतया कर्तुरभावादिति । अथ तत्त्वज्ञानं कर्तुर्यथोक्तफलहेतुस्तदर्थमतीन्द्रिय इति । संस्कारोऽपि स्मृतिद्वारेणैवं भवतीत्यतोऽन्त्यसुखसंविज्ञानविरोधीति । अन्त्यमावसानिकं सुखं तत्सम्वेदनेन विरुध्यते । नन्वेवमप्यतीन्द्रियत्वे सत्यन्त्यसुखसंविज्ञानविरोधित्वाद्धर्म इतरस्मात् भिद्यते इत्युक्ते व्यभिचाराभावाद्व्यर्थं शेषाभिधानम् । न । अन्यत्वात् कर्तुः प्रियहितमोक्षहेतुरिति विशिष्टार्थक्रियानिरूपणाम् । पुरुषगुण इत्यन्यथाभावप्रतिषेधार्थम् । अथ पुरुषगुणत्वे किं प्रमाणम ? अनुमानमागमश्च । तथाहि—तनुभुवनादिकार्यं पुरुषगुणपूर्वकं विचित्रकार्यत्वाद्रथादिवदिति । यथाहि रथादिकर्त्ता भोक्तुरभिप्रायं विचित्रमपेक्षमाणस्तथैव तद्रचनां करोत्येवं शरीरादिकर्त्तापीति । न च शरीरोत्पत्तेः पूर्वमस्मदाद्यात्मनि बुद्ध्यादयः सन्ति संस्कारस्तु स्मरणोत्पत्तावेवावगतसामर्थ्य इति गुणान्तरं तद्गु-

तमपेक्षमाणस्तदुपभोगनिष्पत्तये विचित्रं शरीरादिकमारभत इति । आगमस्तु—'यावदात्मनि धर्माधर्मौ तावदयुः शरीरमिन्द्रियाणि विषयाश्चेति । तथा क्षीयन्ते चास्य कर्माणी'ति । येषान्तु बुद्धिगुणो धर्मः तेषां कथं नाकर्मनिमित्तः स्वर्गः । तथाहि–प्रलयावस्थायां बुद्धेः प्रधाने प्रलीनतया धर्माधर्मयोरनभिव्यक्तौ प्रधानस्य बुद्ध्यादिभावेन परिणामो न स्यात् , अभिव्यक्तस्य कर्मणः कारणत्वाभ्युपगमात् । न चादावनभिव्यक्तमेव कारणं बुद्धिस्थं चाभिव्यक्तमिति वाच्यम् । विशेषहेत्वभावात् । बुद्ध्या च सम्पादितं कर्म कर्त्तुर्भोगसम्पादकमित्यभ्युपगमे चाविशेषेण सकलपुरुषोपभोगसम्पादकं स्यात् , नियमहेत्वाभावात् । तथा मुक्तात्मनोऽपि शरीरादिसम्पादनाय प्रवर्त्तनाविशेषादिति संसारित्वप्रसङ्गः । गुणपुरुषान्तराविवेकादर्शनं च प्रधानप्रवृत्तेर्न कारणं पूर्वमेव प्रतिषेधात् ।

येऽपि परमाणुरूपो धर्म इति मन्यन्ते । तेषामपि तस्य नित्यतायां सकलक्रियाविलोपप्रसङ्गः । मरणाद्यभावश्च । अनित्यता तु परमाणुरूपतायां न सम्भवत्येव । तस्य परमाणुत्वेनोत्पत्तिविनाशकारणाभावात् । तथा परमाणूनां धर्मशब्देनाभिधाने संज्ञाभेदमात्रमेव स्यात् । अथ परमाणुगुणौ धर्माधर्मौ । एवमपि सर्वपुरुषाणामेकाकारो भोगः स्यात् । पुण्यापुण्याधिकरणैः परमाणुभिरारम्भाविशेषात् ।

अथ केचित् पुण्याधिकरणाः परमाणवोऽन्ये चापुण्याधिकरणाः, तत्राधिकैः पुण्याधिकरणैरारब्धे सुखातिशयोऽधिकैश्चापुण्याधिकरणैर्दुःखम् इति चेत् । अत्रापि तयोर्नित्यत्वे मरणाद्यभावप्रसङ्गः । अनित्यत्वन्तु न युक्तम् । परमाणुविशेषगुणानामस्मदादिव्यापारेणोत्पत्तेरदर्शनात् ।

अन्ये त्वनाश्रितो धर्म इति मन्यन्ते । तत्राप्यनित्यपक्षे न किञ्चिदनाश्रितं वस्तुभूतं कार्यं सम्भवतीति दूषणम् । नित्यपक्षे तु यागादिक्रियाविलोपप्रसङ्गः । अथ क्रियाभिव्यक्तः कार्यकारणः, तर्हि क्षणिकत्वेन क्रियाविनाशे स्वर्गादिफलं न स्यात् । न च प्रदीपस्येवाभिव्यञ्जकत्वं तत्प्रकाशकत्वम् क्रियायाः, तद्भावेपि तस्यानुपलम्भात् । अथ यागादिक्रिया धर्मस्य सामर्थ्यमुपजनयतीति चेत् । तर्हि यत्तत्सामर्थ्यं स एव धर्मो यत्राश्रितः स चात्मेति संज्ञाभेदमात्रं स्यात् । तथाऽमूर्त्तस्यात्मना सम्बन्धाभावात् तत्सम्बन्धित्वेन

फलाभाव इत्यलं प्रसङ्गेन। न च बोधात्मकमेव कर्म, व्यतिरेकानभ्यु पगमे बोधरूपतया सर्वत्राविशेषेण जगद्वैचित्र्याप्रसङ्गात्।

तस्योत्पत्तिकारणमाह—पुरुषान्तःकरणसंयोगादसमवायिकारणादुपजायते। शुद्धाभिसन्धिज इति अभिसन्धेर्निमित्तकारणत्वं दर्शयति। वर्णाश्रमिणां प्रतिनियतानि साधनानि निमित्तं यस्यासौ तन्निमित्तः, तदेवाह—तस्य साधनानि श्रुतिस्मृतिविहितानि। वर्णाश्च ब्राह्मणादयः, आश्रमिणो ब्रह्मचर्यादयस्तेषां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणीति। तत्र सामान्यानि साधनानि—धर्मे श्रद्धा भक्तिविशेषः कारणम्। अहिंसा तु यत्यादेः सर्वदा अन्यस्य देशविशेष कालविशेषे चेति। यथा तीर्थे न हनिष्यामि अमावास्यादौ। भूताहितत्वमपि कस्यचित्सर्वदा कस्यचिद्देशविशेषादाविति। सत्यवचनं धर्मसाधनं यन्न परेषामनिष्टम्। उक्तञ्च—'न ब्रूयात् सत्यमप्रियमि'ति। अनुपधा परद्रोहः। अस्तेयमचौर्यम्। कस्यांचिदवस्थायां चौर्येऽपि न दूषणमित्युक्तम्। यथा मुमूर्षोर्द्विजस्याशनमात्राहरणमिति। ब्रह्मचर्यमपत्यसृजः करणस्योपस्थस्य संयमस्तच्च कस्यचित्सर्वदा कस्यचिद्देशकालविशेष इति। क्रोधवर्जनमप्येवम्। अभिषेचनं स्नानम्। शुचिद्रव्याणां सेवनमासनपरिधानाशनैः। विशिष्टदेवताभक्तिरिति। त्रयीप्रसिद्धानुमानावगतदेवताविशेषभक्तिः। उपवासोऽहोरात्रं नैरशनता, कालविशेषादौ धर्मसाधनम्। अप्रमादो विहितानुष्ठाने निरालस्यम्।

ब्राह्मणक्षत्रियविशां सामान्यानि धर्मसाधनानि-इज्या यजनम्, अध्ययनं वेदपाठः, दानं सत्पात्रस्य द्रव्यनिवेदनमिति। ब्राह्मणस्यासाधारणानि धर्मसाधनानि-प्रतिग्रहाध्यापनयाजनानि। प्रतिग्रहः शास्त्रेणानिन्दितद्रव्यादानं, वेदपाठो, याजनं यागे पुरोहितः, स्ववर्णनियताश्च संस्काराः। क्षत्रियस्यासाधारणानि धर्मसाधनानि सम्यक् प्रजापालनम असाधुनिग्रहो युद्धेष्वनिवर्त्तनं स्वकीयाश्च संस्काराः। वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः। शूद्रस्य सर्वदा ब्राह्मणाद्याज्ञया वर्त्तनमिति। अमन्त्रकाश्चोङ्कारादिविवर्जिताः क्रिया इति। आश्रमिणान्तु धर्मसाधनान्युच्यन्ते। तत्र ब्रह्मचारिणः, किंविशिष्टस्य? गुरुकुले वसतस्तच्छीलं चेति तद्वासिनो गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि। गुरुशुश्रूषा तदुपासनम्।

अग्नीन्धनमग्न्यर्थमिन्धनाहरणम् । भिक्षाणां समूहो भैक्षं माधुकरी भिक्षा तदाचरणम्। मधुमांसदिवास्वप्नांजनाभ्यञ्जनादिवर्जनम्। एतत्तु प्रतिवेदं द्वादशवर्षाणीत्यष्टचत्वारिंशत् वर्षाणि विद्याव्रतं यावत् ग्रहणं भवेत्। ततो विद्याव्रतस्नातकस्य चीर्णविद्याव्रतस्य कृतदारस्योद्वाहितपत्नीकस्य गृहस्थस्य धर्मसाधनान्युच्यन्ते । ते चतुर्विधा-वार्त्तावृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति । तत्र वार्त्तावृत्तयः कृषिवाणिज्यादिकमनिन्दितं शास्त्रेणैव युञ्जन्तः शतसंवत्सराभिः क्रियाभिर्यजन्तो याजयन्तो आत्मानं प्रार्थयन्ते । शालीनवृत्तयस्तु यजन्तो याजयन्तो ददतः प्रतिगृह्णन्तः शतसम्वत्सराभिः क्रियाभिरात्मनां प्रार्थयन्तः । यायावरास्त्वधीयन्तो न याजयन्तो ददतो न प्रतिगृह्णन्त इत्यात्मानं प्रार्थयन्ते । तत्र घोरसंन्यासिका नाम उद्धृतपरपूताभिरद्भिः कार्यं कुर्वाणाः प्रतिदिनमाहृतोञ्छवृत्तिमुपजीवन्तः शतसम्वत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । उदाहरणार्थं च गृहस्थद्वयम् । उक्तशीलानयायावरवृत्त्युपार्जितैर्द्रव्यैर्भूतमनुष्यदेवपितृब्रह्माख्यानां पञ्चानां महायज्ञानां सायं प्रातरनुष्ठानम् । सायमपराह्णं प्रातः प्रत्युषसि । तत्र बाह्यबलिना भूतयज्ञः हन्तकारेण मनुष्ययज्ञः पुष्पपत्राद्युत्सर्गेणाग्निसन्तर्पणेन देवयज्ञः । अन्नदानेन पितृयज्ञः वेदाध्ययनेन ब्रह्मयज्ञः इत्येषां सायं प्रातरनुष्ठानम् । एकाग्निविधानेन एकोऽग्निर्विवाहकाले परिगृहीत इति । नैमित्तिकानान्तु परस्परं व्यावृत्तमनुष्ठानभेदं दर्शयति—पाकयज्ञसंस्थानामित्यादिना । पाकयज्ञसंस्थास्तु—

> अष्टकाः पार्वणं श्राद्धं श्रावण्याग्रायणी तथा ।
> चैत्री चाश्वयुजी चैव सप्त पाकसंस्था इमाः स्मृताः ॥

एषां च नित्यानां शक्तौ विद्यमानायामनुष्ठानम् , असमर्थस्य त्वकरणेपि न दोष इति । तदेवाह—'जरया ह वा एष एतस्मात्सत्राद्विप्रमुच्यते मृत्युना वेति' । अग्न्याधेयानां च हविर्यज्ञसंस्थानाम् । अग्न्याधेयोऽग्निहोत्रं दर्शपूर्णमासौ च चातुर्मास्याग्रयणेष्टिर्निरूढपशुबन्धसौत्रामणी चेति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त होमयज्ञसंस्थाः । तदाह—'सोमयज्ञसंस्थानामग्निष्टोमादीनामि'ति । एवमन्येपि यज्ञविशेषास्तच्छास्त्रप्रसिद्धा एव ग्राह्या इति । ऋत्वन्तरेषु

ब्रह्मचर्यमपत्योत्पादनं च । वनस्थस्य धर्मसाधनमाह-ब्रह्मचारिणो गृहस्थस्य वा वनवास इति । उक्तं च-'यदि वा ब्रह्मचर्यादेव प्रव्रजेत्' इति । अतो ब्रह्मचारिणो गृहस्थस्य वाधिकारः । तेऽपि चतुर्विधाः— वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति । तत्र वैखानसा नामाकृष्टपच्याभिरौषधीभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । तत्रौदुम्बरा नाम प्रातरुत्थाय यां दिशं प्रेक्षन्ते तदाहृतैर्बदरनीवारश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निवर्त्तयन्त आत्मानं प्रार्थयन्ते । तत्र बालखिल्या नाम जटाधरा चीरवल्कलसंवृताङ्गाः पौर्णमास्यां वा कार्त्तिक्यां पुष्यादिभक्षमुत्सृजन्त अष्टौ मासान्वृत्त्युपार्जनं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । तत्र फेनपा नाम उद्दण्डकाऽनुन्मत्ताः शीर्णपत्राभिभोजिनः यत्र यत्र वा वसन्त आत्मानं प्रार्थयन्ते । तदेवाह—वल्कलाजिनकेशश्मश्रुनखरोमधारणं वन्याम्बुहुतातिथिशेषभोजनानि वनस्थस्येति । यत्याश्रममुपदर्शयन्नाह—त्रयाणामन्यतमस्येति । त्रयाणां ब्रह्मचारिगृहस्थवानप्रस्थानामन्यतमस्य । किंविशिष्टस्य ? श्रद्धावतः सर्वभूतेभ्यो नित्यं सर्वदा अभयं दत्वा, उक्तं च 'न हिं स्यात्सर्वभूतानीति', संन्यस्य स्वानि कर्माण्यग्निहोत्रादीनि । यमनियमेष्वप्रमत्तस्येति । अहिंसादयो यमाः शुश्रूषादयो नियमाः, तेष्वप्रमत्तस्य । षड्पदार्थप्रसंख्यानात्परिज्ञानाद्योगसाधनं प्रव्रजितस्येति । योग एव तस्य धर्मसाधनम् । उक्तन्यायेन तेऽपि चतुर्विधाः—कुटीचका बहूदका हंसाः परमहंसाश्चेति । कुटीचकास्त्रिदण्डकमण्डलुकन्थादिधारिणो ज्ञातिगृहेषु भोजिनः । बहूदका नाम ब्राह्मणगृहेषु भिक्षाशिनः । हंसा नाम शिखाकमण्डलुदण्डहस्ता ग्रामैकरात्रवासिनस्तीर्थादिषु त्रिपञ्चरात्रम् एवं पक्षोपवासादिभिरात्मानम्प्रार्थयन्ते । परमहंसास्त्वेकदण्डधरा मुण्डाः कौपीनवाससः शिखायज्ञोपवीतकमण्डलुभिक्षाकपालादीनां च त्यागिनः । बहूदका नाम ब्राह्मणगृहेषु भिक्षाशिनः शून्यागारदेवगृहवासिनः । न तेषां धर्मो नाधर्मो न सत्यं न चानृतम् । सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चनाः । एषां चतुर्णामपि दृष्टं प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादं शुद्धाभिसन्धिं चापेक्ष्यात्ममनः-संयोगादसमवायिकारणाद्धर्मोत्पत्तिरिति ॥

(भा०) अधर्मोऽप्यात्मगुणः। कर्तुरहितप्रत्यवायहेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी। तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि विहिताकरणम् प्रमादश्चैतानि दुष्टाभिसन्धिं चापेक्ष्यात्ममनसोः संयोगादधर्मस्योत्पत्तिः॥

(व्यो०) न परं धर्मोऽधर्मोऽप्यात्मगुणः। कर्त्तुरहितप्रत्यवायहेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधीति। अतीन्द्रियत्वे सत्यन्त्यदुःखसंविज्ञानविरोधित्वादधर्म इतरस्मात् भिद्यते। शेषं पूर्ववत्। तस्य साधनानि शास्त्रे विप्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि। हिंसा प्राणिवधोऽनृतमसत्यं स्तेयं चौर्यम्। आदिपदेनान्येषामपि धर्मसाधनविपरीतानामवरोधः। अवश्यकर्त्तव्यस्य संध्यावन्दनादेरकरणं विहितकालातिक्रमेणानुष्ठानं प्रमादश्चालस्यम्। एतानि निमित्तानि दुष्टाभिसन्धिं दुष्टाभिप्रायं चापेक्ष्यात्ममनःसंयोगादसमवायिकारणादात्मन्यधर्मोत्पत्तिरिति॥

इदानीं कस्योपजातं कर्म संसारसम्पादकं कथं च निवर्त्तकमित्युपदर्शयति—

(भा०) अविदुषो रागद्वेषवतः प्रवर्तकाद्धर्मात् प्रकृष्टात् स्वल्पाधर्मसहितात् ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेष्वाशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति। तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति। एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमनुष्यतिर्यङ्नारकेषु पुनः पुनः संसारबन्धो भवति॥

ज्ञानपूर्वकात्तु कृतादसङ्कल्पितफलाद्विशुद्धे कुले जातस्य दुःखविगमोपायजिज्ञासोराचार्यमुपसङ्गम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रा-

गद्वेषाद्यभावात् तज्जयोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयोश्चोपभोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते। तदा निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः, पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति ॥

(व्यो०) अविदुषो मिथ्याज्ञानवतो धर्माधर्मावुत्पन्नौ संसारं सम्पादयतस्तदाह—प्रवर्त्तकात संसारसम्पादकाद्धर्मात् प्रकृष्टात् स्वल्पाधर्मसहितात्। इष्टानि च तानि शरीरेन्द्रियविषयसुखादीनि तैः। किंविशिष्टैः? आशयानुरूपैः कर्मानुरूपैर्योगः सम्बन्धो भवतीति। केषु स्थानेषु? ब्रह्मेन्द्रप्रजापतिपितृऋषिमनुष्यलोकेष्विति। तथा प्रकृष्टादधर्मात्स्वल्पधर्मसहितादनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगः। केषु? प्रेततिर्यग्योनिस्थानेष्विति। उपसंहारमाह—इत्येवं प्रवृत्तिलक्षणात्तत्स्वरूपाद्धर्मादधर्मसहिताद्देवतिर्यङ्मनुष्यनारकेषु पुनः पुनः संसारस्य प्रबन्धः सन्तानो भवतीति।

प्रवर्त्तकाद्धर्मात् संसारोत्पत्तिमुपदिश्य निवर्त्तकात्तन्निवृत्तिमाह—ज्ञानपूर्वकात्तु कृतादिति। ज्ञानं पूर्वं यस्य स तथोक्तस्तस्मात्। किंरूपात्? असङ्कल्पितफलादिति। इत्थं मे शरीरेन्द्रियविषयाः सम्पद्यन्तामित्थमित्येवं न सङ्कल्पितं फलं यस्य स तथोक्तस्तस्माद्विशुद्धे कुले जन्म भवति। तस्य जातस्य दुःखवियोगोपायजिज्ञासा सम्पद्यते—कुतः साधनादत्यन्तं दुःखसन्ततेर्वियोगः सम्पद्यत-इति। एवं जिज्ञासोराचार्योपसङ्गमः सम्पद्यते। तं चोपसङ्गम्य दुःखसन्तानव्यावृत्तेरुपायं विजानाति—तत्त्वज्ञानाच्छ्रेयः सम्पद्यत-इति। ततः शास्त्राभ्यासात् षट्पदार्थतत्त्वज्ञानमुत्पद्यते। तस्य चोत्पन्नषट्पदार्थज्ञानस्याज्ञाननिवृत्तिर्भवति। तन्निवृत्तौ विरागः, कारणाभावेन कार्यस्यानुत्पत्तेः। विरक्तस्य रागद्वेषाभावात् ताभ्यां जायेते यौ धर्माधर्मौ तौ तज्जौ तयोरनुत्पत्तिरिति, रागद्वेषयोर्धर्माधर्मजनकत्वेनोपलब्धेः। तदभावे तदभावो भवत्येव। सञ्चितयोश्च निरोधस्तत्त्वज्ञानादुपभोगाद्वा। ततो रागादिनिवृत्तौ सत्यां निवृत्तिलक्षणः

केवलो धर्मः सन्तोषसुखं शरीरपरिच्छेदं चोत्पादयति । तच्चोत्पाद्य परमार्थः सर्वपदार्थानामात्मा तद्दर्शनाज्जातं परमार्थदर्शनजं सुखं करोति । तत् कृत्वा निवर्त्तते । तदा निर्गतं धर्माधर्मसमाख्यातं बीजं यस्यासौ तथोक्तस्तस्यात्मनः शरीरादिनिवृत्तिः बीजाभावादेव पुनः शरीराद्यनुत्पत्तौ सत्यां दग्धेन्धनानलवदुपशमो मोक्ष इति । यथा दग्धेन्धनस्यानलस्योपशमो ज्वालादिरहितस्यावस्थानं तद्वदत्यन्तं विशेषगुणवियुक्तस्यात्मनोऽवस्थानं मोक्ष इति निर्णीतमादिवाक्ये ॥

शब्दस्य लक्षणपरीक्षार्थमाह--

(भा०) शब्दोऽम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणोभयविरोधी संयोगविभागशब्दजः प्रदेशवृत्तिः समानासमानजातीयकारणः । द्विविधो-वर्णलक्षणो ध्वनिलक्षणश्च । तत्र अकारादिर्वर्णलक्षणः शङ्खादिनिमित्तो ध्वनिलक्षणश्च । तत्र वर्णलक्षणस्योत्पत्तिः-आत्ममनसोः संयोगात् स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते स चोर्ध्वं गच्छन् कण्ठादीनभिहन्ति ततः स्थानवायुसंयोगापेक्षमाणात् स्थानाकाशसंयोगात् वर्णोत्पत्तिः । अवर्णलक्षणोऽपि भेरीदण्डसंयोगापेक्षाद्भेर्याकाशसंयोगादुत्पद्यते । वेणुपर्वविभागाद् वेण्वाकाशविभागाच्च शब्दाच्च संयोगविभागनिष्पन्नाद्वीचीसन्तानवच्छब्दसन्तान इत्येवं सन्तानेन श्रोत्रप्रदेशमागतस्य ग्रहणं नास्ति परिशेषात् सन्तानसिद्धिरिति ॥

इति प्रशस्तपादभाष्ये गुणपदार्थः समाप्तः ॥

---

( व्यो० ) शब्दोऽम्बरगुण इत्यादि। अम्बरगुणत्वाच्छब्द इत्युक्ते संख्यादिभिर्व्यभिचारस्तदर्थं श्रोत्रग्राह्य इति। शब्दत्वादिभिर्व्यभिचारपरिहारार्थं चाम्बरगुण इति। शब्द इतरस्मात् भिद्यते अम्बरगुणत्वे सति श्रोत्रग्राह्यत्वादिति। क्षणिक इति परीक्षार्थम्। पूर्वपदापेक्षं वा लक्षणम्।

ननु चासिद्धं शब्दे क्षणिकत्वम्, प्रत्यभिज्ञानादेरुपलम्भात्, यमहमश्रौषं गोशब्दं तमेतर्हि शृणोमि—इति श्रोतुर्विज्ञानमुत्पद्यमानमुपलब्धम्। न चेदमप्रमाणम्, अन्यताग्राहकप्रमाणानुपलब्धेः। तथाऽर्थापत्त्या च शब्दस्य नित्यत्वं विज्ञायते। अनित्यत्वे हि सङ्केतकालानुभूतशब्दविलयोत्तरकालं शब्दान्तरोपलम्भादसङ्केतिता तदर्थप्रतिपत्तिर्न स्यात्। सा चोपलभ्यत इति तदन्यथानुपपत्त्या शब्दस्य नित्यत्वं ज्ञायते।

तदेतदसत्। गृहीतग्राहित्वेन प्रत्यभिज्ञानस्याप्रमाणत्वात्। 'अनधिगतार्थगन्तृ प्रमाणम्' इति सामान्यलक्षणाभिधानात्। अथानधिगतार्थं प्रत्यभिज्ञानम्। तन्न। अदृष्टार्थतायाः मिथ्यात्वप्रसङ्गात्। अथ स्वरूपेणाधिगतार्थमपीदानीन्तनं देशकालाद्यपेक्षयाऽनधिगतार्थं चेति। नन्वेवमप्युभयदोषोपनिपातप्रसङ्गः। प्रमेयसामग्र्यां च देशकालादेरन्तर्भावाभ्युपगमेऽनधिगतार्थत्वम्, एतावता प्रमेयस्य पूर्वमप्रतिपत्तेः। न च श्रोत्रव्यापारेण देशकालादेर्ग्रहणं दृष्टम्। अथ प्रमाणसामग्र्यामन्तर्भावः, तर्हि प्रमाणस्यान्यत्वेऽपि प्रमेयस्य तादवस्थ्यादधिगतार्थविषयत्वमेव। तदपेक्षया चेदं विशेषणम्। अन्यथा हि व्यवच्छेद्याभावादनुपपन्नमेव स्यात्, प्रमाणसामग्र्याः नियतविज्ञानजनकत्वात्। सर्वत्र प्रमेयभेदादेव विज्ञानभेद इत्यभ्युपगमे प्रतिज्ञानमन्यतायां क्षणिकताप्रसङ्गः। तस्मादनधिगतार्थगन्तृ प्रमाणमित्येवंवादिनो प्रमाणमेव प्रत्यभिज्ञानम्। तथा छिन्नोद्भूतकेशनखादिष्वन्यत्वेपि सादृश्यवशात् प्रत्यभिज्ञानम्, सामान्यादौ चार्थतथाभावादिति द्वैविध्योपलब्धेर्विशेषानुपलब्धौ शब्दे प्रत्यभिज्ञानम्। न च व्यञ्जकानां सन्दिग्धत्वादप्रमाणम्। स्वतः प्रामाण्यस्य पूर्वमेव प्रतिषेधात्। अन्यतः प्रमाणादभेदप्रतिपत्त्यभ्युपगमे च तदेवास्त्वलं प्रत्यभिज्ञानेन। तथा व्यञ्जकानां क्षणिकतया शब्दज्ञानानन्तरमेव तिरोभावे शब्दस्य निर्विषयमेव स्यात् प्रत्यभिज्ञानम्। न च व्यञ्जकानां नि-

त्यत्वम्, सर्वदा शब्दव्यक्तिप्रसङ्गात् । अथ प्रत्यभिज्ञानन्यथानुपपत्त्या तत्कालं यावदवस्थानम् । न । अन्यथापि तदुभावात् । अनित्यत्वेपि सादृश्यवशात् प्रत्यभिज्ञानमुत्पद्यत एवेति । विवादगोचरापन्नः शब्दोऽभिव्यक्तः प्रत्यभिज्ञानकालं यावन्नावतिष्ठते शब्दप्रत्ययविषयत्वात् पूर्वानुभूतशब्दवत् । न च प्रत्यभिज्ञानं नित्यत्वप्रतिपादनायालम् । अनित्येपि भावात् । अथाऽवस्थायित्वं साध्यते, तत्रापि सन्ततावस्थाने तदेव दूषणम् । अवस्थानमात्रं तु सिद्धसाधनमुपलम्भसङ्केतस्मरणक्रमेणार्थोपलम्भकालं यावदवस्थानाभ्युपगमात् । अथ पूर्वोपलब्धे शब्दे वर्षादिव्यवधानेनापि प्रत्यभिज्ञानादन्तरालेऽवस्थानं साध्यते । न । अन्यत्वेऽपि प्रत्यभिज्ञानोपलब्धेः । यथा बालावस्थायामुपलब्धे देवदत्ते अन्यत्वेपि वृद्धावस्थायामुपलम्भात् प्रत्यभिज्ञानम् । न चात्रावस्थाभेदमात्रमेव शरीरस्येति वाच्यम् । अवयवरचनापरिमाणरूपादिव्यतिरेकेण तदनुपलम्भात् । बालावस्थायां हि शिथिलावयवरचना कुमारावस्थायां चान्यथाभूतेति तद्भेदाच्छरीरस्य भेदोऽवश्यं भावी, असमवायिकरणविनाशेन कार्यद्रव्यस्य विनाशोपलब्धेः । परिमाणभेदोपलब्धेश्च पूर्वपरिमाणनिवृत्तावेवोत्तरपरिमाणम् , परिमाणवति परिमाणारम्भप्रतिषेधात् । एतद्रूपादिष्वपि समानम् । परिमाणविनाशश्चाश्रयविनाशादेवेत्यन्यत्वमेव । बालादिशरीराणां परिमाणभेदस्य कुवलादावन्यत्वेनैव व्याप्तत्वात् । अथ परस्परं व्यावृत्तो बालाद्यवस्थाशब्दाभिधेयो धर्मस्तस्य च व्यतिरेके वृद्धावस्थायामपि बालादीनामुपलम्भः स्यात् तेनाविरोधात् । विरोधे वा कथमन्यत्वमसिद्धम् । अव्यतिरेकेपि तेषामाविर्भावतिरोभावाभ्यां धर्मिणोपि तथाभावप्रसङ्गः । तस्माच्छरीरभेदेपि सादृश्यात् स एवायं देवदत्त इति ज्ञानवच्छब्देपि प्रत्यभिज्ञानं भविष्यतीति शब्दोपलम्भादनन्तरं श्रोत्रव्यापारेणैव तदभावप्रतीतेरेकत्वग्राहकं प्रत्यभिज्ञानमप्रमाणम् । कर्णशष्कुल्यभ्युपगमेपि क्वचिच्छब्दस्याभिव्यक्तौ तस्य व्यापकतया सर्वदेशावस्थितपुरुषाणामुपलम्भः स्यात्, निरावरणस्य व्यापकत्वाविशेषात् । तथैकदेशास्तस्याभिव्यज्यन्ते तेषामभेदे शब्दस्यैवाभिव्यक्तिरिति तदेव दूषणम् । भेदे तु तदभिव्यक्तौ कथं शब्दोऽर्थमभिदध्यात् । यदि च शब्दविशेषणश्च शब्दाभावः परिच्छिद्यते, विशे-

षणविशेष्यभावलक्षणेनैव सम्बन्धेनेत्युक्तं पूर्वम् । अथ शब्दस्योपलम्भानन्तरमुपलब्धिव्यञ्जकाभावात् नासत्त्वादिति चेत् । न । सद्भावे प्रमाणाभावात् । आवरणादेरनुपलम्भाच्च । नह्यैन्द्रियकस्यातीन्द्रियमावरणं प्रमाणेन क्वचिदुपलब्धम् । अभ्युपगमेऽपि क्वचिच्छब्दस्याभिव्यक्तौ तस्य व्यापकतया सर्वदेशावस्थितपुरुषाणामुपलम्भः स्यात् निरावरणस्य व्यापकत्वाविशेषात् । यदि च शब्दात्मकानियतार्थप्रतिपादकाश्चैकदेशाः, संज्ञाभेदमात्रमेव । अथ भेरीदण्डसंयोगाद्वेगापेक्षादुत्पन्नक्रियो वायुर्वेगवांश्छ्रोत्रदेशेनागत्याभिसम्बध्यते तद्गतानि तु स्तिमितवाय्वन्तराणि प्रोत्सारयति, ततः प्रतिबन्धकाभावे सति श्रोत्रं शब्दस्य ग्राहकमिति । नन्वेवमप्यशेषशब्दोपलम्भप्रसङ्गः, संस्कृते हि श्रोत्रे सर्वेषां सान्निध्यात् । न च गोशब्दाभिव्यक्त्यर्थं प्रेरितो वायुर्नाश्वशब्दं व्यनक्तीति वाच्यम् । व्यञ्जकेषु नियमानुपलब्धेः । यथा घटाभिव्यक्त्यर्थमुत्पादितः प्रदीपः समानेन्द्रियग्राह्यसमानदेशावस्थितपदार्थाभिव्यञ्जक इति । तथा हि–न श्रोत्रं प्रतिनियतसंस्कारकसंस्कार्यं समानेन्द्रियग्राह्यसमानदेशावस्थितवस्तुप्रकाशकत्वात् चक्षुर्वत् । प्रदीपावष्टब्धदेशव्यतिरेकताज्ञानं प्रदीपसंस्कृतं न चक्षुषा ग्रहणमिति समानदेशावस्थितपदम् । एवंविधाश्च रूपरसादयो न गृह्यन्त इति समानेन्द्रियग्राह्यग्रहणम् । शब्दा वा विवादविषयाः प्रतिनियतव्यञ्जकव्यंग्या न भवन्ति समानेन्द्रियग्राह्यसमानदेशावस्थितत्वात् घटादिवत् । अत्र च ये प्रतिनियतसंस्कारकसंस्कार्या न भवन्ति चक्षुर्घटादयस्ते सपक्षास्तत्रहेतोः सद्भावः । तद्विपरीतास्तु विपक्षास्तस्मादत्यन्तं व्यावृत्तिरिति । प्रदीपेन च संस्कृतं चक्षुर्युगपत् घटादिप्रकाशकमिति दृष्टम् । एवं श्रोत्रमप्यशेषशब्दोपलम्भकं स्यात् । अत्र चापेक्षाबुद्धिवदनेकपदार्थालम्बनमेवैकं ज्ञानमाशुभावेन वा युगपच्छब्दप्रयोग इति । नन्वेकस्यामपि पृथिव्यां शुक्लादिभेदानां संस्कृतेनापि चक्षुषा न युगपत्प्रकाशनमेवं घ्राणादिना गन्धादेरिति । एवमपि न हेतोर्व्यभिचारः, सपक्षैकदेशवृत्तेरपि गमकत्वात् । अथ यथा चक्षुः समानेन्द्रियग्राह्यसमान देशावस्थितानामपि शुक्लादिभेदानां न युगपत् प्रकाशकमेवं श्रोत्रमपि स्यात् । इष्टं च पृथिव्यामनेकरूपाधिकरणत्वमपि चित्ररूपस-

मर्थनावसरे । सत्यमेतत् । तथापि रूपभेदानामग्रहणं सहकार्यभावात् । तथाच नानारूपावयवोपलम्भसहकारीन्द्रियमवयविन्यनेकरूपग्राहकमित्युक्तम् । तत्सद्भावे चित्रप्रतिभासनात् । न चैवं श्रोत्रस्य वायुना संस्कृतस्य सर्वशब्दानां तत्र सान्निध्यादग्रहणे कारणमस्तीति । सामान्यानि तु प्रतिनियतव्यञ्जकव्यंग्यानि न तु समानदेशानि स्वविषयसर्वगतत्वादेवेति व्यभिचाराभावः । तथाऽऽतपसम्पर्कात्तैले गन्धाभिव्यक्तिः ग्रीष्मावसाने तु दग्धस्थलीषु प्रथम जलधरधारासम्पर्कात्, न च समानदेशत्वम् । यदि वा जलधरधारासम्पर्कात् भूगताऽनिलोद्भवे सत्यवयवक्रियाक्रमेण पूर्वद्रव्यनिवृत्तावुत्पन्नपाकैर्द्व्यणुकादिप्रक्रमेण द्रव्यान्तरोत्पादे सति गन्धोऽभिव्यज्यत इति । यत्राभिव्यज्यते सामान्यरूपादि तदाश्रयस्थमेवेति दृष्टमेवं शब्देपि स्यात् । तत्तु नास्तीति व्यक्तिधर्मकत्वाभावः । तथा वीणाशब्दाभिव्यञ्जकेन रासभशब्दस्याप्यभिव्यक्तत्वात् ग्रहणे वीणाशब्दस्य सर्वदाऽनुपलम्भ एव स्यात् । न चैतदस्ति । क्वचिदेव रासभशब्देन वीणाशब्दादिशब्दानामभिभवोपलब्धेः । न चायं नित्यपक्षे अभिभाव्याभिभावकभावो घटते । तीव्रतरादिभेदासम्भवात् । तीव्रस्य च ध्वनिग्रहणात् मन्दस्याग्रहणमभिभवः । न च तीव्रेण व्यञ्जकेनैकस्य ग्रहणादन्यस्याग्रहणमुपपद्यते । व्यञ्जकेषु नियमानुपलब्धेरित्युक्तम् । शब्दप्रत्ययसमानाधिकरणश्चायं तीव्रः शब्दो मन्दः शब्द इति प्रत्ययो न व्यञ्जकप्रत्ययेनेति कथन्तीव्रतरादिर्व्यञ्जकधर्मः । तदेवन्तीव्रादिभेदभिन्नत्वात्सुखादिवदनित्यत्वं शब्दानाम् । व्यञ्जकानुपलब्धौ चाभूत्वा भवनस्योपलब्धेः कार्यत्वादनित्यत्वं घटादिवत् । तथा परमात्मगुणान्यत्वेसति व्यापकविशेषगुणत्वात्सुखादिवत्, तच्चोक्तमाकाशाधिकारे । अनित्यविशेषगुणमाकाशं सलिलादिपरमाणुव्यतिरेके सति भूतत्वात् क्षित्यादिवत् । पारिमाण्डल्याधारपरत्वापरत्वानुमेयपरमात्मान्यत्वे सति समवायिकारणत्वात् क्षित्यादिवदेव । अथ गुणत्वे शब्दस्यानुमानम्—न द्रव्यकर्मजातीयः शब्दः श्रोत्रग्रहणयोग्यत्वात् शब्दत्वादिवत् । गुणः शब्दो द्रव्यकर्मान्यत्वे सति सत्तासम्बन्धित्वात् रूपादिवत् । यच्चेदम्—अर्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दानां नित्यत्वं विज्ञायते—इत्युक्तम् । तदसत् । अनित्यत्वेपि सादृश्योपादाने सत्यर्थप्रतिपत्तेर्भावात् । तत्र यत्र गकारौकारविसर्जनीयानामित्थंभूतानुपूर्वीमुपलभसे तत्र तत्र गोत्वविशिशिष्टोर्थः प्रतिपत्तव्यः प्रतिपादयितव्यश्चेति सङ्केतग्रहे सति तथा-

विधं शब्दमुपलभमानस्तमर्थं प्रतिपद्यते प्रतिपादयति चेति।

तदेवमनित्यत्वे व्यवस्थिते विनाशकारणमाह—कार्यकारणोभयविरोधीति। आद्यः शब्दः कार्येण विरुध्यते अन्त्यस्तु कारणं विरुणद्धि, मध्यगतास्तु कार्येण विरुध्यन्ते, कारणं च विरुन्धन्तीति। संयोगविभागशब्दज इत्युत्पत्तिकारणं संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिरिति। स द्विविधः। केन रूपेण? वर्णलक्षणोऽवर्णलक्षणश्चेति। अकारादिहकारपर्यन्तो वर्णलक्षणः। शङ्खादिर्निमित्तं यस्यासौ तन्निमित्तोऽवर्णलक्षण इति। आदिपदेनान्येषामपि निमित्तकारणानामवरोधः। तत्र वर्णलक्षणस्योत्पत्तिरभिधीयते। आत्ममनसोः संयोगादसमवायिकारणात् स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा भवति, तदनन्तरं प्रयत्नः, तमपेक्षमाणादात्मवायुसंयोगादसमवायिकारणाद्वायौ समवायिकारणे कर्म। स चोत्पन्नकर्मा वायुरूर्ध्वं गच्छन् कण्ठादीनभिहन्तीति। आदिपदेन ताल्वोष्ठादेर्ग्रहणम्। ततः स्थानवायुसंयोगापेक्षात् स्थानाकाशसंयोगाद्वर्णोत्पत्तिरिति। आकाशं समवायिकारणं स्थानाकाशसंयोगोऽसमवायिकारणं स्थानवायुसंयोगश्चापेक्षाकारणमिति। अवर्णलक्षणोऽपि भेरीदण्डसंयोगाद्यपेक्षादित्यादिपदेन दिक्कालादेर्ग्रहणम्। भेर्याकाशसंयोगादुत्पद्यते। अत्राप्याकाशं समवायिकारणम् भेर्याकाशसंयोगोऽसमवायिकारणं भेरीदण्डसंयोगादिर्निमित्तकारणमिति। तथा वेणुपर्वविभागापेक्षात् पर्वाकाशविभागादसमवायिकारणादाकाशे शब्दो निष्पद्यत इति। शब्दजं शब्दमुपदर्शयति—एवं संयोगाद्विभागाच्च परिनिष्पन्नः शब्दः समन्तात् शब्दान्तराण्यारभते। तस्मादप्यसमवायिकारणात् स्वकारणप्रत्यासत्त्यपेक्षादाकाशेऽन्यः शब्दः इति वीचीसन्तानवच्छब्दसन्तानः। यथा हि महतः पाषाणाद्यभिघातादुपजाता वीची वीच्यन्तरमारभते, सापि पुनर्वीच्यन्तरमिति सन्तानस्तद्वच्छब्दसन्तान इत्येवं सन्तानन्यायेन श्रोत्रदेशमागतस्य ग्रहणम्। एतच्च कल्प्यते, अन्यथा कर्णशष्कुल्याकाशसंयोगोपलक्षितनभःप्रदेशव्यतिरेकेण प्रदेशान्तरसमवायात्तेषामव्याप्यवृत्तित्वेन विशिष्टप्रत्यासत्तेरभावादग्रहणमेव स्यात्। तदाह-श्रोत्रशब्दयोर्गमनासम्भवात्सन्तानानभ्युपगमे न परस्परं प्राप्तिः। प्राप्तस्य चोपलम्भ इति सन्तानः कल्प्यते।

नन्वेतस्मिन् पक्षे शब्दाः स्वावरुद्धनभोदेश एव यदि शब्दान्तरमारभेरन्न कस्याप्युपलम्भः स्यात् सर्वेषामेकत्रैवोपक्षयात्। अथ प्रदेशान्तरे तर्हि ब्रह्मभाषितस्याप्युपलम्भोऽस्मदादिश्रोत्रदेशे शब्दा-

न्तरारम्भात । अथाणुविवरमात्रे स्वदेशानन्तरमारभते । तर्हि तेषां क्षणशतादिव्यवधानेन ग्रहणं स्यात् । तत्तु न दृष्टं क्षणद्वयादिव्यवधानेन श्रवणात । तथाद्यः शब्दः शब्दान्तरं नारभते शब्दत्वादादाद्यशब्दवत् । अन्त्यशब्दो वा शब्दान्तरमारभते शब्दत्वादाद्यशब्दवत् । अतः सन्तानप्रतिषेधे शब्दोपलम्भान्यथानुपपत्त्या वायोर्व्यञ्जकस्यागमनं कल्प्यत इति मन्यन्ते । नचैतद्युक्तम् । व्यक्तिपक्षस्य पूर्वमेव प्रतिषेधाद्वायोरागमने प्रमाणाभावाच्च । न च शब्दोपलब्धिरेव प्रमाणम् , सन्तानन्यायेनापि तदुपपत्तेः । यच्चात्र दूषणमुपन्यस्तं तद्वीचीनिदर्शनोपन्यासान्निरस्तम् । यथा हि महतः पाषाणाभिघातादुपजाता वीची स्वदेशानन्तरदेश एव वीच्यन्तरमारभते न तटादावेवं शब्दोपि स्वकारणप्रत्यासत्तिमपेक्ष्यानन्तरदेश एव शब्दान्तरमारभत इति । न च क्षणशतादिव्यवधानेन ग्रहणप्रसङ्गः, षण्णामेव शब्दानां तीव्रादिभेदानामुत्पत्तेः । तथाहि--भेरीदण्डाभिघातादुपजाते शब्दे सन्निहितस्य तीव्रतमः शब्द इति ज्ञानं तदनन्तरं व्यवहितस्य च तीव्रतरः शब्द इति ज्ञानं ततस्तीव्रो मन्दो मन्दतरो मन्दतमश्चेति षड्भेदाः क्रमेणानुभूयन्त इति नानन्त्यपक्षोक्तो दोषः । तथाहि-भेरीदण्डाभिघातादेक एव शब्दः कल्पितं भूयांसं प्रदेशं व्याप्योपजायत इत्यनेकैरप्युपलभ्यत एवेति न सर्वत्र सन्तानः । यच्चेदमुक्तम्-नाद्यः शब्दान्तरमारभते शब्दत्वादन्त्यशब्दवत्-इति । तन्न । स्वतन्त्रसाधनं स्वयमाद्यन्तशब्दाप्रसिद्धेः । न च दृष्टान्तदार्ष्टान्तिकधर्मिणोरप्रसिद्धौ हेतोः पक्षधर्मत्वं बहिर्व्याप्तिर्वा सम्भवतीति । अथ परव्याप्त्या परस्यानिष्टापादनमेतत् । तन्न । यदि प्रमाणपूर्विका परव्याप्तिस्तयैव बाध्यमानत्वाद्विपरीतानुमानस्यानुत्थानम् । अथाप्रमाणपूर्विका, तर्हि प्रमेयस्याप्रसिद्धेराश्रयासिद्धसाधनं धर्म्यसिद्धश्च दृष्टान्त इति शब्दस्य शब्दान्तरारम्भप्रतिषेधे स्वयमाद्यन्तविशेषणाप्रसिद्धेः, तस्माद्व्यक्तिपक्षप्रतिषेधे शब्दोपलम्भान्यथानुपपत्त्या सन्तानकल्पना क्रियत इति । न चान्त्यशब्दस्यारम्भकत्वपरिकल्पनायां प्रमाणमस्ति । सर्वदोपलम्भप्रसङ्गात् । अतोऽन्त्यशब्दस्य स्पर्शवद्द्रव्यसंयोगैकार्थसमवायेन प्रलयः स्वज्ञानादुपभोगप्रापकादृष्टापक्षयाद्वेति विनाशस्य प्रमाणेनोपलब्धेस्तस्य च निर्हेतुकत्वप्रतिषेधादुक्तकारणादेव विनाशः कल्प्यत इत्यलम् ॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां गुणपदार्थः ॥

# अथ कर्मपदार्थनिरूपणम् ।

इदानीमितरपदार्थवैधर्म्येण स्वभेदव्यापकमुत्क्षेपणादीनां साधर्म्यं, तथा परस्परव्यावृत्तं वैधर्म्यं कारणं च निरूपयन्नाह--

(भा०) उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसम्बन्धः । एकद्रव्यवत्त्वं क्षणिकत्वं मूर्तद्रव्यवृत्तित्वम् अगुणवत्त्वं गुरुत्वद्रवत्वप्रयत्नसंयोगजत्वं स्वकार्यसंयोगविरोधित्वं संयोगविभागनिरपेक्षकारणत्वम् असमवायिकारणत्वं स्वपराश्रयसमवेतकार्यारम्भकत्वं समानजातीयानारम्भकत्वं द्रव्यानारम्भकत्वं च प्रतिनियतजातियोगित्वम् । दिग्विशिष्टकार्यारम्भकत्वं च विशेषः ॥

तत्रोत्क्षेपणं शरीरावयवेषु तत्सम्बद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणमधोभाग्भिश्च प्रदेशैः विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यस्तदुत्क्षेपणम् ॥

तद्विपरीतसंयोगविभागकारणं कर्मापक्षेपणम् ॥

ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः संयोगश्च मूलप्रदेशैर्येन कर्मणावयवी कुटिलः संजायते तदाकुञ्चनम् ॥

तद्विपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणावयवी ऋजुः सम्पद्यते तत्प्रसारणम् ॥

यदनियतदिक्प्रदेशसंयोगविभागकारणं तद्गमनमिति ॥

(व्यो०) उत्क्षेपणादीनाम्। न परं द्वयोस्त्रयाणां च, किं तर्हि? पञ्चानामपि कर्मत्वसम्बन्धः कर्मत्वोपलक्षितः समवायः, तथाचोत्क्षेपणादीनीतरस्माद्भिद्यन्ते कर्माणीति वा व्यवहर्त्तव्यानि कर्मत्वाभिसम्बन्धादिति। एकद्रव्यवत्त्वमिति। एकं च तद्द्रव्यं चेत्येकद्रव्यं तदस्यास्तीत्येकद्रव्यवत्तस्य भाव एकद्रव्यवत्त्वम्। एकं कर्मैकस्मिन्नेव द्रव्ये वर्तते तथैकमेवैकस्मिन्निति। कुत एतद्? एकस्मिंश्चलिते सर्वेषां चलनानुपलब्धेः। यत्रापि बहूनामेककालं चलनं तत्राप्यनेकत्वमेव कारणस्याभिघातादेः प्रत्याश्रयं भेदात्। अन्यत्र च समवेतमभिघाताद्यन्यत्र समवायिकारणमित्यभ्युपगमे चाशेषद्रव्याश्रितस्योत्पत्तिरविशेषात्। तथैकस्मिन्द्रव्ये संयोगाद्विनष्टे कर्मण्याश्रयान्तरेऽपि तस्यैकतायां विनाशः स्यात्। एकस्मिंश्चानेककर्माभ्युपगमे विरुद्धदिगभिमुखतायां परस्परं प्रतिबन्धादगमनमेव स्यात्। एकदिगभिमुखतायां चैकेनैव कर्मणा संयोगविभागयोर्जनितत्वात् न द्वितीयस्य सद्भावे प्रमाणमस्ति। तदुत्तरसंयोगाच्च प्राक्तनकर्मविनाशः कर्मान्तरोत्पत्तिश्च क्वचिदिष्यत एव। तस्माद्यत्र कर्मद्वयप्रतिभासस्तत्राशुभावित्वेनैवेति द्रष्टव्यम्। अथैकद्रव्यवत्त्वं रूपादेरपीति क्षणिकग्रहणम्। तथापि बुद्ध्यादिभिर्व्यभिचारपरिहारार्थं मूर्त्तद्रव्यवृत्तित्वपदम्। अथ क्षणिकत्वे सति मूर्त्तद्रव्येष्वेव वर्त्तमानत्वात् कर्मेत्युक्ते व्यभिचाराभावः। सत्यम्। तथापि पदान्तरं साधर्म्यमात्रप्रतिपादनार्थं परीक्षार्थं चेति। गुरुत्वप्रयत्नसंयोगेभ्यो जायत इति गुरुत्वप्रयत्नसंयोगजं तस्य भावस्तत्त्वमिति। उदाहरणार्थं चैतत्। अन्यस्मादपि कारणात्तदुत्पत्तेः। व्यस्तं च गुरुत्वादिकं कार्यान्तरसम्पादकमपि न समुदितं कर्मव्यतिरेकेणान्यस्येत्यसाधारणमेव। नचैवं सकलकर्मभेदव्यापकमिति वैधर्म्यमात्रमेव। यदि वा गुरुत्वाद्यन्यतमकारणजन्यत्वं विवक्षितम्। तथा स्वकार्यसंयोगविरोधित्वमिति। संयोगमात्रेण विनाशादर्शनादिति स्वकार्यग्रहणम्। कर्मकार्यत्वं च विभागवेगयोरपीति संयोगग्रहणम्। अतः स्वकार्यसंयोगविरोधित्वमसाधारणमपि क्वचिदाश्रयविनाशेनापि विनाशान्न पक्षव्यापकमिति वैधर्म्यमात्रमेव। तथा संयोगेऽपि विभागे च कर्त्तव्ये निरपेक्षकारणत्वं कर्मणः स्वरूपम्। ननु विभागेऽनपेक्षकारणत्वमिष्टं संयोगे तु पश्चाद्भाविनं प्राक्तनसंयोगविनाशमपेक्षत इत्यनपेक्षत्वमसिद्धम्। वस्तुभूतकारणापे-

क्षया तदुपपत्तेः। अभावव्यतिरेकेण च वस्तुभूतं कारणं नापेक्षत इत्य-नपेक्षमित्युक्तम्। न चान्यस्यैतत् सम्भवतीत्यसाधारणम्। असमवा-यिकारणत्वमिति-असाधारणमितरस्माद्व्यावृत्तं गुणानां हि द्वैविध्यम-समवायित्वं निमित्तत्वम्। उत्क्षेपणादीनां चासमवायिकारणत्वमेव न द्वैविध्यमस्तीति विपक्षादन्यतं व्यावृत्तिरेव द्वैविध्यप्रतिषेधस्य विवक्षितत्वात्। तथा स्वपराश्रयसमवेतकार्यारंभकत्वम्। यस्मिन्ना-श्रये समवेतं कर्म तत्राश्रयान्तरे च समवेतं विभागं संयोगं चारभत इति। समानजातीयानारम्भकत्वम्। तथा चोत्पन्नं कर्म विभागं सं-योगं चारभमाणमुपलब्धं न कर्मान्तरमिति। एकस्मिन्धर्मिण्यनेकस्य कर्मणः पूर्वमेव प्रतिषेधात्। द्रव्यानारम्भकत्वम्। न कर्म द्रव्यमार-भते, तस्योत्तरसंयोगेन विनश्यदवस्थस्य कारणत्वासम्भवादिति स्वभेदव्यापकं साधर्म्यम्। प्रतिनियतजातियोगित्वमिति। प्रतिनि-यतजातिरुत्क्षेपणत्वादिका तद्योगित्वं पञ्चानामपि दिग्विशिष्टका-र्यारम्भकत्वं च विशेषः परस्परमिति। तदेवाह—तत्रोत्क्षेपणम्—यदूर्ध्वं भजन्त इत्यूर्ध्वभाजस्तैः संयोगकारणम् अधोभागिभिश्च विभागकारणं कर्मोत्पद्यते। केभ्यः केषु चेति? गुरुत्वद्रवत्वप्रयत्नसंयोगेभ्यः सम-स्तव्यस्तेभ्यस्तदुत्क्षेपणमित्युदाहरणार्थम्। वेगादेरपि तत्कारण-त्वात्। शरीरावयवेषु हस्तपादादिषु तत्सम्बद्धेषु मुसलादिष्वित्या-श्रयनिरूपणम्।

तद्विपरीतसंयोगविभागकारणं कर्मापक्षेपणमिति। ऊर्ध्वभागिभि-र्विभागकारणमधोभागिभिश्च संयोगकारणमिति।

आकुञ्चनमृजुनो द्रव्यस्य येऽग्रावयवास्तेषां तद्देशैस्तदुपलक्षिता-काशादिप्रदेशैर्विभागः, संयोगश्च मूलप्रदेशैरिति—तदुपलक्षिताका-शादिप्रदेशैरेव, येन कर्मणा समुत्पन्नेनावयवी कुटिलः संजायते त-दाकुंचनमिति।

तद्विपर्ययेण संयोगविभागोत्पत्ताविति। मूलप्रदेशै र्विभागः सं-योगश्चाग्रप्रदेशैर्येन कर्मणा समुत्पन्नेनावयवी कुटिलः सन्नृजुः स-म्पद्यते तत्प्रसारणमिति।

यदनियतदिग्देशसंयोगविभागकारणं तत् गमनमिति। उक्तप्रदे-शेभ्योऽन्ये नियतदिक्प्रदेशास्तैः संयोगविभागकारणमिति॥

उपसंहारमाह—

(भा०) एतत्पञ्चविधमपि कर्म शरीरावयवेषु तत्सम्बद्धेषु च सत्प्रत्ययमसत्प्रत्ययं च यदन्यत्तदप्रत्ययमेव तेष्वन्येषु च तद्गमनमिति ।

कर्मणां जातिपञ्चकत्वमयुक्तम् गमनाविशेषात् । सर्वं हि क्षणिकं कर्म गमनमात्रमुत्पन्नं स्वाश्रयस्योर्ध्वमधस्तिर्यग्वाप्यणुमात्रैः प्रदेशैः संयोगविभागान् करोति सर्वत्र गमनप्रत्ययोऽविशिष्टस्तस्माद्गमनमेव सर्वमिति । न वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात्—इहोत्क्षेपणं परत्रापक्षेपणमित्येवमादि सर्वत्र वर्गशः प्रत्ययानुवृत्तिव्यावृत्ती दृष्टे तद्धेतुः सामान्यविशेषभेदोऽवगम्यते । तेषामुदाद्युपसर्गविशेषात् प्रतिनियतदिग्विशिष्टकार्यारम्भत्वादुपलक्षणभेदोऽपि सिद्धः ।

एवमपि पञ्चैवेत्यवधारणानुपपत्तिः । निष्क्रमणप्रवेशनादिष्वपि वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात् । यद्युत्क्षेपणादिषु सर्वत्र वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनाज्जातिभेद इष्यते एवञ्च निष्क्रमणप्रवेशनादिष्वपि । कार्यभेदात् तेषु प्रत्ययानुवृत्तिव्यावृत्ती इति चेत् । न । उत्क्षेपणादिष्वपि कार्यभेदादेव प्रत्ययानुवृत्तिव्यावृत्तिप्रसङ्गः । अथ समाने वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिसद्भावे उत्क्षेपणादीनामेव जातिभेदो न निष्क्रमणादीनामित्यत्र विशेषहेतुरस्तीति । न, जातिसङ्करप्रसङ्गात् । निष्क्रमणादीनां जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्तौ जातिसङ्करः प्रसज्यते । कथम्? द्वयोर्द्रष्ट्रोरेकस्मादपवरकादपवरकान्तरं गच्छतो युग-

पन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टौ तथा द्वारप्रदेशे प्रविशति निष्क्रामतीति च। यदा तु प्रतिसीराद्यपनीतं भवति तदा न प्रवेशनप्रत्ययो नापि निष्क्रमणप्रत्ययः किन्तु गमनप्रत्यय एव भवति। तथा नालिकायां वंशपत्रादौ पतति बहूनां द्रष्टॄणां युगपद्भ्रमणपतनप्रवेशनप्रत्यया दृष्टा इति जातिसङ्करप्रसङ्गः। न चैवमुत्क्षेपणादिषु प्रत्ययसङ्करो दृष्टः। तस्मादुत्क्षेपणादीनामेव जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्ती निष्क्रमणादीनां तु कार्यभेदादिति।

कथं युगपत्प्रत्ययभेद इति चेत्, अथ मतम्—"यथा जातिसङ्करो नास्ति एवमनेककर्मसमावेशोऽपि नास्तीत्येकस्मिन् कर्मणि युगपद्द्रष्टॄणां भ्रमणपतनप्रवेशनप्रत्ययाः कथं भवन्तीति"। अत्र ब्रूमः—न अवयवावयविनोर्दिग्विशिष्टसंयोगविभागानां भेदात्। यो हि द्रष्टा अवयवानां पार्श्वतः पर्यायेण दिक्प्रदेशैः संयोगविभागान् पश्यति तस्य भ्रमणप्रत्ययो भवति, यो ह्यवयविन ऊर्ध्वप्रदेशविभागमधःसंयोगं चावेक्षते तस्य पतनप्रत्ययो भवति। यः पुनर्नालिकान्तर्देशे संयोगं बहिर्देशे च विभागं पश्यति तस्य प्रवेशनप्रत्ययो भवतीति सिद्धः कार्यभेदान्निष्क्रमणादीनां प्रत्ययभेद इति।

भवतूत्क्षेपणादीनां जातिभेदात् प्रत्ययभेदः निष्क्रमणादीनां तु कार्यभेदादिति। अथ गमनत्वं किं कर्मत्वपर्यायः आहोस्विदपरं सामान्यमिति। कुतस्ते संशयः? समस्तेषूत्क्षेपणादिषु कर्मप्रत्ययवद्गमनप्र-

त्ययाविशेषात् कर्मत्वपर्याय इति गम्यते । यतस्तूत्क्षेपणादिवद्विशेषसञ्ज्ञयाभिहितं तस्मादपरं सामान्यं स्यादिति । न । कर्मत्वपर्यायत्वात्–आत्मत्वपुरुषत्ववत्कर्मत्वपर्याय एव गमनत्वमिति । अथ विशेषसंज्ञया किमर्थं गमनग्रहणं कृतमिति । न । भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादिशब्दैरनवरुद्धानां भ्रमणपतनस्पन्दनादीनामवरोधार्थं गमनग्रहणं कृतमिति । अन्यथा हि यान्येव चत्वारि विशेषसंज्ञयोक्तानि तान्येव सामान्यविशेषसंज्ञाविषयाणि प्रसज्येरन्निति । अथवा अस्त्वपरं सामान्यं गमनत्वमनियतदिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्तते गमनशब्दश्चोत्क्षेपणादिषु भाक्तो द्रष्टव्यः स्वाश्रयसंयोगविभागकर्तृत्वसामान्यादिति ॥

(व्यो०) इत्येतत्पञ्चविधमपि कर्म सत्प्रत्ययमसत्प्रत्ययं चेति । प्रत्ययः कारणं तच्च सामान्यपदेनापि सदिति विशेषणात् प्रयत्नाख्यमेव विवक्षितम् । पारम्पर्येण वा प्रत्ययकार्यत्वात् प्रयत्नः प्रत्यय इत्युक्तः । अतः सत्प्रत्ययो यस्य तत्तथोक्तं कर्म प्रयत्नपूर्वकमिति यावत् । असत्प्रत्ययमयत्नपूर्वकम् । तच्च शरीरावयवेषु तत्सम्बद्धेषु भवतीति । एतस्माद्यदन्यत् तदप्रत्ययमप्रयत्नपूर्वकम । अस्मदादिप्रयत्नस्य तत्राव्यापारात् । तच्चैतेष्वन्येषु च द्रव्येषु भवत्युत्क्षेपणादिविलक्षणत्वात् गमनमेवेति ।

कर्मणां जातिपञ्चत्वमयुक्तम् । कुतः ? गमनाविशेषात् । गमनादभेदादित्याक्षेपः । तदेवाह—सर्वं क्षणिकम् । क्षणिकत्वं नाम सर्वकर्मसु समानमिति न स्वरूपभेदात् भेदः । चलनमात्रमुत्पन्नं स्वाश्रयस्य संयोगविभागान् करोति । कैः सह ? ऊर्ध्वमधस्तिर्यक्परमाणुविवरमात्रैः प्रदेशैरिति । यावति प्रदेशे परमाणोरणुप्रवेशः सम्भवतीति न कार्यभेदादपि भेदः सर्वस्याप्येतत्कार्यजनकत्वात् । तथा सर्वत्र च गमनप्रत्ययोऽविशिष्ट इति । उर्ध्वं गच्छत्यग्रप्रदेशाच्च प्रदेशं

गच्छति मूलप्रदेशाच्चाग्रप्रदेशं गच्छतीति। तस्मात् गमनमेव सर्व-मित्युपसंहारः। न वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनादिति प्रति-समाधानवाक्यम्। यदुक्तं-सर्वं गमनमिति-एतत् न, उत्क्षेपणादि-वर्गेषु प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात्। तदेवाह-इहोत्क्षेपणम् परत्रा पक्षेपणमित्येवमादि सर्वत्र वर्गश इति-वर्गे वर्गे प्रत्ययानुवृत्तिर्व्यावृत्ति श्च दृष्टा। तथाहि--उत्क्षेपणमुत्क्षेपणमित्युत्क्षेपणवर्गेऽनुवर्तते। अ पक्षेपणादिवर्गाच्च व्यावर्त्तते, तथा अपक्षेपणं स्ववर्गेऽनुवर्त्तते भेदान्तराच्च व्यावर्त्तत इति, तद्धेतुरनुगतव्यावृत्तज्ञानहेतुरुत्क्षेपण-त्वादिसामान्यविशेषोऽवगम्यत इति, न गमनत्वमेकमेव सामा-न्यम्, उक्षेपणादिभेदानां परस्परव्यावृत्तजातिसम्बन्धिनां सद्भा-वात्। उदाद्युपसर्गविशेषात्तेषां परस्परविशेषः। तथाह्युत्पूर्वं क्षेपण-मुत्क्षेपणमपपूर्वमपक्षेपणमाङ्पूर्वं कुञ्चनं आकुञ्चनम् प्रपूर्वं सारणं प्रसारणम्। गमनं तूपसर्गाभावादेव विशिष्यते। प्रतिनियतदिग्विशि-ष्टकार्यारम्भत्वात् उपलक्षणभेदोऽप्युत्क्षेपणादीनां सिद्ध इति। तथा चोर्ध्वं संयोगकारणमधश्च विभागकारणमुत्क्षेपणस्योपलक्षणमित्ये-वमाद्युक्तम्। उपलक्षणस्य चोत्क्षेपणत्वादेर्भेद इति।

एवमपि पञ्चैवेत्यवधारणानुपपत्तिः, उत्क्षेपणादिभ्योऽतिरिच्यमा-नेषु निष्क्रमणं प्रवेशनमित्यादिषु वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात्। सामान्यविशेषसद्भावे सति कर्मणामानन्त्यमनिष्टमनुषज्यते। अथ कार्यभेदान्निष्क्रमणादिषु प्रत्ययानुवृत्तिसद्भावो न सामान्याविशेषस-द्भावादिति पराशयमाशंक्याह—उत्क्षेपणादिष्वपि कार्यभेदादेव प्रत्ययानुवृत्तिव्यावृत्तिप्रसङ्ग इति। यथा बहिर्देशेन संयोगकरणादन्त-र्देशेन च विभागजननात् निष्क्रमणं विपरीतं च प्रवेशनमेवमूर्ध्व-देशेन संयोगजननादधोदेशेन विभागजननाच्चोत्क्षेपणमित्यादि भ-विष्यतीति। अथोत्क्षेपणादिषु निष्क्रमणादिषु च समाने वर्गशः प्र त्ययानुवृत्तिव्यावृत्तिभावे सत्युत्क्षेपणादीनामेव जातिभेदो न नि-ष्क्रमणादीनामित्यत्र न विशेषहेतुरस्तीति। एतन्न। जातिसङ्करप्र-सङ्गात्। तदाह--निष्क्रमणादीनां जातिभेदात्प्रत्ययानुवृत्तिव्यावृत्तौ सत्यां जातिसङ्करो विरुद्धजातिसमावेशः प्रसज्यते। स चान्यत्रा-नुपलब्धेरनिष्टः। यद्यपि सत्ता द्रव्यत्वादि परापरभेदभिन्नमेकस्यां व्यक्तावस्ति। तथापि न गोत्वाश्वत्वाद्युपलब्धम् अत्र चैकस्यां व्यक्तौ

निष्क्रमणत्वप्रवेशनत्वजातिप्रसङ्गः । कथमित्याह–द्वयोर्द्रष्ट्रोरेकस्यां कर्मव्यक्तौ युगपन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टाविति । कस्य तत् कमित्याह–एकस्मादपवरकादपवरकान्तरं गच्छतः पुरुषस्येति । तथा हि–द्वयोरपवरकयोरेकमेव द्वारमित्युभयत्र व्यवस्थितयोः पुरुषयोरन्यस्मिंश्च व्रजति पुरुषे विशिष्टसंयोगविभागोपलम्भाद्युगपन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टावेव । तथाच द्वारप्रदेशे प्रविशति निष्क्रमतीति च । यो हि द्रष्टा स्वापवरकान्तर्देशे विभागं बहिर्देशे च संयोगमुपलभते तस्य निष्क्रमतीति प्रत्ययो भवति । यस्तु स्वापवरकान्तर्देशे संयोगं बहिर्देशे च विभागमुपलभते तस्य प्रवेशनप्रत्ययो भवति ।यदा तु प्रतिसीरादि जवनिकाद्यपनीतं भवतीत्यादिपदेनान्यस्यापि कुड्यादेरावणस्यापयनस्तदा विशिष्टस्य कार्यभेदस्यानुपलब्धेः न निष्क्रमणप्रत्ययो नापि प्रवेशनप्रत्ययः । किं तर्हि ? गमनप्रत्यय एव भवति । तस्मादेतस्यां गमनव्यक्तौ विरुद्धजातिसमावेशप्रसङ्गात् कार्यभेदादेव प्रत्ययभेद इत्युक्तम् । तथा नालिकायां वंशपत्रादौ पतति द्रष्टॄणामूर्ध्वाधस्तिर्यग्व्यवस्थितानां युगपत् भ्रमणपतनप्रवेशनप्रत्यया दृष्टा इति जातीनां भ्रमणत्वादीनां सङ्करप्रसङ्ग इति । स्वपक्षे दोषपरिहारार्थमाह–नचैवमुत्क्षेपणादिषु प्रत्ययसङ्करो दृष्टः, यस्य भयाद्विरुद्धजातिसमावेशप्रसङ्गपरिहारार्थं कार्यभेदेन भेदोऽभ्युपगम्यत इति । उपसंहारमाह–तस्मादुत्क्षेपणादीनामेव जातिभेदात्प्रत्ययानुवृत्तिव्यावृत्ती निष्क्रमणादीनां तु कार्यभेदादिति ।

परमतमाशङ्कते–कथं युगपत्प्रत्ययभेद इति चेत् । अस्य तु विवरणम्–अथ मतं यथा जातिसङ्करो नास्त्येवमनेककर्मसङ्करोऽप्येकस्मिन्वस्तुनि नास्तीत्युक्तमेव । अतः कथमेकस्मिन् कर्मणि 'कारणाभावाद्युगपद्द्रष्टॄणां भ्रमणपतनप्रवेशनप्रत्ययाः परस्परव्यावृत्तात्मानो भवन्ति कारणाभावेन कार्यस्यानुत्पत्तेरिति । अत्र ब्रूमः–प्रतिसमाधानम् । यत्त्वयोक्तम्–कारणाभावेनानुत्पत्तिरेव भ्रमणादिप्रत्ययानाम्–इत्येतन्न । अवयवावयविनोर्दिग्देशसंयोगविभागभेदात्तदुपपत्तेः । अवयवश्चावयवी चेत्यवयवावयविनौ तयोर्दिग्देशविशिष्टसंयोगविभागास्तद्भेदादिति । तदेवाह–यो हि द्रष्टा अवयवानां पार्श्वतः पर्यायेण दिक्प्रदेशैः संयोगविभागान्पश्यति तस्य भ्रमणप्रत्ययो भवति । यस्त्ववयविन्यूर्ध्वप्रदेशाद्विभागमधः संयोगं चावेक्षते तस्य पतति पत्र-

मिति पतनप्रत्ययो भवति । यः पुनर्नालिकान्तर्देशे गर्त्तान्तर्देशे संयो-
गं बहिर्देशे च विभागं पश्यति तस्य प्रविशति पत्रमिति प्रवेशनप्रत्य-
यः । तस्मात् सिद्धः कार्यभेदान्निष्क्रमणादीनां प्रत्ययभेदो न जा-
तिभेदादिति ।

अन्ये तु भ्रमणरेचनस्यन्दनोर्ध्वज्वलनादिभेदेन कर्मणामसङ्ख्या-
तत्वान्निष्क्रमणादीनां जातिभेदात्प्रत्ययभेदसिद्धौ न किंचित् बाधक-
मस्तीत्यतो नेदं स्वमतमिति मन्यन्ते । न च भ्रमणरेचनादीनां गमन
एवान्तर्भावः, तस्य कर्मत्वपर्यायत्वेन वक्ष्यमाणत्वात् । एतत्तु न यु-
क्तम्—जातिसङ्करप्रसङ्गस्य बाधकस्य दृढत्वादिति ।

भवतूत्क्षेपणादीनां जातिभेदात् भेदो न निष्क्रमणादीनाम्, अथ
गमनत्वं किं कर्मत्वपर्यायो घटः कलश इति पर्यायवत् अहोस्विदपरं
सामान्यमुत्क्षेपणत्वादिवदिति चिन्त्यम् । कुतः कारणात्ते संशय
इत्याचार्यस्य प्रश्नः । स चानुपपन्नः । तथाहि—सान्दिग्धेन प्रश्ने कृते
सति तत्प्रतिसमाधानं न्याय्यं । न तु संशयकारणेन वचनम्, तस्य
सामान्यधर्मादिभ्यः पूर्वमेवोत्पत्तिनिरूपणात् । नैष दोषः । संशयका-
रणज्ञाने सति तदुच्छित्तावुपायानुष्ठानमुपलब्धव्याधिकारणस्य वैद्य-
स्येवाप्रयासेनैव घटते इति मन्यमानः कारणं प्रश्नयतीति । तदाह—
समस्तेषूत्क्षेपणादिषु भ्रमणादिषु च कर्मप्रत्ययवत् गमनप्रत्ययाविशे-
षात् कर्मत्वपर्याय इति गम्यते । यथाह्युत्क्षेपणकर्मापक्षेपणकर्मेत्यादि-
व्यवहारोपलम्भादशेषभेदव्यापकं कर्मत्वमेवमूर्ध्वं गच्छत्यऽधो ग-
च्छतीत्यादिव्यवहारोपलम्भात् गमनमप्यशेषभेदव्यापकमित्यतः
कर्मत्वपर्याय इति ज्ञायते । न चात्र निश्चय एवेत्याह—यतस्तूत्क्षेप-
णादिवद्विशेषसंज्ञयाऽभिहितं तस्मादपरं सामान्यं स्यादिति । न हि
विशेषदर्शनेन गणनायां तदवसरे सामान्यसंज्ञानिर्देशो दृष्टः । यथा
पृथिव्यादिसंज्ञावसरे द्रव्यसंज्ञायाः । तस्मादुभयरूपधर्मोपलम्भा-
द्विशेषानुपलम्भादिभ्यश्च किं कर्मवत् गमनत्वं परं सामान्यमाहो-
स्विदुत्क्षेपणत्वादिवदपरमिति संशयः कार्यः । न संशयः कार्यः,
कर्मत्वपर्यायत्वादात्मत्वपुरुषत्ववत् पर्याय एव गमनत्वमिति । सर्वत्र
कर्मप्रत्ययवत् गमनप्रत्ययोपलम्भादिति न्यायात् । अथ विशेषसं-
ज्ञया किमर्थं गमनग्रहणं कृतमिति । विशेषसंज्ञावसरे सामान्यसंज्ञो-
पदर्शनस्यादर्शनात् । न । भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादिश-

देरनवरुद्धानामसंगृहीतानां भ्रमणपतनस्पन्दनादीनामवरोधार्थं कर्मत्वज्ञापनार्थमिति । अन्यथा हि गमनग्रहणमन्तरेण यान्येव चत्वारि विशेषसंज्ञोक्तान्युत्क्षेपणादीनि तान्येव सामान्यविशेषसंज्ञाविषयाणि प्रसज्येरन्निति । सामान्यसंज्ञा कर्मसंज्ञा विशेषसंज्ञा चोत्क्षेपणादिसंज्ञा तद्विषयाणि चत्वार्येव प्रसज्येरन् न भ्रमणादीनि । कुत एतत् ? विशेषसंज्ञाविषयाणामेव सामान्यसंज्ञाविषयत्वात् । तस्मादुत्क्षेपणादिवत् भ्रमणादीनामपि कर्मत्वज्ञापनार्थं गमनग्रहणं कृतमिति । न चैतस्मिन् पक्षे भ्रमणादीनामपरजातिसम्बन्धेऽपि दूषणम्, तदपेक्षया आनन्त्यस्याभ्युपगमात् । यच्च-गमनग्रहणात् भ्रमणादयः सङ्गृहीता-इति वाक्यम् । तदन्यथा व्याख्यातम् । अथवाऽस्त्वपरं सामान्यं गमनत्वमनियतदिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्त्तते, नोत्क्षेपणादिषु । कथं तर्हि तेषु गमनव्यवहार इत्याह-गमनशब्दस्तूत्क्षेपणादिषु भाक्तो द्रष्टव्यः।कस्मात्?उपचारबीजात् स्वाश्रयसंयोगविभागकर्तृत्वसामान्यादिति । यथोत्पन्नमुत्क्षेपणादि स्वाश्रयस्य पदार्थान्तरैः संयोगविभागान् करोति तथा गमनमपीति । न चैतस्मादेव निमित्तादुत्क्षेपणादिषु गमनव्यवहारवत् गमनेऽप्युत्क्षेपणादिव्यवहारप्रसङ्गः । कार्यसद्भावेन कारणकल्पनायाः प्रवर्त्तनात् । न चोत्क्षेपणादिषु गमनव्यवहारवत् गमनेऽप्युत्क्षेपणादिव्यवहारो दृष्टः । तस्मादचोद्यमेतत् । अथ पक्षद्वयोपन्यासात् किमत्राचार्यस्याभिप्रेतम् । पञ्चानां प्रतिनियतजातियोगित्वाभिधानात् गमनत्वमपरं सामान्यमित्येतत् ।

अन्ये तु वास्तवदूषणस्य परसामान्यपक्षेऽनभिधानात्तदेवाभिप्रेतमिति मन्यन्ते ॥

पूर्वं सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तम् । तत्र सत्प्रत्ययकर्माविधिः कथमित्याह—

**(भा०) सत्प्रत्ययकर्मविधिः । कथम् ? चिकीर्षितेषु यज्ञाध्ययनदानकृष्यादिषु यदा हस्तमुत्क्षेप्तुमिच्छत्यपक्षेप्तुं वा तदा हस्तवत्यात्मप्रदेशे प्रयत्नः सञ्जायते, तं प्रयत्नं गुरुत्वं चापेक्षमाणादात्महस्तसंयोगाद्धस्ते**

कर्म भवति हस्तवत् सर्वशरीरावयवेषु पादादिषु शरीरे चेति ।

तत्सम्बद्धेष्वपि कथम् ? यदा हस्तेन मुसलं गृहीत्वेच्छां करोति 'उत्क्षिपामि हस्तेन मुसलमिति' तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगाद्यस्मिन्नेव काले हस्ते उत्क्षेपणकर्मोत्पद्यते तस्मिन्नेव काले तमेव प्रयत्नमपेक्षमाणाद्धस्तमुसलसंयोगात् मुसलेऽपि कर्मेति । ततो दूरमुत्क्षिप्ते मुसले तदर्थेच्छा निवर्तते पुनरप्यपक्षेपणेच्छोत्पद्यते तदनन्तरं प्रयत्नस्तमपेक्षमाणाद्यथोक्तात् संयोगाद्धस्तमुसलयोर्युगपदपक्षेपणकर्मणी भवतः ततोऽन्त्येन मुसलकर्मणोलूखलमुसलयोरभिघाताख्यः संयोगः क्रियते, स संयोगो मुसलगतवेगमपेक्षमाणोऽप्रत्ययं मुसले उत्पतनकर्म करोति । तत्कर्माभिघातापेक्षं मुसले संस्कारमारभते तमपेक्ष्य मुसलहस्तसंयोगोऽप्रत्ययं हस्तेऽप्युत्पतनकर्म करोति । यद्यपि प्राक्तनः संस्कारो विनष्टः तथापि मुसलोलूखलयोः संयोगः पटुकर्मोत्पादकः संयोगविशेषभावात् तस्य संस्कारारम्भे साचिव्यसमर्थो भवति ।

अथवा प्राक्तन एव पटुः संस्कारोऽभिघातादविनश्यन्नवस्थित इति । अतः संस्कारवति पुनः संस्कारारम्भो नास्त्यतो यस्मिन् काले संस्कारापेक्षादभिघातादप्रत्ययं मुसले उत्पतनकर्म तस्मिन्नेव काले तमेव संस्कारमपेक्षमाणात् मुसलहस्तसंयोगादप्रत्ययं हस्तेऽप्युत्पतनकर्मेति ॥

पाणिमुक्तेषु गमनविधिः । कथम् ? यदा तोमरं हस्तेन गृहीत्वोत्क्षेप्तुमिच्छोत्पद्यते तदनन्तरं प्रयत्नः तमपेक्षमाणाद् यथोक्तात् संयोगद्वयात् तोमरहस्तयोर्युगपदाकर्षणकर्मणी भवतः । प्रसारिते च हस्ते तदाकर्षणार्थः प्रयत्नो निवर्तते तदनन्तरं तिर्यगूर्ध्वं दूरमासन्नं वा क्षिपामीतीच्छा सञ्जायते तदनन्तरं तदनुरूपः प्रयत्नस्तमपेक्षमाणस्तोमरहस्तसंयोगो नोदनाख्यः तस्मात् तोमरे कर्मोत्पन्नं नोदनापेक्षं तस्मिन् संस्कारमारभते । ततः संस्कारनोदनाभ्यां तावत् कर्माणि भवन्ति यावद्धस्ततोमरविभाग इति । ततो विभागान्नोदने निवृत्ते संस्कारादूर्ध्वं तिर्यग्दूरमासन्नं वा प्रयत्नानुरूपाणि कर्माणि भवन्त्यापतनादिति ॥

तथा यन्त्रमुक्तेषु गमनविधिः । कथम् ? यो बलवान् कृतव्यायामो वामेन करेण धनुर्विष्टभ्य दक्षिणेन शरं सन्धाय सशरां ज्यां मुष्टिना गृहीत्वा आकर्षणेच्छां करोति 'सज्येष्वाकर्षयाम्येतद्धनुरिति' । तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादाकर्षणकर्म हस्ते यदैवोत्पद्यते तदैव तमेव प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगाद् ज्यायां शरे च कर्म प्रयत्नविशिष्टहस्तज्याशरसंयोगमपेक्षमाणाभ्यां ज्याकोटिसंयोगाभ्यां कर्मणी भवतो धनुष्कोट्योरित्येतत् सर्वं युगपत् । एवमाकर्णादाकृष्टे धनुषि नातः परमनेन गन्तव्यमिति यज्ज्ञानं ततस्तदाकर्षणार्थस्य प्रयत्नस्य विनाशस्ततः पुनर्मोक्षणेच्छा सञ्जायते तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्माङ्गुलिसंयोगादङ्गुलिकर्म तस्माज्ज्या-

ङ्गुलिविभागः ततो विभागात् संयोगविनाशः तस्मिन् विनष्टे प्रतिबन्धकाभावाद्यदा धनुषि वर्तमानः स्थितिस्थापकः संस्कारो मण्डलीभूत धनुर्यथावस्थितं स्थापयति तदा तमेव संस्कारमपेक्षमाणाद्धनुर्ज्यासंयोगाज्ज्यायां शरे च कर्मोत्पद्यते तत्स्वकारणापेक्षं ज्यायां संस्कारं करोति तमपेक्षमाण इषुज्यासंयोगो नोदनं तस्मादिषावाद्यं कर्म नोदनापेक्षमिषौ संस्कारमारभते। तस्मात् संस्कारान्नोदनसहायात् तावत् कर्माणि भवन्ति यावदिषुज्याविभागो विभागान्निवृत्ते नोदने कर्माण्युत्तरोत्तराणीषुसंस्कारादेवापतनादिति। बहूनि कर्माणि क्रमशः, कस्मात्? संयोगबहुत्वात् एकस्तु संस्कारोऽन्तराले कर्मणोऽपेक्षाकारणाभावादिति॥

एवमात्माधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तम्॥

( व्यो० ) चिकीर्षितेषु कर्तुमभीष्टेषु यज्ञाध्ययनदानकृष्यादिष्वित्यादिपदेन भोजनादेर्ग्रहणम्। यज्ञादिषु च तिलादिग्रहणार्थं यदा हस्तमुत्क्षेप्तुमिच्छत्यपक्षेप्तुं वा तदा हस्तवत्यात्मप्रदेशे प्रयत्नः सञ्जायते। तदुत्पत्तावात्मा समवायिकारणमात्ममनःसंयोगोऽसमवायिकारणमिच्छा निमित्तकारणम्। तत्प्रयत्नं गुरुत्वं चापेक्षमाणादात्महस्तसंयोगादसमवायिकारणाद्धस्ते समवायिकारणे कर्मोत्पद्यते। हस्तवत्सर्वशरीरावयवेषु पादादिषु शरीरे चेति। यथाऽऽत्महस्तसंयोगोऽसमवायिकारणं प्रयत्नस्तु निमित्तकारणं हस्तकर्मोत्पत्तौ तथा सर्वशरीरावयवेषु शरीरे च समवेतकर्मोत्पत्तावात्मसंयोगोऽसमवायिकारणं प्रयत्नो निमित्तकारणमित्यतिदेशार्थः।

तत्सम्बद्धेष्वपि मुसलादिषु कथं कर्म भवतीत्यव्युत्पन्नप्रश्नानन्तरमाह—हस्तेन मुसलं गृहीत्वेच्छां करोति। किंविशिष्टाम्? उ-

त्क्षिपामि हस्तेन मुसलमित्येवरूपाम् । तदनन्तरं हस्तवत्यात्मप्रदेशे प्रयत्नस्तदनुरूपस्तमपेक्षमाणादात्महस्तसंयोगादसमवायिकारणाद्य- स्मिन् काले हस्ते समवायिकारणे कर्मोत्पद्यते तस्मिन्नेव काले तमेव प्रयत्नमपेक्षमाणाद्धस्तमुसलसंयोगादसमवायिकारणान्मुसलेऽपि का- रणे कर्म । ततो दूरमुत्क्षिप्ते मुसले तदर्थेच्छा उत्क्षेपणेच्छा नि वर्त्तते । स्वकारणात् पुनरप्यपक्षेपणेच्छोत्पद्यते । तदनन्तरं हस्तव- त्यात्मप्रदेशप्रयत्नः तदनुरूपस्तमपेक्षमाणाद्यथोक्तात् संयोगद्वयादि- त्यात्महस्तसंयोगान्मुसलहस्तसंयोगाच्च प्रयत्नापेक्षाद्धस्तमुसलयोर्यु- गपदपक्षेपणकर्मणी भवतः । ततोऽन्त्येनावसानिकेन मुसलकर्मणोलू- खलमुसलयोरभिघाताख्यः संयोगः क्रियते । स संयोगोऽसमवायि- कारणभूतो मुसलगतं वेगमपेक्षमाणोऽप्रत्ययमप्रयत्नं मुसलेऽप्युत्पतन- कर्म करोति । तत्कर्मासमवायिकारणमभिघातापेक्षम मुसले सम- वायिकारणे संस्कारमारभते । तमपेक्ष्य मुसलहस्तसंयोगोऽप्रत्ययम- प्रयत्नपूर्वकं हस्तेऽप्युत्पतनकर्म करोति । ननु मुसलोलूखलसंयोगा- न्मुसले कर्मोत्पत्तिसमकालं प्राक्तनसंस्कारविनाशे अपेक्षाकारणा- भावान्न मुसले कर्म संस्कारमारभते, तदभावे च हस्तमुसलसंयोगः कथं हस्ते अप्रत्ययमुत्पतनकर्म कुर्यादित्याशंक्याह—यद्यपि प्राक्तनः संस्कारो विनष्टः, तथापि मुसलोलूखलसंयोगः पटुकर्मोत्पादकः । कु- तः ? संयोगविशेषभावात् । अतस्तस्य कर्मणः संस्कारसाचिव्ये सम- र्थो भवति । सचिवस्य भावः साचिव्यं साहाय्यं तत्र समर्थो भवतीति।

अथवा प्राक्तन एव पटुः संस्कारोऽभिघातादविनश्यन्नवस्थित- इति पक्षान्तरं दर्शयति । प्राक्तनस्य पटुसंस्कारस्यावस्थाने संस्कार- वति पुनः संस्कारारम्भो नास्तीत्यतो यस्मिन्काले संस्कारापेक्षाद- भिघातादप्रत्ययं मुसले उत्पतनकर्म तस्मिन्नेव काले तमेव संस्का- रमपेक्षमाणान्मुसलहस्तसंयोगादप्रत्ययं हस्तेऽप्युत्पतनकर्मेति ।

पाणिमुक्तेषु तोमरादिषु गमनविधिर्गमनप्रकारः । कथमित्याह—

यदा तोमरं हस्तेन गृहीत्वेच्छां करोति—हस्तेनोत्क्षिपामि तोमरम्— इति । तदनन्तरं तदनुरूपः प्रयत्नस्तमपेक्षमाणाद्यथोक्तसंयोगद्वया- दित्यात्महस्तसंयोगाद्धस्ततोमरसंयोगाच्च तोमरहस्तयोर्युगपदा- कर्षणकर्मणी भवतः । प्रसारिते च हस्ते दूरमुत्क्षिप्ते तदाकर्षणार्थ- स्तस्य तोमरस्याकर्षणार्थः प्रयत्नो व्यावर्त्तते । तदनन्तरन्तिर्यगूर्ध्वं-

मधोदूरमासन्नं वा क्षिपामीतीच्छा सञ्जायते-तिर्यक् क्षिपाम्यूर्ध्वमधो दूरमासन्नं क्षिपामि-इति। तदनन्तरं तदनुरूपः प्रयत्न इत्यासन्ने मन्दो दूरे तीव्र एवेति। तमपेक्षमाणस्तोमरहस्तसंयोगो नोदनाख्यो नोद्यनोदकयोः सह गमनान्नोद्यस्तोमरो नोदको हस्त इति तयोः संयोगः प्रयत्नापेक्षस्तस्मात्तोमरे कर्मोत्पन्नं नोदनापेक्षं तस्मिन् संस्कारमारभते। तोमरः समवायिकारणं कर्मासमवायिकारणं प्रयत्नो निमित्तकारणमिति। ततः संस्कारनोदनाभ्यां तावत् कर्माणि भवन्ति यावद्धस्ततोमरयोर्विमोचनार्थेन कर्मणा परस्परं विभाग इति। ततो विभागान्निवृत्ते नोदने संस्कारादसमवायिकारणात्तदनुरूपाणि कर्माणि भवन्ति आपतनात्पतनं यावदिति संस्कारस्य तीव्रतरादिभेदभिन्नत्वात् कर्माण्यप्येवं भवन्तीति।

तथा यन्त्रमुक्तेषु शरपाषाणादिषु गमनविधिः। कथं किंविशिष्टश्च पुरुषस्तान् प्रयुङ्क्ते केन वा प्रकारेणेत्याह-यो बलवान् कृतव्यायामो ह्यस्त्रयन्त्रसिद्धः वामेन करेण धनुर्विष्टभ्य दक्षिणेन शरं सन्धायेति, बाहुल्यापेक्षयैतत्, सह शरेण वर्त्तत इति सशरा तां ज्यां मुष्टिना गृहीत्वेच्छां करोति-सज्येषुमाकर्षाम्येनं धनुः-(१)इति। सह ज्यया वर्त्तत इति सज्यः स चासाविषुश्चेति तथोक्तस्तमेनं सज्येषुमाकर्षामि धनुश्चेति। नचैनमिति पदं धनुःशब्देनाभिसन्धनीयम्, तस्य नपुंसकलिङ्गतयैतद्धनुरिति स्यात्। अथोऽर्द्धर्चादिपाठात् प्रयोगदर्शनाद्वा कथंचिदुभयलिङ्गतेष्यते। तथाप्येनं धनुषमिति स्यात्, नत्वेनं धनुरिति। पुल्लिङ्गविवक्षायामपीतिशब्देन कर्मणोऽभिहितत्वात् द्वितीयाविभक्तिर्न भवति इत्यन्ये। तदनन्तरमिच्छानन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादसमवायिकारणाद्धस्ते समवायिकारणे यदैवाकर्षणकर्मोत्पद्यते तदैव प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगादसमवायिकारणात् ज्यायां शरे च समवायिकारणे कर्मोत्पद्यते। प्रयत्नविशिष्टं हस्तज्यासंयोगमपेक्षमाणाभ्यां ज्याकोटिसंयोगाभ्यामसमवायिकारणाभ्यां धनुष्कोट्योः समवेते कर्मणी भवतः धनुषि च समवेतं कर्म ज्याधनुःसंयोगादसमवायिकारणाद्धस्तज्यासंयोगं विशिष्टमपेक्षमाणादित्येतत्सर्वं युगपदेकस्मिन् काले भवति, कारणस्य यौगपद्यात्। एव-

(१) अत्रैतन्मतेन भाष्ये 'सज्येषुमाकर्षयाम्येनं धनु'रिति पाठो बोध्यः।

माकर्णात् कर्णं यावदाकृष्टे धनुषि नातः परमनेन गन्तव्यमिति य जू ज्ञानं ततस्तदाकर्षणार्थस्य प्रयत्नस्य विनाशस्ततः पुनर्मोक्षणेच्छा सञ्जायते। तदनन्तरं तदनुरूपः प्रयत्नस्तमपेक्षमाणादात्माङ्गुलिसंयोगादसमवायिकारणादङ्गुलिषु मोचनार्थं कर्मोत्पद्यते। तस्मादङ्गुलिज्याविभागः ततो विभागात्तत्संयोगविनाशस्तस्मिन्विनष्टे प्रतिबन्धकाभावान्मण्डलीभूतं धनुर्यथावस्थितं स्थापयतीति स्थितिस्थापकसंस्कारो धनुषि कर्मारभते। तत्र धनुः समवायिकारणं स्थितिस्थापकः संस्कारोऽसमवायिकारणमदृष्टादिर्निमित्तकारणमिति। यदैव धनुष्याकर्षणकर्मणा मण्डलीकृते स्थितिस्थापकार्थं स्थितिस्थापकसंस्कारात् कर्मोत्पद्यते, तदा तमेव संस्कारमपेक्षमाणात् धनुषः ज्यासंयोगात् ज्याशरसंयोगादसमवायिकारणात् ज्यायां शरे च कर्मोत्पद्यते। तदुत्पन्नं स्वकारणापेक्षं ज्यायां संस्कारमारभते। तमपेक्षमाण इषुज्यासंयोगो नोदनं तयोः सह गमनात्तस्मादिषावाद्यं कर्मोत्पद्यते। तच्च नोदनापेक्षमिषौ संस्कारमारभते। तत्रेषुः समवायिकारणं कर्मासमवायिकारणं नोदनं निमित्तकारणमिति। तस्मात्संस्कारान्नोदनसहायात्तावत् कर्माणि भवन्ति यावदिषुज्याविभागस्तदुत्पत्तौ ज्येष्वोः समवायिकारणत्वमिषुकर्मणोऽसमवायिकारणत्वं शेषं निमित्तकारणम्। ततो विभागान्निवृत्ते नोदने कर्माण्युत्तरोत्तराणीषुसंस्कारादेवापतनादिति पतनं यावत्तावदिति। बहूनि कर्माणि क्रमशः। कस्मात्? संयोगबहुत्वात्। तत्सद्भावेऽप्यविनाशे सर्वदेषोरपातः स्यात्। अथैकमपि कर्मानेकं संयोगं कृत्वा शक्तिमान्द्याद्विनश्यतीति। तर्हि संस्कारस्यानारब्धकार्यस्यावस्थानादन्यत् कर्मान्तरमित्यपात एव स्यात्। न च संस्कारस्य संयोगजनकत्वम्, येनानेककार्यकारणे शक्तिमान्द्याद्विनाशः स्यात् तेषां कर्मकार्यत्वात्तत्स्तदुत्पादे कर्मणामेव विनाशो युक्तः। न च संस्कारादभिन्नमेव कर्मेति वाच्यम्। प्रत्ययभेदस्य भेदलक्षणत्वात्। तथा च वेगेन गच्छतीति वेगानुरक्तो गमनानुरक्तश्च प्रत्ययो दृष्टः। तस्माद्वेगः संयोगवत् कर्मणोऽर्थान्तरमिति। अभेदे तु मन्दगमनादावपि वेगेन गच्छतीति प्रत्ययः स्यात्। न चैतदस्ति। अथ संयोगविभागोपलम्भादनुमीयते कर्मेति चेत्। न। संयोगवदिन्द्रियव्यापारेणैव कर्मण्यप्यपरोक्षज्ञानसद्भावस्यावि-

शेषात् । यथाहि वस्तुनः प्रदेशान्तरैः संयोगविभागाः प्रत्यक्षेण प्रतीयन्ते, तद्वत् कर्मापीति । यच्च प्रदेशान्तरैः संयोगविभागोपलम्भे सति चलतीति ज्ञानमानुमानिकमितीष्टम् । तन्न युक्तम् । नदीस्रोतस्यूर्ध्वावस्थितस्य स्थाणोस्तत्सद्भावेपि चलनप्रत्ययादर्शनात् । आकाशे प्रक्षिप्तस्येषोस्तदभावेपि तत्सद्भावदर्शनात् । यश्चेदम्–एकस्मिन् स्थाने प्रतिक्षणमुत्पादात्तिष्ठतीति व्यवहारो देशान्तरे च तदुभावात् गमनव्यवहार–इत्युक्तम् । तन्न युक्तम् । क्षणभङ्गप्रतिषेधात् । अथ संयोगबहुत्वात् बहूनि कर्माणीति । सत्यम् । न चैवं संस्कारस्यापि संयोगबहुत्वात् बहुत्वम्, तस्य संयोगमात्रेणाविनाशात् । विनाशे वा कर्मान्तराणामुत्पत्तिर्न स्याद्समवायिकारणाभावात् । न चात्मेषुसंयोग एवादृष्टापेक्षोऽसमवायिकारणम् । प्रत्यक्षानुमानाभ्यां कारणान्तरानुपलम्भे सति तत्कल्पनायाः समाश्रयणात् । उपलभ्यते चाक्षव्यापारेणैव वेगस्तस्य प्रत्याख्यानमशक्यम् । अथ संस्कारादुपजातकर्मण्युत्तरसंयोगाद्वेगस्य कर्मणश्च विनश्यत्ता अन्ययोश्च वेगकर्मणोरुत्पद्यमानताऽतस्तयोरुत्पादः प्राक्तनयोश्च विनाश इति कल्पनायां किं दूषणम् । विनश्यदवस्थस्यासमवायिकारणत्वस्याभाव इत्येतत् । तथाहि—न प्राक्तनं कर्म संस्कारान्तरमारभते, नापि प्राक्तनो वेगः कर्मान्तरम्, उभयोर्विनश्यदवस्थत्वेनासमवायिकारणत्वाभावात् । न चान्यदसमवायिकारणमन्तराले कर्मणः सम्भवतीत्युक्तम् । यच्च संस्कारावुत्पन्नं कर्म तन्न संस्कारान्तरमारभते, अपेक्षाकारणाभावात् । नापि प्राक्तनः संस्कारोऽपेक्षाकारणम् संस्कारवति संस्कारारम्भप्रतिषेधादवश्यं कर्मान्तरोत्पत्तिसमकालमुत्तरसंयोगात्पूर्वकर्मनिवृत्तिवत् पूर्वसंस्कारस्यापि निवृत्तिर्वाच्या । न च संयोगमात्रमपेक्षाकारणम्, कर्मणः संस्कारारम्भे मन्दगतावदर्शनात् । तथाहि–मन्दगतौ संयोगसद्भावेपि न कर्म संस्कारमारभत इत्युपलब्धम् । तस्मादेक एव संस्कारोऽन्तराले कर्मणोऽपेक्षाकारणाभावादिति । नन्वेवं तर्हि संस्कारस्यैकरूपत्वात् कथं तीव्रतरादिभेदभिन्नानां कर्मणामुत्पत्तिः । सहकारिभेदात् । स च कार्यभेदेनैव ज्ञेयः । तत्र दृष्टस्यानुपलब्धेरदृष्टाख्यः कल्प्यत इति । क्षिप्तस्येषोः पातोपलम्भेन च वेगविनाशप्रसिद्धेः तस्य सहेतुत्वादन्यस्य च विनाशहेतोरभा-

वादनेककार्यकरणे सति शक्तिप्रक्षयाद्विनाशः कल्प्यत इति । सा च शक्तिरदृष्टविशेष एवानेककर्मसम्पादकः । एतच्चानेकसंस्कारवादिनाप्यभ्युपगन्तव्यम् । अन्यथा हि पुनः संस्कारोत्पत्तेरिषोरपात एव स्यात् । तस्मादुक्तन्यायेनैक एव संस्कार इति ।

उपसंहारमाह—एवमात्माधिष्ठितेषु प्रयत्नद्वारेणानधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तम् ॥

(भा०) अनधिष्ठितेषु बाह्येषु चतुर्षु महाभूतेष्वप्रत्ययं कर्म गमनमेव नोदनादिभ्यो भवति । तत्र नोदनं गुरुत्वद्रवत्ववेगप्रयत्नान् समस्तव्यस्तानपेक्षमाणो यः संयोगविशेषो नोदनमविभागहेतोरेकस्य कर्मणः कारणम् तस्माच्चतुर्ष्वपि महाभूतेषु कर्म भवति । यथा पङ्काख्यायां पृथिव्याम् ।

वेगापेक्षो यः संयोगविशेषो विभागहेतोरेकस्य कर्मणः कारणं सोऽभिघातः । तस्मादपि चतुर्षु महाभूतेषु कर्म भवति । यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु । तथा पादादिभिर्नुद्यमानायामभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां यः संयोगो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा स संयुक्तसंयोगः तस्मादपि पृथिव्यादिषु कर्म भवति । ये च प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते ।

पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वाद्यदधोगमनं तत्पतनम् । यथा मुसलशरीरादिषूक्तम् । तत्राद्यं गुरुत्वाद्द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम् ॥

स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनम् । कथम् ? समन्ताद्रोधःसंयोगेनाव-

यविद्रवत्वं प्रतिबद्धम् अवयवद्रवत्वमप्येकार्थसमवेतं तेनैव प्रतिबद्धमुत्तरोत्तरावयवद्रवत्वानि संयुक्तसंयोगैः प्रतिबद्धानि । यदा तु मात्रया सेतुभेदः कृतो भवति तदा समन्तात् प्रतिबद्धत्वादवयाविद्रवत्वस्य कार्यारम्भो नास्ति सेतुसमीपस्थस्यावयवद्रवत्वस्योत्तरोत्तरेषामवयवद्रवत्वानां प्रतिबन्धकाभावादृवृत्तिलाभः । ततः क्रमशः संयुक्तानामेवाभिसर्पणम् । ततः पूर्वद्रव्यविनाशे सति प्रबन्धेनावस्थितैरवयवैर्दीर्घद्रव्यमारभ्यते, तत्र च कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते । तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने यदवयविनि कर्मोत्पद्यते तत् स्यन्दनाख्यमिति ॥

संस्कारात् कर्म इष्वादिषूक्तम् । तथा चक्रादिष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनः संस्कारादनियतदिग्देशसंयोगविभागनिमित्तं कर्म तद्भ्रमणमिति । एवमादयो गमनविशेषाः ॥

प्राणाख्ये तु वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाज्जाग्रत इच्छानुविधानदर्शनात्, सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षात् । आकाशकालदिगात्मनां सत्यपि द्रव्यभावे निष्क्रियत्वं सामान्यादिवदमूर्तत्वात । मूर्तिरसर्वगतद्रव्यपरिमाणम् तदनुविधायिनी च क्रिया सा चाकाशादिषु नास्ति तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति ॥

सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्म आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात् अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्श-

नात् । सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात् । अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टापेक्षात् । कथम् ? यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्योन्याभिभवो वा तदा जीवनसहायस्य वैकल्यात् तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे सत्यन्याभ्यां लब्धवृत्तिभ्यां(१) धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते। ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बद्ध्यते तत्सङ्क्रान्तं च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बध्यते तत्संयोगार्थं कर्मोपसर्पणमिति । योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनञ्च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम् । एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् । यथा सर्गादावणुकर्म अग्निवाय्वोरूर्ध्वतिर्यग्गमने महाभूतानां प्रक्षोभणम् । अभिषिक्तानां मणीनां तस्करं प्रति गमनम् । अयसोऽयस्कान्ताभिसर्पणञ्चेति ॥

इति प्रशस्तपादभाष्ये कर्मपदार्थः समाप्तः ॥

(व्यो०) इदानीमनधिष्ठितेषु बाह्येषु शरीरासम्बद्धेषु, आकाशादिनिवृत्त्यर्थं चतुर्षु, महाभूतेष्विति परमाणुनिवृत्त्यर्थम् । अप्रत्ययमप्रयत्नपूर्वकं कर्म गमनमेव नोदनादिभ्यो भवति । आदिपदेनाभिघातसंयुक्तसंयोगगुरुत्वादेर्ग्रहणम् । तत्र नोदनं व्याख्यायते गुरुत्वद्रवत्वप्रयत्नवेगान् समस्तव्यस्तानपेक्षमाणो यः संयोगविशेषो नोदनं परस्परमाविभागकृतः कर्मणः कारणमिति । यः संयोगस्तन्नोदनमि-

(१) अत्र 'वृत्तिलब्धधर्माधर्माभ्यां' इति व्योमवतीकाराभिप्रेतः पाठः ।

त्युक्तेऽतिप्रसङ्गस्तदर्थं कर्मणः कारणमिति । अभिघातोऽप्येवं भवतीति अविभागकृत इति पदम् । तथाऽप्युत्पन्नस्य कर्मणोऽवश्यं विभागजनकत्वमतः परस्परमिति पदम् । तथापि परस्परं संयोगिनो विभागजनकस्य कर्मणः कारणं संयुक्तसंयोगोऽपीत्यतो गुरुत्वद्रवत्वप्रयत्नवेगान् समस्तव्यस्तानपेक्षेति । तत्र यदा चुलुकेनोदकं गृहीत्वा वेगेन प्रतिक्षिपति तदा सर्वे गुरुत्वादयः सम्भवन्तीति तदपेक्षं चुलुकोदकसंयोगो नोदनम् । व्यस्तपक्षे तु गुरुत्वमपेक्षमाणः संयोगो नोदनं यथा सूक्ष्मशाखोपरिव्यवस्थापितमतिशयेन गुरुद्रव्यमधोगतिहेतुर्भवति शाखायाः । द्रवत्वमपेक्षमाणस्तृणोदकसंयोगस्तृणे गमनमारभते । वेगमपेक्षमाणो वायुवनस्पतिसंयोगो वृक्षादिषु चलनकारणम् । प्रयत्नापेक्षस्तु हस्तमुसलसंयोगो मुसलकर्मोत्पत्तौ । यदा च प्रयत्नेन पङ्के पादमुपक्षिपति तदा प्रयत्नगुरुत्वे चापेक्ष्य पादपङ्कसंयोगः पङ्कमधो नयतीति । यदा च पाषाणादेर्वेगेन पाते सति पङ्केन संयोगस्तदा पाषाणादिगतं गुरुत्वं वेगं चापेक्षमाणं पाषाणपङ्कसंयोगो नोदनमिति । यदा कश्चिद्वेगेन कूपादौ पतति तदा गुरुत्वप्रयत्नवेगानपेक्ष्य देवदत्तोदकसंयोगोऽधोगतिहेतुर्भवति । यदा च जलधरधारासम्बन्धात्तृणादेरधोगमनं तदा गुरुत्वद्रवत्ववेगानपेक्षत इत्यादि द्रष्टव्यम् । तस्माद्यथोक्तान्नोदनाच्चतुर्ष्वपि महाभूतेषु कर्म भवतीत्युदाहरणमाह—यथा पङ्काख्यायां पृथिव्यां पादादिसंयोगाद्यथोक्तविशेषणादिति ।

अभिघातस्येतरस्मात् भेदार्थमाह—वेगापेक्षो यः संयोगविशेषो परस्परं विभागहेतोरेकस्य कर्मणः कारणं सोऽभिघात इति । विभागहेतुकर्मकारणं नोदनादिरपीति परस्परं विभागहेतोरपीति पदम् । तथाप्यात्ममनःसंयोगेन व्यभिचारपरिहारार्थं वेगापेक्ष इति पदम् , न चात्ममनःसंयोगः परस्परविभागहेतुसम्पादको वेगापेक्ष इति । नन्वेकस्येति पदं व्यर्थम , अभिघातादुभयत्रापि कर्मोपलब्धेः । सत्यम् । तथाप्येकस्येत्याद्यकर्मज्ञापनार्थमुत्तरोत्तराणि वेगादेव भवन्तीति । नोदनादिश्चोत्तरकर्मणां बहूनामपि कारणमिति । अन्ये त्वेकस्य कारणमेव न त्वेकस्यैवेत्यवधारणं मन्यन्ते । नोदनेऽप्येकस्येति विशेषणमेव व्याख्येयम । उदाहरणन्तु यथा पाषाणादिषु पाषाणाद्यभिघातादिति । संयुक्तसंयोगनिरूपणार्थमाह तथा पादादिभिर्नुद्यमानायामित्यादि । परस्परमविभागकर्त्तुः कर्मणः कारणं नो-

दनमपीत्यतो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा यः संयोगः स संयुक्तसंयोगः। क्वचिन्नोदनापेक्षः क्वचिदभिघातापेक्षः क्वचिदुभयापेक्ष इति। उदाहरणं तु यथा पङ्काख्यायां पृथिव्यां, किंविशिष्टायां पादादिभिर्नुद्यमानायामभिहन्यमानायां पृथिव्यां वा ये प्रदेशा न नुद्यन्ते न साक्षात्पादेन सम्बध्यन्ते नाप्यभिहन्यन्ते न साक्षात्पाषाणादिना सम्बध्यन्ते तेष्वपि कर्म सञ्जायते। प्रदेशाः समवायिकारणं पादादिभिश्च सम्बद्धप्रदेशैः सह संयोगा असमवायिकारणम् पादादिसंयोगाश्च निमित्तकारणम्।

पतननिरूपणार्थमाह—गुरुत्वाद्यदधोगमनं तत्पतनम। वायोरप्यधोगमनं वृक्षकोटरादिपूर्वप्रदेशेन प्रविष्टस्य सम्भवतीति तद्व्यवच्छेदार्थं गुरुत्वादिति। पृथिव्युदकयोरित्याश्रयनिरूपणम्। पतनाश्रयः समवायिकारणं गुरुत्वमसमवायिकारणं गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सतीति निमित्तकारणं दर्शयतीति। यथा मुसलशरीरादिष्वित्युदाहरणम्। हस्तमुसलसंयोगाभावान्मुसले पतनं प्रयत्नाभावाच्छरीरे वेगाभावादिषाविति। तत्राद्यं गुरुत्वादेवासमवायिकारणादुत्पद्यते पतनं तच्चोत्पन्नं स्वकारणापेक्षं संस्कारमारभते तस्माद्द्वितीयादीनि तु पतनानि गुरुत्वसंस्काराभ्यामसमवायिकारणाभ्यामुत्पद्यन्ते।

स्यन्दननिरूपणार्थमाह—स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनमिति। स्थलान्निम्नाभिसर्पणं पाषाणादेरपीति स्रोतोभूतानामिति पदम्। सर्पादेरप्येवं प्रवाहः सम्भवतीत्यपामिति ग्रहणम्। तथाप्यपां दृढहस्तपरिगृहीतानां स्थलान्निम्नाभिसर्पणं न भवतीत्यतः स्रोतोभूतानामिति। अपामिति च बाहुल्यापेक्षया न त्वपामेवेत्यवधार्यते, तैलादावपि सद्भावात्। अतो यदुक्तरूपमभिसर्पणं तत्स्यन्दनं द्रवत्वात् भवतीति। कथमित्यव्युत्पन्नस्य विस्तरपरिज्ञानापेक्षया प्रश्नानन्तरमाह—समन्ताद्रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धमित्यादि। समन्तात् सर्वतो रोधसा सह संयोगेन सेतुसंयोगेनावयविद्रवत्वं प्रतिबद्धमुदके क्रियां न करोति नाप्यवयवद्रवत्वं स्यन्दनमारभत इत्याह—अवयवद्रवत्वमप्येकार्थसमवेतं यत्र ह्यवयवद्रवत्वं तत्रैव रोधःसंयोगोपीत्यतस्तेनैव प्रतिबद्धमुत्तरोत्तरावयवद्रवत्वानि तु संयुक्तसंयोगैः प्रतिबद्धानि रोधःसंयुक्तावयवेनान्यः संयोगस्तेनाप्यन्य इत्युत्तरो-

त्तरावयवसंयोगैरतद्गतद्रवत्वानि प्रतिबद्धानि क्रियां नारभन्ते। यदा तु सेतुभेदः कृतो भवति तदा समन्तात् प्रतिबद्धत्वादवयविद्रवत्वस्य कार्यारम्भो नास्तीति। अयमस्यार्थो—महापरिमाणसम्बन्धित्वादवयविनो न सूक्ष्मरन्ध्रदेशनिष्क्रमणं सेतोस्तु समीपस्थस्यावयवद्रवत्वस्य कार्यारम्भकत्वं तत्प्रतिबन्धकस्य संयोगस्य व्यावृत्तेस्ततः क्रमेणोत्तरोत्तरावयवद्रवत्वानां वृत्तिलाभः कार्यजनकत्वम्। तथाहि—सेतुसमीपस्थस्यावयवस्य चलने सत्यवयवान्तरेण विभागात्तत्संयोगो निवर्त्तते, ततो द्वितीयावयवद्रवत्वं प्रतिबन्धकाभावात् क्रियामारभते, ततस्तृतीयावयवसंयोगनिवृत्तौ तद्गतं द्रवत्वं कर्मारभत इत्येवमुत्तरोत्तराणां वृत्तिलाभस्ततः संयुक्तानामेवाभिसर्पणमिति। यद्यपि संयोगस्य प्रतिबन्धकस्य विनाशे सत्यन्यस्य सर्पणम्, तथापि तज्ज्ञापनार्थं क्रमशः संयुक्तानामेवाभिसर्पणमित्युक्तम्। ततो द्रव्यारम्भकसंयोगविनाशे सति पूर्वद्रव्यविनाशस्तस्मिन् सप्रतिबन्धेन सन्तानेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते तत्र च द्रव्ये कारणगुणपूर्वप्रक्रमेण द्रवत्वमुत्पद्यते। कारणद्रवत्वान्यसमवायिकारणमवयविनि द्रवत्वोत्पत्ताविति। तत्र कारणानां प्रबन्धेन परिपाट्या गमनेऽवयविनि यत् कर्मोत्पद्यते तत्स्यन्दनाख्यमिति।

उपसंहारमाह संस्कारात् कर्मेष्वादिषूक्तम गुरुत्वादिभ्यश्च। तथा भ्रमणं संस्कारादेव भवतीत्याह—चक्रादिषु तदवयवानां च पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्ताविति। प्रतिनियता हि दिग्देशाश्चक्रावष्टब्धास्तैः सह संयोगे विभागे च कर्त्तव्ये यदवयविनि कर्मोत्पद्यते, कुतः? संस्कारादिति। आद्यदण्डचक्रसंयोगादसमवायिकारणाद्दण्डहस्तसंयोगापेक्षादुपजातं चक्रे कर्म स्वकारणविशेषापेक्षं संस्कारमारभते। ततः संस्कारनोदनाभ्यां कर्माणि पुनः पुनः संस्कारादेवावयवेषु चाद्यकर्मोत्पत्तौ नोदनापेक्षः संयुक्तसंयोगोऽसमवायिकारणम्, ततः संस्कारोत्पादे सति संस्कारोपीति अनियतदिग्देशसंयोगविभागनिमित्तं तद्भ्रमणमित्यनियतैर्दिग्देशैः संयोगविभागान् करोतीति।

कार्यभेदेन भेदं दर्शयति—प्राणाख्ये तु वायौ कर्म कुतो भवतीत्याह—आत्मवायुसंयोगादसमवायिकारणादिच्छाद्वेषपूर्वकप्रयत्नापेक्षादुत्पद्यते। किंविशिष्टस्येत्याह—जाग्रत इति। कुत एतत्? इच्छानुविधानदर्शनादिति। रेचनेच्छातो रेचनं पूरणेच्छातश्च पूरणमिति।

सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षादात्मवायुसंयोगादसमवायिकारणात् प्राणाख्ये वायौ कर्मोत्पद्यत इति। किमत्र प्रमाणम्? सुप्तस्य जीवनपूर्वकात् प्रयत्नाद्वायौ कर्मेत्यनुमानम्। तथाहि—सुप्तस्य वायुक्रिया प्रयत्नकार्या परिगृहीतवायुक्रियात्वात् जाग्रदवस्थायां तद्वायुक्रियावत्। यत्र च प्रत्यक्षानुमानाभ्यामन्यत् कारणं नोपलभ्यते तत्र दृष्टस्यैव कारणत्वम्। अत्र चानुमानात् प्रयत्नकार्यत्वप्रसिद्धाविच्छाद्वेषपूर्वकप्रयत्नाभावात्सुप्तस्य जीवनपूर्वकप्रयत्नकार्यत्वं निश्चीयत इति। एवं चतुर्षु महाभूतेषु नोदनादिभ्यः कर्म व्याख्यायाकाशादौ क्रियाशून्यत्वे कारणमाह—आकाशकालदिगात्मानः सत्यपि द्रव्यभावे निष्क्रियाः सामान्यादिवदमूर्त्तत्वात्। यथाहि सामान्यादेरमूर्त्तत्वान्निष्क्रियत्वं तद्वदाकाशादेरपीति। मूर्त्तत्वेन हि क्रियावत्त्वं व्याप्तं तच्च व्यावर्त्तमानमाकाशादिभ्यः स्वव्याप्तं क्रियावत्त्वं गृहीत्वा व्यावर्त्तत इति। तदेवाह मूर्त्तिरसर्वगतद्रव्यपरिमाणं तदनुविधायिनी च क्रिया—यत्र यत्र क्रिया तत्र तत्र मूर्त्तिः—इति। सा च मूर्त्तिराकाशादिषु नास्ति। तस्मान्न तेषां क्रियासम्बन्धोस्तीति।

अथ यदि मूर्त्यनुविधायिनी क्रिया मनसस्तर्हि मूर्त्तत्वात् क्रियासम्बन्धो वाच्य इत्याह—सविग्रहे शरीरावरुद्धे मनसीन्द्रियान्तरसम्बन्धार्थं यज्जाग्रतः कर्मोत्पद्यते तत् कुत इत्याह—आत्ममनसोः संयोगादसमवायिकारणादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात्। कुत एतदित्थंभूतात्प्रयत्नाज्जाग्रतो मनःक्रियेति, तदाह—अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्। अभिप्रायमन्वित्यभिप्रायानतिक्रमेण येनैवेन्द्रियेण विषयग्रहणाभिप्रायो भवतीति तेनैव विषयोपलब्धिदर्शनात् विज्ञायते अन्तःकरणस्येच्छानुविधायिक्रियाश्रयत्वम्। तेनानधिष्ठितस्येन्द्रियस्य विषयग्राहकत्वासम्भवादिति मनःसम्बन्धो निश्चीयते। स चेच्छानुविधानात्तत्पूर्वकप्रयत्नजनितक्रियाकार्य इति। सुप्तस्य तु यन्मनसो निरिन्द्रियात्मप्रदेशे प्रलीनस्येन्द्रियान्तरसम्बन्धार्थं प्रबोधकाले कर्म तदात्ममनसोः संयोगादसमवायिकारणाज्जीवनपूर्वकप्रयत्नापेक्षादुपजायते। तथाहि—सुप्तस्य मनःक्रिया प्रयत्नकार्या परिगृहीतान्तःकरणक्रियात्वाज्जाग्रदवस्थायां तत्क्रियावत्। अपसर्पणकर्मोपसर्पणकर्म चात्ममनसोः संयो-

गादसमवायिकारणाददृष्टापेक्षादुत्पद्यत इति । मृतशरीराद्विभागा-र्थं कर्मापसर्पणं गर्भशरीरेण संयोगार्थमुपसर्पणमिति । कदा पुनस्त-दपसर्पणं कथं भवतीत्याह–यदा जीवनसहकारिणोरित्यादि । जीवनं व्याख्यातम्, तत्सहकारिणोर्धर्माधर्मयोरुपभोगात् सुखदुःखसम्वेद-नात् प्रक्षयस्तदा तेन शरीरेण भोक्तव्यस्य कर्मणोऽभावाच्छरीरान्त-रोपभोगसम्पादककर्मसद्भावेपि शरीरस्य पात एव । अन्योन्याभिभवो वेति सम्भविनः पक्षान्तरस्योपन्यासः । तथाहि–शरीरान्तरोपभोग-दायकेन बलीयसा परिपक्वेन कर्मणाऽऽरब्धशरीरस्योपभोगदायक-त्वेनाभिप्रवृत्तस्य कर्मणोऽभिभवो भोगदानसामर्थ्यापगमः तीव्रश-ब्दोपलम्भेन मन्दस्याग्रहणमिवेति । ततो जीवनसहायस्य कर्मणो वैकल्ये सति तत्पूर्वकस्य प्रयत्नस्य वैकल्याच्च प्राणनिरोधस्तन्निरो-धे सत्यन्याभ्यां वृत्तिलब्धधर्माधर्माभ्यामिति । वृत्तिः सहकारिकारणं तया लब्धौ तत्सहकृतौ यौ धर्माधर्मौ ताभ्यामात्ममनःसंयोगसहका-रिभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते । ततस्तस्माच्छ-रीरात् बहिरवगतं ताभ्यामेव धर्माधर्माभ्यां सम्पादितं यदातिवा-हिकं सूक्ष्मशरीरं तेनाभिसम्बद्ध्यते । तत्सङ्क्रान्तश्च स्वर्गं नरकं वा गच्छति । गत्वा चाशयानुरूपेण शरीरेण संयुज्यते तत्संयोगार्थं कर्मोपसर्पणाख्यमिति । आतिवाहिकशरीरं चागमबलादभ्युपग-तमन्तःकरणस्य परिगृहीतत्वादिति । तथा न केवलमेतददृष्टात् भ-वति योगिनां च बहिरुद्रेचितस्येति । बहिर्देशैरुद्रेचितस्य मनसो-ऽभिप्रतदेशगमनं पुनः पुनः प्रत्यागमनं च । तथा सर्गकाले प्रत्यग्रे-ण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितमिति । न केवलमेतदन्यद-पि च महाभूतेषु यत् कर्म, किंविशिष्टं? प्रत्यक्षानुमानाभ्यामनुपलभ्य-मानकारणमुपकारापकारसमर्थमित्यर्थः । तदप्यदृष्टकारितं तदेवा-ह—यथा सर्गादौ सृष्ट्यादावणुषु कर्म शरीरादिसम्पादनार्थम्, अ-ग्निवाय्वोरूर्ध्वतिर्यग्गमने इति । अग्नेरूर्ध्वज्वलनं वायोस्तिर्य-ग्गमनं प्राणिनामुपकारापकारसमर्थमिति । महाभूतानां भूगोल-कदेवकुलादीनां प्रक्षोभणं तत्कम्पनं मणीनां तस्करं चौरं प्रति गमनमयसो लोहस्यायस्कान्ताभिमुखतया अभिसर्पणं चेति ॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां

कर्मपदार्थः समाप्तः ॥

# अथ सामान्यपदार्थनिरूपणम् ।

अथ सामान्यस्य लक्षणपरीक्षार्थं परमपरं च द्विविधं सामान्य-मित्यादिप्रकरणम्—

(भा०) सामान्यं द्विविधम् परमपरञ्च । स्वविषय-सर्वगत(१)मभिन्नात्मकमनेकवृत्ति एकद्विबहुष्वात्मस्व-रूपानुगमप्रत्ययकारि स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्त-मानमनुवृत्तिप्रत्ययकारणम् । कथम्? प्रतिपिण्डं सामा-न्यापेक्षं प्रबन्धेन ज्ञानोत्पत्तावभ्यासप्रत्ययजनिताच्च संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगतमस्ति तत्सामान्यमिति ।

तत्र सत्तासामान्यं परमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नी-लद्रव्याभिसम्बन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत्स-दिति प्रत्ययानुवृत्तिः, सा चार्थान्तराद्भवितुमर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धा । सत्तानुसम्बन्धात् स-त्सदिति प्रत्ययानुवृत्तिः तस्मात् सा सामान्यमेव । अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्तिहेतु-त्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं पर-स्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिहेतुत्वात् सामा-न्यम् गुणकर्मभ्यो व्यावृत्तिहेतुत्वात् विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात्

---

(१) 'अभेदात्मक' इति व्योमशिवाचार्याभिप्रेतोऽत्र पाठो बोध्यः ।

सामान्यं द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वाद्विशेषः। तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः। एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यविशेषभावः सिद्धः। एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति ॥

लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। अत एव च नित्यत्वम्। द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम्। प्रत्येकं स्वाश्रयेषु लक्षणाविशेषाद्विशेषलक्षणाभावाच्चैकत्वम्। यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि। अन्तराले च संयोगसमवायवृत्त्यभावादव्यपदेश्यानीति ॥

इति प्रशस्तपादभाष्ये सामान्यपदार्थः समाप्तः ॥

---

(व्यो०) अत्र च पूर्वं विभागस्याभिधानादनियमज्ञापनेन कार्यकरणभावाशङ्काव्युदासः सामान्यलक्षणविभागयोर्यथा द्रव्यं पृथिव्यप्तेज इत्यादि प्रयोजनमित्युपदर्शयति। स्वविषयसर्वगतमिति विप्रतिपत्तिव्युदासः।

तथाहि—परे मन्यन्ते सर्वं सामान्यं सर्वगतम्। गोत्वमश्वपिण्डेष्वप्यस्ति अश्वत्वं च गोपिण्डादिष्वपीति। अनुपलम्भस्तु व्यञ्जकाभावात्। यत्र च व्यञ्जकसद्भावस्तत्राभिव्यक्तिर्यथा गोपिण्डेषु गोत्वस्याश्वपिण्डेऽश्वत्वस्येति।

तच्चासत्। गोत्वस्याश्वादिपिण्डेषु सद्भावे प्रमाणाभावादव-स्थिते हि सद्भावेभिव्यञ्जकाभावादनुपलब्धिः कल्प्यते। अथ सामान्यं सर्वैः सम्बध्यते व्यापकत्वादाकाशवदित्यस्ति प्रमाणम्। तत्र सर्वैः समवाये साध्ये साध्यविकलमुदाहरणमाकाशस्य सर्वत्र समवायाभावात्। संयोगित्वे तु साध्ये सामान्यस्य द्रव्यरूपताप्रसङ्गः। न चैतद्युक्तं गुणकर्मसु समवेतस्योपलम्भादद्रव्यस्य च द्रव्य एव संयोगो नान्यत्रेति। तथा युतसिद्ध्यभावाच्च। युतसिद्धानां च संयोग इति। अथ सामान्येन सम्बन्धमात्रं साध्येत, तत्रापि सिद्धसाधनम्। स्वाधारेण संयुक्तसंयोगस्य सर्वत्र सद्भावात्। तथाहि-गोत्वाधारेण संयुक्तमाकाशादि तेन च संयुक्तं सर्वमूर्त्तमिति। एवं व्यापकत्वमपि यदि सर्वैः संयोगित्वम् तदसिद्धं पक्षे तदेव हि सर्वगतत्वमिति साध्येनाविशेष एव। तथाकाशादेर्व्यापकत्वेपि न सर्वैः सम्बन्ध इत्यनेकान्तः। अथ सर्वैः सम्बन्धः साध्यते सर्वत्र सन्निहितत्वादिति हेतुना। तदप्यसत्। आकाशादेस्तद्भावे गुणकर्मादिना सम्बन्धाभावात्। न च विशिष्टसम्बन्धानभ्युपगमे भावस्यान्यसान्निध्यं पश्यामः। अतः स्वविषयसर्वगतमेव सामान्यं गोत्वं गोपिण्डेष्ववाश्वत्वमश्वपिण्डेष्वेव, तत्रैवोपलम्भात्। अभेदात्मकमनेकवृत्तीति लक्षणं दर्शयति-अभेदात्मकमेकस्वभावम्। अनेकत्र वृत्तिर्यस्य तदनेकवृत्तीति। एकत्वे सत्यनेकत्र वर्त्तमानत्वात् सामान्यम्। तथाप्यवयविसंख्यादिभिर्व्यभिचारपरिहारार्थं नित्यत्वे सतीति विशेषणमर्थाद्व्याख्येयम्। तथापि सलिलादिपरमाणुरूपादयो नित्याश्चानेकत्र वर्त्तन्ते तदर्थमेकत्वे सतीति विशेषणम्। ते त्वनेकत्वे सत्यनेकत्र च वर्त्तन्ते इति। तथाप्येकत्वे नित्यत्वे च सत्यनेकत्र वर्त्तते समवायः तदर्थं स्वव्यतिरिक्तया वृत्त्या वर्तमानत्वे सतीति च विशेषणमध्याहार्यम्।

सर्वमत्रैव वाक्ये लभ्यते अध्याहारो न कार्य इति चान्ये। तथाहि न विद्यते भेदो नानात्वं विनाशश्च यस्येति तथोक्तम्, तदेवात्मा स्वरूपमस्येति अभेदात्मकमेकमविनाशि चेति लभ्यते। अनेकत्र वृत्तिर्यस्य इति बहुव्रीहिणा वृत्तेर्वृत्तिमतो भेदोप्युपदर्शित एव। तस्मादेकत्वे नित्यत्वे च सति समवायेनानेकत्र वर्त्तमानत्वात् सामान्यमितरस्मात् भिद्यते।

नन्वाश्रयासिद्धमेतल्लक्षणम् सामान्यसद्भावे प्रमाणाभावात् । यच्चानुगतज्ञानं न तत्सामान्यसत्तां दर्शयति कल्पनाज्ञानत्वात् । तथाचानादिवासनावशादनुगतज्ञानमुत्पद्यते न पुनर्वास्तवं सामान्यमस्ति । तदुक्तम्—

> पररूपं स्वरूपेण यया संवृयते धिया ।
> एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥

अस्यार्थः । भेदिनः परस्परं व्यावृत्तात्मानो भावास्तेषां रूपं भिन्नं स्वरूपेणाभिन्नेन संवृयते प्रच्छाद्यते यया धिया, किंविशिष्टयैकार्थप्रतिभासिन्येति । एकश्चार्थः प्रतिभासतेऽस्यां स्वगताकार एव बाह्यः तस्यानिर्विषयत्वादिति ।

> तया सम्वृतनानात्वाः संवृत्या भेदिनः स्वयम् ।
> अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥

अस्यार्थः । स्वयं भेदिनोऽपि भावास्तया सम्वृत्या सम्वृतनानात्वाः सन्तः अभेदिन इवाभान्ति न, परमार्थतः । कथं तर्हि सामान्यमुच्यते तदाह—

> तदभिप्रायवशात्सामान्यं सत्प्रकीर्त्तितम् ।
> तदसत् परमार्थेन यथा सङ्कल्पितं तया ॥
> परमार्थतोऽसदपि सामान्यं सत् प्रकीर्त्तितम् ।

तदभिप्रायवशादेकाकारप्रतिभासवशादिति । न च सामान्यं व्यक्तीनां व्यावृत्तरूपत्वादन्यस्य चाप्रतिभासनादित्याह—

> व्यक्तयो नानुयान्त्यन्यदनुयायि न भासते ।
> ज्ञानादव्यतिरिक्तं चेत् कथमर्थान्तरं व्रजेत् ॥

तस्मात् बुद्धिरेव तदन्यव्यतिरेकिणः पदार्थानाश्रित्योत्पद्यमाना विकल्पिता स्ववासनाप्रकृतिमनुविदधातीति भिन्नमेषां रूपं तिरोधाय भिन्नमात्मीयं रूपमध्यवतात(?) संसृजन्ती सन्दर्शयति । सा चैकसाधनसाध्यतया बुद्धिवर्त्तिनामेव भावानां बहिरिव परिस्फुरन्ती सामान्यमित्युच्यते । सा च स्वव्यतिरिक्तेषु भावेषु भवतीति विशेषविषयेत्युच्यते, न परमार्थतः, तस्मादनुगतव्यावृत्तस्वरूपत्वात्सामान्यं विशेषश्च । ननु बाह्या विवेकिनः पदार्थाः न च तेषु विकल्पवृत्तिः कथं तेषु भवतीति परीक्षकाः खल्वेवं विवेचयन्ति जात्या, न तु व्यवहर्त्तारस्ते तु स्वालम्बनामेव बुद्धिमनुगताकारां बहीरूपतया

मन्यमाना दृश्यविकल्पावर्थावेकीकृत्य प्रवर्त्तन्ते, प्रतिपादयन्ति चेति। ननु नित्यमेकमनुगतं विशेषव्यतिरिक्तं सामान्यं प्रतिभासत इति। पुनरप्युक्तम्—

शब्दोऽर्थांशङ्कमाहेति तत्रान्यापोह उच्यते।
आकारः स च नार्थेऽस्ति तं वदन्नर्थभाक्कथम्॥ इति।

वृत्त्यनुपपत्तेश्च न वास्तवं सामान्यमस्तीति। तथा चैकत्र वर्त्तमानं सामान्यं नैकदेशेन वर्त्तते, तदभावात्। न सर्वात्मना, अन्यत्र वृत्त्यभावप्रसङ्गात्। तथा येनैव रूपेणैकत्र वर्त्तते तेनैवान्यत्रापीत्यभ्युपगमे सर्वपिण्डानामेकताप्रसङ्गः। अथ स्वरूपान्तरेण, तर्हि स्वरूपभेदात्तस्य नानात्वं प्रसज्येत। स्वभावान्तरानिवृत्तौ चानेकत्र वृत्तित्वं विरुध्यत इत्युक्तम्। देशकालावस्थाविशेषविनियतैकसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहादनेकत्र वृत्तेरेकस्य न देशादिविशेषवताऽन्येन योग इति। तत्र देशविशेषो नगरादिः, कालविशेषो वसन्तादिः, अवस्थाविशेषो बाल्यादिस्तेषु विनियतः सर्वात्मना प्रतिष्ठितो यथोक्तस्वभावश्चासावेकश्च तेन संसर्गः सम्बन्धस्तत्संसर्गेणाव्यवच्छिन्नमक्रोडीकृतमुक्तस्वभावात् स्वभावान्तरं तेन विरहो वियोगस्तद्राहितत्वादिति हेत्वर्थः। अनकवृत्तेरेकस्येति धर्मिनिर्देशो, न देशादिविशेषवतान्येन योग इति साध्यधर्मनिर्देशो, रूपादिवादिति दृष्टान्तः। प्रयोगः पुनरेवं भवति—यस्य यथोक्तस्वभावान्तराविरहो न तस्य देशादिविशेषवताऽन्येन योगो यथा रूपादिरस्ति च सामान्यादेरसाविति विरुद्धोपलब्धिः। यदि चैकं तेन च स्वरूपेण सर्वैः सम्बध्येत सामान्यम्, सर्वपिण्डानामेकदेशकालावस्थायोगिताप्रसङ्गः, तद्देशादिविशेषितपिण्डवृत्तिस्वरूपत्वात् सामान्यस्य। यदा चैकस्मिन् पिण्डे देशादिविशेषिते समुपलभ्यते, तदैवाशेषस्याश्रयविशेषितस्योपलम्भः स्यात्तस्यैकरूपत्वादिति। अनेकवृत्तित्वानभ्युपगमे च रूपादिवदेकाश्रयत्वात् सामान्यरूपता न स्यादिति। न च सामान्यस्य स्वभावान्तरमस्ति येनानेकवृत्तित्वं स्यादित्युक्तम्। न च सामान्यस्य नियताश्रयेण सम्बन्धे नियमहेतुरस्तीति। तथा गोत्वं सम्बध्यमानं न गवा सम्बध्यते गोत्वसम्बन्धात् पूर्वं पिण्डस्य तद्रूपतासम्भवात्। अथागवा सम्बध्यते, तर्हि तस्याश्वेनापि सम्बन्धः स्यात्, गोत्वाभिसम्बन्धात् पूर्वमगोरूपतायाः सर्वत्र साधारणत्वात्। यत्र च गोपिण्डादिर्वर्त्तते न तत्र गोत्वादिसामान्यं समवैतीति तदाश्रयि-

णा तु सम्बद्ध्यत इति चित्रम ।

> यत्रासौ वर्त्तते भावस्तेन सम्बद्ध्यते न तु ।
> तद्देशिनन्तु व्याप्नोति किमप्येतन्महाद्भुतम् ॥

तथा पिण्डे व्रजति न सामान्यस्य गमनमस्ति निष्क्रियत्वात् । नाप्यवस्थानं पिण्डस्य तच्छून्यताप्रसङ्गात् । न भागेन गमनमवस्थानं च निरंशत्वात् । नापि पश्चादागत्याभिसम्बद्ध्यते पूर्वं तच्छून्यस्यानुपलब्धेः । तदुक्तम्—

> न याति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
> जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥

तदेतदसत् । जातिप्रद्वेषान्धतया प्रमाणमार्गपरिभ्रष्टैरभिहितमिति समाधीयते । तथाहि—चक्षुरादिव्यापारेणानुगतज्ञानस्याबाध्यमानस्योपलब्धेरवश्यमनुगतं निमित्तं वाच्यम् । न च वासनैव निमित्तम्, तस्याः पूर्वमेव प्रतिषेधात् । यदि च वासना विशिष्टप्रत्ययहेतुर्बाह्या चेति संज्ञाभेदमात्रमेव स्यात् । बोधान्तर्भावे तु बोधरूपतया तस्याः सर्वत्राविशेषात् विकल्पवैचित्र्यं न स्यात्—गोपिण्डदर्शनात् गवाकारो विकल्पोऽश्वपिण्डदर्शनाच्चाश्वाध्यवसायी–इत्यादि । न च देशादिभेदेनाप्यबाध्यमानोऽध्यवसायो निर्विषयः सम्भवतीति 'पररूपं स्वरूपेण यया संव्रियत" इत्यपास्तमेव । यच्चेदं–व्यक्तयो नानुयान्त्यन्यदनुयायि न भासत–इति । असदेतत् । अनुगतज्ञानेन तस्य प्रतिभासनात् । यथाहि स्वलक्षणं व्यावृत्तरूपतया प्रतिभासनादस्त्येवमनुगतस्वरूपतया प्रतिभासनात् सामान्यमप्यस्तीति । यदि च व्यावृत्तिज्ञाने सामान्यस्याप्रतिभासनादसत्त्वमनुगतज्ञाने च स्वलक्षणस्याप्रतिभासनादसत्त्वम् । तस्माद्यथाऽबाध्यमानज्ञाने नीलादेः प्रतिभासनात् सत्त्वमेवमनुगतज्ञाने प्रतिभासनात्सामान्यस्यापि सत्त्वमभ्युपगन्तव्यम् । वृत्तिविकल्पादेर्बाधकस्याप्रमाणत्वादिति । तथाहि—वृत्त्यनुपपत्तेरसत्त्वमिति—नेदं स्वतन्त्रसाधनम् । अनेकान्तात् । स्वतन्त्रे हि रूपादीनां सत्त्वमनुपपद्यमानवृत्तित्वं चेति । एवं परपक्षेऽनुपपद्यमानवृत्तित्वेप्याकाशादीनां सत्त्वमिति । स्वरूपासिद्धश्च वृत्तेः समवायस्य सत्त्वात् । एकदेशेन सर्वात्मना च न वर्त्तत इत्ययुक्तो विशेषप्रतिषेधः, प्रकारान्तरस्यासम्भवात् । अभिन्नस्वरूपत्वाच्च सामान्यस्य न तत्रैकदेशसर्वशब्दयोः प्रवृत्तिः, तयोर्भिन्नेष्वेव प्रवृत्तिदर्शनात् । समवायेन च वर्त्त-

ते सामान्यं नैकदेशेन स्वरूपेण वा तस्य एकदेशस्य स्वरूपस्य चावृत्तिरूपत्वादिति । यदेव च एकस्मिन् पिण्डे स्वरूपं सामान्यस्य तदेव पिण्डान्तरेऽपि, अनुगतज्ञानजनकत्वस्य सर्वत्र सम्भवात् । तदाह एकद्विबहुषु पिण्डेष्वात्मस्वरूपानुवृत्तिदर्शनात् स्वप्रत्ययकारणमिति । सामान्यस्यात्मस्वरूपमनुवृत्तमभिन्नमतोऽनुवृत्तिप्रत्ययस्यानुगतज्ञानस्य कारणमिति । न च सामान्यस्याभेदे पदार्थानां तथाभावः, ततोऽन्यत्वात् । अत एव नैकस्मिन्देशादिविशेषिते पिण्डे सामान्यस्योपलम्भादशेषविशेषितस्याप्युपलम्भप्रसङ्गः, तेषामनियतदिग्देशसम्बन्धित्वेनोपलम्भाभावात् । यथैव च क्रमेण विशेषा उपलभ्यन्ते तथैव तद्विशेषितं सामान्यमपीति । यदा हि पण्यपुरावस्थितगोपिण्डानां वसन्तसमये बालाद्यवस्थाविशेषितानामुपलम्भः, तदा तद्विशेषितं सामान्यमुपलभ्यते, अन्यदा त्वन्यैर्विशेषितमिति पिण्डेष्वनुगतज्ञानजनकत्वं सामान्यस्य सर्वत्राव्यभिचारिस्वरूपम् । तस्मादभेदात्मकमनेकवृत्ति च सामान्यं प्रत्यक्षेणोपलम्भादभ्युपगन्तव्यम् । यथा हि रूपमेकमेवैकत्र वर्त्तमानं प्रत्यक्षेणोपलब्धं तद्वदेकं सामान्यमनेकत्रेति । यच्चेदं—देशादिविशेषितस्वभावादनेकवृत्तेरेकस्य न देशादिविशेषवताऽन्येन योग—इत्युक्तम् । तत्र व्यर्थविशेषणता हेतोर्धर्मिणश्च । तथा ह्येकसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहान्न सामान्यस्य विशेषान्तरेण योग इति प्रतिषेधे साध्ये व्यभिचाराभावात् साध्यसाधनयोर्देशादिविशेषणमनर्थकम् । व्यवच्छेद्यसद्भावे हि विशेषणस्यार्थवत्तोपपत्तेः । अथ यथोक्तस्वभावान्तरविरहे कथमन्ययोगः सामान्यादेरन्ययोगे वा कथं यथोक्तस्वभावान्तरविरहः, तयोरन्यत्र रूपादौ प्रतिबन्धसिद्धिरिति चेत् । न । व्यभिचारात् । तथाहि—रूपाश्रयस्य रूपसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहेऽपि रसादिभिर्योगो दृष्टः, तद्वत्सामान्यस्याप्याश्रयान्तरेण योगः केन वार्यते, रूपाश्रयवत् सामान्येऽपि यथोक्तस्वभावान्तरासत्त्वस्याविशेषादिति । अस्ति च रूपस्याश्रयो द्रव्यमित्युक्तम् । अथैकत्वात् सामान्यस्य अनेकत्र समवायः प्रतिषिध्यते । तर्हि यदनेकत्र समवेतं तदनेकमेवेत्यभ्युपगमे हेतोर्व्यतिरेकाव्यभिचारेणैव गमकत्वात् एकत्र समवेतानां रूपादीनामेकता प्रसज्येत । न चैतदस्ति । अथैकत्वादेकत्रैव समवायः साध्यते । तदप्यनैकान्तिकम् । आकाशादेरेकत्वेऽप्येकत्रैव समवायाभावात् । अथानेकत्र समवायादनेकत्वप्रसङ्गो इष्टि

धीयेत । तथापि यदेकं तदेकत्र समवेतमिति व्यतिरेकाभावः । सत्यप्याकाशादावेकत्वे तदभावात् । एकत्र समवायादेकत्वम्, इत्येतदपि रूपशब्दादिभिरनैकान्तिकम् । एकत्वस्य सामान्यविशेषरूपत्वात्तस्मिन् साध्ये हेतोरन्वयव्यतिरेकाभावादगमकत्वम् । एवं निर्विशेषणस्य हेतोरवान्तरः साध्यसाधनभावप्रकारो निरस्तः । तथा सविशेषणस्यापि हेतोराकाशादिनानैकान्तकत्वम् । तस्य हि देशादिविशेषवताऽन्येन योगेऽपि यथोक्तस्वभावान्तरविरहोपलब्धिः । यच्चेदं–प्रदीपप्रभाया देशादिविशेषणविशिष्टाया न देशादिविशेषवतान्येन योग—इत्युदाहरणम् । तत्राप्युत्पत्तेरूर्ध्वमवयवक्रियाक्रमेण विनाशाभ्युपगमात् अनेककालव्यवधाने देशादिविशेषवतान्येनापि योगः सम्भवत्येव । न च प्रदीपप्रभायां साध्यसाधनसद्भावेऽपि हेतोर्व्यभिचारोपदर्शनात् गमकत्वम् । तथा सामान्यस्य स्वभावान्तरविरहोऽसिद्धः, तदाधारान्तरस्य तद्विशेषकत्वेन तत्स्वभावान्तरत्वात् । प्रतीयते चाधाराधेययोर्विशेषणविशेष्यभावः । यथा सद्द्रव्यं द्रव्यस्य सत्तेति । तस्मात् स्वभावान्तरविरहोऽपि साध्य एवेति । तथानेकवृत्तेरेकस्य न देशादिविशेषतान्येन योग इति प्रसङ्गनिर्देशे स्ववचनविरोधः । तथाह्यन्ययोगप्रतिषेधे नानेकवृत्तित्वं भवतीति । अथ सामान्यादिपर्यायोऽयमनेकत्र वृत्तिरिति । तथाप्यनेकवृत्तिप्रतिषेधोऽनुपपन्नः, सामान्यस्य नित्यत्वैकत्वे सत्यनेकवृत्तित्वलक्षणत्वात् । प्रत्यक्षेण च सामान्यस्य चानेकवृत्तित्वप्रसिद्धेः, तेन बाध्यत्वादनुमानमप्रमाणम् । तथा ह्येकाद्विबहुषु पिण्डेष्वक्षव्यापारादनुगतज्ञानमुत्पद्यमानं दृष्टम् । न चेदं भ्रान्तम्, प्रत्यक्षागमसम्वादेन विसंवादनिवृत्तौ तद्व्याप्तस्य भ्रान्तत्वस्य निवृत्तेरिति । न चापोहादेवानुगतज्ञानम्, तस्य व्यावृत्तिरूपतायामवस्तुत्वेनाजनकत्वात् । जनकत्वे वा तस्यार्थक्रियाकारित्वात् वस्तुत्वप्रसङ्गः । अथ व्यावृत्तादन्या व्यावृत्तिर्नेष्यते । तर्हि तेषां परस्परव्यावृत्तस्वरूपतयाऽनुगतज्ञानजनकत्वं न स्यात् । यच्चेदम्–अगोव्यावृत्तिर्गोत्वम्–इत्युक्तम् । तत्र गवां स्वरूपप्रतिपत्तिमन्तरेण ततोऽन्येषामगोरूपतायामप्रसिद्धिः तदप्रसिद्धौ च न गवां स्वरूपप्रतिपत्तिरित्यन्योन्याश्रयत्वं स्यात् । यदि चैकस्मात् गोपिण्डादन्येषामगोरूपता, तर्हि गोपिण्डानामप्यन्येषामगोरूपताप्रसङ्गः, तेषामप्येकस्मात् गोपिण्डादन्यत्वात् । अथ सर्वस्मात् गोपिण्डादन्ये-

षामगोत्वम् । तदसत् । वर्गीकरणनिमित्तासम्भवे सर्वेषां गोपिण्डानामप्रतिपत्तौ ततोऽन्येषां प्रतिपत्तुमशक्यत्वात् । येषां चानुगतमभिन्नं निमित्तमस्ति तेषां गोस्वरूपप्रसिद्धौ ततोन्यव्यावृत्तिः प्रतीयत एव । अथार्थक्रियासामान्यादनुवृत्तिप्रत्यय इति चेत् । न । अर्थक्रियाणामपि परस्परं व्यावृत्ततयाऽनुगतज्ञानाजनकत्वात् । अथार्थक्रियाणामनुगतमभिन्नं निमित्तमुपग्राहकमिष्येत । तदेव तर्हि सामान्यम् । का चेयमर्थक्रिया यत्साम्यादनुगतज्ञानमिति वाच्यम् । यदि वाहादिरूपा, सा च मनुष्यादावपि सम्भवतीति तत्रापि गौर्गौरित्यनुगतज्ञानप्रसङ्गः । न च पक्षे सर्वत्रैतदस्तीत्यनुगतज्ञानाभावप्रसङ्गः । अथ ज्ञानमेवानुगतव्यावृत्ताकारं सामान्यमिति चेत् । सोयमश्वारूढस्य विस्मृतोऽश्व इति न्यायः । न ह्यनुगतनिमित्तं विनाऽनुगतज्ञानं सम्भवति । वासनादेर्निमित्तस्य प्रतिषेधात् । यदपीदं–सामान्यस्याधारे व्रजति गमने क्रियावत्त्वमवस्थाने चानाधारत्वम्–इति । तदसत् । बाधकोपपत्तौ गमनप्रत्ययस्य भाक्तत्वात् । तथा च मूर्त्तत्वेन क्रियावत्त्वं व्याप्तं तच्च सामान्यादिभ्यो व्यावर्त्तमानं स्वव्याप्तं क्रियावत्त्वं गृहीत्वा व्यावर्त्तत इति निष्क्रियम् सामान्यादि । मूर्त्तत्वे सत्येवान्वयव्यतिरेकाभ्यामर्थेषु क्रियोपलब्धेः । सैव योग्यता तदभावाच्चाकाशादौ क्रियाभावो न विभुत्वप्रतिबन्धात्तदभावे हि गुणकर्मादावपि क्रियावत्त्वप्रसङ्गात् । यदि च कस्यचित्सामान्याधारस्य गमनात् सामान्यस्यापि गमनम् । तर्हि तस्यावस्थानेऽवस्थानं चेति 'न गच्छन्नापि तिष्ठेत्' इति दुरुद्धरं व्यसनमापद्येत । तस्मात् संयोगविभागैकार्थसमवायादाधारगतं गमनमाधेयेप्यारोप्य प्रतिपद्यते–सामान्यं गच्छति–इति । यच्चेदं–न याति न च तत्रासीदस्ति पश्चान्न चांशवत—इत्युक्तम् । तत्सामान्यस्वरूपोपवर्णनं न तस्य प्रतिषेधपरम् । द्रव्यस्वरूपानुपलम्भेन सामान्यस्यासत्त्वे सर्वस्याप्यसत्त्वं स्यात्, तदितरासत्त्वस्य सर्वत्राविशेषात् । सामान्यं च विशेषेष्वनुवर्त्तमानं प्रत्यक्षेणैव प्रसिद्धमिति तस्यानुपलम्भोऽसिद्धः । यदि चासत्त्वं सामान्यस्य, कथं स्वलक्षणविषयं प्रत्यक्षं सामान्यविषयमनुमानमिति स्यात् । अथ—

अतद्रूपपरावृत्तवस्तुमात्रप्रकाशनात् ।
सामान्यं सदिति प्रोक्तं लिङ्गभेदाप्रतिष्ठितेः ॥ इति ।

अयमस्यार्थः—दाहपाकादिसमर्थाभिव्यतिरेकिणो जलादयो तद्रूपास्तेभ्यो व्यावृत्तस्य तार्णपार्णादिविशेषरहितस्याग्निमात्रस्य ज्ञापनात् सामान्यविषयो धूमस्तथा धूमज्ञानमप्यधूमव्यावृत्ततार्णादिविशेषरहितधूममात्रविषयमिति । नैतद्युक्तम् । सामान्यानभ्युपगमे मात्राभिधानस्यार्थासम्भवात् । न चापोह एव मात्राभिधानस्यार्थः, तस्यावस्तुत्वेनाजनकत्वाद्वस्तुत्वे च वास्तवमेव सामान्यमभ्युपगतमिति कः प्रतिकूलानूकूलमाचरतीति । न चाग्निव्यक्तीनां सामर्थ्यम्, तद्ग्राहकाविनाभावस्यैवाप्रसिद्धेः । न च धूमोपलम्भादग्निसामस्त्यप्रतिपत्तिर्दृष्टेति । अथ तार्णादीनामन्यतमो विशेषो मात्राभिधानविषयः, तर्हि कथं सामान्यविषयमनुमानम् । न चाग्निव्यक्तिषु विशिष्टार्थक्रियाकारितया समाना बुद्धिः, क्रियाणामपि परस्परं व्यावृत्तत्वादित्युक्तन्यायात् । एतेन यदुक्तम्—

लिङ्गलिङ्गिधियोरेव पारम्पर्येण वस्तुनि ।

प्रतिबन्धात्तदाभासशून्ययोरप्यवञ्चनम् ॥—इति,

एतदपास्तं भवतीति । तयोर्द्वयोः सामान्याभावे पारम्पर्येणापि वस्तुप्रतिबन्धाभावात् । न चाधूमव्यावृत्ताकाराद्विकल्पादनाग्निव्यावृत्ताकारो विकल्पः, तयोरविनाभावस्याप्रसिद्धेराग्निप्रतिपत्तिमन्तरेणानग्नयो न प्रतीयन्ते तदप्रतिपत्तौ नाग्निप्रतिपत्तिरितरेतराश्रयत्वप्रसङ्गात् । न च कार्यत्वेन धूमस्य गमकत्वमित्युक्तं व्याप्तिसमर्थनावसरे । तस्मात् सामान्यवतामविनाभावप्रसिद्धेरनुमानमिच्छताऽवश्यं सामान्यमभ्युपगन्तव्यम् । अन्यथा हि वास्तवसमान्यं विना भावस्याप्रसिद्धौ सङ्केताप्रतिपत्तेश्च नानुमानशब्दयोः प्रमाणता स्यादिति । अस्ति च तयोः प्रामाण्यम् । तस्मादर्थप्रतिपत्तौ प्रवर्त्तमानस्यार्थक्रियासम्वादेन विसम्वादिनिवृत्तौ तद्व्याप्तस्य भ्रान्तत्वस्य निवृत्तेरित्युक्तं पूर्वम् । अतः स्वात्मरूपानुवृत्तिप्रत्ययकारणमिति ।

सङ्ग्रहवाक्यस्य विवरणमाह—स्वरूपाभेदेनैकरूपेणाधारेषु शाबलेयादिपिण्डेषु प्रबन्धेनानुपरमेण पूर्वपिण्डापरित्यागेन समवायवृत्त्या(?)वर्त्तमानमनुवृत्तिबुद्धिकारणमिति । एकाद्विबहुष्वित्यस्य विवरणमाधारेष्विति । अभेदात्मकपदस्य तु स्वरूपाभेदेनेति । कथमित्यव्युत्पन्नप्रश्नः विपर्यस्ताक्षेपो वा । तथाचैकपिण्डोपलम्भकाले नानुगतं सामान्यं प्रतिभाति । द्वितीयपिण्डोपलम्भकालेपि प्रथमपि-

ण्डस्याग्रहणादनुगतज्ञानाभाव एव । यत्राप्येकं ज्ञानमनेकपिण्डाल-म्बनं तत्राप्यनुगतज्ञानस्यानुपलम्भ एवेत्याक्षेपे सति प्रतिसमाधान-माह—प्रतिपिण्डं सामान्यापेक्षमित्यादि । पिण्डं पिण्डं प्रबन्धेन सातत्येन ज्ञानानामुत्पत्तिस्तस्याञ्च सत्यां पूर्वपूर्वानुभवजनितसं-स्कारापेक्ष उत्तरोत्तरप्रत्ययोऽभ्यासस्तेन जनितः संस्कारस्तस्माद्या-तीतज्ञानप्रबन्धप्रत्यवेक्षणं भवति । अतीतश्चासौ ज्ञानप्रबन्धश्च त-स्मिन् प्रत्यवेक्षणं स्मरणं भवति । ज्ञायत इति ज्ञानं, ज्ञप्तिश्च ज्ञान-मित्युभयविषयं स्मरणं भवतीति । एतत्सदृशो मया प्रागुपलब्ध इत्येवं स्मरणात्समनुगतं यदस्तीति ज्ञायते तत्सामान्यमिति । त-त्सदृशोयमिति प्रत्यभिज्ञानाच्च यत्तत्सादृश्यं भिन्नेष्वभिन्नप्रत्ययज-नकं तत्सामान्यमिति व्यवस्थितम् । भेदं निरूपयति—तत्र सत्ता परं सा-मान्यम् । अत्र च महाविषयत्वादित्युक्तमेव साधनं । सा तु सत्ता सामान्यमेव । कुतः ? यतोऽनुवृत्तिप्रत्ययस्यैव कारणम् । यद्यप्यभा-वादिभ्यो व्यावृत्तिज्ञानस्यापि हेतुः । तथापि सामान्यवत्स्वनुवृत्ता-मेव बुद्धिं जनयति, न व्यावृत्तामतः सामान्यमेवेति । तत्र सामा-न्यमात्रस्य सद्भावे व्यवस्थापिते विस्पष्टार्थं सत्तायाः सद्भावानुमा-नमाह । यदि वा पूर्वं प्रत्यक्षमुक्तमिदानीमनुमानमुच्यते । तत्र व्या-प्तिसमर्थनार्थं दृष्टान्तं व्याचष्टे—यथा परस्परविशिष्टेषु व्यावृत्तेषु चर्मवस्त्रकम्बलादिष्वन्यस्मादर्थान्तरभूतात नीलद्रव्यसम्बन्धान्नी-लनीलमिति प्रत्ययानुवृत्तिः, तथा परस्परविशिष्टेषु द्रव्यगुणकर्म-स्वविशिष्टा सत सदिति प्रत्ययानुवृत्तिरिति दार्ष्टान्तिकनिरूपणम् । सा च प्रत्ययानुवृत्तिरर्थान्तरसम्बन्धाद्भवितुमर्हति । यत्तदर्थान्तरं सा सत्तेति सिद्धा । सत्तासम्बन्धात् सत्सदिति प्रत्ययानुवृत्ति-स्तस्मात् सामान्यमेव । प्रयोगस्तु—द्रव्यगुणकर्मसु सत्सदितिप्रत्ययो विशेष्यव्यतिरिक्तानुगतनिमित्तनिबन्धनो भिन्नेष्वनुगतप्रत्ययात् कम्बलादिषु नीलद्रव्यसम्बन्धान्नीलं नीलमिति ज्ञानवत् । सामान्येन च विशेष्यव्यतिरिक्तानुगतनिमित्तनिबन्धनत्वे साध्ये न वाचकादि-ज्ञानैर्व्यभिचारः, तेषामपि सपक्षत्वात् । तथाहि पाचक इति ज्ञाने पाकक्रिया निमित्त तदभिज्ञता वा तत्सद्भावे क्रियोपरमेपि पाचक इति व्यवहारात्, एवं दण्डीतिज्ञाने दण्डो निमित्तं, शुक्ल इति ज्ञा-ने च गुणो निमित्तमिति सर्वत्र व्यतिरिक्तमेव निमित्तम । दण्डादे-स्तु परस्परं विलक्षणत्वादनुगतज्ञानोत्पत्तावेकमभिन्नं निमित्तमु-

पग्राहकमभ्युपगन्तव्यम्। अन्यथा ह्यनुगतज्ञानजनकत्वमेव स्यात्। अतो दण्डेषु दण्डत्वं शुक्लादिषु च तत्सामान्यमिति वाच्यम्। यच्चेदं सामान्यं सामान्यमित्यनुगतज्ञानमत्राप्येकत्वे नित्यत्वे सत्यनेकत्र समवायो निमित्तमेवं सर्वत्र निमित्तान्तरमभ्यूह्यम्।

अपरं द्रव्यत्वगुणत्वकर्मत्वादीत्यादिपदेन पृथिवीत्वादेर्ग्रहणम्। अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात् सामान्यं विशेषश्च भवतीति तदेवाह-तत्र द्रव्यत्वं परस्परविशिष्टेषु व्यावृत्तस्वरूपेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः। यथा द्रव्यत्वं तथा गुणत्वमपि परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात् सामान्यं द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वाद्विशेषः। तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिहेतुत्वात् सामान्यं, द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः। एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यविशेषभावः सिद्ध इत्यतिदेशः। प्राणसम्बन्धिनि पिण्डे गतानि गोत्वाश्वत्वादीनि अप्राणिगगतानि पृथिवीत्वादीनि प्राणशून्याधारगतानि स्वभेदेऽनुवृत्तिप्रत्ययहेतुत्वात् भेदान्तराद्व्यावृत्तिप्रत्ययहेतुत्वाच्च सामान्यविशेषभावसिद्ध इति। न चैकस्य वस्तुनो द्विरूपत्यानुपलब्धेः कथं तदेव सामान्यं विशेषश्चेति। अथैकमत्र पारमार्थिकमन्यच्चोपचरितमित्यवरोधः। तत्रा किं मुख्यवृत्त्या सामान्यानि विशेषा वेत्याह-एतानि द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन मुख्यवृत्त्या सामान्यानि, न हि विशेषाणां प्रभूतविषयत्वं सम्भवति, एकैकद्रव्यवृत्तित्वात्। स्वाश्रयविशेषकत्वात् भक्त्योपचारेण विशेषाख्यानीति। व्यावृत्तिप्रत्ययजनकत्वं विशेषाणां स्वरूपं तस्येहाप्युपलब्धेरुपचारः प्रवर्त्तत एव, तथाहि—द्रव्यत्वादि सामान्यं स्वाश्रयमाश्रयान्तराद्व्यावृत्तं विशिनष्टि व्यावृत्तयतीत्यतो विशेषाख्यामिति लभते।

अथ द्रव्यत्वादीनि द्रव्यगुणकर्मभ्योऽर्थान्तरं स्वरूपाणि वेत्याह—लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। तच्चोक्तमभेदात्मकमनेकवृत्तीति पदेन। अत एव च नित्यत्वं यत एव द्रव्यादिभ्यः पदार्थान्तरत्वमत एव च नित्यत्वम्। द्रव्यगुणकर्मात्मकस्य भावस्यानित्यत्वोपलब्धेः। ननु चानुत्पत्तिमत्त्वेन नित्यत्वम् न द्रव्यादिभ्यः पदार्थान्तरत्वेन सामान्यादित्रयस्यापि नित्यत्वेन सा-

ध्यत्वात् । नैतदेवम् । यतो द्रव्यादिभ्यो विभिन्नस्वरूपसम्बन्धित्वेन प्रतिभासनात् अर्थान्तरत्वम् । अत एव च नित्यत्वमुत्पत्तिविनाशकारणासम्भवात् । तथाहि-सामान्यस्योत्पत्तिकारणं नास्ति तदाधाराणां युगपदसम्भवेन समवायिकारणाभावात् इत्येवं निर्णीतम् 'पदार्थसङ्करे । अथैकमेव सामान्यं सत्तालक्षणमुपाधिभेदात् भिन्नप्रत्ययसम्पादकमित्येतस्य निरासार्थमाह-द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वमिति । एष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वमित्यादिवृत्तिनियमः । प्रत्ययभेदस्तु द्रव्येष्वेव द्रव्यं द्रव्यमिति द्रव्यत्ववशात् ज्ञानं गुणेषु च गुणत्वयोगात् गुणो गुण इत्यादि । तस्मात् प्रत्ययभेदाद्द्रव्यादिषु वृत्तिनियमाच्च परस्परतोऽप्यन्यत्वम् , अन्यथा हि सर्वपदार्थेष्वेकत्वात् सामान्यस्य वृत्तिनियमः प्रत्ययभेदश्च न स्यात् । अथास्तु परस्परतोऽन्यत्वं तथापि स्वाश्रयेषु द्रव्यमिति द्रव्यत्ववशात् ज्ञानं गुणेषु च गुण इत्यादि यस्मात्तत्किमेकमनेकं वेत्याशङ्कानिरासायाह—प्रत्येकं स्वाश्रयेष्वेकं द्रव्यत्वं गुणेष्वेकं गुणत्वमित्येवं शेषेष्वपीति । कुत एतत् ? लक्षणाविशेषात्, अनुगतस्वरूपाविशेषात् । यदि वा लक्ष्यतेऽनेनेति वा लक्षणं द्रव्यं द्रव्यमित्याद्यनुगतज्ञानं तस्याविशेषा एव द्रव्येषु द्रव्यत्वं गुणेषु गुणत्वमन्यथा ह्यनुगतज्ञानमेव स्यात् । अथ रूपभेदानामनेकत्वेपि रूपं रूपमिति ज्ञानमस्ति । सत्यमेतत् । नीलादिज्ञानस्य भेदव्यवस्थापकस्योपपत्तेः । न चैवमत्र भेदव्यवस्थापकं प्रमाणमस्तीत्याह-विशेषलक्षणाभावाच्चैकत्वमिति । अथैकस्मिन्नेव देशे समुत्पद्यमानस्य घटादेः प्रतिनियतसामान्यसम्बन्ध हेतुर्वाच्योऽन्यथा ह्यनियतदेशत्वात् सामान्यानां नियतेन धर्मिणा सम्बन्धो न स्यादित्याह—यद्यप्यपरिच्छिन्नदेशानि सामान्यानि तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानीति । उपलक्ष्यतेऽनेनेत्युपलक्षणमनुगतज्ञानमेव, तथाहि—द्रव्यं द्रव्यमित्यनुगतं ज्ञानं द्रव्येष्वेव न गुणादावतः स्वविषयसर्वगतमेव द्रव्यत्वं विषयान्तरे तत्सद्भावे प्रमाणाभावात् । एवं गुणत्वादावपीति । उपलक्षणं सामान्याभिव्यञ्जकं वा तन्नियमात् स्वविषयसर्वगतम् । तथाहि—सास्नाद्युपलक्षितपिण्डस्य गोत्वेनाभिसम्बन्धः केसराद्युपलक्षितस्याश्वत्वेनाभिसम्बन्ध इत्येवं सर्वत्र नियतं सद्व्यञ्जकमभ्यूह्यम् । अथास्तु व्यञ्जकानियमात्

स्वविषय एवोपलम्भात्स्वविषयसर्वगतत्वमत्र कारणं वाच्यं नियामकाभावे नियताश्रयसम्बन्धस्यैवाभावप्रसङ्गादित्याह—कारकसामग्रीनियमाञ्च स्वविषयसर्वगतमिति । तथाहि—गोत्वजातिसम्बन्धोपभोगित्वप्रापकादृष्टोपलक्षितसामग्रीसम्पादितो गोपिण्डो नाश्वादीतरस्तन्नियमात् स एव गोत्वेनाभिसम्बध्यते नान्यस्तथाऽश्वत्वजातिसम्बन्धोपभोगप्रापकादृष्टोपलक्षितसामग्रीजन्यत्वात् अश्वपिण्डोऽश्वत्वेनाभिसम्बन्ध्यत इति । एवमन्यत्रापीति । अतो यदुक्तं-यत्रासौ वर्त्तते भावस्तेन सम्बध्यते तु न-इत्यादि, तदपास्तम् । नियताश्रयसमवेतस्यैवोपलम्भासिद्धौ नियमकारणस्यानभिधानात् । यच्चेदं-किं गौर्गोत्वेनाभिसम्बध्यते अथागौरिति-चोद्यम् , तत्र प्रतिसमाधानार्हम् । निष्ठासम्बन्धयोरेककालत्वादिति । स्वकारणैः सत्तादिभिश्च पिण्डस्याभिसम्बन्ध एवात्मलाभो न पूर्वं तस्य गोरूपताऽगोरूपता वा तत्सत्त्वस्यैवासम्भवात् । अथ यथा मणिमन्त्रौषधादीनि विशिष्टार्थक्रियासम्पादनसमर्थानि स्वकारणादुत्पन्नान्येवं गोपिण्डा गौरितिज्ञानोत्पादनसमर्थाः स्वकारणादेवोत्पन्ना नाश्वादिज्ञानमुत्पादयन्तीति चेत् । तर्हि यत्तत्सामर्थ्यं येन सता गौरित्यनुगतज्ञानमुत्पादयन्ति तद्यद्यर्थान्तरं संज्ञाभेदमात्रम । अव्यतिरेके त्वनुगतज्ञानाभावप्रसङ्गः । तस्मादनुगतस्य वस्तुनः प्रत्यक्षेण प्रतिभासनात् सामान्यनिराकरणे सर्वं दूषणमसाधनमेवेति । अथ स्वविषयसर्वगतत्वे गोपिण्डयोरन्तरालेपि सामान्यमुपलभ्येत, न चैतत्तस्मात् कथं स्वविषयसर्वगतमित्याशङ्क्याह—अन्तराले च संयोगसमवायवृत्त्यभावात् अव्यपदेश्यानीति । संयुक्तसमवायेन गोत्वादिसामान्यस्योपलम्भात् गोत्वमिति व्यपदेशो न चासाविहास्ति, अतोऽव्यपदेश्यानीति । तथा किमिदमन्तरालं नाम यत्र सामान्यस्योपलम्भप्रसङ्गश्चोद्यते ? यदि मूर्त्तद्रव्याभावो न तत्र गोत्वादिसामान्यमभावत्वादेव । अथ शब्दानुमेयमतीन्द्रियमाकाशमन्तरालावस्थितं वा घटादि द्रव्यं तत्रापि न गोत्वादेः समवाये प्रमाणमस्तीत्यनुपलम्भो घटत इत्यलम ॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां सामान्यपदार्थः ॥

# अथ विशेषपदार्थनिरूपणम् ।

(भा०) अन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्तमानाः अत्यन्तव्यावृत्तिबुद्धिहेतवः । यथाऽस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा गौः शुक्लः शीघ्रगतिः पीनककुद्मान् महाघण्ट इति । तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु च अन्यनिमित्तासम्भवाद् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिः, देशकालविप्रकर्षे च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या विशेषाः ।

यदि पुनरन्त्यविशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च स्यात् ततः किं स्यान्नैवं भवति । यथा च योगजाद्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते अत्यन्तादृष्टे च प्रत्यभिज्ञानम् । यदि स्यान्मिथ्या भवेत् तथेहाप्यन्त्यविशेषमन्तरेण योगिनां न योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति । अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति चेन्न । तादात्म्यात् । इहातदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति

यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपान्तरात्। यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषां तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्यय-व्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥

इति प्रशस्तपादभाष्ये विशेषपदार्थः समाप्तः ॥

विशेषाणां परीक्षार्थमाह—अन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वाद्विशेषा इति । उत्पत्तिविनाशयोरन्ते व्यवस्थितत्वादन्तशब्दवाच्यानि नित्यद्रव्याणीति । तथाहि—परमाणूनवधिं कृत्वा द्व्यणुकादिकार्यस्योत्पत्तिस्तथा पृथिव्यादीनामपि तावदुत्पादो यावदाकाशादीति पाठापेक्षया तस्याप्यन्तशब्दवाच्यत्वमेवं विनाशान्ते व्यवस्थानं परमाण्वादीनाम । तथा च तावद्द्रव्यं विनश्यति यावत्परमाणवः पाठापेक्षया पृथिव्यादीनामप्याकाशादिकं यावद्विनाश इति तेषु भवास्तद्वृत्तयोऽन्त्या इत्यपदिश्यन्ते । तथाहि भूरित्ययं धातुः सत्ता वाप्युपलब्धौ यथेदानीं देवदत्तो गृहे भवत्यास्त इति । सङ्ग्रहोक्तेर्विवरणमाह—विनाशारम्भरहितेष्वित्यादि । तत्रान्तपदस्य विवरणम्—विनाशारम्भरहितेषु नित्यद्रव्येष्वेव, आकाशकालदिगात्ममनस्स्विति विशेषसञ्ज्ञाया निर्देशः स्पष्टार्थम्। प्रत्ययार्थं व्याचष्ट-प्रतिद्रव्यमेकैकशो वर्त्तमाना इति । द्रव्यं द्रव्यं प्रत्येकैको विशेषो वर्त्तते, नैकस्मिन्ननेको वैयर्थ्यप्रसङ्गात्। तथा चैकेनैव विशेषेण व्यावृत्तप्रत्ययस्य जनितत्वाद्विशेषान्तरवैयर्थ्यमेव । नाप्येकोऽनेकस्मिन्, सामान्यरूपताप्रसङ्गादिति । द्वितीयपदस्य तु विवरणमत्यन्तव्यावृत्तिबुद्धि-हेतव इति । नित्यद्रव्येष्वेव वर्त्तन्त एवेत्ययोगान्ययोगव्यवच्छेदेन नित्येषु वर्त्तमानत्वाद्विशेषा इतरस्माद्भिद्यन्ते इति । लक्षणं पूर्वमेवोक्तम् ।

अथ विशेषाणां सद्भावे किं प्रमाणम्? अनुमानम् । तत्र व्याप्ति-समर्थनार्थं दृष्टान्तं निरूपयति–यथाऽस्मदादीनां गवादिष्वश्वादिभ्यः प्रत्ययव्यावृत्तिर्दृष्टा । तुल्याकृतिगुणादपि सजातीयाद्व्यावृत्ततत्क्रियावयवसंयोगिनिमित्ता । तत्र जातिनिमित्ता प्रत्ययव्यावृत्तिर्यस्मात् गौरयमतोऽश्वादिविलक्षण इति । सजातीयत्वेपि कृष्णादिगुणसम्ब-

न्धिभ्यः शुक्ल इति प्रत्ययव्यावृत्तिः । तथा शीघ्रगतिरिति क्रिया-
विशेषनिमित्ता । तेन हि सता समानगुणादपि सजातीयाद्द्रव्याव-
र्त्तत इति । पीन इत्यवयवोपचयनिमित्ता तेन सता समानगुणक्रिया-
दपि समानजातीयात् व्यावर्त्तन्ते । ककुद्मानित्यवयवविशेषनिमि-
त्ता तेन सता अन्यस्माद्विलक्षणजप्रत्ययजननादिति । महाघंट इति
संयोगिनिमित्ता, तत्सद्भावे व्यावृत्तप्रत्ययजननात् । तद्दार्ष्टान्तिक-
व्याख्यार्थमाह—अस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुण-
क्रियेषु परमाणुषु मुक्तात्ममनस्सु च प्रत्ययव्यावृत्तिरेतस्माद्विल-
क्षणोयं विलक्षणोयमिति दृष्टा । सा चान्यनिमित्तासम्भवात् वि-
शेषसम्भवादेव भवतीति । तथाच तुल्याकृतिगुणक्रियाधाराः पर-
माणवो विशेषसम्बन्धिनो व्यावृत्तज्ञानविषयत्वात् गवादिवत् ।
न च गवादिष्विव जातिगुणक्रियात्मका एव विशेषा भविष्यन्तीति-
वाच्यम् । समानजातगुणाक्रियाधारत्वेन विशेषितत्वादिति । तथापि
सर्वे तैजसाः परमाणवः तेजस्त्वसम्बन्धिनः समानगुणाधाराः
समानाक्रियासम्बन्धिनश्च पक्षीकृता इति न तेषु तन्निमित्ता प्रत्य-
यव्यावृत्तिः । तथाच भास्वरं रूपमुष्णस्पर्शः परिमाणमेकत्वैकपृथ-
क्त्वादयः साधारणत्वान्न व्यावृत्तज्ञानहेतवः । क्रियापि वाताहताना-
मेकदिगभिमुखतया गमनात् साधारणतया वैलक्षण्यप्रतिपत्तौ न
कारणम् । अतो द्रव्यादिस्वरूपस्य विशेषस्यासम्भवात् यतो निमि-
त्तात् प्रत्ययव्यावृत्तिस्तेऽन्त्या विशेषाः । तथा मुक्तात्मानो मुक्तमनां-
सि च व्यावृत्तज्ञानविषयत्वाद्विशेषमपेक्षन्ते । शरीरसम्बन्धस्य चा-
त्यन्तं व्यावृत्तेर्नात्मनि बुद्ध्यादिविशेषो व्यावृत्तज्ञानहेतुरसम्भवात,
मनसोपि शरीरसम्बन्धशून्यस्य संख्यादिगुणानां साधारणत्वा-
द्विशेषं विना न व्यावृत्तज्ञानोत्पत्तौ कारणत्वमस्तीति यथोक्त-
विशेषणाध्यासितेषु व्यावृत्तप्रत्ययो विशेषकार्यो व्यावृत्तप्रत्ययत्वात्
गवादिव्यावृत्तप्रत्ययवत् । अथातीन्द्रियत्वात्परमाण्वादेर्व्यावृत्तज्ञान-
विषयत्वे किं प्रमाणम ? अनुमानमेव, तथाहि—परमाण्वादयो व्यावृ-
त्तज्ञानविषया द्रव्यत्वात् गवादिवत्। संशयविषयत्वं च परमाण्वादेः
सत्तासम्बन्धित्वात् स्थाण्वादिवत् । यत्र च संशयस्तत्रावश्यं नि-
र्णय इति परमाण्वादयो निर्णयविषयाः संशयविषयत्वात् स्थाण्वा-
दिवत् । तथा परमाण्वादयो विशेषसम्बन्धिनो निर्णयविषयत्वात्

स्थाण्वादिदेव। अत इदमाह—अन्यनिमित्तासम्भवात् येभ्यो निमि- त्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिस्ते अन्त्या विशेषाः। तथा देशकालविप्रकृष्टाद्दृष्टे परमाणौ स एवायमिति प्रत्ययः प्रमाणं विशेषसम्बन्धे सति प्रत्यभिज्ञानस्य देवदत्तादावुप- लब्धेरतो व्यावृत्तप्रत्ययविषयत्वात् प्रत्यभिज्ञायमानत्वाच्च परमा- ण्वादेर्विशेषसम्बन्धित्वम्। अस्ति च योगिनां पूर्वोपलब्धे परमाणौ स एवायं परमाणुर्यः पञ्चपुरावस्थितो वसन्तसमयोपलब्ध इति। अथेतरेतराभावात् पृथक्त्वाद्वा प्रत्ययवृत्तिः प्रत्यभिज्ञानं वेति न ततोऽन्यो विशेष इति चेत्। न। तदुपलम्भेऽपि स्थाण्वादौ संशयदर्श- नात्, तथाहीतरेतराभावोपलब्धौ पृथक्त्वोपलम्भे च सति सामा- न्यदर्शनादिभ्यः किमयं स्थाणुः पुरुषो वेति संशयो दृष्टः। तद्व्य- तिरिक्तशिरःपाण्यादिविशेषोपलम्भे च सति पुरुष एवायमिति च निर्णयदर्शनात् इतरेतराभावपृथक्त्वान्य एव विशेषः परमाण्वादौ वाच्य इति।

अन्ये त्वितरेतराभावस्य निषिध्यमानज्ञानजनकत्वमेव, व्यावृ- त्तज्ञानं च तस्माद्विलक्षणमतो निमित्तान्तरकार्यमिति मन्यन्ते। पृथक्त्ववशाच्च पृथगिति व्यवहारो न विलक्षण इति।

अथ योगिनां योगजधर्मादेः प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं चेति, तदेवाह—यदि पुनरन्त्यविशेषमन्तरेण योगिनां योगजधर्मात् प्रत्ययव्या- वृत्तिः प्रत्यभिज्ञानं च स्यात्। को दोषस्तदाह—अयमेव नैवं भवती- ति। यथा च योगजाद्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते अत्यन्ता- दृष्टपूर्वे च प्रत्यभिज्ञानं चेति। यदि कदाचित्स्याद्योगिनामशुक्ले शुक्लप्रत्ययः प्रत्यभिज्ञानं च मिथ्या भवेत्। तथेहाप्यन्त्यविशेष- मन्तरेण योगजधर्मान्न प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्ह- तीति। अथान्त्यविशेषाणां परमाणूनामिव व्यावृत्तज्ञानविषयत्वा- द्विशेषान्तरसम्बन्धे तत्राप्यन्यो विशेषः तत्राप्यन्य इत्यनवस्था स्यात्। न च व्यावृत्तप्रत्ययविषयत्वे समानेऽपि परमाणूनामेवायं विषयसम्बन्धो न विशेषाणामिति विशेषहेतुरस्तीति। अभ्युपगमे वा विशेषेषु विशेषान्तरसम्बन्धं विना व्यावृत्तप्रत्ययवत् परमाणु- ष्वपि स्यादित्याह—अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति। अस्य प्रतिषेधार्थमाह—यदुक्तं परमा-

णुषु विशेषाभावो विशेषेषु चाविशेषान्तरमित्येतन्न । कुत एतत् ? तादात्म्यात्तत्स्वरूपत्वाद्विशेषणाम् । ये ह्यविशेषस्वरूपास्ते व्यावृत्त-ज्ञानजन्मनि विशेषमपेक्षन्ते यथा परमाण्वादयः । न चैवं विशेषा-स्तदात्मका न भवन्ति अतस्तादात्म्याद्विशेषाः समानलक्षणं विशेषं नापेक्षन्ते । तथा चेहातदात्मकेष्वतत्स्वरूपेष्वन्यानिमित्तः प्रत्ययो दृष्टो यथा घटादिषु प्रदीपात् तथाहि घटादिष्वप्रकाशस्वरूपेष्वन्व-यव्यतिरेकाभ्यां प्रदीपाद्विज्ञानं दृष्टम्, न तु प्रदीपे प्रदीपात्तस्य प्र-काशरूपतया प्रदीपं विनापि प्रकाशनात् । न चैवं घटादिष्वपि प्र-काशं विनैव प्रकाशोऽस्त्वदर्शनात् । आगमिकमुदाहरणं दर्शयति-यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषां मोदका-दीनाम् । न तु श्वमांसस्याप्यशुच्यन्तरसम्बन्धादशुचित्वमदर्शनात् । नापि श्वमांसवत् भक्तादीनामपि स्वत एवाशुचित्वमदर्शनादेव । तथेहापि तादात्म्याद्विशेषस्वरूपत्वादन्त्यविशेषेषु स्वत एव प्रत्यय-व्यावृत्तिः तद्योगात्परमाणुष्वित्युपसंहारः ।

अथ विशेषाणां नित्यत्वमुतानित्यत्वम् ? उत्पत्तिविनाशकारणा-नुपलब्धेर्नित्यत्वमेव । तथाहि–विशेषाणां स्वाश्रयः समवायिकारणम-समवाय्यादिकारणं च नास्ति इति विनाशाभ्युपगमेऽपि विशेषाणां पुनर्व्यावृत्तिज्ञानोत्पत्तौ न कारणमस्तीति । अथ विशेषान्तराद्व्या-वृत्तज्ञानम् । तन्न । अन्यत्वे प्रमाणाभावादित्यलमतिविस्तरेण ॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां
विशेषपदार्थः ॥

# अथ समवायपदार्थनिरूपणम् ।

अथ समवायस्य लक्षणपरीक्षार्थमयुतसिद्धानामित्यादिप्रकरणम्—

(भा०) अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः । द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यकारणभूतानां वाऽयुतसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमिति बुद्धिर्यतो भवति यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावः स समवायाख्यः सम्बन्धः । कथम् ? यथेह कुण्डे दधीतिप्रत्ययः सम्बन्धे सति दृष्टस्तथेह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये गुणकर्मणी इह गुणे गुणत्वम् इह कर्मणि कर्मत्वम् इह नित्यद्रव्येऽन्त्या विशेषा इतिप्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते ॥

न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात् अन्यतरकर्मादिनिमित्तासम्भवात् विभागान्तत्वादर्शनादधिकरणाधिकर्तव्ययोरेव भावादिति ॥

स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् । यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मानुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेतिप्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संयोगवन्नानात्वं भाववल्लिङ्गाविशेषात् विशेषलिङ्गाभावाच्च तस्माद्भाववत्सर्वत्रैकः समवाय इति ॥

ननु यद्येकः समवायो द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्करप्रसङ्ग इति, न आधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रः तथाप्याधाराधेयनियमोऽस्ति । कथम् ? द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमिति । एवमादि कस्मात् ? अन्वयव्यतिरेकदर्शनात् । इहेतिसमवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते । द्रव्यत्वादिनिमित्तानां व्यतिरेकदर्शनात् प्रतिनियमो ज्ञायते । यथा कुण्डदध्नोः संयोगैकत्वे भवत्याश्रयाश्रयिभावनियमः । तथा द्रव्यत्वादीनामपि समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियम इति ॥

सम्बन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम् तथा समवायोऽपीति । न ह्यस्य किञ्चित् कारणं प्रमाणत उपलभ्यते इति । कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते । न संयोगः सम्भवति तस्य गुणत्वेन द्रव्याश्रितत्वात् । नापि समवायस्तस्यैकत्वात् न चान्या वृत्तिरस्तीति । न । तादात्म्यात् । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति । एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति तस्मात् स्वात्मवृत्तिः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनाभावाच्च । तस्मादिहबुद्ध्यनुमेयः समवाय इति ॥

इति प्रशस्तपादभाष्ये समवायपदार्थः समाप्तः ॥

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥
इति प्रशस्तपादाचार्यविरचितं द्रव्यादिषट्पदार्थभाष्यं समाप्तम् ॥

(व्यो०) अयुतसिद्धानामेवाधार्याधारभूतानामेव यः सम्बन्धः स समवाय इति लक्षणं व्याख्यातमेव । अथ केषामयुतसिद्धानामसौ सम्बन्धस्तदाह—द्रव्यगुणकर्मसामान्यविशेषाणाम , अनियमोपदर्शनार्थं कार्यकारणभूतानान्तु पटादीनां, न कार्यकारणभूतानां च सामान्यादितद्वतामिति । अयुतसिद्धानामाधार्याधारभूतावस्थानमिति चायं नियमः । इहेदमिति बुद्धिर्यतो निमित्ताद्भवति स समवायाख्यः सम्बन्धः । तथाच सूत्रम्–इहेदमिति यतः कार्यकारणयोः स समवायः (अ०७आ०२सू०२६) इति । इहेत्यधिकरणमिदमित्याधेयं तयोः सम्बन्धं विनेहेदंबुद्धिर्न भवतीति । यतश्चासर्वगतानामिति नियमाशङ्कानिरासार्थम् । तथाहि—सर्वगतानामप्याकाशादीनां स्वगुणादिभिः समवायोपलब्धेरसर्वगतानामिति वाक्यं नियमाशङ्कानिरासार्थं व्याख्येयम् । तथाच सर्वगतानामेव समवाय इत्ययं नियमो न घटते, यतश्चासर्वगतानामपि समवायो दृश्यत इति । च शब्दस्य चानुक्तसमुच्चयार्थत्वादसर्वगतानां सर्वगतानां चेति लभ्यते । अधिगतान्यत्वानामिति । अधिगतमन्यत्वं नानात्वं येषां ते तथोक्तास्तेषामिति तादात्म्यव्युदासः । तथाप्यधिगतान्यत्वा गवाश्वादयो भवन्ति इत्यविष्वग्भावेनावस्थितानामिति पदम् । अविष्वग्भावोऽपृथग्भावो देशापृथक्त्वं,न त्वभेदः स्वरूपभेदस्योपलब्धेः, तथाहि तन्तवो विभिन्नजातिसम्बन्धिनो विभिन्नस्वरूपाश्च पृथक्त्वे पटोऽप्येवमिति परस्परतोऽन्यत्वमेव विरुद्धधर्माध्यासात् प्रतिभासभेदाच्चेति । तथाच रूपादयोऽपि परस्परं प्रतिभासभेदाद्विरुद्धधर्माध्यासाच्च भिद्यन्ते । स च तन्तुपटादीनामस्तीत्यन्यत्वमेव । सूत्रमप्येवं व्याख्येयम् । कार्यकारणयोरेकत्वपृथक्त्वाभावादेकत्वपृथक्त्वे न विद्येते, तस्मादधिगतान्यत्वानामविष्वग्भावेनावस्थितानामिहेदमिति बुद्धिर्यतः सम्बन्धात् भवति स समवायाख्यः सम्बन्धः । कथमित्यव्युत्पन्नप्रश्नः, विपर्यस्ताक्षेपो वा । तथाच न समवाय-

सद्भावे प्रमाणमस्तीति सर्वमेतदसम्बद्धम् । अथेहबुद्धिः प्रमाणम् । न । तस्याः समवायालम्बनत्वमाधाराविषयत्वात् , तदुक्तम्—

इहेति चानया बुद्ध्या समवायो न गृह्यते ।
आधारग्राहिणी चैषा समवायाप्रतिष्ठिता ॥

अथ सम्बन्धनिमित्ता स तु तादात्म्य लक्षण एव भविष्यति, समवायपक्षे बाधकोपपत्तेः, तथाहि–नानिष्पन्नयोः समवायो घटते सम्बन्ध्यभावे सम्बन्धस्यादर्शनात् । अथ निष्पन्नयोः सम्बन्धः समवायः, तर्हि युतसिद्धिः स्यात् । तथा समवायस्यापि सम्बन्धानभ्युपगमे सर्वतोऽन्यत्वाविशेषादनयोः सम्बन्धिनोः सम्बन्धो न पदार्थान्तराणामिति प्रतिनियमे हेतुर्नास्तीति । अथवा· गृहीतं विशेषणं विशेष्यज्ञानोत्पत्तौ लिङ्गं च लिङ्गिज्ञानोत्पत्तौ व्याप्रियते समवाये तु तद्रूपता नास्तीति तद्ग्रहणे प्रमाणाभावः । तथाहि–इह तन्तुषु पट इति ज्ञानमाधेयानुरक्ताधारं विशेषयन्न समवायानुरक्तमिति स्वात्मगतसम्वेदनाभावादिहबुद्धावप्रत्यक्ष एव समवायः। निर्विकल्पके त्ववयवावयविनोः संश्लेषज्ञाने समवायः प्रत्यक्ष एव केवलमिहेति बुद्धेः सम्बन्धनिमित्तत्वेनान्यत्रोपलब्धेरिहापि तदुपलम्भादनुमानं प्रवर्त्तते । यत एवं तस्मादिहबुद्ध्यनुमेयः समवायो न त्विहबुद्धौ प्रत्यक्ष इत्युपसंहारः ॥

इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां
समवायपदार्थः समाप्तः ।

ग्रन्थपरिसमाप्तौ च सन्तोषादाचार्यः पुनरपरस्य गुरोर्नमस्कारंकरोति–

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥
इति विरचितमेतद्व्योमनाम्ना शिवेन
प्रतिहतपरपक्षं स्वार्थसिद्धौ समर्थम् ।
कणचरमतवृत्तेर्वर्तनं बाध(१)हीनं
बुधहृदयमनोज्ञं षट्पदार्थप्रकाशम् ॥ १ ॥

( १ ) आदर्शपुस्तके एतत्पर्यन्तमेवोपलब्धमिदं पद्यं पूरयित्वा मुद्रितम् । सं० ।

THE
CHOWKHAMBÂ SANSKRIT SERIES,
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
No. 316, 342, 354, 374, 375, 384, 396

---

THE

# PRAS'ASTAPĀDABHĀṢYAM

By

## PRAS'ASTA DEVĀCHĀRYA

*With Commentaries ( up to Dravya )*

SÛKTĪ-by Jagadiśa Tarkâlaṅkâra

SETU-by Padmanâbha Miśra

and

VYOMAVATĪ-by Vyomas'ivâchârya. (to the end)

*Edited By*

**PANDIT GOPINATH KAVIRÂJ, M. A.,**
Principal, Government Sanskrit College, Benares.
and
**PANDIT DHUNḌHIRÂJ SHÂSTRI NYÂYOPÂDHYÂYA**
Head Pandit N. Nand Vedavidyâlaya
( D. A. V. High School ) Benares.

---

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1930.

चौखम्बा संस्कृत ग्रन्थमाला

ग्रन्थसंख्या ६१

नं० ३१६, ३४२, ३५४, ३७४, ३७५, ३८४, ३९६,

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितम्

## प्रशस्तपादभाष्यम् ।

द्रव्यग्रन्थपर्यन्तया

पण्डितप्रवर जगदीशतर्कालङ्कारविरचितया सूक्तिटीकया

महामहोपाध्याय पद्मनाभमिश्रकृतया सेतुटीकया

भाष्यान्तावसानया

विद्वच्चूडामणि व्योमशिवाचार्यनिर्मितया

व्योमवत्या च समन्वितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यक्षेण एम. ए. उपाधि-

धारिणा पं० गोपीनाथकविराजेन न्यायोपाध्याय

पं० दुण्ढिराजशास्त्रिणा च संस्कृतम् ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

विद्याविलासप्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।

श्रीसद्गुरुः शरणम् ।

# भूमिका ।

अथेदं प्रकाश्यते मुद्रयित्वा सटीकं प्रशस्तपादभाष्यम् । इदं च कणादमहर्षिप्रणीतस्य दशाध्याय्यात्मकस्य वैशेषिकदर्शनस्याधारेण सूत्रक्रमाननुसार्यपि इतस्ततः प्रसृतानां सूत्रार्थानामेकत्रार्थसङ्कलनार्थं महर्षिकल्पेन प्रशस्तदेवाचार्येण विनिर्मितं पदार्थधर्मसंग्रहापरपर्यायं वात्स्यायनभाष्यवत्सुविदितमेव नैयायिकैः । अस्य च भाष्यस्य चतस्रो वृत्तयो निर्वृत्ताः । तासु व्योमवतीनाम्नीं वृत्तिं व्योमशिवाचार्यो जुगुम्फ । द्वितीयां तु न्यायकन्दल्यभिधां श्रीधराचार्यः सन्ददर्भ । तृतीयां किरणावल्याख्यामुदयनाचार्यस्ततान । चतुर्थीं तु लीलावतीति ख्यातां श्रीवत्साचार्यो बबन्ध । एतास्तु प्राचीनाः । नवीना अपि चतस्र एव । तासु जगदीशतर्कालङ्कारकृता भाष्यसूक्तिः, प्रद्योतनभट्टाचार्यापराभिधानश्रीपद्मनाभमिश्रनिर्मितः सेतुः, मल्लिनाथसूरिविरचितो भाष्यनिकषः, शङ्करमिश्रलिखितं कणादरहस्यं चेति । अत्राद्यास्तिस्रः सूत्रव्याख्यारूपाः, अन्त्या तु भाष्यतात्पर्यबोधिका वार्तिकत्वेनाभिमता । उक्तव्याख्याष्टकादपरमस्य भाष्यस्य व्याख्यानं नोपलभ्यते न च श्रूयते । व्याख्याष्टकमध्येऽद्यावत् किरणावली–न्यायकन्दली–लीलावती–कणादरहस्यं चेति व्याख्याचतुष्टयं पूर्वं मुद्रितम् । जगदीशसूक्तिः सेतुः व्योमवती चेति व्याख्यात्रयन्त्वत्र भूतपूर्वकाशीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षाणां म० म० पं० विन्ध्येश्वरीप्रसादद्विवेदिमहोदयानामनुमत्या तत्साहाय्येन च चौखम्बासंस्कृतसीरिजपुस्तकमालायां मुद्रितुमारब्धम् । भाष्यनिकषव्याख्यानन्तु श्रूयत एव केवलं न कुत्राप्युपलभ्यते इत्युक्तव्याख्यानत्रयप्रकाशने प्रशस्तपादटीकासु नापरमवशिष्येतेति वदन्त एवोक्तद्विवेदिमहाशयाः पुरन्दरपुरातिथयः सञ्जाताः ।

प्रारब्धे चैतट्टीकात्रयोपेतभाष्यमुद्रणे सूक्तेरेकमेवादर्शपुस्तकं प्रायशोऽशुद्धं वङ्गाक्षरेषु चित्रितं राजकीयसंस्कृतपाठशालीयमपरं च द्विवेदिमहाशयानामुक्तलिपिलिखितमाकाशप्रकरणान्तमेवोपलब्धम् । सेतुव्याख्यानस्य प्रतिलिपिस्वरूपं महाऽशुद्धमेकमेव पुस्तकमादर्शभूतमस्माभिरासादितम । अन्यत्तु द्विवेदिमहाशयैः समर्पितमप्युक्त-

पुस्तकप्रतिलिपिमात्रतयाऽनुपयुक्तमेवाभूत्संशोधनकार्ये। व्योमवत्याश्च पूर्वोक्तं राजकीयसरस्वतीभवनस्थमेकमेव पुस्तकमादर्शतया स्थापितमभूत्।

तत्र सूक्तिपुस्तकस्य वङ्गाक्षरलिखितत्वादस्माकं च तल्लिप्यां सम्यगनभ्यासाद्या अशुद्धयः सञ्जाताः शुद्धिपत्रे सम्यगालोच्य शोधितास्ता विद्वद्भिः शुद्धिपत्राधारेण संशोध्य पठनीयाः। अत एव सूक्तिदीपिकाकारैः कालीपददेवशर्मभिरनवेक्ष्यैव स्वीयं प्रमादं यदस्माकं सूक्तिसंस्करणे प्रमादबाहुल्यमाक्षिप्तन्तत्परोत्कर्षासहिष्णुतयैवेति ब्रूमः। आलोचनीयेषु स्थलविशेषेषूपेक्षां विधायाऽन्यत्र व्याख्यानकौशलं प्रदर्शयद्भिस्तैष्टीकाकारपदव्युपलब्धेत्यपि सूक्तिदीपिकावलोकनेन स्वयं विद्वांसो ज्ञास्यन्तीति कृतं परदूषणोद्भावनेन।

सेत्वादर्शप्रतिलिपिकर्ता च प्रतिपंक्त्यन्यथा वर्णानां लेखनाच्छुद्धमप्यशुद्धं वाक्यसन्दर्भं विदधदत्यन्तमनाभिज्ञो गीर्वाणवाण्या इत्यनुमीयते। अतश्च सेतुसंशोधने योऽस्माकं बुद्धिव्यामोहः पंक्त्यक्षरसंगमने श्रमश्चाभूत्, एतावत्प्रयासेऽपि स्थलविशेषेषु प्रायश अशुद्धं सेतुव्याख्यानमधीत्य नैयायिकास्तं स्वयमनुभविष्यन्ति, पठिष्यन्ति च स्वयं संशोध्य तादृशं स्थलविशेषम्।

व्योमवत्यादर्शस्तु प्रायः शुद्धोऽपि केनचिदर्धार्शनिकेन संशोधनकालेऽशुद्धिं सम्प्रापित इति मया ग्रन्थारंभे नाऽऽलोचितमतस्तत्रास्मत्प्रमादाज्जाता अशुद्धीः संशोध्य पठद्भिर्विद्वद्वरैस्स क्षन्तव्यः।

तदेवं टीकात्रयसहितस्यास्य प्रशस्तपादभाष्यस्य मुद्रणं युक्तमित्यवधार्य भाष्यस्य मुद्रितमादर्शपुस्तकद्वयमवलम्बितम् एकं किरणावलीस्थमन्यत्तु कन्दलीसहितम्। प्रायो बहुषु प्राचीनेषु नवीनेष्वपि निबन्धेषु लेखकशोधकादिकृताः पाठभेदाः पुस्तकभेदादुपलभ्यन्ते। तथा व्याख्याकाराणां मतभेदादपि क्वचित् पाठभेद उपलभ्यत इति नैव तिरोहितं विदुषाम्। एवं च प्रशस्तपादभाष्येऽपि पाठभेदाः संजातास्ते च बुद्धिव्यामोहजनका इति प्रकृतव्याख्याकाराभिमतपाठं स्थलविशेषेषु प्रदर्श्य प्रसिद्धपाठमादायैवास्माभिरत्र भाष्यं मुद्रितम्।

अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालीयप्रधानाध्यापकैः परमपूजनीयैः गुरुवर म० म० श्रीवामाचरणभट्टाचार्यैर्विश्वविद्यालयस्थजैनन्यायप्रधानाध्यापकैः प्रातःस्मरणीयैस्तातकल्पैः म० म० अम्बा-

दासशास्त्रिभिश्च विषमस्थलव्याख्यानादिना सम्यगनुगृहीतोऽस्मीति तेषामुपकारान्न कदाचिदपि विस्मरिष्ये ।

तदिदानीमेवंविधस्य दुरूहग्रन्थस्योक्तरीत्या मुद्रणेऽस्मत्साहसं क्षान्त्वा आदर्शदोषजा मुद्राप्रमादादिजाश्चाशुद्धीः संशोध्यामुं दृष्टिपूतं कृत्वा मामकीनं परिश्रमं सफलयन्तु दयालवो विद्वांस इति प्रार्थये श्रीमन्तमुमापतिम् ।

तत्रैतद्भाष्यकर्तुस्तट्टीकाकाराणां च स्थितिकालजीवनचरिताद्यवश्यवक्तव्यविषये तत्रभवद्भिः सहृदयधुरीणैर्दार्शनिकप्रवरैः काशीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षैः पं० गोपीनाथकविराज एम० ए० महोदयैस्तज्ज्ञत्वादत्रैव सम्यगालोचयिष्यत इति नाहं तत्र तदनभिज्ञां स्वलेखनीमायासयिष्ये ।

## भाष्यतट्टीकाकारग्रन्थरचनाशैली ।

तत्र तावदुलूकरूपधारीश्वरः प्रत्यक्षीभूय स्वयमाजह्मब्रह्माभ्यासदूरीकृतप्रमादाय महर्षये कणादाय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश । तदनु स मुनिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयांचकारेत्युक्तं राजशेखरेण न्यायकन्दलीटीकायाम् । ततश्च सर्वाणि सूत्राणि एकदैव मनसि निधाय तानि व्याचिख्यासुर्भगवान् प्रशस्तपादोऽवतरणप्रतीकादिधारणं विनैव सूत्रोक्तार्थबोधकं भाष्यं प्रणीतवान् । तत्र षट्पदार्थोद्देशनिरूपणं तद्धर्मवर्णनं च कृत्वा लक्षणानिरूपणान्ते षट्पदार्थानां परीक्षा विहिता, तत्र तत्र सूत्रकारवाक्यस्य प्रामाण्येनावधारणं च कण्ठशः सम्पादितम् । कर्मपदार्थवर्णने प्रयत्नपूर्वककर्मण उदाहरणमभिदधता भाष्यकृता यज्ञकर्मसु हस्तोत्क्षेपणादिसमवाय्यादिनिरूपणेन पाणिमुक्तेषु तोमरादिषु यन्त्र(शरासन) मुक्तेषु शरादिषु च गमनविधिवर्णनेन च तत्काले उक्तकर्मणामत्युत्कृष्टा स्थितिरासीदिति प्रदर्शितम् । उक्तकर्मणामीदृग्गहनविचारो नान्यदर्शनेषु समुपलभ्यते । एवं गुणलक्षणपरीक्षायां धर्माधर्मयोर्निरूपणे वर्णाश्रमधर्मविवेचनमसाङ्कर्येण विदधता तत्समये यादृक् धर्मस्योत्कर्षो बभूव तत्साधनानां च विदुषां ब्राह्मणानामेव हस्ते नियमनमासीदिति भाष्यस्य हार्दमालोचयतां नैयायिकानां नैवाव्यक्तम् । सामान्यादिपदार्थत्रय-

स्वरूपनिर्वचनं कुर्वता च भाष्यकृता वैशेषिकदर्शनस्याद्वैतदर्शनवद-ध्यात्मविद्यामात्रत्वव्यावृत्तये पृथक्संस्थानत्वं प्रदर्श्य 'वैशेषिक' इत्य-भिधाकरणेऽन्वर्थत्वं विशदीकृतम्। न्यायदर्शनवदभिधेयप्रयोजना-दिनिरूपणमात्मादिप्रमेयमननानुकूलस्य व्याप्त्यपरपर्यायस्यानुमा-नस्य वर्णनं चात्राप्येकविधमित्यस्य न्यायशास्त्रत्वेन व्यपदेशोऽपि नायुक्त इत्यादिकं सटीकन्यायभाष्यभूमिकायां सम्यगालोचितमस्मा-भिस्तत्रैव द्रष्टव्यम्।

उक्तविधस्यास्य भाष्यस्य सूक्त्याख्यां व्याख्यां नैयायिकप्रवरः श्रीमान् जगदीशतर्कालङ्कारः प्राचीनां वृत्तिं किरणावलीमनुसृत्य विरचयाञ्चकारेति कल्प्यते। प्रणम्येत्यादिभाष्यमङ्गलकारिका-व्याख्याने 'अतः ईश्वरप्रणामादनु पश्चात् कणादनामानं मुनिं प्रणम्येत्यनुषज्यते' इति किरणावलीग्रन्थस्य 'ईश्वरं प्रणम्य अत ई-श्वरप्रणामादनु पश्चात् कणादं प्रणम्य' इत्यादिना सूक्तौ (पृ० १।पं० १०) तदीयक्रमानुसरणस्य दृष्टत्वात्। तथा 'अत इति इमौ प्रसाद्येत्यर्थः। अतःपदस्य ल्यप्लोपे पञ्चमीसाधनात् यतः सच्छिष्या उपसन्ना अतः प्रवक्ष्यत इति आचार्याः। (पृ० १।पं० १३) 'अयं च क्रमः श्रुति-सिद्धत्वादुपात्त इत्याचार्याः' (पृ० २८। पं० १९) इत्यादिस्थलविशेषेषु सर्वत्र किरणावलीग्रन्थस्य प्रमाणरूपेण समुद्धारात् 'प्रलयहेतुभूता-दृष्टमेव जन्यद्रव्यनिरोधकमित्याचार्यमतन्तु प्रलयप्राक्क्षण एव ता-दृशादृष्टस्योत्पत्त्यभ्युपगमे शोभते' (पृ० २ पं० ७) इत्यादिरीत्या दो-षोद्घाटनमुखेन क्वचित् तद्ग्रन्थार्थस्मरणाच्च किरणावलीमवल-म्ब्यैव स्थलविशेषेषु रहस्यार्थप्रकाशनमुखा मूलभाष्याक्षरव्याख्या-नमात्रपरा सूक्तिव्याख्येति निर्णीयते। किरणावलीव न्यायकन्दल्यपि सूक्तिव्याख्याने जगदीशेनानुध्यातेति केषांचित् कल्पनाया जगदी-शस्योदयनाचार्यवच्छ्रीधराचार्यापेक्षयाऽर्वाचीनत्वात्सुसम्पादत्वेऽपि सूक्तौ क्वापि तदीयमतोल्लेखस्य प्रमाणादिरूपतयाऽदर्शनाद्व्यग्रन्था-न्तमेव सूक्तेरुपलम्भाच्च तत्काले विद्यमानापि कन्दली जगदीशभट्टा-चार्येण न समासादितेति तर्क्यते। अयमेव जगदीशतर्कालङ्कारस्त-त्त्वचिन्तामणिदीधितिप्रकाश (जागदीशी) तर्कामृत-शब्दशक्तिप्रका-शिकादिनिबन्धकर्तेति गादाधरीभूमिकायां तदीयचरितादिवर्णनाव-सरे निर्णीतमस्माभिः।

सेतुटीकाकारः श्रीमान् सर्वतन्त्रस्वतन्त्रः प्रद्योतनभट्टाचार्यापराख्यपद्मनाभमिश्रोऽपि उदयनाचार्यकृतां किरणावलीमेवादर्शीकृत्य टीकयाञ्चकार प्रशस्तपादभाष्यम्—

स्मृतिपथमुपनीय श्रीमतस्तातवक्त्रात्
उचितमुपचितार्थं वाक्यमत्यादरेण ।
जयति विरचितोऽसौ पद्मनाभेन यत्नात्
उदयनकृतिपारप्राप्तये सेतुरुच्चैः ॥

उदयनकृतिचन्द्रिकया वृद्धो भाष्याम्बुधिष्परितः ।
बालानामपि सुगमस्तत्र मया रच्यते सेतुः ॥ (पृ०२०पं०१५)

इति तदीयप्रास्ताविकलेखेनैवावगम्यते । न्यायकन्दल्यपि सेतुकारेणावलंबिता तत्र तत्र श्रीधराचार्यमतमधिक्षेप्तुं सेतौ । तथाहि-प्रणम्येत्यादिकारिकाटीकने 'प्रणम्येत्यत्र प्रशब्दोपादानं प्रकृष्टा नतिः कर्तव्येति शिष्यशिक्षार्थं, प्रकर्षश्च भक्त्यादिः तत्रोपसर्गस्य वाचकतेति केचित्' ( पृ० ३ पं० २० ) इत्यत्र केचित्पदेन श्रीधराचार्य एव गृहीतः कन्दल्यां भक्त्यादिरूपप्रकर्षपदार्थोल्लेखस्योपलब्धेः । एवमग्रेपि । क्वचित्तु 'पदार्थानां धर्मास्तेषां सङ्ग्रहः प्रवक्ष्यते प्रकृष्टो वक्ष्यते इत्यर्थ इति केचित्, तन्न, उपसर्गार्थस्य प्रकर्षादेर्धात्वर्थ एवान्वयात्' इत्यादौ तूदयनाचार्यमतमपि दोषोद्घाटनद्वारैवोद्धृतम् । क्वचिच्च प्राचीनव्याख्यानानां भाष्याननुसारित्वात्तानि दूषयित्वा तदनुगामिव्याख्यानमपि कृतं पद्मनाभमिश्रेण । उपसर्गशक्तिविचारो मङ्गलतत्त्वविचारश्चाचार्यमतस्य चिन्तामणिकारगङ्गेशोपाध्यायमतस्य च संवादप्रदर्शनपूर्वकं यथा निबद्धः सेतौ तथा नान्यत्र भाष्यव्याख्यासूपलभ्यते । 'तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव' इति भाष्यव्याख्यायां ज्ञानकर्मणोर्वैकल्पिककारणताखण्डनम्, प्रासङ्गिकं वेदान्ताद्यभिमतनिःश्रेयसनिराकरणम्, नैयायिकोक्तमुक्तिपदार्थमण्डनं च यादृश्या प्रौढ्या पद्मनाभमिश्रेणोद्धृतं तयाऽयं तत्कालीनो महान् नैयायिक आसीदित्येव न किन्तूक्तप्रकरण एव 'ननु ज्ञानमेव चरमं-ज्ञानाग्निः सर्वकर्माणीतिवचनेन निखिलगीर्वाणवाणीवर्ण्यमानगुणगणमुकुन्दवदनारविन्दमकरन्दवृन्दायमानेन जाताभिषेकतया लब्ध्वा बलं तं व्यपनेष्यतीति' इत्यादिकविहृदयाह्लादिनिबन्धदर्शनेनानुपदमेव व्य-

अनायाः पदार्थान्तरत्वखण्डनावसरे उट्टङ्कितेन (१)अलङ्कारभास्करका- व्यप्रकाशप्रकाश–शरदागममनोरमा–एकावलीविवरणाख्यसाहित्यग्र- न्थचतुष्टयकर्तृत्वेन चायमसाधारणः कविरप्यासीदित्यवधार्यते। अभा- वतद्विभागयोरभ्युपगमसिद्धान्तसिद्धत्वं वैशेषिकराद्धान्त इति प्रति- पादयता सेतुकारेण नव्यनैयायिकशैलया विशिष्टाभाव–व्यधिकरणध- र्मावच्छिन्नाभावयोर्निर्वचनं प्राच्यार्वाचीनमतयोः सारमुद्धृत्य पराभि- मतानां भेद–शक्ति–शुद्ध्यादिकारणत्वान्तानामेकोनविंशतिपदार्थानां पदार्थान्तरत्वखण्डनं च (प्रासङ्गिकं) यथा प्रखरपाण्डित्यप्रौढ्या वि- हितं न तथेतरेणेति सेतुटीकां पठद्भिः स्वयमेव ज्ञास्यते। पृथि- वीत्वस्य शरीरारम्भकवृत्तित्वानुमाने—-ननु द्रव्यत्वन्यूनवृत्तिजात्य- न्यूनवृत्तित्वं द्रव्यत्वन्यूनवृत्तिजातिसमानाधिकरणात्यन्ताभावाप्रति- योगित्वम्, तच्च शरीरेतरमात्रारम्भकत्वे नास्त्येव शरीरावयवेऽस- त्त्वात्तथाच कथं व्यभिचार इति चेन्न (पृ० २१४। पं० १२)–इत्यादिग्र- न्थे नव्यनैयायिकग्रन्थरचनाविधायाः समुपलम्भात्तस्य नव्यनैयायि- कत्वेऽपि न कस्यचिद्भ्रमतिः स्यात् इति विभावयामः।

व्योमवतीकारा (२)शिवादित्यशिवाचार्यास्तूपोद्घाते वात्स्यायनभा- ष्योक्तरीत्या वेदान्तिमतं तत्र तत्र सांख्यमतं च निराकुर्वन्तोऽपि वि- शेषतः सर्वत्र बौद्धमतमेव न्यक्कुर्वन्तस्तन्मतानिरसनापदेशेनैव प्रशस्त- पादभाष्यं विवरीतुमुद्युक्ता बभूवुरिति मन्यते। क्वचित्तु व्याख्यान्त- रवैलक्षण्येन भाष्यं व्याख्यातवता व्योमवतीकारेण विलक्षणप्रतिभा- शालित्वमात्मनो व्यक्तीकृतम्। 'एवं धर्मैर्विना धर्मिणामुद्देशः कृतः' इति भाष्यटीकाप्रान्ते 'अन्ये तु धर्मैः सह धर्मिण उद्देशः कृतः। केनेति? विना पक्षिणोलूकेन। सामान्यशब्दश्च विशेषे वर्तते प्रकरणादिति ब्रु-

---

(१) काशीसंस्कृतग्रन्थमालायामधुनैव प्रकाशितस्य शरदागमसहितचन्द्रालोक- स्य प्रस्तावनायां पण्डितप्रवरेण नारायणशास्त्रिणा साहित्याचार्येण तु साहित्यविभागे वीर- भद्रचम्पू–शरदागमाख्यग्रन्थद्वयमात्रनिर्मातृत्वं पद्मनाभमिश्रस्याज्ञात्वैवोद्धृतमिति सेतु- दर्शनेनावधार्यते।

(२) इदम्पूर्वाश्रमीयं नामेति शिवाद्वैतदर्पणस्थपट्टावलीप्रदर्शनेनावगम्यते। श्री- गुरुसिद्धचैतन्यशिवाचार्येण दीक्षाग्रहणान्ते प्रदत्तं प्रसिद्धन्तु व्योमशिवाचार्येति नाम। अन्तिमाश्रम एव व्योमवत्येतैर्निर्ममे। वैशेषिकदर्शने सप्तपदार्थी (लक्षणमाला) शिवा- द्वैतसिद्धान्ते शक्तिसंदोहश्चेति निबन्धद्वयमप्येतत्कृतमन्यत्र मुद्रितम्।

वता' इत्यादिनोद्देशप्रकरणोपसंहारे ( पृ० ११४ पं० ६ ) तथाविध- व्याख्यानदर्शनात् । परीक्षाग्रन्थे सर्वत्र लक्षणपदव्यावृत्तीतरभेदानुमानप्रणालीप्रदर्शनपूर्वकं तत्तत्पदार्थसद्भावे प्रमाणादिविवेकः कृतः इत्येषा रीतिराश्रिता व्योमशिवाचार्येणैव । यद्यपि प्रकृतभाष्यार्थसाधकप्रासङ्गिकार्थसाधकप्रमाणादिप्रतिपादनं व्याख्यान्तरेषु समानम् यथा सृष्टिसंहारनिरूपणावसरप्राप्तं ईश्वरानुमानादिवर्णनं किरणावल्याम् 'स्यादेतत् सर्वमेतदीश्वरसिद्धौ सम्भवेत, तत्सिद्धावेव किं प्रमाणमिति चेत् , तद्बहुत्वेपि किञ्चिदुच्यते–शरीरानपेक्षोत्पत्तिकं बुद्धिमत्पूर्वकं कारणवत्त्वात् यत्कारणवत्तद्बुद्धिमत्पूर्वकं यथा रथः, तथा चैतत् तस्माद्बुद्धिमत्पूर्वकमिति'। कन्दल्याम्–'किं पुनरीश्वरसद्भावे प्रमाणम् ? आगमस्तावदनुमानं च—महाभूतचतुष्टयमुपलब्धिपूर्वकं कार्यत्वात्, यत्कार्यं तदुपलब्धिमत्पूर्वकं यथा घटः, कार्यं च महाभूतचतुष्टयं तस्मादुपलब्धिमत्पूर्वकम्' इति । तथापि व्योमवत्यां 'ननु सर्वमेतदसंबद्धम्' ईश्वरसद्भावे प्रमाणासम्भवात् । तत्र, अनुमानागमाभ्यां तत्सद्भावसिद्धेः तथा चानुमानम्–क्षित्यादिषु सृष्टिसंहारौ कर्तृपूर्वकौ । अथ सृष्टिसंहारयोर्भूतेष्वप्रसिद्धेरनुमानाभाव इति चेत् । रचनावत्त्वेन तत्सिद्धेः' ( पृ० ३०१ पं० २७ ) इत्यादिना प्रकृतभाष्याक्षरार्थसङ्गतमेवानुमानं प्रदर्शितमिति विशेषस्सूक्ष्मग्राहिभिरभ्यूह्यः । पद्मनाभमिश्रस्तु 'अत्र न्यायकुसुमाञ्जलौ आचार्यचरणैरुक्तमनुरुध्य वदाम' इत्यादिना ( पृ० २९१ पं० १५ ) किरणावल्युक्तमेवावलम्ब्येश्वरसाधकानुमानरीतिं प्रदर्शितवानिति न तत्राप्ययं विशेषः ।

एवमुक्तविशेषैरुत्कृष्टस्यास्य व्योमवतीव्याख्यानस्य भाष्यसमाप्तिपर्यन्तं शिवादित्यशिवाचार्यैर्व्याख्याततत्वात्कन्दलीवद्बौद्धमतस्य खण्डितत्वाच्च केनाप्यंशेन न ततोऽपकर्ष इति स्वयं वेत्स्यन्ति विद्वांस इत्यलमतिप्रसङ्गेन ।

वाराणसेय अगस्त्याश्रमः ।<br>
आषाढकृष्ण १ शनौ सं० १९८६ } ढुण्ढिराजशास्त्री ।

December . 1930.

THE

# CHOWKHAMBÂ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 396.

# वैशेषिकदर्शने

महर्षिकल्पप्रशस्तदेवविरचितं

## प्रशस्तपादभाष्यम् ।

विद्वच्चूडामणिव्योमशिवाचार्यनिर्मितया व्योमवत्या समन्वितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यक्षेण पं० गोपीनाथ-कविराजेन न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा च संस्कृतम् ।

THE

## PRAS'ASTAPÂDABHÂSYAM

By Praśastadevâchârya

WITH A COMMENTARY, CALLED

VYOMAVATI,

BY Vyomas'ivacharya.

*Edited by*

GOPINÂTH KAVIRÂJ, M. A.,

PRINCIPAL, GOVERNMENT SANSKRIT COLLEGE,

SARASVATI BHAVANA, BENÂRES.

and

DHUNDHIRÂJ SHÂSTRI Nyâyopâdhyâ.

FASCICULUS VII-७.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE,

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1931

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३१६

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares,*

## सटीकप्रशस्तपादभाष्यस्याकाराद्यनुक्रमेण

# सूचीपत्रम् ।

### अ



### आ

### ह

## सटीकप्रशस्तपादभाष्यस्य ग्रन्थानुसारिणी

# विषयानुक्रमणिका ।

### द्रव्यपदार्थनिरूपणे ।

# विषयानुक्रमणिका ।

## गुणपदार्थे ।

## ( कर्मपदार्थनिरूपणे )

| विषयः | पृ० | पं० |
|---|---|---|
| अपक्षेपणनिरूपणम् । | ६५४ | २० |
| आकुञ्चननिरूपणम् । | ,, | २२ |
| प्रसारणनिरूपणम् । | ,, | २६ |
| गमनसामान्यनिरूपणम् । | ,, | २९ |
| गमनविशेषभाष्यम् । | ६५५ | २ |
| सत्प्रत्ययासत्प्रत्ययरूपगमनविशेषवर्णनम् । | ६५७ | १४ |
| गमनाविशेषात्कर्मणां जातिपञ्चत्वमयुक्तमित्याक्षेपः । | ,, | २२ |
| सर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनाद्युक्तं तदिति समाधानम् । | ६५८ | २ |
| निष्क्रमणादिषूक्तहेतोः सत्त्वात्प्रतिबन्ध्यभिप्रायेण पुनराक्षेपः । | ,, | १६ |
| जातिसंकरप्रसङ्गापादनेन प्रतिबन्दिसमाधिः । | ,, | २६ |
| जातिसांकर्याभाववदनेककर्मसमावेशाभावात्कथमेकत्र कर्मणि युगपद्भ्रमणादिप्रत्यया इत्याक्षेपः । | ६५९ | २१ |
| कार्यभेदादेव निष्क्रमणादीनां प्रत्ययभेद इत्यभिप्रायेणोत्तरम् । | ,, | २५ |
| निष्क्रमणादीनां जातिभेदाद्भेद इति वादिनां मतं तत्खण्डनं च । | ६६० | ९ |
| गमनत्वस्य कर्मत्वपर्यायत्वमपरसामान्यत्वं वेत्याक्षेपं प्रदश्य तस्य कर्मत्वपर्यायत्ववर्णनम् | ,, | १० |
| अथवेत्यादिना गमनत्वस्यापरसामान्यत्वस्थापनं तत्राचार्यस्वरसप्रदर्शनं च । | ६६१ | १० |
| सत्प्रत्यय (सप्रयत्न) कर्मभाष्यम् । | ,, | २६ |
| हस्तादिनिष्ठयज्ञादिनिमित्तकमणः समवाय्यादिवर्णनम् । | ६६४ | १६ |
| हस्तादिसंबद्धमुसलादिकर्मवर्णनम् । | ,, | २६ |
| पाणिमुक्ततोमरादिगमनविधिवर्णनम् । | ६६५ | २६ |
| यन्त्रमुक्तशरपाषाणादिगमनविधिनिरूपणम् । | ६६६ | १२ |
| अप्रत्यय (अप्रयत्न) कर्मभाष्यम् । | ६६९ | ७ |
| प्रयत्नानधिष्ठितेषु महाभूतेषु नोदनादिभ्यो कर्मविधिः । | ६७१ | २१ |
| उक्तविधेरुदाहरणम् । | ६७२ | १९ |
| अभिघातनिरूपणपूर्वकं तद्धेतुकस्य महाभूतनिष्ठकर्मणो विधिः । | ,, | २१ |
| उक्तविधेरुदाहरणम् । | ,, | ३० |
| आश्रयकारणादिप्रदर्शनपूर्वकं पतनकर्मनिरूपणम् । | ६७३ | ९ |
| सोदाहरणं स्पन्दनकर्मवर्णनम् । | ,, | १९ |
| भ्रमणादीनां गमनविशेषत्वे उदाहरणवर्णनम् । | ६७४ | १८ |
| प्राणवायुकर्मणो हेत्वादिप्रदर्शनम् । | ६७४ | २९ |
| आकाशादिषु क्रियाशून्यत्वे युक्तिप्रदर्शनम् । | ६७५ | ८ |
| मनसि कर्मप्रदर्शनम् । | ,, | १७ |
| सुप्तस्य तद्धेतुप्रदर्शनम् तत्रानुमानं च । | ,, | २ |
| मनसो मृतशरीरादिविभागार्थं गर्भशरीरेण संयोगार्थं चापसर्पणोपसर्पणकर्मणो वर्णनम् । | ६७६ | १ |
| सर्गादावणुकर्मादिवर्णनम् । | ,, | २९ |